सारदाविनोदे

# वैयाकरणसिद्धान्तकौमुद्याः

कृदन्तवैदिकादिप्रकरणम्

BHATTOJI DIKSHITA'S

# SIDDHANTA-KAUMUDI

## Vol. VI

(KRIDANTA-VAIDIKA-PRAKARANA)

*With English Translation, Sanskrit Commentary*



BY

KUMUDRANJAN RAY, M. A., Ph. D (H),
*Bhishagacharyya.*




Re. १०/-

# सिद्धान्तकौमुदी

## अथकृदन्तेकृत्यप्रकरणम्

२८२९ । धातोः ॥ ३।१।९१ ॥

दीक्षितः—। आतृतीयसमाप्तेरधिकारोऽयम् । 'तत्रोपपदं सप्तमीस्थम्' ( ७८१ )। 'कृदतिङ्' ( ३७४ )।

This rule 'धातोः' extends as far as the end of the third chapter ( of Panini's अष्टाध्यायी )। The rules 'तत्रोपपदम्—' and 'कृदतिङ्—' ( explained before ) are brought down here to fill up the gaps between 'धातोः' ( 3. 1. 91. ) and 'वाऽसरूपो—' ( 3. 1. 94 ).

मितभाषिणी—। अथेदानीं कृदन्तप्रकरणं निरूपयिषुस्तदवान्तरमिदं कृत्यप्रकरणं लक्षयति—धातोरिति। आ तृतीयेति—तृतीयाध्यायपरिसमाप्तिपर्य्यन्तमित्यर्थः। तत्रोपपदमिति—एतत् सूत्रद्वयमपि प्राग् व्याख्यातम्। अत्रानयोरुपन्यासस्तु "धातोः" ( ३।१।९१ ) 'वासरूप—' इति सूत्रद्वयान्तरालवर्त्तित्वादिति ज्ञेयम्।

२८३० । वाऽसरूपोऽस्त्रियाम् । ३।१।९४॥

दी—। परिभाषेयम्। अस्मिन् धात्वधिकारेऽसरूपोऽपवादप्रत्ययः उत्सर्गस्य बाधको वा स्यात् स्त्र्यधिकारोक्तं विना।

This rule is a परिभाषा i. e. a regulating injunction. In this धात्वधिकार or the jurisdiction of roots, a special or prohibitive ( अपवाद ) affix which is dissimilar (with the general affix or

उच्यते । 'कर्मव्यतिहारे—' इत्यत्र क्रियामिति शब्दोच्चारणमात्रं न त्वधिकारत्वज्ञापकम् । 'आऽसकृद्वीऽस्त्रियाम्' इत्यत्र 'अस्त्रियाम्' इति त्वधिकारत्वद्योतकम् । तत्रैवम् अधिकारत्वाभावात् 'कर्मव्यति—' इत्यत्र 'अस्त्रियाम्'—'स्वाधिकारोक्तं विना'—इति निषेधो न प्रवर्तते इति दिक् ।

२८३१ । कृत्याः ॥ ३।१।९५ ॥

दी— । अधिकारोऽयं ण्वुलः प्राक् ।

This is an अधिकारसूत्र extending up to the rule "ण्वुल्तृचौ" ( २८९५—३।१।१३३ ) i. e. the affixes dealt with in the intervening aphorisms are designated as कृत्यs.

मित— । अधिकारोऽयमिति । ण्वुल्तृचावित्यतः ( २८९५—३।१।१३३ ) प्राक् आदिष्टाः प्रत्ययाः कृत्यसंज्ञका इत्यवगन्तव्यमित्यर्थः ।

२८३२ । कर्तरि कृत् ॥ ३।४।६७ ॥

दी— । कृत्प्रत्ययः कर्तरि स्यादिति प्राप्ते—

कृत्यप्रत्ययs are but a subdivision of the कृत्प्रत्ययs. When therefore, by this rule कृत्यप्रत्ययs are instructed to have sphere in the active voice also we look forward—

मित— । कृत्प्रत्यय इति । कृत्या नाम कृत्प्रविभागाः । एवञ्च कर्तरि कृदित्यनेन वक्ष्यमाणतव्यतव्यानीयरादीनामपि कृत्यप्रत्ययानाम् कर्तृवाच्येऽपि प्रयोगः स्यादित्यतो तु भावकर्मणोरेवेत्यत आह—प्राप्ते इति ।

२८३३ । तयोरेव कृत्यक्तखलर्थाः ॥ ३।४।७० ॥

दी— । एते भावकर्मणोरेव स्युः ।

कृत्य affixes, क्त and those that convey similar sense with खल् are restricted to the भाववाच्य and the कर्मवाच्य only and not extended to the कर्तृवाच्य also.

बाल— । एते इति । कृत्याः, क्तप्रत्ययः, खलर्थप्रत्ययाश्च इत्यर्थः । 'लः कर्मणि च भावे चाकर्मकेभ्यः' ( ३।४।६९ ) इति वर्तते । तदाह—भावकर्मणोरेवेति । अत्र 'कर्तरि' इत्यस्यासक्ती मा भूदित्येवकारप्रयोगः । यद्यप्येतत् 'तक्रकौण्डिन्यन्यायेन'* लभ्येत तथापि स्पष्टप्रतिपत्त्यर्थमेतदिति बोद्धव्यम् । एवञ्चैते भाव एव कर्मण्येव च स्युर्न तु कर्तरीति फलितम् ।

**२८३४ । तव्यत्तव्यानीयरः ॥ ३।१।९६ ॥**

**दी— । धातोरेते प्रत्ययाः स्युः । तकाररेफौ स्वरार्थौ । एधितव्यम् । एधनीयं त्वया । भावे औत्सर्गिकमेकवचनं क्लीबत्वं च । चेतव्यश्चयनीयो वा धर्मस्त्वया । 'वसेस्तव्यत् कर्तरि णिच्च' ( वार्तिक )—वसतीति वास्तव्यः । 'केलिमर उपसंख्यानम्' ( वार्तिक )—पचेलिमा माषाः । पक्तव्याः । भिदेलिमाः सरलाः । भेत्तव्याः । कर्मणि प्रत्ययः । वृत्तिकारस्तु 'कर्मकर्तरि चायमिष्यते' इत्याह । तद्भाष्यविरुद्धम् ।**

These i. e., तव्यत्, तव्य and अनीयर् are attached to all roots. तकार in तव्यत् and रेफ or रकार in अनीयर् are for accent viz., 'तित् स्वरितम्' (3729), 'उपोत्तमं रिति' (3733). Thus तव्यत् is different from तव्य which is आद्युदात्त (and not स्वरित) by the rule 'आद्युदात्तश्च' (3708). Words formed in the भाववाच्य are in general singular and neuter. Thus एधितव्यम् etc., कर्मणि चेतव्यः—etc.. 'वसेः—' (Varttika).—The root वस् (to live) takes तव्यत् after it in the कर्तृवाच्य and the affix is to be treated as णित् (so that the penultimate of वस् undergoes वृद्धि by the rule 'अत उपधायाः'—2282). 'केलिमरः—(Varttika).—The affix केलिमर् (also

* तक्रं कौण्डिन्याय दधि ब्राह्मणेभ्यो दीयताम् इति तदर्थः ।

has ; to be enlisted under or along with the rule 'तव्यत्तव्यानीयर:') केलिमर् retains 'एलिम' only. पचेलिमा:—i.e., fit to be cooked भिदेलिमा:—i.e., fit to be pierced. सरल is a kind of devadaru ? The affix is here attached in the कर्मवाच्य। वृत्तिकार, however, says that it (केलिमर्) is adduced in the कर्मकर्तृवाच्य also ; but this is against Bhashya.

मित—। तव्यदिति। धातोरिति वर्तते तदाह—धातोरित्यादि। स्वरार्थाविति—तथाच तव्यदित्यत्र स्वरितत्वार्थम् 'तित्स्वरितम्' (३७२९) इति तकारानुबन्धकरणम्। तव्य इत्यत्र तु तदभावात् 'आद्युदात्तश्च' (३७०८) इति प्रत्ययस्वरेण आद्युदात्तत्वमेव तव्यतव्ययोर्भेद:। अनीयर् इत्यत्र तु 'उपोत्तमं रिति' (३७३२) इति रित्करणफलम् मध्योदात्तत्वार्थम्। औत्सर्गिकमिति—उत्सर्गात् प्राप्तम्—साधारणेन क्लीबत्वमित्यर्थ:। क्लीबत्वं चेति—लिङ्गनियामकानामुक्तकर्मणामेव विरहादिति भाव:। वसेरिति। वार्तिकमिदम्। णिच्चेति—णित्करणमुपधावृद्ध्यर्थम्। कर्तरीति स्वयमेव दर्शयति—वसतीति। 'केलिमर:—' वार्तिकम्। उपसंख्यानमिति—तव्यदित्यत्र अस्यापि परिगणनं कर्तव्यमित्यर्थ:। पक्तव्या, भेत्तव्या इति प्रत्ययान्तमर्थविवरणार्थम्। सरला: इति वृक्षविशेषा: ['पीतद्रु: सरल: पूतिकाष्ठश्च' इत्यमर: ]। कर्मणि प्रत्यय इति, कर्तरि शेष:। तद्भाष्य विरुद्धम् इति। भाष्ये—'भिदेलिमा' इत्युदाहृत्य 'भेत्तव्या' इत्येव विवरणादिति भाव:।

२७३५। कृत्यच: ॥ ८।४।२९ ॥

टी—। उपसर्गस्थान्निमित्तात् परस्य अच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यात्। प्रयाणीयम्। 'अच:' किम्। प्रमग्न:। 'निर्विण्णस्योपसंख्यानम्' ( वार्तिक )। अच: परत्वाभावान्नकारेण व्यवधानाच्चाप्राप्ते वचनम्। परस्य णत्वम्। पूर्वस्य ष्टुत्वम्। निर्विण्ण:।

णत्व is enjoined to a नकार lying in a कृत्प्रत्यय coming after an

अच् which follows a condition ( or निमित्त of णत्व ) resting in an उपसर्ग. Thus प्रयाणीयम् ( प्र—या+अनीयर् ) etc. Why say 'अच:'—? witness प्रमग्न: where although क्त is changed into न by the rule 'ओदितश्च' (301 ) as the root is ओकार dropping ( टुमस्जो शुद्धौ ) ; Yet we have no णत्व here as there is no अच् in the root invariably preceding the नकार। 'निर्विण्णस्य—(Varttika)—But it has to be said that ( the नकार in ) निर्विण्ण gets णत्व nevertheless the नकार does not invariably follow upon an अच् and नकार (i.e., दकार changed into न by the rule रदाभ्यां निष्ठातो न: पूर्वस्य च द:—3016) standing as a barrier in the middle. Hence it is that Bhotioji justifies the Varttika saying 'अच: परत्वाभावात्—' etc. परस्य i.e., of the निष्ठानकार। पूर्वस्य i.e., of the नकार occuring in place of दकार। ष्टुत्वम् i.e., by the rule 'ष्टुना ष्टु:' (113).

मित—। कृत्येति। 'रषाभ्यां नो ण:' (८।४।१) इत्यतो नो ण इति। 'उपसर्गादनोत्पर:' (८।४।२८) इत्यत उपसर्गादिति च। तदाह—उपसर्गस्था-दित्यादि। कृतीत्यस्य विपरिणामेन षष्ठ्यर्थकत्वं, तदाह—कृत्स्थस्य इति। अच इति पञ्चम्यन्तम्। प्रयाणीयमिति—'अट्कुप्वाङ्नुम्व्यवायेऽपि (८।४।२) इत्यनुसारादत्र यकारव्यवायसत्वेऽपि णत्वं भवत्येवेति भाव:। अच: किमिति—तथाच प्रमग्न इत्यत्र 'टुमस्जो शुद्धौ' इति धातु:। तत्र प्र—मस्ज्+क्त इति स्थिति: तस्य ओदित्वात् 'ओदितश्च' (३०१९) इति निष्ठानत्वे, प्र—मस्ज् न इति जातेऽपि सकारव्यवायवशात् 'अट्कुप्वाङ्नुम्—' इति न प्रवर्तते। एवञ्च अव्यवहिताच: परत्वाभावादत्र णत्वं न भवति। ततो निष्ठानत्वस्य असिद्धत्वात् 'स्को:—' इति सलोपे 'चो: कु:' इति कुत्वे च रूपं सिध्यति। 'निर्विण्णस्य—'इति। वार्तिकमिदम्। अच: परत्वाभावादिति—दकारस्य नकारेण व्यवधानादित्यर्थ:। नकारेण व्यवधानाद्वेति। असत्यकार्ये दीनाविति नारीश:। तथाच निर—विद्+क्त इति स्थिते 'रदाभ्यां निष्ठातो न: पूर्वस्य च द:' (३०२६) इति निष्ठानत्वे पूर्वस्य दस्य च नत्वे निर्—विन्+न इति

आते प्रथमनकारेण व्यवधाने चाप्राप्ते वचनम् इति। 'कृत्यच:' इत्यनेन अप्राप्ते वचनम्, इदं वार्तिकमिति, प्रवर्तते इति शेष:। परस्य णत्वम् इति अनेन वार्तिकेन पूर्वस्य ष्टुत्वम् इति। 'ष्टुना ष्टु:' इत्यनेन।

२८३६। णेर्विभाषा ॥ ८।४।३० ॥

टी—। उपसर्गस्थान्निमित्तात् परस्य णयन्ताद् विहितो य: कृत्तत्स्थस्य नस्य णो वा स्यात्। प्रयापणीयम्—प्रयापनीयम्। 'विहितविशेषणम्' किम्? यका व्यवधाने यथा स्यात्।' प्रयाप्यमाणं पश्य। 'णत्वे दुर उपसर्गत्वं न' इत्युक्तम्। दुर्यानम्। दुर्यापनम्।

णत्व is optionally enjoined to the नकार lying in a कृत्प्रत्यय which has been ordered after a base ending in णिच् which again follows a condition or निमित्त of णत्व resting in an उपसर्ग। Thus 'प्रया—' etc. Why do you attach the qualifying word 'विहित' before 'कृत्' (in ण्यन्ताद् विहित: य:कृत्')? It is attached to to have णत्व (optionally) despite the barrier यक् in such cases, प्रयाप्यमाणम् etc. 'णत्वे दुर:—' etc. compare the Varttika 'दुर: षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्य:'—Under 'आनि लोट्' (2231). Thus दुर् having ceased to be an उपसर्ग we have no णत्व in दुर्यानम् etc.

मित—। णेरिति। पूर्वोक्तं सूत्रं अत्राप्यनुवर्तते। कृत्यचइति च। तदाह— उपसर्गस्थादिति। णेरिति पञ्चम्यन्तम्। विशेषणम्। तेन तदन्तविधि:। 'विहित' इति पदं यद्यपि सूत्रे न दृश्यते तथाप्यस्योपयोगित्वमस्तीति स्वयम् एव 'विहितविशेषणं किम्' इत्यत्र वक्ष्यति। प्रयापणीम् इति। प्र—या+णिच्+अनीयर इति स्थिते 'अर्त्तिह्री—' (२५७०) इति पुगागमे, णिचि याधि इत्यस्माद् णान्तादनीयरि 'णेरनिटि (२३१२) इति णिलोपे च रूपम्। णत्व

विकल्पात्तु प्रयापणीयम् इति। 'विहितविशेषणं' किमिति? 'विहितम्' इति विशेषणं कथं भवता श्रुतमपि वृत्तौ निर्दिश्यते इति प्रश्नः। उत्तरम् आह—यका व्यवधाने इति—अन्यथा 'णेः परो यः कृत्तस्थस्य णत्वविकल्प' इत्युक्ते प्रयापयमाणम् इत्यादौ तु कृत्प्रत्ययस्य शानचो यका व्यवहितत्वेन यकार परत्वाभावात्तत्स्थस्य (शानचि स्थितस्य) नस्य णत्वविकल्पो न स्यादिति। प्रया—णिच् (यापि)+यक्+शानच् इत्यत्रापि प्रागवत् प्रक्रिया—'आने मुक्' इति मुगागमः। 'णत्वे दुर—' इति—तथाच वार्त्तिकम् 'दुरः षत्वणत्वयोरुपसर्गत्वप्रतिषेधो वक्तव्यः' इति 'आनि लोट्' (११२१) इत्यत्र प्रागुपन्यस्तम्। तदेवं दुर उपसर्गत्वाभावेन दुर्यानमित्यादौ णत्वं न भवति।

## २८३७। हलश्चेजुपधात्॥ ८।४।३१॥

**दी—। हलादेरिजुपधात् कृत्स्थाचः परस्य णो वा स्यात्। प्रकोपणीयम्—प्रकोपनीयम्। 'हलः' किम्? प्रोहणीयम्। 'इजुपधात्' किम्? प्रवपणीयम्।**

णत्व takes effect optionally in the room of न lying in a कृत्प्रत्यय coming after a root having a हल् at the outset and any one of the letters इ, उ ऋ etc. of the इच् प्रत्याहार coming after an उपसर्ग having the condition of णत्व. Thus प्रकोपणीयम् etc. Why say हलः—having a हल् letter at the outset? witness प्रोहणीयम्; why इजुपधात्, witness प्रवपणीयम्—where (in both the cases, णत्व is obligatory (नित्य) by the rule 'कृत्यचः'।

मित—। हलश्चेति। रषाभ्यामित्यादि प्रागवदनुवर्तते। 'कृत्यचः' इति 'णेर्विभाषा' इति च। किञ्च इजुपधस्य हलन्तत्वाव्यभिचारात् सूत्रे 'हलः' इत्यनेन तदादित्वं विवक्षितमिति मत्वाह आह—हलादेरित्यादि। कृत्स्थेति—कृत्स्थस्य नस्येत्यर्थः। हलः किमिति हलादित्वं कथमिति प्रश्नः। प्रोहणीयम्। ऊह वितर्के इति धातुः। अत्र 'कृत्यचः' इति नित्यमेव णत्वम्। एवं प्रवपणीयम् इत्यत्र।

२५३८। इजादेः सनुमः ॥ ८।४।३२ ॥

टी—। सनुमश्चेद् भवति तर्हि इजादेर्हलन्ताद् विहितो यः कृत् तत्स्थस्यैव। प्रेङ्खणीयम्। 'इजादेः' किम्? 'मगि सर्पणे' प्रमङ्गनीयम्। नुमग्रहणमनुस्वारोपलक्षणार्थम्। 'अट्कुप्वाङ्—' (१८७) इति सूत्रेऽप्येवम्। तेनेह न। प्रेन्वनम्। इह तु स्यादेव। प्रोम्भणम्।

If णत्व has to be enjoined of a कृत् (कृदन्त) affix having a नुम् (अनुनासिक) within it is directed to such कृत्s as follow इजादि (or having an इच् letter at the beginning) and हलन्त roots; प्रेङ्खणीयम्—the root is इखि where नुम् comes in by 'इदितो नुम् धातोः' (2262). This rule (इजादेः—) is restrictive and therefore Bhottoji explains 'सनुमश्चेद् भवति' etc and asks इजादेः किम्—etc. Here नुम् denotes such as is changed into अनुस्वार so that in the case of प्रेन्वणम् (प्र—इवि+ल्युट्) there is no णत्व whereas in that of प्रोम्भणम् (प्र—उम्भ+ल्युट्) there is.

मित—। 'इजादेरिति। 'शेषविभाषा' इति निवर्तते। 'कृत्यचः' (८।४।२९) इति 'हलश्चेजुपधात्' (८।४।३१) इत्यतो हल् इति चानुवर्तते। एकस्यैव इजादित्वं हलादित्वञ्च न युज्यत इति हलः इत्यनेन तदन्तत्वं लभ्यम्। किञ्च 'कृत्यचः' इत्यनेनैव सिद्धे नियमार्थमिदम् इत्येतत् सर्वं विविच्याह—सनुमश्चेद् भवतीत्यादि। कृदित्यनेन प्रत्ययोपलक्ष्यम् इति प्रागवद् बोध्यम्। सनुम इत्यादेरयमर्थः—सनुमः कृत्स्थस्य चेद् भवति णत्वम् इति शेषः तर्हि इजादेरित्यादि। प्रेङ्खणीयम् इति। इखि इति धातुः। 'इदितो नुम्—' (२२६२) इति नुमि तस्य 'नश्चापदान्तस्य—' (१२३) इत्यनुस्वारे तस्य 'अनुस्वारस्य ययि—' (१२४) इति परसवर्णे च कृते रूपम् (प्र—इखि+अनीयर्)। इजादेः किमिति?—स्पष्टम्। नुमग्रहणमनुस्वारोपलक्षणम् इति। यस्य नुमोऽनुस्वारो विधायकः यो 'वा स्वाभाविकानुस्वारतोऽन्

अयाद्येव गृह्यते इत्यर्थः। अत एव प्रेषणम् (प्र—इषि+ल्युट्) इत्यादौ णत्वं न भवति, प्रोक्षणम् (प्र—उक्ष्+ल्युट्) इत्यादौ तु भवत्येव।

२८३९। वा निंसनिक्षनिन्दाम् ॥ ८।४।३३॥

दी—। एषां नस्य णो स्यात् कृति परे। प्रणिंसितव्यम् प्रनिंसितव्यम्।

Eng.—Easy.

मित—। एषामिति। 'कृत्यचः' (८।४।२९) इत्यनुवर्तते। तदाह—कृति परे इति।

२८४०। न भाभूपूकमिगमिप्यायीवेपाम् ॥ ८।४।३४॥

दी—। एभ्यः कृन्नस्य णो न। प्रभानीयम्। प्रभवनीयम्। 'पूञ एवेह ग्रहणमिष्यते'। (वार्तिक)। पूङस्तु प्रपवणीयः सोमः। 'ण्यन्तभादीनामुपसंख्यानम्' (वार्तिक)। प्रभापनीयम्। 'क्शाञः* शस्य यो वा' (वार्तिक) इत्युक्तम्—णत्वप्रकरणोपरि तद्बोध्यम्। यत्वस्यासिद्धत्वेन शकारव्यवधानात् न णत्वम्। प्रख्यापनीयम्।

णत्व is forbidden to a नकार existing in a कृत् affix coming after any of the roots भा, भू, पू, कमि, गमि, प्यायी and वेप्। 'पूञः—' (varttika).—This (पूञ्) is क्र्यादि whereas पूङ् is भ्वादि. Both mean the same viz—to purify. 'ण्यन्त—' (varttika) i. e. the prohibition of णत्व applies to णिजन्त forms also of भा, भू, पू etc. 'क्शाञः—' (varttika) comp. the rule 'चक्षिङः ख्याञ्' (2430). यत्वस्य

* 'ख्याञः—' इत्यपि दृश्यते पाठान्तरम्।

असिद्धत्वेन etc—see under the rules 'अचिकः स्यात्' and 'वा लिटि' (2437).

मित—। न भाभू—इति। 'कृत्यच:' (८।४।२९) इति प्रागुक्तमनुवृत्तम्। तदाह—एभ्य: कृत्स्येति। प्रभवनीयमिति। एवम् प्रपवनीयम्, प्रकमनीयमित्यादि। 'पूञ पवेह—' इति वार्तिकमिदम्। 'पूञ् पवने' क्र्यादिकादेव कृत्स्य णत्व निषेध:, न तु भौवादिकादपि। अत आह पुङ्स्तु इति। ण्यन्तादीनामिति। 'सनाद्यन्ता: धातव' इत्यनुसारात् ण्यन्तानां प्रकृत्यन्तरत्वादप्राप्ते वचनम्। उपसंख्यानमिति—एभ्योऽपि कृत्स्य णत्वं नेति परिगणनीयमित्यर्थ:। 'क्शाच:—' वार्तिकम्। अत्र 'तत्त्वबोधिनीधृतपाठ: साधीयान्। णत्वस्यासिद्धत्वेन शकारव्यवधानादिति। यद् वक्तव्यं तत् 'अचिकः स्यात्' (२४३६) इत्यत्र उक्तम्।

२८४१। कृत्यल्युटो बहुलम् ॥ ३।३।११३ ॥

टी—। स्नान्त्यनेन स्नानीयं चूर्णम्। दीयतेऽस्मै दानीयो विप्र:।

The कृत्य affixes as also (the कृत् affixes such as) ल्युट् (etc.) take place in various (or irregular) ways i. e. they are employed to bring out a sense quite different from that in which they were originally instructed to convey. Thus the rule 'तयोरेव कृत्यक्तखलर्था:' (2833) enjoins कृत्य etc. in भाव and कर्मवाच्य only whereas the कृत्य affixes like अनीय and अनीयर् in स्नानीयम् (whereby bath is performed) and दानीय: (to whom a gift is dedicated) are made use of in the sense of करण and सम्प्रदानवाच्य; similarly ल्युट् is generally ordered in करण, अधिकरण and भाववाच्य but by the force of this irregular injunction or बाहुलकविधि it is used in other senses also. Cp.—अपसेचनम्, अपश्रावणम् (काशिका)।

मित—। कृत्यल्युटः इति। कृत्यप्रत्ययाः ल्युट् च बहुलं विधीयन्ते इत्यर्थः। याभ्यः प्रकृतिभ्यः येष्वर्थेषु विहितास्ततोऽन्यत्रापि स्युरिति यावत्। तथा च 'तयोरेव कृत्यक्तखलर्थाः' (२८३३) इति भावे कर्मणि च तव्यादयो विहिताः। परम् अस्मात् सूत्रबलात् ततोऽन्यत्रापि अर्थे एते सन्ति। अन्यत्रापि अर्थे भवन्तीत्यस्य कारकान्तरे च स्युरित्येवमर्थः। अतएव स्नान्ति अनेन इत्यादिना करणे सम्प्रदाने च क्रमेण अनीयानीयरौ विहितौ। एवं ल्युट् च करणाधिकरणयोर्भावे विहितोऽपि बाहुलकबलात् 'अपसेचनम्, अवस्रावणम्' इत्यादिषु अर्थान्तरे च भवति इति काशिकायां स्पष्टम्। अतएव भाष्ये 'पादाभ्यां ह्रियते पादहारकः' इति कर्मणि ण्वुल्विहितः। एवञ्च 'कृतोऽपि बहुलम्' इति नागेशः। अयं बहुलशब्दार्थः :—"क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद् विभाषा क्वचिदन्यदेव। विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥" इति।

२८४२। अचो यत्॥ ३।१।९७॥

टी—। अजन्ताद्धातोर्यत् स्यात्। चेयम्। जेयम्। अज्ग्रहणं शक्यमकर्तुम्। योगविभागोऽप्येवम्। तत्रप्रदादिष्वेव यतोऽपि सुपठत्वात्।

The affix यत् is enjoined after such roots as end in अच् or vowel, thus चेयम (चि + यत्) etc. गुण by 'सार्वधातुकार्ध—' (2168). Here (the acceptance of) अच् might have been omitted. For roots are of two kinds अजन्त (ending in vowels) and हलन्त (ending in consonants). The rule 'ऋहलोर्ण्यत्' (2872) enjoins ण्यत् to ऋदन्त and हलन्त roots only—whence it is clear that (other) अजन्त roots except ऋदन्त ones, will have यत्. Thus it was better to enunciate as 'यत्' only. Or, that even i.e., the enunciation of the whole rule also on a separate basis (योगविभाग:) was not necessary; for the affix यत् might have been better read with

the preceding rule 'तव्यत्तव्यानीयरः' (2834-3. 1. 96) so that both would combine in to a single rule 'तव्यत्तव्यानीयर्यतः'।

मिते—। अच इति—'येन विधिस्तदन्तस्य' इति न्यायात् अच इत्यनेन तदन्तम् आक्षिप्यते। तदाह—अजन्तादित्यादि। चेयमिति—'सार्वधातुकार्ध—' (२०६८) इति गुणः। 'अचो यत्' इति सूत्रे 'अचः' इत्यस्य ग्रहणम् उच्चारणम् इति यावत् शक्यम् अकर्तुम् इति। त्यक्तुं शक्यम्। अग्रहणेऽपि न क्षतिरिति यावत्। तथाच वक्ष्यति 'ऋहलोर्ण्यत्' (२८—७२—३।१।१२४) इति। तेन च ऋदन्तेभ्यो हलन्तेभ्यश्च ण्यद् विधीयते। धातवश्च द्विधा भवन्ति। अजन्ताः हलन्ताश्च। एवञ्च 'यत्' इत्येव सूत्रितेऽपि परिशेषादृदवर्जमजन्तेभ्य एव यत् स्यात् वासरूपविधेरस्यविषयत्वादिति भावः—अथवा तदपि (यन्मात्रग्रहणमपि) शक्यमकर्तुम् इत्याह—योगविभागोऽप्ययम् इति—कर्तुमशक्य इति शेषः। पाणिनीयसूत्राणां प्रत्येकं योग इत्यभिधीयते। तेन एतत् सूत्राकरणेऽपि न क्षतिरिति हृदयम्। कुत इत्यत आह—तव्यादादिषु इति। 'तव्यत्तव्यानीयरः' (२८३४—३।१।९६) इत्यत्र यतमपि समावेश्य 'तव्यत्तव्यानीयर्यतः' इत्यस्य सुवचत्वादिति भावः।

२८४३। ईद्यति ॥ ६।४।६५ ॥

दी—। यति परे आत ईत् स्यात्। गुणः। देयम्। ग्लेयम्। 'तकिशसिचतियतिजनिभ्यो यद्वाच्यः' (वार्तिक)। तक्यम्। शस्यम्। चत्यम्। यत्यम्। जन्यम्। जनेर्यद्विधिः स्वरार्थः। ण्यतापि रूपसिद्धेः। न च वृद्धिप्रसङ्गः। 'जनिवध्योश्च' (२५१२) इति निषेधात्। 'हनो वा यद्वधश्च वक्तव्यः' (वार्तिक)—वध्यः। पक्षे वक्ष्यमाणो ण्यत्—घात्यः।

आत् i.e., आ is replaced by ईत् i.e., ई when the affix यत् follows (an आकारान्त root दा, etc). Thus दा+यत्=दी+य= देयम् (भावे) where गुण takes place by the rule 'सार्वधातुकार्धधातुकयोः'

(2198). ग्लै=ग्ला by the rule 'आदेच उपदेशेऽशिति' । (2370) gives ग्लेयम् । 'तकिशसि—' वार्तिक । This Varttika prohibits ण्यत् from तक्, शस् etc which (ण्यत्) was due to them due to their being हलन्त by the rule 'ऋहलोर्ण्यत्' (2172). The injuniction of यत् to जन् is for the sake of pitch or accent due by the rule 'यतोऽनावः' (3701) for the form 'जन्य' might have been obtained by ण्यत् also after it, by the rule 'अर्हे कृत्यतृचश्च' (2132). Nor can it be argued that in that case i.e., in the case of ण्यत् it would have वृद्धि; for the वृद्धि is being forbidden here by the rule 'जनिवध्योश्च' (1511). हनो वा यत्—Varttika. वक्ष्यमाणः i.e., under 'ऋहलोः—' ( ). घात्यः i.e. त् replacing the final of हन by 'हनस्तोऽचिण्णलोः' [2574].

मित—। यति परे इति—'आतो लोप इटि च' (६।४।६४) इत्यतः आत इत्यनुवर्तते। तदाह—आत ईदिति। गुण इति 'सार्वधातुकार्ध—' (२२६८) इति सूत्रे योसि शेषः। ग्लेयम् इति। 'ग्लै हर्षक्षये' इति धातुः। तस्य 'आदेचः—' (२३७०) इत्यात्वे कृते अनेन ईत्वे गुणे च रूपम्। 'तकिशसि—' इति वार्तिकम्। इका निर्देशः। तक हसने, शसु हिंसायाम्, चते याचने, यती प्रयत्ने, जनी प्रादुर्भावे इति पञ्च धातवः। एषां हलन्तत्वेन 'ऋहलोर्ण्यत्' इति ण्यति प्राप्ते अनेन यत्। ननु जनेर्यद्विधिर्व्यर्थः। अर्हे 'कृत्यतृचः' (२८२२) ण्यतापि 'जन्यम्' इत्येव रूपसिद्धेः। न च वृद्धिः शङ्क्या। जनिवध्योश्च (२५२२) इति निषेधात्। तत्—जनेर्यद्विधिः स्वरार्थ इति। 'यतोऽनावः' (३७०२) इति आद्युदात्तार्थं इत्यर्थः। 'हनो वा यत्—' इति। वार्तिकम्। पक्षे इति। 'ऋहलोर्ण्यत्' (२८७२) इत्यत। घात्य इति 'हनस्तोऽचिण्णलोः' (२५७४) इत्यनेन तकारोऽन्तादेशः। 'हो हन्तेः—' (३५८) इति कुत्वम्।

२८४४। पोरदुपधात् ॥ ३।१।९८ ॥

दी—। पवर्गान्तादुपधाद्यत् स्यात्। ण्यतोऽपवादः।

**ग्रप्यम् । लभ्यम् । 'नानुबन्धकृतमसारूप्यम्' । अतो न ण्यत् । तव्यदादयस्तु स्युरेव ।**

यत् takes place after a root ending in any of the पवर्गीय letters and having अत् or अकार for the penultimate (उपधा)। 'नानुबन्ध—' This is a परिभाषा which means 'Dissimilarity or असारूप्य due to (or caused by) an indicatory (अनुबन्ध) cannot be resorted to.' Thus ण्यत् here cannot come in as an alt. of यत्, for ण्यत् bereft of 'ण' is nothing but यत् and therefore they are similar (सरूप) or same. तव्यत् etc. however, may serve as alternatives for they differ from यत् in form.

मित—। पोः + अदुपधात् इति च्छेदः। पोरिति पवर्गात्। तदन्तविधिः। तदाहुः—पवर्गान्तादिति। नानुबन्धकृतमिति। परिभाषेयम्। अनुबन्धकृतम् (तदनुकम्) असारूप्यम् (असाम्यम्) न आश्रीयते इत्यर्थः। अतएव णकारसत्त्वेऽपि यत्ण्यतोः सारूप्यमेव। ततश्च 'वासरूप—' (२८३०) इत्ययं न प्रवर्तते। ण्यच्च निवर्तते। तव्यदादयस्त्विति—असारूप्यादिति भावः।

२८४५। आङो यि ॥ ७।१।६५ ॥

**दी—। आङः परस्य लभेर्नुम् स्याद् यादौ प्रत्यये विवक्षिते। नुमि कृते अदुपधत्वाभावाद् ण्यदेव। आलम्भ्यो गौः।**

When an affix beginning with a यकार is intended to be used, the augment नुम is directed to लभ् coming after the particle आङ्. Here as लभ् ceases to be अदुपध due to the existence of नुम (न्) which itself becomes the उपधा, so ण्यत् only will take effect [and not यत् also]. Thus 'आलम्भ्यः' with ण्यत्।

मित—। यीति—विषयसप्तम्येषा। तदाह—यादौ प्रत्यये विवक्षिते इति। यकारादिप्रत्ययविषये इत्यर्थः। तादृशव्याख्यानफलमाह—नुमि कृते इति। एवञ्च नुम्सन्नियोगवशादेव अदुपधत्वनिवृत्तिः। ततश्च ण्यत् एव प्राप्नोति यत् निवर्तते। यद्ण्यतोरेकतरे कृते रूपसाम्येऽपि स्वरे भेदः फलम्। ण्यति स्वरितत्वम्। यति तु 'यतोऽनावः' इत्याद्युदात्तं स्यात्।

२८४६। उपात् प्रशंसायाम् ॥ ७।१।६६ ॥

टी—। उपलम्भ्यः साधुः। 'स्तुतौ' किम्? उपलब्धुं शक्यः उपलभ्यः।

उपलम्भ्यः—Praiseworthy. उपलभ्यः—fit to be had near. The former is with ण्यत् and the latter is with यत्।

मित—। उपादिति। उपपूर्वात् लभेर्नुम् स्यात् यादौ प्रत्यये विवक्षिते, प्रशंसायामर्थे च। उपलम्भ्यः इति—अत्रापि नुमि कृते प्राग्वद्ण्यदेव। प्रशस्य इत्यर्थः। उपलभ्यः=समीपेप्राप्तुं शक्य इति चार्थः।

२८४७। शकिसहोश्च ॥ ३।१।९९ ॥

टी—। शक्यम्। सह्यम्।

मित—। आभ्यां ण्यदपवादो यदित्यर्थः।

२८४८। गदमदचरयमश्चानुपसर्गे ॥ ३।१।१०० ॥

टी—। गद्यम्। मद्यम्। चर्य्यम्। 'चरेराङि चागुरौ' (वार्तिक)। आचर्य्यो देशः। गन्तव्य इत्यर्थः। 'अगुरौ' किम्? आचार्य्यो गुरुः। यमेर्नियमार्थम्। सोपसर्गान्मा भूदिति। प्रयाम्यम्। निपूर्वात् ण्यदेव। "तेन तत्र न भविष्यति नियम्यम्' इति वार्तिकप्रयोगात्। एतेन 'अनियम्यस्य

नायुक्तिः' । 'त्वया नियम्या ननु दिव्यचक्षुषा' इत्यादि व्याख्यातम् । नियमे साधुरिति वा ।

The roots गद, मद, चर् and यम्, take यत् after them, only when they are not prefixed [with उपसर्गs]. Thus गद्य (fit to be said) etc. 'चरेराङि—' Vartika—But चर (as an exception) takes यत् and not ण्यत् despite its being prefixed with आङ् ( आ ) provided the sense is other than a गुरु or preceptor. Thus आचर्य्य—fit to be gone to. With ण्यत्—आचार्य्य—a preceptor. यम् has here been enlisted to form a restriction ( नियम ) that यत् may not take place after it when it is prefixed. Thus it takes ण्यत् only when it has got an उपसर्ग before it—प्रयाम्यम् । It however, takes यत् when नि precedes—नियम्यम् ; cp. the use in the Varttika 'तेन न तत्र भवेद्विनियम्यम्' ! Similarly expressions like 'अनियम्यस्य नायुक्तिः' (There many not be any defect of argument on the part of one who is beyond restriction'), and 'त्वया नियम्या—' (It has to be controlled by you who have got the mind's eye or transcending knowledge'—etc.) are explained. Or—we can explain नियम्य विनियम्य etc. as cases of तद्धित यत् after नियम (formed with अप् भावे by the rule—यमः समुपनिविषु च—1281), by the rule तत्र साधुः (5510).

मित—। गदमद—इति । अनुपसर्गे इति व्यत्ययेन पञ्चम्यर्थे सप्तमी । तेन 'अनुपसर्गेभ्यो गदमदादिभ्यो यत् स्यात्' इति सूत्रार्थः । ण्यतोऽपवादः । अगुरावर्थे तु आङ्पूर्वादपि चरेर्यदित्याह—'चरेराङि—' इति । वार्तिकमिदम् । आचार्यो गुरुरिति । अतण्यत् । 'अत उपधायाः' ( २२८२ ) इति उपधावृद्धिः । नियमार्थमिति । अन्यथा यमेर्मकारान्तत्वेन पवर्गान्तत्वात् 'पोरदुपधात्' ( २८४४ ) इत्येव यत् स्यादिति भावः । प्रतिप्रसवमाह—निपूर्वात्तु स्यादेव इति । तत्र विनिगमकमाह—"तेन न

तत्र भवेद् विनियमाम्'' इति वार्त्तिकप्रयोगादिति। फलमाह—एतेनेति। प्रकारान्तरेण व्याचष्टे—नियमे साधुरिति वेति। 'तत्र साधुः' (१६५०) इति शेषः। अयं भावः—'यमः समुपनिविषु च' (३२४०) इति भावे अप्प्रत्यये कृते 'नियमः' इति भवति। तत्रसाधितो यदिति। अत्र पक्षे 'कृत्यानां कर्तरि वा' इत्यस्य अप्राप्तेः 'त्वया' इत्यत्र कर्तरि तृतीयाया दुर्लभत्वात् करणे एव तृतीयेति बोध्यम्।

२८४९। अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु ॥३।१।१०१॥

दी—। वदेर्नञुपपदे 'वदः सुपि—'(२८५४) इति यत्क्यपोः प्राप्तयोर्यदेव। सोऽपि गर्ह्यायामेवेत्युभयार्थं निपातनम्। अवद्यं पापम्। 'गर्ह्य' किम्? अनुद्यं गुरुनाम। तद्धि न गर्ह्यं वचनानर्हं च—

"आत्मनाम गुरोर्नाम नामातिकृपणस्य च।
श्रेयस्कामो न गृह्णीयाद् ज्येष्ठापत्यकलत्रयोः॥" इति स्मृतेः।

पण्या गौः। व्यवहर्तव्येत्यर्थः। पाण्यमन्यत्, स्तुत्यर्हमित्यर्थः। अनिरोधोऽप्रतिबन्धस्तस्मिन् विषये वृङो यत्। शतेनवर्या कन्या। वृत्यान्या।

The terms अवद्य, पण्य and वर्य are irregularly (निपातने) formed with यत् in the senses of गर्ह्य (fit to be condemned), पणितव्य (fit to be used) and अनिरोध (without restriction). Although when वद् is preceded by नञ् (as here) it can take any of the affixes यत् and क्यप् by the rule 'वदः सुपि—' (2854) yet according to this rule it will have यत् only after it and that in this special sense (गर्हा—condemnation) only. These two purposes are served here by this निपातन. Thus 'अवद्यम्—' sin is despicable or fit to be condemned. But "अनुद्यम्—' the name of a

preceptor is not to be uttered which is neither despicable nor unutterable. Cp—Smriti quoted here. e. g.—

'one wishing his welfare should not utter the name of one's self, that of one's preceptor, of a very miserly person, of one's eldest child and of one's wife'.

पाण्या—Here पण (the root) has got ण्यत् (not यत्) and has been used in the sense of praise or admiration and not in the sense of 'use' though it has got both (the senses)—पण व्यवहारे स्तुतौ च। शतेन वर्या—' i. e. bride may be chosen by many, say a hundered. वृत्या—this is by क्यप् which comes in by the rule 'एतिस्तुशास्वृदृजुषः क्यप्'। तुक् having taken effect by 'ह्रस्वस्य पिति कृति तुक्।'

मित—। अवद्यपण्यवर्या इति। यत्प्रत्ययान्ता एते त्रयो निपात्यन्ते—'गर्ह्य', 'पणितव्य', 'अनिरोध:' इत्यर्थेषु। ननु 'वद: सुपि—' (२८५४) इत्यत्र यत: क्यपश्च विधानात् अभिन्नार्थे क्यबन्तम् 'अनुद्यम्' इत्यपि निपात्यताम् इति चेत्। नेत्याह—'यत्क्यपो: प्राप्तयोर्यदेव, सोऽपि गर्ह्यायामेवेत्युभयार्थं' निपातनम्' इति। अवद्यं निन्दनीयम् इत्यर्थ:। अनुद्यम् इति—अनुच्चार्यमित्यर्थ:। क्यपि परे 'वचिस्वपि यजादीनां किति' (२४—१२) इति सम्प्रसारणम्। क्यप्प्रत्यये 'तस्य (अनुद्यम् इत्यस्य)' गर्ह्यार्थकत्वं वारयति। तद्धि—न गर्ह्यम् न वचनानर्हं चेति। प्रमाणमाह—आत्मनामेति। ज्येष्ठापत्यकलत्रयोरिति—नामेति योज्यम्। अर्थ: स्पष्ट:। व्यवहर्तव्या इति—व्यवहारयोग्या' क्रयविक्रययोग्या इत्यर्थ:। 'पण व्यवहारे स्तुतौ च' इति द्विविधार्थकस्य पणेर्व्यवहारे एवार्थे निपातनम् इति भाव:। स्तुत्यर्थे तु यदेवेत्याह—पाण्यमन्यदिति। अप्रतिबन्ध इति—बाधाभावो नियमाभावो वेत्यर्थ:। शतेन वर्या इति—पुरुषशतेन वरणीया इत्यर्थ:। अनेनैव पुरुषेण वरणीयेति नास्ति नियम इति यावत्। कन्याया: (अनूढाया युवते:) सर्वकाम-साधारणत्वात्। ['यत: कामयते सर्वान् पुंभि: सर्वैश्च काम्यते। तत: कन्या—'

इति महाभारते दर्शनात्]। कृत्या इति—अत्र 'एतिस्तुशास्वृदृजुषः क्यप्'। 'ह्रस्वस्य पिति कृति' इति तुगागमश्च। अत्र 'कृञ् करणे' इति सौवादिकस्य ग्रहणम्। पूर्वत्र तु 'कृञ् संभक्तौ' इति क्र्यादिकस्येव इति विवेकः।

२८५०। वह्यं करणम् ॥ ३।१।१०२ ॥

टी—। वहन्त्यनेनेति वह्यं शकटम्। 'करणे' इति किम्? वाह्यम्। वोढव्यम् (इत्यर्थः)?।

The word 'वह्य' signifying a cart is irregularly formed with यत् in the करणवाच्य।

मित—। वहेः करणवाच्ये यत् निपात्यते इत्यर्थः। ण्यति तु वाह्यम् इति भावे कर्मणि वा।

२८५१। अर्यः स्वामिवैश्ययोः ॥ ३।१।१०३ ॥

टी—। 'ऋ गतौ'—अस्माद् यत्। ण्यतोऽपवादः। अर्यः स्वामी वैश्यो वा। 'अनयोः' किम्? आर्यो ब्राह्मणः प्राप्तव्य इत्यर्थः।

Eng.—Easy.

मित—। उक्तार्थयोरर्यो यति निपात्यते इति सूत्रार्थः। ण्यतोऽपवादः। 'स्वाम्यौ:—' इति प्राप्तो आद्युदात्तो इति भावः। आर्यः इति—अत्र ण्यत्। वृद्धिः। पूर्वत्र तु गुणः।

२८५२। उपसर्या काल्या प्रजने ॥ ३।१।१०४ ॥

टी—। गर्भग्रहणे प्राप्तकाला चेदित्यर्थः। उपसर्या गौः—गर्भाधानार्थं वृषभेणोपगन्तुं योग्येत्यर्थः। 'प्रजने काल्या' इति किम्? उपसार्या काशी। प्राप्तव्येत्यर्थः।

The term 'उपसर्या' is irregularly formed with यत् in the sense

of 'having arrived at the proper stage of conception.' गर्भाधानार्हम्—' i. e fit to be approached by a bull for impregnation. Rest easy.

मित—। उपसर्या इति। कालः प्राप्तोऽस्या इति काल्या।' 'तदस्य प्राप्तम्' इति वर्तमाने 'कालाद् यत्' इति यत्। प्रजननं प्रजनः—गर्भग्रहणम्, भावे घञ्। 'जनिवध्योश्च' इति वृद्धिनिषेधः। उपपूर्वात् सरतेः सर्तेः वा यन्निपात्यते गर्भग्रहणे प्राप्ताकाला चेदिति सूत्रार्थः। उपसार्या इति भत यत्। वृद्धिश्च। प्राप्तव्या इति—गन्तव्या इत्यर्थः।

२८५२। अजर्यं सङ्गतम्॥ ३।१।१०५॥

टी—। नञ्पूर्वाज्जीर्यतेः कर्तरि यत् सङ्गतं चेद्विशेष्यम्। न जीर्यतीत्यजर्यम्। 'तेन सङ्गतमार्येण रामाजर्यं कुरु द्रुतम्' इति भट्टिः। 'मृगैरजर्यं जरसोपदिष्टमदेहबन्धाय पुनर्बबन्ध' इत्यत्र 'सङ्गत'मिति विशेष्यमध्याहार्यम्। 'सङ्गतम्' किम्? अजरिता कम्बलः। भावे तु सङ्गतकर्तृकेऽपि ण्यदेव। अजार्यम् सङ्गतेन।

The root जॄ preceded by नञ् takes यत् in the कर्तृवाच्य provided the term सङ्गत (meaning friendship) accompanies it (the word so formed, viz-अजर्यं). as विशेष्य। अजर्यं meansthat which does not decay, hence stable or permanent. Thus in Bhattikavya we find 'तेन सङ्गतम्—' 'Oh Rama quickly make a permanent friendship with him who is honourable'! But Kalidasa has 'मृगैरजर्यम्—' where the noun. 'सङ्गतम्' has to be taken understood—the sense of the line being—'He instituted again a permanent (friendship) instigated by infirmity (i. e.

due to old age ) with deers with a view to removing rebirth.' 'अजरिता—' a blanket which knows no decay. Here there being no presence of 'सङ्गत' the root जॄ has taken तृच्। In भाववाच्य, however, the root takes यत् alone even if the term सङ्गत stands as the ( अनुक्त ) कर्ता। Thus 'अजार्यम्—' a friendship does not decaying.

मित—। अजर्यमिति सङ्गतं चेद् विशेष्यमिति। सङ्गतमिति विशेष्यपदं यदि साक्षाद् उपक्रियतेऽध्याह्रियते वेत्यर्थः। सङ्गतमिति—नपुंसके भावे क्तः। मैत्रीत्यर्थः। तेन सङ्गतमिति=राम, आर्येण ( प्राशस्त्येन मान्येनेत्यर्थः ) तेन अजर्यम् ( अविनश्वरम् ) सङ्गतम् ( सख्यम् ) द्रुतम् कुरु इति। कालिदासः प्राह—मृगैरजर्यमिति—अदेहबन्धाय ( देहबन्धः पुनर्भवः स माभूदिति कृत्वा ) मृगैः पशुभिः [ 'पशवोऽपि मृगाः स्मृताः' इत्यमरः ] ( सार्धमिति शेषः ) जरसोपदिष्टम ( जरसा वार्द्धकेन उपदिष्टं कथितं वार्द्धकसुलभमिति यावत् ) अजर्यं ( अजर्यं सङ्गतमिति शेषः ) पुनः ( भूयोऽपि ) बबन्ध विदधावित्यर्थः [ 'समत्वमाराधनमच्युतस्य' इत्यनुसारात् समदर्शनो बभूवेत्यर्थः ]। अजरितेति—अत्र सङ्गतमिति विशेष्याभावात् तृजेव न यत्। भावे त्विति—अत्र सङ्गतस्य प्रत्ययवाच्यत्वाभावात् इति भावः। अजार्यमिति यति वृद्धिः। अक्षयमित्यर्थः। प्रेमा प्रायेण न प्रणश्यति इत्याकूतम्।

## २८५४। वदः सुपि क्यप् च॥ ३।१।१०६॥

दी—। उत्तरसूत्रादिह 'भावे' इत्यपकृष्यते। वदेर्भावे क्यप् स्याच्चाद् यदनुपसर्गे सुप्युपपदे। ब्रह्मोद्यम्—ब्रह्मवद्यम्। ब्रह्म वेदः, तस्य वदनमित्यर्थः। कर्मणि प्रत्ययवित्येके। उपसर्गे तु यदेव। अनुवाद्यम्। अपवाद्यम्।

The term 'भावे' is taken backwards (drawn in here) from the subsequent rule 'भुवो भावे' (2855—3. 1107). The root वद takes

क्यप् as also यत् in the भाववाच्य when a सुबन्त उपपद bereft of any prefix (उपसर्ग) precedes. Thus ब्रह्मोद्यम्—ब्रह्म+वद् क्यप् where सम्प्रसारण takes effect due to कित्व by 'वचिस्वपि—' (2409) and ब्रह्मवद्यम्—ब्रह्म+वद् यत्—the meaning in both cases being the same viz—'The speech on the veda'. Some say that क्यप and यत् are attached here in the कर्मवाच्य (and not in the भाववाच्य). Rest easy.

मित—। वदः सुपीति। उत्तरसूत्रादिति—'भुवो भावे (३।१।१०७) इत्यत इत्यर्थः। अपकृष्यते—उपरिष्टादाकृष्यते। 'अचो यत्' (३।१।९७) इत्यतो यदिति चकाराद् गृह्यते। 'वदः सुप्यनुपसर्गग्रहणम्' इति भाष्यादाह—अनुपसर्गे इति। ब्रह्मोद्यम् इति। क्यपि 'वचिस्वपि—' (२४०९) इति सम्प्रसारणम्। ब्रह्मवद्यम्। —यत्। अर्थः समान उभयत्र। कर्मणीति—क्यप्यतावत्र कर्मण्येव न तु भावे इति तेषामाशयः।

## २८५५। भुवो भावे॥ ३।१।१०७॥

**टी—। क्यप् स्यात्। ब्रह्मणो भावो ब्रह्मभूयम्। सुपीत्येव—भव्यम्। अनुपसर्ग इत्येव। प्रभव्यम्।**

The root भू takes क्यप् in the भाववाच्य when an un—prefixed सुबन्त word precedes. Thus ब्रह्मभूयम्—the state of ब्रह्म or ब्रह्मत्व. Here गुण is barred by the rule 'क्ङिति च' (2217). If a सुबन्त word is wanting or if a prefix exists the root will take यत् only thus भव्यम् and प्रभव्यम् in the sense of भाव and प्रभाव।

मित—। भुव इति। भुवः क्यप् स्यादनुपसर्गे सुप्युपपदे इति सूत्रार्थः। तदाह सुपीत्येवेति, अनुपसर्गे इत्येवेति च। ब्रह्मभूयम् इति—क्लीबत्वं लोकात्। ब्रह्मत्वमित्यर्थः। भाववाचित्वात् क्यपः। 'क्ङिति च' (२२१७) इति निषेधे न गुणः। भव्यमिति—भाव इत्यर्थः। अत्र यदेव न क्यप् सुबुपपदस्याभावात्। एवं प्रभव्य-

मित्यत्र सुबभावात् उपसर्गसत्त्वात् च न क्यप् किन्तु यदेव। 'सार्वधातुकार्द्ध—' इतिगुणः। 'वान्तोयि' इत्यवादेशश्च। भाव्यः, प्रभाव्य इति क्रमेणार्थौ।

२८५६। हनस्त च ॥ ३।१।१०८ ॥

दी—। अनुपसर्गे सुप्युपपदे हन्तेर्भावे क्यप् स्यात् तकारश्चान्तादेशः। ब्रह्मणोहननं ब्रह्महत्या। स्त्रीत्वं लोकात्।

When an unprefixed सुबन्त word precedes the root, हन् takes क्यप् and तकार becomes the final substitute. Thus ब्रह्महत्या which is fem. by usage. But 'हत्या' without ब्रह्म or some such सुबन्त word is incorrect as in that case हन will take घञ् or यत् and not क्यप्। But हत्या is current in Bengali Litt.

मित—। हन इति। अनुपसर्गे इति—प्रागवदनुवृत्तिः। अन्तादेश इति—हन्तेर्नकारस्थाने तकारादेशः इत्यर्थः। भावे इत्येव। घात्यः—अत्र घञ्। अनुपसर्गे इत्येव—प्रघातः। अत्र घञ्। हत्येति केवलप्रयोगस्तु प्रामादिक एव। अनुपसर्गसुबुपपदाभावे क्यपो दुर्लभत्वात्।

२८५७। एतिस्तुशास्वृदृजुषः क्यप्॥ ३।१।१०९ ॥

दी—। एभ्यः क्यप् स्यात्।

२८५८। ह्रस्वस्य पिति कृति तुक् ॥ ६।१।७१ ॥

दी—। इत्यः। स्तुत्यः। 'शास इदङ्हलोः' (२४८६) शिष्यः। 'वृ' इति वृञो ग्रहणं न वृङः। वृत्यः। वृङस्तु वार्या ऋत्विजः। आदृत्यः। जुष्यः। पुनः क्यबुक्तिः परस्यापि ण्यतो बाधनार्था—अवश्यस्तुत्यः। 'शंसिदुहि-गुहिभ्यो वा' (१ वार्तिक) इति काशिका। शस्यम—शंस्यम्। दुह्यम—दोह्यम। गुह्यम— गोह्यम्। प्रशस्यस्य श्रः (२०१८) 'ईडवन्दवृशंसदुहां ण्यतः'

( ३७०२ ) इति सूत्रद्वयबलाच्छंसेः सिद्धम्। इतरयोस्तु मूलं मृग्यम्। 'आङ्पूर्वादञ्जेः संज्ञायामुपसंख्यानम्' ( वार्तिक )। 'अञ्जू' व्यक्तिम्रक्षणादिषु। बाहुलकात् करणे क्यप्। 'अनिदिताम्' ( ४१५ ) इति नलोपः। आज्यम्।

क्यप् is used after the roots इ, स्तु, शास् वृ, दृ and जुष्—।

The root which ends in a short ऋ will have the augment तुक् when a पित् कृत् (such as क्यप्, क्विप् etc) follows. Thus इ + क्यप् = इत्य etc. शास् becomes शिष् by the rule 'शास इत्—' (2486). न डङ:—which takes ण्यत् ( and not क्यप् ) due to its connection with ईड, वन्द etc ( which are आत्मनेपदिन्s ) in the rule 'ईडवन्द—' ( 3702) and consequently gives 'वार्याः' as in वार्या ऋत्विजः—the ऋत्विक्s or sacrificial priests only are to be selected—the sense here being that of निरोध or restriction, यत् enjoined by 'अवद्यपण्यवर्य—' (2849) does not come. Repetition of क्यप् in the sutra bars ण्यत् even that is later—परस्यापि ण्यत्: i. e. ण्यत् expressed in 'ओरावश्यके' ( 3. 1. 125—2886 ), 'शंसि—' Balamonorama reads it as a varttika whereas Tattwabodhini takes it to the very words of वृत्तिकार—which seems to be preferable from the critical appreciation made by Dikshita. शस्यम्—in the case क्यप् where the नकार disappears by 'अनिदिताम्—' ( 415 ). शंस्यम् in the case of ण्यत्। दुह्यम्— क्यप् no guna due to कित्त्व of क्यप्। दोह्यम्—ण्यत्-गुण। इति सूत्रद्वयबलात् etc—i. e. as Panini reads 'प्रथमस्य'—which is an indication of शंस् taking क्यप् and 'ईडवन्द—' which enjoins ण्यत् after same so it is evident शंस् has got an option between क्यप् and ण्यत् whereas the expression of that in

the cases of दुह् and गुह् is objectionable on the ground of proper evidence. 'आङ्पूर्वादञ्जेः—' This is a varttika which enjoins क्यप् to 'अञ्ज्', preceded by आङ् in the sense of a संज्ञा or designation. Thus आज्यम् (अञ्ज्+क्यप्)—नलोप as before.

मित—। एतिस्तुति। एभ्यः षड्भ्यः इत्यर्थः। क्यपः पित्त्वेन पितिविधिमुपस्थापयति—ह्रस्वस्येति। ह्रस्वान्तस्य धातोस्तुगागमः स्यात् पिति कृति परे इति तदर्थः। फलमाह—इत्य इत्यादि। एतिस्त्वत्र अनुपसर्गे इति सुप्युपपदे इति च निवृत्तम् इति विभावनीयम्। अत्र एतीति इण् गतावित्यस्यैव न तु 'इक् स्मरणे' इत्यस्य, तस्य प्रायेणाधिपूर्वस्यैव प्रयोगदर्शनात्, भाष्ये 'अध्येयं व्याकरणम्' इति यदन्तत्वेन प्रयुक्तत्वाच्च। न वा 'इट् गतौ' इति भौवादिकस्य, व्याख्यानात्। शिष्य इति—शासु अनुशिष्टौ इत्यस्य 'शास इत्—' इति शिष्भावे जाते क्यप्। कित्त्वान्न गुणः एवमन्यत्र। वृञो ग्रहणम् न वृङ इति। 'ईडवन्द—' (२७०२) इत्यत्र आत्मनेपदिनां धातूनां संग्रहात् आत्मनेपदिनो 'वृङ् संभक्तौ' इति क्र्यादिकस्य न ग्रहणं किन्तु 'वृञ् वरणे' इत्युभयपदिनः सौवादिकस्यैवेत्यर्थः। वार्या ऋत्विज इति—एते एव वरणीया इति नियमस्यागमकत्वादत्र निरोधार्थे यदभावात् ण्यदित्यर्थः। पुनः क्यब्विधिरिति—अत्र सूत्रे इति शेषः। 'वदः सुपि—' (२४५४) इत्यनेनैव कार्यसिद्धेरिति भावः। परस्यापीति—'ओरावश्यके' (२८८६—३।१।१२५) इत्यतस्त्यैरिति यावत्। 'शंसि—' वृत्तिकारवचनमिदम्—न वार्तिकम्। भाष्यानुपलब्धेः। एभ्यः क्यप्ण्यतौ विकल्पेन स्यातामिति काशिकाकृद्व्याचष्टे इत्यर्थः। शंस्यम् इति—अत्र क्यप्। अनिदितामिति नलोपः। शंस्यम्। अत्र ण्यत्। दुह्यम्—क्यपः कित्त्वान्न गुणः। दोह्यम्—ण्यत्। गुणः। सूत्रद्वयबलादिति। क्यप्प्रत्ययाभावे 'प्रशस्य' इत्यस्य दुर्लभत्वेन 'प्रशस्यस्य—' इति सूत्रं क्यप्प्रत्ययपक्षे ज्ञापकम्। उत्तरन्तु ण्यत् पक्षे इति भावः। इतरयोस्त्विति—दुहिगुह्योरित्यर्थः। 'आङ्पूर्वाद्—' इति—वार्तिकमिदम्। अर्थमाह—बाहुलकात् करणे क्यप् इति। 'कृत्यल्युटो—' इत्यनुसारादित्यर्थः। अन्यत् स्पष्टं मूले।

२८५९। ऋदुपधाच्चाक्लृपिचृतेः ३।१।११० ॥

दी—। वृत्। वृत्यम्। वृध्। वृध्यम्। क्लृपिचृत्योस्तु—कल्प्यम्। चर्त्यम्। तपरकरणम् किम्? कृत्। कीर्त्यम्। अनित्यण्यन्ताश्चुरादय इति णिजभावे--ण्यत्। णिजन्तात्त--यदेव।

Roots having ऋकारs for their penultimate save and except क्लृप् and चृत् take क्यप् after them. Thus वृत्यम् etc. But कल्प्यम् and चर्त्यम् are derived with ण्यत् added to them by the rule 'ऋहलोर्ण्यत्' (2872); त् after ऋ (in ऋत्) has been added to restrict the affix (क्यप्) to ह्रस्वान्त roots only and not to extend to दीर्घान्त ones also. Thus कीर्त्यम् etc are derived with ण्यत्॥ णिजभावे ण्यत् i. e. by 'ऋहलोः—'। णिजन्तात्तु यत्—i. e. by 'अचो यत्'.

मित—। ऋदुपधादिति। ऋदुपधेभ्यो धातुभ्यः क्यप् स्यान्न तु क्लृपिचृत्योरिति सूत्रार्थः। तदाह—क्लृपिचृत्योस्तु इति। ण्यत् ऋहलोरितिण्यदित्यर्थः। ऋदिति तपरकरणाद्द दीर्घान्ता भूदित्याह—तपरकरणं किम्?—कीर्त्यम्। ण्यदेव। णिजभावे—ण्यदिति। हलन्तत्वादित्यर्थः। णिजन्तात्तु यदिति। अजन्तत्वादचो यदिति यत्।

२८६०। ई च खनः ॥ ३।१।१११ ॥

दी—। चात् क्यप्। 'आद्गुणः' (६९)। खेयम्। 'इ च' इति ह्रस्वः सुपठः।

The final (नकार) of खन is replaced by ईकार and क्यप् is added to it. Here ह्रस्व इकार might have better been read as there is no reason to increase the syllable by pronouncing the दीर्घ when the operation viz 'गुण' being the same in each case. N. B:—Nagesha however defends the दीर्घोच्चारण here.

मित—। ई चेति। खनः क्यप् प्रत्ययः स्यादीकारश्चान्तादेश इत्यर्थः। ह्रस्वः

सुपठः इति—एवं मात्रालाघवः स्यादिति भावः। न च फले भेद इति वाच्यम्। ह्रस्वपक्षेऽपि आद्गुणश्रुत्यस्य निर्बाधत्वात्। नागेशस्तु 'यै विभाषा' इत्यत्र ये इत्यस्य विषयसप्तमीत्वेऽपि जनादिसाहचर्येण यादिप्रत्ययोत्पत्तिपूर्वकाले नात्त्वस्यैवात्वविधानेन अत्र तदप्राप्त्या नस्यैत्वे आद्गुणेन रूपसिद्धेरिति भावः। एतत्क्लेशपरिहारायैव दीर्घोच्चारणं कृतमिति तत्त्वमित्याह।

२८६१। भृञोऽसंज्ञायाम्॥ ३।१।११२॥

टी—। भृत्याः कर्मकराः भर्तव्या इत्यर्थः। क्रियाशब्दोऽयं न तु संज्ञा। 'समश्च बहुलम्' (वार्तिक)। सम्भृत्याः—सम्भार्य्याः। असंज्ञायामेव विकल्पार्थमिदं वार्तिकम्। 'असंज्ञायाम्' किम्? भार्य्या नाम क्षत्रियाः। अथ कथं भार्य्या वधूरिति। इह हि 'संज्ञायां समज—' (३२७६) इति क्यपा भाव्यम्। संज्ञापर्युदासस्तु पुंसि चरितार्थः सत्यम्। बिभर्त्तेर्भॄ इति दीर्घान्तात् ऋादेर्वा ण्यत्। क्यप् तु भरतेरेव। 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया।

क्यप is added to भृञ् (भरणे—भ्वादि) when a designation or संज्ञा is not implied (by the derivative). Thus भृत्याः (तुक् by 'ह्रस्वस्य—') workmen i. e. those who are to be maintained. Hence it is a verbal or क्रियावाचक word and not a designation.' 'समश्च—'varttika—when सम् precedes and a designation is not implied then क्यप् and ण्यत् are optionally added to the root. Thus सम्भृत्याः—सम्भार्याः। भार्याः (masc. base)—a class of particular क्षत्रियs (and not wives); thus it is a संज्ञावचन and takes ण्यत्। Then how to derive the word 'भार्या' which is a संज्ञा of wife? For here (in संज्ञा and fem.) i. e. in the case of भृ (भृञ्) there must

be क्यप् in the sense of a संज्ञा by the rule 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' (3276) which (with क्यप्) gives भृत्या—wage or a sort of treatment as in 'कुमारभृत्याकुशलैरनुष्ठिते भिषग्भिराप्तैरथ गर्भभर्मणि' (रघु—3. 12). Nor can it be argued that in that case (i. e in case of भृत्या as संज्ञा) the संज्ञापर्युदास or the utterance of the term 'असंज्ञायाम्' in the rule 'भृञः—' is superfluous, as it has got its importance in the masculine संज्ञावाचक word 'भार्याः' above. Hence the word भार्या (fem.) has rather to be derived from भृ (डुभृञ्) read in जुहोत्यादि class or from भृ read in भ्वादि (भृ भर्त्सने) with ण्यत् attached to them and not क्यप् which is restricted to भरति only i. e. to भृञ् (भरणे भ्वादि) only by the परिभाषा—'तदनुबन्धकग्रहणे'—when an injunction is made with ref. to a root having a particular अनुबन्ध then it is restricted to that special root along with that particular अनुबन्ध or indicatory only, and does not hold good when only other अनुबन्ध is added to the same—(Hence भृञ् alone is the sphere of application of क्यप् and not डुभृञ् also). N. B.—Acc. to भाष्य however we can have भार्या (wife) from भृ (भरणे भ्वादि) also with ण्यत् by "कृत्यल्युटो बहुलम्" &c.—(See Tika).

मित—। भृञ इति। भरतेः संज्ञाभिप्राये क्यप् स्यादित्यर्थः। भृत्या इति। 'ह्रस्वस्य पिति—' (२८५८) इति तुक्। क्रियाशब्द इति—क्रियावाचकः शब्द इत्यर्थः। 'समश्च—' इति—वार्तिकमिदम्—सम्पूर्वाद् भरतेरसंज्ञायामेव क्यप् बहुलं स्यात्। पक्षे ण्यत्। तदाह—सम्भृत्याः-सम्भार्या इति। अर्थः समानः। भार्य्या नाम इति—अत्र संज्ञावगमाद् भरतेर्ण्यत्। अत्र भार्य्येति पुंवचनं न स्त्रीति स्वयमेव वक्ष्यति 'संज्ञापर्युदासस्तु पुंसि चरितार्थ' इति। नन्वेवं स्त्र्यर्थवाची भार्याशब्दः कथं सिध्यति इत्याशङ्का आक्षिपति—अथ कथमिति। अत्र इति—संज्ञापक्षे

इत्यर्थः। ननु तर्हि 'असंज्ञायाम्' इति सूत्रे संज्ञापर्युदासो व्यर्थ इत्याशङ्का समाधत्ते—संज्ञापर्युदासस्त्विति—भार्या नाम क्षत्रिया इत्यत्र त्वर्थः। एवं पूर्वपक्षं प्रकल्प्य स्वाभिमतं प्रकटयति—सत्यमिति। सत्यम्—'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' (३२७६) इति स्त्र्यधिकारोक्तसूत्रेण 'अजब्जोर्भावे क्यप्' (३२७५) इत्यतः क्यबित्यनुकृष्य भावे एव भरतेः संज्ञायां 'भृत्या' इति चिकित्साविशेषादिवचनः स्त्रीशब्दो विधीयते। सत्यमेवदमपि यत् संज्ञापर्युदासः पुंस्येव चरितार्थः। तथापि वधूवाचिकः भार्याशब्दोऽपि न दुर्घटः—भौवादिकाद् भृञ उत्तरं स्त्रियां ण्यतो आपातत: दुर्लभत्वेऽपि जौहोत्यादिकाद् 'डुभृञ्' इत्यतः क्र्यादिकाद्वा'भृ' इति दीर्घान्तस्य ण्यत्प्रत्ययस्य अवकाशसत्त्वात्। एवञ्च बिभर्त्तीति बिभ्रियत इति वा भार्य्या ण्यति स्त्रियाम्। एवं दीर्घपक्षे कर्मणि बाहुलकात् कर्तरि वा ण्यत् द्रष्टव्यः। नन्वेवं क्यबपि अनयोरेकतरात् स्यादिति चेत्—नेत्याह। क्यप् तु भरतेरेवेति। 'भृञ् भरणे' इति भ्वादेरेवेत्यर्थः। कुत इत्यत आह—तदनुबन्धकग्रहणे इति—यावदवयवकमनुबन्धमुपदिश्य किञ्चित् कार्यम् कुत्रचिद् धातौ विधीयते, तत् कार्यम् तावन्मात्रावयवानुबन्धविशिष्टे एव धातौ विधीयते इति प्रतेतव्यम्, न तु तादृशानुबन्धविरहितेऽपि तत्र धातौ न तदधिकानुबन्धसहितेऽपि तत्र। अयमर्थः—'भृञः असंज्ञायाम्' इति भ्वादिं 'भृञ्' इतीममुद्दिश्य क्यब्विधानात् तत एव क्यप् भविष्यति न तु तदधिकानुबन्धविशिष्टाद् जुहोत्यादेः 'डुभृञ्' इत्यतो नापि निरनुबन्धकात् क्र्यादेः 'भृ' इति दीर्घादिति॥ मन्येऽएतत् वृत्तिकारमतेन व्याख्यातम्। तन्मते "संज्ञायां समज" इत्यत्र भावे इति न नियमः। भाष्यकारस्तु "संज्ञायां समज—" इत्यत्र 'भावे इति वर्त्तते—भार्य्याशब्दस्तु कर्मसाधन एव" इत्याह। तथा च कैयटः—"भावग्रहणानुवर्त्तनात् कर्मणि क्यबभावात् ण्यदेव भवति"। "अथवा कृत्यल्युटो बहुलम् इत्येवमत्रापि ण्यद् भविष्यति" इत्यपि तत्र स्पष्टम्। एवं भाष्यमते भृ ण्यत् कर्मणि स्त्रियाम् संज्ञायाम्=भार्य्या।

## २८६२। मृजेर्विभाषा॥ ३।१।११३॥

दी—। मृजेः क्यब्वा स्यात्, पक्षे ण्यत्। मृज्यः।

मित—। मृजेरिति। ऋदुपधत्वेन नित्यं क्यपि प्राप्तेऽयमारम्भः। मृज्यः क्यप्पक्षे किच्चेन गुणाभावे इदम्। ण्यत्पक्षे तु—

२८६३। चजोः कु घिण्ण्यतोः ॥ ७।३।५२ ॥

दी—। चस्य जस्य च कुत्वं स्याद् घिति ण्यति च प्रत्यये परे। 'निष्ठायामनिट इति वक्तव्यम्' ( वार्तिक )। तेनेह न—गर्ज्यम्। 'मृजेर्वृद्धिः' (२४७३)। मार्ग्यः।

The चकार and the जकार in a root turn to कुत्व i. e. become क and ग respectively when any affix dropping a घकार as also when the affix ण्यत् follows. 'निष्ठायाम—' varttika—This has to be said that this rule holds good in cases of such roots alone as are अनिट् in con. with निष्ठा ( क्त क्तवतु ). Thus गर्ज् being सेट् in निष्ठा ( गर्जितम—गर्जितवान् ) we have गर्ज्यम् and not गर्ग्यम् in ण्यत्। मार्ग्यः—कुत्व by this rule.

मित—। चजोरिति। अत्र चस्य घिति जस्य च ण्यति परे कुत्वमिति क्रमो न विवक्षितः। किन्तु उभयोरपि उभयस्मिन् प्रत्यये परे कुत्वमिति विवेकः इति कैयटहरदत्तौ। तदाह—चस्य जस्य चेति। अत्र 'तेन रक्तं रागादि'ति रञ्जि जस्य कुत्वनिर्देशो ज्ञापकम्। 'कु' इत्यविभक्तिकोनिर्देशः। 'निष्ठायामनिट—' इति। वार्तिकमिदम्—निष्ठायामनिट एव धातोः कुत्वं नेतरस्येत्यर्थः। गर्ज्यमिति। निष्ठायां गर्जितम्—गर्जितवानिति इति सेट्त्वान्न कुत्वम्। अन्यत्सुगमम्।

२८६४। न्यङ्क्वादीनां च ॥ ७।३।५३ ॥

दी—। कुत्वं स्यात्। न्यङ्कुः। 'नावञ्चेः' ( उना १७ ) इत्युप्रत्ययः।

मित—। न्यङ्कुरिति मृगभेदः [ 'कदलीकन्दलीचीनचमूरुप्रियकाप्यपि। समूरुश्चेति हरिणा अमी अजिनयोनयः' इत्यमरः ] [ न्यङ्कु, मद्गु, भृगु, दूरेपाक, फलेपाक क्षणेपाक, दूरेपाका, फलेपाका, दूरेपाकु, फलेपाकु, तक्र, वक्र ( तक्र ), व्यतिषङ्ग, अनुषङ्ग, अवसर्ग, उपसर्ग, श्वपाक, मांसपाक ( मासपाक ) मूलपाक, कपोतपाक, उलूकपाक। संज्ञायां मेघनिदाघावदाघार्घाः। न्यग्रोध, वीरुत्—इति न्यङ्क्वादिः ]। एभ्यः कुत्वमित्यर्थः।

२८६५। राजसूय-सूर्य-मृषोद्य-रुच्य-कुप्य-कृष्टपच्याव्यथ्याः ॥ ३।१।११४ ॥

टी—। एते सप्त क्यबन्ता निपात्यन्ते। राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः। यद्वा—लतात्मकः सोमो राजा स सूयते खण्ड्यते * अत्रे त्यधिकरणे क्यप्। निपातनाद् दीर्घः। राजसूयः-राजसूयम्। अर्धर्चादिः। सरत्याकाशे सूर्यः। कर्तरि क्यप्। निपातनादुत्वम्। यद्वा—'षू' प्रेरणे तुदादिः। सुवति कर्मणि लोकं प्रेरयति। क्यपो रुट्। मृषोपपदाद् वदेः कर्मणि नित्यं क्यप्। मृषोद्यम्। विशेष्यनिघ्नोऽयम्। 'उच्छ्राय-सौन्दर्यगुणा मृषोद्याः'। रोचतेः रुच्यः। गुपेरादेः कुत्वं च संज्ञायाम्—सुवर्णरजतभिन्नं धनं कुप्यम्। गोप्यमन्यत्। कृष्टे स्वयमेव पच्यन्ते कृष्टपच्याः—कर्मकर्तरि। शुद्धे तु कर्मणि कृष्टपाक्याः। न व्यथतेऽ व्यथ्यः।

These seven words ( राजसूय, सूर्य, मृषोद्य, रुच्य, कुप्य, कृष्टपच्य, अव्यथ्य ) are irregularly derived with क्यप्। राजसूय means a sacrifice which is to be performed by a king or क्षत्रिय by means of a sacrificial path or—a sacrifice wherein राजा—a kind of creeper or plant ( सोम )—is churned and squeezed (distilled). In the latter sense we have क्यप् in the अधिकरणवाच्य ( राज + षु (सु) + क्यप् ) whereas in the former we have कर्मणि क्यप्—the lengthening of उकार being in an irregular way ( निपातनात् ) for the rule 'अकृत्-सार्वधातुकयोः' ( 2298 ) does not apply here. The word falls in

* 'क्षण्ड्यते' इति तत्त्वबोधिनीधृतपाठः।

the अर्धर्चादि class. सूर्य is derived either as सृ + क्यप् ( कर्तरि ) = सर्य ( उत् of ऋकार by निपातन ) = सूर्य ( the sun ) दीर्घ by the rule 'हलि च' ( 354 ) ; or—as षू ( सू ) to send forth ) + क्यप् ( कर्तरि ) = सूर्य, the angment 'रुट्' having been prefixed to the affiix ( क्यप् ) by this निपातन। मृषोद्य—is derived as मृषा + वद् + क्यप् ( कर्मणि ) and not यत् also by 'वदः सुपि—' ( 2854 ) so he says 'नित्यम' (persistently). सम्प्रसारण by 'वचिस्वपि—' (2409). मृषोद्य means a false representation ; hence an adjective and is thus used in any gender according as the noun it qualifies is masc, fem. or neut. 'उच्छ्राय—' false utterances represent the beauty of a bright i. e. fascinate the mind of the audience for the time being. रुच्य—रुच् + क्यप् and not ण्यत् by 'ऋहलोः—' (2872) which would give रोच्य which is inadmissible. कुप्य—गुप् + क्यप्, ग being changed into क in the sense of संज्ञा by निपातन. It means a metal other than gold and silver Cp—'कुप्यं सकुप्यं वसु वासवोपमः' ( किरात—1st canto ). In con. with ण्यत्—गोप्यम् (secret). कृष्ट + पच् + क्यप् = कृष्टपच्यः—that which (a crop) grows (and matures) in a tilled field out of itself. Thus क्यप् is here कर्मकर्तरि. In the pure कर्मवाच्य, however, the form would have been कृष्टपाक्य with ण्यत् कुत्व being effected by 'चजोः कु—' (2863). नञ् + व्यथ् + क्यप् कर्तरि ( by निपातन ) = अव्यथ्यः he who is never pained.

मित—। राजसूयेति। अभिषवद्वारा इति—अत्राभिषवो नाम व्रतस्नानम्। ['सुत्याऽभिषवः सवनार्चना' इत्यमरः]। अत्र पक्षे कर्मणि क्यप्। 'अकृत्सार्वधातुकयोः' ( २२९८ ) इत्यस्याप्राप्ते र्निपातनाद्दीर्घः। पक्षान्तरमाह—यद्वेति। लवच्छातेऽर्वेति। रसनिष्पत्त्यर्थं ग्रावभिः सोमलतानां कुट्टनपूर्वकं सन्धानमभिषवः ['स्यात् सन्धानमभिषवः' इत्यमरः]। अत्र बाहुलकादधिकरणे क्यप्, प्राग्वद्दीर्घः, पूर्वपक्षे राजसूय इति।

उत्तरपदे तु राजसूयमिति। कर्त्तरीति—बाहुलकात्। निपातनादुत्वमिति—गुणाभावस्य अकारस्योत्वमित्यर्थः। ततो 'हलि च' (३५४) इति दीर्घः। अथापरान्ष्यन् पचान्तरमाह—यद्देति—क्यपो दृढ्विति। निपातनादिति शेषः। नित्यं क्यबिति—'वदः सुपि—' (२८५४) इति यतोऽपि प्राप्तौ निपातनात्तदपवादो नित्यं क्यबित्यर्थः। 'वचिस्वपि—' (२४०९) इति सम्प्रसारणम्। विशेष्यनिघ्नोऽयमिति—विशेष्याधीनो विशेष्यं इति यावत् [ 'अधीने निघ्न आयत्तः' इत्यमरः ]। विशेष्यलिङ्गेनास्य लिङ्गनिष्पत्तिरित्यर्थः। उत्कायेति—उत्कायस्य उत्तरीयस्य सौन्दर्यम् रमणीयता तस्यैव गुणाः येषां ते (तादृशाः) मृषोद्याः मिथ्याभाषणानि भवन्तीति शेषः। मृषोक्तिर्हिचरणेन सत्यत्वेन प्रतीयमाना श्रोतृमानसे सुष्ठुप्रतिमापादयति (परं कथान्तरेण 'पतनान्ताः समुच्छ्रयाः' इति नयेन गर्हितां गतिमाप्नोति) इति भावः। रोचतेरिति—रुच-धातोरित्यर्थः। अत्र निपातनात् क्यप्। अन्यथा हलन्तत्वेन ण्यत् स्यात्। रुच्यमिति यथा 'कान्तं मनोरमं रुच्यम्—' इत्यमरः। गुपेरादेरिति—गकारस्योत्वमित्यर्थः। स संज्ञायामिति। तदेवाह—सुवर्णरजतभिन्नं धनं कुप्यमिति। [ 'स्यात् कोशश्च हिरण्यञ्च हेमरूप्ये कृताकृते। ताभ्यां यदन्यत् तत् कुप्यम्—' इत्यमरः ]। "विजित्य यः प्राज्यम् अयच्छदुत्तरान् कुरून् 'अकुप्यं' वसु वत्सरोपमः" इति किरातार्जुनीयम्। गोप्यमिति—ण्यदन्तोऽयम्। लघूपधगुणः। कर्मकर्त्तरीति। अतएवोक्तम्—स्वयमेव पच्यन्ते इति। कृष्टे चेत् व्यापारान्तरं विना निष्पद्यन्ते इत्यर्थः। 'सुखेन लभ्या दधतः कृषीवलैरकृष्टपच्या इव सस्यसम्पदः—(किरात—१म)। पूर्ववदिति। कर्मवाचेर ण्यति उपधावृद्धौ 'चजोः कु—' इति कुत्वमित्यर्थः। अव्यथ्य इति—निपातनात् क्यप्। बाहुलकात् कर्त्तर्येव।

**२८९६। भिद्योद्ध्यौ नदे ॥ ३।१।११५॥**

**टी—। भिदेरुज्झेश्च क्यप्। उज्झेर्धत्वं च। भिनत्ति कूलं भिद्यः। उज्झत्युदकमुद्ध्यः। 'नदे' किम्? भेत्ता। उज्झिता।**

Eng—Easy.

मित— । भिद्योद्ध्याविति । कर्तरि क्यबन्तावेतौ नदविशेषार्थे निपात्येते इत्यर्थः । उज्झेर्धत्वं चेति—'उज्झ उत्सर्गे' इति तौदादिकोऽयं धातुः । तस्य झस्य धकार इति भावः । 'झलां जश् झशि' इति जकारस्य दकारेण उद्ध्य इति । जलोच्छ्रास-युक्तनदविशेष इत्यर्थः । भेत्तेति—भवोभयत्र कर्तरि क्यपेव । 'तोयदागम इवोद्ध्य-भिद्ययोर्नामधेयसदृशं विचेष्टितम्' ( रघु ११।८ ) ।

२८९७ । **पुष्यसिध्यौ नक्षत्रे ॥ ३।१।११६ ॥**

**दी— । अधिकरणे क्यप्निपात्यते । पुष्यन्त्यस्मिन्नर्थाः पुष्यः । सिध्यन्त्यस्मिन् सिध्यः ।**

मित—। पुष्यसिध्याविति । क्यबन्तावेव । पुष्यः सिध्यश्च नक्षत्रविशेषौ । पुष्यन्तीति—जातकः पुष्कलार्थवान् भवतीत्यर्थः ।

२८९८ । **विपूयविनीयजित्या मुञ्जकल्कहलिषु ॥ ३।१।११७ ॥**

**दी— । पूङ्नीञ्जिभ्यः क्यप् । विपूयो मुञ्जः । रज्ज्वादि-करणाय शोधयितव्य इत्यर्थः । विनीयः कल्कः । पिष्ट औषधि-विशेष इत्यर्थः * । पापमिति वा । जित्यो हलिः । बलेन क्रष्टव्य इत्यर्थः । क्रष्टसमीकरणार्थं स्थूलकाष्ठं हलिः । अन्यत्तु—विपव्यम् । विनेयम् । जेयम् ।**

The words विपूय, विनीय and जित्य are irregularly formed with क्यप् when applied to मुञ्ज (a kind of grass), कल्क (squeezed drug or sin) and हलि (a furrow). विपूयः i. e. to be purified for making a rope etc. जित्य—i. e. to be drawn with force ( for levelling what is ploughed by a furrow—a kind of thick plank ).

---

* औषधिविशेष इति तत्त्वबोधिनीसम्मतः पाठः ।

मित—। विपूयेति। एते त्रयः क्रमेण मुञ्जकल्कहलिषु क्यबन्ता निपात्यन्ते। विपूयो मुञ्ज इति—दीर्घतृणविशेषो मुञ्जः। अन्यत्र यत्—विपव्यम् तक्रम्। शोधनीयमित्यर्थः। विनीयः कल्क इति—कल्कशब्दस्यार्थमाह—पिष्ट औषधिविशेष इति। 'कल्कैः करिकषाकृष्याककोलककशेरुभि'रिति वैद्यके दर्शनात्। पापमिति चेति। [ 'तपो न कल्कोऽध्ययनं कल्कः' इत्युपक्रम्य 'तान्येव भावोपहतानि कल्कः' इति भारते दर्शनात्। 'कल्कोऽस्त्री शमनैनसोः' इत्यमरश्च ]। स विनीयः शोधयितव्य इत्यर्थः। अन्यत्र यत्—"विनेया वधूः"। जित्यो हलिरिति—तत्र जित्यपदं व्याचष्टे हलेनेति। हलिपदार्थमाह—कृष्टेति। हलकृष्टभूमिसमीकरणार्थमित्यर्थः। स्थूलकाष्ठमिति—[ 'मद' इति भाषायाम् ]। अन्यत्र यत्=जेयम् मनः [ 'अचोयत्' इति यत् ]।

२८६९। प्रत्यपिभ्यां ग्रहेः ॥ ३।१।११८ ॥

टी—। 'छन्दसीति वक्तव्यम्' ( वार्तिक )। प्रतिगृह्यम्। अपिगृह्यम्। लोके तु प्रतिग्राह्यम्। अपिग्राह्यम्।

The root ग्रह preceded by प्रति and अपि takes क्यप्, but adds the author of varttikas, it must be stated that it holds good with ref. to the vedas only and not in classical usage where ण्यत् is due by 'ऋहलोः—'.

मित—। प्रत्यपिभ्यामिति। ग्रहेः क्यबिति शेषः। छन्दसीति—वार्तिकमिदम्। वक्तव्यमिति वृत्तिकृता प्रचितमित्याहुः। लोके त्विति—अत्र ण्यदिति भावः।

२८७०। पदास्वैरिबाह्यापक्ष्येषु च ॥ ३।१।११९ ॥

टी—। अवगृह्यं प्रगृह्यं वा पदम्। अस्वैरी परतन्त्रः। गृह्यकाः शुकाः। पञ्जरादिबन्धनेन परतन्त्रीकृता इत्यर्थः। बाह्यायाम्—ग्रामगृह्या सेना। ग्रामबहिर्भूतेत्यर्थः। स्त्रीलिङ्गनिर्देशात् पुंनपुंसकयोर्न। पक्षे भव पक्ष्यः। दिगादित्वाद् यत्। आर्यैर्गृह्यते आर्यगृह्यः। तत्पक्षाश्रित इत्यर्थः।

The root ग्रह takes क्यप् provided the words or bases so derived signify पद (a word), अस्वैरी (dependent) बाह्या (keeping outside) and पक्ष्य (a sider or one who takes sides). अवगृह्यम् (अव + ग्रह + क्यप्) पदम्—means a word which requires separation from another or the whole, whereas प्रगृह्यं पदम् is a peculiar word which does not allow combination (सन्धि)। Cp—'ईदूदेद्द्विवचनं प्रगृह्यम्'—100). स्त्रीलिङ्गनिर्देशात् i. e. as the सूत्रकार reads 'बाह्या' a feminine form of बाह्य ( outside ) so we should have 'गृह्या' only and not गृह्यः and गृह्यम् also which indicate masc. and neuter respectively. The word पक्ष्य in the rule is derived as पक्षेभवः etc. तत्पक्षाश्रितः—i. e. siding with them. Cp—'तमार्यगृह्यं निगृहीत-धेनुर्मनुष्यवाचा मनुवंशकेतुम्' (रघु—II. 33). and "गुणगृह्या वचने विपश्चितः"—Kirat II.

मित—। पदेति। पूर्वसूत्राद् ग्रहेरिति वर्तते—पद, अस्वैरिन्, बाह्या, पक्ष्य इत्येतेष्वर्थेषु ग्रहेः क्यबिति सूत्रार्थः। अवगृह्यमिति—अवपूर्वाद् ग्रहेः क्यप्। एवमग्रेऽपि। अवग्रहो नाम समन्तादवान्तरपदविभागः। [ विलस्य पूर्वखण्डोऽवग्रहः—इत्यपि अत्र स्मर्तव्यम् ] यत्पदं तमर्हति तदवगृह्यम्। प्रगृह्यमिति पदविशेषस्य संज्ञा। सन्ध्यभावज्ञापकमित्यर्थः। 'ईदूदेत्—' ( १०० ) इत्यादौ यथा। अत्रोभयत्र क्यपि 'ग्रहिज्यावयिव्यधि—' ( २४१२ ) इति ग्रहेः सम्प्रसारणम्। अस्वैरी= परतन्त्र इति। स्वैरं नेरतु शीलमस्येति 'स्वादीरेरिणो'रिति वृद्धिः। पराधीन इत्यर्थः। [ स्वतन्त्रोऽपावृतः स्वैरी स्वच्छन्दो निरवग्रहः—इत्यमरः ]। बाह्यायामिति—बहिर्भवा बाह्या 'बहिषष्टिलोपो यञ् च'—इति वार्तिकाद् यञ्। टाप् स्त्रियाम्। स्त्रीलिङ्गान्नोयम्। तत्फलमाह—स्त्रीलिङ्गनिर्देशादिति। सूत्रे पक्ष्य इत्यस्ति। तद्व्याचष्टे पक्षे भव इत्यादिना। आर्यगृह्य इति—आर्यपक्षावलम्बीत्यर्थः। 'तमार्यगृह्यं निगृहीतधेनुर्मनुष्यवाचा मनुवंशकेतुम्। विस्माययन् विस्मितमात्मवृत्तौ सिंहोरुसत्त्वं निजगाद सिंहः'। ( रघु २।३३ ) इत्यादि।

२८७१ । विभाषा कृवृषोः ॥ ३।१।१२० ॥

दी— । क्यप् स्यात् । कृत्यम् । वृष्यम् । पक्षे—

मित— । विभाषेति । कृञो नित्यं ण्यति वृषेस्तु ऋदुपधत्वान्नित्यं क्यपि प्राप्ते अयमारम्भः । पक्षे इति—वक्ष्यमाणो ण्यदित्यर्थः ।

२८७२ । ऋहलोर्ण्यत् ॥ ३।१।१२४ ॥

दी— । ऋवर्णान्ताद्धलन्ताच्च धातोर्ण्यत् स्यात् । कार्यम् । वर्ण्यम् ।

मित— । ऋहलोरिति—पञ्चम्यर्थे षष्ठी । तदन्तविधिमाह—ऋवर्णान्तादिति । कार्यमिति—"अचो ञ्णिति" इति वृद्धिः । वर्ण्यमिति । लघूपधत्वात् गुणः ।

२८७३ । युग्यं च पत्रे ॥ ३।१।१२१ ॥

दी— । पत्रं वाहनम् । युग्यो गौः । अत्र क्यप् कुत्वं च निपात्यते ।

The word युग्य implying (connection with) a conveyance is formed irregularly with क्यप् added to the root युज् which gets कुत्व (ग) for its जकार by निपातन । But योग्यम् with ण्यत् ( and कुत्व by "चजोः" ), and योज्यम् with णिच् and यत् or with कुत्वाभाव in ण्यत् by "ण्य आवश्यके" । युग्यः—fit to be yoked.

मित— । युग्यमिति । युजेः क्यप् कुत्वं च निपात्यते वाहनं चेद् गम्यत इत्यर्थः । पतन्ति गच्छन्त्यनेनेति पत्रं वाहनम् । 'दाम्नीशस—' इति करणे ष्ट्रन् । युग्यइति । योक्तव्य इत्यर्थः । ण्यति योग्यम् अपि च ( अर्थविशेषे ) योज्यम् ।

२८७४ । अमावस्यदन्यतरस्याम् ॥ ३।१।१२२ ॥

दी— । अमोपपदाद्वसेरधिकरणे ण्यत् । वृद्धौ सत्यां पाक्षिको ह्रस्वश्च निपात्यते । अमासह वसतोऽस्यां चन्द्रार्कावमावस्या—

अमावास्या ॥ 'ऋहलोर्ण्यत्' (२८७२)। 'चजोः—' (२८६२) इति कुत्वम्। पाक्यम्। 'पाणौ सृजेर्ण्यद्वाच्यः' (वार्तिक)। ऋदुपधलक्षणस्य क्यपोऽपवादः। पाणिभ्यां सृज्यते पाणिसर्ग्या रज्जुः। 'समवपूर्वाच्च' (वार्तिक)—समवसर्ग्या।

The word अमावस्या or अमावास्या is optionally formed with ण्यत् added to वस् preceded by अमा, in the अधिकरणवाच्य and the optional ह्रस्व is an irregular result after the lengthening (due to ण्यत्). Thus अमावास्या—अमावस्या a date (तिथि) on which the sun and the moon sit rest side by side (अमा) i. e. parallel to each other ऋहलोर्ण्यत्—[N. B.—The arrangement of the rule here is vicious as is evident from Dikshita's Praudha-manorama where we find that the serial order of अष्टाध्यायी has been strictly pursued, the rule 'ऋहलोर्ण्यत्' being read after 'विभाषा कृवृषोः (2871) so as to show the application of ण्यत् when क्यप् is wanting; but not explained and numbered. In this arrangement—which is preferable—the number of 'ऋहलोः—' should have been '2874 together with the explanation or वृत्ति thereof, and not 2872 with the same as we find here. Thus the proper arrangement is as follows—

2871. 'विभाषा—(सू) ऋहलोः—वर्ध्यम् (without वृत्ति)।
2872. युग्यं च—(सू) … निपात्यते (वृत्ति)।
2873. "अमा—(सू) … अमावस्या (वृत्ति)।
2874. 'ऋहलोः—(सू) … समवसर्ग्या (with वृत्ति)।

'पाणौ सृजेः—Varttika—सृज preceded by the word पाणि (hand) takes ण्यत् which thus supersedes क्यप् which was due to the root

( सज ) being लदुपध। समव etc another vartika—add 'सजेर्णत्' to it and the meaning is clear.

मित—। अमावस्यदिति। 'अमावस्य' इति वक्तव्ये 'अमावस्यत्' इति तकारोच्चारणपूर्वकनिर्देश: ण्यप्रकरणप्राप्तस्यापि सम्प्रसारणाभावनिपातन—शङ्का-वारणार्थेति नागेश:। तत्र वै निपातने—अधिकरणवाचित्र ण्यत् पाक्षिको ह्रस्वश्च। तदेवाह—अमोपपदादित्यादिना। अमेत्यस्यार्थमाह—अमासहेति। समानान्तराब्दत्वेनेति यावत्। चन्द्रार्काविति चन्द्रसूर्यौ। 'अमावस्या त्वमावास्या दर्श: सूर्येन्दुसङ्गम:' इत्यमर:।'

कृहलोर्ण्यदिति। अत्रेदमवधेयम्। मनोरमायां तावद् 'विभाषा कृवृषो:' ( २८७१ ) इत्यत्र पाक्षिकप्रयोगप्रदर्शनरूपेण 'ऋहलोर्ण्यत्' इति केवलं सोदाहरणं पठितं न तु व्याख्यातम्। किन्त्वष्टाध्यायीसूत्रक्रमेणैव तत् (सूत्रम्) 'अमावस्यदन्य-तरस्याम्' ( २८७४ ) इत्यस्मादूर्ध्वमेव पठितं व्याख्यातञ्च। स एव क्रमो ज्यायान् सम्यक् च। प्रयोजनाभावे क्रमभङ्गस्यानौचित्यात्। एवञ्च 'ऋहलो—'रित्यस्य ( २४७४ ) इहैव कौमुदीक्रमेण भाव्यम् इति बालव्याख्यायां दर्शितम्। पाणाविति—वार्तिकमिदम्। पाण्युपपदात् सजेर्ण्यदित्यर्थ:। लदुपधलक्षणस्येति॥ 'ऋदुपधात्—' ( २८५९ ) इति प्राप्तस्येत्यर्थ:। पाणिसर्ग्येति—चजोरिति कुत्वम्। समवपूर्वाच्चेति—वार्तिकान्तरम्। सृजेर्ण्यदिति शेष:। कुत्वं प्राग्वत्।

## २८७५। न क्वादे: ॥ ७।३।५९ ॥

दी—। क्वादेर्धातोश्चजो: कुत्वं न। गर्ज्यम्। वार्तिक-कारस्तु 'चजो:—' ( २८६२ ) इति सूत्रे 'निष्ठायामनिट:' इति पूरयित्वा 'न क्वादे:' ( २८७५ ) इत्यादि प्रत्याचख्यौ। तेन अर्जि-तर्जि प्रभृतीनां न कुत्वम्, निष्ठायां सेट्त्वात्। शुचुब्लुचु प्रभृतीनां तु क्वादित्वेऽपि कुत्वं स्यादेव। सूत्रमते तु यद्यपि विपरीतं प्राप्तं तथापि 'यथोत्तरं मुनीनां प्रामाण्यम्'।

Roots beginning with कवर्ग do not get कुत्व i. e. ककार and गकार for the चकार or जकार lying in themselves. Thus गर्ज्यम् (गर्जणत्)। The varttikakara ( Katyayana ) however, filling up the rule चजोः कु—(2863) with the words 'निष्ठायामनिटः' ( which see ante.) rejected the rule 'न क्वादेः' (2875). It is for this reason that the roots अर्जि, तर्जि etc. ( although not falling under क्वादि class yet ) get no कुत्व due to their being सेट or being allowed to have इट् in निष्ठा (क्त+क्तवतु) and thus having satisfied the conditions of the varttika 'निष्ठायामनिटः' ; whereas roots like शुच्, म्लुच् etc get कुत्व despite their being क्वादित्व and thus having been under the probibitory rule 'न क्वादेः' (2875). Thus although the operations suggested herein goes against what is intended by the rule 'न क्वादेः' yet the vartika 'निष्ठायामनिटः' has to be given preference to the same ( न क्वादेः ) on the strength of the परिभाषा 'यथोत्तरम्—'which means that 'In a line of contention among the saints the authority rests on the last or subsequent one i. e. in a controversy between the सूत्रकार and the वार्त्तिककार and the भाष्यकार the last one ( भाष्यकार ) should be taken as the final authority whereas in a controversial point between any two of them the subsequent one must be given the lead. Thus in the above case the varttika is to be prefered to the rule.

मित—। न क्वादेरिति। कु+वादेरितिच्छेदः। कवर्गाद्यादेर्धातोरित्यर्थः। गर्ज्यमिति—ण्यति परे चजोरिति कुत्वं न। 'निष्ठायामनिट' इति वार्त्तिकेणाप्येतत् सिध्यति। निष्ठायां गर्जेः सेट्त्वात् इति प्रागुक्तम्। अत्र वार्त्तिककृद्वचनमेव न्याय्य इत्याह—वार्तिककारस्त्विति। तेनेति—क्वादित्वाभावेनात्र सूत्रमते यद्यपि कुत्वं प्राप्तं तथापि निष्ठायां सेट्त्वाद् वार्त्तिकमते नेत्याह—निष्ठायां सेट्त्वादिति। सूत्र-

वार्तिकविरोधान्तरमाह—गुजुग्लुचु प्रभृतीनाम् इति। निष्ठायामनिट्त्वाद् वार्तिकमते कुत्वस्य बाधविरहादिति भावः। नन्वेवं सूत्रविरुद्धं कथमुदाक्रियत इत्यत आह—यथोत्तरम् इति—परिभाषेयम्। तथा च मुनित्रयविरोधस्थले परमपरवर्तिनः पतञ्जलेरेव मुनेर्वचनं प्रामाण्यम् भवति। [प्रमाणमेव प्रामाण्यम् स्वार्थे ष्यञ्]। तथा तदेतद्द्वयविरोधस्थले कालसंख्यया अर्वाक्तरस्य द्वितीयस्यैव वचनं प्रमाणं भवतीत्येवंविधवैयाकरणाशयबलादेव सूत्रकृन्मतमुदस्य वार्तिककृन्मतमेवावलम्बनीयमिति सूत्रविरोधोऽपि सोढव्य इति भावः।

२८७६। अजिव्रज्योश्च ॥ ७।३।६० ॥

टी—। न कुत्वम्। समाजः। परिव्राजः।

मित—। अजिव्रज्योरिति। स्पष्टम्। 'अज गतिक्षेपणयोः' इत्यस्मै घञि 'चजोः—' इति कुत्वे प्राप्ते अनेन निषेधः। 'अजेर्व्यघञपोः' (२४५९) इति घञि वीभावप्रतिषेधः।

२८७७। भुजन्युब्जौ पाण्युपतापयोः ॥ ७।३।६१ ॥

टी—। एतयोरेतौ निपातौ। भुज्यतेऽनेनेति भुजः पाणिः। 'हलश्च' (३३००) इति घञ्। न्युब्जन्त्यस्मिन्निति न्युब्जः। उपतापो रोगः। 'पाण्युपतापयोः' किम्? भोगः। समुद्गः।

The words भुज and न्युब्ज are irregularly formed (with घञ्) in the senses of hand and a kind of disease (respectively) without कुत्व of the जकार्s thereof. Otherwise the forms with the self-same affix are भोगः and समुद्गः (a basket).

मित—। भुजेति। उपतापो रोगः। 'क्षौद्रगुजा चोपतापो व्याधिगदामयाः' इत्यमरः। एतयोरर्थे घञि कुत्ववर्जमेतौ निपात्येते इत्यर्थः। न्युब्ज इति—उब्ज आर्जवे इति धातुः। न्युब्जन्तीति—'चेष्टारहिता अवाङ्मुखाः शेरते' इत्यर्थं

इति नागेशः। अन्यत्र गुणकुत्वे भवत इत्याह। समुद्गः इति। [ 'समुद्गकः सम्पुटकः' इत्यमरः ]।

२८७८। प्रयाजानुयाजौ यज्ञाङ्गे ॥ ७।३।६२ ॥

टी—। एतौ निपात्यौ यज्ञाङ्गे। पञ्च प्रयाजाः। त्रयोऽनुयाजाः। 'यज्ञाङ्गे' किम्? प्रयागः। अनुयागः।

प्रयाजs and अनुयाजs denote the part at a sacrifice.

मित—। प्रयाजेति। स्पष्टं मूले। अत्रापि घञ् कुत्वनिषेधश्च।

२८७९। वञ्चेर्गतौ ॥ ७।३।६३ ॥

टी—। कुत्वं न। वञ्च्यम्। 'गतौ' किम्? वङ्क्यम् काष्ठम्। कुटिलीकृतमित्यर्थः।

Eng—Easy.

मित—। वञ्चेरिति। स्पष्टम्। 'वञ्चु गतौ' धातुः।

२८८०। ओक उचः के ॥ ७।३।६४ ॥

टी—। उचेर्गुणकुत्वे निपात्यते के परे। ओकः शकुन्तवृषलौ। इगुपधलक्षणः कः। घञा सिद्धेऽन्तोदात्तार्थमिदम्।

The root उच ( समवाये ) gets गुण and कुत्व in an irregular way when the affix क ( by 'इगुपधज्ञाप्रीकिरः कः' 2893 ) follows—ओकः—a bird or a Shudra. घञ् also gives ओकः but that is आद्युदात्त whereas the affix क makes it अन्तोदात्त।

मित—। ओक इति। उच समवाये दिवादिः। इगुपधलक्षण इति। 'इगुपधज्ञाप्रीकिरः कः' (२८९३) इत्यत इत्यर्थः, घञा सिद्धे गुणे, 'चजोः—'

(२८६२) इति कुत्वे चेत्यर्थः। परं 'निष्ठा दीर्घनिष्ठम' इत्यादुदाहरणः स्यादिति आह—अन्तोदात्तार्थमिदमिति।

२८८१। भुज आवश्यके ॥ ७।३।६५ ॥

टी—। कुत्वं न। अवश्यपाच्यम्।

Any root ending in च etc does not get कुत्व when ण्य i. e. ण्यत् follows provided the base implies expediency or necessity. Thus अवश्यपाच्यम्। We may as well say पाच्यम् to convey the same sense as the application of अवश्य or its synonym is not imperative.

मित—। ण्य इति। 'आवश्यकाधमर्ण्ययोर्णिनिः' (३२११) इत्यत 'आवश्यक' इत्यनुवर्तमाने 'कृत्याश्च' (३३१२) इति ण्यत्। ण्य इति ण्यतो ग्राहकः। कुत्वं नेति—चजोरिति प्राप्तं कुत्वं नेत्यर्थः। अवश्यपाच्यम् इति। आवश्यकार्थवाची शब्दः प्रयोज्य एवेति नास्ति नियमः। तेन तथाविधार्थस्य गम्यमानत्वेऽपि स्यादेव=पाच्यम्। शोच्यम्। अशोच्यम् ॥ "अशोच्यान् अन्वशोचस्त्वम्" (भगवत्गीता) इत्यादौ तु शोचितुर्मर्हाः शोच्याः न तथा अशोच्या इत्येवं व्याख्यानन्तु सूलभते न सिध्यति। 'अर्हे कृत्यतृचश्च' (२८८२२) इति ण्यति 'चजोः—' (२८६२) इति कुत्वप्रसङ्गात्। वार्तिकमते तु सिध्यत्येव 'निष्ठायमनिटः' इत्युक्तेस्तत्र शोचतेः सेट्त्वात्। आवश्यके णेत्र तु "शोच्याः" सिध्यत्येव।

२८८२। यजयाचरुचप्रवचर्चश्च ॥ ७।३।६६ ॥

टी—। ण्ये कुत्वं न। याज्यम्। याच्यम्। रोच्यम्। प्रवाच्यं ग्रन्थविशेषः। ऋच—अर्च्यम्। ऋदुपधत्वात्प्यत एव ज्ञापकात्ण्यत्। 'त्यजेश्च' (वार्तिक)—त्याज्यम्। 'त्यजिपूजयोश्च' इति काशिका। तत्र पूजेर्ग्रहणं चिन्त्यम्। भाष्यानुक्तत्वात्। 'ण्यत् प्रकरणे त्यजेरुपसंख्यानम्' इति हि भाष्यम्।

The final of the roots यज्, याच्, रुच्, प्रवच् and ऋच् does not get कुत्व (directed by चजोः—' 2863) when ण्य or ण्यत् follows. Thus याज्यम् etc. ऋदुपधत्वेऽपि i. e. due to this it would get क्यप् by the rule 'ऋदुपधाच्च—' (2856). 'त्यजेश्च'—Varttika. त्यज् also takes ण्यः। The rest is easy.

मित—। यजयाचेति। यज्, याच्, रुच्, प्रवच्, ऋच् इति यों परे कुत्वं न। ण्य इति ण्यतोऽप्युपलक्षणम् इत्युक्तं प्राक्। अर्च्यमिति। ऋच् इत्यस्य ऋकारोपधत्वेन 'ऋदुपधाच्चाक्लृपिचृतेः' (२८५४) इति क्यपि एव तस्मात् प्राप्ते आह—ऋदुपधत्वेऽप्यत एवेति। अस्मादेव सूत्रादित्यर्थः। 'त्यजेश्च' इति—वार्तिकमिदमिति तत्त्वबोधिनी। क्वचिद् वार्तिकत्वेनास्योल्लेखो न दृश्यते। त्यजेरपि ण्ये परे कुत्वं नेत्यर्थः। चिन्त्यमिति—अत्र भाष्यमेव मूलमित्याह—भाष्यानुक्तत्वादित्यादि।

२८८३। वचोऽशब्दसंज्ञायाम्॥ ७।३।६७॥

टी—। वाच्यम्। शब्दाख्यायां तु—वाक्यम्।

The final of वच् does not get कुत्व even when ण्य follows provided the derivative does not denote a designation of words.

मित—। वच इति। ण्ये परे कुत्वं न भवति शब्दसंज्ञांवर्जयित्वेत्यर्थः तदाह—शब्दाख्यायांत्विति—चजोरित्येतेनेत्यर्थः।

२८८४। प्रयोज्यनियोज्यौ शक्यार्थे॥ ७।३।६८॥

टी—। प्रयोक्तुं शक्यः प्रयोज्यः। नियोक्तुं शक्यो नियोज्योऽभृत्यः।

The words प्रयोज्य and नियोज्य are irregularly framed with ण्य but without कुत्व in the sense of propriety or fitness.

मित—। प्रयोज्यनियोज्याविति। ण्ये परे कुत्वाभावेन निपात्यौ शक्यता चेद्गम्यत इत्यर्थः।

२८८५ । भोज्यं भक्ष्ये ॥ ७।३।६९ ॥

दी—। भोग्यमन्यत् । 'ण्यत्प्रकरणे लपिदभिभ्यां चेति वक्तव्यम्' ( वर्तिक )। लाप्यम् । दभिर्धातुष्वपठितोऽपि वार्तिकबलात् स्वीकार्यः । दाभ्यः ।

भोज्य in the sense of भक्ष्य or edilde is formed with ण्यत् but without कुत्व । भोग्यम्—fit to be enjoyed. 'ण्यत्प्रकरणे लपिदभि—' Varttika. The varttika sanctions ण्यत् to लप् and दभ् where यत् was due by the rule 'पोरदुपधात्' ( 2844 ).

मित—। भोज्यमिति । भक्ष्यार्थे भुजेर्ण्यत् कुत्वाभावश्च निपात्यत इत्यर्थः । तदाह—भोग्यमन्यदिति । 'ण्यत्प्रकरणे लपिदभि—' इति—वार्तिकमिदम् । 'पोरदुपधात्' ( २८४४ ) इति सूत्रमते लपिदभ्योर्ण्यदपवादे यति प्राप्तेऽनेन वार्तिकेन ण्यदेव न यत् । 'यथोत्तरम्—' इति न्यायात् ।

२८८६ । ओरावश्यके ॥ ३।१।१२५ ॥

दी—। उवर्णान्ताद् धातोर्ण्यत् स्यादवश्यम्भावे द्योत्ये । लाव्यम् । पाव्यम् ।

An उकारान्त root takes ण्यत् when indispensability is implied. लू + ण्यत् = लाव्यम् etc. Here in both the cases वृद्धि takes effect by 'अचो ञ्णिति' ( 254 ) and आव् by 'वान्तो यि —' ( ६२ ).

मित—। ओरिति । 'उ' इत्यस्य षष्ठ्या रूपम् । पञ्चम्यर्थे षष्ठी । तदन्तविधिस्तदाह—उवर्णान्ताद्धातोरिति । लाव्यमिति—लूनातेर्ण्यत् । 'अचो ञ्णिति' ( २५४ ) इति वृद्धिः । 'वान्तो यि प्रत्यये' ( ६२ ) इत्यावादेशः ।

२८८७। आसुयुवपिरपिलपित्रपिचमश्च ॥ ३।१।१२६ ॥

दी—। 'षुञ्'—आसाव्यम्। 'यु मिश्रणे'—याव्यम्। वाप्यम्। राप्यम्। लाप्यम्। त्राप्यम्। आचाम्यम्*।

ण्यत् is added after सु preceded by आङ्, यु, वप; रप्, लप् and चम (which is almost always used with आङ्). आसाव्यम्—fit to be bathed (षुञ्=to bathe is the root here). वृद्धि and आवादेश as before. वाप्यम् etc with वृद्धि only by 'अत उपधायाः' (2282)

मित—। आस्विति। आ—सु, यु वपि, रपि, लपि, चम् एषां समाहारद्वन्द्वात् पञ्चम्येकवचनम्। एभ्यो ण्यदित्यर्थः। आसाव्यमिति—अत्र षुञ् अभिषवे इत्यस्यैव ग्रहणम् न तु षु प्रसवैश्वर्ययोरित्यस्य। वृद्ध्यावादेशौ प्राग्वत्। वाप्यमित्यादौ 'अत उपधायाः' (२२८२) इति वृद्धिः। आङ्पूर्वस्यैव चमेः प्रायिकत्वात् आचाम्यमिति पाठ्यम्। अन्यथा वृद्धि दुर्लभेति शब्देन्दुशेखरकाराः।

२८८८। आनाय्योऽनित्ये ॥ ३।१।१२७ ॥

दी—। आङ्पूर्वान्नयतेर्ण्यदायादेशश्च निपात्यते। दक्षिणाग्निविशेष एवेदम्। स हि गार्हपत्यादानीयतेऽनित्यश्च सततमप्रज्वलनात्। आनेयोऽन्यः घटादिः। वैश्यकुलादेरानीतो दक्षिणाग्निश्च।

The addition of ण्यत् and आयादेश etc is irregularly enjoined to नी prefixed with आङ्। 'दक्षिणाग्नि—' This a Varttika. This is right only when it applies to a paritcular phase of fire called दक्षिणाग्नि। [There are three phases or subdivisions

* अत्र 'चाम्यम्' इति तत्त्वबोधिनी। अपपाठश्चायम्। प्रायेणाङ्पूर्वस्यैव सर्वत्र प्रयोगदर्शनाद् वृद्धेरनुपपत्तेश्च।

of fire such as दक्षिणाग्नि, गार्हपत्याग्नि and आहवनीयाग्नि [Cp—'दक्षिणाग्नि-गार्हपत्याहवनीयौ त्रयोऽग्नयः'—Amara]. For it (दक्षिणाग्नि) is fetched from आहवनीय and is also momentary due to its burning for a moment. आनेयः etc easy ( this is with यत् by 'अचोयत्' )।

मित—। आनाय्य इति। अर्थमाह-आङ्पूर्वादिति। दक्षिणाग्निविशेषे इति—वार्तिकमिदम्। न त्वन्यत्र त्वेवकारार्थः। तस्य अनित्यत्वं दर्शयति—स हीत्यादिना। दक्षिणाद्यास्त्रयोऽग्नयः। 'दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः। अग्नित्रयमिदं त्रेता—' इत्यमरः। आनेय इति—अत्र 'अचो यत्' (२८४२) इति यत्। 'सार्वधातुकार्ध—' (२१६८) इति गुणः।

## २८८९। प्रणाय्योऽसंमतौ ॥ ३।१।१२८ ॥

दी—। संमतिः प्रीतिविषयीभवनं कर्मव्यापारः। तथा भोगेष्वादरोऽपि संमतिः। प्रणाय्यश्चोरः। प्रीत्यनर्ह इत्यर्थः। प्रणाय्योऽन्तेवासी। विरक्त इत्यर्थः। प्रणेयोऽन्यः।

The word प्रणाय्य in the sense of असंमति is irregularly formed with ण्यत् and आयादेश। असंमति means one whose actions deserve apathy or displeasure such as a thief or one who is indiffetent to pleasure and pain such as a disciple ( अन्तेवासी )।

मित—। प्रणाय्य इति। असंमतौ गम्यायां ण्यदायादेशाभ्यां प्रणाय्यशब्दो निपात्यते। असंमताविति बहुव्रीहिः। नास्ति संमतिर्यत्र तत्रेत्यर्थः। संमतिशब्दो द्व्यर्थस्तदाह—संमतिरित्यादिना। अन्तेवासीति शिष्यः। प्रणेय इति अत्र यद्गुणौ।

## २८९०। पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु ॥ ३।१।१२९ ॥

दी—। मीयतेऽनेन पाय्यं मानम्। माङ् ण्यत् धात्वादेः पत्वञ्च। 'आतो युक्—' (२७६१) इति युक्। सम्यङ् नीयते होमार्थ-

मग्निं प्रतीति सान्नाय्यं हविर्विशेषः। ण्यदायादेशः समो दीर्घश्च निपात्यते। निचीयतेऽस्मिन् धान्यादिकं निकाय्यो निवासः। अधिकरणे ण्यत् आय् धात्वादेः कुत्वञ्च निपात्यते। धीयतेऽनया समिदिति धाय्या ऋक्।

These four vedic words पाय्य, सान्नाय्य, निकाय्य and धाय्य are irregularly formed with ण्यत् in the senses of मान (measure) हविः (i. e. curd or milk but not ghee) निवास (a granary for paddy etc.) and सामिधेनी (i. e. a Rik meant for the acceptance of faggot, समित्). Thus पाय्यम् = मा + ण्यत् (निपातने) = पायुक् ण्यत् by 'आतो—' (2761) = पाय्यम्—युक् retains य only. Elsewhere मेयम् (मा + यत्)। सान्नाय्यम् = सम् + नी + ण्यत् (कर्मणि) = सन्नी य = सान्नाय् य by निपातन। निकाय्य = नि + चि + ण्यत् (अधिकरणे) = निकाय् य etc, by निपातन। Similary धाय्या।

मित—। पाय्येति। चत्वार एते ण्यत्प्रत्ययान्तास्तत्तुर्षु मानादिष्वर्थेषु निपात्यन्ते। मीयतेऽनेन इति माङ् माने इत्यस्मात् करणे ण्यदित्यर्थः। धात्वादेरिति—मस्थाने इत्यर्थः। हविर्विशेष इति—'ऐन्द्रं दध्यमावस्यायाम् ऐन्द्रं पयोऽमावस्यायाम्' इति दधिपयोरूप इत्यर्थः। सम् + नी ण्यदिति स्थिते—समो दीर्घं उपधाया धातोरीकारस्यायादेशश्च। निवास इति—धान्याद्याकरणसाधनकुसूलादिरित्यर्थः। धीयतेऽनयेति—अत्र करणे ण्यत्। सामिधेनी नाम समिदाधानार्था ऋग्विशेषा। तदाह—धाय्या ऋगिति।

२८८१। क्रतौ कुण्डपाय्यसञ्चाय्यौ॥ ३।१।१३०॥

दी—। कुण्डेन पीयतेऽस्मिन् सोमः कुण्डपाय्यः क्रतुः। सञ्चीयतेऽसौ सञ्चाय्यः।

When a sacrifice is implied, the (words) कुण्डपाय्य and सञ्चाय्य

are irregularly found with ण्यत् in the अधिकरण and कर्मवाच्य respectively—कुण्डपाय्य—a sacrifice where Soma (juice) is drunk with a spoon (कुण्डेन)। सञ्चाय्य—a kind of sacrifice.

मित—। क्रताविति। क्रतौ गम्ये कुण्डपाय्यसञ्चाय्यशब्दौ ण्यत्प्रत्ययान्तौ निपात्येते इत्यर्थः। कुण्डेनेति—अत्र तृतीयान्ते उपपदे अधिकरणे ण्यदादायादेशश्च निपात्यते। आतो युगिति युक्। [अत्र 'यदयुगा'विति तत्त्वबोधिनीकारो पश्याम। ण्यत एव प्रकृतत्वादित्यलम्]। कुण्डमिति—सोमपानसाधनम्। तथाच श्रुतिः 'यदात्मकरूपचमसैर्भक्षयन्ति तदेषां कुण्डम्' इति। सञ्चाय्योऽपि क्रतुविशेषः। अत्र सम्पूर्व्वाच्च चिधातोः कर्मणि ण्यत्।

२८८२। अग्नौ परिचाय्योपचाय्यसमूह्याः ॥ ३।१।१३१ ॥

दी—। अग्निधारणार्थं स्थलविशेषे एते साधवः। अन्यत्र तु परिचेयम्। उपचेयम्। संवाह्यम्।

Here अग्नि means the particular spot for holding fire. When this spot is meant परिचाय्य, उपचाय्य and समूह्य are irregularly formed with ण्यत्, otherwise परिचेय etc with यत्। यत् gives परिचेयम् etc.

मित—। अग्नाविति। अग्निरिह न पावकः। किन्तु तद्धारणार्थम् इष्टकाचयनेन निर्मितस्थलविशेषः। तस्मिन्नर्थे गम्ये ण्यत्प्रत्ययान्ता एते निपात्यन्ते। तदाह—अग्निधारणार्थे इति। परिचाय्योपचाय्यौ—अत्रोभयत्र चिञो ण्यदादायादेशश्च प्राप्यत्। समूह्य इत्यत्र तु सं पूर्वाद् वहेर्ण्यत्। अत्र सम्प्रसारणं दीर्घत्वं निपात्यते। अन्यत्रेति स्पष्टम्।

२८८३। चित्याग्निचित्ये च ॥ ३।१।१३२ ॥

दी—। चीयतेऽसौ चित्योऽग्निः। अग्नेश्चयनमग्निचित्या ॥ 'क्रियातिसर्गप्राप्तकालेषु कृत्याश्च' (२५१७)—त्वया गन्तव्यम्।

गमनीयम्। गन्तव्यम्। इह लोटा बाधा माभूदिति पुनः कृत्यविधिः 'स्त्र्यधिकारादूर्ध्वं वाऽसरूपविधिः क्वचिन्न' इति ज्ञापयति। तेन 'क्त—ल्युट्-तुमुन्-खलर्थेषु न—' इति सिद्धम्॥ "अर्हे कृत्यतृचश्च' (२४२२)—स्तोतुमर्हः स्तुत्यः—स्तुतिकर्म। स्तोता स्तुतिकर्ता। लिङा बाधा मा भूदिति कृत्यतृचोर्विधिः।

The words चित्य and अग्निचित्या are irregularly formed with यत् and तुक्. Thus चीयते etc.—कर्मणि यत्, तुगागमः but no वृद्धिः। अग्नेः चयनम् = अग्निचित्या—भावे यत् in connection with the उपपद अग्नि in the genitive. Feminine by usage—it means the lighting of fire. 'प्रैषा—' (2817)—This is explained under 'लकारार्थनिर्णयः' and has been cited here to illustrate the कृत्य—part. त्वया गन्तव्यम् etc——( पचे ) त्वं गच्छ etc, इह लोटा बाधा मा भूत् etc—By the rule or rather परिभाषा 'वाऽसरूपोऽस्त्रियाम्' ( 2830 ) a dissimilar and particular affix ( असरूपः अपवादप्रत्ययः ) dealt with beyond स्त्र्यधिकार should not usually interfere with the general one. The rule 'प्रैषातिसर्ग—' ( 2877—3. 3. 163 ), therefore, which does not fall under the purview of स्त्र्यधिकार—(which ends with 'कृत्यल्युटो बहुलम्'—3.3.113) would, without the mention of 'कृत्याः' therein, provide for the कृत्य affixes also along with लोट्। But Still from this behaviour on the part of the Sutrakara it is evident that the application of वासरूपविधि in post—स्त्र्यधिकार rules was due here and to avoid that he mentions कृत्याः in the sutra suggesting thereby that in rules beyond स्त्र्यधिकार, वासरूपविधि also will sometimes hold good, but not always i. e. will not hold good at least, with reference to some particular cases. Thus वासरूपविधि

does not apply in such cases as क्त ('नपुंसके भावे क्त'—3.3.154), ल्युट् ( 'ल्युट् च—3.3.115 ), तुमुन् ( 'समानकर्तृकेषु—'3.3.158 ) and खलर्थप्रत्यय ('ईषद्दुःसुषु—'3.3.126 ) etc.—लिङा बाधा माभूत् etc—here also owing to inclusion of कृत्याश्च in the rule the वासरूपविधि does not apply and so लिङ् would not forbid कृत्य affixes & तृच् ( for reasons see above ).

मित—। चित्येति। चित्यश्च अग्निचित्या चेति द्वन्द्वः। एतौ एतत्प्रत्ययतुगागम-ह्रस्वाभावैर्निपात्येते इत्यर्थः। अग्निचित्येत्यत्र स्त्रीत्वं लोकादवगन्तव्यमितिवत्। प्रैषेति—व्याख्यातमिदं सूत्रं लकारार्थनिर्णयप्रकरणे। तत्र लोटि प्रयोगो दर्शितः इह तु कृत्यान्तस्य प्रयोगदर्शनार्थमुपन्यासः। तदाह—त्वयागन्तव्यमित्यादि। पक्षे यथाप्राप्तं लोट्—त्वं गच्छेति॥ ननु प्रैषातिसर्गसूत्रे 'कृत्याश्चे'ति कृत्यविधिर्व्यर्थः। कुत इति चेदुच्यते—'वाऽसरूपोऽस्त्रियाम्' ( २८३०—३।१।९४ ) इति हि क्त्वाधिकारात् पूर्वान् विधीन् याति नतु तदनन्तरस्थान् न वा तदुत्तरान्। तथाच भाष्यम् 'क्त्वाधिकारात् प्राक् वाऽसरूपविधिर्नतु तत ऊर्ध्वम्' इति। 'प्रैषातिसर्ग—' इति सूत्रञ्च क्त्वाधिकारादूर्ध्वमष्टाध्याय्यामुपन्यस्तम् ( ३।३।१६३ )। एवञ्च तत्र वाऽसरूपविधेः प्रसङ्गाभावात् लोटा कृत्यानां बाधः सर्वथा न भवत्येवेति—प्रैषातिसूत्रे कृत्याश्चेति व्यर्थ एवेत्येवं प्राप्ते तस्य सार्थकताम् आह—इह लोट्प्राप्त आसीत् तेन लोटा बाधा मा भूदिति—कृत्यग्रहणमिति शेषः। इतिस्थिते पुनः—कृत्यग्रहणं क्वचिन्नेति ज्ञापयतीति। तद्विषोदाहरणं दर्शयति—तेनेति—तथाच 'नपुंसके भावे क्तः' ( ३।३।११४ ) इति भावे क्तप्रत्ययविषये हसितम् इत्यादौ 'ल्युट् च' ( ३।३।११५ ) इति भावे ल्युटि हसनम् इत्यादावपि च भावे इति घञ्, क्त ( अत्र 'भावे' इति 'नपुंसके—' इति सूत्रस्थं द्रष्टव्यम् नेतरत् )। तथा 'समानकर्तृकेषु तुमुन्' ( ३।३।१५८ ) इत्यत्र इच्छार्थे सत्यपि ( भोक्तुम् इच्छति इति यथा ) 'इच्छार्थेषु लिङ्लोटौ' ( ३।३।१५७ ) इति लोट् न। लिङ् तु भवत्येव—( भोक्तुमिच्छेत् )—'समानकर्तृकेषु तुमुन् लिङ् चेति' वचनात्। तथा 'ईषदादिषु' इत्यत्र 'आतो युच्' ( ३।३।१२८ ) इति युच्, 'ईषद्दुःसुषु—' ( ३।३।१२६ ) इति खल् तु न॥ लिङा बाधा मा भूदिति—कृत्यग्रहणमिति शेषः। 'लिङ् यदि' ( [illegible]

३।१।१६८) इत्यतश्चकारेण लिङोऽनुकर्षणाल्लिङ्लुकम्। अत्र यद् वक्तव्यम् तदत्रैव सूत्रे 'प्रैषातिसर्ग—' इत्यत्रोक्तम्।

२८८४। भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा ॥ ३।४।६८ ॥

टी—। एते कर्तरि वा निपात्यन्ते। पक्षे तयोरेवेति सकर्मकात् कर्मणि, अकर्मकात्तु भावे ज्ञेयाः। भवतीति भव्यः। भव्यमनेन वा। गायतीति गेयः—साम्नामयम्। गेयं सामानेन वेत्यादि॥ 'शकि लिङ् च' (२८२२)। चात् कृत्याः। वोढुं शक्यो वोढव्यः। वहनीयो, वाह्यः। लिङा बाधा मा भूदिति कृत्योक्तिः। लाघवादनेनैव ज्ञापनसम्भवे प्रैषादिसूत्रे 'कृत्याश्च' इति सुत्यजम्। अर्हे कृत्यचोर्ग्रहणं च।

॥ इति कृदन्तकृत्यप्रकरणम् ॥

These words viz भव्य, गेय, प्रवचनीय, उपस्थानीय, जन्य, आप्लाव्य and आपात्य are optionally formed in an irregular way witn कृत्य affixes यत् etc.—in the कर्तृवाच्य। In the alternative case we will have यत् etc in the कर्मवाच्य or in the भाववाच्य according as the root is सकर्मक or अकर्मक by the rule 'तयोरेव—'( 2833 ). Thus भवतीति भव्यः ( भू + यत्—कर्तरि )—a noble person. Elsewhere भव्यम् ( भू + यत्-भावे ). गेयः—a reciter of song and thus refers to the साम ( कर्मणि षष्ठी )। Here it is कर्तरि यत्। पक्षे भावे यत्—गेयम्. similarly प्रवचनीयः—प्रवक्ता इति। पक्षे प्रवचनीयम्—to be or should be spoken ( भावेऽनीय )। उपतिष्ठते ( serves ) इति उपस्थानीयः (कर्तरि अनीयर)—as a disciple or devotee. पक्षे—उपस्थानीयः—कर्मणि अनीय—to be or should be served as a preceptor or superior. जन्यः—

that which grows, जन्+यत् कर्तरि ; पक्षे—भावे यत् । आप्लाव्यः—He who takes a bath—आ+प्लु+ण्यत् कर्तरि by 'ओरावश्यके' ( 2826 ). आप्लाव्यम् भावे ण्यत्. आपात्यः—He who falls easily (?) आ+पत्+ण्यत् कर्तरि by 'ऋहलोः—' ( 2272 ). पक्षे भावे ण्यत्.। लिङा बाधा मा भूत् etc.— Because, as previously explained ( Cp—इह लोटा बाधा etc under 'विभाषा—' 2273 ), वासरूपविधि not having extended after स्त्र्यधिकार ( स्त्र्यधिकारादूर्ध्वम् ), the term 'लिङ्' only in the rule 'शकि लिङ् च' (2223) when stands for कृत्यविधि in शक्यार्थे would not have forbidden the said कृत्यविधि. still the sutrakara speaks of कृत्यs also by the help of this चकार—the preceding rule being 'कृत्याश्च' ( 3.3.171 ) to show that here application of वासरूप was due. This being the case the annexation of 'कृत्याः' to the rule 'प्रैषातिसर्ग—' ( 2817 ) and 'कृत्यात्रचः' to the rule 'अर्हे—' ( 2222 ) should have been easily left out or rejected on the ground that the expression of चकार in the rule 'शकि लिङ्—' ( 2223 ) which stands for कृत्यविधि' would suffice to show that 'वासरूपविधि—' has nothing to interfere with rules or injunctions here and that one will not bar the other.

मित—। भव्यगेयेति। अर्थमाह—एते कृत्यान्ता इति। पक्षे इति। कर्तर्येव निपातनं भावकर्मणोस्तु भवत्येव। कृत इत्यत आह—तयोरेवेति। 'तयोरेव कृत्यक्तखलर्थाः' (२८३३) इति सूत्रादित्यर्थः। भव्य इति—अत्र 'अचो यत्' इति कर्तरि यत्। अमरस्तु नपुंसकमप्युदाजहार—'भावुकं भविकं भव्यं कुशलं क्षेममस्त्रियाम्' इति। पक्षे आह—भव्यमनेन वेति। अत्र भावे यत्। साम्नामिति—कृद्योगात् षष्ठी ( कर्मणि )। गेयं सामेति—अत्र कर्मणि यत्। इत्यादीति—प्रवक्तीति प्रवचनीयो गुरुर्वेदस्य, प्रवक्तेत्यर्थः। कर्तरि अनीयर्। पक्षे प्रवचनीयो वेदः शिष्यं प्रति गुरुणेति कर्मणि अनीय। उपतिष्ठते इति उपस्थानीयः शिष्यो गुरोरिति कर्तरि अनीयर्। पक्षे

उपस्थीयते इत्युपस्थानीयः गुरुः शिष्येण पूज्य इत्यर्थः। जायतेऽसाविति जन्यः—कर्तरि यत्। जन्यमनेन वेति भावे यत्। आप्लवते स्नातीति आप्लाव्यः। ऋहलोरिति निपातनात् कर्तरि ण्यत्। पक्षे आप्लाव्यमनेनेति भावे ण्यत्। आपततीत्यापात्यः—कर्तरि ण्यत्। पक्षे आपात्यमनेनेति भावे॥ चात् कृत्या इति—'कृत्याश्च' (३।३।१७१) इति पूर्वसूत्रसमुच्चयादित्यर्थः। वोढव्य इति—वहिधातोः परे 'होढः' इति ढः। 'झषस्तथोः—' इति तकारस्य धकारः। 'ष्टुना—' इति ष्टुत्वे 'ढो ढेलोपः' ततः सहिवहोरित्योत्वम्। शकि लिङ्विषयार्थे चकारादिति। वाच्य इति—ण्यत्। लिङा बाधा मा भूदिति—तथाच 'स्त्र्यधिकारात् प्राक् वाऽसरूपविधिर्नतु तत ऊर्ध्वम्' इति भाष्यवचनात् "शकि लिङ् च" इत्यत्र वाऽसरूपविधेरभावात् 'शकि लिङ्' इत्येतावत्येव उक्ते पक्षे कृत्यबाधः स्यात्। किन्तु क्वचित् पुनर्बाधो भवत्येवेति दर्शितम् चकारग्रहणेन। अतएवात्र पुनः कृत्योक्तिः चकारद्वारा। नन्वेवमपि लाघवादेकमेवोच्यतामिदम्। किमर्थं पुनः 'प्रैषादिसूत्रे', 'अर्हे—' इत्यत्रापि क्रमेण 'कृत्याः', 'कृत्यतृचः' इत्यनयोर्ग्रहणम्। तथाहि सति गौरवं स्यादित्याकाङ्क्षायाह—लाघवादनेनैवेति—'शकि लिङ् च' इत्यनेनैवेत्यर्थः। ततश्च "प्रैषादि—" सूत्रे "अर्हे—" इत्यत्र यथाक्रमं 'कृत्याः', 'कृत्यतृचः' ग्रहणमपि त्यक्तुमशक्यम्।

इति मितभाषिण्यां कृदन्तकृत्यप्रकरणम्।

---

# अथ कृदन्तप्रकरणम्

२८९५ । ण्वुल्तृचौ ॥ ३।१।१३३ ॥

दीक्षितः । धातोरेतौ स्तः । 'कर्तरि कृत्' (२८३२) इति कर्त्रर्थे । 'युवोरनाकौ' (१२४७)—कारकः । कर्ता । वोढुमर्हो वोढा । (स्त्रियां ?) कारिका । कर्त्री । 'गाङ्कुटा—' (२४६१) इति ङित्त्वम् । कुटिता । अञ्णिदित्युक्तेन ङित्त्वम्—कोटकः । 'विज इट्' (२५३८)—विजिता । 'हनस्तोऽचिण्णलोः' (२५७४)—घातकः । 'आतो युक्—' (२७६१)—दायकः । 'नोदात्तोपदेशस्य'—(२७८३) इति न वृद्धिः—शमकः । दमकः । अनिटस्तु नियामकः । 'जनिवध्योश्च' (२५१२)—जनकः । 'वध हिंसायाम्'—वधकः । 'रधिजभोरचि' (२३०२)—रन्धकः । जम्भकः । 'नेट्यलिटि रधेः' (२५१६)—रधिता—रद्धा । 'मस्जिनशोः—' (२५१७) इति नुम् । मङ्क्ता । नंष्टा—नशिता । 'रभेरशब्—लिटोः' (२५८१)—रम्भकः । रब्धा । 'लभेश्च' (२५८२)—लम्भकः । लब्धा । 'तीषसह—' (२८४०)—एषिता—एष्टा । सहिता—सोढा । दरिद्रातेरालोपः । दरिद्रिता । ण्वुलि न—दरिद्रायकः ॥ कृत्यल्युटः—(३८४१) इत्येव सूत्रमस्तु । यत्र विहितास्ततोऽन्यत्रापि स्युरित्यर्थात् । एवं च बहुलग्रहणं योगविभागेन कृन्मात्रस्यार्थव्यभिचारार्थम्—पादाभ्यां ह्रियते पादहारकः—कर्मणि ण्वुल् ॥ 'कृतः कर्तर्यसमस्तपदविषयात् कृत इच्विषेधो वाच्यः' (वार्तिक)—

प्रक्रन्ता। 'कर्तरि' इति किम्? प्रक्रमितव्यम्। 'आत्मनेपद—' इति किम्? सङ्क्रमिता। अनन्यभावे विषयशब्दः। तेन 'अनुपसर्गाद्वा' (२७१६) इति विकल्पार्हस्य न निषेधः—क्रमिता। तदर्हत्वमेव तद्विषयत्वम्। तेन क्रन्तेत्यपीति केचित्। 'गमेरिट्—' (२४०१) इत्यत्रपरस्मैपदग्रहणं तङानयोरभावं लक्षयति—सञ्जिगमिषिता। एवं 'न वृद्भ्यश्चतुर्भ्यः' (२३४१) विवृत्सिता। यङन्तात्ण्वुल्। अल्लोपस्य स्थानिवत्त्वान्न वृद्धिः—पापचकः। यङ्लुगन्तात्तु पापाचकः।

The कृत् affixes ण्वुल् and तृच् are added to each and every root (in the active voice or कर्तृवाच्य by the rule 'कर्तरि कृत्'—2832). णकार of ण्वुल् is for वृद्धि, लकार for pitch (स्वरार्थम्) and 'वु' is changed into अक by 'युवो:—' (1247). Thus कृ+ण्वुल्=कार+अक—वृद्धि and रपरत्व by 'अचो ञ्णिति' (245) and 'उरण्रपरः' (70). कृ+तृच्=कर्+तृ by गुण under 'सार्वधातुकार्ध—' (2168). वोढुम् अर्हः—this sense has been obtained from अर्हेकृत्यतृचश्च (2822). वह्+तृच्=वढ् तृ by 'हो ढः'=वढ् ध by 'झषस्तथो:—'=वढ् ढृ by 'ष्टुनाष्टुः'=व ढृ by 'ढो ढे लोपः'=वोढृ by 'सहिवहोरोदवर्णस्य'=वोढा 1st case-ending Sing. (masc.). कारिका—fem. of कारक, इत coming in by 'प्रत्ययस्थात् कात् पूर्वस्यात इत्—' (468) when आप् follows. The penultimate of कुट् in कुटिता does not get वृद्धि as तृच् is neither ञित् nor णित् and hence ङित् or अगुणी (bereft of गुण) by 'गाङ्कुटा—' (2461). But in कोटक (कुट्+ण्वुल्) ण्वुल् enjoins गुण as it is णित्। विजिता with तृच् which is ङित् by 'विज इट्', but with ण्वुल्—वेजकः। घातकः—हन्+ण्वुल=वृद्धि and तादेश and by 'हो हन्तेः—' (858). चमिटस्

नियामकः—यम् (in नि+यम्+ण्वुल्) is अनिट् (अनुदात्त) and not 'उदात्तोपदेश' though 'मान्त' and thus there is no reason to forbid वृद्धि of its उपधा by 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (2768) so we get नियामक here (यम् gets same (वृद्धि) for मान्त अनिट् roots are 'अनुदात्तोपदेश'). जनकः+वधकः,—derived with ण्वुल्, do not get वृद्धि fore their उपधाs, due to the prohibition of वृद्धि in 'जनिवध्योश्च' (2512) where 'वधि' is 'वध—हिंसायाम्'—भ्वादि and not substitute of हन्। 'रधिजभोः—' (2802) directs नुम् in रन्धकः &c। 'नेड्वशि कृति—' gives रधिता—रद्धा—without नुम्, and रधादित्वात् optional इट्। मङ्क्ता—मस्ज्+तृच्=मस्न् ज् तृ=मन्ज् तृ—सलोप by 'स्कोः—' (880) after नुम् which is employed before the final (जकार) by the varttika—'मस्जेरन्त्यात् पूर्वो नुमवाच्यः'=मन्ग्तृ by 'चोः कुः' (878) मन्क् तृ by 'खरि च' (121)=मंक् तृ by 'नश्चापदान्तस्य—' (128)= मङ् क्तृ or मङ्क्तृ by 'अनुस्वारस्य ययि—' (124). नंष्टा, नशिता—optional इट् due so रधादित्व। नुम् when झल् letter follows। (52). 'तीषसह—' directs optional इट्। दरिद्रातेरालोपः i. e. when तृच् follows by the varttika 'दरिद्रातेरालोपो वक्तव्यः'। ण्वुलिन 'आलोपः'—दरिद्रायकः—by 'आतोयुक्—' (2761)। 'कृत्यल्युटः—(2841) दलीय सूत्रस्य etc—There runs the Varttika कृतो बहुलम् under the rule 'कृत्यल्युटो बहुलम्' (2841.) Despite the existence of this varttika which is very much serviceable in view of its importance in cases such as पादहारकः, मधुराहारः, सनरासङ्गः etc. whence ण्वुल् and घञ् etc. are employed in senses other than to be met with in the whole body of the कृदन्त-सूत्रs, Bhattoji breaks up the rule 'कृत्यल्युटः—' (2841) into two parts e.g. (i) 'कृत्यल्युटः' and (ii) 'बहुलम्'। (i) कृत्य affixes and ल्युट् have been dealt with pre-

viously here and there and therefore this repetition viz 'क्तल्युटः' signifies than they (कृत्य affixes and ल्युट्) may take effect in senses save and except those in which they had been previously handled; and (ii) बहुलम् i. e. कृत् affixes may be used in various senses i. e. in senses to which they are quite foreign. This he says एवं च योगविभागेन etc. and illustrates कर्मणि ण्वुल in पादाभ्यां ह्रियते = पादहारकः—a footman or pedestrian. Similarly, we may add—अधिकरणे घञ् in—मथुरायाम् आह्रियते—मथुराहारः (काशिका) and उत्तरस्मिन् आसज्यते—उत्तरासङ्गः—an upper garment or sheet etc Cp—'लघूत्तरासङ्गवतीमधीतिनीम्' (कुमार—5. 16). [In doing this, it must be added, Bhattoji holds the परिभाषा 'योगविभागादिष्टसिद्धिः' and does not cognise the other 'यथोत्तरं मुनीनां प्रामाण्यम्'। Thus तत्त्वबोधिनी says—'कृत्यल्युटोबहुलम्' इति सूत्रं 'कृतो बहुलम्' इत्याकारे (महाभाष्ये) स्थितम्। तथा च योगविभागं विनैव सर्वेष्टसिद्धिरित्याहुः'। It is peculiar to note, however, that Nagesha is silent on the point]. 'क्रमेः कर्त्तरि—' Varttika—It must be said that इट् is not prefixed to कृत् affixes coming after the root क्रम् which is आत्मनेपद in the कर्तृवाच्य. Thus प्रक्रन्ता (प्र—क्रम्—तृच्)—क्रम् being आत्मने by the rule 'प्रोपाभ्यां समर्थाभ्याम्' (2735). But in सम्क्रमिता—इट् comes in. Due to the explanation अनन्यभावे विषयशब्दः i.e. as the term 'विषय' in Varttika 'क्रमेः कर्त्तरि—' denotes अनन्यभाव or अनन्यत्व—the state of not being applied to a different case (but obligatory), so the कृत् affixes get इट् when क्रम् is परस्मै. or optionally आत्मने. (as क्रमिता) by 'अनुपसर्गाद्वा' (2716). Some, however, hold that क्रन्ता (क्रम्+तृच्—without इट्) also is the resultant from

'अनुपसर्गाद्वा' (2816) as according to their opinion तद्विषयत्वम् means तदर्हत्वम् or the state of befitting or meriting that epithet viz आत्मनेपदत्व. In the rule 'गमेरिट् परस्मैपदेषु' (2401) the term परस्मैपद denotes the absence of तङ् (प्रत्याहार) and आन (शानच्, कानच्). Thus the rule 'गमेरिट्—' now means any सकारादि affix coming after गम्, gets इट् prefixed to it when there is absence of तङ् and आनङ्. In this case such affixes as सन् etc. are prefixed with इट् even when गम् is आत्मने. provided the same सन् etc. are not followed by तङ् and आन। Thus in सञ्जिगमिषिता (सम्—गम् + सन् + तृच् कर्तरि) सन् gets इट्, although गम् is here आत्मने. due to the prefix सम् by the rule 'समो गम्यृच्छिभ्याम्' (2699), because the following affix तृच् is neither तङ् nor आन. The procedure in सञ्जिगमिषिता is as follows—duplication of the root by the 'सन्यङोः' then 'हलादिः शेषः', 'कुहोश्चुः', सन्यतः etc. Similar is the case in 'न वृद्भ्यश्चतुर्भ्यः' (2348) i.e. there also we must add the term 'तङानयोरभावे' (for the explation of this rule turn back to the place of its first application). Thus the affix सन् in विवृत्सिता gets इट्. No guna due to कित्व by 'इको झल्' (2613). यङन्तात्—i.e. पच + यङ् + ण्वुल् = पापच्य + णक = पापच + णक due to य् लोप by 'यस्य हलः' (2631) = पापच् + णक = पापचकः—no वृद्धि of उपधा due to स्थानिवत्त्व of अल्लोप or the elision of अ by 'अतो लोपः' (2308)। यङ्लुगन्तात्—पापाचकः i.e. here वृद्धि of उपधा takes place because there is no स्थानिवत्त्व of अल्लोप due to अनैमित्तिकत्व or unconditionalness of यङ्लुक् but 'न धातुलोपे—' (2656) does not apply here.

मित—। अथैवं कृत्यप्रक्रियां समाप्य सूत्रकृतो व्याचख्यौ कृत्—सूत्राविति। औत्सर्गिकं सूत्रं तदाह—धातोरित्यादि। यथा 'धातोः कर्मणः—'

(३।१।७) इत्यतः धातोरिति वर्तते इत्यर्थः। सर्वेभ्यो धातुभ्यो ण्वुल्तृचौ प्रत्ययौ सामान्येन स्त इत्यर्थः। 'अनयोर्वर्तमानकालादन्यत्र न प्रयोग' इति भाष्यम्। तत्र सामान्येन गाथं—यतः "पुरःप्रहर्त्ता" "जगतीपतीनां हन्ता" इत्यादौ अतीतार्थेऽपि तृच् दृश्यते। कर्त्रर्थे इति कर्तृवाच्य इत्यर्थः। युवोरिति—युस्थाने 'अन' वुस्थाने 'अक' इति यथासंख्यमन्वयः। कारक इति—ण्वुलो णित्त्वाद् "अचो ञ्णिति" (२५४) इति वृद्धिः। पौढुमर्ह इति—'अर्हे कृत्यतृचश्च' (२८२२) इत्युक्तेरित्यर्थः। कारिकेति—स्त्रियामिति बोध्यम्। 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः' इति इत्त्वम्। 'गाङ्कुटा—' (२४६१) इति अनेन ञ्णिद्भिन्नप्रत्ययस्य ङित्त्वात् ण्वुलश्च णित्त्वात् ङित्त्वं न। अतएव गुणः। विज इडिति—तस्य ङित्त्वान्न गुण इति भावः। हन्तेर्ण्वुलि आह—हनस्त इति—घातकः इति। हन्तिवुकौ। हो हन्तेरिति कुत्वम्। अनिटस्तु नियामक इति—अत्र 'नोदात्तोपदेशस्य—' (२७६३) इति यमेर्ण्वुलि वृद्धिनिषेधो न, यमेरनिट्त्वात् अनुदात्तोपदेशात्। जनिवध्योश्चेति—अत्रापि नोपधावृद्धिः। वध हिंसायमिति—नायं हन्तेर्वधादेश इति ज्ञापयितुमेवमुक्तिः। अन्यथा 'हनो वध' इत्यावक्ष्यत्। धात्वन्तरमिदं भौवादिकम्। वधक इति—ण्वुल्, जनिवध्योश्चेति न वृद्धिः। हन्तेर्वधादेशत्वे तु अल्लोपस्य स्थानिवत्त्वेन वृद्ध्यभावसिद्धेः 'जनिवध्योश्च' (२५१९) इति सूत्रं व्यर्थं स्यादिति बोध्यम्—अतोऽप्याह—वध हिंसायाम्। रन्धकः जम्भक इति—रधिजभोरिति नुमि कृते उपधात्वनिवृत्तेर्नोपधावृद्धिप्रसङ्गः। रधिता रद्धेति—'नेट्यलिटि रधे'रिति नुमनिषेधः। 'रधादिभ्यश्च' (२५१५) इति वेट्। रद्धा इत्यत्र रध्+तृच् इति स्थिते 'झषस्तथोर्धोऽधः' (२२८९) इति तकारस्य धकारः। 'झलां जश् झशि' (५२) इति पूर्वधकारस्य दकारः। मङ्क्तेति—मस्जिनशोरिति नुमि कृते 'स्कोः—' (३८०) इति सलोपः। 'चजोः कु' रिति जस्य गः। तस्य 'खरि च' इति चर्त्वेन कः। 'नश्चापदान्तस्य—' इत्यनुस्वारो नकारस्य। तस्य यथि परसवर्णो ङः। नंष्टा नशितेति—रधादित्वाद् वेट्। झलि तु नुम्। 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति षत्वम्। ष्टुना ष्टुरिति ष्टुत्वम्। अनुस्वारः प्राग्वत्। रभेरिति—नुमविधानार्थमिदम्। रब्धेति—रभ्+तृच् इति स्थिते इति प्राग्वद्धत्वादि। तीषसहेति—इड्विकल्पस्मरणार्थमिदम्। सोढेति—सह्+तृच् इति स्थिते 'हो

ढः' इति हस्य ढः। झषस्तथोरिति तस्य धः। तस्य (धकारस्य) ष्टुत्वेन ढः। 'ढो ढे लोपः' इति पूर्वढकारलोपः। 'सहिवहोरोदवर्णस्य' इति ओत्वम्। दरिद्रातेराल्लोप इति—'दरिद्रातेराल्लोपो वक्तव्य' इति वार्तिकादित्यर्थः। लुङि नेति—आल्लोप इति शेषः। 'सनि ण्वुलि ल्युटि चने'ति वार्तिकोक्तेः प्रथमालोपाभावे आतो युगिति॥ इदानीं 'कृत्यल्युटो बहुलम्' (२८४१) इति सूत्रस्य अक्षरार्थे व्याख्याने मधुराहारः, पादहारकः, उत्तरासङ्गः इत्येवमादिकः प्रयोगविशेषः अनुपपन्नः स्यादिति निर्ध्याय परमार्थतो व्याख्यानं प्रारभते—इत्येव सूत्रमखिलमित्यादिना। यद्यपि 'कृत्यल्युटो—' इत्यत्र 'कृतो बहुलम्' इति वार्तिककृदुक्तेरेव सर्वेष्टसिद्धिः तथापि 'यथोत्तरं मुनीनां प्रामाण्यम्' इति परिभाषामनादृत्य—'योगविभागादिष्टसिद्धिः' इतीमं स्वीकृत्येदं व्यवसितम्। अतएवं योगविभागे सूत्रद्वयं सम्पद्यते 'कृत्यल्युटः' इत्येकम्। 'बहुलम्'—इत्यपरम्। तत्र 'येष्वर्थेषु कृत्यल्युटो विहितास्ततोऽन्यत्राप्यर्थे ते भवन्ती'ति पूर्वस्यार्थः, तथा 'कृत्प्रत्यया येष्वर्थेषु विहितास्ततोऽन्यत्रापि ते भवन्ति'—इत्युत्तरस्यार्थः। अतएवाह—यत्र विहिता इति कृन्मात्रव्यभिचारार्थमिति च। उत्तरस्योदाहरणमाह—पादाभ्यामिति। एवमुत्तरस्मिन्नासज्यत इत्युत्तरासङ्ग (लघूत्तरासङ्गवतीमबोधिनीम् कुमार—५।१६), इत्यादि सिध्यतीति दिक्। अत्र अधिकरणे घञ्। 'क्रमः कर्तरि—' वार्तिकमिदम्—कर्तरि आत्मनेपदविषयात् क्रमेरुत्तरं विधीयमानस्य कृत्प्रत्ययस्य इडागमो नेत्यर्थः—प्रक्रन्तेति। 'प्रोपाभ्यां समर्थाभ्याम्' इत्यात्मनेपदम्। परस्मैपदविषये तु इट् स्यादित्याह—संक्रमितेति। क्रमः कर्तरीति वार्तिकस्थं विषयशब्दं व्याचष्टे—अनन्यभावे विषयशब्द इति। अन्यस्य भावोऽन्यभावः। न तथा अनन्यभावः अनन्यत्वमित्यर्थः। तथाच यत्रात्मनेपदस्य अन्यत्वं न भवति तत्रैव वार्तिकम् प्रयोज्यम्। यत्र तु आत्मनेपदस्य परस्मैपदेनोभयमपि भवति तत्र नेत्यर्थः। एवञ्च 'प्रोपाभ्याम्—' इति नित्यात्मनेपदविषये एव इट्निषेधः। तत्रापि प्रक्रामति गच्छतीति समर्थत्वाभावे इट्। प्रक्रमितेत्यपि भवति। तेनेति—अनन्यार्थकत्वाद् विषयशब्दस्येत्यर्थः। विकल्पार्हस्येति—पदव्यवस्थाविकल्पार्हस्य क्रमेरित्यर्थः। व्याख्यान्तरमाह—तदर्थत्वमेव तद्विषयत्वमिति। 'कटे स्वरसंस्तुवः पद्यते इष्यते' इति भाषीयः। क्रान्तेत्यपीति—यदात्मनेपदसंकेति तदिदम्। यदा नार्हति तदा अक्रमितव्यके।

तङानयोरभावं लक्षयतीति। एवञ्च 'गमेरिट् परस्मैपदेषु' (२४०१) इत्यस्यायमर्थः— 'गमेः परस्य सकारादेः (प्रत्ययस्य) इट् स्यात्तङानयोरभावे' इति। तथाच सम्पूर्वाद् गमेः 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदित्वेऽपि परतस्तङोऽभावात् सन इट् प्राप्नोत्येवेत्याह—सञ्जिगमिषितेति। तृचस्तु वलादिलक्षण इट् प्राप्नोति। एवमिति। 'न वृद्भ्यः—' इत्यत्रापि तङानयोरभावो गम्यत इत्यर्थः। अल्लोपस्य स्थानिवत्त्वादिति— 'यस्य हलः' इति यकारलोपात्पूर्वम् 'अतोलोपः' इति प्राप्तस्य अल्लोपस्य इति भावः। यङ्लुगन्तात्तृलि—यङ्लुकोऽत्र अनैमित्तिकत्वात् 'नधातुलोप आर्द्धधातुके' इति निषेधश्च न, उपधावृद्धिरिग् लक्षणत्वाभावात्।

२८८६। नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः ॥ ३।१।१३४ ॥

टी—। नन्द्यादेर्ल्युर्ग्रह्यादेर्णिनिः पचादेरच् स्यात्। नन्दयतीति नन्दनः। जनमर्दयतीति जनार्दनः। मधुं सूदयतीति मधुसूदनः। विश्लेषेण भीषयतइति विभीषणः। लवणः। नन्द्यादिगणे निपातनाण्णत्वम्॥ ग्राही। स्थायी। मन्त्री। विशयी। वृद्ध्यभावो निपातनात्। विषयी—इह षत्वमपि। परिभावी-परिभवी। पाक्षिको वृद्ध्यभावो निपात्यते॥ पचादिराकृतिगणः। 'शिवशमरिष्टस्य करे' (२४८८), 'कर्मणि घटोऽठच्' (१८३६) इति सूत्रयोः करोतेर्घटश्चाच् प्रयोगात्। अच् प्रत्यये परे यङ्लुग्विधानाच्च। केषाञ्चित् पाठस्त्वनुबन्धासञ्जनार्थः। केषाञ्चित्प्रपञ्चार्थः। केषाञ्चिद्बाधकबाधनार्थः। पचतीति पचः। नदट्। चोरट्। देवट्। इत्यादयष्टितः। नदी। चोरी। देवी। दीव्यतेः 'इगुपध—' (१८८७) इति कः प्राप्तः। जारभरा। श्वपचा। अनयोः कर्मण्यण् प्राप्तः। न्यङ्क्वादिषु पाठात् श्वपाकोऽपि। 'यङोऽचि च' (२६५०) इति लुक्। 'न धातु लोपे—'

(२६५६) इति गुणवृद्धिनिषेधः। चेक्रियः। नेन्यः। लोलुवः। मरीमृजः। 'चरिचलिपतिवदीनां वा द्वित्वमच्याक् चाभ्यासस्येति वक्तव्यम्' (वार्त्तिक)। आगागमस्य दीर्घत्वसामर्थ्यादभ्यासह्रस्वो हलादिः शेषः (२१७९) च न। चराचरः। चलाचलः। पतापतः। वदावदः। 'हन्तेर्घत्वं च' (वार्त्तिक)। घत्वमभ्यासस्योत्तरस्य तु 'अभ्यासाच्च' (२४३०) इति कुत्वम्। घनाघनः। 'पाटेर्णिलुक्चोक् च दीर्घश्चाभ्यासस्य' (वार्त्तिक)—पाटूपटः। पक्षे चरः। चलः। पतः। वदः। हनः। पाटः। 'रात्रेः कृति—' (१००८) इति वा मुम्—रात्रिञ्चरः—रात्रिचरः।

The roots नन्दि etc, ग्रहि etc and पचि etc, take ल्यु, णिनि and अच् respectively in the active voice. [For a list of these three particular classes of roots see मित—below]. नन्द + ल्यु = नन्द + अन by 'युवोरनाकौ' (1247) = नन्दनः—a gladdener. Similarly जनार्दनः (Lord Krishna) and मधुसूदनः (the killer of the demon मधु)—no षत्व due to the prohibition 'सात् पदाद्योः' (2123),—elision of णि (णिच्) everywhere being effected by 'णेरनिटि' (2313). विभीषणः (exceedingly dreadful)—षुक् by 'भियो हेतुभये—' (2595). In लवणः (लूञ् छेदने + ल्यु)—a demon of that name, we have णत्व by निपातन as it is read with णत्व in the नन्द्यादि class. ग्राही—(ग्रह + णिनि) उपधावृद्धि or lengthening of the penultima being effected by the rule "अत उपधायाः" (2282). स्थायी—युक् by 'आतो युक्—' (2761); विशयी (वि + शी + णिनि)—Here the वृद्धि of ई by the rule 'अचो ञ्णिति' (254) does not take effect due to निपातन; विषयी (वि +

सि + णिनि )—Here not only the want of वृद्धि but षत्व also has been effected by निपातन । परिभावी—परिभवी (परि + भू + णिनि) option of वृद्धि by निपातन although णिनि necessitates वृद्धि persistently ( नित्य ). Roots of the पचादि class are determined by their shape and form आकृतिगण i. e they are not exhaustively enlisted in the गणपाठ. This is inferred from the अजन्त words कर: and घट: made use of in the rules 'शिवशमरिष्टस्य करे' (348 ) and 'कर्मणि घटोठच्' (1836) although they (कर + घट) are not met with in the गणपाठ. Also the enjoining of यङ्लुक् when अच् follows—Cp. 'यङोऽचि च' (2650) is another evidence (of आकृतिगणत्व of पचादि roots) as the यङन्त word has not been read in the पचादि class. The reading, however, of some roots such as नदट्, चोरट् etc is for applying the indicatory ( अनुबन्ध ) ट् after them (so that they may get ङीप् 'टिड्ढाणञ्—' (470 and of some such as वद चल, पत etc is for adding to ( प्रपञ्चार्थ ) the number, while some others as जारभर and श्वपच are read for barring ( बाधनार्थ ) the special or superseding ( बाधक ) affix ( अण्, which would give जारभार and श्वपाक by 'कर्मण्यण्'—2913). 'देवी' would not be had without this अनुबन्ध 'ट' the affix क being due after दिव् by 'इगुपधज्ञा'—(2897). The term 'श्वपाक' though not justifiable in the light of the remark 'बाधकबाधनार्थे', it may however be defended as it is read in न्यङ्क्वादि class ( 'न्यङ्क्वादीनां च—'2864)—Cp. श्वपाक, मांसपाक, मूलपाक etc under the गणपाट (under 7. 3. 53). जारभरा (a woman having an adulterer) श्वपचा (a woman cooking a dog) are derived with अच् by the dictum 'केषाञ्चिद् बाधकाबाधनार्थ:' though in both the cases अण् was due. ( चेक्रीय: ) etc are derived with

यङ् and अच् ( क्री + यङ् + अच्, so नी + यङ् + अच् etc ) where यङ् elides by यङोऽचि च; (2650) and गुण and वृद्धि are barred by 'न धातुलोपे—' (2656). क्री + यङ् + अच्—क्री क्री = चेक्री अ by 'कुहोश्चुः' and 'गुणो यङ्लुकोः' = चेक्रियः—इयङ् by 'अचि श्नु धातुभ्रुवाम्—' (271) and not यण् by 'एरनेकाचः—' (272) as 'क्री' is संयोगपूर्व । नी + यङ् + अच् = नीनी ० अच् = निनी अ = नेन्यः by 'एरनेकाचः—(282). लोलुवः = लू + यङ + अच् = लोलू अ by द्वित्व, गुण and यङ् लुक् = लोलुवः—उवङ् by 'अचि श्नु—' (271) and not यण् by 'ओः सुपि' (281) there is no सुप् following. Similarly पोपुवः, मरीमृजः—मृज् + यङ् + अच् = मरी मृज् अ by 'रीगृदुपधस्य च' (3644) गुण वृद्धि being barred as before by न धातुलोपे—। चरि चलि etc—(varttika).—The roots (four) चर् चल् पत् and वद् are optionally duplicated and the reduplicate ( अभ्यास ) gets the augment आक् when the affix अच् follows. Now, on the strength of 'दीर्घं in आक्' the reduplicate will not be shortened by the rule ह्रस्वः (2180) nor will there be the retention of the first consonant (syllable) only by the rule 'हलादिः शेषः' (2139). Thus चराचरः etc. चरः, चलः etc. are to be considered the optional forms. 'हन्तेर्घत्वं च' (varttika)—when अच् follows, the root हन will be duplicated, आक् will come in and 'ह' will be replaced by घ. This injunction of घत्व is for the first or अभ्यास हकार and the second or subsequent हकार becomes so by the rule 'अभ्यासाच्च' (2430). Thus घनाघनः (a pouring cloud). 'पाटेर्णिलुक् च—'(varttika) when अच् is added to the causative root पट, णिच् is dropped, the augment ऊक् is added to the अभ्यास and the said अभ्यास i. e. the penultima of it is lengthened. Thus पाटूपट of वाचिकरः and राज्ञिकरः (both meaning

a rightrover) the former gets मुम् by the aphorism 'रात्रेः कृति विभाषा' (1008).

मित—। नन्दि ग्राहीति। 'द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति न्यायादादिशब्दस्य नन्द्यादिषु प्रत्येकं योगः। तदाह—नन्द्यादिभ्यः, ग्रह्यादिभ्यो णिनिरित्यादि। (१) नन्दन, वाशनः, मदनः, दूषणः, साधनः वर्धनः, शोभनः, रोचनः, सहनः, तपनः, दमनः, जल्पनः रमणः, दर्पणः, संक्रन्दनः, संकर्षणः, संहर्षणः, जनार्दनः, यवनः, मधुसूदनः, विभीषणः, लवणः, चित्तविनाशनः, कुलदमनः [शत्रुदमनः] इति नन्द्यादिः। आकृतिगणोऽयमिति वर्धमानादयः। (२) ग्राही, उत्साही, उद्दासी, उद्भासी, स्थायी, मन्त्री, संमर्दी, निरक्षी, निश्रावी, निवापी, निशायी, अयाची, अव्याहारी, अव्राजी, अवादी, अवासी, अकारी, अहारी, अविनायी, [विशायी, विषायी] विशयी, विषयी देशे। विशयी, विषयी देशः। अभिभावी भूते। अपराधी, उपरोधी, परिभवी, परिभावी इति ग्रह्यादिः। [पूर्वस्य नन्द्यादेः परस्य पचादेश्च आकृतिगणत्वात् अयमपि तथा भवतु इति सुधीभिर्विभावनीयम्। तेन 'वादिन्' 'ध्वंसिन्' इत्यादिकालिदासप्रयोगाः सुव्याख्येयाः भवन्ति]। (३) पच, वच, वद, वप, चल, पत, नदट्, भषट्, देवट्, चरेट्, गरट्, तरट्, चोरट्, गाहट्, सरट् देवट् (दोषट्), जर (रज), मर (मद) चम (चप), सेव, मेघ, कोप (कोष), मेध, नर्त, व्रण, दर्श, सर्प, (दम्भ, दर्प) जारभर श्वपच। पचादिराकृतिगणः (इयान् पचादिरित्यवधिभूतो न भवतीत्यर्थः) नन्दनः इति ल्युत्वात् न ल्युः। 'युवोरनाकौ' ल्योरनादेशे 'णेरनिटि' (2313) इति णिलोपः। एवमन्यत्र। मधुसूदन इति—'सात् पदाद्योः' (2123) इति षत्वप्रतिषेधः। लवण इति—नन्द्यादिगणे केचिन्नत्वेन निर्दिष्टाः केचिद्णत्वेन। तदाह नन्द्यादिगणे इति। अथ ग्रह्यादीनुदाहरति—ग्राहीति। ग्रह+णिनिरिति स्थिते उपधावृद्धौ च ग्राहिन् इति भवति ततो रूपम्। स्थायीति—अत्र 'आतो युक्—' (२७६१) इति युगागमः। इडभाव इति। वि+शी+णिनि इति स्थिते 'अचो ञ्णिति' (२५४) इति वृद्धौ प्राप्तायाम् इदं वचनम्। गुण इति भावः। विषयीति इह 'षिञ् बन्धने' इति सौवादिको धातुः। वि+षिञ्+णिनि इति स्थिते 'धात्वादेः—' (२२६४) वि+सि+

णिन् इति जाते इह घत्वमपीति। इह ठगभावः घत्वञ्च निपातनादित्याशयः। पाणिकी ठगभाव इति—णित्वाद्धिल्यहन्त्री प्राप्तायामिति भावः। अथ पचादीनुदाहरिष्यन्नाह—पचादिराकृति-गण इति। आकृत्या गण्यते निर्णीयते इति। इयत्तया परिगणनारहित इत्यर्थः। कुत एतदित्यत आह—'शिवशमरिष्टस्य—' इति। तथाहि करघटशब्दौ पचाद्यजन्तावपि गणपाठे न संदृश्येते। दृश्येतेतु सुवर्योरकौष्टिखिलयोः। एवं तर्हि ज्ञायते पचादिरियत्तया नैव परिगणितः। प्रमाणान्तरमप्याह—अच् प्रत्यये परे इति। अयमर्थः—'यङोऽचिच' (२६५०) इति यङन्तादच् प्रत्यये परे यङो लुग्विधीयते। पर यङन्तः कोऽपि शब्दो न दृश्यते पठितो गणे पचादिके। अतः पचादिराकृतिगण एवेति निष्कर्षः। गणपाठे च 'पचादिराकृतिगणः' इत्युल्लेखो दृश्यत इत्यलम्। पचादिगणे केचित् नदट्, चोरट् इत्यादयः सानुबन्धाः पठिताः। तदाह—केषाञ्चित् पाठस्त्वानुबन्धासञ्जनार्थ इति—टकारानुबन्धार्थ इत्यर्थः। एवंच 'टिड्ढाणञ्—' इति ङीपि—नदी, चोरीत्यादि सिध्यतीति भावः। भूतपूर्वगत्या इति भाष्यवचनादिदम्। केचिदनुबन्धरहिता अपि पठ्यन्ते—चर, चल, पत, वद इत्येवमादयः। तदाह—केषाञ्चित् पाठस्तु प्रपञ्चार्थ इति। नन्वेवमपि जारभर, श्वपच इत्यत्र पाठः कथमित्यत आह केषाञ्चिद्बाधकबाधनार्थः। तथाच जारं (उपपतिं) बिभर्ति आरभेति—कर्मण्यण्—इत्यण् प्राप्तः। स बाधितो यथा स्यादित्येवमर्थः। एवं श्वपचा इत्यपि। श्वपाक इति—तस्य न्यङ्क्वादित्वेन अण्प्रत्ययस्य सुलभत्वात्। इदानीं यङन्तादच्प्रत्ययमाह—यङोऽचि चेति। एवञ्च चेक्रियः···मरीमृजः इत्येते सिध्यन्ति। तथाच—क्री+यङ्+अच इति स्थिते द्वित्वे, हलादिशेषे, ह्रस्वे, चुत्वे च 'यङोऽचि च' (२६५०) इति यङो लुक्। ततो "गुणो यङ्—लुकोः" इति अभ्यासस्य गुणे चेक्री अ इति जाते 'न धातुलोपे—' इति गुणवृद्धोरभावः। 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ" इतीयङि चेक्रियः इति भवति। नेन्य इत्यत्र तु अनेन नेनी अ इति स्थिते 'एरनेकाचः—' (२७२) इति यण् इति विशेषः। लोलुवः इति—लूयतेरनया प्रक्रियया लोलू अ इति स्थिते उवङ्। यण् तु न 'ओः सुपि' इत्युक्तेः। एवं पोपुवः। मरीमृजः इति—मृज+यङ+अच इति स्थिते द्वित्वे 'रीग् ऋदुपधस्य च' (२६४४) इत्यभ्यासस्यास

ऋकारस्य रीक्। एवं सरीसृप इति द्रष्टव्यम्। चरचलेत्यादौ विशेषप्रदर्शनार्थं वार्तिकमाह—'चरि चलि पतिवदीनाम्'—इति। अचि परे एषां वा द्वित्वम् अभ्यासस्य आगागमश्चेति तदर्थः। ननु आगागमस्य दीर्घत्वाद् द्वित्वात्पूर्वं "ह्रस्वः" (२१८०) इति ह्रस्वः स्यादित्यत आह—आगागमस्य दीर्घत्वसामर्थ्यादिति। युक्तं चैतत्। ह्रस्वस्य लघ्वर्थत्वे सति 'अक्' इत्येव सिद्ध 'आक्' इति दीर्घः न शिष्यात्। एवं हलादिशेषेण रेफनिवृत्तिरपि नेष्यते। तथा सति दीर्घत्वानुशासनवैयर्थ्यापत्तेः। चराचरः संसारः। चलाचलो भङ्गुरः। "चलाचलमिदं सर्व्वम् कीर्त्तिर्यस्य स जीवति"। पतापतः पतनशीलः। 'वदो वदावदो वक्ता' इत्यमरः। हन्तेर्घत्वमिति—वार्तिकमिदम्। चकाराद् द्वित्वम् आक् चेति बोध्यम्। घनाघन इति—'शक्रो घातुकमत्तेभो वर्षुकाब्दो घनाघन' इत्यमरः। 'घनाघनघनाध्वान्त घनाघनघनस्तनैः' इति वैद्यकि। 'पाटेर्णिलुक च—' वार्तिकमिदम्। 'पाटि' इतिण्यन्तो धातुः। अच्यादच्चि परे द्वित्वम्, उक च दीर्घश्चाभ्यासस्येत्यर्थः—पाटूपटः इति। वार्तिके वेत्यनुवृत्त्यादाह पचे इति। रात्रिचरः—रात्रिचर इति। स्पष्टं मूले।

## २८८७। इगुपधज्ञाप्रीकिरः कः॥ ३।१।१६५॥

**टी·—। एभ्यः कः स्यात्। क्षिपः। लिखः। बुधः। कृशः। ज्ञः। प्रीणातीति प्रियः। किरतीति किरः। वाऽसरूपविधिना ण्वुल्तृचावपि। क्षेपकः—क्षेप्ता।**

The affix क is added after these roots viz roots having इक् i.e. इ, उ ऋ for their penultima and to ज्ञा, प्री and कॄ in the active voice ( कर्तृवाचेर ). Thus क्षिपः (a thrower) also क्षेपक (ण्वुल्) and क्षेप्ता ( तृच् ) by 'वाऽसरूपविधिः' ( See ante ). ( जानातीति ) ज्ञः—one who knows.

मित—। इगुपधेति। इक् उपधा यस्येति विग्रहः इकारोकारऋकारोपध इत्यर्थः। क्षिप इत्यतः कृश इत्यन्तं इगुपधोदाहरणम्। ज्ञ इति—जानातीति

कर्तरि कः। 'आतो लोप इटि च' (२३७२) इत्याल्लोपः कि परे। क्लिर इति—'ग्लस इत्वानो' (२७८०) इतीत्वम्। वासरूपविधिनेति—एतद 'वाऽसरूपोऽस्त्रियाम्' (२८३०) इत्यत्रोक्तम्।

२८९८। आतश्चोपसर्गे ॥ ३।१।१३६ ॥

टी—। कः स्यात्। 'श्याद्व्यध—' (२९०२) इति णस्यापवादः। सुग्लः। प्रज्ञः।

The affix क is added to a root ending in आ provided any उपसर्ग precedes. The क supersedes the affix 'ण' provided for by the rule 'श्याद्व्यध—' (2809) which applies whether any उपसर्ग precedes the root or not. Thus, सुग्लः—सु + ग्लै + क = सुग्ला + अ by आदेचः—(2370) – सुग्ल अ by 'आतो लोपः'—(2372) = सुग्लः (one highly fatigued).

मित—। आत इति। अपेक्षितमात्रमाह—कः स्यादिति। आदन्ताद्धातोः कः स्यादुपसर्गे उपपदे इत्यर्थः। णस्यापवाद इति—तस्य उपसर्गे सत्यसति वा प्रयोगादिति भावः। सुग्ल इति—सुष्ठु ग्लायति इति सु + ग्लै + क इति स्थिते 'आदेच उपदेशेऽशिति' (२३७०) इति आत्वे "आतो लोपः—"(२३७२) इत्यालोपे। प्रज्ञ इति प्रकर्षेण जानातीति प्राग्वत्।

२८९९। पाघ्राध्माधेट्दृशः शः ॥ ३।१।१३७॥

टी—। पिबतीति पिबः। जिघ्रः। धमः। धयो कन्या। धेटष्टित्वात् 'स्तनन्धयो' इति खशीव ङीप् प्राप्तः। 'खशोऽन्यत्र नेष्यते' इति हरदत्तः। पश्यतीति पश्यः। 'घ्रः संज्ञायां न' (वार्त्तिक)। '—व्याघ्रादिभिः—' (७२५) इति निर्देशात्।

The affix श is attached (in the active voice) after the root

पा, घ्रा, ध्मा, धेट् and दृश् । पिबः—a drinker (पा is changed into पिब by 'पाघ्राध्मास्था—' (2360) as the affix श after it is शित् or शeliding). Similarly जिघ्र etc. धयः—by अयादेशः । धया—here टाप् ( आ ) comes in by 'अजाद्यतष्टाप्' (454) as धय is अदन्त । But as the term 'स्तनन्धयी' (an infant suckling girl) which though derived with खश्, a शित्—affix yet gets ङीप् due to टित्त्व of the root धेट् by the rule 'टिड्ढाणञ—'(470) so here (in the case of धयः) also the same ( ङीप् ) was due. This ( ङीप् ), however, is barred on the authority of Haradatta who opines that ङीप् is not intended after the word धय derived except with खश् । 'घ्रः संज्ञायाम् न'—varttika i.e. the affix श should not be attached after the root घ्रा when the derivative thereof indicates a designation or संज्ञा. Thus we have व्याघ्रः with क by 'आतश्चोपसर्गे' (and not व्याजिघ्रः ) with श. This is confirmed by Panini's own behaviour in the rule 'उपमितं व्याघ्रादिभिः—' (735).

मित—। पाघ्रेति। एभ्यः शः स्यात् कर्तरि। उपसर्गे उपपदे इति तु नेष्यते इति बहवः। पिबः, जिघ्रः इति। 'पाघ्रा—' (२३६०) इति शप्रत्ययस्य शित्वात् पिबाद्यादेशः। धय इति—अयादेश। धयेति—धय इत्यथ अदन्तत्वात् 'अजाद्यतष्टाप्' (४५४) इति आप्। ननु स्तनं धयति पिबतीति खशि स्तनन्धयः शिशुः। ततः स्त्रियाम् ङीपि स्तनन्धयीति भवति। तत्र हेतुर्धेटष्टित्त्वमेव। एवमिहापि ङीवेव भवेन्न टाबिति चेत्तत्राह—धेटष्टित्वादिति। परिहरतिच—खशोऽन्यत्रेति-हरदत्तानुरोधेन खशोऽन्यत्र शित्प्रत्ययविषये धेटष्टित्त्वमादाय 'टिड्ढाणञ—' (३७०) इत्यादिना ङीप् न विधेय इति भावः। नागेशस्तु नेदमनुमन्यते। स हि स्तनन्धयीत्यस्य प्रामाणिकत्वं चिन्त्यमित्याख्याय प्रामाणिकत्वेऽपि वा गौरादित्वं बोध्यम् इति निगमय्य धयेत्यत्रापि टित्त्वापत्तिं प्रकल्प्य-टिड्ढेति सूत्रे प्रत्यासत्त्या टिदाद्यवयवाकारस्यैव ग्रहणौचित्यमिति समाधाय हरदत्त-मतं प्रत्याचख्यौ। 'घ्रः—' वार्तिकमिदम्। जिघ्रतेः संज्ञायां गम्यायां शप्रत्ययो

नेत्यर्थः। तत्र विनिगमनामाह—'व्याघ्रादिभि' रिति। अन्यथा हि "उपमितं व्याघ्रा-दिभि"रित्यवक्ष्यदिति भावः।

२९०० । अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसाति-साहिभ्यश्च॥ ३।१।१३८ ॥

दी—। शः स्यात्। लिम्पः। विन्दः। धारयः। पारयः। वेदयः। उद्वेजयः। चेतयः। सातिः सुखार्थः। सौत्रो हेतु-मण्यन्तः (? धातुः)। सातयः। वाऽसरूपन्यायेन क्विपि (तु) सात् परमात्मा। सात्वन्तो भक्ताः। षह मर्षने चुरादिः। हेतुमण्यन्तो वा। साहयः। अनुपसर्गात् किम्? प्रलिपः। 'नौ लिम्पेर्वाच्यः' (वार्त्तिक)—निलिम्पा देवाः। 'गवादिषु विदेः संज्ञायाम्' (वार्त्तिक)। गोविन्दः। अरविन्दम्।

The affix श is attached after लिम्प, विन्द (लिप उपदाहे and विद्लाभे—तुदादि), धारि (धृञ् or धृङ् + णिच्), पारि (पृ + णिच्) and वेदि (विद + णिच्) उद्वेजि (उद + एजृ कम्पने + णिच्), चेति (चिती संज्ञाने + णिच्) साति (सौत्रो धातुः) and साहि षहमर्षणे णिच्, provided no उपसर्ग precedes them. लिप् and विद् being तुदादि gets नुम् by 'शे मुचादीनाम्' (2542), धृञ् धारणे is भ्वादि and धृङ् अवस्थाने is तुदादि। धारयः—धृ + णिच् + शः then गुण, अयादेश, similarly पारयः, वेदयः (विद वेदनाख्यानादिषु—चुरादि) उद्वेजयः and चेतयः। विन्द means a receiver or acquirer and उद्वेजय means that which causes trembling, hence an intimidator or disturber. Cp. आर्चीद्द विजातीन् परमार्थविन्दान् उद्वेजयान् भूतगणान् न्यषेधीत् in भट्टि—

By 'अनुपसर्गात्' in the rule it is intended that the roots लिम्प, विन्द etc. (nine only) will not be allowed to have the affix श after

them when any उपसर्ग precedes them, save and except the उपसर्ग if any, which has been prefixed already to any of them by the सूत्रकार himself. Thus although उदेजि has got the उपसर्ग उद् prefixed to it yet it will have श after it. Consequently उदेजय is obtained. But समुदेजय: or समेजय: etc. should be counted as wrong, the intention of the सूत्रकार being if any उपसर्ग has to be prefixed to एज् followed by श the only उपसर्ग allowed is उद् and none else. The root साति meaning to please (delight) gets णिच् by the rule 'हेतुमति च' (हेतुमण्यान्त) and is to be met with in this सूत्र only (सौत्र: धातु: ). Thus सातयति सुखयतीति—सातय: (as before). By force of बाहुलकविधि (which see ante), we may add after it in the same sense क्विप् also which gives सात् (णिलोप) meaning the 'supreme soul'—Cp—'एष ह्येवानन्दयति' in उपनिषद्—whence we get सात्वन्त:—the devotees of the supreme Being or सात्. The procedure is thus—सात् + मतुप—म being व by 'मादुपधायाश्च मतोर्वोऽयवादिभ्य:' and सात् being भसंज्ञक and not a पद by 'तसौ मत्वर्थे' (1896) there is no जश्त्व or दकार for तकार by 'झलां जशः—'(52) and we get सात्वत् like मरुत्वत्। साह्य:—(an assistant) as before. प्रक्षिप:—this is derived with क attached to it by 'इगुपधज्ञा—and not by श। 'गौ लिम्प:—' varttika. It has to be stated that लिम्पि (लिप् with नुम् and इक् by 'इक्श्तिपौ धातुनिर्देशे') gets श when the उपसर्ग 'नि' only precedes. Thus निलिम्प: a god (who does not suffer). गवादिषु—'Another varttika. विन्दि—विद् with नुम् and इक्—gets श when गो etc precede making the derivative a term of designation (संज्ञावाचक). Thus गोविन्द:—who receives cows (Sreekrishna). अरविन्दम् (That

which has got leaves resembling the spokes of a wheel i.e lotus). भाष्य reads अरविन्दः (masc)—says Nagesha.

मित—। अनुपसर्गादिति उपसर्गरहितेभ्यः एभ्यो नवेभ्यः शः स्यात् कर्त्तरीत्यर्थः। अत्र लिम्पविन्दयोः नुमा निर्देशात् 'लिप् उपदाहे', 'विद्लृ लाभे' इति तौदादिकयोरेव ग्रहणम्। अतएव शे परे 'शे मुचादीनाम्' (२५४२) इत्युभयत्र नुम्। धारि, पारि, वेदि, उदेजि इत्यादीनां सतनां ण्यन्तेन निर्देशाण्ण्यन्तेभ्य एव एभ्यः शः। अत्र धारीति 'धृञ् धारणे'—इति भौवादिकस्य 'धृङ् अवस्थाने' इति तौदादिकस्य चोभयोरेव ग्रहणम्। पृ 'पालनपूरणयो'रिति धातुः। तस्माद्धेतुमण्ण्यन्ताच्छः। वेदीति—विदिः वेदनाद्यर्थकात् चौरादिकात् स्वार्थण्यन्ताच्छः। उदेजीति—उदुपसर्ग-पूर्वादेजतेर्हेतुमण्ण्यन्ताच्छः। न चैवम् 'अनुपसर्गात्' इति विशेषणं न सङ्गच्छत इति वाच्यम्। एजतेरुपसर्गपूर्वस्य चेद भवति तर्हि उत्पूर्वादेव नान्यपूर्वादिति निर्गलितार्थत्वात्। एवञ्च नियमार्थमिदम्—तथा च उदेजय इतिवत् समुदेजयः समेज इत्यादि न भवती'ति दिक्। चेतीति—'चिती संज्ञाने'—भ्वादिः। तस्माद्धेतु-मण्ण्यन्ताच्छः। अन्यौ स्पष्टौ मूले। धारय इति—शपरे गुणायादेशौ। धारकोऽवस्थापको चेत्यर्थः। एवमन्यत्र प्रक्रिया बोद्धव्या। लिम्प इत्युपतापवान्। विन्द इति लब्धा। एवमन्यत्र कर्त्तर्यर्थनिर्देशः। उदेजय उद्वेजक इत्यर्थः—'उदेजयान् भूतगणान् न्यषेधीत्' इति भट्टिः। सौत्र इति—अयमिहैव सूत्रे लभ्यते न तु धातुपाठे इति भावः। सातयति सुखयतीति सातयः सुखप्रद इत्यर्थः। बाऽसरूप न्यायनेति—एवं पूर्वत्रापि लिम्पादिस्थले यथायथं ण्वुलादेः समावेशो बोध्यः। सादिति—सातयति सुखयतीति साति+क्विप्=सात्—'णेरनिटि' (२३१३) इति णिलोपः। परमात्मा इत्यर्थः। "रसो वै सः' 'एष ह्येवानन्दयती'ति एवमादिभिः श्रुतिनिर्देशैः तथैवावगतेः। सात्वन्तो भक्ता इति—सात् परमात्मा अस्ति एषां भक्तित्वेनेति मतुप्। 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' (१८९७) इति मस्य वः। 'तसौ मत्वर्थे' (१८९६) इति सादित्यस्य भत्वात् पदत्वाभावात् 'झलां जशो—' (५२) इति जश्त्वेन तकारस्य दकारो न। हेतुमण्ण्यन्तो वेति—षह्लसर्पणे इति भौवादिकस्य ग्रहणे हेतुमण्ण्यन्तोऽयं साहिः। चौरादिकस्य ग्रहणे तु स्वार्थण्यन्त इत्यर्थः। प्रलिप इति—अत्र प्रोपसर्गेण

शप्रत्ययस्य बाधात् 'इगुपधज्ञा—'( २८९७ ) इति कप्रत्ययः। अतएव नुम् न। गौ लिम्पेरिति—वार्तिकमिदम्। गौ उपसर्गे उपपदे लिम्पेः शो वाच्य इत्यर्थः। तदाह निलिम्पा इति—निर्जरा देवा इत्यर्थः। 'गवादिषु—' इति—वार्त्तिकान्तरम्। गवादिषु उपपदेषु विन्देः शः स्यात्। संज्ञायां गम्यायामिति तदर्थः। गोविन्दः इति—गाः सौरभेयीः विन्दति लभते इति गोविन्दः— गोपालः श्रीकृष्ण इत्यर्थः। यद्वा गां वाचं वा पृथ्वीमित्यादिरर्थः। तत्रापि स एव लक्ष्यः। गोशब्दस्य बह्वर्थवाचकत्वं यथा—'स्वर्गेषुपशुवाग्वज्रनेत्रघृणिभूजले। लक्ष्यदृष्ट्यां स्त्रियां पुंसि गौः—' इत्यमरः। गवादिष्वित्यादिपदग्राह्यमुदाहृत्य दर्शयति— अरविन्दमिति। चक्रस्य नाभिनेम्योरन्तःस्थितानि काष्ठानि अराः ( आरा इति भाषायाम् ) इत्युच्यन्ते। तादृशकाष्ठद्वयान्तरालगतावकाशवद् दृश्यमानत्वाद् दलानि अपि अरा इत्युपचारः। तान् अरान् विन्दति लभते इति अरविन्दम्, पद्ममित्यर्थः। कर्मण्यणो बाधनार्थमिदमिति विभावनीयम्। अरविन्दः इति भाष्यमितिनागेशः।

२९०१। ददातिदधात्योर्विभाषा ॥ ३।१।१३९ ॥

दौ—। शः स्यात्। ददः। दधः। पक्षे वक्ष्यमाणोणः। अनुपसर्गादित्येव। प्रदः। प्रधः।

The affix क is optionally attached to दा and धा provided no उपसर्ग precedes.—Thus they will also have the affix ण by 'श्याद्व्यध—' (2909) below. दा + श = दा + शप् + श by 'कर्तरि शप्' (2167) = दा + श्लु + श by 'जुहोत्यादिभ्यः श्लुः' (2489) = दादा + श by 'श्लौ' (2490) then अभ्यासह्रस्व by 'ह्रस्वः' (2180) and then आलोप by 'आतो लोपः—' = दद + अ = ददः. But by ण we have दायः by 'आतो युक्—' (2361). Similarly दधः and धायः। प्रदः, प्रधः—derived with क by 'आतश्चोपसर्गे' (2898).

मित—। ददातिदधात्योरिति। अनुपसर्गयोरेतयोर्धात्वोः इत्यर्थः। दद इति। दा + श इति स्थिते कर्तरिशबिति शप्। जुहोत्यादिभ्यः श्लुः ( २४८९ ) इति शपः

श्रुः। 'श्री' इति धातोर्लिङ्गलम्। 'ह्रस्वः' (२१८०) इत्यभ्यासह्रस्वः। 'सार्वधातुकमपित्' इति श्नस्यापित्त्वेन ङित्त्वात् 'आतो लोपः—'—(२३७२) इत्याल्लोपः। पक्षे 'श्याद्व्यध—' [२९०३] इति णप्रत्यये परे 'आतोयुक्—' [२३६७] इति युगागमेन—दाय इति। एवम् दधः—धाय: इति। प्रदः प्रध इति आतश्चोपसर्गे [२८९८] इति कप्रत्ययः।

## २९०२। ज्वलितिकसन्तेभ्यो णः ॥ ३।१।१४० ॥

**दो—। इतिशब्द आद्यर्थः। ज्वलादिभ्यः कसन्तेभ्यो वा णः स्यात्। पच्ऽच्। ज्वालः-ज्वलः। चालः-चलः। अनुपसर्गादित्येव—उऽज्वलः। 'तनोतेरुपसंख्यानम्' (वार्त्तिक)। इहानुपसर्गादिति विभाषेति च न सम्बध्यते। अवतनोतीत्यवतानः।**

The affix ण is attached optionally after roots beginning with ज्वल् and ending in कस् i.e. after ज्वलादि roots (fifty-seven) enumerated under भ्वादि between ज्वल् (804) and कस् (869)—provided no उपसर्ग precedes such roots. वा in the rule indicates the application of अच् (due to पचादित्व) as also क (by इगुपध—') to such of them as are इगुपध e. g. पुल, कुल etc. ज्वालः (that which burns)—with ण and वृद्धि by 'अत उपधायाः' (2282) and ज्वलः (that which burns) with अच्। 'तनोतेः—' Varttika.—Here the terms or carrying words such as अनुपसर्गात् and विभाषा (from 2900 and 2931 respectively) has no bearing at all. Thus the Varttika means 'तन् receives the affix ण whenever any उपसर्ग precedes' Thus अवतानः, similarly वितानः or वितानम् (a canopy or an expansion).

मित—। ज्वलितीति। इतिशब्द आद्यर्थः। निपातानामनेकार्थत्वात्। ज्वलादिभ्यः कसन्तेभ्य इति। ज्वल दीप्तौ (८०४) इत्यारभ्य कस गतौ (८६०) इत्य-

नेभ्यो भ्वादिगतेभ्य इत्यर्थः। 'अनुपसर्गाल्लिम्प—' (३।१।१३८) इत्यतोऽनुपसर्गादिति । 'ददाति—' (३।१।१३९) इत्यतो विभाषेति चानुवर्तते। तदाह—वेति अनुपसर्गादित्येवेति च। पचेऽजिति—पचादिलक्षण इत्यर्थः। उपलक्षणमिदम् तत: 'इगुपध—' (२८९७) इति च। ज्वाल:—ज्वल इति। णप्रत्ययान्तस्य 'अत उपधायाः' (२२८२) इति वृद्धिः। उज्ज्वल इति—अत्राच्प्रत्यय एव। तनोतेरिति—वार्तिकम्। दृष्टेति—भाष्ये 'अवतान' इत्येव दर्शनादिति भावः। एवं सन्तानवितानादयोऽपि घप्रत्ययान्ता बोध्याः।

२९०३। श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च ॥ ३।१।१४१ ॥

टी—। श्यैङ्प्रभृतिभ्यो नित्यं णः स्यात्। श्यैङोऽवस्यतेश्चादन्तात् सिद्धे पृथग्ग्रहणमुपसर्गे कं बाधितुम्। अवश्यायः। प्रतिश्यायः। आत्—दायः। धायः। व्याधः। 'स्रु गतौ' आङ्पूर्वः संपूर्वश्च—आस्रावः। संस्रावः। अत्यायः। अवसायः। अवहारः। लेहः। श्लेषः। श्वासः।

श्या, आत्, व्यध, आस्रु, संस्रु, अतीण् (अति+इण्), अव+सा, अवहृ, लिह, श्लिष and श्वस these twelve roots persistently (नित्य) take ण after them. Of these श्या stands for श्यैङ्गतौ (973—भ्वादि) which has become श्या by 'आदेच:—' (2370) in view of the affix ण which is अशित् or not श-eliding, आत् is technical for दा and धा etc which are आदन्त, अव-सा stands for अव+सो (षोऽन्तकर्मणि) which also is made आकारान्त in view of ण by 'आदेच:—'। श्यैङोऽवस्यतेश्च etc. The drift is this—श्यैङ् and अव-सो first become श्या and अव-सा by 'आदेच:—' when any अशित् affix such as ण, क etc follows. As such the technical term 'आत्' in the rule would not only

include दा and धा but these also. Then why say 'श्या' + आत् and अवसा, and not आत् only? To answer this—the author (Bhattoji) says that there was no doubt that आत् would include श्या as also अव-सा but it would have been wrong to attach ण after them in case an उपसर्ग precedes them. For in that case the affix क by 'आतश्चोपसर्गे' (2898) would set aside ण and consequently we could not get प्रतिश्यायः, अवसायः etc. Because the affix ण is a general injunction ( उत्सर्गविधि ) whereas the affix क is a special one ( विशेषविधि ). Thus श्या and अवसा deserve particular mention that they may have ण after them when any उपसर्ग precedes barring 'क' due by 'आतः—'(2898). अवश्यायः—frost or pride—अव + श्यैङ् + ण = अवश्या + ण = अवश्या युक् ण = अवश्यायः। प्रतिश्यायः a kind of nasal disease. आत्—It here stands for आदन्त roots दा and धा। व्याधः—a hunter—व्यध + ण वृद्धि by 'अत उपधायाः' (2212). आस्रावः संस्रावः dropping or flowing. अत्यायः passing away—वृद्धि by 'अचो ञ्णिति' (257) then 'एचोऽयवायावः' (71). अवसायः अवहारः destruction conclusion also. श्लेषः—here गुण by 'पुगन्तलघूपधस्य' (2189). Note that without the mention ( of लिह् and श्लिष् ) in this rule they would have क by 'इगुपध—' (2703), श्वासः—वृद्धिः as before।

मित—। श्याद्व्यधेति—। श्या आत्, व्यध, आस्रु, संस्रु, अतीण् ( अति + इण् ) अव-सा, अवहृ, लिह श्लिष, श्वस् एषां कृत-समाहारद्वन्द्वानां पञ्चम्येकवचनम्। तत्र श्येति 'श्यैङ् गतौ' ( भ्वादि—९६२ ) इत्यस्य विधित्सितणप्रत्ययस्य अचिन्त्यत्वात् 'आदेचः—' ( २३७० ) इति कृतात्वेन निर्देशः। आदिति—अत्र आदन्तयोर्डुदाञ् डुधाञोर्ग्रहणम्। अवसेति—अवपूर्वस्य षोऽन्तकर्मणीत्यस्य प्राग्वत् कृतात्वेन निर्देशः। अन्यद् यथाश्रुतं कर्माहम्। पूर्वसूत्रात्णः इति वर्तते। विभाषित्वदुपसर्गादिति च निहतम्। उत्तरसूत्रे पुनरनुपसर्गग्रहणात्। तदाह—श्यैङ् इति

ननु श्या अवसा इत्यनयोः कृतात्वेन निर्देशात् आदित्येवोच्यताम् इति चेदत्राह—श्यैङोऽवस्यतेश्चेति। अयं भावः—'ण' इति सामान्येन विहितः। 'आतश्चोपसर्गे' इति 'क'प्रत्ययस्तु विशेषविहितः। ततपरम् आदित्युक्तेः कप्रत्ययेन णस्य बाधः स्यात्। पृथग्ग्रहणे तु न तादृशावकाश इति आदित्येतावता निर्देशः कृतः। अवश्याय इति—'आदेच:—(२३७०) इत्यात्वे कृते 'आतो युक्' (२३६१) इति युक्। एवं प्रतिश्यायः सिध्यति। 'अवश्यायो हिमे गर्वे' इति विश्वः। 'प्रतिश्यायस्तु पीनसः' इत्यमरः। आदन्तौ उदाहरति आदिति—प्रागवत् युक्। व्याध इति—णे परे 'अतः उपधायाः' (२२८२) इति उपधावृद्धिः। आस्राव चति—'अचोञ्णिति' (२५४) इति वृद्धिः। 'एचोऽयावायाव:' (६१) इत्यावादेशः। आस्रु, संस्रु इति तालव्यपाठकल्पनन्त्वनाकरम्। आस्रावसंस्रावेत्यनयोः क्वाप्यश्रवणादित्यभियुक्ताः। युक्तश्चैतत्। अतः "भिषजामनास्रवः" इति कालिदासः, तथाचामरः 'वचने स्थित आस्रवः'। 'अनास्रवा वः किमहं कदापिवक्तुं विशेषात् परमस्मिशेषः'—इति श्रीहर्षश्च। किञ्च, यद्यत्र शृणोतिग्रहणम्, आस्रव-इत्यमराद्युक्तं प्रामाणिकपरिगृहीतम् कथं स्यात् तदा णप्रत्ययेन आस्राव स्यादित्यास्तां तावत्। अत्याय इति—'अचो ञ्णिति' (२५४) इति वृद्धौ सत्यामायादेशः। अवसाय—युक्। अवहारः—वृद्धिः। लेहः श्लेष इति। 'पुगन्तलघूपधस्य च' (२१८९) इति लघूपधगुणः। श्वासः—वृद्धिरुपधायाः।

## २८०४। दुन्योरनुपसर्गे ॥ ३।१।१४२ ॥

**दी—। णः स्यात्। दुनोतीति दावः। नीसाहचर्यात् सानुबन्धकात् टुनोतेरेव णः। दवतेस्तु पचाद्यच्। दवः। नयतीति नायः। उपसर्गे तु प्रदवः। प्रणयः।**

Roots दु and नी take ण when no उपसर्ग precedes. Thus दावः (a forest or forest-fire) and नायः (a leader)—वृद्धि in both the cases and आव् and आय् respectively. There are two roots known as 'दु' one टुदु उपतापे' read in स्वादि and other दु गतौ' read

in भ्वादि. The former of them takes ण as it is mentioned with नी which is read with the indicatory ञ् ( णीञ्प्रापणे भ्वादि ) whereas the latter ( द्रु गतौ ) takes अच by 'नन्दिग्रहिपचादिभ्यः—' (2877). दव is a synonym of दाव। प्रदवः, प्रणय are derived with अच्। णत्व due to प्र in प्रणय।

मित—। दुन्योरिति। दुनोतेर्णयतेश्च णः स्यादुपसर्गे असति। नीसाहचर्यादिति—णीञ् प्रापणे इति यदैव सानुबन्धकः 'अतस्तत्साहचर्यात् टु दु उपतापे इति स्वादेरेव ण प्रत्ययः। ( द्रु ) गतौ इति भ्वादेरच् प्रत्ययः। 'दवदावौ वनारण्यवह्नी' इत्यमरः। उपसर्गेत्विति—अजित्यर्थः।

२८०५। विभाषा ग्रहः ॥३।१।१४३॥

टी—। णो वा। पचेऽच्। व्यवस्थितविभाषेयम्। तेन जलचरे ग्राहः। ज्योतिषि ग्रहः। 'भवतेश्च' इति काशिका। भवो देव संसारश्च। भावाः पदार्थाः। भाष्यमते तु प्राप्त्यर्थाच्चु-रादिण्यन्तादच्। भावः।

The root ग्रह् takes ण optionally and this option is an established one. Thus we should say ग्राहः ( ग्रह् + ण ) to mean an acquatic animal and ग्रहः ( ग्रह् + अच् ) to mean a planet, but not vice-versa : 'भवतेश्च'—a varttika, accepted by Kashika meaning thereby that भूः also takes ण optionally. Thus भवः (Lord Shiva) and भावः ( a thing ). According to भाष्य, however, भाव is derived with अच् added to 'भू प्राप्तौ'—चुरादि after it has got णिच् by स्वार्थे and भवः with अच् पचादि etc—see Tika.

मित—। विभाषेति। स्पष्टम्। व्यवस्थितविभाषेति—अतएव जलचरे ग्रहः जोतिषि ग्राह इति नेत्यर्थः। भवतेश्चेति—वार्त्तिकमिदम्। अत्रापि णो वेत्यर्थः। काशिकेति—काशिकाकृद्धृतमेतद भाष्ये तु न दृश्यते इति भावः। भवो देव

इति—महादेव इत्यर्थः। 'व्योमकेशो भवो भीमः'—इत्यमरात्। नन्वेवं भाषामते भावशब्दो न सिध्यतीति चेदत्राह—भाष्यमते त्विति। भू प्राप्तौ इति चुरादौ पाठः। तत्र स्वार्थणिचि जाते भावयति प्राप्नोति स्वस्वविषयमिति अच् प्रत्यये भावः। भव इति कर्त्तरि पचाद्यचि, वा 'ऋदोरप्' [ ३१३२ ] इति वाहुलकादपा, ( अथवा माधवमते घप्रत्ययेन ) सिद्धमिति भावः।

२८०६। गेहे कः॥ ३।१।१४४॥

दी—। गेहे कर्तरि ग्रहेः कः स्यात्। गृह्णाति धान्यादिकमिति गृहम्। तात्स्थ्यात् गृहा दाराः।

The root ग्रह takes क in the active voice when गेह or house is meant as the subject of the derivative. Thus गृह्णाति etc—here गृह्णाति agrees with the nominative यत्, which again has reference to house ( गेह ). As for गृहाः which (when plural) means a wife it may be defended by the maxim 'तात्स्थ्यात् ताच्छब्द्यम्'—or the application of the container for the thing contained. Note that the word गृह when plural means either a house and a wife cp.—'गृहाः पुंसि च भूम्न्येव' and 'दारेष्वपि गृहाः'—Amara.

मित—। गेह इति। 'गेहे' इति प्रत्ययार्थस्य कर्तृविशेषणं न तूपपदम्। तदाह—गेहे कर्तरीति—गेहशब्दश्चेत् कर्तृत्वेनान्वीयत इत्यर्थः। तदाह—गृह्णाति धन्यादिकमिति, यत्तदिति शेषः। गृहमिति—कप्रत्ययस्य कित्त्वात् 'ग्रहिज्या—' ( २४१२ ) इति सम्प्रसारणम्। नन्वेवं 'दारेष्वपि गृहाः' इत्यमरोक्तिः कथं सङ्गच्छताम् इत्याशङ्क्य आह—तात्स्थ्यादिति। ताच्छब्द्यमिति शेषः। गृहस्थितत्वाद् गृहा इति व्यपदेश इत्यर्थः। अत्र पुंलिङ्गत्वे वहुष्वेव—'गृहाः पुंसि च भूम्न्येव' इत्यमरोक्तिरेव प्रमाणमित्यर्थः गृहशब्दस्य पुंस्त्वमात्रे वहुवचनमिति वोद्धव्यम्। तथाच महाकविप्रयोगाः—'मनीषिताः सन्ति गृहेषु देवताः'—(कुमारसम्भवम् ), 'गृहानुपैतुम्—' ( माघः )।

२९०७। शिल्पिनि ष्वुन् ॥३।१।१४५॥

टी—। क्रियाकौशलं शिल्पम्। तद्वत्कर्तरि ष्वुन् स्यात्। 'नृतिखनिरञ्जिभ्य एव' (वार्त्तिक)। नर्तकः—नर्तकी। खनकः—खनकी। 'असि अकेऽने च रञ्जेर्न-लोपो वाच्यः' (वार्तिक)। रजकः—रजकी। भाष्यमते तु नृतिखनिभ्यामेव ष्वुन्। रञ्जेस्तु 'क्वुन् शिल्पिसंज्ञयोः' (उनादि—१८१) इतिक्वुन् टाप्—रजिका। पंयोगे तु रजकी।

Dexterity or skill in something in called art or शिल्प. Any root may take the affix ष्वुन् in the active voice where the derivative is identified with a subj. or person having such art in himself. 'नृतिखनि—' varttika. This varttika narrows the scope of the rule as the roots नृत्, खन् and रञ्ज् only are said to have ष्वुन्। नृत्+ष्वुन्=नर्तकः by 'युवोरनाकौ' (1247) and 'पुगन्त—' (2189). नर्तकी by the rule 'षिद्गौरादिभ्यश्च' (498). 'असि अके—' varttika —meant for the elision of न of रजः (असि), रजक (अक) and रजन (अन); this varttika defends the terms in the varttika—'रजकरजनरजःसूपसंख्यानम्' (under 'दंशसञ्ज—' in भाष्य)। भाषामते तु etc—easy. रजिका is any woman skilled in dyeing while रजकी is the wife of a रजक (washerman).

मित—। शिल्पिनीति। शिल्पवतीत्यर्थः। तदाह—तद्वत् कर्तरीति। शिल्पवांश्चेत् कर्तेति भावः। एवञ्च शिल्पवत् कर्तैव प्रत्ययार्थं एव न तूपपदमिति प्रागेवद्बोद्धाम्। सर्वेभ्योधातुभ्योऽव ष्वुन् प्रत्यये प्राप्ते आह—'नृति—' इति। वार्तिकमिदम्। नर्तक इति—'युवोरनाकौ' (१२४७) इत्यकादेशः। 'पुगन्त—' (२१८९) इति गुणः। नर्तकीति—ष्वुन् प्रत्ययस्य षित्वात् 'षिद्गौरादिभ्यश्च'

( ४९८ ) इति ङीष्। 'वृति—' इति वार्तिके एवकारादे वेर्ञौ णे परे व्राग्र इति सिद्ध इत्याह:। 'असि अकी—' वार्तिकमिदम्। 'दंशसञ्जस्वञ्जां शपि' इति सूत्रे 'रजकरजनरजस्सूपसङ्ख्यानम्' इति वार्तिकबलात् अस्यादौ नलोपस्य ज्ञापकसिद्धत्वेऽपि प्रपञ्चार्थमिदमिति बोध्यम्। असि रजस्। अकी रजकः। अने—रजनः। भाष्यमतेत्विति—स्पष्टम्। रजिकेति—'प्रत्ययस्थात् कात् पूर्वस्य—' इत्यत इत्। नन्वेवं भाष्यमते रजकीति दुर्लभमित्याशङ्क्य आह—पुंयोगे त्विति।

## २९०८। गस्थकन् ॥३।१।१४६॥

### दी—। गायतेस्थकन् स्यात् शिल्पिनि कर्तरि। गायकः।

The root गै takes थकन् in the active voice when the derivative denotes an artist. गै + थकन् = गायकः by 'आदेचः—' ( 2370 ).

मित—। ग इति—'आदेचः—' ( २३७० ) इति कृतात्त्वस्य गैधातोः पञ्चम्येकवचनम्।

## २९०९। ण्युट् च ॥३।१।१४७॥

### दी—। गायनः। टित्त्वाद् गायनी।

Read thus—'गस्थकन् ण्युट् च' for both थकन् and ण्युट् ( अन ) are added to गै in the sense as above viz 'शिल्पिनि'. The seperation of ण्युट् from थकन् is to carry the same into the subsequent rule. गायनः—आत्व + ण्युट्। टित्त्वात् etc i. e. by 'टिड्ढाणञ्—' ( 770 ).

मित। ण्युट् चेति। गस्थकन ण्युट् शिल्पिनि कर्तरीत्यर्थः। योगविभाग उत्तरसूत्रार्थः। गायन इति—आत्व युगागमः टित्त्वादिति—'टिड्ढाणञ्' ( ४७० ) इत्यनेनेत्यर्थः।

## २९१०। हश्च व्रीहिकालयोः ॥ ३।१।१४८ ॥

### दी—। हाको हाङश्च ण्युट् स्यात् व्रीहौ काले च कर्तरि।

जहात्युदकमिति हायनो व्रीहिः। जहाति भावानिति हायनो वर्षम्। जिहीते प्राप्नोतीति वा।

The word 'हः' in the rule is in the ablative singular of 'हा' which is elliptical for 'ओहाक् त्यागे' and 'ओहाङ् गतौ' both read in जुहोत्यादि class. These two roots take ण्युट् in the active voice when व्रीहि ( paddy ) and काल ( time ) are indicated by the darivations. Thus हायनः ( by ण्युट् ) may mean paddy or a year.

मित—। हश्चेति। 'ओहाक् त्यागे' 'ओहाङ् गतौ' इत्यनयोः सामान्येन ग्राहकः—'हा' इति। तस्य पञ्चम्येकवचनम् इति। व्रीहिकालयोरिति प्राग्वत् प्रत्ययार्थत्वं न तूपपदार्थत्वमिति विभाव्यम्। तदाह—हायनो हायन इत्यादि। जहात्युदकमिति। व्रीहीणामुदकमुज्झित्वावाहनादिति भावः। जहाति—भावमिति भावाः पदार्थाः। जिहीते इति। जिहीते अर्थान् प्राप्नोति भावान् इति वा वर्षमित्यर्थः।

२८११। प्रुसृल्वः समभिहारे वुन् ॥३।१।१४९॥

दी—। समभिहारग्रहणेन साधुकारित्वं लक्ष्यते। प्रवकः। सरकः। लवकः।

Here समभिहार denotes 'doing well'. Thus प्रु सृ and लू take वुन् ( अक ) in the active voice when excellence is signified by the derivative.

मित—। प्रुसृल्व इति। प्रु, सृ, लू एषां समाहारद्वन्द्वात् पञ्चमीस्थाने व्यत्ययेन यण्। 'ओः सुपि' इति यण्। साधुकारित्वं सुष्ठुकारित्वमित्यर्थः। तथाच यो बहुशोऽपि दुष्टं करोति तत्र न, किन्तु यः सकृदपि सुष्ठु करोति तत्रैवेति फलितम्। एवञ्च 'समभिहार' इत्यनेन बहुशोऽनुष्ठानात् क्रियाकौशलमेव लक्ष्यमिति ध्येयम्।

२८१२। आशिषि च ॥३।१।१५०॥

( दी—। ) आशीर्विषयार्थवृत्तेर्वुन् स्यात् कर्तरि। जीवतात्-

जीवकः। नन्दतात्—नन्दकः। आशीः प्रयोक्तुधर्मः। आशासितुः पित्रादेरियमुक्तिः।

Any root expressing the sense of benediction or welfare takes वुन् ( अक् ) in the active voice. Thus जीव् + वुन् = जीवकः ( One whose longevity is desired). The term 'जीवतात्' does not serve as an alternative of जीवक but expresses the sense only in which जीवक has been derived. Similarly नन्दतात्—नन्दकः। आशीः or benediction is an action on the part of him who makes use of such terms as जीवतात् etc. Thus जीवक etc are the assertions coming from such benefactors as parents etc. N. B.—Here ends. 1st. sec. of chap. third.

मित—। आशिषि वेति। वुन् स्यादिति शेषः। आशिषि द्योत्ये कर्त्तरि वुन् इत्यर्थः। तदाह—आशीर्विषयार्थवृत्तेरिति—धातोरिति शेषः। जीवकः इति। वुन् ( अक)। जीवकः कुतगत इत्युक्तो यस्य जीवनम् आशास्यते (अत एवाशीर्विषयकम्) स क्वा ति प्रश्नः। जीवतादिति नैतत् पचान्तरसूचकं किन्त्वर्थाविष्कारणपरमिति ज्ञेयम्। एवं नन्दतात्—नन्दक इति। प्रयोक्तुरिति—तथाविधशब्दप्रयोगकर्तुर्गुर्वादेरित्यर्थः। तदाह—आशासितुरिति। आशीःप्रयोक्तुरित्यर्थः। इति तृतीयाध्यायस्य प्रथमः पादः।

२८१३। कर्मण्यण्॥ ३।२।१॥

दी—। कर्मण्युपपदे धातोरण् प्रत्ययः स्यात्। उपपद—समासः। कुम्भं करोतीति कुम्भकारः। आदित्यं पश्यतीत्यादावनभिधानान्न॥ 'शीलिकामिभक्ष्याचारिभ्यो णः' ( वार्त्तिक ) अणोऽपवादार्थं वार्त्तिकम्। मांसशीला। मांसकामा। मांसभक्षा। कल्याणाचारा। 'ईक्षिक्षमिभ्यां च' ( वार्तिक )।

सुखप्रतीक्षा। बहुक्षमा। कथं तर्हि—गङ्गाधरभूधरादयः। कर्मणः शेषत्वविवक्षायां भविष्यति।

When a word in the accusative serves as an उपपद i. e. stands in close proximity with a root, the affix अण् is attached after the same (root) in the कर्तृवाच्य. The compound effected here (of the कर्मवाचक word with that derived with अण् e. g. of कुम्भ with कार) is called an उपपद समास। Thus कुम्भम् करोति etc. It is important here to note that 'उपपद' has been defined by the rule 'तत्रोपपदं सप्तमीस्थम्' (781) whence it is clear what appears in the locative (सप्तमीस्थम्) is an उपपद. Thus the term कुम्भ (a pot) which is in the accusative is an उपपद for the accusative (कर्मणि) is in the locative. Commentators, however, for convenience' sake generally say उप समीपे उच्चारितं पदम् उपपदम् (a term of contiguity is उपपद)। Thus the word कुम्भ being an उपपद and the word कार not being तिङन्त, the samasa is but an उपपदसमास which is obligatory (नित्य) by the rule 'उपपदमतिङ्' (782) or it is नित्य being अस्वपदविग्रह, cp—'इह कुम्भ अस् कार इत्यलौकिकं विग्रहवाक्यम्'—Bhattoji (782). In कार, क is lengthened by 'अचो ञ्णिति'। In आदित्यं पश्यति, ग्रामं गच्छति etc, however, there will not be अण् added to दृश्, गम् etc. so as to give आदित्यदर्शः, ग्रामगामः etc, on the ground that they are not in use. 'शीलिकामि—' (Varttika). This vartika which enjoins ण is to supersede अण् so that टाप् and not ङीप् may be added to them in fem. to form मांसशीला etc, ङीप् being due in cases where अण् is affixed by the rule 'टिड्ढाणञ्—' (470). मांसशीला—a woman habituated to take

meat ( मांसं शीलयतीति etc ). Here also in each case the samasa is उपपद। 'ईक्षिक्षमिभ्यां च'—Varttika directing ण here also. सुखप्रतीक्षा—a woman looking for ease and comfort. बहुक्षमा—one (woman that endures ( hardships ) to a great extent ; "नोदात्तोपदेशस्य—" इति न वृद्धिः। How then to defend expression like गङ्गाधर भूधर etc. where 'धर' is not derived with अण् which would give धार and yet the samasa is allowed ? well they will be defended on the assumption of शेषषष्ठीत्वविवक्षा of कर्म. The drift is this—षष्ठी is enjoined to denote any सम्बन्ध (relation) (षष्ठी शेषे) ; and although कर्मण् or the accusative has been dealt with in 'कर्मणि द्वितीया' yet it will be taken by the speaker as though and having been done—in the category of शेष ( cp—'उक्तादन्यः शेषः' ). Thus the samasa here is षष्ठीतत्पुरुष ( and not उपपद ) as—गङ्गायाः धरः ( Shiva ) when धर is derived with अच by 'पचाद्यच' under 'नन्दिग्रहि—' ( 2898 ).

मित—। कर्मणीति। 'गेहे कः' शिल्पिनि ष्वुन्' इत्यादौ तत्तदर्थस्य द्योत्यत्वे सति तत्तत्प्रत्ययो विहितः। न तु तस्य तस्योपपदत्वे इति तत्र तत्रैवोक्तम्। इह तु कर्मणीत्यनेन कर्मवाचके पदे उपपदे एवाण् प्रत्यय इति भेदः। उपपदं नाम उपोच्चारितं पदम्। तच्चेत्थं संज्ञितम्—'तत्रोपपदं सप्तमीस्थम्' ( ७८१ ) इति। सप्तमीस्थत्वञ्चात्र 'कर्मणि' इति। अतस्तत्र वाच्यत्वेन स्थितस्य कुम्भादिपदस्य यद्वाचकं सप्तम्यन्तं 'कर्मणी'त्यादि तत् पदम् उपपदमिति फलितम्। एवंविध उपपदे सति धातोरण्प्रत्यय इत्यर्थः। उपपदसमास इति—अतिङन्तः समास इति यावत्। स्पष्टञ्चेदम् 'उपपदमतिङ्' ( ७८२ ) इत्यत्र। कुम्भं करोतीति—अर्थाविष्करणमात्रमेतत् न तु समासवचनम्। "अणि कृते 'कर्तृकर्मणोः कृतिः' इति षष्ठ्यन्तस्य कुम्भशब्दस्य कारशब्देन समासः" इति तत्त्वबोधिनी। तदत्तत्त्वबोधनम्।

तथात्वे 'उपपदसमास' इति मूलोक्तमेव विरुध्यते। मूलोक्तउपपदसमासः—'तत्रोप-पदम्—' इति कर्मादिवाच्यकुम्भादि—वाचकपदस्योपपदसंज्ञायाम् 'उपपदमतिङ्' इति समास इति स्वोक्तमपि न सङ्गच्छते। किञ्च कुम्भकारादिपदानामपन्नानां षष्ठीसमाससिद्धत्वे स्वीकृते मूलकृतः—'कथं तर्हि गङ्गाधर—' इति समाधानमपि न घटते। इत्येवमादयो बहवो दोषाः संमुत्पद्यन्ते इत्युपेक्ष्यैवात्र तत्त्वबोधिनी। इदन्तु तत्त्वम्—कुम्भशब्दस्य कारशब्देन नित्यसमासः। अतएव 'उपपदमतिङ्' (७८२) इत्यत्र 'उपपदं सुबन्तं समर्थेन नित्यं समस्यते' इति दीक्षितोक्तिः सङ्गच्छते। षष्ठीसमासपक्षे विकल्पस्य दुर्वारत्वान्नित्यपदोपयोगो मास्यात्। ननु चोक्तं कुम्भम् अस् कार इति। कृद्योगा चात्र कर्मणि षष्ठीति चेत्। सत्यम्। परम् अलौकिकोऽयं विग्रहः। प्रयोगार्हस्य लौकिकविग्रहस्यात्र दुर्घटत्वात्। कुम्भं करोतीति तु व्याख्यानमात्रं न विग्रह इत्युक्तं प्राक्। तस्मात् 'कुम्भकार' इत्यत्र उपपदसमास एव न षष्ठीसमासः। ननु कुम्भकार इतिवत् आदित्यं पश्यतीत्या-दित्यदर्शः, हिमवन्तं शृणोतीति हिमवच्छ्रावः, ग्रामं गच्छतीति ग्रामगामः इत्यादयोऽपि कुतो नेत्यत आह—अनभिधानान्नेति। अप्रयुक्तत्वात् एते न कथिताः। एतत् सर्वं भाष्ये स्पष्टम्। 'शीलिकामि—' वार्त्तिकमिदम्। अणि प्राप्ते तन्निरासार्थ-मेतद्वार्त्तिकमित्याह—अणोऽपवादार्थम् इति। णे विहिते एव हि एभ्यः टाबुत्पद्यते अणि तु विहिते 'टिड्ढाणञ्—' (४७०) इत्यनेन ङीपि 'मांसशीली'—इत्याद्यनिष्टं लभ्येत। मांसशीलेति—सर्वत्र स्त्रियामुदाहरणमिति विभाव्यम्। शील समाधाविति धातुश्चुरादिः। मांसं शीलयति भक्ष्यत्वेनाभ्यस्यतीति विग्रहार्थः। एवं मांसं कामयते इत्यादि। 'ईक्षिक्षमिभ्याम्' इति—वार्त्तिकान्तरम्। अण्प्रत्यय इति शेषः। सुखं प्रतीक्षते, बहु क्षमते इत्यर्थः। कथं तर्हि इति—गङ्गाधरः, भूधरः इत्यादौ अण्प्रत्ययो नास्ति न वा षा अथच समासो भवति। तत् कथं तदिति प्रश्नः। समाधानमाह—कर्मणः शेषत्वविवक्षायामिति। अयं भावः—यद्यपि 'कर्मणि द्वितीया' इत्यत्र कर्म विहितः एवञ्च 'उक्तादन्यः शेषः' इति शेषसंज्ञा तथापि वक्तुरिच्छावशात् विहितस्य (उक्तस्य) अपि तस्य शेषत्वम्। तत्रश्च 'षष्ठी शेषे' इति वचनादत्र षष्ठीसमासः। गङ्गायाः धरः इत्यादिः विग्रहः। तत्र 'धर' इति पचाद्यजन्तम् इति बोध्यम्।

'पदसंस्कारपक्षे तु—धरतीति धरः। गङ्गायाः धरः इति कर्मणि या षष्ठी तदन्तेन समास इति सुवचमित्याहुः।

२९१४। ह्वावामश्च ॥ ३।२।२ ॥

दी—। एभ्योऽण् स्यात्। कापवादः। स्वर्गह्वायः। तन्तुवायः। धान्यमायः।

अण् is affixed after ह्वा ( ह्वेञ् स्पर्धायाम् ) वा (वेञ् तन्तुसन्ताने ) and मा ( माङ्माने and मेङ् प्रणिदाने ) when a word in the accusative is in close proximity to them ('कर्मण्युपपदे'). This supersedes क to be directed by the subsequent rule 'आतोऽनुपसर्गे—' ( 2915—3. 2. 3. ). स्वर्गह्वायः—स्वर्गमाह्वयते इति ( One who defies heaven ) स्वर्ग+ह्वे+अण ( by 'आदेच:—' and 'आतोयुक्' Similarly तन्तुवायः ( a weaver ) and धान्यमायः ( a measurer or giver of paddy ).

मित—। ह्वावाम इति। 'ह्वेञ् स्पर्धायाम्' 'वेञ् तन्तुसन्ताने' इत्यनयोर्भूतेः कृतात्वयोर्निर्देशः। 'माङ् माने' 'मेङ् प्रणिदाने' इत्यनयोः सामान्येन निर्देशः 'मा' इति। एवं समाहारद्वन्द्वात् पञ्चम्येकवचनम्। एभ्योऽण् इति। कर्मण्युपपदे इति शेषः। कापवाद इति। उत्तरसूत्रे 'आतोऽनुपसर्गे—' इत्यत्र विधीयमानस्य कस्यापवादः। अन्यथा आदन्तत्वेन अत्रापि कः स्यादिति भावः। स्वर्गह्वाय इति। स्वर्गं आह्वयते अभिभवितुं वाञ्छति। यद्यपि—

"धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया॥"

इति धात्वर्थेनोपसंग्रहादत्र ह्वयतेरकर्मकत्वं प्राप्तं तथापि प्रत्ययसामर्थ्यात् सकर्मकत्वंज्ञेयम्। अणि परे 'आदेच:—'( २३७० ) इत्यन्तरङ्गत्वादात्वे कृते युक्। एवमन्यत्र।

२९१५। आतोऽनुपसर्गे कः ॥ ३।२।३ ॥

दी—। आदन्ताद्धातोरनुपसर्गात् कर्मण्युपपदे कः स्यान्नाण्।

'आतो लोपः' । गोदः । पार्ष्णित्रम् । 'अनुपसर्गे' किम् ? गोसन्दायः । 'कविधौ सर्वत्र संप्रसारणिभ्यो डः' (वार्त्तिकं) ब्रह्म जिनाति ब्रह्मज्यः । सर्वत्रग्रहणादातश्चोपसर्गे आह्वः प्रह्वः ।

After a root ending in आ and preceded by no उपसर्ग, the affix added is क and not अण् provided a word in the accusative leads as an उपपद. Thus गोदः (a giver of cows)—गो+दा+क where आ of दा is dropped by 'आतो लोपः—' ante. पार्ष्णित्रम् (That which protects the heel पार्ष्णि) पार्ष्णि+त्रै+क—आत्व as before. गोसन्दायः—a synomym of गोदः but derived with अण् । 'कविधौ—' (Varttika)—In all cases where the affix क has been enjoined the affix ड will supersede the same (क) provided the root, followed by it, deserves सम्प्रसारण. Thus in ब्रह्मज्य—ब्रह्म+ज्यावयोहानौ+क—क is to be replaced by ड for otherwise the form would have been 'ब्रह्मजिय' by सम्प्रसारण under 'ग्रहिज्या—' (2412). आकार of ज्या (which is 'टि' here) elides due to डित् of the affix by the rule 'टे' although ज्या is not भसंज्ञक। The term 'सर्वत्र' in the varttika suggests that the affix क will be replaced by ड not only when a कर्मवाचक word is उपपद as in 'आतोऽनुपसर्गे—' (2915) but also when an उपसर्ग is an उपपद as in 'आतश्चोपसर्गे' (2898)—। Thus आह्वः etc which otherwise in connection with क would have been आहुवः etc by the rule 'वचिस्वपियजादीनाम्—' (2909). etc.

मित—। आत इति । अनुपसर्गे इति आतो विशेषणं तदाह—अनुपसर्गादिति । अणोऽपवादः कस्तदाह—न अण् इति । आतो लोप इति—गो+दा+क इति

स्थिते 'आतो लोपः इटि च' (२३६१) इत्याल्लोप इत्यर्थः। पार्ष्णित्रम इति—पार्ष्णिरिति गुल्फाधोभागः [ 'गुल्फौ पुमान् पार्ष्णिस्तयोरधः' इत्यमरः ]। तं त्रायते इति कः प्रागवदालोपः। गोसन्दाय इति—भ्रत्वात् युक्। कविधाविति—वार्त्तिकमिदम्। सम्प्रसारणिभ्य इति। सम्प्रसारणवद्भ्यः सम्प्रसारणयोग्येभ्यः इत्यर्थः। तथाचायमर्थः—यत्र यत्र कप्रत्ययो विहितः सम्प्रसारणार्हे धातौ सति तत्र तत्र सर्वत्र कप्रत्ययो वक्तव्य इति। अतएव ब्रह्म जिनाति इति ब्रह्म + ज्या + क इति स्थिते 'ग्रहिज्या—' (२४१२) इति कित्वात् सम्प्रसारणे च प्राप्ते कस्य डः। ततो डित्सामर्थ्यादभस्यापि टेरिति (२१६) आकारस्य टेर्लोपः = ब्रह्मज्यम्। अत्र ज्या वयोहानौ इति क्र्यादिको धातुः। ननु किमिदं वार्त्तिकं कर्मण्युपपदे 'आतोऽनुपसर्गे—' इति प्राप्तं कप्रत्ययं बाधते उत उपसर्गे अप्युपपदे 'आतश्चोपसर्गे' (२८९८) इति प्राप्तमपि कप्रत्ययम् इति प्राप्ते आह—सर्वत्रग्रहणादिति। उभयत्र कप्रत्ययः अनेन बाध्यते इति भावः। अन्यथा कप्रत्ययेण ब्रह्मजिय इति स्यात् न त्विष्टं ब्रह्मज्यमिति। अतः आ + ह्वे + क, प्र + ह्वे + क इत्यादावपि कप्रत्यये परे 'वचिस्वपियजादीनम्—' (१४०९) इति यजादित्वे सम्प्रसारणात् आहुवः प्रहुवः इत्याद्यनिष्टं स्यात्। डादेशे तु कृते आह्वः। प्रह्व इति।

२९१६। सुपि स्थः ॥ ३।२।४ ॥

**टी—। सुपीति योगो विभज्यते। सुप्युपपदे आदन्तात्कः स्यात्। द्वाभ्यां पिबतीति द्विपः। समस्थः। विषमस्थः। ततः 'स्थः'। सुपि तिष्ठतेः कः स्यादारम्भसामर्थ्याद्भावे। आखूनामुत्थानमाखूत्थः।**

The rule is broken up into two prrts (i) सुपि and (ii) स्थः—of which the first means—when a सुप i. e a सुबन्त word precedes as an उपपद, an आदन्त ( ending in आ ) root takes the affix क. Thus द्वाभ्याम् etc—That which drinks with two ( nostrils ) is

called a द्विप: (an elephant) द्वि+पा+क—by 'आतो लोप:—' (2361). Then comes 'स्थ:' which means—when a सुबन्त उपपद precedes, the root स्था takes क in the भाववाच्य on the strength of the commencement of this rule which thus admits of two-fold formations. Thus आखूनाम् etc (the rising of mice) आखूत्थ:—आखु उद् स्था+क by 'आतो लोप:—'(2361) and 'उद: स्थास्तम्भो:—' (118). Note that 'आखूत्थ:' as sanctioned by भाष्य, is masculine and not neuter although it is formed in the भाववाच्य.

मित—। सुपीति। योगविभागसहमेतत् सूत्रं तदाह—योगो विभज्यत इति। एतद्योगविभागेनैव सूत्रं भाष्ये स्पष्टम्। तथाच सूत्रद्वयं सम्पद्यते—'सुपि' इत्येकम् 'स्थ:' इत्यपरम्। तत्र पूर्वं व्याचष्टे—सुपि उपपदे इति। सुपीत्यनेन सुबन्तं लक्ष्यते। उपपदे इति 'कर्मणि—' (३।२।१) इत्यतोऽर्थवशाद्भाति। आदन्तादिति क इति च। 'आत: अनुपसर्गे—' (३।२।३) इत्यत इदम्। द्वाभ्यामिति—करान्तर्गतविवरभंग्रा जलाहरणदर्शनादिति। तत: स्थ इति। द्वितीयो विभाग इत्यर्थ:। स्थ: इति—स्था इत्यस्य पञ्चम्यन्तं तदाह—सुपि तिष्ठतेरित्यादि। आरम्भसामर्थ्यादिति—सूत्रारम्भसामर्थ्यादिति—भाव:। तथाच 'सुपि' इत्यनेन पूर्वभागेनैव कर्तरि प्रत्ययसिद्धेः 'कर्तरि कृत्' इति नेहानुवर्तते अतएव 'स्थ:' इत्यस्य अनिर्दिष्टार्थत्वेन 'गुप्तिज्किद्भ्य: सन्' इत्यादिवत् स्वार्थिकत्वम्। स्वार्थश्च भावे एव सम्भवति न तु कर्तर्यादौ इति स्पष्टमेतदपि भाष्ये। ननु एवं 'घञर्थे कविधानम्' इति वार्तिकादेव भावे कप्रत्ययस्य गतार्थत्वेनेदं व्यर्थमितिचेत्। न—सूत्रकृतो वार्तिकानुसरणानुपपत्ते:। यद्वा नित्योपपदसमासार्थम् (उपपदमतिङ् इत्यनेन) इति विभाव्यम्। अतएवाह—आखूनाम् इति। अस्वपदविग्रह:। आखूनामित्यर्थ-प्रकाशनमात्रं न विग्रह:। प्रयोगार्हस्य लौकिकविग्रहवाक्यस्यात्र दुर्लभत्वात्। आखूत्थ इति—आखुरिति मूषिकपर्याय:। भाववचनत्वेपि पुंलिङ्गत्वमिति द्रष्टव्यम्। न तु नपुंसक इति भ्रमितव्यम्। भाष्यादौ सर्वत्र पुंलिङ्गस्यैवोदाहृतत्वादितितत्त्वबोधिनी। 'घञर्थे कविधानम्' इति वार्तिकस्योदाहरणं तु प्रस्थ:, विघ्न इत्यादीनि।

२८१७। प्रष्ठोऽग्रगामिनि ॥ ८।३।९२ ॥

टी—। प्रतिष्ठत इति प्रष्ठो गौः। अग्रतो गच्छतीत्यर्थः। 'अग्र—' इति किम्? प्रस्थः।

स of स्था becomes cerebral irregularly (निपातने) when 'प्र' precedes provided the derivative denotes advancement (अग्रगमन) Thus प्रष्ठः advancing slow, but प्रस्थः—width.

मित—। प्रष्ठ इति। प्रपूर्वात् तिष्ठतेः कप्रत्यये प्रत्ययलक्षस्य अग्रगामादार्थे प्रष्ठ इति निपात्यते। अन्यथा—प्रस्थः इणकुभ्यां परत्वाभावात् अत्र षत्वावकाशो नास्तीति।

२८१८। अम्बाम्बगोभूमिसव्यॆऽप*द्वित्रिकुशेकुशङ्क्वङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्निभ्यः स्थः ॥ ८।३।९७ ॥

टी—। 'स्थ' इति कप्रत्ययान्तस्यानुकरणम्। षष्ठ्यर्थे प्रथमा। एभ्यः स्थस्य षः स्यात्। द्विष्ठः। त्रिष्ठः। इत ऊर्द्धं 'कर्म्मणि', 'सुपि' इति द्वयमप्यनुवर्त्तते। तत्राकर्मकेषु सुपीत्यस्य सम्बन्धः।

The स of 'स्थ', which is nothing but an imitation of the derivative of स्था with क and thus a nominative in the sense of a genitive, becomes ष when coming after अम्ब, आम्ब, गो, भूमि, सव्ये सव्य अप, द्वि, त्रि, कुशि, कु, शङ्कु, अङ्गु, मञ्जि, पुञ्जि, परमे, बर्हि, दिवि and अग्नि. Thus अम्बष्ठः (one born of a Vaishya by a Brahmin), आम्बष्ठः, गोष्ठः (also गोष्ठम्), भूमिष्ठः (born or standing on earth). सव्येष्ठ (सव्ये is a locative sing. by निपातन or by 'हलदन्तात् सप्तम्याः') also सव्यष्ठ (or सव्य—means left), अपष्ठः, द्विष्ठः (standing on two

[* अत्र 'सव्याप' इति तत्त्वबोधिनीधृतः पाठः। 'सव्येष्ठः' 'अपष्ठः' इति चतच्चैवोदाहरणम् इति]।

things), बिष्ठः, कुष्ठेष्ठः (by 'हलदन्तात्—' etc the locative is retained), कुष्ठः (leprosy), शङ्कुष्ठः (शङ्कु apointed piece of wood), अङ्गुष्ठः (the thumb), मञ्जिष्ठः, पुञ्जिष्ठः परमेष्ठः (a synonym of ब्रह्मन् also परमेष्ठी) बर्हिष्ठः दिविष्ठः (loc. sing of दिव् heaven) and अग्निष्ठः। Henceforth i. e from the subsequent rule 'तुन्दशोकयोः—' (2919) will be carried on the terms 'कर्मणि' and 'सुपि' wherever possible, 'सुपि' only follows where intransitive roots are dealt with.

मित—। अम्बाम्बे ति। अम्ब, आम्ब, गो, भूमि, सव्ये, अप, द्वि, त्रि, कुष्ठे, शङ्कु, अङ्गु, मञ्जि, पुञ्जि, परमे, बर्हि, दिवि, अग्नि एभ्योष्टादशभ्य उत्तरवर्तिनः स्थ कप्रत्ययान्तस्य 'स्थ' इत्यस्य सस्य षः स्यात्। स्थ इति स्थाधातो पञ्चम्यन्तमिति भ्रमं वारयितुमाह—स्थ इतीति। स्था इत्यस्य पञ्चम्यन्तत्वे तु भूमिस्थितं गोस्थानकम् इत्यादावपि षत्वप्रसक्तिरिति तादृशं व्याख्यानमनुचितमिति ध्वनयितुमिदम्। द्विष्ठ इति—द्वयोस्तिष्ठतीत्यर्थः। एवमम्बष्ठ, आम्बष्ठ इत्यादावपि तत्र तत्र तिष्ठतीत्यर्थो बोध्यः। इत ऊर्ध्वमिति—'तुन्दशोकयोः—' (२९१९) इत्यादौ सकर्मकस्थले कर्मणीति सुपीति च द्वयमप्यनुवर्तते। अकर्मकस्थलेतु सुपीत्येवानुवर्तते न तु कर्मणीत्यपि असम्भवात्।

२९१९। तुन्दशोकयोः परिमृजापनुदोः ॥ ३।२।५ ॥

दी—। तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः स्यात्। 'आलस्यसुखाहरणयोरिति वक्तव्यम्' (वार्त्तिक)। तुन्दं परिमार्ष्टीति तुन्दपरिमृजोऽलसः। शोकापनुदः, सुखस्याहर्ता। अलसादन्यत्र तुन्दपरिमार्ज एव। यस्तु संसारासारत्वोपदेशेन शोकमपनुदति स शोकापनोदः॥ 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' (वार्तिक)—मूलानि विभूजति मूलविभजो रथः। आकृतिगणोऽयम्। महीध्रः। कुध्रः। गिलतीति गिलः।

परि + मृज् and अप + नुद् take क when the terms तुन्द and शोक in the accusative are used before them as उपपदs respectively. 'आलस्यसुखाहरणयो:—' (Varttika)—It must be noted that क is attached to them (तुन्द + परिमृज् and शोक + अप + नुद्) only when the senses of lethargy and consolation are implied. Thus तुन्दम् etc—तुन्दपरिमृज: (an idle fellow)—no guna of the root due to कित्त्व. शोकापनुद:—a restorer of comfort i.e. a consolator. तुन्द-परिमार्ज:—one who takes necessary care of his stomach but not an idler—It is derived with अण्, वृद्धि being enjoined by 'मृजेर्वृद्धि:' (2471). And he who removes grief on the point of transitoriness of the world is—शोकापनोद: (derived with अण्). 'क प्रकरणे—' (Vartika)—In the section of the affix क, a provision must be made for the formation of मूलविभुज etc i.e. they are to be derived with the affix क। मूलानि etc—injures the roots (of trees etc)—मूलविभुज:—no guna due to कित्त्व. These words are not exclusively known but have to be recognised by their shape & form. Thus मह्दीध्र: a mountain (मही + धृ + क = महीध्र by 'इको यण—' (47) गुण being barred due to कित्त्व)—etc gain inclusion in the list.

मित—। तुन्दशोकयोरिति। 'कर्मण्युपपदे' इत्यध्याहार्यप्रमाणापेक्षया सप्तमीद्विवचनम्। तदाह—कर्मणोरुपपदयोरिति। परिमृजापनुदोरिति। पञ्चम्यर्थे षष्ठी। तदाह—आभ्यामिति। आलस्यसुखाहरणयोरिति—वार्तिकम्। क्रमेणानयोरेवार्थयोराभ्यां इति वाच्यमिति तदर्थ:। तदाह—तुन्दपरिमृजोऽलस इति। तुन्दमिति जठरम्। मुख्यत उदरचर्यारत इति यावत्। प्रत्ययस्य कित्त्वान्न गुण:। एवं शोकमपनुदतीति शोकापनुद:—सुखस्याहर्ता। अलसादन्यत्रेति। अत्र यथाप्राप्तम्। 'कर्मण्यण्' (२९१३) इत्यणित्यर्थ:। एवं सुखाहरणादन्यत्रापि अण् एव न क इति

दर्शयितुमाह—यथा संसारीति। 'कप्रकरणे—' इति—वार्तिकम्। मूलविभुजादिभ्य इति तादर्थ्ये चतुर्थी। मूलविभुजादिसिद्धार्थमिति। मूलानि विभुजतीति 'भुजो कौटिल्ये' इति तौदादिको धातुः। वृक्षादीनां मूलानि विमर्दयतीत्यर्थः। आकृतिगणोऽयमिति। आकृत्या एवैषां परिगणनं कर्त्तव्यम् इत्यर्थः। महीध्र इति—किपाद गुणाभावे 'इको यण्—' (४७) इति यण्। महीं धरति इति अर्थः। पर्वतः इत्यर्थः। 'पक्षच्छिदा गोत्रभिदात्तगन्धाः शरण्यमेनं शतशो महीध्राः' (रघु—१३।७)। कुध्रः—कुं पृथ्वीं धरतीति प्रागुक्तार्थः। 'गोत्रा कुः पृथिवी पृथ्वी'त्यमरः। गिरतीति—'गॄ—निगरणे' इति धातुः। प्रत्ययस्य किपादित्वं रपरत्वम्। 'अचि विभाषा' इति लत्वम्।

२८२०। प्रे दाज्ञः॥ ३।२।६॥

दी—। दारूपाज्जानातेश्च प्रोपसृष्टात् कर्मण्युपपदे कः स्यात्। अणोऽपवादः। सर्वप्रदः। पथिप्रज्ञः। 'अनुपसर्गे' इत्युक्तेः प्रादन्यस्मिन् सति*न कः। गोसंप्रदायः।

The root दा with all (the four) forms and the root ज्ञा preceded by the उपसर्ग 'प्र' takes the affix क when an उपपद stands in the accusative. This supersedes अण् by 'कर्मण्यण्' (2993). The four forms of दा are—'डुदाञ् दाने', दाण् दाने, दो अवखण्डने and देङ् रक्षणे। Cp 'दाधा घ्वदाप्' (2373). पथिप्रज्ञः—one experienced in the matter of routes or paths. Owing to the mention of the term 'अनुपसर्गे' in the rule 'आतः—' (2915) क will not follow when any उपसर्ग other than प्र precedes. Thus गोसम्प्रदायः (a giver of cows)—where अण् is affixed.

मित—। प्र—इति। अत्र 'प्र' इति लक्षति लाक्षणिकम्। तदाह—प्रोपसृष्टादिति, प्रोपसर्गयुक्तादित्यर्थः। दाश्च ज्ञा चेति समाहारद्वन्द्वात् पञ्चमीकवचनम्। 'आमादा-

* 'सुपि' इत्यत्र पाठान्तरम् इति बालमनोरमा।

ग्रहणोऽविशेष:" इत्युक्तेर्दा' इत्यनेन दारूपाश्चत्वारो गृह्यन्ते। तदाह—दारूपादिति। ते च 'डुदाञ् दाने ( जुहोत्यादि: ), दाण् दाने ( भ्वादि: ), दोऽवखण्डने ( दिवादि: ), देङ् रक्षणे ( भ्वादि: ) इति 'दाधा घ्वदाप्' ( २३७३ ) इत्यत्र स्पष्टम्। अणोऽपवाद इति—'कर्मण्यण्' ( २९१३ ) इति प्राप्तस्येत्यर्थ:। सर्वप्रद इति—सर्वं प्रयच्छति प्रददाति इत्यादिरर्थ:। पथिप्रज्ञ इति—पन्थानं प्रकर्षेण जानातीत्यर्थ:। आतो लोप:। अनुपसर्गे इति—'आत: अनुपसर्गे क' ( २९१५ ) इत्यत्रेत्यर्थ:—प्रादिति। प्रोपसर्गवर्जं तद्युक्ते वाऽन्यस्मिन्नुपसर्गे सतीत्यर्थ:। [सुपीति पाठो नैयार्थतयासमुपेक्षित:]।

## २९२१। समि ख्य: ॥ ३।२।७ ॥

दी—। गोसङ्ख्य:।

ख्या ( the substitute of चक्ष् ) preceded by the उपसर्ग सम् takes क when an उपपद in the accusative exists. Thus गोसङ्ख्य:—One speaking of cows, गो + सम् + ख्या + क as before.

मित—। समीति। पञ्चम्यर्थे सप्तमी। समुपसृष्टात् ख्यादेशात् कर्मण्युपपदे क: स्यादित्यर्थ:। गोसंख्य इति—गा: संचष्टे इति विग्रह:। उपपदसमास:। अत्र ख्येति 'ख्या प्रकथने' इत्यस्य न ग्रहणं तस्य सार्वधातुकमात्रविषयत्वात्। तथा सम्पूर्वस्यास्य प्रयोगी नास्तीति न्यासकार:। एतत् सर्वं 'लङ: शाकटायनस्यैव' ( २४६३ ) इत्यत्र वृत्तिकृता दीक्षितेनैव प्रपञ्चितम्।

## २९२२। गापोष्टक् ॥ ३।२।८ ॥

**दी—। अनुपसृष्टाभ्यामाभ्यां टक् स्यात् कर्मण्युपपदे। सामग:। सामगी। उपसर्गे तु सामसङ्गाय:। 'पिवते: सुराशीध्वोरिति वाच्यम्' ( वार्तिक )। सुरापी। शीधुपी। अन्यत्र क्षीरपा ब्राह्मणी। सुरां पाति रक्षतीति सुरापा।**

Roots गा ( गै ) and पा when preceded by no उपसर्ग takes the affix टक् provided an उपपद in the accusative exists in each

case. Thus सामगः ( one who sings on the Saman ) etc. by 'आदेच:—' ( 2370 ) and 'आतोलोप:—' ( 2361 ). सामगी—fem. by 'टित्—ढ—अण्—अञ्—' ( 470 ). सामसङ्गाय:—अण् by 'कर्मण्यण्' ( 2913 ) then आत्व and युक्। अनुस्वार + परसवर्ण। 'पिबते:—' (Varttika) —पा to drink ( when preceded by no उपसर्ग but ) having सुरा ( wine ) and शीधु ( a kind of drink ) in the accusative as उपपद takes टक्। Thus सुरापी etc. These are the feminine forms of—सुरापः and शीधुपः. But क्षीरपा—A Brahmin lady subsisting on milk only. Here पा takes क by 'आतोऽनुपसर्गे—' ( 2915 ) and hence टाप् comes in and not ङीप्। सुरापा—a woman watching the wine—this also is derived with क and then affixed with टाप्। Here टक् is barred despite the presence of सुरा, as the Varttika clearly enjoins टक्—to 'पिबते:' ( पा to drink ) and not to पाति ( पा to protect ).

मित—। गापोरिति। गा च पाश्चेति द्वन्द्वात् सप्तमीद्विवचनम्। अत्रापि पञ्चम्यर्थे सप्तमी। तदाह—अनुपसर्गाभ्याम् आभ्याम् इति। अनुपसर्गाभ्याम् इति—उपसर्गरहिताभ्याम् इत्यर्थः। अत्र 'गामादाग्रहणेष्वविशेष:' इति न्यायो नाश्रित:। तेन गैधातोः गायतेरेव ग्रहणम्। तदाह—सामगः—सामगीति। साम गायतीत्यर्थः। साम + गै + टक् इति स्थिते 'आदेच:—' ( २३७० ) इत्यात्वे कृते 'आतो लोप:—' इति किद्वादाल्लोपे कृते सामगः इति। प्रत्ययस्य टित्त्वात् 'टिड्ढाणञ्—' इति ङीपि सामगीति। सामसङ्गाय इति—अनुपसर्गमनुवर्त्य 'कर्मण्यण्' ( २९१३ ) इत्यणि। आदेच इति आत्वम्। 'आतो युक्' इति युक् च। मस्यानुस्वारः। परसवर्णेन ङ:। पिबतेरिति—वार्त्तिकमिदम्। सुराशीध्वोः कर्मणोरुपपदयोः पिबतेरनुपसर्गात् टक् स्यादिति तदर्थः। सुरापीत्यादि। उभयत्र [illegible] । [illegible] 'टिड्ढाणञ्—' इति ङीप्। शीधुरिति इक्षुशाकादिजनितो मद्यविशेषः 'मैरेयमासवः शीधु'रित्यमरः। अन्यत्रेति—सुराशीध्वोरन्यस्मिन्नुपपदे इत्यर्थः। क्षीरपेति—अत्र

'आतोऽनुपसर्गे कः' इति कः। ततोऽजाद्यतष्टाबिति टाप्। सुरां पातीति—अत्रापि कर्मणि सुरेत्युपपदे सत्यपि पाधातोः पिबत्यर्थकत्वाभावात् 'आतोऽनुपसर्गे' इति कप्रत्यय एव न टक्। वार्तिके पिबतेरिति विशेषणोल्लेखात्। एवञ्च स्त्रियां टाबेव न ङीप्।

२८२३। हरतेरनुद्यमनेऽच्॥ ३।२।९॥

टी—। अंशहरः। 'अनुद्यमने' किम्? भारहारः। 'शक्तिलाङ्गलाङ्कुशतोमरयष्टिघटघटीधनुःषु गृहेरुपसङ्ख्यानम्' (वार्तिक)। शक्तिग्रहः। लाङ्गलग्रहः। 'सूत्रे च धार्यर्थे' (वार्तिक)—सूत्रग्रहः। यस्तु सूत्रं केवलमुपादत्ते न तु धारयति तत्राणेव। सूत्रग्राहः।

The root हृ, not preceded by any उपसर्ग, takes the affix अच् in the sense of not taking up or conveying when an उपपद in the accusative follows. Thus अंशहरः—a partner or participator. But भारहारः—a carrier of loads—is derived with अण् by 'कर्मण्यण्' (2913). 'शक्तिलाङ्गल—' (Vartika) There must be mention of ग्रह to have अच् after it when the accusative forms of शक्ति (a kind of weapon) लाङ्गल (plough), अङ्कुश (spear), तोमर (a kind of weapon), यष्टि, घट, घटी and धनुष् precede the root as उपपद। ग्रह् has been stated as ग्रहि with सम्प्रसारण and the affix इक् ('इक्श्तिपौ धातुनिर्देशे') to facilitate pronunciation. Thus शक्तिग्रहः etc. One taking the weapon शक्ति—अच् being कित् there is no सम्प्रसारण. Similarly लाङ्गलग्रहः, अङ्कुशग्रहः etc. 'सूत्रे च—' (Varttika)—ग्रह् takes the affix अच् also when सूत्र (a rule) in the accusative preceds it as उपपद, in the sense of keeping in mind. Thus सूत्रग्रहः (one keeping the sutras in mind). But

ग्रह् will take अच् ( and not अच् ) so as to give सूत्रग्राहः to mean one who only receives the sutras but fails to keep them in mind.

मित—। हरतेरिति। उद्यमनमुन्नयनं वहनं वा। तद्भिन्नार्थे वर्तमानाद्धरतेरच् प्रत्ययः स्यात् कर्मणि उपपदे इति सूत्रार्थः। अंशहर इति। अंशं हरतीति विग्रहः। उपपदसमासः। अंश + हृ अच् इति स्थिते 'सार्वधातुकार्ध—' ( २१६८ ) इति गुणः। अंशग्राहीत्यर्थः। भारहार इति—भारं हरतीति विग्रहः। अणेव। भारवाहीत्यर्थः। 'शक्ति—' इति—वार्तिकमिदम्। शक्तिलाङ्गलादिषु उपपदेषु ग्रहेरच् स्यादिति परिगणनं कर्तव्यमित्यर्थः। ग्रहेरिति सुखसुखार्थं कृतसम्प्रसारणस्य ग्रहेः- "इकश्तिपौ धातुनिर्देशे" इतीका निर्देशः। [ अत्र गृहेरित्यपि पाठः ]। शक्तिग्रह इति। शक्तिः शस्त्रविशेषः। तं गृह्णातीति विग्रहः। प्रागवत् समासः। अचोऽकित्त्वान्न सम्प्रसारणम्। एवं लाङ्गलग्रहः, अङ्कुशग्रह इत्यादि। घटग्रहोस्तुल्यार्थत्वेन घटग्रहणेनैव सिद्धे घटीति लिङ्गविशिष्टपरिभाषाया अनित्यत्वज्ञापनार्थम्। तेन द्विपतीतापः इति खच् नेत्याहुः। 'सूत्रे च—' वार्तिकमिदम्। सूत्रे च कर्मण्युपपदे ग्रहेरच् स्यात् धारणं चेदर्थो भवतीति तदर्थः। अतएवाह—यस्तु केवलमित्यादि। अत्र धारणमिति प्रतिभासनमवधारणं वेति बोध्यम्।

२८२४। वयसि च। ३।२।१०॥

दी—। उद्यमनार्थं सूत्रम्। कवचहरः कुमारः।

The former rule enjoins अच् in the sense of अनुद्यमन whereas this is in that of उद्यमन (lifting up or carrying). Thus हृ, with any उपपद in the accusative, takes अच् when the age of a person is implied—कवचहर;—fit to have (or carry) an armour on i.. e youth.

मित—। वयसि चेति। वयसि च गम्ये हरतेरच् स्यात् कर्मण्युपपदे इत्यर्थः। पूर्वत्र अनुद्यमनार्थे च प्रत्ययो विहितः इह तूद्यमनार्थे इत्यादि उद्यमनार्थं सूत्रमिति।

कवचहर इति—कवचं हरतीति विग्रहः। प्रागवत् समासः। कवचग्रहणं योग्यवयोऽस्य सम्भाव्यते इत्यर्थम्।

२८२५। आङि ताच्छील्ये ॥ ३।२।११ ॥

टी—। पुष्पाण्याहरति तच्छीलः पुष्पाहरः। 'ताच्छील्ये' किम्? भाराहारः।

हृ, preceded by the उपसर्ग आङ्, takes अच् when a द्वितीयान्त उपपद precedes the same and the sense is his habit or nature। Thus पुष्पाहरः (पुष्प + आ + हृ + अच्) one accustomed to collect flowers, otherwise भाराहारः (भार + आ + हृ + अण्) where no such habit is implied.

मित—। आङीति आङ्पूर्वः पञ्चम्यर्थे सप्तमी। आङः पराद्धरतेरच् स्यात् कर्मण्युपपदे तत्स्वभावता चेद्द्योत्यते इति। पुष्पाण्याहरति तच्छीलः इति। कर्मान्तरेण पुष्पाण्याहर्तुं स्वभावोऽस्येत्यर्थः। ताच्छील्यं तत्स्वभावतेत्यमरः। भाराहार इति—अत्र 'कर्मण्यण्' (२९१३) इत्यणेव।

२८२६। अर्हः ॥ ३।२।१२ ॥

टी—। अर्हतेरच् स्यात् कर्मण्युपपदे। अणोऽपवादः। पूजार्हा ब्राह्मणी।

मित—। अर्ह इति स्पष्टम्। पूजार्हा इति—पूजार्ह इत्यस्य अच् प्रत्ययान्तत्वेन 'अजाद्यतष्टाप्' इति टाप्। अण् प्रत्ययत्वे तु 'टिड्ढाणञ्—' (४७०) इति ङीप् स्यात्। अतएव अदुपधत्वाभावेन अणा रूपसिद्धावपि स्त्रियां फलभेदादाह—अणोऽपवादः पूजार्हा इति।

२८२७। स्तम्बकर्णयोः रमिजपोः ॥ ३।२।१३ ॥

टी—। 'हस्तिसूचकयोरिति वक्तव्यम्' (वार्तिक)। स्तम्बे

रमते स्तम्बे रमो हस्ती। 'तत्पुरुषे—' (७७२) इति 'हलदन्तात्—' (८६६) इति वा ङेरलुक्। कर्णेजपः सूचकः।

The roots रम् and जप् take the affix अच् when the उपपदs स्तम्ब and कर्ण (in the locative) precede them in order. It must be said, says the varttikakara that the rule applies only when the terms that is arrived at mean an elephant and an evil person respectively ('हस्तिसूचकयोः—' Varttika). स्तम्बे रमते—Note that रम being intransitive स्तम्ब is in the locative and the term सुपि or उपपदे only follows not कर्मणि सुपि or उपपदे (which see under 2918). स्तम्ब means a heap of straws. The seventh case ending in स्तम्ब has been retained by the rule 'तत्पुरुषे कृति—'or 'हलदन्तात्—' (966 in case of संज्ञा). Similarly कर्णेजपः a vile person. जप् means to utter some word, whence it has no accusative by the dictum 'धात्वर्थेनोपसंग्रहात्'.

मित—। स्तम्बकर्णयोरिति। रमतिजपेश्याच् स्यात्। अत्र कर्मणीति न सम्बध्यते। रमतेरकर्मकत्वाद् जपतेश्च शब्दोच्चारणमात्रार्थत्वेन धात्वर्थेनोपसंग्रहाद-कर्मकत्वादिति प्रागेवोक्तम् (२९१८ इति सूत्रे)। 'हस्तिसूचकयोः—' इति—वार्तिकमिदम्। क्रमेण हस्ती सूचकयोरनयोरर्थयोर्भवतीति तदर्थः। सूचक इति खलः। ['पिशुनः सूचकः खल इत्यमरः']। स्तम्बेरम इति। ['स्तम्बो गुच्छस्तृणादेः' इत्यमरः]। अन्यत्र स्तम्बे रन्ता (तृच्) गौः। कर्णेजपः इति—अन्यत्र कर्णेजपिता (तृच्) वेति ङेरलुगिति। सप्तम्या अलुगित्यर्थः।

२९२८। शमिधातोः संज्ञायाम् ॥ ३।२।१४ ॥

दी—। शम्भवः। शंवदः। पुनर्धातुग्रहणं बाधकविषयेऽपि प्रवृत्त्यर्थम्। कञो हेत्वादिषु टा मा भूत्। शङ्करा नाम परिव्राजिका तच्छीला।

Any root may take the affix अच् when the उपपद शम् precedes and a designation or a technical term ( संज्ञावचन ) is formed thereby. Thus शम्भवः and शम्वदः। Here the acceptance of the term 'धातु' in the rule was unnecessary, for whatever affix is here spoken of is to be added to a root only.Nor is it needed to remove the reference ( अनुवृत्ति ) to रम् + जप् of the previous rule. 'रमिजपोः' is not pronounced with 'स्वरित' pitch—which forms an अधिकार। Cp 'स्वरितेनाधिकारः'। Hence the term indicates that the rule will take effect where the affix अच् is to be barred by any other affix. Thus the root कृ when शम् precedes will have अच् only after it and not ट directed by the rule 'कृञो हेतुताच्छील्यानुलोम्येषु' (2934) even though the sense be हेतु (cause), ताच्छील्य (of that nature) etc. Thus शङ्करा a woman of that designation accustomed to do good to others. This is derived with अच्; hance we have टाप otherwise the term whold have been शङ्करी with ङीप् had it been derived with ट.

मित—। शमीति। शमिति सुखार्थकमव्ययम्। तस्मिन्नुपपदे सर्वस्माद् धातोरच्प्रत्ययः स्यात् संज्ञा चेद्गम्यते इति। शम्भवः शंवद इति। शम् भवति शम् वदतीति विग्रहः। संज्ञावचनम् ( नाम ) एतच्छब्दयुगलम्। ननु रमिजपोरस्वरितत्वादेव तयोर्नानुवृत्तिः। अच् प्रत्ययश्चात्र धातोरेव भवति। एवं तर्हि सूत्रे धातुग्रहणं व्यर्थम् इत्याशङ्क्य आह—पुनर्धातुग्रहणमिति। तथा अग्रहणेन सिद्धेऽपि ग्रहणमितरार्थः बाधकविषयेपि अचः प्रवृत्त्यर्थम् इति शेषः। कृञो हेत्वादिष्विति। अयमर्थः—'कृञो हेतुताच्छील्यानुलोम्येषु' (२९३४) इत्यत्र टप्रत्ययः अच्प्रत्ययस्य बाधक इति वक्ष्यते। ततश्च शम् + कृ + अच् इति स्थिते परत्वात्ट एव स्यात्। अत्र धातुग्रहणात्तु अजेव भविष्यति न ट इति धातुरिति पुनरुपात्तः। 'सामर्थ्ययोगान्नहि किञ्चिदत्र पश्यामि शास्त्रे

यदनर्थकं स्या'दिति भाष्यकृदुक्तेरुदाहरणमेतत्। एवञ्च हेलादिष्वर्थेषु सत्स्वपि अनुपपदसामर्थ्यात् कृञोऽच्प्रत्यय एव न ट इति। उदाहरति—शङ्करा नामेति। परिव्राजिकेतिच्छन्दः। तच्छीला इति तु ताच्छील्येऽत्र कृञः अजिति प्रदर्शनार्थम्।

२९२९। अधिकरणे शेतेः ॥ ३।२।१५ ॥

दी—। खे शेते खशयः। 'पार्श्वादिषूपसङ्ख्यानम्' (वार्तिक) पार्श्वाभ्यां शेते पार्श्वशयः। पृष्ठशयः। उदरेण शेते उदरशयः। 'उत्तानादिषु कर्तृषु' (वार्तिक)—उत्तानः शेते उत्तानशयः। अवमूर्धशयः। अवनतो मूर्धा यस्य सोऽवमूर्धा। अधोमुखः शेते इत्यर्थः॥ 'गिरौ डश्छन्दसि'—गिरौ शेते गिरिशः। लोके गिरिशयः। कथं तर्हि 'गिरिशमुपचचार प्रत्यहं सा सुकेशी' इति? गिरिरस्यास्तीति विग्रहे लोमादित्वाच्छः।

The root शी takes the affix अच् when a सुबन्त word in the locative precedes as an उपपद. Thus खशयः—lying in the sky (ख + शी + अच्—गुण as before). 'पार्श्वादिषु—' (Varttika)—An inclusion must be made of शी taking अच्, even when सुबन्त word such as पार्श्व etc precede as उपपदs not in the locative but in other caseeandings, as पार्श्वाभ्यां शेते etc lies on the sides. 'उत्तानादिषु—' (Varttika)—An inclusion must be made of शी taking अच् when उत्तान etc stand as उपपदs in the nominative (and not in the locative). Thus उत्तानः शेते—lies with face up wards उत्तानशयः—a child. Cp—स्यादुत्तानशयः डिम्भः—Amara. Similarly अवमूर्धशयः—lies with his head (मूर्धा) downwards. Expound as अवमूर्धा शेते। 'गिरौ डः—' (Varttika)—The locative गिरौ (in the mountain) preceding as उपपद the root शी takes ड but not अच्—

गिरिशः (one lying in the hills)—Here the 'टि' (i.e. इकार) is dropped due to डित्त्व of the affix (ड) although शी is not भसंज्ञक word ('डित्त्वसामर्थ्यादभस्यापि टेर्लोपः') In usage however, the form is गिरिशयः with अच् by 'अधिकरणे—,(2929). How then etc—The verse is from कुमारसम्भवम् (1. 60) meaning—That lady (Parvati) of nice hair approached Shiva (गिरिश) every day. This गिरिश is to be defended not as a कृदन्त word but as a तद्धितान्त (with श मत्वर्थे) by the rule 'लोमादि पामादिपिच्छादिभ्यः शनेलचः' (1907).

सित—। अधिकरण इति। अधिकरणवाचिनि सुबन्तोपपदे शेतेः (शीधातोः) अच्प्रत्ययः स्यात्। खशयः इति—'सार्वधातुकार्ध—' (२१६८) इति गुणः। पार्श्वादिष्विति—वार्तिकमिदम्। विभिन्नविभक्तिवाचिष्वपि पार्श्वादिषूपपदेषु शेतेरच् स्यादिति तदर्थः। अधिकरणापवादः। तदाह—पार्श्वाभ्यामित्यादि। 'उत्तानादिषु—' इति—वार्तिकमिदम्। कर्तृभूतेषूत्तानादिषूपपदेषु शेतेरच्। उत्तानशयः इति। 'स्यादुत्तानशयो डिम्भः' इत्यमरः। उत्तान इत्यूर्ध्वमुखः इत्यर्थः। अवमूर्धशय इति स्पष्टम्। 'गिरौ—' वार्तिकमिदम्—अजपवादार्थं आरम्भः। छन्दसीति वेद एव। तदाह—लोके इति। अत्र 'अधिकरणे शेतेः (२९२९) इति यथाप्राप्तमजेव। कथं तर्हि इति—। श्लोकांशोऽयं कुमारसम्भवात् (१म. ६० श्लो.)। सेति पार्वती। समाधत्ते गिरिरस्यास्तीति। न तु गिरौ शेते इतीति भावः। एवञ्च तद्धितान्तोऽयं शब्दो न कृदन्तः इति विभाव्यम्। लोमादित्वादिति। 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' (१९०७) इति सूत्रादित्यर्थः।

## २९३० । चरेष्टः ॥३।२।१६॥

The root चर् takes ट when an उपपद in the locative precedes. कुरुचरः—Travelling in the kurus (a country)—Break up as कुरुषु चरति. कुरुचरी By the rule 'टिड्ढाणञ्—' (470).

मित—। चरेरिति। इका निर्देशः। पञ्चम्येकवचनम्। अपेक्षितं पूरयन्नाह—अधिकरण उपपद इति। पूर्वसूत्रादिदम्। कुरुचर इति—कुरुषु चरतीति विग्रहः। न च अकर्मकधातुभिर्योगे 'देश—' इति वार्तिकेन देशवाचकस्य कुरुपदस्य कर्मसंज्ञात्वात् 'कुरून् स्वपिति' इतिवदत्रापि 'कुरून् चरती'त्येव न्याय्यम् इति वाच्यम्। देशकालादीनामकर्मकधातुभिरिव योगे कर्मतया विकर्मकत्वमेवेति शब्देन्दुशेखरे प्रतिपादितम्। एवञ्च 'अकथितञ्च' (५३८) इत्येषु कारकान्तराप्रयुक्तपदान्ते। अन्यथा 'अकर्मकधातुभिः—' इति वार्तिकस्य 'अकथितञ्च' (५३८) इति सूत्रे सन्निवेशस्य अयौक्तिकत्वापत्तेः। अतएव 'समां समां विजायते' (१८१२) इति सूत्रे 'समयां समायां विजायते' इति विग्रहपरं भाष्यं सङ्गच्छते। तस्मात् कर्मसंज्ञाया वैकल्पिकत्वादत्र 'कुरुषु' इत्येव वाच्यम् अधिकरणे इत्यनुवृत्तेरित्यलम्।

२८३१। भिक्षासेनादायेषु च ॥ ३।२।१७॥

टी—। भिक्षां चरतीति भिक्षाचरः। सेनाचरः। आदायेति ल्यबन्तम्। आदायचरः। कथं प्रेक्ष्य स्थितां सहचरीम् इति। पचादिषु चरडिति पाठात्।

चर् takes ट also when भिक्षा, सेना and आदाय are उपपद्s. Thus भिक्षाचरः (a beggar), सेनाचरः (a person joining or visiting the army) and आदायचरः (a collector). आदाय = आ + दा + ल्यप्. The term सहचरी, however, there being no mention of सह here, is provided for with ङीप् by 'टिड्ढाणञ्—' (470) as the पचादि class reads 'चरट्'.

मित—। भिक्षेति। अनधिकरणार्थं आरम्भः। तदाह—भिक्षामिति। तेनायमर्थः—भिक्षा, सेना, आदाय इत्येतेषूपपदेषु चरेटः स्यादिति। भिक्षाचर इति। चरतिरत्र चरणपूर्वके अर्जने वर्तते। चरणेन भिक्षामर्जयतीत्यर्थः। सेनाचर इति। सेनां चरति (प्रविशति) सेनायां चरति (भ्रमति) इति वा विग्रहः। आदायचर इति—गृहीत्वा गच्छतीत्यर्थः। कथमिति—अत्र अर्थे सहशब्दस्यादर्शनात्

टप्रत्ययासम्भवात् स्त्रियाम् ङीप्प्रत्ययाप्रसक्तेः प्रश्नः। समाधत्ते—पचादिष्विति। एवमपि 'टिड्ढाणञ्—' (४७०) इति नदी इत्यादीव्यादाविव ङीविति भावः। अन्यथा पचादीनामचप्रत्ययान्तमादाय 'अजाद्यतः—' इति टावेव स्यात्।

२८३२। पुरोऽग्रतोऽग्रेषु सर्त्तेः ॥३।२।१८॥

टी—। पुरःसरः। अग्रतःसरः। अग्रमग्रेणाग्रे वा सरतीति अग्रेसरः। सूत्रेऽग्रे इत्येदन्तत्वमपि निपात्यते। कथं, तर्हि 'यूथं तदग्रसरगर्वितकृष्णसारम्' इति? वाहुलकादिति हरदत्तः।

सृ coming after the उपपद पुरस्, अग्रतस् and अग्र takes ट in the active voice. The word 'अग्र' in the rule becomes एकारन्त irregularly ( निपातने ) when formation is made. Thus अग्रम्, अग्रेण or अग्रे gives the only form अग्रेसर and not अग्रसरः। occurence however of अग्रसर in expressions as above is to be defended, according to Haradatta, by वाहुलक or irregularity in general. Cp—'एवं च वहुलग्रहणम् i. e in 'कृत्यल्युटो वहुलम्' (28, 1) कृन्मात्रस्यार्थ-व्यभिचारार्थम्' etc etc (2895).

मित—। पुरं इति। पुरस्, अग्रतस्, अग्र एषु उपपदेषु सर्तेष्टः स्यादिति सूत्रार्थः। ननु अग्रम्, अग्रेण, अग्रे वा सरतीति विग्रहे सति 'सुपो धातुप्राति-पदिकयो'रिति सुवलुकि 'अग्रसर' इत्येव न्याय्यम्। कथमग्रेसर इत्येदन्तत्वमवाह—एदन्तत्वमपि निपात्यते इति ( वृत्त्यनुसारेण कथितम् )। नन्वेवमपि कथम् 'यूथम्—' इत्यादौ अग्रसर इति। तत्राह—वाहुलकादिति। 'कृत्यल्युटो वहुलम्' (२८४१) इति योगविभागप्राप्तबाहुलकादित्यर्थः। हरदत्त इति नामग्रहणमरुचिद्योतनार्थमिति नागेशः। नागेशमते अग्रसरः अग्रेसर इति द्वयमपि साधु। तथा च कालिदासः "वसईतां प्राग्रसरः" इत्यादि।

२८३३। पूर्वे कर्त्तरि ॥ ३।२।१९ ॥

टी—। कर्तृवाचिनि पूर्वशब्द उपपदे सर्तेष्टः स्यात्। पूर्वः सर-

तीति पूर्वसरः। 'कर्तरि' किम्। पूर्वं देशं सरतीति पूर्वसारः।

स takes ट when the उपपद पूर्व expressing the nominative precedes; पूर्वसरः, otherwise अण् by कर्मण्यण् (2913) comes in giving पूर्वसारः.

मित—। पूर्वे इति। अत्र कर्तृशब्दस्तद्वाचिनि भाक्तः। तदाह—कर्तृवाचि पूर्वशब्दे इति। पूर्वसार इति—अत्र 'कर्मण्यण्' (२९१३) इत्यण्प्रत्यय एव न टः।

२९३४। कृञो हेतुताच्छील्यानुलोम्येषु॥ ३।२।२०॥

टी—। एषु द्योत्येषु करोतेष्टः स्यात्। 'अतःकृकमि—' (१६०) इति सः। यशस्करी विद्या। श्राद्धकरः। वचनकरः।

The root डुकृञ् (कृ) takes the affix ट when preceded by any उपपद (contiguous word) in the sense of हेतु (cause), ताच्छील्य (wontedness or habitualness) and आनुलोम्य (Favourableness or conduciveness). Thus—यशस्करीविद्या (knowledge causing fame) श्राद्धकरः (a habitual perfomer of sradh) and वचनकरः (a serviceable person). The instances are in due order. Note that यशस्करी forms a compound (उपपदसमासः) otherwise there would have been विसर्ग, as in यशः करोति; cp. 'अतः कृकमि—' (160) ante.

मित—। कृञ इति। 'डुकृञ् करणे' इति तनादिकोऽयं धातुर्न तु 'कृञ् हिंसायामि'ति व्याख्यानात्। तदाह—करोतेरिति। हेतुः कारणं, ताच्छील्यं तत् स्वभावतेत्युक्तम्, आनुलोम्यमनुकूलतेत्यर्थः। एषूपपदेष्विति नार्थः किन्त्वेषु द्योत्येष्वित्याह—एषु द्योत्येष्विति। हेत्वादिषु क्रमेणोदाहरति। यशस्करी विद्येत्यादि। अत्र यशो हेतुः। यशः करोति, श्राद्धं करोति (तच्छीलः) इत्यादिर्विग्रहः। यशस्करीत्यत्र समासप्रसक्तात् सत्वमन्यथा तु यशः करोतीतिवद्विसर्गः स्यादिति

अत: कृकमि—' (१६० ) इति सूत्रे स्पष्टम्। श्लोककर इति—श्लाघक्रियाशील: / वचनकर इति। अनुकूल इत्यर्थ:।

२८३५। दिवाविभानिशाप्रभाभास्कारान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसङ्ख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु ॥ ३।२।२१ ॥

टी—। एषु कृञष्ट: स्यादहेत्वादावपि। दिवाकर:। विभाकर:। निशाकर:। कस्कादित्वात् स:। भास्कर:। बहुकर: बहुशब्दस्य वैपुल्यार्थं सङ्ख्यापेक्षया पृथग्ग्रहणम्। लिपिलिबिशब्दौ पर्यायौ। सङ्ख्या—एककर:। द्विकर:। कस्कादित्वादहस्कर:। 'नित्यं समासेऽनुत्तरपदस्थस्य' ( १५८ ) इति षत्वम्। धनुष्कर:। अरुष्कर:। 'किं यत्तद्बहुषु कृञोऽज्विधानम्' इति वार्तिकम्—किङ्करा। यत्करा। तत्करा। हेत्वादौ टं बाधित्वा परत्वादच्। पुंयोगे ङीष्। किङ्करी।

The root कृ ( डुकृञ् करणे ) takes ट when preceded by the accusative उपपदs—दिवा, विभा, निशा, प्रभा, भास्, कार, अन्त, अनन्त, आदि, बहु, नान्दी, किम्, लिपि, लिबि, बलि, भक्ति, कर्तृ, चित्र, क्षेत्र, सङ्ख्या ( i.e, एक, द्वि etc), जङ्घा, बाहु, अहन्, यत्, तत्, धनुस् and अरुष् ( i. e, twenty seven only) even when हेतु etc are not meant ; cp 'कृञो हेतु—' (2934). दिवाकर: etc—Break up as दिवा (दिवसैवा दिवसं) करोति etc. बहुशब्दस्य etc —The word बहु (many) does not denote a definite number (सङ्ख्या) but implies a multitude or vastness ( विपुलत्व ) and therefore has been separately dealt with. Both the words लिपि and लिबि signify the same thing viz a script. The intermediate forms left out

in the text are—कारकर: अन्नंकर: and आदिकर: अनन्तकर:. Although the word अन्न includes the word अनन्त yet the latter has separately been taken due to the difference lying between them in respect of pitch (स्वरविशेष:)। एककर: etc similarly त्रिकर:, चतुष्कर: etc. अहस्कर (like भास्कर) स by the rule 'कस्कादिषु च' (144) as this (कस्क etc) list is notlimited (आकृतिगणोऽयम्)। 'नित्यं समासे—' (Varttika)—सकार lying not in the subsequent or following member in a compound is persistently changed into ष when a samasa is effected etc. Thus ष in धनुष्कर: (a maker of bows). अरुष्कर:—अरुस् means a boil or sore. The words omitted are नान्दीकर: (नान्दी—a benedictory verse uttered at the outset of a drama) किङ्कर: (servant), लिपिकर: लिबिकर: (a copyist), बलिकर: भक्तिकर:, कर्तृकर: चित्रकर:, क्षेत्रकर: जङ्घाकर: and बाहुकर:. This feminine froms are दिवाकरी, विभाकरी etc by the rule 'टिड्ढाणञ्—' (470). But the words किङ्कर: यत्कर:, तत्कर: and बहुकर: will not have ङीप् by the above rule as they are not derived with ट but with अच् by the varttika— 'किंयत्तद्बहुषु—' i.e कृ takes अच् when किम्, यत्, तत् and बहु precede as उपपदs. Thus किङ्करा etc with टाप् in the feminine by the rule 'अजाद्यतष्टाप्' (454). इत्यादी otc—The drift is this—The author of the commentary न्यास (Jinendra) holds that the affix ट enjoined in the rule 'कृञो—' (2934) will bar the affix अच् enjoined by this varttika on the strength of the dictum of पूर्वविप्रतिषेध: (prohibition due to priority). Bhattoji, however, does not sanction this and himself adheres to the dictum of परविप्रतिषेध: (prohibition due to posteriority; cp. विप्रतिषेधे पर

कार्यम्' ). Consequently अच् bars ट and not vice versa. Thus किङ्करी gets ङीष् ( and not ङीप् ) only when the wife of a किङ्कर is meant ( पुंयोगे ).

मित— दिवाविभेति । दिवा, विभा, निशा, प्रभा, भास्, कार, अन्त, अनन्त, आदि, बहु, नान्दी, किम्, लिपि, लिबि, बलि, भक्ति, कर्तृ, चित्र, क्षेत्र, सङ्ख्या, जङ्घा, बाहु, अहन्, यत्, तत्, धनुस्, अरुस् इति सप्तविंशतिशब्दाः । एषु उपपदेषु कृञः टप्रत्ययः । अहेत्वादवपीति—पूर्वसूत्राद् 'हेतुताच्छील्यानुलोम्येष्वित्यनुवृत्तेरित्यर्थः । दिवाकर इत्यादिषु दिवसं करोतीति विग्रहः । एवं विभां करोतीत्यादि द्रष्टव्यम् । भास्कर इति—भाः करोतीति विग्रहे अत्र अपदत्वाभावात् 'अतः कृकमि—' ( १६० ) इत्यत्र विहितस्य सत्वस्य अप्राप्तेः 'कुप्वोः—' ( २४२ ) इति जिह्वामूलीयविसर्गयोः प्राप्तयोराह—कस्कादित्वादिति—'कस्कादिषु च—' ( १४४ ); कस्कादिराकृतिगणः । 'बहुशब्दस्येति—बहुशब्दो विपुलार्थवाची न तु संख्याविशेषवाचीति सङ्ख्याग्रहणेनाग्रहणात् पृथक्निर्देश इति यावत् । पर्यायौ इति—समर्थवाचिनावित्यर्थः । सङ्ख्येति । एक द्वि इत्यादौ सङ्ख्यावाचकशब्दे उपपदे सतीति शेषः । एकं करोतीत्यादिविग्रहः । कस्कादिषुअहस्कर इति । 'नित्यं समासे—' इति— अनुत्तरपदस्थस्य सस्य नित्यः षः स्यात् समासे सतीति तदर्थः । एवं धनुष्कर: अरुष्कर इति । अरुरिति व्रणम् [ 'व्रणोऽस्त्रियामीर्ममरुः क्लीबे' इत्यमरः ] । अथ मूलानुक्तान् प्रत्ययान्तान् शब्दान् संगृह्णीमः—प्रभाकरः । कर एव कारः । प्रज्ञादित्वादण् । कारं करोतीति कारकरः ( सूर्यः ? ) । अन्तकरः । अनन्तकरः । अन्तशब्दे नैव सिद्धे स्वरे विशेषात् अनन्तशब्दस्य पृथङ् निर्देशः । आदिकरः । नान्दीकरः । किङ्करः । लिपिकरः । लिबिकरः बलिकरः, भक्तिकरः । कर्तृकरः चेत्रकरः जङ्घाकरः । बाहुकर इति ॥ सूत्रमते टप्रत्यये किङ्कर इति भवति । तस्य स्त्रियाम् 'टिड्ढाणञ्—' ( ४७० ) इति पुंयोगे सति असति वा ङीप् प्राप्नोति । एवञ्च पुंयोगाभावे टापि किङ्करा इत्यादि न सिध्यति । तत्र निर्णयमाह—'किंयत्तद्बहुषु—' इति । वार्तिकमिदम् । एषु कृञः अच्, न किन्तु अजेवेति तदर्थः । तेन स्त्रियाम् 'अजाद्यतः—' ( ४५४ ) इति टापि

किङ्करेत्यादि भवति। तदाह—किङ्करेति। ननु तथापि लोके किङ्करीति दृश्यते तत्कथं गतिरित्यत आह—पुंयोगे ङीष् इति। ननु न्यासकृन्मतेन पूर्वविप्रतिषेध-पचाश्रयणे 'कृञो हेतुताच्छील्यानुलोम्येषु' (२९३४) इति टप्रत्ययेन अच्प्रत्ययस्य बाधे सति पुंयोगाभावेऽपि ङीप् स्यादिति चेदत्राह—हेत्वादाविति। 'विप्रतिषेधे परम्—' इत्याश्रित्येदम्। तेन न्यासकृन्मतं नादर्तव्यमनेति भावः।

२९३६। कर्मणि भृतौ ॥ ३।२।२२ ॥

टी—। कर्मशब्द उपपदे करोतेष्टः स्याद्भृतौ। कर्मकरो भृतकः। कर्मकारोऽन्यः।

Here the word 'कर्म' in the rule signifies an उपपद and not the accusative which (कर्मणि) is already present here by अनुवृत्ति from 'कर्मण्यण्' (2913). Thus the rule means—कृ takes ट when the word कर्म is present as an उपपद and remuneration or wages (भृति) is meant. Thus कर्मकर servant. कर्मकारः (अण्) here there is no sense of भृति।

मित—। कर्मणीति। कर्मशब्दोऽत्र उपपदम्। न तु द्वितीयाविभक्तियाह्यकं 'कर्मण्यण्' (२९१३) इत्यतस्मादनुवृत्तेरित्त आह—कर्मशब्दे इति। भृतिर्वेतनम्। भृत्यभावे तु यथाप्राप्तम् कर्मकार इति।

२९३७। न शब्दश्लोककलहगाथावैरचाटुसूत्रमन्त्रपदेषु ॥ ३।२।२३ ॥

टी—। एषु कृञष्टो न। हेत्वादिषुप्राप्तः प्रतिषिध्यते। शब्दकार इत्यादि।

The affix ट due after कृ from 'कृञो हेतु—' (2934) is barred when शब्द, श्लोक, कलह, गाथा (lyrical poem) वैर (enmity) चाटु (flattering), सूत्र (rule), मन्त्र (counsel) and पद (word) are उपपदs. Thus शब्दकारः, श्लोककारः सूत्रकारः—etc.

मित—। न शब्द इति। विवरणं स्पष्टम्।

२८३८। स्तम्बशकृतोरिन्॥ ३।२।२४॥

टी—। 'व्रीहिवत्सयोरिति वक्तव्यम्' (वार्तिक)। स्तम्बकरिर्व्रीहिः। शकृत्करिर्वत्सः। 'व्रीहिवत्सयोः' किम्? स्तम्बकारः। शकृत्कारः।

The varttika 'व्रीहिवत्सयोः—' completes the rule thus 'स्तम्बशकृतोरिन् व्रीहिवत्सयोः'। The rule कृ takes इन् (इ) when स्तम्ब and शकृत् (excretion) precede as उपपद, and paddy and a calf are implied by the derivative; the नकार of the affix elides. स्तम्बकरिः—paddy forming a cluster. शकृत्करिः—a calf excreting always. स्तम्बकारः etc—अण् by 'कर्मण्यण्' (2913).

मित—। स्तम्बशकृतोरिति। स्तम्बशकृतोः कर्मणोरुपपदयोः करोतेरिन् प्रत्ययः स्यात्। 'व्रीहिवत्सयोः—' इति वार्तिकमिदम्। तेन व्रीहौ वत्से च क्रमेणार्थे यथोक्तं स्यान्नान्यथेति दर्शयन्नाह—स्तम्बकरिः व्रीहिः। स्तम्बः तृणादिनिचय इत्युक्तम्। तं करोतीति विग्रहः। प्रत्ययस्य नकार इत्। शकृद् विष्ठा। अन्यत्र स्तम्बकारः—अत्र 'कर्मण्यण्' (२९१३) इत्यणेव।

२८३९। हरतेर्दृतिनाथयोः पशौ॥ ३।२।२५॥

टी—। दृति-नाथयोरुपपदयोर्हृञ इन् स्यात् पशौ कर्तरि। दृतिं हरतीति दृतिहरिः। नाथं नासारज्जुं हरतीति नाथहरिः। 'पशौ' किम्? दृतिहरः। नाथहरः।

The root हृ takes इन् (इ) when दृति (a broken pot or a leather bag for drawing water) and नाथ (a rope thrusted into the nose of a beast) precede as उपपदs, and a beast is implied

by the derivative. दृतिहरः etc imply anything except a beast—'अच्' by 'हरते:—' (2923).

मित—। हरतेरिति। सूत्रे पशाविल्यस्य पशुर्येत् प्रत्ययान्तोपाधिः लभ्यत इति भावः। तदाह—पशौ कर्तरि इति। प्रत्ययान्तस्य विशेषणमिति यावत्। दृतिरिति भग्नपात्रम्। 'तेनास्य क्षरति प्रज्ञा दृतेः पादादिवोदकम्' (मनु) इत्यादौ दर्शनात्। चर्मभस्त्रिकावाचकोऽयमिति केचित्। प्रत्ययस्य नित्त्वादन्त्यस्वरस्य गुणोऽत्यादिवद् दीर्घत्वं न। दृतिहरः इति—'हरतेरनुद्यमने—' (२९२३) इत्यच्। तादृशपात्रवाहीत्यर्थः।

२९४०। फलेग्रहिरात्मम्भरिश्च ॥ ३।२।२६ ॥

दी—। फलानि गृह्णाति फलेग्रहिः। उपपदस्य एदन्तत्वं ग्रहेरिन्प्रत्ययश्च निपात्यते। आत्मानं बिभर्त्तीति आत्मम्भरिः। आत्मनो मुमागमः। भृञ इन्। चात् कुक्षिम्भरिः। चान्द्रास्तु 'आत्मोदरकुक्षिष्विति' पेठुः। 'ज्योत्स्नाकरम्भमुदरम्भरयश्चकोराः' इति मुरारिः।

The root ग्रह (उपादाने) and the root भृ (भरणे) irregularly (निपातने) take the affix इन् (इ) when the उपपदs फल and आत्मन् precede respectively, and फल and आत्मन् irregularly (निपातने) become फले and आत्मम् (with the aug. मुम्) in order. The चकार in the rule is to include कुक्षिम्भरिः (a glutton) i.e to provide इन् after भृ when कुक्षि (the stomach) is an उपपद with the aug. मुम् after it). The followers of Chandra (a grammarian—the वृत्तिकार of चन्द्रव्याकरण), however, read as "आत्मोदरकुक्षिषु भृञ इन्", and in that case the instance of उदरम्भरिः (synonym of कुक्षिम्भरिः) is to be had in the line of मुरारि—'ज्योत्स्नाकरम्भम्—'।

फलेग्रहिः means a tree bearing fruits ; Cp—'स्यादवन्ध्यः फलेग्रहिः'—Amara, whereas आत्मम्भरिः is a synonym of कुक्षिम्भरिः। Cp—'उभावात्मम्भरिः कुक्षिम्भरिस्तूदरपूरके'—Amara.

मित—। फलेग्रहिरिति। फले आत्मनि च कर्मणि उपपदे क्रमेण ग्रहेर्भृञश्च निपातनादिन्प्रत्ययः फलशब्दस्येदन्तत्वमात्मनो मुमागमश्च निपात्यन्ते इति सूत्रार्थः। तदाह—फलानीत्यादि। उपपदसमासः। भृञ् अत्र जुहोत्यादिरिति दर्शयति—आत्मानं बिभर्त्ति इति। आत्मनो मुमागम इति। आत्मनः 'सुपोधातु—' इति नकारलोपादूद्धम्' 'आत्मम्' इति जातमित्यर्थः। सूत्रस्य चकारप्रयोजनमाह—चात् कुक्षिम्भरिरिति। फलेग्रहिरिति फलवान् वृक्षः। आत्मम्भरिकुक्षिम्भरिशब्दौ पर्यायौ। [ 'स्यादवन्ध्यः फलेग्रहिः', 'उभावात्मम्भरिःकुक्षिम्भरिस्तूदरपूरके' इत्युभयत्रापामरः। ] चान्द्रास्तिति। चन्द्रस्तावत् चन्द्रव्याकरणस्य व्याख्याता। तन्मतानुसारिण इत्यर्थः। 'आत्मोदरकुक्षिष्विति। एवञ्च अनर्घराघवे मुरारिप्रयोगो व्याख्यातः। करम्भमिति कदम्बकं समूह इति। 'ज्योत्स्नापेयाचकोरै'रिति कविप्रसिद्धिः।

२८४१। एजेः खश् ॥ ३।२।२८ ॥

टी—। ण्यन्तादेजेः खश् स्यात्।

The root एजि i.e the causal ( णिजन्त ) form of 'एजृ कम्पने' take the affix खश् when any उपपद precedes ; what then—

मित—। एजेरिति। एजृकम्पने इति भौवादिको धातुः। ततो णिच्—एजि। तस्माण्ण्यन्तात् खश्। अत्र कर्मण्युपपद इति अनुवृत्तमपिगम्यते। ततः किमित्यत आह—

२८४२। अरुर्द्विषदजन्तस्य मुम् ॥ ६।३।६७ ॥

टी —। अरुषो द्विषतोऽजन्तस्य च मुमागमः स्यात् खिदन्ते उत्तरपदे न त्वव्ययस्य। मिस्त्वाच्छवादिः। जनमेजयतीति जनमेजयः। 'वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश उपसङ्ख्यानम्' ( वार्तिक )—वातमजा मृगाः।

When an उत्तरपद (subsequent member), other than an indeclinable, affixed with a ख-eliding affix ( as खश् खच् etc) follows, the augment मुम् ( म् ) is added to the contiguous words (उपपदs) such as अरुस्, द्विषत् and one having an अच् (Vowel) at the end. The affix खश् being शित् is a सार्वधातुक by 'तिङ् शित्—' (2166) and hence the root followed by it viz एजि etc, gets शप् etc by 'कर्त्तरि शप्' (2167). Thus जनम् एजयति (terrifies the people) जनम् एजि + खश् = जन एजि खश् by 'सुपो धातु—' (650) = जन एजि शप् खश् = जन एजे अ खश् by 'सार्वधातुकार्ध—' (3168) = जन एजय खश् by 'एचोऽयवायाव:' (63) = जन एजय् खश् (अ) = जन एजय by 'अतो गुणे' (191) = जन मुम् एजय = जनम् एजय = जनमेजय: । Similarly elsewhere. जनमेजय is an instance of 'अजन्तस्य मुम्'. The term means a terrifier or the son of परीक्षित्, Arjuna's grandson. The instances of अरुस् and द्विषत् will be given under 'विध्वरुषोस्तुद:' (2950) and 'द्विषत्परयोस्तापे:' (2954) respectively. 'वातशुनी—' (varttika)—The affix खश् must be added after the roots अज, धेट्, तुद and जहाति ( हा त्यागे ) when the उपपदs वात air, शुनी (bitch), तिल and शर्ध ( wind in the bowels or anus ) procede these respectively. Thus वातम् अजन्ति ( make for the air ) वातमजा: ( as beasts), शुनी etc are being dealt with in the next rule.

मित—। अरुरिति। अरुस् च द्विषत् च अजन्तश्चेति समाहारद्वन्द्वे इति अरुर्द्विषदजन्तम् इति। तस्य षष्ठ्येकवचनम्। तदाह—अरुषो द्विषत इत्यादि। 'अलुगुत्तरपदे' (६।३।१) इत्यत उत्तरपदे इति अनुवर्तते। 'खित्यनव्ययस्य' (६।३।६६) इति खिति वर्तते। तदाह—खिदन्त इत्यादि। शित्वाच्छबादिरिति। 'तिङ् शित् सार्वधातुकम्' (२१६६) इति शित्वात् खश: सार्वधातुकसंज्ञायां 'कर्तरि शप्' (२१६७) इति धातो: शप् इत्यर्थ:। आदिपदेन गुणायादेशपररूपाद्यो ग्राह्या:।

जनमेजयतीति विग्रहप्रदर्शनमेतत्। एवं 'सुपोधातु—' इति सुपोर्लुकि जन एजि + खश् इति स्थिते शप्। ततः 'सार्वधातुकार्ध—' (२१६८) इति गुणे जन एजे शप् खश् इति जाते 'एचोऽयवायावः' (६३) इत्यवादेशे जन एजय खश् इति। ततः 'अतो गुणे' (१२१) इति पररूपे जन एजय इति जाते एजय इत्यस्य खिदन्तत्वमादाय मुमागमे जनम् एजय इति। ततो जनमेजयः। अजन्तस्य एतदुदाहरणम्। अरुर्द्विषतोरुदाहरणे 'विध्यरुषोस्तुदः' (२९५०) 'द्विषत्परयोस्तापे' (२९५४) इत्यनयोर्वक्ष्यति। 'वातशुनी—' इति वार्तिकमिदम्। वात, शुनी, तिल, एषु चतुर्षु कर्मसु क्रमेणोपपदेषु अज, धेट्, तुद, जहाति (हा त्यागे) एभ्योऽपि खश्प्रत्ययः स्यादिति वक्तव्यमित्यर्थः। पूर्वमुदाहरति वातमजा इति। वातम् (वायुम्) अजन्ति (तदभिमुखं गच्छन्ति) इति विग्रहः। सुब्लुकि प्राग्वत् मुमागमः। "विचिवसुचैः प्लवमानमारात् कुतूहलं तस्य ततान तस्य। मेघात्ययोपात्तवलोपशोभं कदम्बकं वातमजं मृगाणाम्॥"—इति भट्टिः (२।१७)। खशि परे शुनी इत्यादिर्ह्रस्वः स्यादित्याह—

२९४३। खित्यनव्ययस्य ॥ ६।३।६६ ॥

टी—। खिदन्ते परे पूर्वपदस्य ह्रस्वः स्यात्। ततो मुम्। शुनिन्धयः। तिलन्तुदः। शर्धञ्जहा माषाः। शर्धोऽपानशब्दस्तं जहतीति विग्रहः। जहातिरन्तर्भावितण्यर्थः।

When a word ending in खित् (खeliding affix) follows, the preceding word, if not an indeclinable, becomes ह्रस्व. Then मुम् comes in by the rule 'अरुर्द्विषत्—' (2942). Thus शुनिन्धयः (That which sucks a bitch), the dissolution being शुनीम् धयति इति। शर्धञ्जहाः—Those that cause to evacute or discharge शर्ध (the wind accumulated in the abdomen). माष is a kind of pulse. Here जहति or the root हा has a causal sense within (which is clear in the translation above).

मित—। खिदीति। खिदित्यनेन तदन्तं लक्ष्यते। तदाह—खिदन्त इति। 'इको ह्रस्वोऽङ्यो गालवस्य' (६।३।६१) इत्यतो ह्रस्व इत्यनुवर्तते। तदाह—पूर्वपदस्य ह्रस्व इति। ततो मुमिति। ह्रस्वात् प्राक् मुमि तु कृते पूर्वपदस्य अजन्तत्वाभावाद ह्रस्वो न स्यादिति भावः। शुनिन्धय इति—शुनीं धयतीति विग्रहः। सुबलुकादिः प्राग्वत्। तिलन्तुद इति—तिलान् तुदति ( पिनष्टि ) इति विग्रहः। अर्धंजहा इति। अर्धोऽपानशब्द इति मध्वादयः। तदाह—अर्धं इति गुदस्य इत्यर्थः। ननु माषाः अर्धं जहतीति चेदर्थो न सङ्गच्छते। तदाह—जहातिरन्तर्भावितण्यर्थ इति। ततश्च त्यापयन्ति त्याजयन्तीत्यर्थः। माषा इत्यत्र मृगा इति भाष्यम्। अनव्ययस्येति किम्। 'दिवामन्या' इत्यादौ मुमप्रतिषेधो यथा स्यात्।

२८४४। नासिकास्तनयोर्ध्माधेटोः ॥३।२।२८॥

टी—। अत्र वार्तिकम्—'स्तने धेटो नासिकायां ध्मश्चेति वाच्यम्' ( वार्तिक )। स्तनं धयतीति स्तनन्धयः। धेटष्टित्वात् स्तनन्धयी। नासिकन्धमः। नासिकन्धयः।

Here the respective sense of the rule e. g, the roots ध्मा and धेट् take खश् when preceded respectively by the उपपद्स नासिका and स्तन is not intended. Hence the varttika 'स्तने धेटः—' adds that स्तन preceding धेट् only takes the affix whereas नासिका preceding both धेट् and ध्मा take the affix. Thus स्तनन्धय only and not स्तनन्धम also. स्तनन्धयः means a child. The root धेट् being टित् or ट eliding the term स्तनन्धय will take the affix ङीप् in fem. by the rule 'टिड्ढाणञ्—' (470). Here although टाप was due—the affix खश् being अटित् (not ट्—eliding) and the प्रातिपदिक स्तनन्धय being अदन्त, yet the term will have ङीप् owing to the ट of the root ( धेट् ) it not having performed any other services to the root itself. And as it ( ट् ) must have some operation

to undergo, the operation allowed is to enjoin ङीप्। नासिकन्धम:—नासिकन्धय:—observe that नासिका has been firstmade short ( ह्रस्व ) when धम and धय the मिदन्त terms follow by the rule 'खित्यनव्ययस्य' (2943) and then मुम् comes after it due to अजन्तत्व by the rule 'अरुर्द्विषत्—' (2942).

मित—। नासिकास्तनयोरिति। नासिकायां स्तने च कर्मण्युपपदे धमतेर्धयतेश्च खश् स्यादिति यथासंख्यं नार्थ:। तथाहि सति 'नासिकन्धय:' इति नासिकायां धयते: खश् न स्यादिति यथासंख्यं वारयन्नाह अत्र वार्तिकमिति। नासिकायां धमश्चेति। चकाराद् धेट् समुच्चीयते। स्तनन्धय इति शिशुरित्यर्थ:। मुमि कृतेऽनुस्वाराद्‌ूर्ध्वं परसवर्ण:। धेटष्टित्वादिति—'टिड्ढाणञ—' ( ४७० ) इति सूत्रादित्यर्थ:। ननु 'टिड्ढाणञ—' इत्यत्र टिदाद्यन्तं यत् प्रातिपादिकं ततो ङीप् इति व्याख्यातम्। स्तनन्धय इति तु टिदन्तं न भवति खश्प्रत्ययस्य टित्वाभावाद्—ङीप् न भवति किन्तु समुदायस्य अजन्तत्वाट्टाप् एवेति चेत ? सत्यम्। प्रत्ययस्य टित्त्वाभावेऽपि धातोष्टित्वस्य अवयवेऽचरितार्थत्वात् समुदायस्य टिदन्तत्वोपचार इति व्याख्यानमेवात्र शरणम् इति कौमुदीकारस्याशय:। अन्ये तु 'टादय एव प्रत्यया:—टिदिति तु प्रत्ययाप्रत्ययसाधारणम्'। तेन टित् प्रातिपदिकं टिदाद्यन्तं चेत् प्रतिपदिकमित्यर्थ:। टित्त्वं तु प्रातिपदिकस्य क्वचित् प्रत्ययकृतं, क्वचित् स्वत:, क्वचित् प्रकृतिकृतं भवति। अवयवधर्मस्य समुदाये उपचारात्। तत्र आद्यस्य उदाहरणम्—कुरुचरीति। द्वितीयस्यउदहरणम्—नदीति। पचादिगणे 'नदट्' इति स्वत एव टित्त्वोपधात्। तृतीयस्योदाहरणम्—धेटष्टित्वात् स्तनन्धयीत्याहुरिति 'टिड्ढाणञ—' ( ४७० ) इत्यत्र तत्त्वबोधिन्यां सुविस्पष्टम्। नासिकन्धम:—नासिकन्धय: इति। 'खित्यनव्यस्य' ( २९४३ ) इति नासिकाया ह्रस्व:। ततो मुम्। अनुस्वार:। परसवर्ण:। 'पाघ्राध्मास्था—' (२३६०) इति धमादेश.। पररूपम्। अन्यत्र गुणायादेशौ विशेषौ।

## २९४५। नाड़ीमुष्ट्योश्च ३।२।३०॥

दी—। एतयोरुपपदयो: कर्मणोर्ध्माधेटो: खश् स्यात्।

'यथासंख्यं नेष्यते'* । नाड़िन्धमः—नाड़िन्धयः । मुष्टिन्धमः—मुष्टिन्धयः । 'घटीखारीखरीषूपसंख्यानम्' ( वार्तिक )। घटिन्धमः—घटिन्धयः इत्यादि । खारी परिमाणविशेषः । खरी गर्दभी ।

When these two i.e, नाडी ( a nerve or vein) and मुष्टि (grip) are उपपद्s in the accusative, ध्मा aud धेट् take the affix खश्. Here 'no respectiveness is intended' (varttika). Thus नाड़ी and मुष्टि may serve as उपपद्s to either of the roots. Consequently नाडिन्धमः etc. ह्रस्व in नाड़ी is defended by ' 'खित्यनव्ययस्य' (2943). 'घटी—'etc (varttika)—when घटी (a pot) खारी (a kind of measure) and खरी ( a she-ass ) precede as उपपद then also ध्मा and धेट take the affix खश —घटिन्धमः etc ह्रस्व and मुम् etc as before.

मित—। नाडीति। 'नासिकास्तनयोः—' ( ३।२।२९ ) इत्यतो ध्माधेटोरित्यनुवर्तते । एजेः खश् ( ३।२।२८ ) इत्यतः खश् इति च । तदाह—एतयोरित्यादि । 'यथासंख्यम्—' इति—वार्तिकमिदमिति तत्त्वबोधिनीमतम् । उदाहरणेनएतदर्थं स्पष्टयति—नाड़िन्धम इत्यादिभिः । 'खित्यनव्ययस्य' ( २९४३ ) इति ह्रस्वे कृते मुम् । अनुस्वारपरसवर्णधमादेशादयः । 'घटीखारी—' इति—वार्तिकमिदम् । उपसंख्यानम् इति । ध्माधेटोः परिगणनं कर्तव्यमित्यर्थः । घटिन्धम इत्यादि । प्राग्वद्ध्रस्वादि ।

२९४६ । उदि कूले रुजिवहोः ॥ ३।२।३१ ॥

दी—। उत्पूर्वाभ्यां रुजिवहिभ्यां कूले कर्मण्युपपदे खश् स्यात् । कूलमुद्रुजतीति कूलमुद्रुजः । कूलमुद्वहः ।

The roots रुज and वह preceded by the उपसर्ग उद् and having the उपपद कूल in the accusative, take the affix खश् । (Note that

---

* वार्तिकमिदमिति तत्त्वबोधिनी ।

उद्‌ though in the locative cannot serve as an उपपद. Hence it is taken in the 5th case ending and accordingly as an उपसर्ग to both रुज् and वह्)। कूलमुद्रुज:—That which breaks or injures the bank (by dashing against it); कूलमुद्वह:—a current etc flowing on dashing the bank. Cp.—

"उत्तीर्णा वा कथं भीमा: सरित: कूलमुद्वहा:।
आसादिती कथं व्रत न गजै: कुलमुद्रुजै:॥"—भट्टि (6. 95)

मित—। उदीति। उदिति सप्तम्यन्तमपि नोपपदम् असत्त्ववाचित्वात्। किञ्च तथा सति 'उत्कूलयो'रिति समासेन उच्येत 'नासिकास्तनयो'रिति यथा, न तु व्यासेन। एवं च 'उदि' इति पञ्चमीस्थाने सप्तमी, रुजिवहोरिति तु पञ्चम्या: स्थाने षष्ठीति बोध्यम्। एतच्च 'यथासंख्यम्—' इति सूत्रे कैयटे स्पष्टम्। रुजीति इका निर्देश:। 'रुजो भङ्गे' इति तौदादिको धातु:। तस्य वहतेश्च सकर्मकत्वात् कर्मण्युपपदे इत्युक्तम्। कूलमद्रुज इति कूलभिदित्यर्थ:। कूलमुद्वह इति। कूलमापूर्य्य वहतीति विग्रह:। सुबलुकि सुमादय: प्राग्वत्। उत्तीर्णाविति भट्टिस्थप्रयोग आङ्गलव्याख्यायां द्रष्टव्य:।

## २८४७। वहाभ्रे लिह:॥ ३।२।३२॥

**टी—। वह: स्कन्धस्तं लेढीति वहंलिहो गौ:। अदादित्वाच्छपोलुक्। खशो ङित्वान्नगुण:। अभ्रंलिहो वायु:।**

The root लिह् (to lick) take खश् when वह (shoulder) and अभ्र (the sky) are उपपदs in the accusative. Thus वहंलिह:—that which licks the shoulder (such as a cow). Here शप् elides by 'अदिप्रभृतिभ्य: शप:' (2423) as लिह् belongs to अदादि class and खश् being ङित् by 'सार्वधातुकमपित्' (2234) there is no guna of the उपधा by 'पुगन्तलघूपधस्य च' (2189). अभ्रंलिह:—meeting or touching the sky.

मित—। वहाभ्र इति। वहश्च अभ्रं चेति समाहारद्वन्द्वात् सप्तम्येकवचनम्। वहे अभ्रे च कर्मण्युपपदे लिहः खशित्यर्थः। अदादित्वादिति—'अदिप्रभृतिभ्यः शपः (२४२२) इति सूत्रेण इत्यर्थः। खशो ङित्वादिति। 'तिङ्शित्—' (२१६६) इत्यनेन सार्वधातुकसंज्ञायाम् 'सार्वधातुकमपित्' (२२२४) इत्यनेन ङित्त्वम्। वहं-लिहाभ्रंलिहयोर्गौवायू नार्थौ किन्त्वनयोर्विशेष्यौ।

## २८४८। परिमाणे पचः॥ ३।२।३३॥

## दी—। प्रस्थम्पचा स्थाली। खारिम्पचः कटाहः।

The root पच् (to cook) takes खश् when a measure such as प्रस्थ खारी etc is an उपपद: Thus प्रस्थम्पचा स्थाली—a pot cooking one प्रस्थ (of rice etc) only. खारीम्पचः कटाहः—a cauldron cooking one खारी (of vegetables etc) only. One प्रस्थ is $\frac{1}{256}$ part of a खारी which is equal to about three bushels or 24 seers in English measure. Cp—

"माषटङ्काक्षबिल्वानि कुडवः प्रस्थ आढकः।
राशिर्द्रोणी खारी चेति यथोत्तरं चतुर्गुणाः॥"—आयुर्वेद संग्रहः।

मित—। परिमाणे इति। परिमाणं खारीप्रस्थादि। परिमाणे कर्मण्युपपदे पचतेः खश् स्यादित्यर्थः। प्रस्थम्पचेति—प्रस्थं पचतीति विग्रहः। खारिम्पच इति। ह्रस्वमुमादयः प्राग्वत्। अनयोः परिमाणविशेषवाचित्वम् आङ्गलव्याख्यायां दर्शितम्।

## २८४९। मितनखे च॥ ३।२।३४॥

## दी—। मितम्पचा ब्राह्मणी। नखम्पचा यवागूः। पचिरत्र तापवाची।

पच् takes खश् also when मित ( a fixed quaility ) and नख (nail) precede as उपपदs in the accusative. मितम्पचा—cooking a fixed quantity (of rice). नखम्पचा—such gruel ( यवागू ) as scorches the finger nail. Here the root पच् implies burning or scorching.

मित—। मितेति। मितनखयोश्च कर्मणोरुपपदयो: पचे: खशित्यर्थ:। पचिस्तावत् विक्लित्त्यर्थ:। स तु नखम्पचेत्यत्र न युज्यते। नखानां विक्लित्त्यभावात्। अत आह पचिरत्र तापवाचीति। तेन नखम् नखान् वा पचति तापयति दहतीति चेत्यर्थ:। यवागूर्विलेपी ( याउ) इति भाषा। 'यवागूरुष्णिका श्राणा विलेपी तरला च से'त्यमर:।

२८५०। विध्वरुषोस्तुद: ॥ ३।२।३५ ॥

टी—। विधुन्तुद:। मुमि कृते संयोगान्तस्य लोप:। अरुन्तुद:।

The root तुद् takes खश् when विधु (the moon) and अरुष् (vital' part) precede as उपपदs in the accusative. Thus विधुन्तुद:—one i. e राहु that torments the moon. In अरुन्तुद: (one cutting to the quick), the संयोगान्त i.e the सकार elides after the augment मुम् has been added (to the अच् or vowel उ) thus अरुस् मुम् = अरुम्स् by 'मिदचोऽन्त्यात् पर:' = अरुम्, then add तुद् ending in खश्—no guna of the उपधा due to ङित्त्व of खश्।

मित—। विध्वरुषोरिति। विधुश्च अरुस् चेति द्वन्द्वम्। सप्तमीद्विवचनम्। विधौ अरुषि च कर्मण्युपपदे तुदते: खशित्यर्थ:। विधुन्तुद इति—विधुश्चन्द्र:। तं तुदति ( ग्रहणेन व्यथयति ) इति विधुन्तुदो राहु:। अरुन्तुद इत्यत्र प्रक्रियामाह—मुमि कृते इति। 'मिदचोऽन्त्यात् पर' इति परिभाषया उकारादुपरि मुम्। ततश्च अरुम्स् इति जाते 'संयोगान्तस्य लोप:' इति सकारस्य लोप:। अरुस् व्रतं मर्मस्थानम् च। तत्तुदतीति विग्रह:। 'अरुन्तुदस्तु मर्मस्पृशि'इत्यमर:।

२८५१। असूर्यललाटयोर्दृशितपो: ॥३।२।३६ ॥

टी—। असूर्यमित्यसमर्थसमास:। दृशिना नञ: सम्बन्धात्। सूर्यं न पश्यन्तीत्यसूर्यम्पश्या राजदारा:। ललाटन्तप: सूर्य:।

The root दृश् and तप् take खश् when the words असूर्य and

ललाट precede respectively as उपपद्s in the accusative. The samasa 'असूर्यललाटयोः' in the rule is an unjustified or असमर्थसमास for नञ् (न) has connection with दृश् (the verb) and not with सूर्य. Thus सूर्यं न पश्यन्ति etc those that do not look even of the sun i, e exceedingly hidden or kept indoors e.g. queens. ललाटन्तपः that which burn the forehead e. g, the sun. In असूर्यम्पश्य—दृश् is first changed into पश्य as before in connection with खश् and then मुम् is added to असूर्य।

मित—। असूर्यललाटयोरिति। असूर्यं च ललाटं चेति द्वन्द्वात् सप्तमी द्विवचनम्। दृशितपोरिति पञ्चम्यर्थे षष्ठी। दृशेस्तपश्च परतः खश् प्रत्ययः स्यादसूर्ये ललाटे च कर्मण्युपपदे इत्यर्थः। ननु सूर्यं असूर्यं इति कथम् निपन्नम्? असूर्यम् पश्यतीति अलौकिकविग्रहादर्शनात् सूर्यं न पश्यतीति लौकिकविग्रहदर्शनाच्चेत्याशङ्क्य आह—असूर्यमित्यसमर्थसमासः इत्यादि। तेन सोऽयं समास इति गृह्यते न तु लौकिक इति। 'समर्थपदविधि'रिति पदविधिः समर्थाश्रितत्वादिति भावः। अत एव 'सापेक्षत्वेऽपि गमकत्वात् समासः' इति परिभाषारूपेणावगाह्यते इति बोध्यम्। स्वयमेव लौकिकविग्रहं दर्शयति—सूर्यं नेति। असूर्यम्पश्य इति। 'एवं नाम गुप्ता यदपरिहार्यदर्शनं सूर्यमपि नपश्यन्ति' इति वृत्तिकृत्। एवञ्चात्र गोपनातिशयो विवक्षितो न तु सूर्यदर्शनाभावः। सन्ध्योपासनादौ तस्यापरिहार्यदर्शनत्वात्। यदा तु सूर्याभावदर्शनमात्रं सूर्येतरचन्द्रदर्शादर्शनं विवक्षितं तदा खश् न भवत्यनभिधानादिति न्यासकारादयः। खशि परे—'पाघ्राध्मा—' इति पश्यादेशः। ततः सूर्य इत्यतो मुमि कृतेऽनुस्वारे परसवर्णे च यथोक्तं रूपं सिध्यति। असूर्यम्पश्या इति पुंसि बहुवचनम्। दारशब्दस्य पुंस्त्वाद् बहुवचनत्वाच्च। ललाटन्तप इति—ललाटं तपतीति विग्रहः। मुमादि प्राग्वत्।

२८५२। उग्रम्पश्येरम्मदपाणिन्धमाश्च॥ ३।२।३७॥

टी—। एते निपात्यन्ते। उग्रमिति क्रियाविशेषणम्। तस्मिन्नुपपदे दृशेः खश्। उग्रं पश्यतीत्युग्रम्पश्यः। इरेर्दकं

तेन माद्यति दीप्यतेऽबिन्धनत्वादिति इरम्मदो मेघज्योतिः । इह निपातनाच्छ्यन्न। पाणयोध्मायन्तेऽस्मिन्निति पाणिन्धमोऽध्वा । अन्धकाराद्यावृत इत्यर्थः। तत्र हि सर्पाद्यपनोदनाय पाणयो ध्मायन्ते।

The words उग्रम्पश्य, इरम्मद and पाणिन्धम are irregularly formed. Thus दृश् takes खश् although the उपपद 'उग्रम्' which is an adverb and not a noun precedes. Here also मुम् comes in when अम् (द्वितीयान्त form) elides by 'सुपो धातुप्रातिपदकयोः' (650). उग्रम्पश्यः—a fierce-looking person. इरम्मद or lightning is said to subsist on (or result form) water (अप्). Hence that which is intoxicated (माद्यति) i. e. effulgent (दीप्यते) with water (इरा), is इरम्मदः। Although खश follows yet मद does not get श्यन् due to निपातन। इरा is changed into इर by the rule 'खित्यनव्ययस्य' (2943). The मुम् etc as before. पाणिन्धम is a route where hands or palms are sounded (clapped) with a view to scare away serpents etc—hence enveloped with darkness. ध्मा is changed into धम in con. with शप् which is necessitated by खश्—a सार्वधातुक। Cp—'पाघ्राध्मास्था—' (2360).

मित—। उग्रम्पश्येति। त्रयोऽपि खशि निपात्यन्त इत्याह—एत इति। उग्रम्पश्येतत्र उपपदस्य क्रियाविशेषणत्वं निपातनम्। खशः शित्त्वेन सार्वधातुकत्वाच्छप्। पश्यादेशः। 'सुपोधातु—' (६५०) इति अमि लुप्ते मुम्। अनुस्वारपरसवर्णौ। उग्रम्पश्य इति क्रूरदर्शन इत्यर्थः। इरम्मद इति—इरा उदकमिति। अबिन्धनत्वादिति। वह्नेरबिन्धनत्वं प्रसिद्धम्। तथाच महाकविप्रयोगः—'अबिन्धनं वह्निमसौ बिभर्ति' इति (रघु—१३)। ननु माद्यतेर्दिवादित्वात् खशि परे श्यन् स्यादित्याशङ्क्य आह—निपातनात् श्यन् न। 'दिवादिभ्यः श्यन्' इति न प्रवर्तते इत्यर्थः। इरा इति

ख्मिति 'खित्यनव्ययस्य' ( २९४३ ) इति खशि ह्रस्वः। मुमनुस्वारपरसवर्णाः। पाघ्मिन्धम इति। खशिकृति शप्। शपि परे 'पाघ्राध्मास्था—' ( २३६० ) इति धमादेशः। शेषं प्रागवत् ध्मायन्ते इति कर्मणि प्रयोगः। तस्य शब्दान्त इत्यर्थः। निपातनादधिकरणे रूपसिद्धिः।

**२९५३। प्रियवशे वदः खच्॥ ३।२।३८॥**

**टी—। प्रियंवदः। वशंवदः। 'गमेःसुपि वाच्यः' (वार्तिक) असंज्ञार्थमिदम्। मितङ्गमो हस्ती। 'विहायसो विह इति वाच्यम्' (वार्तिक)। "खच्च डिद्वा वक्तव्यः"। विहङ्गः—विहङ्गमः। भुजङ्गः—भुजङ्गमः।**

प्रिय and वश standing as उपपद्s in the accusative, वद् takes the affix खच्। [The importance of खच् ( as also its difference from खश् ) will be clear in 'खचि ह्रस्वः' ( 2955 ) and the nonapplication of शप् etc when खच् follows ]. Thus प्रियंवदः ( a mild speaker ) and वशंवदः ( obedient )—मुम् comes in because खच् is खित् or ख-eliding. 'गमेः सुपि—' Varttika—It has to be said that गम् takes खच् when a सुबन्त word stands as उपपद in the accusative etc, provided the word thus formed does not denote a संज्ञा, for this ( संज्ञार्थ ) provision will be had under "गमश्च" (2964). Thus मितङ्गम ( going in measured steps ) is not a संज्ञावचन and may apply to any other being. 'विहायसः—' Varttika—It has to be said that when गम् takes खच् due to the precedence of विहायस् as उपपद, the same (विहायस्) is replaced by विह। 'खच्च—' Varttika—and that this खच् optionally becomes डित् or ङeliding. So that when खच् is डित् the form is विहङ्गः at the elision of the 'टि' portion of गम. otherwise विहङ्गमः. Break up as विहायसा

(through the sky) गच्छतीति। Similarly भुजङ्गः—भुजङ्गमः the breaking up however, being भुजं कुटिलं ( भुजेन कुटिलगत्यावा ) गच्छतीति but not भुजैः etc for the serpents have no hand.

मित—। प्रियवश इति। प्रिये वशे कर्मण्युपपदे वदः खजित्यर्थः। खश्चैव सिद्धे खज् विधानमुत्तरत्र स्फुटीभविष्यति। वृत्तिकारस्य 'खकारो मुमर्थश्चकारस्तु 'खचि ह्रस्वः' (२९५५) इति विशेषणार्थः। तत्र हि 'खे ह्रस्वः' इत्युच्यमाने 'एजेः खश्' इति जनमेजय इत्यत्रापि ह्रस्वः प्राप्नुयादिति तदाशयः। प्रियंवद इत्यादि स्पष्टम्। 'गमे सुपि—' इति वार्तिकमिदम्। सुपि ( सुबन्ते ) उपपदे गमेः खच्प्रत्ययो वाच्य इत्यर्थः। असंज्ञार्थमिदमिति। 'गमश्च' (२९६४) इति वक्ष्यमाणसूत्रेणैव संज्ञायां सिद्धिरिति भावः। मितङ्गम इति—मितं परिमितं गच्छतीति विग्रहः। मुमनुस्वारपरसवर्णाः। 'विहायसः—' इति वार्तिकमिदम्। गमेः खचि परे तदुपपदस्य विहायसो विह इति आदेशः स्यादिति 'खच्च डित्—' इति अत्रेदं तृतीयं वार्तिकम्। खच् प्रत्ययो वा डिदिति तदर्थः। तथा च डित्वपक्षे 'डित्वसामर्थ्यादभस्यापि टेर्लोपे' इति विहङ्ग इति भुजङ्ग इति च। अन्यत्र विहङ्गम्—भुजङ्गमौ। विहायसा आकाशमार्गेण गच्छतीति, भुजं कुटिलं गच्छतीति च विग्रहौ।

## २९५४। द्विषत्परयोस्तापेः ॥ ३।२।३९ ॥

## टी—। खच् स्यात्।

तापि ( तप्+णिच् ) takes खच् when द्विषत् ( a foe ) and पर (a foe ) precede as उपपदs in the accusative. Thus the forms being द्विषत् तापि खच् and पर तापि खच् we look ahead—

मित—। द्विषदिति। द्विषति परे च कर्मण्युपपदे तापेः खजित्यर्थः। तापेरिति 'तप सन्तापे' इति भौवादिकस्य 'तप दाहे' इति चौरादिकस्य वा ण्यन्तस्य ग्रहणम्। द्विषत्परयोरुभयोरपि शत्रुशब्दपर्य्यायत्वम्। एवं द्विषन्तं परं वा तापयतीति द्विषत् तापि खच् इति पर तापि खच् इति वा स्थिते खच्करणप्रयोजनप्रदर्शनमुखेनाह—

२८५५ । खचि ह्रस्वः ॥ ६।४।९४ ॥

दी—। खच्परे णौ उपधाया ह्रस्वः स्यात् । द्विषन्तं परं तापयतीति—द्विषन्तपः । परन्तपः । घटघटीग्रहणाल्लिङ्गविशिष्टपरिभाषा अनित्या । तेनेह न—द्विषतीं तापयतीति द्विषतीतापः ।

The penultimate of a root becomes ह्रस्व when णि i.e the affix णिच् after it is followed by खच्. Thus we now have द्विषत् तप् खच्=द्विष (मुम्) त् तप् खच्=द्विषम्त् तप् अ=द्विषम् तपः. Here first त elides by the rule 'संयोगान्तस्य लोपः' (49)—मुम् being before त by 'मिदचोऽन्त्यात् परः' । Note that here मुम् comes in by 'अरुर्द्विषत्—' (2942) and that शप् does not intervene owing to खच् which not being शित् is not a सार्वधातुक and consequently शप् does not follow. परन्तपः—मुम् अनुस्वार and परसवर्ण as before. Both forms mean a subduer or tormentor of enemy. Cp—'अभून्नृपो विबुधसखः परन्तपः—(भट्टि i. i.). घटघटीग्रहणात् etc—This is a part of the Varttika 'शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यानम्' read under the rule 'हरतेरनुद्यमनेऽच' (2923). The drift of this reference is to convince the student that the परिभाषा 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' is not obligatory (नित्य), for in that case the Varttikakara could have done with घट only and would not take up घटी also. Thus द्विषतीं तापयति gives द्विषतीताप and not द्विषतीन्तप ।

मित—। खचीति । 'दोषो णौ' (६।४।९०) इत्यतो णाविति, 'ऊदुपधायाः—' (६।४।८९) इत्यत उपधाया इति चानुवर्तते । किञ्च खचीति णावित्यस्य विशेषणं तदाह—खच् परे णाविति । खच् परो यस्मादिति विग्रहः । ह्रस्वः स्यादिति

णिलोपश्चेति शेषः। एवञ्चात्र खच्करणं ह्रस्वार्थं णिलोपार्थञ्चेति बोध्यम्। किञ्च खचः शित्त्वाभावात् सार्वधातुकत्वाभावेन शबपि नात्र प्रवर्त्तते। न च खश्यपि ह्रस्वादिफलविधाने सर्वं सुसमञ्जसं लाघवञ्च स्यादिति 'खशि ह्रस्व' इत्येव सूत्रयितुमुचितमिति वाच्यम्। तथा सति 'एजेः खश्' (२९४१) इत्यत्र ह्रस्वप्रसङ्गात् खशः शित्वेन सार्वधातुकतया णिलोपाभावाच्च 'जनमेजयद्विषन्तप' इत्युभयोरपि लब्धुमशक्यत्वमेव। नन्वेवमपि इहैव सूत्रे खच् अस्तु पूर्व-सूत्रे ('प्रियवशे वदः खच्'—2953 इत्यत्र) तु खचः प्रयोजनाभावात् खश एवानुवृत्तिरस्तु इति चेत्। तदपि न। अधिकविधानार्थत्वात्। अतएव 'गमेः सुपि—' इति वार्तिकमिह ज्ञापकसिद्धमित्याहुः। द्विषन्तप इति—'अरुर्द्विषत्—' इति मुम्। अनुस्वारादिः प्रागवत्। उभयोरपि 'शत्रुदमन' इत्यर्थः। घटघटीग्रहणादिति—अयमर्थः—'हरतेरनुद्यमने—' (२९२३) इत्यत्र 'शक्तिलाङ्गलाङ्कुशतोमर यष्टिघटघटीधनुष्षु ग्रहेरुपसङ्ख्यानम्' इति वार्तिकम्। तत्र घटग्रहणेनैव घटीग्रहणे सिद्धे पुनः घटीग्रहणं 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि-ग्रहणम्' इत्यस्याः परिभाषाया अनित्यत्वज्ञापनफलकमिति भावः। उपपदविधावेषा न प्रवर्तत इति ब्याप्सूत्रे भाष्यमिति नागेशः, तेनेह नेति। ह्रस्वोमुम् चेति शेषः।

## २८५६। वाचि यमो व्रते ॥ ३।२।४० ॥

**दी—। वाक्छब्दे उपपदे यमेः खच् स्याद्व्रते गम्ये।**

The word वाच् (word) preceding as उपपद, in the accusative the root यम् takes खच् provided an austere vow is implied. Thus वाच्+यम्+खच्—this being the case we look forward—

मित—। वाचीति स्पष्टं मूले। व्रतः सङ्कल्पविशेषो नियमो वा। तदेवं वाचं यच्छतीति वाच्+यम्+खच् इति स्थिते आह—

## २८५७। वाचंयमपुरन्दरौ च ॥ ६।३।६९ ॥

**दी—। वाक्पुरोरमन्तत्वं निपात्यते। वाचंयमो मौनव्रती। 'व्रते' किम्? अशक्त्यादिना वाचं यच्छतीति वाग्यामः।**

These two words—वाचंयम and पुरन्दर—are formed with खच्

with 'अम्' attached to वाच् and पुर् irregularly (निपातने)। वाचंयमः one observing व्रत। वाग्यामः—one having restraint in speech due to want up power. There we have अण् by 'कर्मण्यण्' (2913) as there is no नियम here. Note that वाच् and पुर् cannot have मुम् as they are not अजन्तs. Hence the injunction of अम्. Then we look forward for पुरन्दर—

मित—। वाचंयमेति। निपातनादेतौ सिद्धौ इत्यर्थः। किं निपात्यते इत्यपेक्षायामाह—वाक्पुरोरिति। तथा च 'अरुर्द्विषत्—' इति मुमोऽत्र अभावादम् इति भावः। एवञ्च सुबलुकि वाच् इति स्थिते अमि वाचम्। ततः मिदन्तस्य योगः। वाग्याम इति—'कर्मण्यण्' (२९१३) इत्यण् न खच् व्रतार्थत्वाभावात्। पुरन्दरपदसाधनार्थमाह—

२९५८। पूःसर्वयोर्दारिसहोः ॥ ३।२।४१ ॥

टी—। पुरं दारयतीति पुरन्दरः। सर्वंसहः। सहिग्रहण-मसंज्ञार्थम्। 'भगे च दारेः' (वार्तिक)*—इति काशिका। बाहुलकेन लब्धमिदमित्याहुः। भगं दारयतीति भगन्दरः।

दारि (दृ विदारणे+णिच्) and सह take खच् when preceded by पुर् and सर्व as उपपदs in the accusative. Thus पुर् दारि+खच्= पुरम् दर् अ by the rule 'खचि ह्रस्वः' (2955)=पुरन्दरः—Indra. सर्वंसहः one tolerant of evey thing. Here the mention of सहि (सह) in the rule is to indicate that it does not make संज्ञावाचक word for such word can be had by 'संज्ञायां भृतृ—' (2963). 'भगे च—' varttika. But तत्त्वबोधिनी says that it is the expression of the author of the काशिकावृत्ति and not a वार्तिक। for बाहुलक see ante 'कृत्यल्युटो बहुलम्'। भगन्दरः—fistula in ano.

* इदं काशिकावचनमेवेति तत्त्वबोधिनी।

मित—। पूः सर्वयोरिति। पुरि सर्वे च कर्मण्युपपदे दारिः ( ण्यन्तस्य दृणातेः ) सहेश्च खजित्यर्थः। पूर्वेणैव सिद्धे पुरि दारेत्यंशः शक्यमकर्तुमित्याहुः। पुरं दारयतीति। ततः सुब्लुकि पुर् दारि खच् इति स्थिते 'खचि ह्रस्वः' इति ह्रस्वे णिलोपे च पुरन्दरः इन्द्रः। 'संज्ञायाम्—' ( २९९३ ) इत्येव सिद्धे इह सहिग्रहणं व्यर्थमित्याशङ्क्य आह— सहिग्रहणम् असंज्ञार्थमिति। भगे चेति—वार्तिकम्। काशिकावचनमिदमिति तत्त्वबोधिनी। बाहुलकेनेति—'कृत्यलुटो बहुलम्' इत्यत्र बहुलग्रहणात् तस्य योगविभागसहत्वाच्चे ति भावः। भगन्दरो व्याधिभेदः।

## २९५९। सर्वकूलाभ्रकरीषेषु कषः॥ ३।२।४२॥

दी—। सर्वङ्कषः खलः। कूलङ्कषा नदी। अभ्रङ्कषो वायुः। करीषङ्कषा वात्या।

The root कष् takes खच् when सर्व, कूल, अभ्र (sky) and करीष (dried cow—dung) precede it as उपपदs in the accusative. Thus सर्वङ्कषः etc.

मित—। सर्वेति। सर्वे, कूले, अभ्रे, करीषे च कर्मण्युपपदे कषः खच् इत्यर्थः। सर्वं कषतीत्यादिः विग्रहः। करीषमिति शुष्कं गोमयम्। "गोविड् गोमयमस्त्रियाम्। तत्तु शुष्कं करीषः" इत्यमरः।

## २९६०। मेघर्तिभयेषु कृञः॥ ३।२।४३॥

दी—। मेघङ्करः। ऋतिङ्करः। भयङ्करः। भयशब्देन तदन्तविधिः। अभयङ्करः।

कृ ( डुकृञ् ) takes खच् when मेघ, ऋति and भय precede as उपपदs in the accusative. Thus मेघङ्कर etc. ऋति means movement. By the परिभाषा 'येन विधिस्तदन्तस्य' the term भय may be used as a part so as to give अभयङ्करः।

मित—। मेघेति। मेघश्च ऋतिश्च भयश्चेति द्वन्द्वात् सप्तमीबहुवचनम्। ए:

कर्मस्‌पपदेषु करोतेः खजित्यर्थः। अतिरिंगमनम्। तत् करोतीति विग्रहः। भय-शब्दे नति। 'येन विधिः—' इति परिभाषयेत्यर्थः।

"मेघङ्करमिवायान्तमृतुं रामं क्षमान्वितः।
दृष्ट्वा मेने स सुग्रीवो वालिभागं भयङ्करम्॥"

भट्टिः (६।१०४)।

२८६१। क्षेमप्रियमद्रेऽण् च॥ ३।२।४४॥

टी—। एषु कृञोऽण् स्यात्। चात् खच्। क्षेमङ्करः—क्षेमकारः। प्रियङ्करः—प्रियकारः। मद्रङ्करः—मद्रकारः। वेति वाच्येऽण्ग्रहणं हेत्वादिषु टो मा भूदिति। कथं तर्हि 'अल्पारम्भः क्षेमकरः' इति? कर्मणः शेषत्वविवक्षायां पचाद्यच्।

कृ takes अण् as also खच् when क्षेम प्रिय and मद्र precede it in the accusative. Thus क्षेमङ्करः—क्षेमकारः etc. Though the particle 'वा' (which means option) was proper to be expressed i.e. though it was proper to enunciate 'क्षेमप्रियमद्रे वा' yet the acceptance of 'अण्' in the rule is to bar the affix ट taking place in the sense of हेतु etc. cp 'कृञो हेतु—' (2934). Then how to explain क्षेमकर in 'अल्पारम्भः—', take it as derived with अच् by 'पचाद्यच्' under 'नन्दिग्रहि—' (2896) and then the शेषत्वविवक्षा of कर्म i.e first derive कर with अच् as करोतीति करः and then expound क्षेमस्य करः, cp—गङ्गाधर, भूधर etc under 'कर्मण्यण्' (2913).

मित—। क्षेमेति। कृञ्जित्यनुवर्तते। तदाह—एषु कृञ इति। एष्विति क्षेमादिषु त्रिषु कर्मण्युपपदेष्वित्यर्थः। खच् पक्षे मुमनुस्वारपरसवर्णाः। अणि वृद्धिः। मद्रेति क्षेमपर्यायः। यद्वा प्राप्तस्य रक्षणं क्षेमं मद्रं मङ्गलमित्यर्थः। वेति वाच्ये इति। अर्थात् 'अण् च'इत्यपनीय'मद्रे वा' इति सूत्रयितव्ये इत्यर्थः। हेत्वादिष्विति 'कृञो हेतु—' (२९३४) इति हेत्वादिष्वर्थेषु प्रसिषेधार्थमित्यर्थः। अन्यथा 'कर्मण्यण्'

( २९१३ ) इत्यनुवृत्तौ पुनरणग्रहणं व्यर्थं स्यात्। कर्मणः शेषत्वविवक्षायामिति। तथाचात्र 'क्षेम' इति नोपपदं किन्तु शेषे षष्ठी। तथाहि प्राक् पचाद्यचि करोतीति कार इति लब्धे पश्चात् क्षेमस्य कार इति गङ्गाधर भूधरादिवत् समासः।

## २८६२। आशिते भुवः करणभावयोः॥ ३।२।४५॥

**टी—। आशितशब्दे उपपदे भवतेः खच्। आशितो भवत्यनेनाशितम्भव ओदनः। आशितस्य भवनमाशितम्भवः।**

When the word आशित (fed or eaten) stands as उपपद, the root भू takes खच् both in the करणवाच्य and in the भाववाच्य. Thus in the करणवाच्य we have आशितम्भवः ओदनः—or (such quantity of) rice as is sufficient to be fed (the guests) with. In the भाववाच्य also we have आशितम्भवः the state of being fed or eaten. The forms are alike due to the sameness of the affix ( खच् ). The Bhattikavya reads—

"आशितम्भवमुत्क्रुष्टं वल्गितं शायितं स्थितम्।
बह्वमन्यत् काकुत्स्थस्य कपीनां स्वेच्छया कृतम्॥"

Where आशितम्भवम् is explained by जयमङ्गल as अशनम् i.e as eating, taking the affix attached in the भाववाच्य.

मित—। आशित इति। अत्र सुपीत्युपतिष्ठते। न तु कर्मणीति। भवतेरकर्मकत्वात्। यद्यपि सोपसर्गस्य प्राप्त्यर्थस्य च भवतेः सकर्मकत्वमस्ति तथापि तत्र खचा न भवितव्यमनभिधानादित्याहुः। अत्र आशितशब्दस्य द्विधानिष्पन्नःअतः अश्नोर्ण्यन्तात् प्रयोजकर्मणि क्तप्रत्यये विहिते एकः। आङ् पूर्वाच्च तस्यैवार्थेभोजनार्थात् अविवक्षिते कर्मणि कर्तरि क्तप्रत्ययान्तोऽपरः। तदयं सूत्रार्थः—आशितशब्दे सुबन्ते उपपदे भवतेर्धातोः करणे भावे चार्थे खच् स्यादिति। तत्र करणे आह—आशितो भवत्यनेनेत्याशितम्भव ओदन इति। अर्थात् यावता ओदनेन अतिथ्यादिर्भोजितो भवति स ( ओदनः ) एवमुच्यते। भावे उदाहरति—आशितस्य भवनमाशितम्भव ( भवम् ? ) इति। अशन-

मित्यर्थः। इह वाऽसरूपविधिना ल्युडपि भवति। आढ्यंभवनमिति। घञ् तु बाध्यत एव। असरूपत्वादित्याहुः। न च 'क्तल्युट्तुमुन् खलर्थेषु वाऽसरूपविधिर्ने'ति निषेधोऽत्र शङ्क्यः यत्र हि घञादिरपवादत्वेन ल्युट् प्रसक्तः स उत्सर्गं घञादिकं नित्यं बाधते न तु विकल्पेनेति तदर्थः। इह तु ल्युटोऽपवादोऽयं खच्। तत्र वासरूपन्यायो निर्बाध एव। सम्मतश्चायम् 'आढ्यंभवनम्' इत्युदाहरणो जयादित्यस्येति दिक्।

**२९६३। संज्ञायां भृतॄवृजिधारिसहितपिदमः ॥ ३।२।४६ ॥**

**टी—। विश्वं बिभर्तीति विश्वम्भरः। विश्वम्भरा। रथन्तरं साम। इह रथेन तरतीति व्युत्पत्तिमात्रं न त्ववयवार्थानुगमः। पतिंवरा कन्या। शत्रुञ्जयो हस्ती। युगन्धरः पर्वतः। शत्रुंसहः। शत्रुन्तपः। अरिन्दमः। दमि शमनायाम्। तेन सकर्मक इत्युक्तम्। मतान्तरे तु अन्तर्भावितण्यर्थोऽत्र दमिः।**

These eight roots viz भृ, तॄ, वृ, जि, धारि (धृ + णिच्) तपि, सहि, and दमि take the affix खच् when an उपपद in the second or in any other case ending precede them provided a designation (संज्ञा) is thus obtained. Thus विश्वम्भरः—(an epithet of Vishnu : विश्वम्भरा—a name of the earth. रथन्तरम् (तॄ)—a particular सामन् of that name. The dissolution of derivation, however, does not bring out the sense it (i. e the word) conveys. पतिंवरा (वृ) etc are in order of the roots. युगन्धरः—धारि has got its उपधा shortened and णिच् dropped out by 'खचि ह्रस्वः' (2955). Then मुम् etc as before. अरिन्दमः—appellation of one oppressing the foes. दमिः शमनायाम् i.e the root has got a णिजन्त sense and is thus transitive. अरीन् दाम्यति means अरीन् दमयति. This is according to Bhattoji. मतान्तरे तु i. e in the opinion of

Haradatta ( हरदत्त ) it has got a causal sense within. In that sense the dissolution is अरिषु दाम्यति which means. अरिषु विषयेदमं त्याजयति, whence it is easy to see that it is thus अकर्मक.

मित—। संज्ञायामिति। भृ प्रभृतिभ्योऽष्टभ्यो यथायोगं कर्मणि सुबन्ते चोपपदे खच् स्यात् संज्ञा चेद् गम्यते इति सूत्रार्थः। उदाहरति विश्वमित्यादि। विश्वम्भरो विष्णुः। विश्वम्भरा धरित्री। [ 'रमा विश्वम्भरा स्थिरा' इति पृथिवीपर्यायेऽमरः ]। रथेनेति। न त्ववयवार्थानुगमः। न हि रथेन कश्चित् सामविशेषन्तरतीति शक्यते प्रतिपत्तुम्। प्रतिपत्तिर्भवतु वा न वा संज्ञावचनं तु भवतीति भावः। पतिं वृणुते वृणीते वार्थः। सुब्लुकि मुमादयः सर्वत्र प्रागवत्। शत्रुं जयतीति युगं धारयतीत्यादि विग्रहः। 'खचि ह्रस्वः' (२९५५) इति धारेरुपधाह्रस्वः। णिलोपश्च। अरिन्दम इति—अरीन् दाम्यति ( दमयति ) इति विग्रहः। दमिः सकर्मक इत्याह—दमिः शमनायामिति इत्युक्तमिति। 'दमु उपशमे' इत्यस्योदहरणावसरे 'शमामष्टानां दीर्घः' (२५१९) इति सूत्रे इत्यर्थः। मतान्तरे त्विति—हरदत्तमते इत्यर्थः। अन्तर्भावितण्यर्थ इति। अस्मिण् पक्षे दमेरकर्मकत्वमेव। तथाच अरिषु ( विषये ) दाम्यति ( दमं त्याजयति ) इति विग्रहः। जयमङ्गलास्तु "रामं अरिन्दमं प्रभुम्" इत्यत्र (भट्टिकाव्य—६।१०७) अरिं दमयतीत्यर्थत्वमादायोदाहरति। संज्ञायां किम्। कुटुम्बं बिभर्ति इति कुटुम्बभार इत्यादौ खच् न॥

## २९६४। गमश्च॥ ३।२।४७॥

## टी—। सुतङ्गमः।

The root गम् also takes खच् when an उपपद in the accusative precedes to form a संज्ञावचन. Thus सुतङ्गमः पिता etc.

मित—। गमश्चेति। संज्ञायामिति वर्तते। तेन गमेः खच् स्यात् कर्मण्युपपदे संज्ञायामित्यर्थः। सुतङ्गम इति—सुतं गच्छतीति विग्रहः। योगविभागउत्तरार्थः। तथाचोत्तरसूत्रे गमेरेवानुवृत्तिर्यथा स्यात्। भृत प्रभृतीनां च मा भूदिति।

२९९५। अन्तात्यन्ताध्वदूरपारसर्वानन्तेषु डः ॥ ३।२।४८ ॥

टी—। संज्ञायामिति निवृत्तम्। एषु गमेर्डः स्यात्। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। अन्तं गच्छतीत्यन्तग इत्यादि। 'सर्वत्रपन्नयोरुपसंख्यानम्' (वार्तिक)। सर्वत्रगः। पन्नं पतितं गच्छतीति पन्नगः। पन्नमिति पद्यतेः क्तान्तं क्रियाविशेषणम्। 'उरसो लोपश्च' (वार्तिक)—उरसा गच्छतीत्युरगः। 'सुदुरोरधिकरणे' (वार्तिक)। सुखेन गच्छत्यत्र सुगः। दुर्गः। 'अन्यत्रापि दृश्यत इति वक्तव्यम्' (वार्तिक)—ग्रामगः। 'डे च विहायसो विहादेशो वक्तव्यः' (वार्तिक)—विहगः।

The word 'संज्ञायाम्' (2963) has ceased to be referred to hence. The rule means—The root गम् takes ड when these namely—अन्त, अत्यन्त, अध्व, दूर, पार, सर्व and अनन्त precede as उपपदs in the accusative. The affix ड being a डeliding, the टि portion of the root to which it is attached is dropped though such stems (root etc) are not declared to be भसंज्ञक। Cp 'यचि भम्' (231). Thus अन्तगः (going to the end) etc. Note that 'अम्' of गम् is its टि by "अचोऽन्त्यादि टि' (79). Similarly अत्यन्तग, अध्वग etc. 'सर्वत्रपन्नयोः—' varttika. It must be said that गम् takes खच् when सर्वत्र and पन्न precede as उपपदs. पन्न isderived as पद्+क्त (कर्तरि)। 'उरसः—' varttika—The final of उरस् elides when preceding गम् as an उपपद in connection with ड. Thus उरगः. 'सुदुरोः—' varttika गम् takes ड in the अधिकरण-वाच्य when सु and दुर् precede. Thus सुगः a route wherein easy movement is possible. 'अन्यत्रापि—' varttika—It must be said that गम् takes

ड in any other वाच्य when any other उपपद precedes. Thus ग्रामग: etc. 'डे च विहायस:—' varttika. It must be said that विह is the substitute of विहायस् when preceding गम् followed by ड— विहग: (a bird). Note that this last varttika viz 'अन्यत्रापि—' would suffice and that the other varttikas namely 'सर्वत्रपन्नयो:—' etc are elaborations only.

मित—। अन्तेति। अन्त, अत्यन्त, अध्व, दूर, सर्व, अनन्त, एषु सप्तसु कर्मसूपपदेषु गमेर्ड इत्यर्थ:। संज्ञा त्वविवक्षितेत्याह—संज्ञायामिति निवृत्तमिति। एतदर्थं 'गमश्चे'ति योगविभाग इति प्रसक्तम्। तेन गमेरेव डो नान्यस्मात्। डित्त्वसामर्थ्यादिति—। अभस्यापि अनिर्दिष्टभसंज्ञस्यापि गमेरित्यर्थ:। अचोऽन्त्यादि टि' (७९) इति गमे'रम्' इत्यंशस्य लोप:। ततो डप्रत्ययस्थस्य अकारस्य योग:। खित्त्वाभावान्मुमादयो न। अन्तग इति। एवम् अन्तग: अध्वग: इत्यादयोऽप्युदाहार्या:। अन्त इत्यनेनैव सिद्धे अनन्तग्रहणं स्वरे विशेषार्थम्। नञ् समासे हि सति पूर्वपदप्रकृतिस्वर:। अनन्तशब्दस्य उपपदत्वे तु कृदुत्तरपदप्रकृतिस्वरेण अन्तोदात्तत्वम् इति भेद:। 'सर्वत्रपन्नयो—' इति। अनयोरुपपदयोर्गमेर्ड इति परिगणनं कर्तव्यमित्यर्थ:। 'उरस:—' वार्तिकम्। लोपश्चेति—। अस्मिन्नुरसि उपपदे गमे ड उरसोऽन्त्यसकारस्य लोपश्चेत्यर्थ:। अन्यथा उरोग इत्यनिष्टं स्यात्। सुदुरोरिति वार्तिकम्। सुदुरोरुपपदयोर्गमेरधिकरणवाच्ये ड इत्यर्थ:। तदाह—अत्रेति। कर्मणि तु खलेव। सुगम: पन्था इति। अन्यत्रेति वार्तिकम्। एतेनैव सिद्धे सर्वत्रेत्यादि वार्तिकं प्रपञ्चार्थमित्याहु:। तथा 'सप्तम्यां जनेर्ड:' (३००७) इत्यनेन सिद्धे 'अन्यत्रापि दृश्यते' इत्यपि प्रपञ्चार्थमत्याहु:। ग्रामग इति। एवं गुरुतल्पग इत्यादि। 'खचि—' वार्तिकम्। डप्रत्यये च परे गमे उपपदस्य विहायस: विहादेश इत्यर्थ:।

२९९६। आशिषि हन: ॥ ३।२।४९ ॥

टी—। शत्रुं वध्यात् शत्रुह:। 'आशिषि' किम्? शत्रुघात:। 'दारावाहनोऽणन्तस्य च ट: संज्ञायाम्' (वार्तिक)। दारुशब्दे

उपपदे आङ्पूर्वाद्धन्तेरण् टकारश्चान्तादेशो वक्तव्य इत्यर्थः। दार्वाघाटः। 'चारौ वा' (वार्तिक)। चार्वाघाटः। 'कर्मणि समि च' (वार्तिक)। कर्मण्युपपदे सम्पूर्वाद्धन्तेरुक्तं वेत्यर्थः। वर्णान् संहन्ति वर्णसङ्घाटः। वर्णसङ्घातः। पदसङ्घाटः। पदसङ्घातः।

The root हन् preceded by any उपपद in the accusative takes ड provided benediction is implied thereby. Thus शत्रुहः one earnestly intended to kill the foe. अन् of हन् which is 'टि' elides by 'डित्त्वसामर्थ्यादभस्यापि टेर्लोपः'. Why say 'आशिषि'? witness शत्रुघातः—the destroyer of an enemy. Here there being no implication of benediction we have अण् by 'कर्मण्यण्' (2913) the final (न) of हन् becoming त् by 'हनस्तः—' (2374) and 'घ' by 'होहन्तेः—' (358), 'दारावाहनः—' (varttika)—when the word दारु (wood) stands as as उपपद in the accusative, the root हन् preceded by the उपसर्ग आङ् takes the affix अण् (not ड) and टकार becomes the final substitute of हन् (i. e. हन् becomes हट) provided a designation (संज्ञा) is implied by the derivative. Thus दार्वाघाटः—(a bird known as "wood pecker"—काठ्ठोकरा). 'चारौ वा' (varttika)—What is said above takes place optionally when the word चारु (fine) is an उपपद. Thus चार्वाघाटः, चार्वाघातः। The latter provided for with by 'हनस्तः—' (2474). 'कर्मणि—' (varttika)—what is said above (under the first varttika here) takes place optionally when हन् is preceded by सम् and any word in the accusative stands as उपपद. Thus वर्णसंघातः etc.

मित—। आशिषीति। आशिषि गम्ये हन्तेः डः स्यात् कर्मण्युपपदे इत्यर्थः।

तदाह—शत्रुं वध्यादिति। वध्यादिति हन्तेराशिषि लिङ् न तु विधौ। 'हनो वध लिङि' (२४३३) इति वधादेशः। शत्रुह इति। आशास्यमानशत्रुहननकर्त्तेत्यर्थः। 'डित्त्वसामर्थ्यादभस्यापि टेर्लोप' इति हनोऽन्भागस्य लोपः। आशिषि अगम्यायां तु यथा प्राप्तमणेव शत्रुघातः। अत्र बाहुलकाट् भावे हन् इति वदन्तः केचिदुपेक्ष्या एव। 'कर्मण्यण्' (२९१३) इति सूत्रविरोधात्। 'हो हन्तेः—' (३५८) इति कुत्वम्) 'हनस्तः—' (२५७४) इति तकारस्यान्तादेशः। 'अत उपधायाः' (२२८२) इत्युपधावृद्धिश्च। 'दारावाहनः'—इति वार्तिकमिदम्। दारौ आहनः अण्, अन्तस्य च टः संज्ञायाम् इति विश्लिष्टः पाठः। अर्थमाह—दारुशब्दे उपपदे इति। 'कर्मणि' इत्यनुक्तमपि गम्यते। संज्ञायामिति शेषः। अन्तस्य टकारविधानार्थमिदम्। अण् तु कर्मण्यण् इत्येव सिद्धः। वार्तिके 'अन्तस्य' इत्यन्तग्रहणं स्पष्टार्थम्। 'अलोन्त्यस्य' इत्येव सिद्धेः। अन्यथा हि टप्रत्ययो—विभाव्येत। उदाहरति—दार्वाघाट इति। दारु आहन्ति इति विग्रहः। आहन्ति इति तु न विग्रहीतव्यम्। स्वाङ्गकर्मकत्वाभावात्। 'काष्ठं दार्विन्धनं त्वेधः' इत्यमरः। 'चारौ—' इति वार्तिकमिदम्। चारावुपपदे प्रागुक्तं वेत्यर्थः। चार्वाघाटः इति। टकारान्तादेशपक्ष इदम्। चार्वाघात इति—तकारान्तादेशपेक्ष इदम्। कुत्ववृद्धी। उभयत्रैवाण्। अन्तादेशे विशेषः। 'कर्मणि समि—' इति वार्तिकमिदम्। चारावित्यस्यानुवृत्तिनिवृत्तये कर्मणीति। उक्तं वेति। अण् टकारस्यान्तादेशो वा वक्तव्यः संज्ञायामित्यर्थः। वर्णान् संहन्तीति—प्रागवत् प्रक्रिया।

## २९९७। अपे क्लेशतमसोः ॥ ३।२।५० ॥

**टी—। अपपूर्वाद्धन्तेर्डः स्यात्। अनाशीरर्थमिदम्। क्लेशापहः पुत्रः। तमोऽपहः सूर्यः।**

The root हन् preceded by अप (उपसर्ग) takes ड when क्लेश and तमस् stand as उपपदs in the accusative. This rule is intended to take effect when there is no implication of

benediction. Thus क्लेशापहः (the redressor of troubles) etc. comp—'डित्त्वसामर्थ्यात्—'।

मित—। अपपूर्वाद्धन्तेः डः स्यादिति। क्लेशतमसोः कर्मणोरुपपदयोरिति शेषम्। 'आशिषि हनः' इत्येव सिद्धे अनाशीरर्थोऽयमारम्भ इत्याह—अनाशीरिति। क्लेशापह इति। क्लेशमपहन्तीति विग्रहः। डित्त्वसामर्थ्यात्टिलोपः।

२८९८। कुमारशीर्षयोर्णिनिः॥ ३।२।५१॥

टी—। कुमारघाती। शिरसः शीर्षभावो निपात्यते। शीर्षघाती।

कुमार (child) शीर्ष (head) preceding as उपपद्s in the accusative हन् takes णिनिः. Thus कुमारघाती (the killer of a child) etc. णिनि being enjoined by 'सुप्यजातौ—' (2288) and 'आवश्यकाधमर्ण्ययोः—' (3311), here it is intended to take place without those senses and to replace शिरस् by शीर्ष.

मित—। कुमारेति। कुमारे शिरसि च कर्मणि उपपदे हन्तेर्णिनिः स्यात्शिरसः शीर्षभावश्च। कुमारघातीति। कुमारं हन्तीति विग्रहः। 'अत उपधायाः' (२१८२) इति वृद्धिः। 'हो हन्तेः—' (३५८) इति कुत्वम्।' 'हनस्तः—' (२५७४) इति तकारान्तादेशः।' 'सुप्यजातौ—' (२८८८) इति 'आवश्यकाध—' (३३११) इति च सिद्धे तदर्थविरहेऽपि शीर्षभावश्च यथा स्यादित्याह।

२८९९। लक्षणे जायापत्योष्टक्॥ ३।२।५२॥

कौ—। हन्तेष्टक् स्याल्लक्षणवति कर्तरि। जायाघ्नो ना। पतिघ्नी स्त्री।

When the agent (कर्ता वा कर्त्री) possesses any particular characteristic or mark, the root हन takes the affix ट, preceded by the उपपद्s जाया (wife) and पति in the accusative. Thus जायाघ्नः

(a husband possessing such a mark as indicates the death of his wife). Similarly पतिघ्नी. Here ङीप् comes in my 'टिड्ढाणञ्—' (470). The उपधा of the root (हन्) disappears by the rule 'गमहनजनखनघसां लोपः—' (2363) as the affix टक् is कित्.

मित—। लक्षण इति। लक्षण इत्यत्र अर्श आद्यच्। तेन लक्षणमस्यस्तीति लक्षणवानित्यर्थः। तस्य च विशेषणत्वात् विशेष्यापेक्षः कर्ता आक्षिप्यते। तदाह—लक्षणवति कर्तरीति। उपलक्षणमेतत्। तेन लक्षणवतीं कर्त्रीमिति लिङ्ग-परिणामेनार्थः। जायापत्योः कर्मणोरुपपदयोरिति वाक्यशेषः। केवले लक्षणे उत्तरसूत्रेणैव सिद्धः प्रत्ययः। तेन जायघ्न इत्यादौ जायामरणनिमित्तं पतिमरणनिमित्तं रेखा अस्य विद्यते इत्यर्थः। न तु स्वयं हन्ता हन्त्री वार्थौ। 'गमहन—' (२३६३) इत्युपधालोपः। 'टिड्ढाणञ्—' (४७०) इति ङीप्।

२८७०। अमनुष्यकर्तृके च ॥ ३।२।५३ ॥

टी—। जायाघ्नस्तिलकालकः। पतिघ्नी पाणिरेखा। पित्तघ्नं घृतम्। 'अमनुष्य—' इति किम्? आखुघातः शूद्रः। अथ कथं 'बलभद्रः प्रलम्बघ्नः, शत्रुघ्नः, कृतघ्नः' इत्यादि। मूलविभुजादित्वात् सिद्धम्। चोराघातो नगरघातोहस्तीति तु बाहुलकादणि।

The root हन् takes टक् in con. with any कर्मवाचक उपपद in the sense of an agent other than a human being; in other words if the agent is not a human being. Thus 'जायाघ्नः—' a mark like that of sesamum (तिलकालक) which indicates the death of one's wife. Here it is easy to see that the verb of the expression 'जायां हन्तीति' refers to that particular sign and not to the agent possessing it. Similarly पतिघ्नी and पित्तघ्न। Why say 'अमनुष्य—'? Witness 'आखुघातः—' Here the agent शूद्र being a human being we have

अण् by 'कर्मण्यण्' (2913) after हन्, in आखुम् (a mouse) हन्तीति आखुघात: I Then how to defend expressions like प्रलम्बघ्न: (the killer of प्रलम्ब, a demon), शत्रुघ्न. (the youngest son of Dasarrtha), कृतघ्न: (ungrateful) etc where the root हन् evidently refers to a human being in each case and yet has टक् after it? Well these may be established by having recourse to the varttika 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' which enjoins the affix क which see under 'तुन्दशोकयो:—' (2919). The affix क being कित् we have उपधालोप by 'गमहन—' (2474) and कुत्व by 'हो हन्ते:—' (354). Well granted that it is so. But, how again to defend चोरघात: हस्ती. नगरघात: हस्ती etc where हन does not take टक् despite the agent (the elephant) not being a human being? We will drive them with अण by बाहुलकविधि under 'कृत्यल्युटो बहुलम्'.

मित।—अमनुष्येति। मनुष्यभिन्नकर्त्रर्थे वर्तमानाद्धन्तेष्टक् स्यात् कर्मण्युपपदे इति सूत्रार्थ:। जायघ्न इति। जायां पत्नीं हन्तीति विग्रह:। अत: हन्तीत्यनेन तिलकोऽन्वीयते न तु तच्चिह्नवान् मनुष्य इति। तिलकालक इतितिलाकृति: कृष्णचिह्नविशेष:। एवं पतिघ्नीत्यादौ विग्रह:। टकारेत्त्वात् ङीप्। कित्वाद्भवत्र 'गमहन—' (२५७४) इत्युपधालोप: 'होहन्ते:—' इति कुत्वं। अमनुष्येति किमिति। अत्र हन्ते: शूद्राख्यमनुष्यकर्तृकत्वेन टक् न किन्तु 'कर्मण्यण्' (२९१३) इति यथापूर्वमेव। प्रक्रिया पूर्ववत्। यद्यपि अमनुष्यशब्द: रक्ष:पिशाचादिषु रूढ़स्तथापीह लक्ष्यानुरोधिव्याख्यानात् मनुष्यादन्यत् सर्वमेवाह। ननु पूर्वसूत्रे लक्षणग्रहणं यथा प्रत्ययार्थविशेषणम् तथा इहाप्यमनुष्यग्रहणमस्तु—किं कर्तृग्रहणेनेति चेत्। मैवम। अमनुष्ये इत्युच्यमाने उपपदत्वं विज्ञायेत। पूर्वसूत्रे तु उपपदान्तरसत्त्वात् प्रत्ययार्थविशेषणतया निर्णीयत इति वैषम्यात्। अथ कथं 'कृतघ्ने नास्ति निष्कृति:' (पञ्चतन्त्रम्), बलभद्र: प्रलम्बघ्न: (अमरकोष:), शत्रुघ्न: इत्यादीनि। अत्र मनुष्यकर्तृकादपि हन्तेष्टक् विधीयते किम इति प्रश्न:।

नेत्याह—मूल विभुजादित्वादिति । 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' इति 'तुन्दशोकयोः—' (२९१९) इत्यतस्य न वार्त्तिकेन कप्रत्यय मुत्पाद्य सिद्ध इति भावः। मूलविभुजादेराकृतिगणत्वात् । 'गमहन—' (३५७४) इति 'ह्रोहन्तेः—' (३५४) इति चोपधालोपकुत्वे। नन्वेवमपि कथं 'चोरघातो हस्ती, नगरघातो हस्ती'त्यादि । अत्र हि हस्तीत्यमनुष्याकर्तरि सत्यपि टक् नोत्पद्यते । समाधानमाह—बाहुलकादपि इति । सिद्धमिति शेषः । 'कृत्यल्युटो बहुलम्' (२८४१) इत्यस्य योगस्यविभागादिति भावः ।

## २९७१ । शक्तौ हस्तिकपाटयोः ॥ ३।२।५४ ॥

**टी—। हन्तेष्टक् स्याच्छक्तौ द्योत्यायाम् । मनुष्यकर्तृ कार्य्य- मिदम् । हस्तिघ्नो ना । कवाटघ्नश्चोरः । कपाटेति पाठान्तरम् ।**

When prowess is implied and हस्ति and कपाट (the pannel) stand as उपपदs in the accusative, the root हन् takes टक्. This is intended to take place when a human being is the agent. Thus 'हस्तिघ्न—' a male person able to kill an elephant. 'कपाटघ्न—' a thief able to break the pannel.

मित ।—शक्ताविति । द्योत्यायामिति गम्यमानायामित्यर्थः । हस्ति कवाटयोः कर्मणोरुपपदयोरिति शेषः । अत्र हन्तेर्मनुष्यःयथाकर्तास्यादित्येतदर्थम् आरम्भस्तदाह—मनुष्यकर्तृ कार्यमिति । हस्तिघ्नो नेति । ना मनुष्योऽयं हस्तिनमपि हन्तुं समर्थ इत्यर्थः । एवं कवाटभंक्तुं समर्थः इत्यर्थः । कु कुत्सितं ( शब्दं कृत्वं त्यर्थः ) वटति इति कवाटम् । पचाद्यच् । 'कवञ्चोष्णे' इत्यत्र योगविभागात् कोः कवादेश इति हरदत्तः । कपाटमिति पाठान्तरमिति । तथात्वे कं शिरः पाटयति प्रविशत इति कपाटम् । पूर्ववदच् । शक्ताविति किम् ? विषेण हस्तिनं हन्तीति हस्तिघातः । यद्यपीह शक्तिरस्तीव तथापि कर्तृलाभुमपत्तेःएतं शक्तिग्रहणसामर्थ्यात् प्रकर्षविज्ञानम् । तेन स्वबलेनैव हन्तुं या शक्तिः सैव गृह्यते ।

२८७२। पाणिघताड़घौ शिल्पिनि ॥ ३।२।५५।

दी—। हन्तेष्टक् टिलोपो घत्वं च निपात्यते पाणिताड़योरुपपदयोः। पाणिघः। ताड़घः। 'शिल्पिनि' किम्? पाणिघातः। ताड़घातः। 'राजघ उपसंख्यानम्' (वार्तिक)। राजानं हन्ति राजघः।

When an expert in a business or an art is meant the root हन् takes टक् provided पाणि (hand) and ताड़ (stick—) precede as उपपदs—टिलोप + घ taking place irregularly. Thus पाणिघः one who finely beats a musical instrument with his hand (मृदङ्गकार etc). ताड़घः—One expert in beating drums etc with stick (?). पाणिघातः (अण्)—refers to any man other than a शिल्पी। 'राजघ' varttika—This has to be listed with the rule above i.e here also हन् takes टक्, टि of हन् elides and घ replaces ह irregularly.

मित।—पाणिघताड़घाविति। शिल्पिन्येव कर्तरि एतौ निपात्येते इत्याह—हन्तेष्टगिति। पाणिताड़योरिति। कर्मणोरिति शेष इति न मन्तव्यम्। पाणिना हन्तीति ताड़ेन हन्तीति च विग्रहात्। 'पाणिवादास्तु पाणिघा' इत्यमरः। वादका इति तदर्थः। पाणिघात इति। अत्र प्राग्वदण्। शिल्पिभिन्नश्च कर्ता। राजघ इति वार्तिकमिदम्। अत्रापि टक् स्यात् टिलोपो घादेशश्च निपात्यत इत्यर्थः।

२८७३। आढ्यसुभगस्थूलपलितनग्नान्धप्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन् ॥ ३।२।५६ ॥

दी—। एषु च्व्यर्थेष्वच्व्यन्तेषु कर्मसूपपदेषु कृञः ख्युन् स्यात्। अनाढ्यमाढ्यं कुर्वन्त्यनेन आढ्यंकरणम्। अच्वौ किम्। आढ्यीकुर्वन्त्यनेन। इह प्रतिषेधसामर्थ्याल्ल्युडपि नेति काशिका। भाष्यमते तु ल्युट् स्यादेव। अच्वावित्युत्तरार्थम्।

These i.e आढ्य, सुभग, स्थूल, पलित, नग्न, अन्ध and प्रिय when bring out the sense (only) of a च्विप्रत्यय (i. e the sense of अभूततद्भाव) but do not (actually) take the affix (च्वि) and are treated as उपपद्s in the accusative, the root कृञ् (कृ) takes in the करणवाच्य the affix ख्युन् (of which the यु or अन् by युवोरनाकौ only is retained and all other latters disappear)—ख being for मुम् (2943). न् being for the sake of pitch (स्वरार्थं)। Thus अनाढ्यम् etc—so सुभगङ्करणम्—the making of one rich or luxuriant who or which was not so formerly. Similarly आढ्यङ्करणम् etc. अनाढ्यम् आढ्यं कुर्वन्त्यनेन etc give the form. Why say अच्वौ in the rule ? witness आढ्यीकुर्वन्ति अनेन which does not give आढ्यंकरणम् due to the existence of च्वि therein. Here Kashika adds that on the strength of this prohibition viz 'अच्वौ', ल्युट् also enjoined in a general way as 'करणाधिकरणयोश्च' (3293) will not take place. The drift is this—If आढ्यी + कृ takes ल्युट् then we have आढ्यीकरणम् in the करणवाच्य. But it is easy to see that this very form (आढ्यीकरणम्) might be arrived at by ख्युन् also added to कृ for although ख्युन् is खित् yet आढ्यी will not be आढ्यम् (ह्रस्व) etc by 'खित्यनव्ययस्य' (2943) because ह्रस्वविधान etc by that rule is limited to those उपपद्s which are अनव्ययs or not indiclinables whereas 'आढ्यी' is an अव्यय by the rule 'ऊर्यादिच्विडाचश्च' (762) due to the existence of च्वि therein. If this be the case i.e if the form is similar under each of the affixes ख्युन् and ल्युट then the prohibition अच्वौ necessarily suggests that ल्युट् also will not take effect when आढ्य etc remain as उपपद्s. भाष्य, however, takes the prohibition अच्वौ for the foregoing rules and therefore

in its opinion ल्युट् of course takes place as an alternative of ख्युन्.

मित। आढ्ये ति। आढ्य, सुभग, स्थूल, पलित, नग्न, अन्ध, प्रिय इत्येतेषु सप्तसु च्व्यर्थेषु अर्थात् च्विप्रत्ययार्थप्रकाशकेषु अथच अच्व्यन्तेषु अगृहीतच्विप्रत्ययेषु कर्मसु उपपदेषु सत्सु करणवाच्ये डुकृञो धातोरुत्तरं ख्युन्प्रत्ययः स्यादिति सूत्रार्थः। खित्करणं मुमर्थम्। 'यु' इत्येतन्मात्रं तिष्ठति। तस्य च 'युवोरनाकौ' इति 'अन' इत्येवंरूपत्वं फलम्। नकारः स्वरार्थः। अनाढ्यम् आढ्यं कुर्वन्तीति। प्राग् यः अनाढ्यः आसीत् स इदानीम् आढ्यः [ 'इभ्यः आढ्यो धनी'त्यमरः ] क्रियतेऽनेनेत्यर्थः। एवमन्यत्रापि सुभगङ्करण स्थूलंकरणादिषु अर्थोबोध्यः। आढ्यंकरणमिति—आढ्य + कृ + अन ( ख्युन् ) इति स्थिते आढ्य + करणम् इति जाते मुम्। उपपदसमासः। च्व्यर्थे ( अभूततद्भावार्थमात्रे ) एव एतद्विधानम् च्विप्रत्यये विहिते तु नैवमित्यत आह—अच्वौ किमिति ? च्विप्रत्यये सत्यपि हि ख्युनिकृते फलाभावात्। न च मुमेवात्र फलमिति वाच्यम्। 'खित्यनव्ययस्य' ( २९४३ ) इति अनव्ययस्येति निषेधात्। 'ऊर्यादिच्विडाचश्च' (७६२) इति च्विप्रत्ययान्तस्य अव्ययत्वात्। न चैवमपि 'आढ्यीकरण'मित्येवास्तु इत्यपि वाच्यम्। तस्योत्सर्गेण ल्युटा ( 'करणाधिकरणयोश्च'—३२९३ इत्यत्र विहितेन ) एव सम्भवात्। एवं तर्हि स एवास्तु अस्तु च 'अढ्यीकरणम्' इति पदम् इति चेत्। नैवम्। आढ्यङ्करणम् इत्यनेनैव तदर्थस्य गतार्थत्वात् पुनस्तदर्थक-पदान्तरकल्पनागौरवात् अलक्षितत्वाच्च तादृशपदस्य लोके। तस्मादच्वौ इति प्रतिषेध-सामर्थ्यात् अत्र ल्युडपि न कर्त्तव्यः। ल्युट्ख्युनोः विहितयोः फले भेदाभावात्। अयमेव च काशिकाकृत आशय इति दर्शयितुमाह—इह प्रतिषेधसामर्थ्यादिति। भाष्यमते त्विति। भाष्यवार्त्तिकस्वरसेन अच्वाविति केवलसूत्रार्थमेव। तेन तद्विरोधाद् वृत्तिकृन्मतम् अयुक्तमिति कैयटः।

## २९७४। कर्तरि भुवः खिष्णुच्खुकञौ॥ ३।२।५७॥

**दी—। आढ्यादिषु च्व्यर्थेष्वच्व्यन्तेषु भवतेरेतौ स्तः। अनाढ्यः आढ्यो भवतीति आढ्यम्भविष्णुः। आढ्यम्भावुकः॥**

"स्पृशोऽनुदके क्विन्" ( ४३२ )। घृतस्पृक्। कर्मणोति निवृत्तम्। मन्त्रेण स्पृशतीति मन्त्रस्पृक्। "ऋत्विग् दधृक् स्रग् दिगुष्णिगञ्चुयुजिक्रुञ्चां च" ( ३७३ )—व्याख्यातम्। "त्यदादिषु दृशोऽनालोचने कञ्च" ( ४२८ ) 'समानान्ययोश्चेति वाच्यम्' ( वार्त्तिक )। सदृक्—सदृशः। अन्यादृक्—अन्यादृशः। 'क्सोऽपि वाच्यः' ( वार्त्तिक )—तादृक्षः। सदृक्षः। अन्यादृक्षः।

The root भू takes in the कर्तृवाच्य, these two affixes viz खिष्णुच् ( इष्णु ) and खुकञ् ( उक ) when आढ्य, सुभग etc (See Rule—2973), expressing the sense of च्वि but not actually taking it, precede as उपपद्s in the nominative. Thus धनाढ्यः etc. The meaning is clear. Note that ख in both the affixes is for मुम् by 'अरुर्द्विषत्'—(2942) whereas च् is for pitch ( स्वरार्थ ) and ञ् is for वृद्धि by 'अचो ञ्णिति' (254).

'स्पृशोऽनुदके—' (432—3.2.58). This is another rule following upon 'कर्तरि भुवः—' (4.2.57). The root स्पृश् takes the affix क्विन् when any उपपद save and except उदक precedes in the accusative or instrumental. Thus घृतं स्पृशतीति and मन्त्रेण स्पृशतीति etc. The ककारin क्विन् which drops all is to forbid गुण by 'क्ङिति च' (2217). See हलन्तपुंलिङ्गप्रकरणम्।

'ऋत्विकदधृक्—' (373—3.2.59). This comes after 'स्पृशोऽनुदके—' (3.2.59). These words are irregularly formed with क्विन् which drops all its letters i. e क्, न्, as also वि ( as it is an अपृक्त). Thus ऋतौ यजतीति ऋतु + यज् + क्विन् = ऋत्विक्. Similarly धृष् + क्विन् = दधृक् by द्वित्व। सृज् + क्विन् = स्रक् by अमागमः। दिश् + क्विन् = दिक्। उद् स्निह + क्विन् = उष्णिक् the final of the उपसर्ग being dropped and षत्व

coming in ; अञ्चु takes क्विन् when there is उपपद as in तिरस्+अञ्च+क्विन्=तिर्यञ्च् etc. युज् takes क्विन् when there is no उपपद. Similarly क्रुञ्च् ; see also हलन्तपुंलिङ्गप्रकरणम् (ante).

'त्यदादिषु—' (429—3.2.60). This is the third rule here in the order. The root दृश् excepting the sense of आलोचन or knowledge takes कञ् as also क्विन् when त्यद् etc ( सर्वनाम ) precede as उपपद्s. Thus तादृक् तादृशः etc. Here आत्व of the उपपद is by 'आ सर्वनाम्नः' (430). 'समानान्ययोश्च—' Varttika i. e दृश् in the sense above takes कञ् also क्विन् when समान and अन्य precede. Thus समानं पश्यति सदृशः ( कञ् ) and सदृश् ( क्विन् ) समान being स optionally in दृग्दृशवतुषु (1017). कसोऽपि—Varttika ; easy.

मित ।—कर्तरीति । 'आढ्यसुभग—' ( २९७३ ) इति सूत्रात् 'क्तञः करणे ख्युन्' इति वर्जयित्वा सर्वमनुवर्तते । तदाह—आढ्यादिष्विति । एतौस्त इति । कर्तृवाच्ये—इत्येव । तदाह—अनाढ्य आढ्यो भवतीत्यादि । खित्त्वम् 'अरुर्द्विषत्—' ( २७४२ ) इति मुमर्थम् । चित्त्वं तु स्वरार्थम् । आढ्यम्भविष्णुरित्युदाहरणम् । ख कञः खञावितौ । उकस्तिष्ठति । अत्रापि खित्वं मुमर्थम् । ञित्त्वं तु 'अचो ञ्णिति' ( २५४ ) इति वृद्ध्यर्थम् । आढ्यम्भावुक इत्युदाहरणम् । एवं सुभगम्भविष्णुरित्यादि । 'स्पृशोनुदके—' ( ४३०—३।२।५८ ) परवर्त्ति सूत्रमेतत् । अनुदके सुप्युपपदे स्पृशेः क्विन्नित्यर्थः । क्विन्प्रत्ययः सर्वलोपी । तथाहि कनावितौ इति लुप्यते । 'वि' इत्यस्यापृक्तत्वात् लुप्यते । तत्र ककारो गुणप्रतिषेधार्थः । नकारस्तु अनाद्युदात्तार्थोऽपि व्यर्थ इत्याकरे । अत्र कर्मणि करणे च प्रत्ययः । घृतस्पृक् । मन्त्रस्पृक् इत्युदाहरणे । अनुदके किम् ? उदकं स्पृशतीति उदकस्पर्शः । अण् । नच क्विपा उदकस्पृक् इति रूपं दुर्वारमिति वाच्यम् । अनुदके इति पर्युदाससामर्थ्यात् क्विपोऽप्रवृत्तेः । 'ऋत्विक् दधृक्—' (३७३—३।२।५९) इति परवर्ति सूत्रमेतत् । तत्रापि निपातनैः सह निर्देशात् किञ्चिल्लाक्षणिकम् अस्ति तद्यथा—अञ्चेः सकर्मकत्वात् कर्मण्येव प्राप्ते सुबन्तमात्रे विधीयते । युजिक्रुञ्चिभ्यां केवलाभ्यामेव । युजेर्विधानसामर्थ्याच्च । न हि

सोपपदाद युजे: क्विनि क्विपि वा विशेषोऽस्ति, कुत्वस्य 'चो:कु:' इत्यनेनैव सिद्धत्वात्। अनुपपदे तु 'युजेरसमासे—' इति नुमि कृते नकारस्य कुत्वार्थं क्विनो विधानं सार्थकं भवति। कुञ्चे: लोपाभावश्च निपात्यते। ऋतौ यजति ऋत्विक्। इह ऋतुशब्दे उपपदे यजे: क्विन्। ञिधृषा (धृष्) प्रागल्भ्ये। अस्य क्विन्, द्विर्वचनम्, इत्यादि निपात्यते—दधृक्। सृजे: कर्मणि क्विन्। अमागमश्च निपात्यते। दिशे: कर्मणि क्विन्। उत्पूर्वात् स्निहे: क्विन्। उपसर्गस्यान्तलोप:। सस्य षत्वम्—उष्णिक्। प्रकर्षेणाञ्चतीति प्राङ्। युनक्ति आत्मानमिति युङ्। सोपपदात्तु 'सत्सुद्विष—' इति क्विप्—अश्वयुक्।

'त्यदादिषु—' (४/८—३।२।६०) इति। तत: परमिदम्। आलोचनमिति ज्ञानवाचि। तेन अज्ञानार्थाद दृशे: त्यदादिषु उपपदेषु कञ् स्यात् चात् क्विन् इति सूत्रार्थ:। तादृश: तादृक् इत्युदाहरणे। एवं यादृश: यादृक् इत्यादि। आ सर्वनाम्न: (४३०) इत्यात्वम्। कञो ञकार: विशेषणार्थं इत्याकरे। अनालोचने किम्? तत् पश्यतीति तद्दर्श:। भाष्ये तु कर्मकर्तरि व्युत्पत्तिर्दर्शिता। तमिवेम' पश्यन्ति जना:। स इवायं पश्यति ज्ञानविषयीभवतीत्यर्थात्।

'समानान्ययोश्च' 'इति कसोऽपि'—इति चात्र वार्तिकद्वयम्। समानान्ययोरप्युपपदे दृशेरनालोचनार्थात् क्विन् कञ् क्स: इति प्रत्यया: सूत्रितार्थ:। सदृक् इति। दृक्दृशवतुषु (१०१७) इति समानस्य सभाव:। पक्षे समानदृक इत्यपि इति केचित्। एवं सदृश: सदृक्ष इत्यादि। अन्यादृक इत्यादौ तु आ सर्वनाम्न: (४३०) इत्यात्वम्।

**२९७५। सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्॥ ३।२।६१॥**

**टी—। एभ्य: क्विप् स्यादुपसर्गे सत्यसति च सुप्युपपदे। द्युसत्। उपनिषत्। अण्डसू:। प्रसू:। मित्रद्विट्। प्रद्विट्, मित्रध्रुक्। प्रध्रुक्। गोधुक्। प्रधुक्। अश्वयुक्। प्रयुक्, वेदवित्। निविदित्यादि। 'अग्रग्रामाभ्यां नयतेर्णो वाच्य:' (वार्त्तिक)। अग्रणी:। ग्रामणी:।**

The affix क्विप is attached to these (twelve) roots viz सद्, सू, द्विष, द्रुह, दुह, युज् विद्, भिद, छिद्, जि, नी and राज whether an उपसर्ग precede them or not, but provided a सुबन्त word stands as an उपपद in each case i.e. when a सुबन्त उपपद whether it is an उपसर्ग or not उपसर्ग stands leading the root. Here thus an उपसर्ग may or may not be termed as an उपपद or a word bearing contignity. Thus द्युसत् ( द्यु + सद् क्विप् )—deweller of heaven—here षत्व being barred by 'सात् पदाद्योः' (2117). उपनिषत्, षत्व by 'सदिरप्रतेः' (2271), अण्डसूः producing eggs, प्रसूः—a mother. मित्रद्विट्—a molester of friend. प्रद्विट् enemy. मित्रध्रुक् committing injury to a friend. प्रध्रुक् Injurer. गोधुक् a milkman. निविद् etc ; similarly—गृहभित्, वन्धनच्छित्, इन्द्रजित्, सेनानी and सम्राट्। 'अग्रग्रामाभ्याम्—' varttika—It must be said that the न of नी will become cerebral (मूर्धन्य) when coming after अग्र and ग्राम in connection with क्विप्. Thus अग्रणी etc.

मित—। सत्सु इति। षद्लृ ( सद् ) विशरणगत्यवसादनेषु। सू इति द्विषा-साहचर्य्यादादिकस्य सूतेरेव ग्रहणं न तु सूवतिसूयत्योः। युज इति युजिर् योगे, युज समाधौ इति द्वयोरेव ग्रहणम्। विद इति विद ज्ञाने, विद विचारणे विद सत्तायाम् इति त्रयाणामेव। न तु विद्लृलाभे इत्यस्यापि। विद्इत्यकारस्य अविवक्षित-त्वादित्याहुः। एभ्यो द्वादशभ्यः क्विप्। अत्र उपसर्गेऽपीति वचनम् अन्यत्र सुब्ग्रहणे उपसर्गग्रहणं नेति ज्ञापनार्थम्। अनुपसर्गे इत्यस्य निवृत्त्यैव सिद्धेः। तेन 'वदः सुपि क्यप् च 'इति विधिरुपसर्गे न भवतीति स्थितमाकरे। द्युषदिति—द्यु + सद् + क्विप। सात्पदाद्योः इति न षत्वम्। तथाच माघः "मनस्तु येन द्युसदां न्यधीयत' इति। दिविषदित्यादौ तु सुषामादित्वात् षत्वम् इत्याहुः। उपनिषदिति "सदिरप्रतेः' इति षत्वम। निविदित्यादीनि। काष्ठभित्। शत्रुजित्—'ह्रस्वस्यपिति—' इति तुक्। 'अग्रग्रामाभ्याम—'इति वार्तिकम्। आभ्यां परतो नयतेर्णत्वं स्यात् क्विपि

परे इति वक्तव्यमित्यर्थः। असमासपदत्वाद् णत्वे अप्राप्ते वचनम्। वस्तुतस्तु 'स एषां ग्रामणी' इति निर्देशादेवात्र णत्वं ज्ञापकन्यायेन प्राप्तम्। तत् सर्व-नीरूप-विषयमेव। ज्ञापकस्य सामान्यापेक्षत्वात्।

२८७६। भजो ण्विः ॥ ३।२।६२ ॥

दी—। सुप्युपसर्गे चोपपदे भजेर्ण्विः स्यात्। अंशभाक्।

The root भज् takes ण्वि ( the affix) when a सुप् or an उपसर्ग stands as an उपपद। अंशभाक् etc—expound as अंशं भजति etc, he is legible for an allotment. वृद्धि of उपधा by 'अत उपधायाः' (254)'

मित—। भज इति। अंशं भजतीति अंशभाक्। 'अत उपधायाः' ( २५४ ) इत्युपधावृद्धिः।

२८७७। अदोऽनन्ने ॥ ३।२।६८ ॥

दी—। विट् स्यात्। आममत्ति आमात्। सस्यात्। 'अनन्ने' किम्? अन्नादः।

The root अद takes विट् (the affix) when coming after any उपपद except अन्न. Thus आमात् (an eater of raw things) but अन्नादः (eater of rice).

मित—। अद इति।. 'छन्दसि सहः' ( ३।२।६३ ), 'वहश्च' ( ३।२।६४ ), 'कव्यपुरीषपुरीष्येषु ञ्युट्' ( ३।२।६५ ), 'हव्येऽनन्तः पादम्' ( ३।२।६६ ) 'जनसन खनक्रमगमो विट्' ( ३।२।६७ ) इति पञ्चसूत्री तु छन्दोभावविषया। तेनात्र परित्यक्ता। 'जनसन—' इत्यतस्तु विट इति प्रत्ययोऽनुवर्तते न तुच्छन्दसीत्यपि। तदेव पूरयन्नाह—विट स्यादिति। विट सर्वलोपी। टकारस्तु 'टिड्ढाणञ्—' इत्यादिना ङीबर्थः। आमम् अपक्वमित्यर्थः। अन्नाद इति—अत्र यथाप्राप्तमणेव।

२८७८। क्रव्ये च ॥ ३।२।६९ ॥

दी—। अदेर्विट्। पूर्वेण सिद्धे वचनमण्बाधनार्थम्। आम-मांसभक्षकः। कथं तर्हि 'क्रव्यादोऽस्रप आशर' इति? पक्वमांसशब्दे उपपदे अण्। उपपदस्य क्रव्यादेशः। पृषोदरादित्वात्।

अद् takes विट् also when क्रव्य precedes. Although the preceding rule covers this also yet the object of enunciating this is to forbid अण् here. Thus क्रव्यात्—a partaker of raw meat or flesh. Why then Amara reads 'क्रव्यादः—' which is obviously derived with अण्? Well derive it thus—पक्वमांस + अद् + अण्—now पक्वमांस being replaced by क्रव्य on the strength of the dictum—पृषोदरादित्वात् साधु।

मित—। क्रव्ये चेति। शेषं पूरयन्नाह—अदेर्विडिति। 'अदोऽनन्ने' इति पूर्वसूत्रेणैव अत्रापि विट भवत्येव। ततो योगविभागो व्यर्थ इत्याकाङ्क्षा—समाधत्ते। अण्बाधनार्थम् इति। तथाच पूर्वत्र अणपि भवति अन्नाद इति यथा। अत्र तु स नैव। नन्वेवं 'क्रव्यादः अस्रपः—' इत्यमरस्तु कथं स्यात्? तत्र क्रव्याद इत्यस्य अन्यथासिद्धिः इत्यत आह—पक्वमांसशब्दे इति। ततश्च पक्वमांसाद इति न किन्तु क्रव्याद इत्येवेति भावः। पृषोदरादित्वात्।

२८७९। दुहः कब्घश्च ॥ ३।२।७० ॥

दी—। कामदुघा।

When a सुबन्त word precedes as उपपद, the root दुह takes कप् and the final ( ह ) is replaced by घ। कामदुघा—a cow of that appellation, the dissolution being that which fulfills one's desire.

मित—। दुह इति। सुपि उपपदे दुहेर्धातोः कप्प्रत्ययः स्यात् प्रकृते र्घादेश्च इति सूत्रार्थः। कामदुघेति। तदाख्या धेनुरिति शेषः। यद्वा भेदकमिदम्। कामान् दोग्धीति विग्रहः।

२९८०। अन्येभ्योऽपि दृश्यते ॥ ३।२।७५ ॥

**दी—। छन्दसीति निवृत्तम्। मनिन्, क्वनिप्, वनिप्, विच् —एते प्रत्यया धातोः स्युः।**

The term छन्दसि made use of in the rule 'विजुपेछन्दसि' (3.2.73) does not extend so far. Thus the affixes मनिन, क्वनिप्, वनिप् and विच् enjoined in the previous rule 'आतो मनिन्क्वनिपवनिपश्च' (3.2.74) are instructed here in 'अन्येभ्योऽपि—' to be used after any root in the secular language (लौकिक भाषा) also if even such roots do not end in आ.

मित—। अन्येभ्योऽपीति। इतः पूर्वम् 'मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन्' (३।२।७१), 'अवे यजः' (३।२।७२), 'विजुपे छन्दसि' (३।२।७३), 'आतो मनिन् क्वनिव वनिपश्च' (३।२।७४) इति चतुःसूत्री छन्दोमात्रविषयेति नोपात्ता। तदाह— छन्दसीति निवृत्तमिति। 'आतो मनिन्—' इति सर्वमनुवर्तते तत्रस्थचकाराद् विचमप्यादाय आह—मनिन् क्वनिप् इत्यादि। अन्येभ्योऽपीति सर्वोपाधिव्यभिचारार्थम्। तेन अनाकारान्तेभ्योऽपि एते प्रत्ययाः स्युरुपपदे सत्यसति चेत्यभिप्रायः। तदाह सामान्येन—धातोरिति। एवं सुष्टु शृणातीति सु+शॄ+ मनिन् (मन्) इति स्थिते कृत्प्रत्ययानां मनिनादेरार्द्धधातुकत्वादिटि प्राप्ते आह—

२९८१। नेड्वशि कृति ॥ ७।२।८ ॥

**दी—। वशादेः कृत इण् न स्यात्। शॄ—सुशर्मा। प्रातरित्वा।**

The augment इट् is not prefixed to a कृत्affix beginning with वश् i. e having any letter of this प्रत्याहार at the outset. Thus सु+शॄ+मनिन् ( मन् )=सुशर्मन्=सुशर्मा by गुण and without इट्। "स्यात् सुशर्मा देवसभा"—Amara. प्रातरित्वा—प्रातर्+इ+क्वनिप् ( वन् )= प्रातरित्वन् ( one coming in the morning) no guna due to कित्, तकार coming in by 'ह्रस्वस्य पिति कृति तुक्' due to पित्त्व of क्वनिप्.।

मित—। नेड्वशीति। न+इट्+वशि इतिच्छेदः। वश् इति प्रत्याहारः। स च कृतो विशेषणम्। तेन तदादिविधिः। कृति षष्ठ्यर्थे सौत्रीसप्तमी। तदाह वशादेरिति। सुशर्मेति—। सार्वधातुकेति गुणः। अनेनेट्प्रतिषेधः। 'स्यात् सुशर्मा देवसभा' इत्यमरः। प्रातरित्वा—प्रातरेति इति विग्रहः। प्रातर+इ+क्वनिप् प्रातरित्वा—कित्वात्र गुणः। अनेनेट् प्रतिषेधः। अथ वनिपि विशेषमाह—

२९८२। विड्वनोरनुनासिकस्याऽत् ॥ ६।४।४१ ॥

टी॰—। अनुनासिकस्य आत् स्यात्। विजायत इति विजावा। ओणृ—अवावा। विच्—रोट्। रेट्। सुगण्।

आत् or आ is the substitute of the अनुनासिक ( नकार ) of a root followed by विट् and वन्. Thus वि+जन्+वनिप् (वन्)=विजावन्=विजावा in 1st. sing.—that which is born. ओणृ to remove. ओ+वनिप्=ओ आ वन्=अवावन् by 'एचोऽयवायावः' (61)=अवावा (a remover) as before. विच् (the affix which elides) is instanced in रोट् ( रुष+विच्=रोष् by गुण, वि eliding by 'वेरपृक्तस्य'—375) and रेट् ( रिष् +विच् ), सुगण् (one who counts well)—सु+गण्+विच्।

मित—। विड्वनोरिति। विटि वनि च परे धातोरनुनासिकस्य आदित्यादेशः स्यादित्यर्थः। विजावेति। वि+जन्+वनिप इति स्थिते आले विजावन्। ततः सौ उपधादीर्घ नलोपौ। अवावेति। ओणति अपनयतीति ओ+वनिप्=ओ आ+वन्=अवावा, एचोऽयवायावः ( ६१ ) इत्यनेन। ततः प्रागवत्। विचमुदाहर्तुं माह—

विच् इति। रौट् रेडिति। रुषरिषोरुत्तरं विचि स्थिते आर्धधातुकत्वाद् गुणः 'वेरपृक्तलोपः' (३७५) इत्यपृक्तस्य वकारस्य लोपश्च। सुगणिति—सुष्टु गणयतीति विग्रहः। ' विच। अथेदानीं प्रकृतमाह—

## २९८३। क्विप् च ॥ ३।२।७६ ॥

**दी—। अयमपि दृश्यते। 'सत्सुद्विष—' (२९७५) इति त्वस्यैव प्रपञ्चः। उखास्रत्। पर्णध्वत्। वाहभ्रट्।**

This i. e क्विप् also (like मनिन्, क्वनिप् etc under 2982) is seen to take place after any root. This is a general injunction and 'सत्सु—' (2975) is but an elaboration of the same. Thus उखास्रत् coming down or falling (स्रंसते) from an उखा (an utensil for boiling flesh), the नकार of स्रन्स् eliding by 'अनिदिताम्—' (415) and the final (स्) being द् by 'वसुस्रंसुध्वंस्वनडुहां दः' (334). पर्णध्वत् falling (ध्वंसते) from a leaf. वाहभ्रट्—falling (भ्रश्यति) from a horse (वाह)—वाह+भ्रन्श्+क्विप् (नलोप as before. श becomes ष and then ट by झश्त्व and चर्त्व); वहाभ्रश् (falling from the shoulder वह) is another reading found in the वृत्ति where आकार वा दीर्घ in वहा is defended by Haradatta by 'अन्येषामपि दृश्यते' (3539).

मित—। क्विप चेति। अन्येभ्योऽपीत्यतः (२९८०।३-२-७५) अव्यवहित—परवर्तीदं तदाह—अयमपि दृश्यते इति। मनिनादिवत् क्विपपि सर्वेभ्यो धतुभ्यः स्यादित्यर्थः। प्रपञ्च इति विशेषवचनमित्यर्थः। उखास्रदिति। उखेति मांसपचनस्थाली। ततः स्रंसते इति विग्रहः। क्विपि परे 'अनिदिताम्—' (३१५) इत्यनुनासिक लोपः। 'वंसुस्रंसु—' इत्यन्त्यसकारस्यदः। पर्णध्वदिति—पर्णाद् ध्वंसते इति प्रागवत्। वाहभ्रडिति। वाहाद् अश्वात् भ्रश्यति इति वाह+भ्रन्श+

क्विप्। प्रागवन्नलोपः। व्रश्च—इति षः। ततो जश्त्वचर्त्वाभ्यां टकारः। वहाभ्रडिति वृत्तौ पाठः। तत्र वहात् स्कन्धात् भ्रश्यति इति विग्रहः। अत्र 'अन्येषामपि दृश्यत' (३५३९) इति दीर्घ इति हरदत्तः।

२९८४। अन्तः॥ ८।४।२०॥

**दी—। पदान्तस्यानितेर्नस्य णत्वं स्यादुपसर्गस्थान्निमित्तात् परश्चेत्। हे प्राण्। 'शास इत्—' (२४८६) इतीत्वम्। मित्राणि शास्ति मित्रशीः। 'आशासः क्वौ उपधाया इत्वं वाच्यम्' (वार्त्तिक)। आशीः। इत्वोत्वे—गीः। पूः।**

The नकार of अन् (the root) following a पद is changed into ण provided the same (अन्) follows a cause (निमित्त) of णत्व existing in the उपसर्ग. Thus प्राण् the vocative of the base प्रान् one drawing breath. The vocative is instanced as the nominative is प्रा without the नकार whereas in the vocative the नकार does not elide due to the prohibition 'न ङिसम्बुद्ध्योः' (352) = प्र + अन् + क्विप्। In मित्र + शास + क्विप्, शास् is changed into शिस् by 'शासः—' (2486), then शीः by "वोरुपधायोः' = मित्रशीः—an instructer of friends. 'आशासः—varttika —It must be stated that the penultimate (उपधा) of आ + शास् becomes इ when क्वि i. e क्विप् or क्विन् follows. Note that शास is read along with आ—Cp आङः शासु इच्छायाम्। Thus आशास्ते इत्याशीः a word of good or benediction. The former शास् (as मित्राणि शास्ति—) is परस्मैपदी whereas this is आत्मनेपदी. Hence the the importance of the varttika as the root varies both in sense and sort. इत्वोत्वे i. e in गीः which is derived as गॄ + क्विप् we

have ह्रस्व—र् coming in by 'उरण्रपरः', then दीर्घ as before; whereas in पूः which is derived as पॄ+क्विप्, we have उत्त्व by 'उदोष्ठ्यपूर्वस्य' रपरत्व and दीर्घ taking place as before.

मित—। अन्त इति। 'रषाभ्यां नो णः—' इति 'अनितेः' (८।४।१९) इति च सर्वमत्रानुवर्त्तते। 'उपसर्गात्—' इत्यत उपसर्गादिति सूत्रे अन्त इति च सीतप्रथमा षष्ठ्यर्थे। तदाह—पदान्तस्येत्यादि। हे प्राणिति। प्रपूर्वादनितेः क्विपि प्रान् इति प्रातिपदिकम्। तस्य सौ हलङ्यादिना सुलोपे ततः नलोपेन प्रा इति रूपं भवति। पुनश्च नकारो नलभ्यत इति सम्बुद्धिमुदाहरति—हे प्राणिति। 'न ङिसम्बुद्ध्योः' इति नलोपाभावः ततो णत्वम्। मित्राणि शास्ति इति मित्र+शास्+क्विप् इति स्थिते शासेरुपधाया इत्वार्थमाह—'शास इत्—' इति। एवं मित्रशिस् इति जाते 'र्वोरुपधायाः' इति दीर्घे मित्रशीरिति। 'आशासः—' इति वार्त्तिकमिदम्। आङ्पूर्वाद् शासेः क्वौ परे उपधाया इत्वं स्यादित्यर्थः। ततः आङ् शास+क्विन् इति स्थिते इत्वे प्राग्वत्। नन्वेवं 'शास इत्—' इत्यनेनैव इत्वम् अस्तु। मास्तु वार्त्तिकम् इति चेन्न। पूर्वत्र शासेरात्मनेपदित्वाभावेन आत्मनेपदाशासः प्राप्त्यर्थं वार्त्तिकारम्भस्य प्रयोजनत्वात्। वस्तुतस्तु 'आशिषि लिङ्लोटौ' इत्यादिज्ञापकादेवेदं सिद्धमिति नापूर्वमिदं वार्त्तिकम्। तेन बाध्यमित्यस्य व्याख्येयमित्याह। वार्त्तिके क्वाविति क्विप्क्विनोर्ग्रहणम्। इत्वेन इति। गौरित्यत्र चरत इत्यातोरितीत्वम्। तस्य उरण्रपर इति रपरत्वं, 'र्वोरुपधाया' इति दीर्घः। चरणातीति विग्रहः। पूरित्यत्र तु 'उदोष्ठ्यपूर्वस्य' इति उत्वे रपरत्वे च प्राग्वत्। अथ प्रसङ्गात् क्विप उदाहरणान्तराणि दर्शयितुमाह—

२८८५। दस्मान्ध्वन्क्विषु च ॥ ६।४।१९ ॥

टी—। एषु छादेः ह्रस्वः स्यात्। तनुच्छत् ॥ 'अनुनासिकस्य क्वि—' (२६६६) इति दीर्घः। 'मो नो धातोः' (३४१)। प्रतान्। प्रशान्। 'च्छ्वोः—' (२५६१) इत्यूठ्। अक्षद्यूः। 'ज्वरत्वर—' (२६५४) इत्यूठ्। जूः। जरौ। जूरः। तूः। स्रू:।

ऊठ्, वृद्धिः—जनानवतीति जनौः। जनावौ। जनावः। मूः। मुवौ। मुवः। सुमूः। सुम्वौ। सुम्वः।'राल्लोपः' (२६५५)। मूर्च्छा—मूः। मुरौ। मुरः। धुर्वी—धूः।

The root छादि becomes ह्रस्व i.e the उपधा of the same is ह्रस्व when इस्, मन् त्रन् and कि ( क्विप् क्विन् ) follow. Thus छदः ( छादइस् ) a shed.—छद्म ( छाद+मन् ) a pretext, छत्रम् ( त्रन् ) umbrella. तनुच्छत् ( तनु+छाद+क्विप् ) an armour or a dress. प्रतान्—प्र+तन्+क्विप् दीर्घ by 'अनुनासिकस्य क्विझलोः—' (2666). प्रशान्—प्र+शम्+क्विप् by 'मो नो—' (341) and 'अनुनासिकस्य—'। अक्षद्यूः—One who plays with dice—अक्ष+दिव्+क्विप्=अक्ष+दि ऊठ् by 'च्छ्वोः—' (2861), it directs ऊठ् in place of व=अक्षद्यूः by 'इको यण्—' (47). जूः—ज्वर+क्विप्=जूर् by 'ज्वरत्वर—' (2654) which directs ऊठ् in place of व. so also तूः—त्वर्+क्विप्। स्रूः—स्रिव्+क्विप्+ऊठ् by 'ज्वरत्वर—'। जनौः—the protector of men, जन्+अव्+क्विप्=जन्, अ ऊठ by 'च्छ्वोः—' (2561)=जनौ by 'एत्येधत्यूठ्सु'। मूः—मव्+क्विप्+ऊठ्। मुवौ etc—उवङ् by 'अचिश्नु—' (271), सुम्वौ etc यण् by "ओः सुपि" (281). मूः—मुर्च्छतीति (on who faints) मुर्च्छा+क्विप्=मुर् by 'राल्लोपः (2655) then apply र्वोरुपधायाः। Similarly धूः।

मित—। इस्मन्निति। इस्, मन्, त्रन्, कि ( क्विप् क्विनौ ) इत्येते प्रत्ययाः। 'छादेर्घेऽद्व्युपसर्गस्य' (६।४।९६) इत्यतश्छादेरिति। 'खचि ह्रस्वः' (६।४।९४) इत्यतो ह्रस्व इति चानुर्वतते। तदाह—एषु छादेरित्यादि। तत्र क्विपि आह—तनुच्छदिति। तनुं छादयतीति विग्रहः। इसादिषु तु छदिः, छद्म, छत्रम् इत्येते क्रमेण बोध्याः। प्रतनोतीति प्रतानित्यत्र 'अनुनासिकस्य क्विझलोः—' (२६६६) इत्यनेनोपधादीर्घः। प्रशाम्यतीति प्रशानित्यत्र तु 'मो नः—' (३४१) इत्यनेन मस्य नत्वे प्राग्वदुपधादीर्घः। अक्षैर्दीव्यतीत्यक्षद्यूः, इत्यत्र अक्ष+दिव् क्विप् इति स्थिते

'छ्वोः—' (२५६१) इति वस्य ऊठि रूपसिद्धिः। अथ जूरित्याद्यर्थमाह—'ज्वरत्वर—' इति। 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (२६५४) इति पूर्णं सूत्रम्। एषुं ज्वरतित्वरत्यादीनाम् स्वरसहितवकाराणां क्विवि परे अनेन ऊठि क्रमेण जूः, तूः, स्रूः, ऊः,—(जन + ऊः = जनौः),—इति भवति। जनावौ जनाव इति तु अवादेशेन लभ्यते। मुवौ मुव इति तु 'अचिश्नु—' (२७१) इत्युवङा लभ्यम्। मुव्वौ मुव्व इति "ओः सुपि" (२८१) इति यणादेशेन। मुर्च्छतीति मूः इत्यत्र मुर्च्छ + क्विप् इति स्थिते 'राल्लोपः' (२६५५) इति सतुकस्य छस्य लोपे मुर इत्यस्य 'र्वोरुपधायाः' इति दीर्घे रूपम्। मरौ मुर इति। अपदन्तत्वान्न दीर्घः। एवं धूरित्यत्र।

२९८६। गमः क्वौ ॥ ६।४।४० ॥

टी—। अनुनासिकलोपः स्यात्। अङ्गगत्। "गमादीनामिति वक्तव्यम्" (वार्तिक)। पुरीतत्। संयत्। सुनत्। "ऊङ् च गमादीनामिति वक्तव्यम् लोपश्च" (वार्तिक)। अग्रेगूः। अग्रेभूः।

The nasal or अनुनासिक of गम् disappears when followed by क्वि i. e. क्विप् and क्विन्. Thus अङ्गगत्—a repairer to the Angas—अङ्ग + गम् + क्विप् = अङ्ग + ग० क्विप् = अङ्गगत् by "ह्रस्वस्य पिति कृति तुक्"। 'गमादीनाम्—' varttika. Not only of गम् but of such other roots the nasal disappears when क्वि follows. पुरीतत्—पुरि + तन् + क्विप् = पुरि is the core of the heart. Hence the term refers to the soul within. Here दीर्घ is effected by नहिवृति (1037). संयत्—सम् + यम् + क्विप्—receiving all within. सुनत्—सु + नम् + क्विप्—a good adorer. 'ऊङ् च—' varttika· It must also be said that the 'उपधा' of गम् etc is replaced by ऊ and the अनुनासिक elides as before. Thus

one who goes ahead gives अग्रे + गम् + क्विप् = अग्रेगूः, similarly one standing ahead = अग्रेभूः, the locative ( अग्रे ) being retained in each case by 'तत्पुरुषे कृति बहुलम्'।

मित—। गम इति। 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपः झलि क्ङिति' (६।४।३७) इत्यतोऽनुनासिकलोप इत्यनुवर्तते। तदाह—अनुनासिकेति। क्वौ परे गम इति शेषः। अङ्गगादिति। अङ्गानि देशविशेषम् गच्छतीति विग्रहः। मलोपादूर्ध्वं 'ह्रस्वस्यपिति—' इति तुक्। 'गमादीनामिति—' वार्तिकम्। गम इत्यनुक्त्वा गमादीनामित्येव सूत्रितव्यमित्यर्थः। अन्यथा पुरीतदित्यादीनां दुरुपपादत्वात्। तथाहि पुरि हृदयगुहा। तां तनोतीति विग्रहे तनोतेरनुनासिकलोपे 'नहिवृति—' (१०३७) इति पूर्वपदस्य दीर्घे च पुरीतदिति लभ्यते। गुहाश्रयो जीववह्निः इति तदर्थः। अन्ये तु 'हृदयकमलाच्छादको मेदोविशेष' इत्याह। संयच्छतीति संयत्—सम् + यम् + क्विप्। सुष्ठु नमतीति सुनत्—सु + नम् + क्विप्। प्राग्वत्। ऊङ्चेति वार्तिकम्। गमादीनामुपधाया ऊङ् अनुनासिकस्य ( लोपश्च वाच्य इत्यर्थः ), अग्रेगूः, अग्रेभूः—अग्रे गच्छति, भवति चेति विग्रहः। 'तत्पुरुषे कृति—' इति सप्तम्या अलुक्।

## २९८७। स्थः क च ॥ ३।२।७७ ॥

दी—। चात् क्विप्। शंस्थः। शंस्थाः। 'शमिधातोः—' (२९२८) इत्यचं बाधितुं सूत्रम्।

The root स्था preceded by any उपपद takes क aswell as क्विप्। Thus शंस्थः—शम् + स्था + क—One enjoying ease (शम्), स्था becomes स्थ by 'आतो लोपः—' (2372) whereas शंस्थाः of the same sense is derived as शम् + स्था + क्विप्। This rule is to bar the affix अच् directed by 'शमिधातोः संज्ञायाम्' (2628) as क and क्विप are already directed by 'सुपि स्थः' (2216) and 'क्विप् च' (2983).

मित—। स्थ इति। 'क्विप् च' ( २९८३—३।२।७६ ) इत्यतः क्विप् इत्यनुवर्तते। तदाह—चात् चकरात् क्विप् इति। अयं सूत्रार्थः—सुपि उपपदे तिष्ठतेः कः स्यात् क्विप् च। सूत्रे कैत्यविभक्तिको निर्देशः। शंस्थ इति। अत्र शमुपपदात् तिष्ठतेः कः। 'आतो लोप इटि च' ( २२७२ ) इत्यालोपः। शमित्यव्ययं सुखपर्य्यायः। तेन सुखस्थ इत्यर्थः। शंस्था इति—अत्र क्विप्। क्विप् सर्वलोपीत्युक्तम्। ननु 'सुपिस्थः' ( २९१६ ) इति कप्रत्यये 'क्विप् च' ( २९०३ ) इति क्विप् प्रत्यये च सिद्धे, सूत्रमिदं व्यर्थमित्याशङ्क्य विवक्षितमाह—'शमि धातोः—( २९२८ ) इति। अचमिति अच्प्रत्ययमित्यर्थः। ननु शंस्था इत्यत्र क्विपि लुप्ते 'प्रत्ययलोपेऽपि प्रत्ययलक्षणम्' इति पारिभाषिकसूत्रेण प्रत्ययलोपस्य स्थानिवद्भावात् 'घुमास्था—' इति ईत्त्वं स्यादिति चेत् न। स्थानिवद्भावस्य अनल्विधाविति निषेधात्।

२९८८। सुप्यजातौ णिनिस्ताच्छील्ये॥ ३।२।७८॥

टी—। अजात्यर्थे सुपि धातोर्णिनिः स्यात् ताच्छील्ये द्योत्ये। उष्णभोजी। शीतभोजी। 'अजातौ' किम्? ब्राह्मणानामन्त्रयिता। 'ताच्छील्ये' किम्? उष्णं भुङ्क्ते कदाचित्। इहवृत्तिकारेणो-पसर्गभिन्न एव सुपि णिनिरिति व्याख्याय 'उत्प्रतिभ्यामाङिसर्तेरुपसङ्ख्यानम्' इति पठितम्। हरदत्तमाधवादिभिश्च तदेवानुसृतम्।* एतच्च भाष्यविरोधादुपेक्ष्यम्। प्रसिद्धश्चोपसर्गेऽपि णिनिः। 'स बभूवोपजीविनाम्', 'अनुयायिवर्गः'। 'पतत्यधो धाम विसारि'। 'न वञ्चनीयाः प्रभवोऽनजीविभिः' इत्यादौ। 'साधुकारिण्युपसङ्ख्यानम्' (वार्तिक)। 'ब्रह्मणि वदः' (वार्तिक)। अताच्छील्यार्थं वार्तिकद्वयम्। साधुदायी। ब्रह्मवादी।

When a सुप् i.e a सुबन्त word which does not convey the sense of जाति or class like ब्राह्मण etc, precedes, any root may take the

affix णिनि ( —इन् ) provided the derivative denotes ताच्छील्य or habit. Thus उष्णभोजी etc ( one habitually taking one's meal while it is hot—उष्ण + भुज् + णिनि—गुण by 'पुगन्तलघूपधस्य च'). ब्राह्मणान् आमन्त्रयिता—Here ब्राह्मणामन्त्री cannot be formed by adding णिनि, for ब्राह्मण denotes a class. In ब्राह्मण, here we have द्वितीया as षष्ठी in connection with तृन् which is employed in the sense of ताच्छील्य is barred by the rule 'न लोकाव्ययनिष्ठाखलर्थतृनाम्'। 'उष्णं भुङ्क्ते कदाचित्'—it does not result in उष्णभोजी as कदाचित् implies no habit. Here in this rule वृत्तिकार i.e the author of काशिकावृत्ति explains as "णिनि is attached to a root when a सुप् only other than an उपसर्ग precedes as उपपद" and reads the varttika 'उत्प्रतिभ्याम्—' meaning स takes णिनि in the sense of ताच्छील्य even when उपसर्गs like उद् and प्रति etc. precede as उपपदs. Haradatta, Madhava and others also followed this i. e accepted this varttika or explanation. [Note that we have followed हरदत्त under "अनुगादिनष्ठक्" and "विसारिणो मत्स्ये" ]। But this ( वृत्ति ) being contrary to भाष्य we have to reject it. Thus भाष्य has "सुप् इत्यनुवर्तमाने पुनः सुब्ग्रहणं सुप्मात्रे यथा स्यात्" ; more ever, णिनि is profusely used in connection with उपसर्गs also cp—भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम् । अधृष्यश्चाभिगम्यश्च यादोरत्नैरिवार्णवः' (रघु—1st), व्रताय तेनानुचरेण धेनोर्न्यषेधि शेषोऽप्यनुयायिवर्गः' ( रघु—2nd ) also वशिष्ठधेनोरनुयायिनं तम् आवर्तमानं वनिता वनान्तात्, 'पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ( माघ—1. 2 ), क्रियासु युक्तैर्नृप चारचक्षुषो न वञ्चनीयाः प्रभवोऽनुजीविभिः' ( भारवि—1st. ) etc., In these ( and a lot of other cases ) we find णिनि attached after उपसर्गs. Thus also the said वृत्ति must be set aside. 'साधुकारिणि—' (varttika) 'ब्रह्मणि—'

(varttika)—These varttikas imply that णिनि is attached here to कृ ( साधुकारी ), दा ( साधुदायी ) ( here कृ includes all roots in general ) and वद ( ब्रह्मवादी ) in the sense of no-habit. Thus साधुकारी etc denote that the person referred to might have done this very well only etc. Here ब्रह्म means the veda. [ N. B.—It is not necessery that "साधु" should he mentioned for साधुकारिणि णिनि । ]

मित—। सुपीति। सुपि + अजातौ णिनिः ताच्छील्ये इतिच्छेदः। अजात्यर्थे सुपीति। अयमर्थः—अजातिवाचिनि सुबन्ते उपपदे धातोः कर्तरि णिनिप्रत्ययः स्यात् ताच्छील्ये ( तत्स्वभावतायाम् ) गम्यमाने इति। उष्णभोजीति। उष्णं भुङ्क्ते इति विग्रहः। पुगन्तलघूपधस्य चेति गुणः। एवमन्यत्र। ब्राह्मणानिति। अत्र ब्राह्मणशब्दस्य जातिवाचित्वाद् ब्राह्मणामन्त्री इति न आमन्त्रयितेत्यत्र ताच्छीलिकतृनः सद्भावाद् 'न लोकाव्ययनिष्ठा—' इति षष्ठीप्रतिषेधाद् ब्राह्मणान् इत्यत्र द्वितीया। कदाचिदिति। ताच्छील्याभावद्योतनार्थमिदम्। 'सुपि स्थः' (२९२६—३।२।४) इत्यत्र "सुपीत्यनुवर्तमाने पुनः सूत्रे सुबग्रहणं किमर्थम्। अनुपसर्ग इत्येवं तदभूत्। इदं तु ( सूत्रम् ) सुब्मात्रे यथा स्यात्। उदासारिण्यः। प्रत्यासारिण्यः" इति। "अस्यायमाशयः। सत्सुद्विषेति सूत्रे 'सुपिस्थः' इत्यतः सुपीत्यनुवर्तते। तच्चोपसर्गेतरपरम्। उपसर्गेऽपीति पृथगुक्तेः। तदिहानुवर्तमानम् अथाधिकारादुपसर्गेतरपरमेव स्यादिति। निष्कर्षः तु—मा भूदिह केवलसुब्ग्रहणम्। उपसर्गेऽपीत्यंशस्यानुवृत्त्या निर्वाहात्। ततः सर्वथापि सुम्मात्रे उपपदे णिनिः। नत्वनुपसर्गेऽपीति भाष्यसिद्धान्तः। सर्वमेतत् शब्दकौस्तुभे मनोरमायाञ्च स्पष्टमिति। एवं स्थिते वृत्तिकृन्मतमपास्तमिति मन्वानस्तद्व्याख्याम् प्रत्याचष्टे—इह वृत्तिकारेण इत्यारभ्य एतच्च भाष्यविरोधादुपेक्ष्यमित्यन्तेन। एवं वृत्तिग्रन्थानुसारिहरदत्तमाधवादयोऽपि प्रत्युक्ता द्रष्टव्याः। ननु क्वनाम भवता सोपसर्गणिनिर्लक्षित इत्याशङ्क्य आह—प्रसिद्धश्चेति। उदाहरति—स बभूवेति। 'भीमकान्तैर्नृपगुणैः स बभूवोपजीविनाम्' ( रघु १म ) इति पूर्णश्लोकपूर्वार्द्धम्। अनुयायिवर्ग इति। एतच्च तत्रैव द्वितीयसर्गे—'व्रताय तेनानुचरेण

धेनोर्बुभुत्सोः शिषोऽप्यनुपालिवर्गः। इति पूर्वार्द्धम्। मतल्पम इति। एतच्चिह्नपालकस्य प्रथमे—गत तिरश्चीनमनूरुसारथेरित्यत्र द्रष्टव्यम्। न वक्लीशा इति। क्रियासु युक्तैर्नृप चारचक्षुषो—' इत्यपेक्षितांशः (किरातार्जुनीयस्य प्रथमः सर्गः) इत्यादाविति। आदिपदेन जलाभिलाषी जलमाददानाम् ( रघु २य ) 'अरिष्टशय्यां परितो विसारिणा, ( रघु—३य ) इत्यादीनां संग्रहः। तस्मादुपसृष्टादपि धातोर्णिनिर्न दुर्लभ इति उपसर्गभिन्ने एवेति व्यक्तिखल्वाख्यानमपास्तमिति भावः*। उपजीविनामित्यादौ च उपादय उपसर्गा अपि सुमुमावार्थपर्यवसिता इति प्रत्येतव्यम्। ततः 'सुप्यजातौ—' इति णिनिः प्राप्नोति। साधुकारिणीलिवार्त्तिकमिदम्। करोतिरत्र सर्वधात्वर्थानुवादक इति नागेशः। ब्रह्मणीति। एतदपात्र वार्तिकम्। ननु सूत्रेणैव सिद्धे किमर्थमत्र वार्त्तिकद्वयमित्यत आह—अताच्छील्यार्थमिति। तेन साधु करोति ददाति वा कदाचिदिति विग्रहेऽपि साधुकारी साधुदायीति भवत्येवेति भावः। ब्रह्मवादीति। ब्रह्म वेदः। तद्वदतीति विग्रहः। अत उपधायाः ( २२८२ ) इति वृद्धिः। साधुदायीत्यत्र तु 'आतो युक्—' इति युगागमः।

**२९८८। कर्त्तर्युपमाने ॥३।२।७९॥**

**टी—। णिनिः स्यात्। उपपदार्थः कर्त्ता प्रत्ययार्थस्य कर्तुरुपमानम्। उष्ट्र इव क्रोशति उष्ट्रक्रोशी। ध्वाङ्क्षरावी। अताच्छील्यार्थं जात्यर्थं च सूत्रम्। 'कर्त्तरि' किम्? अपूपानिव भक्षयति माषान्। 'उपमाने' किम्? उष्ट्रः क्रोशति।**

When a subjective उपमान i. e a subject as उपमान stands as उपपद, any root may take the affix णिनि। The subject of of the उपपदार्थ stands in analogical connection with the subject of the प्रत्ययार्थ. In other words in the sentence उष्ट्र इव क्रोशति, it is made up of two minor sentences viz—यथा उष्ट्रः क्रोशति तथा

* अत्र मूले—"तत्र" इति तत्त्वबोधिन्यां पठ्यते।

(स) क्रोशति. Here उष्ट्र is termed as उपपदार्थः कर्ता and the agent of क्रोशति in the above (स who is उष्ट्रक्रोशी) is spoken of as प्रत्ययार्थः कर्ता which bears similarity to the former in point of क्रोशन or making noise. Similarly धाङ्क्षरावी—crying or making noise like a crow (धाङ्क्ष). This rule is meant to take effect where there is no ताच्छील्य or habit and where there is a जाति or class. अपूप etc (fried cakes etc) is obj. hence no णिनि though there is similarity. उष्ट्रः etc—no similarity, no णिनि ।

मित—। कर्तरीति। कर्तृवाचिनि उपमाने उपपदे सति धातोर्णिनिः स्यादित्यर्थः। तच्छेषमात्रं पूरयन्नाह—णिनिःस्यादिति। उपपदार्थ कर्तेति। उपपदम् अर्थः प्रयोजनमस्येति विग्रहः। उपपदरूपेण वर्तमानः कर्त्तेत्यर्थः। प्रत्ययार्थः कर्तेति। प्रागवद् विग्रहः। क्रोशतीत्यत्र हि सोऽसावादिः कश्चित् कर्ता अभिधेयत्वेन प्रतीयते। स एव प्रत्ययार्थः कर्ता। उष्ट्रवच्छब्दायत इति तदर्थः। धाङ्क्षरावीति। काक इव रौतीत्यर्थः। नेदं ताच्छील्ये द्योत्ये अजातिपरे चोपपदे प्रवर्तत इत्याह—अताच्छील्यार्थं जात्यर्थञ्चेति। अपूपानिवेति—अत्र सत्यप्युपमाने तदर्थः कर्ता नास्ति। अतो न णिनिः। उष्ट्रः क्रोशतीति—अत्र सत्यपि कर्तरि उपमा नास्तीति णिनेरभावः।

## २९९०। व्रते ॥ ३।२।८० ॥

## टी—। णिनिः स्यात्। स्थण्डिलशायी।

When a सुप् stands as उपपद any root may take णिनि provided the observance of a vow is implied. Thus स्थण्डिलशायी (स्थण्डिल—शी + णिनि) one lying on the altar or purified भूमि।

मित—। व्रत इति। सुपि उपपदे धातोर्णिनिः स्याद्व्रतं गम्यते चेदिति सूत्रार्थः। अत्र धातूपपदप्रत्ययसमुदायाद् व्रतस्य गम्यमानत्वमिति बोध्यम्। एवम् श्राद्धभोजीत्यादौ। अयमपि अताच्छील्यार्थम् अजात्यर्थं आरम्भ इत्याहुः।

२९९१ । बहुलमाभीक्ष्ण्ये ॥ ३।२।८१ ॥

टी—। पौनःपुन्ये द्योत्ये सुप्युपपदे णिनिः । क्षीरपायिण उशीनराः ।

When frequency is implied, a root, preceded by any सुप् as उपपद may take the affix णिनि irregularly or in various ways. Thus क्षीरपायी (the drinker of milk) etc. There युक् (य) comes in by 'आतो युक् चिण्कृतोः' (2761). Here we have जात्यर्थे णिनि which was not to be had from any of the preceding rules.

मित—। बहुलमिति । आभीक्ष्ण्यमिति पौनःपुन्यं तदाह—पौनःपुन्य इति । अत्र बहुलं णिनिरित्यर्थः । तथाच जात्यामुदाहरति—क्षीरपायिण इति । आतो युगिति युक् । "बहुलग्रहणात् 'कुल्माषखाद' इत्यत्र न भवति" इति वृत्तिकारः । बहुलग्रहणात् व्रतार्थे क्वचित् सुबभावेपि णिनिरिति वयं मन्यामहे, तेन "बर्ह्येषंसिनि" इत्यादिसुव्याख्यातं भवति । यद्वा एवमादि साधारणबाहुलकेन समाधेयम् ।

२९९२ । मनः ॥ ३।२।८२ ॥

टी—। सुपि मन्यतेर्णिनिः स्यात्—दर्शनीयमानी ।

When a सुप् precedes as उपपद, णिनि is applied after the root मन् ( दिवादि ). Thus दर्शनीयमानी—he thinks himself handsome. वृद्धि by 'अत उपधायाः' (2282).

मित—। मन इति । बहुलग्रहणादेव दैवादिकस्यैव मन्धातोर्ग्रहणं न तु तानादिकस्य । तैर्मोत्तरसूत्रे खशि श्यनेव भवतीत्याहुः ।

२९९३ । आत्ममाने खश्च ॥ ३।२।८३ ॥

टी—। स्वकर्मके मनने वर्तमानान्मन्यतेः खश् स्यात् । चाण्णिनिः । पण्डितमात्मानं मन्यते पण्डितम्मन्यः—पण्डितमानी ।

'खित्यनव्ययस्य' (२७४३)। कालिंमन्या। 'अनव्ययस्य' किम्? दिवामन्या।

When any सुप् precedes as उपपद, the root मन् signifying मनन (mental thought) of which one's own self is the object, takes खश् as also णिनि। In पण्डितम्मन्य: (पण्डित—मन्+खश्) we have मुम् by 'अरुर्द्विषत्—' (2992) and य in मन् by 'दिवादिभ्य: श्यन्' (2505) as खश् is शित्. कालिंमन्या—with मुम् by 'अरुर्द्विषत्—' and with ह्रस्व by 'खित्यनव्ययस्य' (2943)—due to खश्. Thus it is evident that the text takes the root of the दिवादि class otherwise the form would also have been पन्डितम्मनु: etc by 'तनादिकृञ्भ्य उ:' had this मन belonged to तनादि class. In दिवामन्या there is neither मुम् nor ह्रस्व as दिवा is an अव्यय which falls under the prohibition—'अनव्ययस्य'।

मित—। आत्ममाने इति। मननं मान:। आत्मशब्द: स्वपर:। कर्मणि षष्ठ्या समास:। प्रत्ययार्थत्वेन सन्निहित: कर्ता स्वपदार्थ:। तेन आत्मकर्मकमनने वर्त्तमानान्मन्यतेरित्यादिरर्थ:। तदाह—स्वकर्मके मनन इति। खश: खकारो ह्रस्वाद्यर्थश्च शकारस्तु श्यन्नर्थ:। तदाह—पण्डितम्मन्य इति। अरुर्द्विषदिति मुम्। दिवादिभ्य: श्यन्निति श्यंश्च। खित्करणस्य प्रयोजनान्तरं ह्रस्वं दर्शयति—कालिंमन्येति। कालीमात्मानं मन्यत इति विग्रह:। 'स्त्रिया: पुंवत्—' इति प्राप्तं पुंवद्भावं बाधित्वा खित्यनव्ययस्येति ह्रस्व:। मन्यतेर्दैवादिकत्वाद्दैवात्र खशि परे श्यन् प्राप्त:। अन्यथा (तानादिकत्वे सति) तनादिकृञ्भ्य उरिति उविकरण एव स्यादिति ध्येयम्। दिवामन्येति—अत्र दिवा शब्दस्याव्ययत्वाद् मुमह्रस्वौ न। दिवा (तद्वत् प्रकाशमयं निर्म्मलं वा) आत्मानं मन्यत इति अत्र विग्रह:। एवं दर्शनीयम्मन्या कुमारीत्यादि। आत्ममाने किम्? दर्शनीयमानी देवदत्तो यज्ञदत्तस्य।

२९९४। इच एकाचोऽम्प्रत्ययवच्च ॥ ६।३।६८॥

दी—। इजन्तादेकाचोऽम् स्यात् स च स्वाद्यम्वत् खिदन्ते

परे। 'औतोऽम्शसो:' (२८५)। गाम्मन्य:। 'वाम्शसो:' (३०२)—स्त्रियम्मन्य:—स्त्रीम्मन्य:। नृ—नरम्मन्य:। भुवम्मन्य:। 'श्रियमात्मानं मन्यते श्रिमन्यं कुलम्—'। भाष्यकारवचनात्श्री-शब्दस्य ह्रस्वो मुममोरभावश्च।

This rule is elliptical and is thererore to be read thus (1) 'इच एकाचोऽम्' and (2) अम् प्रत्ययवच्च. Now look at the explanation of Bhattoji. There in the vritti 'स्वादि' is supplied by the Bhashyakara and another 'खिदन्ते परे' has been carried down from the preceding rule 'खित्यनव्ययस्य' (2943—6.3. 66). Thus the rule means—

An उपपद or a base ending in any of the letters of इच् प्रत्याहार and being composed of one अच् or vowel only takes the affix अम् which is to be treated as that ( अम् ) instructed under स्वादि—( सु + आदि ) or सुबन्तप्रकरण, when a term ending in खित् or खeliding affix (such as खश् etc) follows. As for example गाम्मन्य:—He thinks himself a cow—Here the procedure is thus गो + मन्य by 'सुपोधातुप्रातिपदिकयो:' (650) ( मन्य being derived as मन् + खश् as before) = गो + अम् + मन्य by this rule = गा + अम् + मन्य by 'औतोऽम्शसो:' (285) which directs आ in place of औ = गाम् + मन्य = गाम्मन्य, the मकार of the affix ( अम् ) not being dropped by 'न विभक्तौ तुस्मा:' 190). Similarly स्त्रियंमन्य and स्त्रींमन्य (He thinks himself a woman) except that ईकार of स्त्री is optionally replaced by इयङ् enjoined by 'वामशसो:' (302). नरम्मन्य (He thinks himself a man) नृ + मन्य—ऋ being gunnated in connection with अम् by 'ऋतो ङिसर्वनामस्थानयो:' (275). भुवम्मन्य (he thinks him as representative of the earth)

=भ्रू+मन्य, in con. with उवङ् when अम् comes in by 'अचिश्नु' (271). श्रियम् etc—It thinks itself (i,e it is taken to be as prosperous) as Prosperity (herself)—gives श्रिमन्य ( श्री + मन्य = श्रि + मन्य ). On the strength of the testimony of Bhashya the term श्री has become short ( श्रि ) as also there is want of सुम् and अम्। The drift is this—The dissolution श्रियम् आत्मान् मन्यते, if componded would give श्रियम्मन्य by the rule 'इच एकाचः—' the ईकार of श्री being replaced by इयङ् directed by the rule 'अचि श्नु धातु—' (271) when अम् follows which is स्वाद्यम्वत्। Thus judged in conformity with the rules of Panini the correct form is श्रियम्मन्य and श्रिमन्य is objectionable. But as the last and most prominent authority the author of Mahabhasya ( पतञ्जलि ) insists on the latter form ( श्रिमन्य ) and there runs the परिभाषा 'यथोत्तरं मुनीनां प्रामाण्यम्'— we have no other alternative but to accept श्रिमन्य as correct and rather reject the former ( श्रियम्मन्य ) although arrived at in conformity with Panini rules. The form श्रिमन्य is derived thus—श्रियम् आत्मानं मन्यते—श्री + मन् + खश् by 'सुपो धातुप्रातिपदिकयोः' ( 50) = श्री + अम् + मन्य ( in con. with श्यन् due to शित्त्व of खश् ) = श्रि + अम् + मन्य, श्री being neuter with reference to कुलम् which also is neuter, becomes ह्रस्व by 'ह्रस्वो नपुंसके प्रातिपदिकस्य' = (318) = श्रि—o + मन्य, अम् being dropped by 'स्वमोर्नपुंसकात्' (319) and सुम् not having taken effect at all due to its being superseded by अम्. Thus we have श्रिमन्यं कुलम्. It is important to note in this connection that the अम्विधि instructed in this rule 'इच एकाचः—' (6.3.68) bars the elision ( लुक् ) instructed in 'सुपो धातुप्रातिपदिकयोः' ( 2.4.71 ) and not that advised in

'स्वमोर्नपुंसकात्' (7.1.23) in accordance with the परिभाषा—"मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्"—or special injunctions enunciated in the middle [ cp. (6.3.68) ] forbid preceding injunctions [ cp. ( 2.4.71 ) ] and not following ones e.g. ( 7.1.23 ). Thus Bhattoji says भाष्यकारवचनात्—etc. [ Nagesha however, maintains that भाष्य is bent on श्रियम्मन्य and that श्रिमन्य is objectionable ].

मित—। इच इति। सूत्रेऽस्मिन् वाक्यद्वयं वर्तते। 'इच एकाचोऽम्' इत्येकम्। 'प्रत्ययवच्च' इत्यपरम्। तत्र पूर्वस्थस्य 'अम्' इत्यस्य परत्रानुवृत्तिः। ततश्च 'अम्प्रत्ययवच्च' इत्येवं भवति। ततो व्याचष्टे—इजन्तादिति। स चेति—। स इत्यनेन अमः परामर्शः। इजन्तादिति तदन्तविधिना लभ्यते। 'स्वाद्यम्' इति सामर्थ्याल्लभ्यम्। अन्यत्राम्विधेरभावात्। सूत्रे प्रत्ययवदिति असामर्थ्यात् वतिप्रत्ययः। यद्वा इवार्थो वतिरिति द्रष्टव्यम्। खिदन्ते परे इति। 'खित्यनव्ययस्य' ( 6. 3. 66 ) इत्यतोऽनुवृत्तिलभ्यमिदम्। एवमत्र विधीयमानोऽम्प्रत्ययः स्वाद्यम्वदित्यतिदिश्यत इति बोध्यम्। तदेवं गाम् आत्मानं मन्यत इति विग्रहोत्तरं 'सुपोधातुप्रातिपदिकयोः' ( ६५० ) इति सुब्लुकि, अमि, मन्धातोरुत्तरं खशि च गो+अम्+मन्+खश् इति स्थिते खशः शित्त्वेन मन्यतेः श्यनि—गो+अम्+मन्य इति जाते प्रक्रियामाह—औतोऽम्शसोरिति। अनेन ओकारस्य आकारादेशोऽम्प्रत्ययस्य स्यात्। ततश्च गाम्+मन्य इति स्थिते 'न विभक्तौ तुस्माः' इत्यत्र मकारस्य लोपाभावेन गाम्मन्य इति सिद्धम्। एवञ्च स्त्रियमात्मानं मन्यते, इति सुब्लुकि स्त्री+अम्+मन्य इति स्थिते आह—वाऽम्शसोरिति। अनेन इयङ्विकल्पात् स्त्रियम्मन्यः—स्त्रीम्मन्य इति रूपद्वयम्। नृ इति अविभक्तिकनिर्देशोऽयम्। नरम् आत्मानं मन्यत इति विग्रहे अमि परे तस्य सर्वनामस्थानत्वात् 'ऋतो ङिसर्वनामस्थानयोः' ( २७५ ) इति गुणे नरम्मन्य इति। भुवम्मन्य इति—'अचि श्नुधातु—' ( २७१ ) इत्युवङ्। सर्वत्र मकारस्य नेत्त्वमिति बोध्यम्। श्रिमन्यं कुलम् इति—अयमत्र भाष्याशयः—श्री+अम्+मन्य ( मन्+खश्+श्यन् ) इति स्थिते श्रीशब्दस्य नपुंसकलिङ्गकुल-

शब्दसमानाधिकरणतया नपुंसकत्वम् इष्यते भाषितपुंस्कस्त्रीवाचकशब्दस्य पुंवद्भावत्वात्। ततश्च 'ह्रस्वो नपुंसके प्रातिपदिकस्य' (३१८) इति ह्रस्वविधौ श्रि—अम्+मन्य इति भवति। पश्चात् 'स्वमोर्नपुंनकात्' (३१९) इत्यनेन नपुंसकश्रिशब्दादुत्तरममविभक्तेर्लोपे सति 'श्रिमन्यम्' इति सिध्यति। न चैवं 'सुपो धातुप्रातिपदिकयो'रित्यनेन गाम्मन्य इत्यादावपि अमप्रत्ययस्य लुक् आशङ्कितव्यः। 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति 'इच एकाचः—' (६।३।६८) इत्यस्य मध्यगतापवादेन 'सुपोधातुप्रातिपदिकयोः' (२।४।७१) इति पूर्वगतविधेरेव बाधो न्याय्यः। न तु 'स्वमोर्नपुंसकात्' (७।१।२३) इत्युत्तरस्थस्यापि विधेरित्याहुः। तदाह—भाष्यकारवचनादिति। यद्यप्यत्र सुमः प्रसङ्ग एव नास्ति तस्य विशेषविहितेन अमा बाधात् तथापि यथा 'जनमेजय' इत्यत्र स्वतःसिद्धेऽपि ह्रस्वे 'खित्यनव्ययस्य' (२९४३) इति पुनर्ह्रस्वो क्वचित् स्वीक्रियते तथा अत्रापि भवेदित्याशङ्क्य—सुमः प्राप्तिरपि नेत्युक्तम्। तदेवं भाष्यमते श्रिमन्यमिति। सूत्रमते तु अमि परे तस्य स्वाद्यन्तत्वया 'अचिश्नु—' इत्यतिदिश्यमाने श्रियम्मन्य इत्येवेति। 'यथोत्तरं मुनीनां प्रामाण्यम्' इति परिभाषानुसारात् पुनः पूर्वमेवोपादेयं हेयञ्चापरम्। नागेशः पुनः "परे तु स्वमो"रित्यारभ्य "तस्मात् श्रियंमन्य इत्येव रूपं भाष्यसंमतम्" इति निगमयन् अत्र "ह्रस्वस्य सुममोरभावस्य कल्पनमनुचितम्' इति दूषयित्वा श्रिमन्यशब्दस्य साधुत्वं नानुमेने।

२९९५। भूते ॥ ३।२।८४ ॥

दी—। अधिकारोऽयम्। 'वर्तमाने लट्' (२१५१) इति यावत्।

मित—। भूते इति ३।२।१२३ इत्यतः प्रागधिकारः।

२९९६। करणे यजः ॥ ३।२।८५ ॥

दी—। करणे उपपदे भूतार्थाद्यजेर्णिनिः स्यात् कर्तरि। सोमेनेष्टवान् सोमयाजी। अग्निष्टोमयाजी।

When an instrumental सुबन्त term stands as उपपद, the root यज् signifying past यज्ञ takes णिनि in the active voice. Thus सोमेन etc—He sacrificed with Soma i.e performed sacrifice. वृद्धि by 'अत उपधायाः (2282). अग्निष्टोम [ अग्नि+(स्तोमः=स्तुतिः) ] is a sacrifice in which fire is praised or worshipped.

मित—। करण इति। स्पष्टम्। भूतार्थादित्यनुवृत्तिलभ्यमिदम्। णिनिरिति। कर्तरि कृत्वात् स एव परस्मैपदी न तु स्वञ्। सोमेनेति। लताविशेषकल्पितमखेन। अग्निष्टोमेति। अग्निः स्तूयतेऽनेनेत्यग्निष्टोमो यागविशेषः। तेन फलभावनायां करण-भूतेनेष्टवानिति विग्रहः।

## २८८७। कर्मणि हनः॥ ३।२।८६॥

दी—। पितृव्यघाती। कर्मणीत्येतत् 'सहे च' ( ३००६ ) इति यावदधिक्रियते।

When a सुबन्त word in the accusative stands as उपपद, the root हन् expressing past tense takes णिनि in the active voice. Thus पितृव्यं हतवान् he killed his uncle—पितृव्यघाती। वृद्धि as before ह is changed to घ by हो हन्तेः—(358) and त by 'हनस्तः' (2856). Here contiguous action is refered to for 'चौरं हतवान्' will not take णिनि—'Kashika. The term कर्मणि' in the rule extends as far as 'सहे च' (3006—3.2.96).

मित—। कर्मणीति। कर्मण्युपपदे भूतार्थाद्धन्तेर्णिनिः स्यात् कर्तरि। पितृव्यघातीति। पितृव्यं हतवानिति विग्रहः। 'अत उपधाया' (2282) इति वृद्धिः। 'हो हन्तेः—' ( ३५८ ) इति कुत्वेन हस्य घः। 'हनस्तः' ( २८५६ ) इति तकारोऽन्त्यादेशः। एवं मातुलघातीत्यादि। अत्र काशिका—"कुत्सितग्रहणं कर्तव्यम्। इह मा भूत्—चौरं हतवानि"ति। यद्यपि नेदं भाष्ये दृश्यते तथापि शब्दशक्ति-स्वाभावाल्लभ्यत इत्याह। 'कर्मणि' इत्येतत् सहे चेति। ३।२।९६ इत्यन्तमित्यर्थः।

२९९८। ब्रह्मभ्रूणवृत्रेषु क्विप्॥ ३।२।८७॥

टी—। एषु कर्मसूपपदेषु हन्तेर्भूते क्विप् स्यात्। ब्रह्महा। भ्रूणहा। वृत्रहा। 'क्विप च' (२९८३) इत्येव सिद्धे नियमार्थमिदम्। ब्रह्मादिष्वेव। हन्तेरेव। भूत एव। क्विबेवेति चतुर्विधोऽत्र नियम इति काशिका। ब्रह्मादिष्वेव, क्विबेवेति द्विविधो नियम इति भाष्यम्।

When these i.e ब्रह्म, भ्रूण and वृत्र stand as उपपदs in the accusative the root हन् expressing past tense take क्विप् in the active voice. Thus ब्रह्म हतवान् ब्रह्महन् = ब्रह्महा (a killer of a Brahmin) etc. भ्रूण = foetes. क्विप् (2983) being got by the general rule "क्विप् च" the objection of this rule isto enjoin restriction. Here of the two authorities भाष्य and Kashikawe are to adhere to the former and reject the latter asregards the नियमs here. Therefore here are two restrictions only viz—that ब्रह्म, भ्रूण, and वृत्र only (and no other base) will have क्विप् in this (past) sense and that क्विप् only (and no other affix) will be attached after them. [Vamana following Vritti says that the rule makes 4 नियम (restrictions)—cp. "ब्रह्मादिष्वेव, हन्तेरेव, क्विबेव, भूतकाले एव इति चतुर्विधश्चात्रनियमः। तस्मात् अरिहाद्यसिद्धिः"। But भाष्य says of two नियम with respect to प्रकृति and काल। so हन takes क्विप् with other उपपद in other tenses and we get अरिहन् &c. Kaiyata and we too take this view as more rational].

मित—। ब्रह्मेति। कर्मणीति (२९९७) भूते इति (२९९५) चानुवर्तते। तदाह—एष्वित्यादि। ब्रह्महेति। ब्रह्म हतवानिति विग्रहः। ब्रह्म हन क्विप् इति स्थिते ब्रह्महा—इत्युपधादीर्घे कृते हल्ङ्यादिना सुलोपे 'नलोपः—' (२३६) इति नलोपे

चकपम्। एवमन्यत्र। ननु 'क्विप् च' इत्यनेनैव क्विपि विहिते ब्रह्महादिसिद्धौ किमर्थमिदमित्यत आह—नियमार्थमिति। इति काशिकेति। तत्राचाश्विन् प्रकृत्युपपद-प्रत्ययकालनियमा इति चत्वारो नियमाः। एवञ्च पुरुषहा इत्यादौ पुरुषादिपदानां ब्रह्मादिभिन्नतया वर्तमाने भविष्यति वा पुरुषं हन्ति हनिष्यति वेतिन क्विप्। इदम् वृत्तिकारमतं वामनेनाप्यनुसृतम्। प्रायिकश्चायं नियमः इति न्यासः। वस्तुतस्तु नात्र चातुर्विध्यं नियमस्य किन्तु द्वैविध्यमेव भाष्यस्य प्रामाणिकतरत्वादिति भावः। नागेशोऽप्येवमेवाह। एवञ्च प्रत्ययोपलक्षितकालावयवौ ब्रह्माद्यवयवश्चायं नियम इति फलितम् इति कैयटेपि स्पष्टम्।

२९९९। सुकर्मपापमन्त्रपुण्येषु कृञः॥ ३।२।८९॥

दी—। सुकर्मादिषु च कृञः क्विप् स्यात्। त्रिविधोऽत्र नियम इति काशिका। सुकृत्। कर्मकृत्। पापकृत्। मन्त्रकृत्। पुण्यकृत्। क्विबेवेति नियमात् कर्म कृतवानित्यत्राण् न। कृञ एवेति नियमान्मन्त्रमधीतवान् मन्त्राध्यायः। अत्र न क्विप्। भूत एवेति नियमान्मन्त्रं करोति करिष्यति वेति विवक्षायां न क्विप्। स्वादिष्वेवेति नियमाभावादन्यस्मिन्नप्युपपदे क्विप्। शास्त्रकृत्। भाष्यकृत्।

Here, according to Kashika, there are three restrictions i.e. धातुनियम, प्रत्ययनियम and कालनियम, Thus सु, कर्म etc preceding कृञ् (the root कृ) only will have क्विप् only and that in past sense only. Hence कृ in 'कर्म कृतवान्' will not be followed by अण्, but with अधि—इ in 'मन्त्रमधीतवान्' we have अण् and not क्विप्। स्वादिष्वेव i.e. there being no उपपदनियम we can have भाष्यकृत् etc. as well with क्विप् in past tense.

मित—। सुकर्मेति। क्विप इति वर्तते। तदाह सुकर्मादिषु चेति। त्रिविध

इति। धातुप्रत्ययकालनियमः इत्यर्थः। न तु स्वादिष्वेवेति उपपदनियमोपि। तदाह—शास्त्रकृद् भाष्यकृदिति। अणनेति। न क्विप्इति स्पष्टम्। मन्त्राध्याय इति। अण् एव न क्विप। धातुनियमात्।

२०००। सोमे सुञः ॥ ३।२।९० ॥

टी—। सोमसुत्। चतुर्विधोऽत्र नियम इति काशिका। एवमुत्तरसूत्रेऽपि।

मित—। सोम इति। प्राग्वत्। उत्तरेति। अग्नौ चेरित्यत्रेत्यर्थः।

२००१। अग्नौ चेः ॥ ३।२।९१ ॥

टी—। अग्निचित्।

२००२। कर्मण्यग्न्याख्यायाम् ॥ ३।२।९२ ॥

टी—। कर्मण्युपपदे कर्मण्येव कारके चिनोतेः क्विप् स्यात् अग्न्याधारस्थलविशेषस्याख्यायाम्। श्येन इव चितः श्येनचित्।

when the designation of a particular spot containing fire is meant, the root चि ( denoting past tense ) takes क्विप् in the passive only, an उपपद expressive of accusative preceding. Thus श्येन इव etc i.e, a spot for placing fire formed with bricks so as to resemble a hawk in form.

मित—। कर्मणीति। "कर्मणि" ( २९९७—३।२।८६ ) इत्यतः कर्मणीत्यनुवर्त्तते। तच्च कर्मान्तोपपदसमर्पकम्। एतत्सूत्रे 'कर्मणि' इति तु 'कर्मवाच्यद्योतकम्'। तदाह—कर्मण्युपपदे कर्मण्येव कारके इति। श्येन इवेति चित इत्येव न तु चितवानिति। श्येनाकृतिकार्थे श्येन इवेति। श्येनचिदिति। "समुदायोऽयम् आहवनीयधारणार्थे इष्टकानिर्मितस्थलविशेषे निरूढ़" इत्याहुः।

२००३ । कर्मणीनिविक्रियः ॥ ३।२।९३ ॥

दी—। कर्मण्युपपदे विपूर्वात् क्रीणातेरिनिः स्यात् । 'कुत्सितग्रहणं कर्तव्यम्' ( वार्तिक )। सोमविक्रयी । घृतविक्रयी ।

कर्मणि etc.—easy. 'कुत्सित्—' This is a Varrtika directing the occurrence of the affix only when the derivative brings censure.

मित—। कर्मणीति । अर्थः स्पष्टः । अत्र इनीत्यविभक्तिको निर्देशः । तदाह—इनिः स्यादिति । 'कुत्सित—' इति वार्तिकमिदम् । कुत्सायां गम्यायामेव प्रत्ययः । नान्यथेति भावः । तदाह—सोमविक्रयीत्यादि । उत्तमवर्णैस्तदविक्रयस्य शास्त्रसम्मतत्वात् इति बोध्यम् । तेनान्यत्र तु यथाप्राप्तमणेव—धान्यविक्रायः ।

२००४ । दृशेः क्वनिप् ॥ ३।२।९४ ॥

दी—। कर्मणि भूत इत्येव । पारं दृष्टवान् पारदृश्वा ।

मित—। दृशेरिति । कर्मण्युपपदे भूतार्थाद् दृशेः क्वनिप् स्यादित्यर्थः । 'आतो मनिन् क्वनिप्—' 'अन्येभ्योऽपि दृश्यते' इत्येव सिद्धे नियमार्थमिदम् । नियमो यथा मनिनादि, सोपपदं चाणादि मा भूदिति । निरुपपदात्तु भवत्येव । परलोकं दृष्टवानिति । कित्त्वाद् गुणाभावः ।

२००५ । राजनि युधिकृञः ॥ ३।२।९५ ॥

दी—। क्वनिप् स्यात् । युधिरन्तर्भावितण्यर्थः । राजानं योधितवान्=राजयुध्वा । राजकृत्वा ।

When the word राजन् precedes in the accusative as an उपपद the root युध् and कृञ् ( कृ ) both expressing past sense take the affix क्वनिप् । युधि has causative sense within. Thus राजयुध्वा—one who caused a king to fight. राजकृत्वा—one who made a person king.

मित—। राजनीति । कर्मवाचिनि राजशब्दे उपपदे भूतार्थाद् युध्यतेः

करोतेश्च क्वनिप् स्यादित्यर्थः। युध्यतेरकर्मकत्वाद् ण्यर्थादेव तस्मात् क्वनिप्। एवं सकर्मकात् प्राप्तिस्तदाह—युधिरिति। राजकृत्वेति। राजनं कृतवानिति विग्रहः।

**२००६। सहे च ॥ ३।२।८६ ॥**

**दी—। कर्मणीति निवृत्तम्। सहयुध्वा। सहकृत्वा।**

Here the carrying word 'कर्मणि' has ceased to operate. Thus सह योधितवान् etc. give सहयुध्वा etc.

मित—। सहे चेति। सह इत्यस्य असत्त्ववचनात् कर्मणीत्यस्य अन्वयः नउत्तरवाप्यनुपयोगादाह—कर्मणीति निवृत्तमिति। सह शब्दे उपपदे युधेः क्रञश्च भूते क्वनिप्। सहयुध्वा। सह योधितवानिति विग्रहः।

**२००७। सप्तम्यां जनेर्डः ॥ ३।२।८७ ॥**

**दी—। सरसिजम्। मन्दुरायां जातो मन्दुरजः। 'ङ्यापोः—' (१००१) इति ह्रस्वः।**

The root जन् takes ड in the past sense when an उपपद in the locative precedes. Thus सरसि जातम्—सरसिजम्—the 'टि' of जन् eliding due to डित्त्व and the locative being irregularly retained by 'तत्पुरुषे कृतिबहुलम्'. The alternative is सरोजम्। मन्दुरा = stable. Rest Easy.

मित—। सप्तम्यामिति। सप्तम्यन्ते उपपदे भूतार्थाद् जनेर्डः प्रत्ययः स्यात्। सरसि जातमिति विग्रहः। 'तत्पुरुषे कृति—' इति विकल्पात् पक्षे सरोजमित्यपि। मन्दुरज इति। वाजिशाला तु मन्दुरा इत्यमरः। मन्दुरेत्यस्य ह्रस्वार्थमाह—'ङ्यापोः—' इति। सर्वत्र डित्वसामर्थ्यादभस्यापि जनेष्टिलोपः।

**२००८। पञ्चम्यामजातौ ॥ ३।२।८८ ॥**

**दी—। जातिशब्दवर्जिते पञ्चम्यन्ते उपपदे जनेर्डः स्यात्। संस्कारजः। अदृष्टजः।**

जन् takes ड in the past sense also when a word other than जाति and used in, the ablative stands as उपपद. Thus संस्काराद् जातम्—संस्कारजम ( originating from past impression )-

मित—। पञ्चम्यामिति। संस्काराज्जात इति संस्कारजः।

२००९। उपसर्गे च संज्ञायाम् ॥ ३।२।९९ ॥

दी—। 'प्रजा स्यात् सन्ततौ जने' ।

जन takes ड in the past sense also when an उपसर्ग precedes and a संज्ञा is implied. Thus—प्रजा ( a child or a man )

मित—। उपसर्गे चेति। उपसर्गे चोपपदे संज्ञायां च गम्यायां भूतार्थाद् जनेर्डः। प्रकर्षेण जाता प्रजा ( सन्ततिर्जनो वा )। अमरसंवादिनार्थमाह—प्रजा स्यादिति।

२०१०। अनौ कर्मणि ॥ ३।२।१०० ॥

दी—। अनुपूर्वाज्जनेः कर्मण्युपपदे डः स्यात्। पुमांसमनु-रुध्यजाता पुमनुजा।

The root जन् preceded by अनु takes ड in the past sense when an accusative उपपद stands in the beginning—Thus पुमनुजा born junior to a male. पुमस् + अनु + जन् + ड—here स elides by 'संयोगान्तस्य लोपः'।

मित—। अनाविति। जनेः सकर्मकत्वाभावेऽपि उपसर्गवशादिवास्य कर्मत्वमिति सूत्रे 'कर्मणी'त्यस्योपयोग दर्शयन्नाह—पुमांसमनुरुध्येति। पुमस् अनु + जन् + ड इति स्थिते संयोगान्तलोपेन सकारलोपात् पुमनुजेति। पुंभावावरेत्यर्थः।

२०११। अन्येष्वपि दृश्यते ॥ ३।२।१०१ ॥

दी—। अन्येष्वप्युपपदेषु जनेर्डः स्यात्। अजः। द्विजो ब्राह्मणः। ब्राह्मणजः। अपिशब्दः सर्वोपाधिव्यभिचारार्थः तेन धात्वन्तरादपि कारकान्तरेष्वपि क्वचित्। परितः खाता परिखा।

Any उपपद preceding, जन् expressing past sense takes ड. Thus also परिखा (a trench)—परि + खन् + ड + टाप् स्त्रियाम्। This is obtained on the strength of अपि which violates all rules and restrictions or injunctions. Thus जन as also खन् takes ड.

मत—अन्येष्वपीति। अपिशब्दसामर्थ्यमाह—सर्वोपाधीति। उपाधिपदार्थमाह—धात्वन्तरादित्यादि। परिखेति। एवमुखा (उत्+खन्+ड)। निपातनादन्त्यलोप इति वर्धमानः। अजइत्यादि—न जातः, द्विजातः इत्यादि विग्रहः।

२०१२। क्तक्तवतू निष्ठा ॥ १।१।२६ ॥

टी—। एतौ निष्ठासंज्ञौ स्तः।

मित—। क्तेति। अनयोः प्रत्येकं निष्ठेत्यत आह—एताविति।

२०१३। निष्ठा ॥ ३।२।१०२ ॥

टी—। भूतार्थवृत्तेर्धातोर्निष्ठास्यात्। तत्र 'तयोरेव—, (२८३३) इति भावकर्मणोः क्तः। 'कर्तरि कृत्' (२८३२) इति कर्तरि क्तवतुः। उकावितौ। स्नातं मया। स्तुतस्त्वया विष्णुः। विष्णुर्विश्वं कृतवान्।

After a root expressing past sense the affix निष्ठा (क्त क्तवतु) is attached; of these two the former (क्त) is employed in the passive voice i.e. भाववाच्य and कर्मवाच्य by the परिभाषा rule 'तयोरेव—' (2833), whereas the latter (क्तवतु) which drops उ and क, and retains तवत् (only) is affixed in the active voice (कर्तृवाच्य) only by the rule 'कर्तरि कृत्' (2832). Thus स्नातम् etc. are examples in भाव, कर्म and कर्तृवाच्य respectively.

मित—। निष्ठेति। निष्ठापदयोर्द्वयं पूर्वं च सूत्रोपन्यासपुरःसरं विहत्य भूतार्थमाह—भूतार्थवृत्तेरिति। भूत इत्यनुवर्तमानात्। तत्रेति। तयोः क्तक्तवत्वोरित्यर्थः।

क्तप्रत्यय:तयोरित्यनेन भावे कर्मणि च। क्तवतुस्तु कर्तरीत्यनेन कर्तरि वाच्ये भवतीत्यर्थ:। उकावितावितिः। क्तप्रत्ययेऽपि किदिति विवेचनीयम्। कित्करणं गुणप्रतिषेधार्थं यथा—स्नात: स्नुतवान् इत्यादौ। उकारकरणं तु ङीबर्थम्। यथा—स्नुतवतीत्यादौ। अन्यथा—स्नुता इति टावेव न ङीप्। भावकर्मकर्तृषु क्रमेणोदाहरति स्नातं मयेत्यादि।

## २०१४। निष्ठायामण्यदर्थे ॥ ६।४।६० ॥

दी—। ण्यदर्थो भावकर्मणी। ततोऽन्यत्र निष्ठायां क्षियो दीर्घ: स्यात्।

By the term ण्यदर्थ: ( ण्यत् + अर्थ: ) the object or sphere of ण्यत् is meant = भाव and कर्मवाच्य. For ण्यत् being a कृत्य affix is appointed after a root in these two वाच्य only by 'तयोरेव—' ( 2833 ). Thus the rule means—when a निष्ठाप्रत्यय in a वाच्य other than भाव and कर्म i.e. कर्तृवाच्य follows the vowel इ of the root क्षि is lengthened,

मित—। निष्ठायामिति। सूत्रे अण्यदर्थे इत्यस्य विवरणमाह—ण्यदर्थो भावकर्मणी ततोऽन्यत्रेति। ण्यत: अर्थ: प्रयोजनम् ण्यदर्थ:। ऋहलोर्ण्यत् इत्यनेन ण्यत्प्रत्ययो विधीयते। स च कृत्यप्रत्यय इति कृत्वा 'तयोरेव कृत्यक्तखलर्था:' ( २८३३ ) भावे कर्मणि चैव वाच्ये विधीयते। तत: भावकर्मणी ण्यदर्थ:। एवं च परिशेषात् अण्यदर्थे इत्यनेन कर्तरीति लभ्यते। तस्मात् कर्तरिवाच्ये निष्ठायां परे क्षियो दीर्घ इति सूत्रार्थ:। 'क्षिय:' ( ६।४।५९ ) इत्यत: क्षिय: इत्यनुवर्तते।

## २०१५। क्षियो दीर्घात् ॥ ८।२।४६ ॥

दी—। दीर्घात् क्षियो निष्ठातस्य न: स्यात्। क्षीणवान्। भावकर्मणोस्तु—क्षित: कामो मया। 'श्र्युक: किति' ( २३८१ )। श्रित:-श्रितवान्। भूत:-भूतवान्। स्नुत:। "ऊर्णोतेर्वृद्—

भावी वाच्यः"—( वार्तिक )। तेन एकाच्त्वान्नेट्। ऊर्णुतः। नुतः। क्ष्णुतः।

After क्षि has been lengthened, the निष्ठा त following is replaced by न. Thus क्षीणवान्, मूर्धन्य by 'रषाभ्यां नो णः'। 'क्षितः कामः'—' desire has been destroyed by me. This is in the कर्मवाच्य. Hence दीर्घ and नकार are wanting. 'क्षितं कामेन' is the instance in the भाववाच्ये। 'श्र्युकः किति'—this provides for absence of इट in श्रि etc. 'ऊर्णोतेः—'This is a Varttika ; easy. Thus ऊर्णु being deemed as एकाच् in ऊर्णुत no इट्। नु to praise + क्त = नुत।

मित—। क्षिय इति। 'रदाभ्यां निष्ठातो न—' (८।२।४२) इत्यतो 'निष्ठातो न' इत्यनुवर्तते। दीर्घादिति च क्षियो विशेषणं तदाह—दीर्घात् क्षिय इत्यादि। क्षीणवान् इति। 'रषभ्यां नोणः—' इति णत्वम्। 'क्षितः कामः—' इति। क्षित इत्यस्य क्षपित इत्यर्थः। एतत् कर्मण्युदाहरणम्। ततो दीर्घौ नकारश्च, न भवतः। भावे तु क्षितः कामेनेत्युदाहरणम्। श्रित इत्यादौ इट् निषेधार्थमाह—श्र्युकः कितीति। ऊर्णुतेर्णुवदिति। वार्तिकम्। 'ऊर्णु' इत्यस्य एकाच्त्वात् श्र्युकः इति निषेधः। नुत इति—नुस्तुताविति धातुः।

३०१६। रदाभ्यां निष्ठातोनः पूर्वस्य च दः ॥ ८।२।४२ ॥

दी—। रेफदकाराभ्यां परस्य निष्ठातस्यनः स्यात्। निष्ठापेक्षया पूर्वस्य धातोर्दकारस्य च। शॄ—'ॠत इत्—' (२३९०)। रपरः। णत्वम्। शीर्णः। वहिरङ्गत्वेन वृद्धेरसिद्धत्वान्नेह। कृतस्यापत्यं कार्तिः। भिन्नः। छिन्नः।

नकार replaces the त of निष्ठा following रेफ and दकार as also the दकार of the root preceding the निष्ठाप्रत्यय. Thus शीर्ण, भिन्न etc. In the case of कार्तिः (the offspring of कृत), however,

where also the निष्ठा तकार follows a रेफ after वृद्धि ( कृत + वृञ् by 'अत वृञ्' ) there तकार is not replaced by न, for the वृद्धि is असिद्ध or invalid being due to its being बहिरङ्ग, cp—'असिद्धं बहिरङ्गमन्तरङ्गे' ( परिभाषा )।

मित—। रदाभ्यामिति। निष्ठा ( निष्ठायां विहितः ) तः ( तकारः ) तस्य इति 'निष्ठातः' शब्दार्थः। 'द' इति षष्ठ्यन्तम्। तदाह—रेफदकाराभ्यामित्यादि। रः दश्च रदौ ताभ्याम्—रदाभ्याम्। शीर्ण इति। रेफात् परस्योदाहरणमेतत्। भिन्न छिन्न इति। दकारात् परस्योदाहरणम्। तेन नकारद्वयम्। रपरेति। 'उरण्रपर' इत्यनेन। बहिरङ्गत्वेनेति—कृतस्यापत्यं कार्तिं रित्यत्र 'अत इञ्' इति प्रत्यये परतः'अचोञ्णिति' इति वृद्धिः। सा च बह्वपेक्षत्वाद् बहिरङ्गा। तेन 'असिद्धं बहिरङ्गमन्तरङ्गे' इति तस्य असिद्धतया तन्निमित्तप्राप्तरेफात् परस्यापि तकारस्य नत्वं नेति भावः। 'निष्ठातकाराद् बहिर्भूतम् इञ्प्रत्ययमाश्रित्य विधीयमानत्वाद्वृद्धिर्बहिरङ्गेति भावः' इतितत्त्वबोधिनी।

२०१७। संयोगादेरातो धातोर्यण्वतः ॥ ८।२।४३ ॥

टी—। निष्ठातस्य नः स्यात्। द्राणः। स्त्यानः। ग्लानः।

If an आकारान्त root beginning with a संयोग letter formed in combination with any of the यण् letters, the निष्ठातकार is replaced by नकार. Thus द्राण etc.

मित—। संयोगादेरिति। निष्ठातो न इति वर्तते। संयोगादेः आतः, यण्वत इति 'धातो'र्विशेषणत्रयम्। यण्प्रत्याहारस्थवर्णभाविन संयोगादेराकारान्ताच्च धातोः परतो निष्ठातकारस्य नकार इति सूत्रार्थः। द्राण इति। द्रा कुत्सायां गतौ। नत्वम्। स्त्यान इति। 'स्त्यै ष्ट्यै' शब्दसंघातयोः। 'आदेच उपदेशे—' ( २३७१ ) इत्यात्वम्। ततो नः। ग्लान इति। ग्लै हर्षक्षये। प्राग्वत्।

२०१८। ल्वादिभ्यः ॥ ८।२।४४ ॥

टी—। एकविंशतेर्लूञादिभ्यः प्राग्वत्। लूनः। ज्या-

'ग्रहिज्या—' ( २४१२ )। जीनः। 'दुग्वोर्दीर्घश्च' ( वार्तिक )। 'दु गतौ'। दूनः। 'टुदु उपतापे' इत्ययं तु न गृह्यते। सानुबन्धकत्वात्। 'मृदुतया दुतया' इति माघः। गूनः। 'पूञो विनाशे' ( वार्तिक )। पूना यवाः। विनष्टा इत्यर्थः। पूतमन्यत्। 'सिनोतेर्ग्रासकर्मकर्तृकस्य' ( वार्त्तिक )। सिनो ग्रासः। ग्रास इति किम्। सिता पाशेन सूकरी। 'कर्मकर्तृकस्य' इति किम्? सितोग्रासो देवदत्तेन।

लूञ् etc ( क्र्यादिः ) are twenty two in number of them लूञ being excluded, twenty one only take निष्ठा and the तकार is replaced by न as before. जीनः (ज्या + क्त)—althouuh ज्या is संयोगादि, आकारान्त as also यण्वान्, yet the rule 'संयोगादेरातो—' (3017) does not apply here, for by 'पूर्वत्रासिद्धम्' (12) it will be invalid towards 'ग्रहिज्या—' (6.1.16). Thus सम्प्रसारण taking place first, we have न of निष्ठा by this rule. 'दुग्वोः—' (varttika). The roots दु and गु when followed by क्त, become दीर्घ and the तकार becomes न। गु means excrete nuisance ( पुरीषोत्सर्ग )। 'पूञो—' (varttika) निष्ठात after पूञ is replaced by न when the derivative signifies destruction. 'सिनोतेः—' (varttika) निष्ठात is replaced by न when the निष्ठा comes after सिनोति or 'षिञ्‌बन्धन'; ग्रास (a lump of rice) as कर्मकर्ता i.e which ( ग्रास ) though कर्म is treated as कर्ता. Thus सिनो ग्रासः othewise सितः (bound).

मित—। लुञिति। लुञादयः द्वाविंशतिःक्र्यादौ पठिताः। तत्र लूञं वर्जयित्वाह—एकविंशतिरिति। प्राग्वदिति। तकारस्य नकार इत्यर्थः। जीनः इति। सम्प्रसारणे कृतेऽनेन तस्य न इति वोध्यम्। तेन संयोगादेरित्यत्र न प्रवर्तते। दुग्वोरिति—वार्तिकम्। दु धातोर्दीर्घश्चेत्यर्थः। टदु इतिन। 'सानुबन्धकान-

नुबन्धकयोरननुबन्धकस्यैवेति परिभाषयेत्यर्थः। 'पूञः—इति वार्तिकम्। सिनोतेरिति वार्तिकम्। कर्मैव कर्ता कर्मकर्ता यस्येति विग्रहः। तस्मात् सिनोतेः परतो निष्ठा-तकारस्य नकार इत्यर्थः। सिनो ग्रास इति। 'पिण्डीक्रियमाणो ग्रासो यदा दध्या-दिव्यञ्जनवशाद् बन्धनेऽनुकूलो भवति तदा कर्मण्येव कर्तृत्वमिति बोध्यम। 'षिञ' बन्धने'। ग्रस्यत इति ग्रासः। कर्मणि घञ। सितेति। बद्धा इत्यर्थः। सितो ग्रास इति। अत्र कर्मकर्तृकत्वाभावान्नत्वाभावः।

२०१९। ओदितश्च॥ ८।२।४५॥

टी—। भुजो—भुग्नः। 'टु ओश्वि —' उच्छूनः। ओहाक्—प्रहीणः। 'स्वादय ओदित' इत्युक्तम्। सूनः—सूनवान्। दूनः—दूनवान्। ओदिन्मध्ये डीङः पाठसामर्थ्यान्नेट्। उड्डीनः।

नकार replaces निष्ठा तकार after roots dropping the indicatory (अनुबन्ध) ओकार. Thus भुजो + क्त = भुज्न = भुग्न (crooked) by 'चोः कुः' etc. उच्छून (increased or puffed) उद् + टुओश्वि + क्त = उद् + श्वि न = उत् + शून by सम्प्र—enjoined under 'वचिस्वपि—'(2410) as टुओश्वि is यजादि and दीर्घ by 'हलः' (2559). प्रहीणः (deserted or bereft of) ईकार by 'घुमास्था—' (2462) then णत्व by 'कृत्यचः' (2835). सून etc—for सू etc are ओदित्। उड्डीनः—उद् + डी + क्त, as डी has been read within ओदित् roots so we have no इट् here.

मित—। ओदितश्चेति। ओकारानुबन्धवतः परस्य च धातोर्निष्ठातकारस्य नत्वमित्यर्थः। तदुदाहरति भुजो = भुग्न इति। 'चोः कु'रिति कुत्वे जश्त्वेन गकारः। उच्छून इति। उत्पूर्वात् श्वयतेरुत्तरं निष्ठा। श्वयतेर्यजादित्वात् 'वचिस्वपि—' (२४१०) इति सम्प्रसारणे तस्य परस्पत्वे च 'हलः' (२५५९) इति दीर्घः। उच्छूनो वृद्धो गर्वितो वा। प्रहीणः। प्रपूर्वाद् जहातेर्निष्ठा 'घुमास्था—' (२४६२) इति ईत्वे कृते 'कृत्यचः' (२८३५) इति णत्वम्। सून इत्यादि। षूङ् प्राणिगर्भविमोचने। स्वादिरोदित्वान्नकारः। 'श्र्युकः किति' इति इट् प्रतिषेधः। दून इति—दूङ् परितापे।

ततः प्राग्वत्। उड्डीन इति। डीङ् विहायसा गतौ। तस्य सेटकत्वेन इडागमे प्राप्ते सामर्थ्यान्नेत्याह—ओदिन्मध्ये इति। अन्यथा तत्र पाठो व्यर्थः स्यादिति भावः। इटि हि सति निष्टातकारस्य नकारत्वासंभवात्।

३०२०। द्रवमूर्त्तिस्पर्शयोः श्यः ॥ ५।१।२४॥

**दी—। द्रवस्य मूर्त्तौ काठिन्ये स्पर्शे चार्थे श्यैङः सम्प्रसारणं स्यान्निष्ठायाम्।**

When the sense is such as मूर्ति i.e stiffness (or solidity) and touch of a liquid substance, the root श्यै gets सम्प्र-in निष्ठा.

मित—। द्रवेति। मूर्तिश्च स्पर्शश्च। द्रवस्य मूर्त्तिस्पर्शौ। तयोरिति विग्रहः। काठिन्य इति मूर्त्तावित्यस्य विवरणमात्रं न तु समुच्चयावयवः। 'ष्यङः सम्प्रसारणम्' (६।१।२३) इत्यतः सम्प्रसारणमित्यनुवर्त्तते। तदाह द्रवस्येति...श्यैङ् इति। एवं श्यै+क्त इत्यत्र 'आदेचः—' इत्यात्त्वे अनेन सम्प्रसारणे तस्य पररूपत्वे च शि+त इति स्थिते आह—

३०२१। श्योऽस्पर्शे ॥ ८।२।४७॥

**दी—। श्यैङो निष्ठातस्य नः स्यादस्पर्शार्थे। 'हलः' (२५५८) इति दीर्घः। शीनं घृतम्। अस्पर्शे किम्? शीतं जलम्। 'द्रवमूर्त्तिस्पर्शयोः' किम्? संश्यानो वृश्चिकः शीतात्। सङ्कुचित इत्यर्थः।**

न replaces त of निष्ठा coming after श्यैङ् when want of touch is implied. Thus शीनम् घृतम् or condensed ghee; otherwise शीतम् as water. संश्यान=सम्+श्यै+क्त=सम्+श्या+न by 'आदेचः—' (2371) etc. It does neither imply 'condenseness of a liquid

matter (द्रवमूर्त्ति) nor 'touch' but it implies contraction ( सङ्कोचन )। Hence no सम्प्र-सारण।

मित—। श्य इति। 'श्यैङ् गतौ' इत्यस्य कृतात्वस्य पञ्चम्यातिर्देशः। निष्ठातस्येत्यनुवर्तते। तेन श्यैङः परस्य निष्ठातस्य इत्यादिरर्थः। तदाह—श्यैङ इति। शीतम इति। अत्र स्पर्शाभावेऽपि सूत्रसामर्थ्यात् सम्प्रसारणे कृते 'हलः' (२५५८) इति दीर्घे सतोऽनेन नत्वम्। घनीभूतमित्यर्थः। यद्यपात्रापि स्पर्शोऽस्त्येव तथापि घनीभूतत्वमेव प्रधानमिति नत्वम् अन्यत्र शीतमिति। 'द्रवमूर्ति—' इत्यस्योदाहरण-मप्येतदेव स्पर्शविषये। संश्यान इति स्पष्टम्।

३०२२। प्रतेश्च ॥ ६।१।२५ ॥

**दी—। प्रतिपूर्वस्य श्यः सम्प्रसारणं स्यान्निष्ठायाम्। प्रतिशीनः।**

मित—। प्रतेरिति। द्रवमूर्त्ति—( ६।१।२४ ) इत्यतः श्य इत्यनुवर्तते। तदाह—प्रतिपूर्वस्येत्यादि। द्रवमूर्तिस्पर्शाभ्यामन्यत्रापि सम्प्रसारणार्थमिदम्। प्रतिशीन इति। प्रतिगत इत्यर्थः।

३०२३। विभाषाऽभ्यवपूर्वस्य ॥ ६।१।२६ ॥

**दी—। श्यः सम्प्रसारणं वा स्यात्। अभिश्यानम्-अभि-शीनं घृतम्। अवश्यानः—अवशीनो वृश्चिकः। व्यवस्थित विभाषेयम्। समवश्यानः।**

व्यवस्थितविभाषा i. e. the option is restricted i.e श्यै preceded either by अभि or by अव gets optional सम्प्र. but not so if any of them is preceded or followed by any other उपसर्ग. Hence in समवश्यान there is no सम्प्रसारणम्।

मित—। विभाषेति। अभिपूर्वस्य अव पूर्वस्य चेति सिद्धवत्कृत्य आह—श्यः सम्प्रसारणमिति। समवश्यान इति। अभिपूर्वस्यैव अवपूर्वस्यैव वा श्यैङः सम्प्र-सारणम् इति व्यवस्थितत्वादत्र ससुपसृष्टस्य सम्प्रसारणं न भवतीति भावः।

३०२४ । अञ्चोऽनपादाने ॥ ८।२।४८ ॥

दी—। अञ्चो निष्ठातस्य नः स्यान्नत्वपादाने ।

मित—। अञ्च इति । अञ्चतेर्धातोरित्यर्थः । अनपादानेति । प्रसज्य प्रतिषेधोऽयमित्याह—न तु अपादाने इति । अपादानविवक्षायां नेत्यर्थः ।

३०२५ । यस्य विभाषा ॥ ७।२।१५ ॥

दी—। यस्य क्वचिद् विभाषयेड्विहितस्ततो निष्ठाया इट्न स्यात् । 'उदितो वा' ( ३३२८ ) इति क्त्वायां वेट्त्वादिह नेट् । समक्तः । 'अनपादाने' किम् ? उदक्तमुदकं कूपात् । नत्वस्यासिद्धत्वात् 'व्रश्च—' (२८४) इति षत्वे प्राप्ते—'निष्ठादेशः षत्वस्वर प्रत्ययेड्विधिषु सिद्धो वाच्यः' ( वार्तिक ) । वृक्णः । वृक्णवान् ।

In निष्ठा the augment इट् is not prefixed to a root which has previously been instructed to have इट् optionally. Thus in समक्त—सम् + अञ्च + क्त, we have not इट् as अञ्चु is उदित् therefore विभाषितेट् by 'उदितो वा' (3328) in क्त्वा । समक्त means joined together. उदक्तम् raised ( उद्धृतम् )—no नत्व. In वृक्ण which is derived as व्रश्च ( ओव्रश्चूछेदने ) + क्त = वृश् + न by 'ग्रहिज्या—' (2412) and 'ओदितश्च (3019) = वृच् न by 'स्तोः—' (300) for the श् was previously स् of which षत्व was due, by "व्रश्च भ्रस्ज" due to असिद्धत्त्व of निष्ठा न । नत्व is declared to be valid or सिद्ध by the varttika 'निष्ठादेशः—' निष्ठा substitute i.e नकार should be recognised as सिद्ध or valid in cases of षत्व, स्वर, प्रत्यय, and इट् ; the षत्व consequenly does not take effect and we have कुत्व by 'चोः कुः—' वृकन = वृक्ण by णत्व, cp—'अटकुप्वाङ्—' । Similarly वृक्णवान् (has cut down).

मित—। यस्येति । 'यस्येति' ( ३११ ) इत्यत्रेव 'इश्च अश्च संसृष्टे'

इतीकाराकारयोर्ग्राहकम्, वा 'यस्य हलः' (२६२१) इत्यत्र यकाराकार संघातस्य ग्राहकम्, वा 'यस्य च भावेन—' इत्यादाविव सर्वनाम्न एवेति ध्वनयन्नाह —यस्य कचिदिति। 'श्वीदितो निष्ठायाम्' (७।२।१४) इत्यतो निष्ठायामिति 'नेड्वशि कृति' (७।२।८) इत्यतो 'नेट्' इति चानुवर्तते। तदाह—निष्ठाया इडागमस्यादिति। अञ्चु पूजायाम्। तस्योदित्वेन वेट् इति दर्शयति—'उदितो वा' (२३२८) इति। अतएव सम्+अञ्चु+क्त=सम+अञ्चु+न (अञ्चोऽनपादाने ३०२४)=सम+अ +न् (अनिदितामिति न लोपः)=सम+अक् न (चोः कुरिति कुत्वम्)=समक्तः सङ्गत इत्यर्थः। उदक्तमिति। उद+अञ्चु+क्त। अत्र उद्धृतमित्यर्थादपादानत्वे न नला- भावः। अथ वृक्ण इत्यादौ ओव्रश्च+क्त इति स्थिते (सस्य चुत्वेन शत्वमिति न विस्मर्तव्यम्), 'ग्रहिज्या—' (२४१२) इति सम्प्रसारणे नत्वस्यासिद्धत्वात् 'स्कोः—' (३८०) इति सलोपे, चोः कुरिति कुत्वे, उदित्वेन वेट्त्वाद् यस्य विभाषेति इडनिट्, नस्य णत्वेन वृक्ण इति भवति। तत्र 'व्रश्च—' (८।२।३६) इति पूर्वशास्त्रं प्रति 'ओदितश्च' (८।२।४५) इत्यस्य शास्त्रस्य असिद्धत्वात् षत्वे प्राप्ते वार्तिकमाह— 'निष्ठादेशः' इति। एवञ्च षत्वविधौ त्रिपादीस्थोऽसिद्धोऽपि निष्ठादेशः (नकारः) सिद्ध इति झल्परत्वाभावेन षत्वं निवर्तते स्कोरिति सलोपश्च भवति। कुत्वमुभयत्रैव तं प्रत्यसिद्धत्वादिति।

२०२६। परिस्कन्दः प्राच्यभरतेषु ॥ ८।३।७५ ॥

टी—। पूर्वेण मूर्धन्ये प्राप्ते तदभावो निपात्यते। परिस्कन्दः। 'प्राच्य—'इति किम्। परिष्कन्दः—परिस्कन्दः। 'परेश्च' (२३९९) इति षत्वविकल्पः॥ 'स्तम्भेः' (२२७२) इति षत्वे प्राप्ते—

मूर्धन्य ष being due by the previous rule 'परेश्च' (2399—8.3.74), prohibition of the same is here irregularly executed by this rule which means—परिस्कन्द is correct according to grammarians

or usage in the country प्राच्यभरत। षत्व in प्रतिस्तब्ध being due to 'स्तम्भेः' (2272) we look forward—

मित—। परिस्कन्द इति। प्राच्यभरत इति देशनाम। तत्र परिकन्दशब्दस्य निपातनात् षत्वाभाव इत्यर्थः। अन्यत्र तु 'परेश्च' (८।३।७४) इति पूर्वसूत्रेण षत्व-विकल्प एव। प्रतिस्तब्धनिस्तब्धयोः षत्वनिषेध इत्याह—स्तम्भेरिति।

३०२७। प्रतिस्तब्ध-निस्तब्धौ च ॥ ८।३।११४ ॥

दी—। अत्रषत्वं न स्यात्।

३०२८। दिवोऽविजिगीषायाम् ॥ ८।३।४८ ॥

दी—। दिवो निष्ठातस्य नः स्यादविजिगीषायाम्। द्यूनः। विजिगीषायां तु द्यूतम्।

The root दिव (to play with) gets its निष्ठात changed into न provided there is no intention of winning (another). Thus द्यूनः praised or reduced—by नत्व of त and ऊठ् of व् by 'च्छ्वोः शूठ्—' (2568), otherwise द्यूतम्—

मित—। दिव इति। विजिगीषा जेतुम् इच्छा। तदर्थाभावे गम्ये इत्यर्थः। द्यून इति। अनेन निष्ठानत्वम्। 'च्छ्वोः शूठ्—' (२५६२) इत्यनेन च वकारस्य ऊठ्। यणादेशः। क्षीणः स्तुतो वेत्यर्थः। 'आद्यूनः स्यादौदरिके विजिगीषाविवर्जिते' इत्यमरः। द्यूतमिति। तस्यपरस्परजयेच्छया प्रवृत्तेर्निष्ठानत्वं न।

३०२९। निर्वाणोऽवाते ॥ ८।२।५० ॥

दी—। अवाते इतिच्छेदः। निःपूर्वात्वातेर्निष्ठातस्य नत्वं स्याद्वातश्चेत् कर्ता न। निर्वाणोऽग्निर्मुनिर्वा। वाते तु निर्वातो वातः।

Here the phonetic combination is निर्वाणः+अवाते. The root वा preceded by निर् gets its निष्ठा त changed into न

if वात or wind is not the agent thereof. Thus निर्वाणः (extinguished or dead) as fire or a sage. But निर्वातो वातः—the wind has ceased ( no नत्व )।

मित—। निर्वाण इति संज्ञां विभजते। अवाते इति च्छेदः। सूत्रार्थमाह—निर्पूर्वादिति। वा गतिगन्धनयोरिति धातुः निरुपसर्गवशात् विनाशे उपरमे च वर्तते। तदाह—निर्वाणोऽग्निर्मुनिर्वेति। नष्टो मृतो वेत्यर्थः। वाते तिति। अत्र 'गत्यर्थाकर्मक—' इति कर्तरि निष्ठा। विशेषेण वातो गत इत्यर्थः। भावाऽभिमते मुनीनां निर्वाणम् इत्यपि अनुक्तकर्तरि सति साधु।

२०२०। शुषः कः॥ ८।२।५१॥

टी—। निष्ठात इत्येव। शुष्कः।

Here निष्ठात is changed into क।

२०२१। पचो वः॥ ८।२।५२॥

टी—। पक्वः।

मित—। निष्ठातस्य व इत्यादेश इत्यर्थः। वत्वस्यासिद्धत्वाच्चोः कुरिति कुत्वम्।

२०२२। क्षायो मः॥ ८।२।५३॥

टी—। क्षामः।

मित—। क्षै क्षये। तस्य 'आदेचः—' ( २३७१ ) इत्यात्वे कृते निष्ठतस्य मः। अकर्मकात् कर्तरि क्तः।

२०२३। स्त्यः प्रपूर्वस्य॥ ६।१।२३॥

टी—। प्रात् स्त्यः सम्प्रसारणं स्यान्निष्ठायाम्।

स्त्य preceded by प्र gets सम्प्र. in निष्ठा।

मित—। स्त्य इति। स्त्यै इत्यस्य कृतात्वस्य षष्ठ्या निर्देशः। 'ष्यङः सम्प्रसारणम्' इत्यतः सम्प्रसारणम्। 'स्फायः—' इत्यतो निष्ठायामिति चानुवर्तते।

३०३४। प्रस्त्योऽन्यतरस्याम् ॥ ८।२।५४ ॥

टी—। निष्ठातस्य मो वा स्यात्। प्रस्तीमः—प्रस्तीतः। 'प्रात्' किम्? स्त्यानः।

निष्ठात coming after प्र + स्त्यै optionally becomes म. Thus प्र + स्त्यै + क्त = प्रस्तीम or प्रस्तीतः (conjoined) by 'आदेचः—', 'स्त्यः—' and 'हलः (2559), and this rule.

मित—। प्रस्त्य इति। प्रपूर्वात् स्त्यायतेरिति सिद्धवत् कृत्वाह—निष्ठातस्येति। 'श्यो मः' इत्यतोमोऽनुवर्तते। प्रस्तीमः—प्रस्तीत इति। सङ्घीभूत इत्यर्थः। आदेच इत्यात्वे, सम्प्रसारणे, 'हलः' (२५५९) इति दीर्घे च कृते मत्वविकल्पः। स्त्यै ष्ट्यै शब्दसंघातयोः। स्त्यान इति—संयोगादेः—(३०१७) इति नत्वम्।

३०३५। अनुपसर्गात् फुल्लक्षीवकृशोल्लाघाः ॥ ८।२।५५ ॥

टी—। ञिफला फुल्लः। निष्ठातस्य लत्वं निपात्यते। क्तवत्वेकदेशस्यापीदं निपातनमिष्यते। फुल्लवान्। क्षीवादिषु तु क्तप्रत्ययस्यैव तलोपः। तस्य सिद्धत्वात् प्राप्तस्येटोऽभावश्च निपात्यते! क्षीवो मत्तः। कृशस्तनुः। उल्लाघो नीरोगः। 'अनुपसर्गात्' किम्?—

These i.e फुल्ल, क्षीव, कृश and उल्लाघ are irregularly formed when preceded by no उपसर्ग. Thus ञिफला (or फल) + क्त = फुल्ल, लत्व of क्त by this rule and absense of इट् by 'आदितश्च' (3036) and उ by 'ति च' (3037). This निपातन intended for a part the portion क्त, is also of क्तवतु. In क्षीव etc the त of क्त is dropped and this disappearence of त being सिद्ध, the augment इट् which was due is irregularly prohibited. Thus क्षीव + क्त = क्षीवः (intoxi-

cated), कृश:+क्त=कृश: (weak) and उद्+लाघ्+क्त=उल्लाघ: (free from ailments).

मित—। अनुपसर्गादिति। अनुपसृष्टा एते चत्वारो निपात्यन्ते। तत्र प्रत्येकं निपातनं दर्शयति। ञिफलेति। फल्+क्त इति स्थिते इत्यर्थः। तत्र आदितश्चेति (२०३६) इतोऽभावः। 'ति च' (२०३७) इति उकारश्च। फुल्लवानित्यस्य सूत्रेऽदर्शनादाह—क्तवत्वेकदेशस्येति। क्तांशमात्रस्येति भावः। वर्णैकदेशग्रहणेनापि वर्णस्य ग्रहणात्। क्षीवादिष्विति—क्षीवकृशोल्लाघेषु विषये इत्यर्थः। तलोप इति। तथाच क्षीव्+क्त=क्षीवः, कृशक्त=कृशः, उत्+लाघ+क्त=उल्लाघः—रूपाणि लभ्यन्ते। तलोपस्य असिद्धत्वादिड्विरह इत्याह—तस्येति। अनुपसर्गात् किमिति ?—ति चेत्यस्यास्य प्रत्युदाहरणम्।

२०३६। आदितश्च ॥७।२।१६॥

टी—। आकारेतो निष्ठाया इट् न स्यात्।

इट् is not prefixed to निष्ठा coming after a root which drops indicatory 'आ'.

मित—। आदितश्चेति। 'श्वीदितो—' (७।२।१४) इत्यतो निष्ठायाम् 'नेड् वशि—' (७।२।८) इत्यतो 'नेट्' इति चानुवर्तते।

२०३७। ति च ॥ ७।४।८९ ॥

टी—। चरफलोरत उत् स्यात्तादौ किति। प्रफुल्तः। प्रचीर्णः। प्रफुल्लितः। प्रोल्लाघितः। कथं तर्हि 'लोभद्रुमं सानुमतः प्रफुल्लम्' इति ? 'फुल्ल विकसने'—पचाद्यच्। सूत्रं तु फुल्लतादिनिवृत्त्यर्थम्। 'उत्फुल्लसंफुल्लयोरुपसंख्यानम्' (वार्तिक)।

अ of चर and फल् becomes उ when a कित् affix beginning with त follows. Thus प्र+फल्+क्त=प्रफुल्त। प्रक्षीवित etc with इट् and त which apply due to the उपसर्गs here. Thus these are counter examples of 'अनुपसर्गात्—' (3035). 'लोध्रद्रुमम्—' (Raghu II 29). Here the term प्रफुल्ल is derived as प्र+फुल्ल+अच् (and not फल्+क्त). If so, what is then utility of the rule 'अनुपसर्गात्—' (3035)? The utility is to dismiss फुल्त, क्षीवित, etc. उत्फुल्ल संफुल्ल—'varttika.

सित—। चरफलोरिति। 'चरफलोश्च' (७।४।८७), उत्परस्यातः (७।४।८८), 'दीर्घ इणः किति' (७।४।६९) इत्यतः क्रमेण चरफलोरिति, उदिति, कितीति चानुवर्तते। तदाह चरफलोरत इत्यादि। वस्तुतस्तु कितोऽत्यनुवर्तनं निष्फलम्। सेटकत्वेन निष्ठां विना तकारादिप्रत्ययाभावात्। लोध्रद्रुममिति। "स पाटलायां गवि तस्थिवांसं धनुर्धरः केशरिणं ददर्श। अधित्यकायामिव धातुमय्यां लोध्रद्रुमम् सानुमतः प्रफुल्लम्" (रघु—२।२९)। अत्र प्रफुल्ल इति प्रपूर्वात् फुल्लतेरचि निष्पन्न इति मल्लिनाथोऽप्येवमेवाह। नन्वेवं 'अनुपसर्गात्—' इति (३०३५) निपातनं व्यर्थं तत्राह—सूत्रमिति। आदिपदेन क्षीवितादेरपि ग्रहणम्। 'उत्फुल्ल—'इति। वार्त्तिकम्। निष्ठातस्योपसर्गेऽपि निष्ठातस्य लत्वार्थमिदम्।

## ३०२८। नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम् ॥ ८।२।५६ ॥

दी—। एभ्यो निष्ठातस्य नो वा। नुन्नः—नुत्तः। 'विद विचारणे' रौधादिक एव गृह्यते। उन्दिना परेण साहचर्यात्। विन्नः—वित्तः। वेत्तेस्तु—विदितः। विद्यतेर्विन्नः। उन्दी—

निष्ठात, coming after the roots नुद, विद, उन्द, त्रा, घ्रा and ह्री, is optionally replaced by न. Thus नुन्नः or नुत्तः (sent or despatched) विद being mentioned in combination with उन्दी of the रुधादि,

is to be taken as रुधादि ( विन्नः—विच examined). Otherwise विदितः ( विद् अदादि + क्त ), विन्नः ( विद + दिवादि + क्त ) no option. उन्द् + क्त—

मित—। नुदेति। नुदप्रेरणे, विद विचारणे, उन्दी परिक्लेदने, त्रा त्राणे, घ्रा घ्राणे, ह्री लज्जायामिति एते धातवः। एभ्य इति स्पष्टम्। 'रदाभ्याम्—' 'संयोगादेः—' इत्येताभ्यां नित्ये प्राप्ते ह्रीत्यस्याप्राप्तेः चोभयत्रैव विभाषेयम्। विदेः रौधादिकस्य ग्रहणे मानमाह—उन्दिना परेणेति। तस्यापि रौधादिकत्वात्। वैत्तेरिति। विदज्ञाने इत्यादादिकस्य। विद सत्तायामिति दैवादिकस्य तु विन्न इति। अत्र विकल्पो नेति फलितम्। विदित इत्यत्र निष्ठातस्य इट व्यवहितत्वान्नात्व नेति बोध्यम्। तथाच भाष्यम्—'वेत्तेस्तु विदितो निष्ठा विद्यतेर्विन्न इष्यते वेत्तेर्विन्नश्च वित्तश्च भोगे वित्तश्च विन्दतेः इति'॥ उन्दीत्यस्य निष्ठायामिडभाव इत्याह—

## २०३८। श्वीदितो निष्ठायाम्॥ ७।२।१४॥

**टी—। श्वयतेरीदितश्च निष्ठाया इट् न स्यात्। उन्नः—उत्तः। त्राणः—त्रातः। घ्राणः—घ्रातः। ह्रीणः—ह्रीतः।**

इट् is not prefixed to निष्ठा following the root श्वि ( टुओश्वि) and roots dropping ई. Thus उन्न उत्तः (watered, moisted). Note that the न of उन्द् is dropped by 'अनिदिताम्—' (414), then नत्व of निष्ठा and of द of the root itself by "रदाभ्याम्" etc.

मित—। श्वीदित इति। श्वि च ईदित् श्वीदित् समाहारैकवचनम्। तस्य। निष्ठात इति वर्तते। तदाह—श्वयतेरित्यादि। 'नेड् वशि—' ( ७।२।८ ) इत्यतो नेडित्यनुवर्तते। उन्न उत्तः इति। अनिदितामिति ( ४०५ ) नलोपादूर्ध्वमनेन नत्वविकल्पः। त्राण इत्यादि पूर्वसूत्रस्य 'त्राघ्रा—' इत्यादेरुदाहरणम्। ह्रीणः ह्रीतः=लज्जित इत्यर्थः। [ "ह्रीणा च हृष्टा च वभाष भैमी" इति नैषधे, "ह्रीतमिव नभसि वीतमले" इति किराते ]।

३०४०। न ध्याख्यापॄमूर्च्छिमदाम् ॥ ८।२।५७ ॥

दी। एभ्यो निष्ठातस्य नत्वं न। ध्यातः। ख्यातः। पूर्तः। 'राल्लोपः' (२६५५)। मूर्तः। मत्तः।

निष्ठात coming after ध्यै, ख्या, पॄ, मूर्च्छ and मद is not changed into न। ध्यातः—etc (here आत्व by 'आदेच—' 2371). In these two cases नत्व due by 'संयोगादेः—' (3017) is prohibited. पूर्तः—पॄ + क्त = पुर् त by 'उदोष्ठ्यपूर्वस्य' (2494) and 'उरण्रपरः' = पूर्तः, दीर्घ by 'हलि च' (354) and want of इट् by 'श्र्युकः किति' (2387). मुर्च्छा + क्त = मुर् + क्त by 'राल्लोपः' (2655) = मूर्तः and by 'आदितश्च' (3036) which prohibits इट्, and 'हलिच' (554). In these two cases 'रदाभ्यां—' does not apply. मत्तः—The root 'मदी हर्षे' being ईदित् does not provide इट् for निष्ठा in accordance with 'श्वीदितो—' (3939). This also is an exception of 'रदाभ्याम्'.

मित—। न ध्येति। ध्यैचिन्तायाम्, ख्या प्रकथने, पॄ पालनपूरणयोः, मुर्च्छा मोहसमुच्छ्राययोः। मदी हर्षग्लपनयोः। पञ्चम्यर्थे षष्ठी। तदाह—एभ्य इति। ध्यात इति। आत्वे कृते रूपम्। ध्यातः ख्यात इत्यत्र संयोगादेरिति प्राप्तो नकारः प्रतिषिध्यते। पूतः इति—पॄ + क्त इति स्थिते 'उदोष्ठ्यपूर्वस्य' (२४९४) इत्युत्त्वे रपरत्वे, हलि चेति (३५४) दीर्घे 'श्र्युकः—' (२३८१) इतीट् प्रतिषेधः। मूर्च्छा इत्यत्र सतुक्कस्य छस्य लोपार्थमाह—राल्लोप इति। आकारस्यापि इत्। एवम्—मुर् + त इति स्थिते प्राग्वद् दीर्घे 'आदितश्च' (३०३६) इतीट्प्रतिषेधे च मूर्त इति। मत्त इति मदीत्यस्य ईदित्त्वात् 'श्वीदितः—' (३०३९) इति इटप्रतिषेधः। मत्त इत्यत्र 'रदाभ्याम्—' इति प्राप्तोनो न।

३०४१। वित्तो भोगप्रत्यययोः ॥ ८।२।५८ ॥

दी। विन्दतेर्निष्ठान्तस्य निपातोऽयं भोग्ये प्रतीतेचार्थे।

वित्तं धनम्। वित्तः पुरुषः। 'अनयोः' किम्? विन्नः। 'विभाषा गमहन' (२०८८) इति क्वसौ वेट्त्वादिह नेट्।

This term वित्त is irregularly derived as विद् (रुधादि)+क्त when it (the derivative) denotes enjoyable something or distinguished or delighted some one. Otherwise विन्न। This (विद्) being वेट् or optional इट् in क्वसु by 'विभाषा गमहन—' (3079), here gets no इट् by 'यस्य विभाषा' (3325).

मित—। वित्त इति। भोगप्रतीतयोरित्यस्य अर्थमाह—भोग्ये प्रतीते चार्थे इति। 'प्रतीते प्रथितख्यातवित्तविज्ञातविश्रुता' इति 'ख्याते हृष्टे प्रतीत' इति चामरः। भुज्यत इति भोगः। प्रतीयत इति प्रत्ययः—क्रमेण कर्मणि घञची। विन्न इति। विद्लृ लाभे इत्यस्मान्निष्ठा। लब्ध इत्यर्थः। 'विन्दतेः निष्ठाया इट् नेत्याह—'। 'विभाषा गमहन—' (३०८८) इति। इह नेडिति—'यस्य विभाषा' (३०२५) इत्यनेनेत्यर्थः।

३०४२। भित्तं शकलम्॥ ८।२।५८॥

टी—। भिन्नमन्यत्।

When a part is meant भिद्+क्त=भित्त by निपातन otherwise भिन्न (separated).

मित—। भित्तमिति। रदाभ्यामिति निष्ठानत्वाभावोऽत्र निपात्यते शकलमिति चेदर्थो भवतीत्यर्थः। भिन्नमिति। विदीर्णमित्यर्थः।

३०४३। ऋणमाधमर्ण्ये॥ ८।२।६०॥

टी—। ऋधातोः क्तो तकारस्य नत्वं निपात्यते अधमर्ण-व्यवहारे। ऋतमन्यत्।

त of क्त, coming after ऋ (the root) is irregularly replaced by न when the conduct of a debtor i.e borrowing is implied. Thus ऋणम्, otherwise ऋतम् (truth).

मित—। ऋणमिति। अधमं दुःखप्रदम् ऋणमस्येति अधमर्णः। तस्य भावः कर्म वा आधमर्ण्यम्। ष्यञ्। तस्मिन्। तदाह—अधमर्णव्यवहारे। अधमर्णस्य व्यवहारः। स च दातृग्रहीत्रोर्नियमपूर्वको व्यापारः, तस्मिन् द्योत्ये इत्यर्थः। ऋतमिति सत्यम् इत्यर्थः।

३०४४। स्फायः स्फी निष्ठायाम्॥ ६।१।२२॥

दी—स्फीतः।

मित—। स्फाय इति। स्फायी वृद्धौ। स्फीत इति। ईदित्वान्नेट्। स्फीतिरिति तु 'स्फीतमाचष्टे इति ण्यन्तादच इरिति इप्रत्यये अल्लोपणिलोपौ' इति तत्त्वबोधिनी।

३०४५। इण्निष्ठायाम्॥ ७।२।४७॥

दी—। निरः कुषो निष्ठाया इट स्यात्। 'यस्य विभाषा' (३०२५) इति निषेधे प्राप्ते पुनर्विधिः। निष्कुषितः।

इट् is prefixed to निष्ठा coming after कुष् preceded by निर्. This would have optional इट in आर्धधातुक by निरःकुषः (2184), but as the prohibiton 'यस्य विभाषा' (3025) runs then so the need of this rule. निष्कुषित (fully extracted).

मित—। इडिति। 'निरः कुषः' (२५६०—७।२।४६) इति पूर्वं सूत्रम्। निरपर्वात् कुषो वलादेरार्धधातुकस्य इट् वा स्यादिति च तदर्थः। एवं चेत् विकल्पे प्राप्ते 'यस्य विभाषा'इति (३०३५) इडत्र नस्यादित्याह—निषेधे प्राप्ते पुनर्विधिरिति। निष्कुषित इति। निःशेषेण कृष्ट इत्यर्थः। कुष निकर्षे इति धातुः।

३०४६। वसतिक्षुधोरिट्॥ ७।२।५२॥

दी—। आभ्यां क्त्वानिष्ठयोर्नित्यमिट् स्यात्। उषितः। क्षुधितः।

इट् is persistently used before क्त्वा and निष्ठा coming after वस् and क्षुध्। उषित: ( वस् + क्त ) सम्प्र—by 'वचिस्वपि—' (2410) as वस् is यजादि, and षत्व by 'शासिवसि—' (2410). इट्। क्षुधित: ( इट् ).

मित—। वसतीति। वसतीति वसधातो: श्तपा निर्देश:। पञ्चम्यर्थे षष्ठी। तदाह—आभ्याम् इति। 'क्लिश: क्त्वानिष्ठयो:' (७।२।५०) इत्यत: क्त्वानिष्ठयो-रित्यनुवर्तयन्नाह—क्त्वानिष्ठयोरिति। उषित इति—वसतेर्यजादित्वात् 'वचिस्वपि—' (२४१०) इति सम्प्रसारणम्। 'शासिवसि—' (२४१०) इति षत्वम्। इट्। क्षुधित इति। क्तिपरे इट्। क्त्वायाम्—उषित्वा क्षुधित्वेत्युदाहरणे।

## २०४७। अञ्चे: पूजायाम् ॥ ७।२।५३ ॥

**दी—। पूजार्थादञ्चे: क्त्वानिष्ठयोरिट् स्यात्। अञ्चित:। गतौ तु अक्त:।**

अञ्चित = इट्। It means पूजित: and therefore no नलोप by 'नाञ्चे: पूजायाम्'. Here इट was prohibited by 'यस्य विभाषा' as अञ्चु is उदित्। अक्त =gone ( अञ्च् + क्त ), नलोप by 'अनिदिताम्—' (415). No इट्।

मित—। अञ्चेरिति। पूर्ववदनुवृत्ति:। अञ्चतेरुदित्त्वाद 'उदितो वा' (३२८) इति क्त्वायां विकल्पे प्राप्ते 'यस्य विभाषा' (३०२५) इति निष्ठायाञ्च निषेधे प्राप्ते वचनम्। अञ्चित इति। पूजित इत्यर्थ:। अतएव 'नाञ्चे: पूजायाम्' (४२४) इति नलोपनिषेध:। अञ्चु चेति भौवादिकोऽयं तेन गत्यावाह—अक्त इति। 'अनिदिताम्—' (४१५) इति नलोप:। यस्य विभाषेति इण्निषेध:। 'अञ्चोऽनापादाने' (८।२।४८) इति नत्वन्तु न, तस्य त्वँपादिकत्वात्।

## २०४८। लुभो विमोहने ॥ ७।२।५४ ॥ *

**दी—। लुभ: क्त्वानिष्ठयोर्नित्यमिट् स्यान्न तु गार्ध्ये। लुभित:। गार्ध्ये तु लुब्ध:।**

The augment इट is persistently prefixed to क्त्वा and निष्ठा coming after लुभ् provided it implies no temptation. Thus लुभितः charmed. Otherwise लुब्धः (a fowler etc). In the former case लुभ् is तुदादि and in the latter दिवादि।

मित—। लुभ इति। प्राग्वदनुवृत्तिः। 'लुभ विमोहने' इति तुदादौ धातुपाठः। 'लुभ गार्ध्ये' इति तु दिवादौ। तत्र तौदादिकस्यैव निष्ठाया इट् न तु दैवादिकस्येति ज्ञापयन्नाह—न लुगार्ध्ये इति। विमोहनमाकुलीकरणम् इति धातुवृत्तिः। गार्ध्यं लोभः। लुभित इति। 'तीष सह—' इति तायाम् इट् विकल्पे प्राप्ते यस्य विभाषेति निष्ठायां तन्निषेधे च वचनम्। 'अविमोहने' * इति तत्त्वबोधिनी तु भ्रान्ता। लुब्ध इति। गार्ध्यस्याकाङ्क्षावाचित्वात् 'मतिबुद्धि—' इति कर्तरि वर्तमानेऽपि क्तः। व्याध इत्यर्थः।

[ * 'लुभोऽविमोहने' इति तत्त्वबोधिनीस्थः पाठस्तु प्रामादिकः। अविमोहन इति सति दैवादिकस्यैव यस्यौचित्यान्निषेधायोगात्। ]

२०४८। क्लिशः क्त्वानिष्ठयोः॥ ७।२।५०॥

टी—। इड्वा स्यात्। 'क्लिश उपतापे' (अस्य ?) नित्यं प्राप्ते, 'क्लिशू विबाधने' अस्य क्त्वायां विकल्पे सिद्धेऽपि निष्ठायां निषेधे प्राप्ते विकल्पः। क्लिशितः—क्लिष्टः।

इट् is optionally prefixed to क्त्वा and निष्ठा coming after क्लिश् (which stands for 'क्लिश् उपतापे' (दिवादि) and क्लिश विबाधने (क्र्यादि). Thus this optional injunction bars the persistent application of इट् after क्लिश् उपतापे by 'आर्धधातुकस्येड्वलादेः' (2181) and the prohibition of इट् after 'क्लिश विबाधने' by 'यस्य विभाषा' as क्लिश is ऊदित् and hence विभाषितेट् by 'स्वरतिसूतिसूयतिधूञूदितो वा' (2279).

मित—। क्लिश इति। शेषं योजयन्नाह—इट् वा स्यादिति। क्लिश इति

दैवादिकस्य 'क्लिश उपतापे' इत्यस्य, 'क्लिशू विबाधने' इति क्र्यादिकस्य चोभयोरपि ग्राहकम्। तत्र दैवादिकस्य 'आर्धधातुकस्येड् वलादेः' (२१४१) इत्यनेन नित्यं प्राप्तिः। क्र्यादिकस्य तु ऊदित्त्वात् 'स्वरतिसूति—' (२२७९) इत्यनेन विकल्पितेट्त्वात् 'यस्य विभाषा' (३०२५) इति निषेधः प्राप्तः। तदुभयविधापि प्राप्तिरनेन विकल्प्यते इत्याह—क्लिश उपतापे इत्यादि। क्लिशितः—क्लिष्ट इति। क्त्वायां तु क्लिशित्वा—क्लिष्ट्वा इत्युदाहरणीयम्।

२०५० । पूङश्च ॥ ७।२।५१ ॥

दी—। पूङः क्त्वानिष्ठयोरिड्वा स्यात्।

इट् is optional before क्त्वा and निष्ठा after पू। This supersedes the prohibition of इट् due by 'श्र्युकः किति' (2381) as पू is उगन्त.

मित—। अथ पूङ (भ्वादि आत्मनेपदी) इति। प्राग्वत् 'इट् निष्ठायाम्' (७।२।५७) इत्यत इट् 'स्वरति—' (७।२।४४) इत्यतो वेति चानुवर्तते। पूर्वसूत्रात् क्त्वानिष्ठयोरिति च। तदाह—पूङ इत्यादि। पूङ् एकाच्त्वादुगित्वाच्च 'श्र्युकः—' (२३८१) इति निषेधे प्राप्ते वचनम्।

२०५१ । पूङः क्त्वा च ॥ १।२।२२ ॥

दी—। पूङः क्त्वा निष्ठा च सेट् किन्न स्यात्। पवितः पूतः। क्त्वाग्रहणमुत्तरार्थम्। 'नोपधात्—' (३३२४) इत्यत्र हि क्त्वैव सम्बध्यते।

क्त्वा and निष्ठा, prefixed with इट्, when coming after पूङ् are considered not to be कित्. Thus पवितः here सेट् क्त not being कित्, गुण applies by 'सार्वधातुकार्ध—' (2169). पूतः—किद् (option of इट् by the previous rule). In क्त्वा—पवित्वा—पूत्वा। The

acceptance of क्त्वा here is for the following rule 'नोपधात्—' ( 1.2.23 ).—Where क्त्वा only is advised to be सेट and अकित् ।

मित—। पूङ क्त्वा चेति। 'न क्त्वा सेट' (१।२।१३) इत्यतः 'न सेडि'ति 'असंयोगाल्लिट् कित्' (१।२।५) इत्यतः किदिति। 'निष्ठा शीङ् स्विदि—' (१।२।१९) इत्यतो निष्ठेति चानुवर्तते। तदाह—पूङ् इत्यादि। पवितः—पूत इति। इटपक्षे कित्त्वाभावात् 'सार्वधातुकार्द्ध—' (२१६९) इति गुणः। क्त्वायाम्—पवित्वा—पूत्वेति। ननु 'न क्त्वा—' इत्यनेनैवात्र क्त्वाग्रहणे सिद्धे पुनः क्त्वाग्रहणं व्यर्थमित्याशङ्क्य आह—उत्तरार्थमिति। 'नोपधात्—' (१।२।२३) इत्येतदर्थम्।

३०५२। निष्ठा शीङ् स्विदि मिदिक्ष्विदिधृषः ॥ १।२।१९ ॥

दी—। एभ्यः सेठ् निष्ठा किन्न स्यात्। शयितः—शयितवान्। अनुबन्धनिर्देशो यङ्लुङ्निवृत्त्यर्थः। शेश्यितः शेश्यितवान् ॥ 'आदि कर्मणि निष्ठा वक्तव्या' (वार्तिक)।

सेट् (i.e. prefixed with इट्) निष्ठा coming after these is not कित्, ( and thus the root gets गुण ). Thus शयितः etc. For the instances of स्विदि etc. see the next rules. The acceptance of अनुबन्ध or indicatory ङ in शीङ् indicates the exclusion of किन्निषेध from यङ्लुक् or in other words the retention of यङ् ( or अ ) by the परिभाषा—"श्तिपा शपाऽनुबन्धेन निर्दिष्टं यद् गणेन च।

यत्रैकाजग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥"

( Explained under—'एकाच उपदेशे—' 3256 )

Thus शेश्यितः शेश्यितवान् by 'सन्यङोः' ( 2395 ), and 'गुणो यङ्लुकोः' (2630) etc. and इट् and no guna of the root due to prohibition of कित्त्वनिषेध or injunction of कित्त्व। 'आदिकर्मणि—' Varttika. It

must be said that any root may take निष्ठा when it ( the root ) expresses आदिकर्म or the beginning of a part of an action which may last longer. Thus आदिकर्मत्व is indicated in the latter examples by the particle ( उपसर्ग ) 'प्र'.

मित—निष्ठति। 'न क्त्वा सेट्' 'असंयोगात्—' इत्यतः प्रागवदनुवृत्तिः 'न सेडि'त्यस्य 'किदि'त्यस्य च। तदाह—एभ्य इति। शीङादिभ्यः पञ्चभ्य इत्यर्थः। शयितः—शयितवानिति। कित्त्वनिषेधात् 'सार्वधातुकार्ध—'इति गुणः। 'शीङ्' इति ङकारानुबन्धोऽत्र निर्दिष्टः। तत्रानुबन्धनिर्देशस्य फलमाह—यङ्लुगिति। यङ्लुकि कित्त्वनिषेधनिवृत्त्यर्थं इत्यर्थः। तथाच यङ्लुकि सेनिष्ठायाः कित्त्वमेवेति फलितम्। एतच्च 'एकाच उपदेशेऽनुदात्तात्' (२२५६) इत्यत्र 'श्तिपा शपानुबन्धेन—' इति परिभाषयैव प्राप्यते इत्युक्तं प्राक्। शेश्यितः—शेश्यितवानिति। यङ्लुकि उदाहरणम् (?)। द्वित्वाभ्यासगुणादयः प्राक् यङ्लुक् प्रक्रियायां विस्तरेण प्रदर्शिताः। अत्र कित्त्वनिषेधाभावेन कित्त्वाद् धातोर्गुणो न। शेश्यितः—शेश्यितवान् इति पाठः साधुः। 'एरनेकाचः—' इति यण्। 'आदि कर्मणि—' इति वार्तिकमिदम्। कर्मशब्दः क्रियावचनः। क्रियायाः चणिकत्वात् सुदीर्घकालसम्पाद्यायाः क्रियायाः आद्यक्षणे यावती क्रिया सम्पाद्यते साऽपि परवर्तिक्षणपर्यालोचनया भूतैव भवति। सा आदिकर्म इत्युच्यते। सर्वस्यां क्रियायां भूतायां सूत्रेण निष्ठा विधीयते। एकभूतायां तु नास्ति विधानम्। तेनायं वार्तिकारम्भः। तदुक्तमत्र 'आद्येषु क्षणेषु भूतेषु सत्स्वः क्रियाया भूतत्वाभावान्निष्ठा न प्राप्नोतीति वचनम्' इति। एवमादिकर्मणि निष्ठां विधाय विशेषमाह—

### ३०५३। आदि कर्मणि क्तः कर्तरि च ॥ ३।४।७१ ॥

**टी—। आदिकर्मणि यः क्तः स कर्तरि स्यात्। चाद्भावकर्मणोः।**

That क्त which is enjoined in आदिकर्म is to be considered as enjoined in the कर्तृ, भाव and कर्मवाच्य।

मित—। आदिकर्मणीति। तत्र चकारेण 'तयोरेव कृत्यक्त—' (३।४।७०) इति सूत्रादस्य 'तयोः' (भावकर्मणोः) इत्यस्याक्षेप इत्याह—चादिति। अन्यथा तत्रकौण्डिन्यन्यायेन तयोर्नस्यात्।

**३५४। विभाषा भावादिकर्मणोः॥ ७।२।१७॥**

**टी— भावे आदिकर्मणि च आदितो निष्ठाया इड्वा स्यात्। प्रश्वेदितश्चैत्रः। प्रस्वेदितं तेन। 'ञिष्विदा' इति भ्वादिरत्र गृह्यते। ञीद्भिः साहचर्य्यात्। स्विद्यतेस्तु स्विदितः इत्येव। ञिमिदा ञिक्ष्विदा—दिवादौ भ्वादौ च। प्रमेदितः—प्रमेदितवान्। प्रक्ष्वेदितः—प्रक्ष्वेदितवान्? प्रधर्षितः—प्रधर्षितवान्। प्रधर्षितं तेन। 'सेट्' किम्? प्रस्विन्नः। प्रस्विन्नं तेनेत्यादि।**

इट् is optionally prefixed to निष्ठा, following such roots as drop their आकारs in the भाववाच्य and आदिकर्म. Thus 'प्रस्वेदितः—' etc (Chaitra has perspired)—आदिकर्म। प्रस्वेदितं तेन (भाववाच्य). Note 'स्विदिमिदिक्ष्विदि' mentioned in 'निष्ठा शीङ्'—(3652) are आदित् roots. Thus स्विदि is ञिष्विदा स्नेहने (भ्वादि) for it is mentioned in connection with ञिमिदा and ञिक्ष्विदा which also are ञीत् or drop their ञि (ञि+इत्). Hence 'ष्विदा गात्रप्रक्षरणे' (दिवादि) as स्विद्यति will give 'स्विदितः' only and not स्विन्न also for here there is no option. ञिमिदा, ञिक्ष्विदा these two roots are read both in दिवादि and भ्वादि class. सेट किम्—i.e why in your explanation of the rule 'निष्ठा—'(3052) you spoke of 'सेट् निष्ठा'—etc? Witness प्रस्विन्नः etc. Here there being no इट, कित्व applies and consequently गुण does not take effect.

मित—। विभाषेति। 'आदितश्च' (७।२।१६), 'श्वीदितः—' (७।२।१४), 'नेड्वशि—' (७।२।८) इति पूर्वसूत्राणि। तत् क्रमेणाह—आदितो निष्ठाया इत्र आदिति। प्रश्वेदित इति। घर्माक्तो जात इत्यर्थः। पूर्वस्य 'निष्ठा शीङ—' इति (२०५४) सूत्रस्य ञिदादेरुदाहरणवर्गोऽयम्। तत्र सेट् निष्ठा किन्नेत्युक्तम्। अतएव इट् पक्षे गुणः। तदभावे कित्वाद् गुणाभावः। प्रक्ष्विन्नं तेनेत्यादि। ननु 'ष्विदा गात्रप्रक्षरणे' इति दिवादौ 'ञिष्विदा स्नेहनमोचनयो' रिति भ्वादौ च ष्विदेः पाठः। तत्र कस्मात् ग्रहणम् इत्यत्र आह—भ्वादिरवेति। युक्तिमाह—श्वीदिरिति। ञिमिदा, ञिक्ष्विदा, ञिधृषा इत्येषां शीताम् (ञि इत् येषां) साहचर्य्यात्। दिवादौ भ्वादौ च। उभावपीत्यर्थः। 'आदितश्च' (३०३६) इति ष्विदादीनां निषेधे प्राप्ते आदिकर्मणि विकल्प उदाहृतः।

## २०५५। मृषस्तितिक्षायाम् ॥ १।२।२० ॥

**दी—। सेण्निष्ठा किन्नस्यात्। मर्षितः—मर्षितवान्। तितिक्षायां किम्? अपमृषितं वाक्यम्। अविस्पष्टमित्यर्थः।**

सेट् निष्ठा is not कित् when following the root मृष in the sense of forbearance i. e. when इट् is attached the root gets guna. Thus मर्षितः मर्षितवान्; otherwise मृषितं as अपमृषितं वाक्यम् or an obscure sentence.

मित—। मृष इति न क्ता सेडित्यादितः प्राग्वदनुवृत्तिः। तदाह—सेण्निष्ठेति। तितिक्षार्थाद् मृषः परेति शेषः। तितिक्षा क्षमा सहनमित्यर्थः। अपमृषितमिति। अत्र तितिक्षार्थाभावेन कित्त्वम्। ततश्च गुणाभावः।

## २०५६। उदुपधाद्भावादिकर्मणोरन्यतरस्याम् ॥१।२।२१॥

**दी—। उदुपधात् परा भावादिकर्मणोः सेट्निष्ठा वा कित् न स्यात्। द्युतितम्—द्योतितम्। मुदितं—मोदितं साधुना।**

प्रद्युतितः—प्रद्योतितः साधुः। प्रमुदितः—प्रमोदितः साधुः। 'उदुपधात्' किम्? विदितम्। 'भाव—' इत्यादि किम्? रुचितं कार्षापणम्। 'सेट्' किम्? क्रुष्टम्। शब्विकरणेभ्य एवेष्यते (वार्तिक)। नेह—गुध्यतेर्गुधितम्।

सेट् निष्ठा is optionally not कित्,when coming after an उदुपध root or a root having उकार in its penultinate, in the भाववाच्य and in आदिकर्म. Thus in भाव—द्युतितम्—द्योतितम् and in आदिकर्म—मुदितं मोदितं साधुना etc. विदितम्—Here निष्ठा is always कित् as विद् is इदुपध and not उदुपध. रुचितम्—Thus रुच् is उदुपध, yet there is no option of कित्त्व of the निष्ठा as here कर्त्तरि (not in भाव or in आदिकर्म) by the rule 'गत्यर्थाकर्मक—'। क्रुष्टम्—'क्रुश् आह्वाने रोदने च'—no option of कित्त्व as निष्ठा is not prefixed with इट। शब्विकरणेभ्यः (varttika)—This rule is intended for शब्विकरण or भ्वादि roots. Thus दिवादि 'गुध परिवेष्टने' gives गुधितम् only and not गोधितम् also in भाव or आदिकर्म although the root is उदुपध and the निष्ठा is सेट्।

मित—। उदुपधादिति। उत् उकारः उपधा यस्येति विग्रहः। तथाभूताद्धातोः परा इति मन्वान आह—उदुपधात् परेति। अन्यतरस्यामिति विभाषार्थकः। अनुवृत्तिः प्राग्वत्। तत्र भावे आह—द्युतितम्—द्योतितम् इति। आदिकर्मणि आह—मुदितं—मोदितमित्यादि। विदितमिति—इदुपधोऽयं नोदुपधस्तेन न कित्त्व-निषेधविकल्पः। किन्तु कित्त्वमेव। रुचितमिति—रुच दीप्तौ। उदुपधत्वेऽपि भावादि-कर्मणोर्विधनाभावान्न विकल्पः। 'गत्यर्थाकर्मक—' इति कर्तरि निष्ठा। क्रुष्टम् इति। क्रुश आह्वाने रोदने च। निष्ठाया इडभावात् कित्त्वनिषेधविकल्पाभावः। किन्तु नित्यमेव कित्त्वम्। 'शब्विकरणेभ्यः—' वार्तिकम्। तेन गुध परिवेष्टने इत्यस्माद्दैवादिकान्निष्टायाः प्रोगुक्तं न।

२०५७। निष्ठायां सेटि ॥ ६।४।५२ ॥

दी—। णेर्लोपः स्यात्। भावितः—भावितवान्। 'श्वीदितः—' (३०३८) इति नेट्। सम्प्रसारणम्। शूनः। दीप्तः। गुह्—गूढः। वनु—वतः। तनु—ततः। पतेः सनि वेट्कत्वादिड्भावे प्राप्ते—"द्वितीया श्रितातीत—" (६८६) इति सूत्रे निपातनादिट्=पतितः। 'सेसिचि—' इति वेट्कत्वात् सिद्धे ऋन्तत्वादीनामोदित्त्वे नानित्यत्वज्ञापनाद् वा। तेन 'धावितमिभराजधिया' इत्यादि। 'यस्य विभाषा' इत्यत्रैकाच इत्येव—दरिद्रितः।

णि or णिच् disappears after a root when सेट् निष्ठा follows. Thus भावितः—भावितवान् (भू+णिच्+इट क्त—क्तवतु). This rule supersedes 'णेरनिटि' (2313) which prohibited णि from the अनिट् cases only. शूनः—(श्वि+क्त) by सम्प्रसारण (as श्वि or टुओश्वि is यजादि) पूर्वरूपत्व, दीर्घ, नत्व etc—see उच्छून under 'श्वीदितः'—(3019). गूढ़— (गुह+क्त) by 'हो ढः' 'झषस्तथोर्धोऽधः' 'ष्टुनाष्टुः' 'ढो ढे लोपः' 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' and prohibition of इट् by 'यस्य विभाषा' (3025), for गुह् being ऊदित्, and is विभाषितेट् by 'स्वरतिसूति—'। वतः (वनु+क्त)—disappearance of अनुनासिक by 'अनुदात्तोपदेश—', prohibition of इट् by 'यस्य विभाषा' for वनु ling उदित्, the rule उदितो वा applies. Similarly ततः। पतेः सनि वेट्कत्वात् i.e. by the varttika तनिपतिदरिद्राणामुपसङ्ख्यानम्। सूत्रे इति निपातनात् etc—irregularly i.e by the behaviour of Panini himself; or the augment of इट् may be prefixed regularly to निष्ठा on the ground that the rule 'यस्य विभाषा' (3025) is indicated as अनित्य (or not obligatory) by the state of making

इदित् ( ई dropping ) of क्नति ( क्नती, चृती ) etc though they were already declared वेट्क or विभाषितेट् by 'सेऽसिचि—' (2506). The drift is this—क्नती, चृती etc being ईदित् the rule 'श्वीदित:—' (3039) is sufficient to prohibit इट्. But that '(श्वीदित:—' does not apply; for क्नती etc being again mentioned as विभाषितेट् ( having इट् optionally) under 'सेऽसिचि—' (2506) and the rule 'यस्य विभाषा' applies. In that case the ईदित्करण becomes superfluous. But that is inadmissible as the rule 'श्वीदित:—' is significant. Thus 'यस्य विभाषा' is considered to be अनित्य, consequently it does not apply in the case of पत् in निष्ठा and we have the augment इट् here. In this way i. e due to the अनित्यत्व of 'यस्य विभाषा' we have इट् in धावितवान् etc ( for धाव् is विभाषितेट् by उदितोवा and prohibition under 'यस्य विभाषा' should otherwise thus apply). The prohibition of इट् by 'यस्य विभाषा' applies in cases of एकाच् or monosyllabic roots only. Hence in दरिद्रा + क्त we have by इट् = दरिद्रित:, as दरिद्रा is अनेकाच् (polysyllablic), although दरिद्रा is declared to be वेट् or विभाषितेट् by the varttika 'तनिपतिदरिद्रादीनामुपसंख्यानम्'।

मित—। निष्ठायामिति। 'णेरनिटि' (६।४।५१) इत्यतो णेरिति 'अतो लोप:' (६।४।४८) इत्यतो लोप इति चानुवर्तते। तदाह—णेर्लोप:स्यादिति। सेटि निष्ठायामिति शेष:। भावित: भावितवानिति। णेर्लोपादूर्ध्वम् इट इकारश्रवणम्। णेर्लोप इतीकारस्यैव लोप इति प्रतिपत्तव्यम्। 'टुओश्वि गतिवृद्ध्यो:' इत्यस्मान्निष्ठायां इट् इति दर्शयितुमाह—'श्वीदित:—' इति न। सम्प्रसारणमिति। यजादित्वाद 'वचिस्वपि—' २४१०) इत्यनेनेति भाव:। ततश्च पूर्वरूपे 'हल:' (२५५९) इति दीर्घे 'ओदितश्च' (३०१९) इति निष्ठानत्वे च रूपम्। यद्यपोतदोदितश्चइत्यत्रैव उक्तं तथापि विशेषविवक्षया अत्रोपन्यास:। तथाच संप्रसारण पूर्वरूपत्वयोर्नित्यत्वेन 'श्र्युक: किति' (२३८१) इत्यनेनैव इण्निषेधे सिद्धे पुन: 'श्वीदित:—'

( २०३९ ) इति व्यर्थमिति आपाततः प्रतीयते। तत्रापि इट्निषेधार्थकत्वात्। वस्तुतस्तु नैवम्। तुग्रक:—इत्यत्र उपदेशे एकाच उगन्तात् इति व्याख्यातम्। अयतिर्थोपदेशे एकाञ्च न भवतीति 'श्वीदित:—' इति प्रयोजनमेव। अत एवात्र 'अच: परस्मिन्—' इत्यल्विधित्वेऽपि 'हल' इत्यारम्भसामर्थ्यादेव पूर्वरूपस्य सम्प्रसारणमिति नागेशे स्पष्टम्। दीपी इति। दीपी दीप्तौ दैवादिक:। ईदित्वान्नेट्। गुढ इति। 'हो ढ:', 'झषस्तथोर्धोऽध:', 'ष्टुना ष्टु:', 'ढो ढे लोप:,' 'ढ्रलोपे पूर्वस्य दीर्घोऽण:' इति क्रमेण ढत्वधत्वष्टुत्वढलोपदीर्घा:। उदित्वेन 'स्वरतिसूति—' ( २३७१ ) इति वेट्कत्वाद् 'यस्य विभाषा' ( ३०२५ ) इति नेट्। तत: तत इति। 'अनुदात्तोपदेश—' इति नलोप:। तत: 'उदितो वा' इति वेट्कत्वेन 'यस्य विभाषे'ति प्राग्वत्। पतित इति द्विधा समर्थनीयमित्याह—निपातनादिडिति। नित्यत्वज्ञापनादेति। पते: सनि वेट्कत्वादिति। पत्लृगतौ। तस्य 'तनिपति- दरिद्रानामुपसङ्ख्यानम्' इति वार्तिकेन वेट्कत्वाद इति भाव: इडभावे प्राप्ते इति। 'यस्य विभाषे'त्यनेनेत्यर्थ:। शेषं स्पष्टम्। एष प्रथम: पन्था:। अथ द्वितीयमाह— 'सेऽसिचि—' ( २५०६ ) इति। अयं भाव:—'सेऽसिचि कृतचृतच्छृदतृदनृत:' इत्यनेन कृतचृत प्रभृतिभ्य: सादेरार्धधातुकस्य इड्विभाषित:। तत: 'यस्य विभाषा' इति निष्ठायाम् इण्निषेध: सिध्यति। किन्तु कृतचृतादय: कृती छेदने, चृती 'हिंसा- ग्रहणयो:'—इत्येवम् ईदित्त्वेन पठिता:। 'श्वीदित:—' इति निषेधश्च प्राप्नोति। परं पूर्वेणैव इण्निषेधे सिद्धे पुन: 'श्वीदित:—' इति निषेधो व्यर्थ: स्यात्। ततश्च यत: कृत- चृतादीन् ईदित: कृत्वा पठति ततो ज्ञापयत्याचार्यो 'यस्य विभाषे'ति अनित्यमिति। एवञ्चास्य सार्वत्रिकप्रयोगविरहात् पतित इत्यादौ इट सिध्यत्वेवेति हृदयम्। नागेशस्तु अनित्यत्वज्ञापनपक्षं नानुमन्यते। तत्र भाष्ये अदर्शनात्। कृतीत्यादेरीदित् करणस्यानाकरत्वाच्च इति तद्ग्रन्थे स्पष्टम्। प्रसङ्गादाह—तेनेत्यादि। 'यस्य विभाषे'त्यस्य अनित्यत्वज्ञापनेनेत्यर्थ:। धावितम् इति धावुधातो: उदित्वेन वेट्कत्वेऽपि यस्य विभाषेत्यस्य अनित्यत्वज्ञापनादप्रसक्तेरित्यर्थ:। एवमन्यत्र। दरिद्रित:। अस्य वेट्कत्वेऽपि यस्य विभाषेत्यस्य एकाज्विषयत्वादवैव न प्रवर्तते।

२०५८। क्षुब्ध-स्वान्त-ध्वान्त-लग्न-म्लिष्ट-विरिब्ध-फाण्ट-बाढानि मन्थ-मन-स्तमः-सक्ताविस्पष्ट-स्वरानायासभृशेषु ।।७।२।१८।।

दी—। क्षुब्धादीन्यष्टावनिटकानि निपात्यन्ते समुदायेन मन्थादिषु वाच्येषु। द्रवद्रव्यसंपृक्ताः सक्तवो मन्थो मन्थनदण्डश्च। क्षुब्धो मन्थश्चेत्। स्वान्तं मनः। ध्वान्तं तमः। लग्नं सक्तम्। निष्ठानत्वमपि निपातनात्। म्लिष्टमविस्पष्टम्। विरिब्धः स्वरः। 'म्लेच्छ' 'रेभृ'—इत्यनयोरुपधाया ह्रस्वमपि निपात्यते। फाण्टम् अनायाससाध्यः कषायविशेषः। माधवस्तु नवनीतभावात् प्रागवस्थापन्नं द्रव्यं फाण्टमिति वेदभाष्ये आह। बाढं भृशम्। अन्यत्र तु क्षुभितम्। 'क्षुब्धो राजा' इति त्वागमशास्त्रस्यानित्यत्वात्। स्वनितम्। लगितम्। ध्वनितम्। म्लेच्छितम्। विरेभितम्। फणितम्। बाहितम्।

These eight words क्षुब्ध etc are derived irregularly without इट् provided each in full sense of the term (and not partly) denotes मन्थ etc in order. मन्थ means barley powder mixed up with some liquid as also the churning rod. क्षुब्ध ( क्षुभ + क्त, अनिट् ) is right if it means मन्थ, similarly स्वान्त ( स्वन् + क्त, अनिट् ) is right if it implies mind, and so on. In स्वान्त, the penultimate is lengthened by 'अनुनासिकस्य क्विझलोः क्ङिति' ( २६६६ ). Similarly ध्वान्त ( ध्वन् + क्त )—darkness ( तमः )। लग्न ( लग् + क्त, अनिट् + नत्व by निपातन ) = attached ( सक्त )। म्लिष्ट—( म्लेच्छ + क्त ) = not very clear. Here not only want of इट् but ए is replaced by इ also by निपातन, षत्व by 'व्रश्चभ्रस्ज—' (294) then ष्टुत्व of त। विरिब्ध ( वि + रेभ् + क्त ) a sort of sound ( स्वर )—here अनिट् and ह्रस्व also by निपातन। फाण्ट

( फण्+क्त )—a kind of juicy substance or paste prepared easily. But Madhava i. e Sayana in his exposition on the veda i.e in Satapatha brahmana (?) says that it is a sort of substance which is in a prior state before its attainment of the state of butter. Here ( in फाण्ट ) by निपातन we have want of इट्, टुत्व of निष्ठात. This टुत्व being असिद्ध, दीर्घ of उपधा by 'अनुनासिकस्य—' takes effect. बाढ ( बाह+क्त ) means exceeding ( भृशम् )—ढत्व etc as before. अन्यत्र तु—elsewhere i.e when मन्थ etc are not implied क्षुभित etc in places of क्षुब्ध etc. In क्षुब्धो राजा, there is no इडागम ( for क्षुभित is the correct form in such cases) by the परिभाषा 'आगमशास्त्रमनित्यम्'।

मित—। क्षुब्धेत्यादि। क्षुब्ध, स्वान्त, ध्वान्त, लग्न, म्लिष्ट, विरिब्ध, फाण्ट, बाढ इत्येतेऽष्टौ क्रमेण समुदायार्थतया मन्थ, मनः, तमः सक्त, अविस्पष्ट, स्वर, अनायास, भृश इत्येतेष्वष्टसु इडागमाभावो निपात्यन्ते। समुदायेनेति। न त्ववयवविशेषणेनेत्यर्थं वारयितुमिदम्। तेन क्षुभ् इत्यादीनां धातूनां मन्थादयो नार्थाः किन्तु क्षुब्ध इत्यादिना समस्तानामेव पदानामिति बोध्यम्। क्षुभितं मन्थेनेत्यादिदर्शनात्। मन्थशब्दस्यार्थमाह—द्रवद्रव्येति मन्थनदण्डयेति च। क्षुब्ध इत्यत्र क्षुभ सञ्चलने इति धातुः। तस्मान्निष्ठायाम् अनेनेडभावः। 'झषस्तथोः—' इति निष्ठातस्य धत्वम्। तत्पूर्वस्य 'झलां जश—' इति जश्त्वम्। स्वान्तं मन इति—'स्वान्तं हृन्मानसं मनः' इत्यमरः। स्वन शब्दे इत्यस्मान्निष्ठायाम् इडभावो निपातनात्। 'अनुनासिकस्य क्विझलोः क्ङिति' ( २६६६ ) इत्युपधादीर्घः। ध्वान्तं तम इति। 'अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः' इत्यमरः। इडभावः प्राग्वदुपधादीर्घं च। लग्नं संसक्तमिति। अत्र अधिकमाह—निष्ठानत्वमपि 'रदाभ्याम—' इत्यादि लक्षणाविरहादिति भावः। म्लिष्टमविस्पष्टमिति। म्लेच्छ इत्यस्मान्निष्ठायामिडभावो धातोरेकारस्य इत्वञ्च निपात्यते। 'व्रश्च भ्रस्ज—' ( २९४ ) इति षत्वेष्टुत्वम्। विरिब्धः स्वर इति। स्वरविशेष इत्यर्थः। फाण्टमिति। कषायविशेष इति। कृच्छ्रजन्मतमिदम्। तथाच हरिः "प्रदग्धममपिष्टं

च कषायम् उदकस्य संसर्गाभावाद् विगतरसम् ईषद्रक्तम् तत् कषायमित्युच्यते” इति। सायनमतमाह—माधवस्त्विति। वेदभाष्ये इति। तद्वै नवनीतं भवति घृतं वै देवानां फाण्टं मनुष्याणाम् इत्यस्य व्याख्यानावसरे इत्याह। वाढं भृशमिति। ‘भृशप्रतिज्ञयोर्बाढम्’ इत्यमरः। इत्वधत्वष्टुत्वढलोपाः। मन्थादिषु-वाच्येष्वित्यर्थः अन्यत्र क्षुभितमिति। वेडागमः। क्षुभितं जलम् इत्यादि। कथं तर्हि क्षुब्धो राजेति। तत्राह—आगमशास्त्रस्येति ( “आगमशास्त्रमनित्यम्” इति परिभाषाबलादत्र इडागमो नेत्यर्थः )।

२०५८। धृषिशसी वैयात्ये ॥ ७।२।१०९ ॥

दी—। एतौ निष्ठायामविनये एवानिटौ स्तः। धृष्टः। विशस्तः। अन्यत्र धर्षितः। विशसितः। भावादिकर्मणोस्तु वैयात्ये धृषिर्नास्ति। अतएव नियमार्थमिदं सूत्रमिति वृत्तिः। धृषेरादित्त्वे फलं चिन्त्यमिति हरदत्तः। माधवस्तु भावादिकर्मणोरवैयात्ये विकल्पमाह, धृष्टम्—धर्षितम्। प्रधृष्टः—प्रधर्षितः।

These two roots धृष् and शस् become अनिट् in निष्ठा when अविनय or impertinence ( वैयात्य ) only is meant. Thus धृष्ट and विशस्त (impertinent), otherwise धर्षित ( treated by force) and विशसित (injured ) with इट्. In भाव and आदिकर्म there is no illustration of धृष् implying वैयात्य or impertinence as there is no authority testifying to this fact. Hence वृत्ति i. e Kasika holds that the rule is restrictive ( अविनय एव नाऽन्यत्र ). Haradatta holds that the reading ञिधृषा (making धृष आदित् ) is open to objection. For what is the result of making it आदित्- or आ—eliding and prohibiting इट from it by ‘आदितश्च’ (3036) when this very rule forbids the prefixing of इट to it in the sense of ( वैयात्य ) only and it is nowhere else अनिट्? Madhava,

however illustrates option of इट् to धृषि implying अवैयात्य in भाव and आदिकर्म as धृष्टम्—धर्षितम् in (भाववाच्य) and also in (आदिकर्म) on the ground that, there is no evidence to धृषि not being used in भाव and आदिकर्म when implying अवैयात्य. Thus in his opinion आदित्करण of धृषि or the reading ञिधृषा is significant and not superfluous.

मित—। धृषि शसीति। धृषिश्च शसिश्चेति द्वन्द्वः। इकश्तिपौ धातुनिर्देशे इतीका निर्देशः। विरुद्धः धातो वियातः अविनीत इत्यर्थः। तस्य भावो वैयात्यम् अविनय इति यावत्। तदाह—एताविव्यादि। नियमार्थमिदं सूत्रमिति हृदि कृत्वा तं ध्वनयन्नाह—अविनय एवेति। 'श्वीदितो निष्ठायाम्' (७।२।१८) इत्यतो निष्ठायामिति 'नेटि' (७।२।४) इत्यतश्च सर्वमप्यनुवर्तते। तदाह—निष्ठायामिति। अनिटाविति च। धृष्टः विशस्त इति। अविनीत इत्यर्थः। अन्यत्रेति। अवैयात्ये इत्यर्थः। धर्षितः (बलात्कृतः) विशसितः (हिंसितः)—अत्र ऽऽगमः। भावकर्मणोरिति। अत्र अनभिधानमेव इडाभावे बीजम्। अत एवेति। प्रागुक्तम्। चिन्त्यमिति हरदत्त इति। अयं हरदत्तस्याशयः। वैयात्यार्थकस्यैव धृषेरनिट्त्वमिष्यत इति नियमः। स च 'धृषिशसी—' इति सौत्रपाठेनापि सिध्यति। वैयात्यार्थादन्यत्र तस्य अनिट्कत्वाभावात्। न च 'विभाषा भावादिकर्मणोः' इति वैयात्ये भावादिकर्मणोर्विषये इड्विकल्पार्थम् आदित्करणं प्रयोजनमिति वाच्यम्। वैयात्यार्थे भावादिकर्मणोः विषये धृषेः प्रयोगानभिधानात्। ततश्च 'ञिधृषा प्रागल्भ्ये' इति आदित्पाठो व्यर्थ इति। माधवस्तु आदित्पाठः सफलः। अनभिधाने प्रामाणाभावादित्याह—एवञ्च वैयात्यार्थेऽसत्यपि तन्मते भावादिकर्मणोर्विषये इड्विकल्पः सिद्ध इत्याह—माधवस्त्विति। अत्र माधवमतमेव स्वमतमिति ज्ञापयन्नुदाहरति। धृष्टं धर्षितमिति। एतद् भावे आदिकर्मणि।

२०६०। दृढः स्थूलबलयोः ॥ ७।२।२० ॥

दी—। स्थूले बलवति च निपात्यते। 'दृह दृहि वृद्धौ'।

न्त्रस्य डभावः । तस्य ढत्वम् । हस्य लोपः । इदितो नलोपश्च । दृंहितो-दृंहितोऽन्यः ।

The term दृढ is irregularly formed ( with निष्ठा ) in the sense of robust and strengh ( बल )। When दृढ is derived as दृह+क्त, then by निपातन इट् is not prefixed to क्त, त ( of क्त ) is changed into ढ and ह is dropped ; but in the case of दृहि+क्त the elision of न also in addition to the निपातनs in the former case. दृंहितः—दृंहितः (increased or puffed up).

मित—। दृढ इति। बलमस्यास्तीति बलः। अर्शआदिभ्योऽजित्यच्। तद्वति—बलवति चेति। दृढ इति द्विधा निष्पन्नम्। दृह्+क्त इति दृहि+क्त इति च। तत्र पूर्वत्र निपातनत्रयम्। डभाव इत्येकम्। निष्ठातकारस्य ढत्वमिति द्वितीयम्। हस्य लोप इति तृतीयम्। परत्र तु निपातनचतुष्टयम्। धातोरिदित्वेऽपि नलोपेनाधिक्यात्। दृंहितः—दृंहित इति। वर्द्धित उत्सिक्तो वेत्यर्थः। परत्र 'अनिदिताम्—' (४१५) इत्यनेन नलोपाभावः प्राप्तः। मूले नलोपश्चेत्यत्रादिते निपात्यन्त इति योज्यम्। यद्यपि दृह+क्त इति स्थिते 'होढः' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे, तस्य 'ष्टुना ष्टुः' इति ष्टुत्वेन ढत्वे, 'ढो ढे लोपः' इति ढलोपे 'दृढ' इति सिध्यति अत्र पूर्वस्याण्ग्रहणाद् दीर्घाप्रसङ्गात्, तथापि द्रढिमा, द्रढीयान् इत्यादौ ढलोपस्यासिद्धत्वेन ऋकारस्य संयोगपरतया 'र ऋतो हलादेर्लघोः' इति रभावो न स्यादिति मूले हलोपोऽपि निपात्यत इत्युक्तम्।

२०६१। प्रभौ परिवृढः ॥ ७।२।२१ ॥

दी—। 'बृह बृहि वृद्धौ'। निपातनं प्राग्वत्। परिबृंहितः परिबंहितोऽन्यः।

The term परिवृढ (also) is derived irregularly as before in the sense of a lord or capable.

मित—। प्रभाविति। प्राग्वत् त्रीणि चत्वारि वा क्रमेण निपातनानि। तदाह—निपातनं प्राग्वदिति।

२०६२। कृच्छ्रगहनयोः कषः॥ ७।२।२१॥

दी—। कषो निष्ठायां इट् न स्यादेतयोरर्थयोः। कष्टं दुःखं तत्कारणं च। 'स्यात् कष्टं कृच्छ्रमाभीलम्'। कष्टो मोहः। कष्टं शास्त्रम्। दुरवगाहमित्यर्थः। कषितमन्यत्।

When grief or trouble and density or difficulty are meant the augment इट् is not prefixed to the निष्ठा after the root कष्। 'स्यात् कष्टम्—' This is from Amarakosha to show that कृच्छ्र is a synonym of कष्ट. कष्टो मोहः i.e attachment is the cause of grief or trouble. कष्टं शास्त्रम् i.e difficult to master or explain in full. कषित i.e rubbed or purified as on or with a touchstone ( निकषपाषाण )।

मित—। कृच्छ्रेति। प्राग्वदनुवृत्तिः। तत् कारणं चेति। अत एव कष्टो मोह इत्यत्र दुःखहेतुर्मोह इत्यर्थः। स्यात् कष्टमिति—अमरकोषादिदम्। कष्टं शास्त्रमित्यत्र कष्टशब्दस्यार्थमाह—दुरवगाहमिति। दुर्विज्ञेयमिति दुरवधारणीयमिति चेत्यर्थः। कषितमिति घृष्टमित्यर्थः।

२०६३। घुषिरविशब्दने॥ ७।२।२३॥

दी—। घुषिर्निष्ठायामनिट् स्यात्। घुष्टा रज्जुः। 'अविशब्दने' किम्? घुषितं वाक्यम्। शब्देन प्रकटीकृताभिप्रायमित्यर्थः।

When अविशब्दन or not clearance of intention by words is meant the root घुष् becomes अनिट् in निष्ठा। घुष्टा रज्जुः i.e a rope dragged off.

मित—। घुषिरिति। विशब्दनं शब्देन प्रकटीकृताभिप्रायम्। तस्मिन्नर्थेन इति फलितम्। घुष्टेति। आक्रुष्टेत्यर्थः। घुषितमिति स्पष्टम्। घोषितमिति तु ण्यन्तान्निष्ठायाम्।

२०६४। अर्देः सन्निविभ्यः ॥ ७।२।२४ ॥

दी—। एतत्पूर्वादर्देर्निष्ठाया इट् न स्यात्। समर्णः। न्यर्णः। व्यर्णः। अर्दितोऽन्यः।

The root अर्द preceded by सम्, नि and वि is not allowed to have इट् in निष्ठा. Thus समर्णः (सम्+अर्द+क्त) etc. Otherwise अर्दितः (molested).

मित—। अर्देरिति। सम्पूर्वादिति। सम्पूर्वात्, निपूर्वात्, विपूर्वादितर्थः। समर्ण इति। सम्+अर्द+क्त। रदाभ्यामिति नत्वम्। अर्दितः पीढ़ित इत्यर्थः।

२०६५। अभेश्चाविदूर्ये ॥ ७।२।२५ ॥

दी—। अभ्यर्णम्। नातिदूरमासन्नं वा। अभ्यर्दितमन्यत्।

If आविदूर्य not a great distance or imminence—is meant, अर्द preceded by अभि is अनिट् in निष्ठा. Thus अभ्यर्णम् (अभि+अर्द+क्त) —'अभ्यर्णम् आगस्कृतमस्पृशद्भिः। राजा स्वतेजोभिरदह्यतान्तः—' (रघु—2.32)

मित—। अभेरिति। न केवलं सन्निविभ्यः किन्त्वभेश्च परतोऽर्देर्निष्ठाया इट् न स्यादाविदूर्यं चेद् गम्यते। विशेषेण दूरं विदूरम्। न तथा अविदूरम् नातिदूरमासन्नं वेत्यर्थः। तस्य भावः इति ब्राह्मणादित्वात् ष्यञ्। अभ्यर्णमिति। अभ्यर्दितमिति। अभिपीड़ितमित्यर्थः।

२०६६। णेरध्ययने वृत्तम् ॥ ७।२।२६ ॥

दी—। ण्यन्ताद्वृतेः क्तस्येडभावो णिलुक् चाधीयमानेऽर्थे।

वृत्तं छन्दः। छात्रेण सम्पादितमधीतमिति यावत्। अन्यत्र तु वर्तिता रज्जुः।

When the significance is 'being read' the causative इन् does not get इट् in क्त as also the affix णिच् disappears. Thus 'वृत्तम्—' etc = the metre has been read. Otherwise वर्तिता caused to exist i.e. made or prepared.

मित—। णेरिति। अधीयत इत्यध्ययनम्। 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट्। अत एवाह—अधीयमानेऽर्थे इति। णिलुक् चेति। अणिलोपे तु लघूपधगुणः स्यादिति भावः। वृत्तमित्यस्यार्थमाह—सम्पादितमित्यधीतमिति च। वर्तितेति। सम्पादितेत्यर्थः।

२०६७। शृतं पाके॥ ६।१।२७॥

टी—। श्रातिश्रपयत्योः क्ते शृभावो निपात्यते क्षीरहविषोः पाके। शृतं क्षीरम्। स्वयमेव विक्लिन्नं पक्वं वेत्यर्थः। क्षीरहविर्भ्यामन्यत्तु-श्राणं—श्रपितं वा।

Both श्रा and श्रपि i. e. ( श्रा + णिच् ) are irregularly replaced by 'शृ' when क्त follows and the boiling of milk and ghee is implied. शृतम् ( श्रा or श्रप् + क्त ) क्षीरम् i.e. milk which is boiled out of itself. otherwise श्राणम्—श्रपितम् ( श्रा + क्त and श्रप् + क्त ) णत्व in the former case by 'संयोगादेरातो धातोः—' ( 3017 ).

मित—। शृतमिति। श्रातिश्रपयत्योरिति। श्रा पाके इत्यदादौ पठितस्य, श्रै इति भौवादिकस्य च कृतात्वस्य तथा श्रपयतेश्च ण्यन्तस्य ( श्रा णिच् ) चेत्यर्थः। चुरादौ पठितस्य घटादावपि पठितस्य मित्त्वादुपधाह्रस्वो भवति। क्षीरहविषोः पाके। वार्तिकादिदं लभ्यते। एवञ्च 'क्षीराज्यहविषां शृतम्' इत्यमरोक्तिरूपेक्ष्या इत्याहुः।

स्वयमेवेति। चीरहंविर्थामन्यदिति। यथा आर्णं अर्पितं वा शाकम् अन्नं वा। 'संयोगादेरातो धातोर्यण्वतः' ( ३०१७ ) इति निष्ठानत्वम्।

३०६८। वा दान्त- शान्त- पूर्ण- दस्त- स्पष्ट- छन्न-ज्ञप्ताः ॥ ७।२।२७ ॥

दी—। एते णिचि निष्ठान्ता वा निपात्यन्ते। पक्षे—दमितः। शमितः। पूरितः। दासितः। स्पाशितः। छादितः। ज्ञपितः।

दान्त etc. ( seven ) are irregularly and optionally formed with निष्ठा in णिच्. The roots here are in order—दम्, शम्, पूर ( पूरी-आप्यायने ), दस्, स्पश्, छद and ज्ञप् ( चुरादि ). दमितः etc.with इट्—

मित—। दान्तेति। दमु शमु उपशमे। पूरी आप्यायने। दसु उपक्षये। स्पश बाधने। छद आवरणे। ज्ञप ( मित्—चुरादि ) इत्यादि इति धातवः। णेरध्ययने इत्यतो णेरिति वर्तते। तदाह—एते ( दान्तादयः सप्त ) णिचीति। एषु इडभावो निपात्यते। दम् + णिच् + क्त = दान्तः। 'अनुनासिकस्य—' इति दीर्घः। एवमन्यत्र। स्पष्टेत्यत्र व्रश्चेति षत्वमपि बोध्यम्। पक्षे इत्याह—दमित इत्यादि मित्त्वादुपधाह्रस्वः। ज्ञपित इति।

३०६९। रुष्यमत्वरसंघुषास्वनाम् ॥ ७।२।२८ ॥

दी—। एभ्यो निष्ठाया इडा स्यात्। रुष्टः—रुषितः। आन्तः—अमितः। तूर्णः—त्वरितः। अस्यादित्त्वे फलं मन्दम्। सङ्घुष्टः—सङ्घुषितः। आस्वान्तः—आस्वानितः।

इट् is optionally prefixed to निष्ठा coming after these i.e. रुषि, अम्, त्वर ( ञित्वरा ) सम् + घुष् and आ + स्वन्. Thus रुष्ट—रुषितः etc. In the former case 'तीषसह—' enjoins optiou of इट् 'यस्य

विभाषा' then prohibits इट् in निष्ठा, whereas this again enjoins the same optionally. क्षान्त=क्षम् to go etc. दीर्घ by 'अनुनासिकस्य—'। तूर्ण—ञित्वरा संभ्रमे+क्त,ऊठ by 'ज्वरत्वर—' ( 2654 ) etc. The आदित् reading of त्वर (e. g. ञि त्वरा) is not very happy. For the result of आदित्करण is only आत्मनेपद which could otherwise be provided even if it were read ह्रस्व ( अनुदात्त ) i.e. त्वरसंभ्रमे, as we have in the case of एध वृद्धौ.

मित—। कषेरिति। कषि, अम, त्वर, संघुष आस्वन इत्येते धातवः। अर्थमाह—एष्य इति। कष्ट इति। 'तीषसह—' इतीड्विकल्पात् 'यस्य विभाषे'ति इण्निषेधे प्राप्ते अनेन पुनर्विभाषा। क्षान्त इति। अमगत्यादिषु। 'अनुनासिकस्य क्विझलोः—' इति दीर्घः। तूर्ण इति। ञित्वरा संभ्रमे। 'ज्वरत्वर—' इत्यूठ्। निष्ठानत्वम्। 'रषाभ्याम्—'इति तस्य मूर्धन्यादेशः। आदितश्चेति निषेधे प्राप्ते विकल्पः। अकंति—ञित्वरा इत्यसैत्यर्थः। फलं मन्दमिति। विकल्पस्य अन्यथापि सिद्धौ आत्मनेपदमात्रप्रयोजनत्वात्। तदपि च 'एध वृद्धौ' इत्यादिवद्ह्रस्वपाठऽपि सिध्यतीति आदित्पाठो निष्प्रयोजन एवेति भावः। आस्वनित इति। 'क्षुब्ध स्वान्त—' ( ३०५८ ) इत्यत्र निपातनं तु भिन्नमस्यादित्यवधारणीयम्। अत्रोपसर्गसद्भावात्।

३०७०। हृषेर्लोमसु ॥ ७।२।२८ ॥

टी—। हृषेर्निष्ठाया इड्वा स्यात् लोमसु विषये। हृष्टं-हृषितं लोम। 'विस्मित—प्रतिघातयोश्च' ( वार्तिक )। हृष्टो—हृषितो मैत्रः। विस्मितः, प्रतिहतो वेत्यर्थः। अन्यत्र तु—'हृषु अलीके' उदित्वान्निष्ठायां नेट्। हृष तुष्टौ इट्।

इट is optionally prefixed to निष्ठा coming after हृष् when hair ( लोम ) etc is refered to—etc. उदित्वात् etc. i.e. हृषु being उदित् is वेट् by 'उदितो वा' and अनिट् in क्त by 'यस्य विभाषा' etc, easy.

मित—। हृषेरिति। प्रागुगदिड विकल्प:। हृष्टं—हृषितं लोमेति। एवञ्चात्र लोम्नि कर्तरि क्त इति बोध्यम्। 'विस्मित—' वार्तिकमिदम्। अनयोरप्यर्थयोरिड्-विकल्प: इति भाव:। तदुदाहरति। हृष्टो—हृषितो मैत्र इति। उदित्त्वान्निष्टायां नेडिति। उदितोवेति क्त्वायामिड्विकल्पान्निष्ठायां यस्य विभाषेति निषेधादिति भाव:। हृष तुष्टौ तु सेडित्याह—इडिति।

२०७१। अपचितश्च ॥ ७।२।३० ॥

दी—। चायतेर्निपातोऽयं वा। अपचित:—अपचायित:।

अपचित is irregularly derived with निष्ठा added to चायि ( चि + णिच् ) otherwise—अपचायित:।

मित—। अपचितश्चेति। 'अपपूर्वस्य चिञो ण्यन्तस्य निष्ठायां चिभावो निपात्यते चे'ति भाष्यमित्याहु:। णित्कार्यसत्वे तु अपचायित इत्येव।

२०७२। प्याय: पी ॥ ६।१।२८ ॥

दी—। पी वा स्यान्निष्ठायाम्। व्यवस्थितविभाषेयम्। तेन स्वाङ्गे नित्यम्। पीनं मुखम्। अन्यत्र—प्यान:—पीन: स्वेद:। 'सोपसर्गस्य न' ( वार्तिक )—प्रप्यान:। 'आङ् पूर्वस्यान्धूधसो: स्यादेव' (वार्तिक)। आपीनोऽन्धू:। आपीनमूध:।

The root प्याय ( ओप्यायी ) is optionally replaced by पी when निष्ठा follows. This option is restrictive. Hence this पीभाव is नित्य when reference is made to ones' own limbs. Thus पीनं मुखम् fatty or fleshy face ; elsewhere प्यान or पीन: स्वेद: as sweat. In पीन, नत्व, comes in by 'ओदितश्च' and in प्यान want of इट् by 'श्वीदितो निष्ठायाम्'। 'सोपसर्गस्य—' वार्तिक। 'आङ् पूर्वस्य—' वार्तिक। The former (Varttika) prohibits पीभाव and the latter enjoins the same when आ precedes and an well ( अन्धू ) or udder ( ऊधस् ) is implied.

मित—। प्रायः इति। शेषं पूरयन्नाह—पीनेति। व्यवस्थितविभाषेति। तत् फलमाह—तेनेति। पीनमिति। ओदित्त्वेति निष्ठानत्वम्। प्यान इति। ओदितो निष्ठायामिति इडभावो नत्वं प्राग्वत्। सोपसर्गस्येति आङ्पूर्वस्येति च वार्तिकद्वयम्। पूर्ववत् पीभावनिषेधः उत्तरत्र प्राप्तिः। अन्धुः कूपः 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। 'आपीनभारोद्वहनप्रयत्नात्—' ( रघु—२य )।

२०७३। ह्रादो निष्ठायाम् ॥ ६।४।९५ ॥

दी—। ह्रस्वः स्यात्। प्रह्लन्नः।

मित—। ह्रस्व इति। 'खचि ह्रस्व' इत्यतस्तदनुवृत्तेरिति भावः। प्रह्लन्न इति। 'इलादौ मुखे' तस्मात् क्तः। ओदितोनिष्ठायामिति नेट्। 'रदाभ्याम्—' इति नत्वम्।

२०७४। द्यतिस्यतिमास्थामित्ति किति ॥ ७।४।४० ॥

दी—। एषामिकारोऽन्तादेशः स्यात्तादौ किति। ईत्त्वदद्भावयोरपवादः। दितः। सितः। मा, माङ्, मेङ्—मितः। स्थितः।

इकार is the final substitute of these roots द्यति ( दोऽवखण्डने ), स्यति ( षोऽन्तकर्मणि ) मा ( माङ्, मा मेङ् ) and स्था when a तादि कित् affix ( as क्त ) follows. This इकारादेश supersedes ईत्त्व ( enjoined by 'घुमास्था—' 2462 ) and दद् भावः ( enjoined by 'दोदद्घोः—' 3077).

मित—द्यतीत्यादि। दोऽवखण्डने। षोऽन्तकर्मणीत्यनयोः श्तिपा निर्देशः। मेति त्रयाणां ग्राहकम्। तदाह—मा, माङ् इति। ईत्त्वदद्भावयोरिति। 'घुमास्था—' ( २४६२ ) इति ईत्त्वस्य, 'दो दद्घोः' ( ३०७७ ) इति दद्भावस्येति विवेकः।

२०७५। शाच्छोरन्यतरस्याम् ॥ ७।४।४१ ॥

दी—। शितः—शातः। छितः—छातः। व्यवस्थितविभा-

षात्वाद्व्रतविषये श्यतेर्नित्यम्। संशितं व्रतम्। सम्यक् सम्पादितमित्यर्थः। संशितो ब्राह्मणः। व्रतविषयकयत्नवानित्यर्थः।

The final substitute इकार is optional in the cases of शा ( शो- तनूकरणे ) and छा ( छो छेदने ). शतः शातः etc.

मित—। शेति। शो तनूकरणे। छो छेदने। अनयोरिकारोन्तादेशो वा तयोः कितीत्यर्थः। व्यवस्थितेति स्पष्टम्।

३०७६। दधातेर्हिः॥ ७।४।४२॥

दी—। तादौ किति। अभिहितम्। निहितम्।

मित—। दधातेरिति। श्तिपा निर्देशो धेटो निवृत्त्यर्थ इत्याहुः।

३०७७। दो दद्घोः॥ ७।४।४६॥

दी—। घुसंज्ञकस्य 'दा' इत्यस्य 'दथ्' स्यात्तादौ किति। चर्त्वम्। दत्तः। 'घोः' किम्? दातः। तान्तो वाऽयमादेशः। न चैवं विदत्तमित्यादावुपसर्गस्य 'दस्ति' इति दीर्घापत्तिः। तकारादौ तद्विधानात्। दान्तो वा, धान्तो वा (? आदेशः)। न च दान्तत्वे निष्ठानत्वं धान्तत्वे 'झषस्तथोः—' (२२८०) इति धत्वं शङ्क्यम्। सन्निपातपरिभाषाविरोधात्।

दथ् is the substitute for दा, technically known as घु ( cp— 'दाधाघ्वदाप्' ), when a तादि कित् ( affix ) follows. Thus दा+क्त= दद् त=दत् त by 'खरिच' ( 121 ). दातः—Here the derivation is दैप ( or दाप् )+क्त. But as दैप् or दाप् are not घुसंज्ञक so there is no दद् आदेशः। This substitute may also be taken as दत्. In that case it cannot be argued that in विदत्त etc. the इकार of the उपसर्ग ( वि ) will receive lengthening by 'दस्ति' ( 3079 ) for दीर्घ has

been enjoined-only when a तकारादि उत्तरपद ( see 3979 ) follows and not when a तकारान्त one as we have got here. Or this substitute is either दान्त or धान्त. It cannot, in these two cases also, be argued that 'रदाभ्याम्—' ( 3016 ) will provide for निष्ठा नत्व when the substitute is दान्त and that 'झषस्तथो:—' ( 2280 ) will come with the धकार for the निष्ठा तकार, when the same ( substitute ) is धान्त ; for this sort of operation is against the सन्निपात—परिभाषा which is 'सन्निपातविधिरनिमित्तं तद्विघातस्य' ( see भ्वादिsection for explanation of this ). The drift is—as the निष्ठातकार necessitates दान्तत्व or धान्तत्वof the substitute, the same in its turn will not cause disappearance of its supporter ( उपजीव्य निष्ठातकार ) in the form of न or ध ।

मित—। दो ददिति। द:+दत्+घो: इति च्छेद:। तदाह—घुसंज्ञकस्येति। द इति दकारस्य प्रथमा निर्देश:। चर्त्वम् इति। निष्ठायां परे खरिचेति चर्त्वम्। दान्त इति—'दाधा घ्वदाप्' इत्यत्र दापदैपौ विनेति व्याख्यानात्। ददिति तवर्गद्वितीयान्तादेश इत्युक्तम्। इदानीमत्र तवर्गप्रथमतृतीयचतुर्थान्तादेशोपि विचारसह इत्याह—तान्तोवायमादेश इति। अत्र शङ्कते—न चैवमिति। 'दस्ति' इत्यत्र हि 'तादौ यस्तकारस्तदादावुत्तरपदे' इति व्याख्यातम्। अतश्च न दीर्घापत्तिरुपसर्गदीर्घ: इत्यर्थ:। अत्र तु तान्त: ( न तादि ) इति न दीर्घप्रसङ्ग इति भाव:। दान्तो वा धान्तो वेति। अत्र दान्तपक्षे शङ्कते—दान्तत्वे निष्ठा नत्वमिति। 'रदाभ्यां निष्ठातो न:—' (३०१६) इत्यनेनेति यावत्। धान्तपक्षे विचिकित्सते—धान्तत्वे 'झषस्तथो:—' (२२८०) इति निष्ठातकारस्य धत्वमिति। विनिगमयति—सन्निपात परिभाषेति। नत्व-धत्वे न भवत इति शेष:। 'सन्निपातोविधिरनिमित्तं तद्विघातस्य' इति पूर्णपरिभाषास्वरूपम्। अत्र यमेव निष्ठातकारमाश्रित्य आदेशस्य दान्तत्वं धान्तत्वं वा तमेव निष्ठातकारं विघ्नन्तु दान्तधान्तादेशौ न शक्नुत इत्यर्थ: उपजीव्यविरोधस्य अयौक्तिकत्वादिति भाव:। एवं नत्वधत्वे न भवत: [illegible]

३०७८। अच उपसर्गात्तः ॥ ७।४।४७ ॥

दी—। अजन्तादुपसर्गात् परस्य 'दा' इत्यस्य घोरचस्तः स्यात्तादौ किति। चर्त्वम्। प्रत्तः। अवत्तः।

"अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि।

सुदत्तमनुदत्तं च निदत्तमिति चेष्यते"॥ (इति भाष्यम्)

चशब्दाद् यथाप्राप्तम्।

तकार is the substitute for अच् i.e आ of दा technically known as घु, when coming after an उपसर्ग ending in अच् and when तादि कित् affix follows. Thus प्र+दा क्त=प्र+दत्+त=प्र—त्त्+त here दकार becoming त by चर्त्व=प्रत्तः, the final तकार disappearing by 'संयोगान्तस्य लोपः' (49). Similarly अवत्तः अवदत्तः विदत्त etc. The verse is from the भाष्य। आदिकर्मणि correct with प्रदत्त only. Here from चकार in the quotation we have as before by 'अच उपसर्गात्—' अवत्त, वित्त, प्रत्तetc.

मित—। अच इति। त इत्यत्र तकारादकार उच्चारणार्थः। अच इति व्याख्यातम्। अजन्तादुपसर्गादिति घोरचस्त इति च। शेषं प्राग्वत्। चर्त्वमिति। 'दा' इत्यस्य आकारस्य अनेन तकारादेशे दकारस्य 'खरि चे'ति चर्त्वमित्यर्थः। प्रत्त इति—प्र+दा+क्त इति स्थिते दा इत्यत्र तकारद्वयेऽपि तकारस्य संयोगान्तलोपे रूपम्। एवम् अवत्तमिति। अथात्र कदाचिद्दद इत्यादेशोऽपि स्यादित्याशयेन भाष्यमुपन्यस्यति 'अवदत्तं विदत्तञ्च—' इत्यादि। अत्र आदिकर्मणि इति प्रदत्तमित्यत्रैवान्वेति। तस्य दातुं प्रक्रान्त इत्यर्थात्। नत्वन्यत्रासम्भवात्। इति चेष्यते इति। निपातनादिति भावः। भाष्यस्थचकारफलमाह—चाद यथा—प्राप्तमिति। 'अच उपसर्गात्त' इत्यनेन अवत्तमित्यादय इत्यर्थः।

३०७८। दस्ति ॥ ६।३।१२४ ॥

दी—। इगन्तोपसर्गस्य दीर्घः स्याद्दादेशो यस्तकारस्तदादा-वुत्तरपदे। 'खरि च' (१२०) इति चर्त्वमाश्रयात् सिद्धम्। नीत्तम्। सूत्तम्। 'घुमास्था—' (२५६२) इतीत्त्वम्। धेट्—धीतम्। गीतम्। पीतम्। 'जनसन—' (२५०५) इत्यात्त्वम्। जातम्। सातम्। खातम्।

An उपसर्ग ending in इक् is lengthened when the subsequent member ( उत्तरपद ) begins with such तकार as is the substitute of दा। 'खरि च' though advised in—8.4.55, yet चर्त्व is not असिद्ध towards दस्ति(6.3.124), for दीर्घ here is enjoined having recourse to चर्त्व which is but the substitute of द here ( of दा ). नीत्तम् ( नि+दा+क्त ), सूत्तम्—सु+दा+क्त. etc. But this form ( सूत्त ) is objectionable, so say some commentators, as सु is not sanctioned to be an उपसर्ग (?)। धीतम्—धे+क्त=धा+क्त=धी+क्त by 'घुमास्था—' (2462). Similarly alsewhere.

मित—। दस्ति इति। इकः काशे इत्यतः दीर्घः इति। 'उपसर्गस्य घञि—' इत्यत उपसर्गस्येति। 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' इत्यतोऽण इति चानुवर्तते। तदाह—इगन्तोपसर्गस्येत्यादि। चर्त्वमाश्रयात् सिद्धमिति। यद्यपि—खरिचेत्यस्य (८।४।५५) दस्ति (६।३।१२४) इत्येतं प्रत्यसिद्धत्वमिति दीर्घो न प्रवर्तते तथापि चर्त्वस्य (तकारस्य) दादेशमात्रत्वाद् देत्याश्रयत्वेनैव सिद्धत्वाद् दीर्घो भवत्येवेति भावः। नीत्तम् ( नि+दा+क्त प्राग्वत् ), सूत्तम् इति। 'सु' इत्यस्य उपसर्गत्वास्वीकारा-देतच्चिन्त्यमिति केचित्। धीतम् इति—धादेश इत्यात्त्वे कृते 'घुमास्था—' इतीत्त्वम्। एवमन्यत्र।

२०८० । अदो जग्धिर्ल्यप्ति किति ॥ २।४।३६ ॥

दी—। ल्यबिति लुप्तसप्तमीकम् । अदो जग्धिःस्याल्ल्यपि तादौ किति च । इकार उच्चारणार्थः । धत्वम् । 'झषो झरि—' (७१) =जग्धः ॥ 'आदिकर्मणि क्तः कर्तरि च' (३०५३) प्रकृतः कटं सः । प्रकृतः कटस्तेन । 'निष्ठायामण्यदर्थे' ( ३०१४ ) इति दीर्घः । 'क्षियो दीर्घात्' (३०१५) इति नत्वम् । प्रक्षीणः सः ।

ल्यप् in the rule is elliptical for the locative ल्यपि. Thus the rule means अद् is replaced by जग्धि i. e जग्ध ( for इकार is for facility in pronunciation) in ल्यप् and in तादि कित् ( affix ). Thus 'लयपूतीनि जग्ध्वा' ( मालतीमाधव ), जग्ध etc = अद् + क्त = जग्ध + क्त = जग्ध + ध by 'झषस्तथ—' (2280) = जग्ध = by 'झरो झरि—' (71). 'आदिकर्मणि—' (3033)—Explained. प्रकृत; etc—easy.

मित—। अदो जग्धिरिति । लुप्तसप्तमीकमिति । तेन ल्यपि इत्यर्थः । तदाह—ल्यपीति । धत्वमिति । 'झषस्तथोः—' ( २२८० ) इत्यनेन । आदिकर्मणीति व्याख्यातम् । शेषं स्पष्टम् । प्रकृत इति कर्तुमारब्धवानित्यर्थः । प्रशब्द आदिकर्मद्योतनार्थः ।

२०८१ । वाऽऽक्रोशदैन्ययोः ॥ ६।४।६१ ॥

दी—। क्षियो निष्ठायां दीर्घो वा स्यादाक्रोशदैन्ये च । क्षीणायुर्भव । क्षितायुर्वा । क्षीणोऽयं तपस्वी । क्षितो वा ।

The इ of क्षि is optionally दीर्घ in निष्ठा when malice or grudge ( आक्रोश ) and weakness is implied. 'क्षीणायुः—' may you be short lived. This implies a grudge. क्षीणोऽयम्—implies दैन्य.

मित—। वेति । 'निष्ठायामण्यदर्थे' ( ६।४।६० ) इत्यनुवर्तते । तेनात्र अण्यदर्थे

इति प्रतिपत्तव्यम्। स च कर्तरीत्येव। ल्युट्यौ भावकर्मणीति तत्रैवोक्तत्वात्। चीणायुः चितायुरित्यमरकोशे। अन्यद् दैन्ये।

२०८२। निनदीभ्यां स्नातेः कौशले ॥ ८।३।८९ ॥

दी—। आभ्यां स्नातेः सस्य षः स्यात् कौशले गम्ये। निष्णातः शास्त्रेषु। नद्यां स्नातीति नदीष्णाः। 'सुपि—' (२९१६) इति कः।

ष is substitute for स of स्ना coming after नि and नदी when dexterity or skill is meant. Thus 'निष्णातः—' (नि + स्नातः) etc, expert or proficient in the shastras. In नदीष्णः (a diver in rivers) we have क (नदी + स्ना + क) by 'सुपि—'।

मित—। निनदीभ्यामिति। नि इत्युपपदान्नद्युपपदाच्चेत्यर्थः। कौशलं निपुणता। निष्णात इति। दक्ष इत्यर्थः। नदीष्णो नदीनिमज्जनकुशलः।

२०८३। सूत्रं प्रतिष्णातम् ॥ ८।३।९० ॥

दी—। प्रतेः स्नातेः षत्वम्। प्रतिष्णातं सूत्रम्। शुद्धमित्यर्थः। अन्यत्र प्रतिस्नातम्।

ष irregularly replaces स of स्ना coming after प्रति if the derivative means an aphorism.

मित—। सूत्रमिति। अत्र षत्वं निपात्यते सूत्रश्चेद् गम्यत इत्यर्थः।

२०८४। कपिष्ठलो गोत्रे ॥ ८।३।९१ ॥

दी—। कपिष्ठलो नाम यस्य कापिष्ठलिः पुत्रः। 'गोत्रे' किम्? कपीनां स्थलं कपिस्थलम्।

कपिष्ठल is the name (of a sage) whereof कापिष्ठलि is offsping. Here कपि + स्थल = कपिष्ठल with (षत्व)।

मित—। कपिष्ठल इति। गोत्रार्थे षत्वं नान्यत्रेत्यर्थः।

३०८५। विकुशमिपरिभ्यः स्थलम् ८।३।९६॥

टी—। एभ्यः स्थलस्य सस्य षः स्यात्। विष्ठलम्। कुष्ठलम्। शमिष्ठलम्। परिष्ठलम्।

मित—। विक्विति सुगमा।

३०८६। गत्यर्थाकर्मकश्लिष- शीङ्- स्थास- वस- जन- रुह- जीर्यतिभ्यश्च ॥ ३।४।७२ ॥

टी—। एभ्यः कर्तरि क्तः स्याद्भावकर्मणोश्च। गङ्गां गतः। गङ्गां प्राप्तः। ग्लानः सः। लक्ष्मीमाश्लिष्टो हरिः। शेषमधिशयितः। वैकुण्ठमधिष्ठितः। शिवमुपासितः। हरिदिनमुपोषितः। राममनुजातः। गरुडमारूढः। विश्वमनुजीर्णः। पक्षे प्राप्ता गङ्गा तेनेत्यादि।

The affix क्त is appointed in कर्तरि, also in भावे and कर्मणिवाच्य after these i.e गत्यर्थ roots अकर्मक roots and श्लिङ्, शीष्, स्था, आस् वस् जन्, रुह् and जॄ. Thus गत्यर्थः = गङ्गां गतः—प्राप्तः। अकर्मक—ग्लानः स (he is fatigued) = ग्लै + क्त = ग्ला + क्त ('आदेचः—') = ग्लान by 'संयोगादः—' (3617). श्लिष्—'लक्ष्मीम्—' etc.—Hari has embraced Lakshmi (श्लिष् is सकर्मक)। शी—'शेषम्—' etc. शेषम् is obj. by 'अधिशीङ्स्थासाम—', similarly वैकुण्ठमधिष्ठितः and शिवमुपासितः। हरिदिनमुपोषितः—He observed the day of हरि. In हरिदिनम्, द्वितीया is accounted for by उपान्वध्याङ् वसः। विश्वमनुजीर्णः—He destroyed or pervaded the earth. The instances beginning from शीङ् to जीर्यति show that these roots शीङ् etc though अकर्मक are not included in the term अकर्मक in the rule. In that case these would have

been superfluous. So he says शेषमधिशयित: etc and not शेषे शयित:, वैकुण्ठे स्थित: etc. These instances also, however, are correct due to the mention of the term अकर्मक in the rule.

मित—। गत्यर्थेति। 'त: कर्मणि च भावे च—' (३।४।६९) इत्यत: कर्मणि इति भावे इति चानुवर्तते। 'आदिकर्मणि—' (३।४।७१) इत्यत: कर्तरि इति च। तदाह—एभ्य इति। एभ्य इति गत्यर्थेभ्य:, अकर्मकेभ्य:, श्लिष्, शीङ्, स्था, आस्, वस्, जन्, रुह्, जृ इत्येतेभ्यश्च धातुभ्य इत्यर्थ:। गत इति—'अनुदात्तोपदेश—' इत्यनुनासिकलोप:। गत: ग्राम इति गत्यर्थे उदाहरणे। ग्लान इति—ग्लैहर्षक्षये। 'आदेच:—' इत्यात्वे क्ते 'संयोगादेरातो—' (३०१७) इति निष्ठानत्वम्। लक्ष्मीमाश्लिष्ट इति सकर्मकस्यश्लिष उदाहरणम्। ग्लान इति त्वकर्मकस्य। ननु शीङादयो जीर्यत्यन्ता अकर्मका एव। ततश्च 'अकर्मक' इत्यनेनैव सिद्धे एषां विशिष्य ग्रहणं व्यर्थम् इति चेन्नैवम्। अध्यन्वाद्युपसर्गवशात् प्राप्तिर्यथा स्यात्। अन्यथा शेषे शयित:। वैकुण्ठे स्थित इत्यादौव स्यात्। न तु शेषमधिशयित:। वैकुण्ठमधिष्ठित इत्यादावपि। अत: शेषमधिशयित इत्यादि सकर्मकमेवोदाहृतम्। अकर्मक इत्यनुसारात्तु यथाप्राप्तम्—शेषे शयित:, स्थित: इत्याद्यपि साध्विति बोध्यम्। उपोषित इति—वसतेर्यजादित्वात् सम्प्रसारणम्। 'वसतिक्षुधोरिट्' इतीट्। शासिवसिघसीनां चेति षत्वम्। हरिदिने उपवासमकरोदित्यर्थ:। 'उपान्वध्याङ्—' इति कर्मसंज्ञा। अनुजात इति—जनसनेत्यात्त्वम्। आरूढ इति। ढत्वधत्वष्टुत्व ढलोपदीर्घा:। अनुजीर्ण इति—जृष वयोहानौ। ऋत इद्धातो: इतीत्वं रपरत्वं हलिचेति दीर्घ:। अनुजीर्ण इति च व्याप्तवानिति ततवानिति वाऽर्थ इत्याह। पक्षे कर्मणि भावे चेत्यर्थ:।

३०८७। क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्य: ॥ ३।४।७६ ॥

दी—। एभ्योऽधिकरणे क्त: स्यात्। चाद् यथाप्राप्तम्। ध्रौव्यं स्थैर्यम्।

"मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥"

पक्षे आसेरकर्मकत्वात् कर्तरि भावे च । आसितो मुकुन्दः । आसितं तेन । गत्यर्थेभ्यः कर्तरि कर्मणि च । रमापतिरिदं यातः । तेनेदं यातम् । भुजेः कर्मणि । अनन्तेनेदं भुक्तम् । कथं 'भुक्ता ब्राह्मणाः' इति ? भुक्तमस्ति एषामिति मत्वर्थीयोऽच् । वर्त्तमाने इत्यधिकृत्य—

क्त in the अधिकरणवाच्य is employed after roots signifying stability or unchangeability (ध्रौव्य), movement and eating. (प्रत्यवसान). The चकार in the rule indicates that we can employ क्त here in कर्तृ कर्म and भाववाच्य as well. मुकुन्दस्य etc.

"This is the seat (आसितम्) of Mukunda, this is the way (यातम्) of Ramapati and this is the dining place or room (भुक्तम्) of Ananta" said this the wives of cowherds desirous of sight. Here आसितम्, यातम् and भुक्तम् are instances of अधिकरणवाच्ये क्त. Thus आस्यते अस्मिन्, यायते अस्मिन् and भुज्यते अस्मिन्; पक्षे i.e from the चकार in the rule we have instances in भावे and कर्तरि in the case of आस् as it is अकर्मक. Thus आसितः etc. गत्यर्थेभ्यः—because they are सकर्मक। Well how to defend 'भुक्ताः ब्राह्मणाः' an instance of कर्तरि क्त whereas भुज् has got instance in कर्मवाच्य क्त only being सकर्मक ? The answer is—भुक्तमस्ति etc = मत्वर्थीयोऽच i. e अच् by 'अर्श आदिभ्योऽच्'। This is from भाष्य, cp—Mallinatha 'भुक्ता ब्राह्मणाः पीता गावः' under 'वनाय पीतप्रतिबद्धवत्साम—' (रघु 2.1). Now the term 'वर्तमान' being carried down to what follows we look ahead—

मित—। क्तोऽधिकरणे चेति। एभ्य इति ध्रौव्यार्थेभ्यो, गत्यर्थेभ्यो, भोजनार्थेभ्यश्च धातुभ्य इत्यर्थः। सूत्रस्थचकारफलमाह—चाद् यथाप्राप्तमिति। यथा पूर्वं कर्तरि कर्मणि भावे चेति भावः। ध्रौव्यं स्थैर्यं स्थिरता। अधिकरणोदाहरणानि श्लोकेन संगृह्णाति—मुकुन्दस्येति। आस्तेऽस्मिन्नित्यासितम्। आसनमित्यर्थः। यायतेऽस्मिन्निति यातम्। मार्ग इत्यर्थः। भुज्यतेऽस्मिन्निति भुक्तम्। भोजनस्थानमित्यर्थः। स्पष्टम्। पक्ष इति। चाद् यथाप्राप्तपक्षे इत्यर्थः। आसेरिति स्पष्टम्। गत्यर्थेभ्य इति। तेषां सकर्मकत्वादिति भावः। भुजिः कर्मणीति। अस्य कर्तरि क्तःनासेरिव। सकर्मकत्वादनभिधानाच्च। न चात्र सकर्मकाणाम् अविवक्षितकर्मत्वेन अकर्मकत्वं वाच्यम्, तदा दत्तवान् पक्वान् इत्याद्यर्थे दत्तः पक्वः इत्यापत्तेः इति मनोरमायां स्पष्टम्। कथमिति—भुक्ताः ब्राह्मणा इत्यादि। अत्र 'कर्तरि क्त' इति मत्वा प्रश्नः। समाधत्ते—भुक्तमस्ति एषामिति। अर्शः—आदाचि निष्पन्न इति यावत्। 'भुक्ता ब्राह्मणाः। इति। तथाच 'वनायपीतप्रतिबद्धवत्साम्—' (रघु—२।१) इत्यस्य सञ्जीवन्यां 'पीतमस्ति अस्ये ति 'अर्श आदिभ्योऽच्'=पीतवानित्यर्थः। पीता गावो भुक्ता ब्राह्मणा इति महाभाष्ये दर्शनात्' इति मल्लिनाथः। वर्तमाने इति। परतोऽनुवृत्त्यर्थसूक्तिः, एतच्च 'वर्तमाने लट्' (३।२।१२३) इत्यतो मण्डूकप्लुत्या अत्रानुवर्तते। तथा भाषेऽ उक्तत्वादित्याहुः।

३०८८। ञीतः क्तः॥ ३।२।१८७॥
दो—। 'ञिष्विदा' स्विन्नः। 'ञि इन्धी' इद्धः।

Roots that drop ञि take क्त in the present tense. स्विन्नः (dejected) नत्व by 'रदाभ्याम्—' and want of इट् by 'आदितश्च'। इद्धः—elison of न (of इन्ध) by 'अनिदिताम्—' (415) as before, जश्त्व and want of इट् by 'श्वीदितः—'।

मित—। ञीतइति। येषां धातूनां 'ञि' इत्यंशो लुप्यते तेभ्यः क्तप्रत्ययः स्याद् वर्तमानार्थे इत्यर्थः। स्विन्न इति। 'रदाभ्याम्—' इति नत्वम्। आदितश्चेति नेट्।

इज इति 'अनिदिताम्—' (४१५) इति नलोपः। 'श्वीदितः—' इति नेट्। जग्धम्।

३०८८। मतिबुद्धिपूजार्थेभ्यश्च ॥ ३।२।१८८ ॥

टी—। मतिरिह्नेच्छा। बुद्धेः पृथगुपादानात्। राज्ञां मतः। इष्टः। तैरिष्यमाण इत्यर्थः। बुद्धः। विदितः। पूजितः। अर्चितः। चकारोऽनुक्तसमुच्चयार्थः। "शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि" इत्यादि।

The affix क्त in the present tense is employed after roots signifying मति or desire, बुद्धि or knowledge and पूजा or worship (respect). Here मति signifies intention from the fact of separate mention of बुद्धि। राज्ञां मतः i.e intended by the kings. षष्ठी in राज्ञाम् is by "क्तस्य च वर्तमाने"। चकार in the rule is intended to include what is not expressed here. Thus the भाष्यकार and वृत्तिकार say—(to supplement the expression)—

"शीलितो रक्षितः क्षान्त आक्रुष्टो जुष्ट इत्यपि।
रुष्टश्च रुषितश्चोभावभिव्याहृत इत्यपि॥
हृष्टतुष्टौ तथाऽक्रान्तस्तथोभौ संयतोद्यतौ।
कष्टम्भविष्यतीत्याहुरमृतः पूर्ववत् स्मृतः॥"

Of these the term कष्ट is formed in the sense of future and अमृत as before i.e in the sense of वर्तमान.

मित—। मतिबुद्धीति। इच्छार्थेभ्यो ज्ञानार्थकेभ्यो: पूजार्थेभ्यश्च धातुभ्य क्तः स्याद् वर्तमाने। 'तयोरेव कृत्यक्त—' इति भावकर्मणोरेवायं प्रत्ययः। मतिरिहेच्छेति। स्पष्टम्। मतः। इष्टः इति। इच्छार्थकमनेरिषेश्च क्तः। इष्ट इत्यत्र 'तीषसह-रुषरिष—' इति वेट्कत्वेन 'यस्य विभाषा' इति नेट्। अनुक्तसमुच्चयार्थ इति अतएव

समुचिनोति—शोभितो रचित: चास्य इति। 'क्तस्य च वर्तमाने' इति राज्ञामित्यत्र षष्ठी।

२०८०। नपुंसके भावे क्तः ॥ ३।३।११४ ॥

टी—। क्लीवत्वविशिष्टे भावे कालसामान्ये क्तः स्यात्। जल्पितम्। शयितम्। हसितम्।

क्त is employed after any root in all the tenses in general to express a gerund or verbial noun ( भाव ) of neuter gender. Thus जल्पितम् (saying or taking) etc.

मित—। नपुंसके इति। नपुंसक इति विशेषणं तदाह—क्लीवत्वविशिष्टा इति। भाव इति भाववाचकं विशेषाम्। अत्र वर्तमानार्थे इति नानुवर्त्यते। तदाह—कालसामान्ये इति। सर्वकाले इत्यर्थः। 'अकर्मकेभ्य एव नपुंसके भावे क्तः नतु सकर्मकात्' इति 'शेरध्ययने हृत्तम्' इत्यत्र भाषाकैयटयोः स्पष्टमित्याहुः। वस्तुतस्तु एवं स्थितेऽपि बहुलं प्रयुञ्जते कवयः। तथाच माघः—'गतं तिरश्चीनमनूरुसारथेः' (शिशु—१।२) इति। नच गत्यर्थकस्याकर्मकत्वम्। तथात्वे 'गतंर्थाकर्मक—' इति भेदिनीपादानं न सङ्गच्छते। अन्येतु 'गतं सुक्तम्' इत्यादौ तु अविवक्षितकर्मकत्वात् अकर्मकत्वमित्याहुरिति, तन्नयुक्तम् इति मनोरमायां स्पष्टम्।

२०८१। सुयजोर्ङ्वनिप् ॥ ३।२।१०३ ॥

टी—। सुनोतेर्यजेश्च ङ्वनिप् स्याद्भूते। सुत्वा सुत्वानौ। यज्वा यज्वानौ।

After सु and यज् the affix ङ्वनिप् ( वन् ) is employed to express past tense. Thus सुत्वन् ( सुत्वा ) etc—One who performed some sacrifice.

मित—। सुयजोरिति। ङ्पावितौ। इकार उच्चारणार्थः। वर्तमाने इति

निष्ठत्वम्। तदाह—भूते इति। सुत्वेति। सुत्वन् इति शब्दः। प्रत्ययस्य पित्वाद् 'ह्रस्वस्य पिति—' इति तुक्। सोमेन सुतवानिति सुत्वा; इष्टवान् इति यज्वा।

२०८२। जीर्यतेरतृन् ॥ ३।२।१०४ ॥

दी—। भूते इत्येव। जरन्—जरन्तौ—जरन्तः। वाऽसरूपन्यायेन निष्ठापि। जीर्णः जीर्णवान्।

The affix अतृन् is appointed or attached after जॄ in the past tense. अतृन् retains अत् only. In जरन् there is नुम् ( नकार ) due to उगित्त्व by 'उगिदचाम्—'। वाऽसरूपन्यायेन etc—see the rule.

मित—। जीर्यतेरिति। भूतार्थवृत्तेर्जीर्यतेः एवातृन् प्रत्ययः स्यादित्यर्थः। प्रत्ययस्य ऋकारनकारावितौ। 'अत्' इति शिष्यते। जरन्निति। ऋकारस्य गुणे रपरोऽकारः। 'उगिदचाम्—' इति नुम्। संयोगान्तलोपस्यासिद्धत्वान्न दीर्घः। वाऽसरूपेति। प्राग् व्याख्यातम्। जीर्ण इति। ऋत इत्, रपरत्वम्, 'हलि च' इति दीर्घः, निष्ठानत्वम्।

२०८३। छन्दसि लिट् ॥ ३।२।१०५ ॥

२०८४। लिटः कानज्वा ॥ ३।२।१०६ ॥

२०८५। क्वसुश्च ॥ ३।२।१०७ ॥

दी—। इह भूतसामान्ये छन्दसि लिट्। तस्य विधीयमानौ क्वसुकानचावपि छान्दसाविति त्रिमुनिमतम्। कवयस्तु ( ? भाषायां ) बहुलं प्रयुञ्जते। 'तं तस्थिवांसं नगरोपकण्ठे'। 'श्रेयांसि सर्वाण्यधिजग्मुषस्ते' इत्यादि।

लिट् in secular langague ( भाषा ) is generally used to express a time beyond perception of the speaker (cp—'परोक्षे लिट्'). But in the Vedas it is used to express past tense in general this is the expl. of the rule 'छन्दसि लिट्'। Also क्वसु and कानच which

replace लिट् i.e. are used to express the sense of it, are restricted to Vedas only—so say all the three authorities of अष्टाध्यायी. But poets violate this restriction in भाषा, cp. तं तस्थिवांसम् (स्था + क्वसु २या)—'रघु (5th). 'श्रेयांसि अधिजग्मुषः' (अधि + गम् + क्वसु—Ibid).

मित—। 'छन्दसि—' इति। तस्य विवरणम् 'इह···लिट्' इति। भाषायां तु 'परोक्षे लिट्'। इति परोक्षे एव भूते, न तु भूतसामान्ये। 'लिटः—' 'क्वसुश्च' इत्यनयोः विवरणम्—'तस्य विधीयमानौ—इत्यारभ्य—यावच्छेषम्। छन्दसि भूतसामान्यार्थकस्य, भाषायां परोक्षार्थकस्य च लिटः स्थाने कानच् क्वसुश्च वा विधीयेते इत्यर्थः। लिटः कानजित्यत्र लिट्मात्रस्य ग्रहणात्। पक्षे लिडपि। क्वसुकानचोर्वैभाषिकत्वात्। छान्दसाविति। छन्दोमात्रगोचरावित्यर्थः। छन्दसि (वेदे) एव प्रयुज्यते न भाषायामिति यावत्। इति त्रिमुनिमतमिति। तेन लोके प्रयोगः कथमपि न चम इति भावः। तथापि कवयो भाषायां प्रयुञ्जते इत्याह—कवयस्त्विति। निरङ्कुशत्वादिति भावः। 'तं तस्थिवांसम्—' (रघु—५म) = तिष्ठतेः क्वसुः। लिडादेशत्वेन द्वित्वादि। 'वस्वेकाच—' इति इट्। उपधा दीर्घः। उगित्वान्नुम्। अधिजग्मुष इति = अधि + गम् + क्वसु। गमहन—इत्युपधालोपः। वसोः संप्रसारणम्। पूर्वरूपम्, षत्वम्।

२०८६। वस्वेकाजाद्घसाम्॥ ७।२।६७॥

**दी—। कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट्। नान्येषाम्। एकाच्—आदिवान्*। आत्—ददिवान्। जक्षिवान्। 'एषाम्' किम्? बभूवान्।**

The augment इट् is employed before वसु (क्वसु) coming after duplicated roots being एकाच् or monosyllable, आत् (आकारान्त) and घस् (the substitute of अद्) and not any other. Thus आदिवान्—अद् + क्वसु (in replace of लिट्) duplication as in लिट् after गुण by 'अत्त्वादृताम्'. Here it is important to note that

the duplication ( कृतद्विर्वचन ) is regarded as एकाच or monosyllabic. Then add इट् ; similarly in ददिवान् after duplication. जक्षिवान्—अद् + क्वसु ( in place of लिट् ) = घस्ऌ + वस् by लिटान्यतरस्याम् duplication, कुहोश्चुः and इट् etc.

मित—। वस्विति। वसुइति अविभक्तिको निर्देशः षष्ठ्यर्थे। तदाह—वसोरिट् इति। सूत्रे एकाच् इत्यस्य विवक्षितार्थमाह—कृतद्विर्वचनानामेकाचामिति। नित्यत्वात् कृतेऽपि द्वित्वे एकाच एव येऽवशिष्यन्ते तेषामित्यर्थः। 'नेड्वशि कृति' इति निषेधं बाधित्वा क्रादिनियमात् सर्वत्र प्राप्तस्येटो नियमोऽयमित्याह—नान्येषामिति। आरिवानिति। ऋगतौ—'ऋच्छत्यृताम्' इति गुणे कृते, रपरत्वे, द्वित्वादि पूर्ववत्-कृतेषु एकाच्त्वादिट्। ददिवान् इति—दाञ् दाने। कृते द्वित्वे नायमेकाच् इन्निमित्तयातो लोपो नास्ति तस्मिन् भवतीत्यनेकाजर्थमादग्रहणम्। जक्षिवान् इति—'लिटान्यतरस्याम्' इत्यदेर्घस्लादेशः। द्वित्वे कृते नायमेकाजिति घसि ग्रहणम्। अत्र व्याचख्युः—'द्वित्वात् पूर्वं परत्वात् 'घसिभसोर्हलि—' इत्युपधालोपः स्यात्तस्मिंश्च कृतेऽनच्कत्वाद् द्वित्वमेव न स्यात्। न चास्य द्वित्वे कर्तव्ये 'द्विर्वचनेऽचि' इत्यनेन स्थानिवद्भावो निषेधो वा शङ्क्यः, द्वित्वनिमित्तस्याचोऽभावात्। तदर्थनार्थं कृतद्विर्वचने एकाज्भवतीति घसिग्रहणम्। तत्सामर्थ्यात् परत्वादुपधालोपमिडागमो बाधते। कृते त्विडागमे 'गमहन—' इत्युपधालोपः तस्य चाज्निमित्तत्वेन स्थानिवत्त्वाद् द्वित्वम्। यद्वा द्विर्वचनेऽचि इति निषेधपक्षे तु उपधालोपात् प्रागेव द्वित्वम् पश्चादुपधालोपः 'शासिवसिघसीनां च' इति षत्वं, चर्त्वं, 'अभ्यासे चर्च' इत्यभ्यासघकारस्य जश्त्वम्" इति तत्त्वबोधिनी।

३०९७। भाषायां सदवसश्रुवः ॥ ३।२।१०८ ॥

दी—। सदादिभ्यो भूतसामान्ये भाषायां लिड्वा स्यात्। तस्य च नित्यं क्वसुः। 'निषेदुषीमासनबन्धधीरः'। 'अध्यूषुषस्तामभवज्जनस्य'। शुश्रुवान्।

लिट् in भाषा or secular language is optionally employed after

सद, वस् and श्रु and this general लिट् is persistently (नित्य) replaced by क्वसु 'निषेदुषीम्—' in रघु, = नि—सद+क्वसु—द्वित्व, सत्त्व of वस्, षत्व। 'अध्यूषुषः—' = अधि + वस् + क्वसु—सम्प्र due यजादित्व of वस्, हलादिः शेषः सवर्णदीर्घ, सम्प्र of वसु and पूर्वरूपत्व। शुश्रुवान् = श्रु + क्वसु—द्वित्व etc.

मित—। भाषायामिति। भूतसामान्ये इति। तेन पचं लुङ् इति बोध्यम। 'निषेदुषीम्—' इति। 'स्थितः स्थितामुच्चलितः प्रयातां निषेदुषीमासनबन्धधीरः। जलाभिलाषी जलमाददानां छायेव तां भूपतिरन्वगच्छत्'। निपूर्वात् सदेः क्वसुः। द्वित्वे 'एकहल मध्येऽनादेशादेर्लिटि' इत्येत्त्वाभ्यासलोपौ। 'उगितश्च' इति ङीपि 'वसोः—' इति संप्रसारणे वलादित्वाभावान्नेट्। 'सदिरप्रतेः' इति षत्वम्। निषेदिवान् इति पुंसि। अध्यूषुषः इति। वस निवासे अधिपूर्वः। उस् इत्यस्य द्वित्वहलादिशेषसवर्णदीर्घाः। अध्यूषिवान् इति सौ। शुश्रुवान् इति। श्रृणोतेः क्वसुः। द्वित्वादि।

२०८८। उपेयिवाननाश्वाननूचानश्च ॥ ३।२।१०९ ॥

दी—। एते निपात्यन्ते। उपपूर्वादिणो भाषायामपि भूतमात्रे लिड्वा। तस्यनित्यं क्वसुः। इट्। उपेयिवान्। 'उपेयुषः स्वामपि मूर्तिमग्र्याम्'। समीयिवान्। नञ्पूर्वादश्नातेः क्वसुरिड्भावश्च। 'धृतजयधृतेरनाशुषः' इति भारविः। अनुपूर्वाद्वचेः कर्तरि कानच्। वेदसाङ्गानुवचनं कृतवाननूचानः।

These words i.e उपेयिवान्, अनाश्वान् and अनूचान् are irregularly formed. लिट् in the sense of past in general is optional after इण् preceded by उप used in भाषा or sercular language also. This लिट् is always replaced by क्वसु (वस्)। इट् i.e this इट is prefixed to वस् by निपातन, for इट् by 'आर्द्धधातुकस्येड् वलादेः' is barred by 'नेड् वशि—' but rose up again under क्रादिनियम and

again for the second time was prohabited by the restriction under 'वस्वेकाजाद—'. This twice forbidden is provided for here by निपातन (cp—भाष्य) 'उपेयुष:—' etc (Rag). उपेयुषी with ङीप् by उगितश्च। उपेयिवान् does not imply that इन् has to bealways preceded by उप. Thus we have समीयिवान् etc in Kirat 1. अनाश्वस्—is derived as नञ्+अश्+क्वसु without इट् by निपातन। अनाशुष: (षष्ठी १व)। अनूचान is derived as अनु+वच्+क्वसु—want of इट् as before.

मित—उपेयिवानिति। उपपूर्वादिति। स्पष्टम्। इडिति। निपातनादयम्। तथाहि—'आर्धधातुकस्येट्—' इति वलादिलक्षण इट् 'नेड्वशि—' इति प्रतिषिद्ध:। स च क्रादिनियमात् पुनरुत्थित:। पुनश्च 'वस्वेकाजाद्घसाम्' इति सूत्रेण एकाचश्च आदितश्च घसेश्च परस्य वसोरिट् नान्येषामिति नियमाद् द्वित्वानन्तरमनेकाच्त्वात् पुनः प्रतिषिद्ध:। सोऽयमिट् अनेन निपातनेन प्रतिप्रसूयते इति भाष्ये स्पष्टम् इत्याहु:। इटि कृते क्रमेण अभ्यासस्य दीर्घस्तु (उप+ईयिवान्) निपात्यते। उपेयुषीति। 'उगितश्च' इति ङीप्। तस्मिन् वसो: सम्प्रसारणम्। प्रतिप्रसूतो वलादिलक्षणा इट् तु न। तन्निमित्तस्य वकारस्य सम्प्रसारणेन विनाशोन्मुखत्वादित्यन्यत्र विस्तर:। उपेत्यविवचितमिति। अत एव निरुपसृष्टादुपसर्गान्तरपूर्वाच्च इणोऽपि प्रत्यय इत्याह—ईयिवान्। समीयिवानिति। अत्र व्याख्यानमेव शरणम्। अनाश्वान् इत्येतद् व्याचष्टे—नञ् पूर्वादिति। अश भोजने क्र्यादि। लिट: क्वसु:। द्वित्वम् इत्यादि। छलजयध्वनेरिति। किरातार्जुनीयकाव्यस्य संगस्य श्लोकांशोऽयम्। वसो: सम्प्रसारणम्। अनूचान इत्येतल्लक्षयति। अनुपूर्वादिति। इति प्राग्वत्।

३०८८। विभाषा गमहनविदविशाम्॥ ७।२।६८॥

दी—। एभ्यो वसोरिड् वा। जग्मिवान्—जगन्वान्। जघ्निवान्—जघन्वान्। विविदिवान्—विविद्वान्। विविशिवान्—

विविश्वान्। विश्विना साहचर्याद्विन्दतेर्ग्रहणम्। वेत्तेस्तु विविद्वान्। 'नेड्वशि कृति' (२८८१) इतीटिनषेधः। 'दृशेश्च' (वार्तिक)—ददृशिवान्—ददृश्वान्।

इट is optionally prefixed to वसु (क्वसु) coming after these roots गम्, हन्, विद (तुदादि) and विश्। Thus जग्मिवान् (इट) जगन्वान् (अनिट्) etc. विन्दतेः of विद belonging to तुदादि class. 'दृशेश्च' Varttika. In जग्मिवान् etc वित्व, चुत्व etc as before.

मित—। विभाषेति। गमहनेति पञ्चम्यर्थे षष्ठी। तदाह—एभ्य इति। जग्मिवान् इतीड्पक्षे। अनिटपक्षे जगन्वान्। इट् पक्षे 'गमहन—' इत्युपधालोपः। श्वित्वचुत्वादि। एवमन्यत्र। विन्दतेरिति तुदादौ पठितस्य विदेरित्यर्थः। दृशेश्चेति वार्तिकम्।

२१००। लटः शतृशानचावप्रथमासमानाधिकरणे॥ ३।२।१२४॥

टी—। अप्रथमान्तेन सामानाधिकरण्येसतीत्यर्थः। शबादि। पचन्तं चैत्रं पश्य।

The लकार or affix लट् is replaced by शतृ and शानच् when there is सामानाधिकरण्य or collocative connection by way of any case-ending other than the first (प्रथमा) i.e when the sense of लट् or a verbial action (व्यापार) is sought to be expressed by द्वितीया तृतीया etc. शबादि i.e शतृ and शानच् being शित् and thus सार्वधातुक, शप् comes in by 'कर्तरि शप्'; शतृ retains अत् only and शानच् retains आन only; पचन्तम्—नुम् by 'उगिदचाम्—'etc see ante.

मित—। लट इति। शतृशानचौ—अप्रथमासमानाधिकरणे इति च्छेदः। तदर्थमाह—अप्रथमान्तेन समानाधिकरण्ये सतीति। तदभ्यादिश्यरहितस्य लटः

प्रयोगाभावात् सामानाधिकरण्यं दुर्लभं तथापि शतृशानचभ्यां दृष्ट्वा स्थानिन्यपि सामानाधिकरण्यं कल्प्यते। शतुः शकारस्य ऋकारस्य चेत्। 'अत्' इति शिष्यते। शानचस्तु आन इति। तदेवमनयोः शित्वेन सार्वधातुकत्वात् शप्। तदाह—शबादीति। आदिपदेन गुणादयो ग्राह्याः। पचन्तमिति। 'उगिदचाम्—' इति नुम एवं पचतेत्यादि। अत्र व्यापारे सामानाधिकरण्यमिति बोध्यम्। पाकानुकूल-व्यापाराश्रयमित्यर्थः।

३१०१। आने मुक्॥ ७।२।८२॥

दी—। अङ्गस्यातो मुमागमः स्यादाने परे। पचमानं चैत्रं पश्य। लडित्यनुवर्तमाने पुनर्लड्ग्रहणमधिकविधानार्थम्। तेन प्रथमासामानाधिकरण्येऽपि क्वचित्। सन् ब्राह्मणः। 'माङ्याक्रोशे इति वाच्यम' ( वार्तिक )—'मा जीवन् यः परावज्ञादुःखदग्धोऽपि जीवति'। 'माङि लुङ' ( २२१८ ) इति प्राप्ते एतद्वचनसामर्थ्या-ल्लट।

The augment मुम् ( म् ) is attached after an अकारान्त अङ्ग (verbal stem) when आन् (or शानच्) follows. पचमानम् etc. Although लट् follows from the previous rule 'वर्तमाने लट्' ( ३।२।१२३ ) yet the acceptance of लट is to provide for something more. Hence elsewhere also we have शतृ and शानच् replacing लट even when there is collocative connection with प्रथमान्त also. Thus 'सन्—' (or विद्यमानः ब्राह्मणः ) a brahmin existing. अस् + शतृ, 'श्नसोरल्लोपः' etc. 'माङि—' varttika—This must be stated that लट् is replaced by शतृ and शानच् when माङ् is used and an utterance of malice ( or scathing remark ) is implied. Thus 'मा जीवन् etc. ( in sisu ११ )—Let him not live who leads a life of this regard.

Although लुङ् is legitimate by 'माङि लुङ्' when (in such cases) माङ् exists yet लट् is employed on the authority of this statement (Varttika). The reading 'माङि लुङ्' (2219) इति प्राप्ते एतद्वचनसामर्थ्याल्लट्' in तत्त्वबोधिनी is superfluous for in that case there would have been explicit mention of the same (लुङ्) in the varttika.

मित—। आने मुगिति। 'अङ्गस्य' (६।१।१) इत्यधिकृतं वर्तते। 'अतो येय' (७।२।८०) इत्यत: अत इति चानुवर्तते। तदाह—अङ्गस्यातो मुगागम इति। 'अदन्तस्याङ्गस्य' इति बालमनोरमाकारगृहीत: पाठ: न सम्यगिति तत्त्वबोधिन्यां विस्तरेण प्रतिपादितम्। 'मिदचोऽन्त्यात् पर:' इति मुगो मित्त्वादङ्गस्यान्त्यादच: समावेश:। पचमानमिति—पाकानुकूलव्यापाराश्रयमिति प्राग्वदर्थ:। लडित्यनुवर्तमाने इति। 'वर्तमाने लट्' (३।२।१२३) इति ह्यव्यवहितं पूर्वसूत्रम्। सन् ब्राह्मण इति। अस् इत्यस्मात् शतृ। नुम्। 'श्नसो—' इत्यल्लोप:। एवं शानचि—विद्यमानो ब्राह्मण:। 'माङि आक्रोशे—' इति वार्त्तिकम्। माङि प्रयुज्यमाने आक्रोशे च गम्ये लट: शतृशानचावित्यपि वक्तव्यमित्यर्थ:। मा जीवन्निति। तस्य जीवनं विडम्बनमित्यर्थ:। यदा सोऽयं जीवन्मृत इत्यर्थ:। माघकाव्यस्थोऽयं श्लोकांश: (२य)। एतद्वचनसामर्थ्यादिति—वार्त्तिकसामर्थ्यात्। माङि सत्यपि लट। तस्य च शतृशानचावित्यर्थ:। तत्र 'एतद्वचनसामर्थ्याल्लुक' इति क्वचित् तत्त्वबोधिनीस्थ: पाठस्तु प्रामादिक:। न चात्र लिपिकरप्रमादात् 'लुङ्' इत्यस्य तथा परिणतिरिति वाच्यम्। तत्रापि प्रामादिकत्वात्। अन्यथा 'माङ्याक्रोशे लुङ:—' इत्येवाचक्ष्यत्। किञ्च तथात्वे 'माङि लुङ्—' इत्यादि सूत्रकृदुक्तिरेव पराहता।

## ३१०२। सम्बोधने च ॥ ३।२।१२५ ॥

दी—। हे पचन्। हे पचमान।

मित—। सम्बोधने चेति। लट: शतृशानचाविति शेष:।

२१०३। लक्षणहेत्वोः क्रियायाः ॥ ३।२।१२६ ॥

टी—। क्रियायाः परिचायके हेतौ चार्थे वर्तमानाद्धातोर्लटः शतृशानचौ स्तः। शयाना भुञ्जते यवनाः। अर्जयन्वसति। हरिं पश्यन् मुच्यते। हेतुः फलं कारणं च ॥ 'ऌत्यचः' ( २८५२ ) प्रपीयमाणः सोमः।

शतृ and शानच् replace the affix लट् coming after a root signifying indication and cause of an action. Thus 'शयाना; etc —Yavanas take food while lying down i.e the action of lying down indicates the time of taking food. 'अर्जयन्—' i.e he stays in order to acquire some thing. 'हरिं पश्यन्—' gets salvation after seeing Hari i.e perception of Hari is the cause of salvation. हेतु denotes here result ( as in अर्जयन् ) and cause ( as in हरिं पश्यन्—' )। 'प्रपीयमाणः—' here णत्व by 'ऌत्यचः'।

मित—। लक्षणहेत्वोरिति। लक्ष्यते ज्ञाप्यते परिचीयते इति यावदनेनेति लक्षणं ज्ञापकं परिचायकं वा। तदाह—क्रियायाः परिचायक इति। शयाना इति। शीङः शानच्। अत्र शयनं भोजनज्ञापकम्। लक्षणे इदमुदाहरणम्। हेतुः फलं कारणं च। तत्र फलार्थकहेतावाह—अर्जयन्निति। अर्जनाय वसतीत्यर्थः। कारणे आह—हरिं पश्यन्निति। हरिदर्शनं मुक्तिकारणमित्यर्थः। प्रपीयमाण इत्यत्र णत्वविधायकं सूत्रमाह—ऌत्यच इति।

२१०४। ईदासः ॥ ७।२।८३ ॥

टी—। आसः परस्यानस्य ईत् स्यात्। 'आदेः परस्य' (४४)। आसीनः।

आन coming after आस is replaced by ईत्. This ईत् replaces आ only of आन by 'आदेः—' (ante)=आसीनः seated.

मित—। ईदिति। आन इति पञ्चमी। तदाह—आनः परस्येति। आदेः परस्येति—आनस्य 'आ' इत्यंशस्य ईदादेशः। नान्त्यस्य न वा सर्वस्य।

२१०५। विदेः शतुर्वसुः ॥ ७।१।३६ ॥

दी—। वेत्तेः परस्य शतुर्वसुरादेशो वा स्यात्। विद्वान्। विदन्। विदुषी।

शतृ coming after विद् to know is optionally replaced by वसु। Thus विद्वान् ( वसु ), विदन् ( शतृ )। विदुषी is the feminine form of विद्वान्। ङीप्, सम्प्र. of वसु, and षत्व.

मित—। विदेरिति। 'निरनुबन्धकग्रहणे न सानुबन्धकम्' इति परिभाषयाऽत्र विदेर्लुग्विकरणस्यैव ग्रहणमित्याह—वेत्तेरिति। ज्ञानार्थकस्येति शेषः। वसुरादेशो वेति। 'तुह्योस्तातङ्—' ( ७।१।३५ ) इत्यतोऽन्यतरस्यामित्यस्यानुवृत्तेः। विद्वान् इति वसौ। अन्यत्र शतरि। विदुषीति। उगित्त्वात् ङीप्। ततः वसोः सम्प्रसारणम्। पूर्वरूपम्। षत्वम्। यद्यपि स्थानिनः शतुरुगित्वाद्वसु इत्यनेनैव सिध्यति तथापि वसुरित्युक्तिः 'वसोः सम्प्रसारणम्' इत्यत्र वसोरिति सामान्यग्रहणार्थम्।

२१०६। तौ सत् ॥ ३।२।१२७ ॥

दी—। तौ शतृशानचौ सत्संज्ञौ स्तः।

२१०७। लृटः सद्वा ॥ ३।३।१४ ॥

दी—। व्यवस्थितविभाषेयम्। तेनाप्रथमासामानाधिकरण्ये प्रत्ययोत्तरपदयोः सम्बोधने लक्षणहेत्वोश्च नित्यम्। करिष्यन्तं करिष्यमाणं पश्य। करिष्यतोऽपत्यं कारिष्यतः। करिष्यद्भक्तिः। हे करिष्यन्। अर्जयिष्यन् वसति। प्रथमासामानाधिकरण्येऽपि क्वचित्। करिष्यतीति करिष्यन्।

लृट् is optionally replaced by शतृ and शानच्। This option

is restrictive. Thus लृट् is persistently or नित्य replaced by सत् in connection with अप्रथमासामानाधिकरण्य (as करिष्यन्तम् पश्य), in con. with a प्रत्यय (as करिष्यतोऽपत्यं कारिष्यत:—अण् प्रत्यय), in con. with उत्तरपद (as करिष्यन्ती भक्ति:—करिष्यद्भक्ति:—कर्मधा), in con. with सम्बोधन (हे करिष्यन्) and when लक्षण + हेतु are implied by the action; अर्जयिष्यन् वसति (हेतु). Also प्रथमासामानाधिकरण्ये—करिष्यन् (to perform in future).

मित—। लट इति। लृट: शतृशानचौ वेत्यर्थ:। व्यवस्थितविभाषेति। व्यवस्थामाह—तेनेति। अप्रथमासामानाधिकरण्ये सति लृट: सत् नित्यम्। यथा—करिष्यन्तं करिष्यमाणं वा (चैत्रं) पश्य। प्रत्यये (अपत्यादौ) उत्तरपदे च परत: लृट: सन्नित्यम्। यथा—करिष्यतोऽपत्यं कारिष्यत: (अण् प्रत्यय:)। करिष्यन्ती भक्ति: करिष्यद्भक्ति: (कर्मधा—उत्तरपद), सम्बोधने—हे करिष्यन् (चैत्र)। लक्षणे हेत्वोरर्थयो: च। तत्र लक्षणे—करिष्यमाणा भुञ्जते यवना:। हेतौ—अर्जयिष्यन् वसति। कदाचित् प्रथमासामानाधिकरण्येऽपि दृश्यते इत्याह—करिष्यन्निति।

## २१०८। पूङ्यजो: शानन् ॥ ३।२।१२८ ॥

## दी—। वर्तमाने। पवमान:। यजमान:।

लृट् has ceased to follow. Thus शानन् is an independent affix like ण्वुल्, तृन् etc. The rule means शानन् (आन) is affixed to पूङ् and यज् in the present tense = पवमान: (purifying) etc.

मित—। पूङ्यजोरिति। पञ्चम्यर्थे षष्ठी। पूङो यजश्च शानन् प्रत्यय: स्याद्वर्तमाने। वर्तमाने इति वर्तमाने लट् इत्यतोऽनुवर्तते। लृट् इति लङिति वा, न अनुवर्तते। एवञ्च 'शानन्' इति स्वतन्त्र: प्रत्ययो न तु शतादिवदादेश:। शानन: शकार: सार्वधातुकार्थ:। नकार: स्वरार्थ:। पवमान इति—'सार्वधातुकार्ध—' इति गुणोऽवादेश:। कर्तरि चायं प्रत्यय:। न तु भावकर्मणो:। शानन्नो लादेशत्वाभावेऽपि सोऽमं

पवमान इत्यादौ षष्ठी न शङ्कनीया। 'न लोक' इति सूत्रे 'तृन्' इति प्रत्याहार एव इत्युक्तत्वात् शानचोऽपि तदान्तर्भावात्।

२१०९। ताच्छील्यवयोवचनशक्तिषु चानश्॥ ३।२।१२९॥

टी—। एषु द्योत्येषु कर्तरि चानश्। भोगं भुञ्जानः। कवचं बिभ्राणः। शत्रुं निघ्नानः।

The affix चानश् is appointed or attached after roots in the active voice to bring out the sense of 'habit or nature, exposition of age and power'. चानश् retains आन। And as it is not a substitute of लट् so it may be appointed after परस्मै roots also. Thus शत्रुं निघ्नानः (able lo kill an enemy). भोगं भुञ्जानः i.e enjoying pleasures habitually. कवचं बिभ्राणः holding an armour i.e indicates youth.

मित—। ताच्छील्येति। तत्स्वभावतायां वयोवचने (यौवनाविष्करणे) शक्तौ गम्यायां धातोश्चानश्। यथाविधि। कवचमिति—कवचधारणयोग्यवयसोपलक्षितः। शत्रुं निघ्नान इति। चानशो लादेशत्वाभावेन परस्मैपदिभ्योऽपि धातुभ्यः प्रयोगौचित्याद्ध हन्तेश्चानश्।

२११०। इङ्धार्योः शत्रकृच्छ्रिणि॥ ३।२।१३०॥

टी—। आभ्यां शतृ स्यादकृच्छ्रिणि कर्तरि। अधीयन्। धारयन्। 'अकृच्छ्रिणि' किम्? कृच्छ्रेण अधीते। धारयति।

शतृ in the active voice is employed after इङ् and धारि when ease or want of difficulty is implied. The root इङ् being आत्मने. and the fruit of धारि accruing to the agents and thus it taking आत्मने. there was no chance of शतृ। Hence the separate provision of अधीयन् i.e reads easily etc. कृच्छ्रेण i.e with difficulty.

मित—। इङ्धार्योरिति। शतृ + अकृच्छ्रिणि इति छेदः। कृच्छ्रं दुःखमस्य

नासौ व्यक्तिच्छ्री सुखी। तादृशे कर्तरि गमेऽस्ययोः शतृ। इङ्ः आत्मनेपदित्वात् धारयतेश्च फलस्य कर्तृगामित्वात् शतरि अप्राप्तेऽयमारम्भः। अधीयन्निति। सुखेनाधीते धारयति वेत्यर्थः।

२१११। द्विषोऽमित्रे ॥ ३।२।१३१ ॥

दी—। द्विषन्शत्रुः।

शतृ after द्विष् comes in to signify by the agent a foe.

मित—। द्विष इति। अमित्रे कर्तरि द्विषः शतृ।

२११२। सुञो यज्ञसंयोगे ॥ ३।२।१३२ ॥

दी—। सर्वे सुन्वन्तः। सर्वे यजमानाः सत्रिणः।

शतृ after the root सु is employed when connection with a sacrifice is meant. सर्वे सुन्वन्तः = सु + शतृ बहुवचन। सत्रिणः = sacrificers.

मित—। सुनोतेः शतृ प्रत्ययः स्यात् यज्ञेन संयुज्यमाने ऽभिषवेत्। सर्वे इति। सु + शतृ। सत्रिणो यजकाः।

२११३। अर्हः प्रशंसायाम् ॥ ३।२।१३३ ॥

दी—। अर्हन्।

शतृ after अर्ह (अर्हः has ५मी) is appointed when praise is implied. अर्हन् deserves praise.

मित—। अर्ह इति। प्रशंसायां गम्यायामर्हतेः शतृ। नेह—अर्हति चोरो वधम्।

२११४। आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु ॥ ३।२।१३४ ॥

दी—। क्विपमभिव्याप्य वक्ष्यमाणाः प्रत्ययास्तच्छीलतद्धर्मतत्साधुकारिषु कर्तृषु बोध्याः।

The following affixes including क्विप् i.e. extending as far as 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्' (3.2.177) are to be considered as attached to roots (only) when the agents therein are marked as with तच्छील: ( That is his habit ), तद्धर्म ( That is his duty ) and तत्साधुकारी ( That is his doing well or his dexterity ).

मित—। आक्वे: इति। क्वि इति क्विन्क्विपोः सामान्येन ग्रहणेऽपि अत्र क्विपमेव गृह्णाति। अत्र अभिविधावाङ्। तदाह—क्विपमभिव्याप्येति। 'भ्राजभासधुर्विद्युतोर्जिपॄजुग्रावस्तुवः क्विप्' इति सूत्रपर्यन्तमित्यर्थः। वक्ष्यमाण इति। तृन्नादयः। तच्छीलता तत्स्वभावः। तद्धर्मः सोऽयं स्वधर्म इति प्रवर्तमानः। तत्साधुकारी. तस्य धात्वर्थस्य साधुकारीति तादृशः।

३११५। तृन् ॥ ३।२।१३५ ॥

टी—। कर्ता कटम्।

The affix तृन् is used after any root in the three senses as expressed above. This very instance कर्ता कटम् ( The maker of a mat ) may imply all the three senses viz he habitually, as a duty or excellently make a mat. षष्ठी is barred here by 'न लोकाव्यय—' as 'तृन्' in the rule has been explained to be a प्रत्याहार forming with the तृ of शतृ in 'लटः शतृ—' (3.2.24) and ending with न् of तृन् (this rule).

मित—। तृन्निति। तच्छीलादिष्वर्थेषु धातोस्तृन् स्यादित्यर्थः। उत्सर्गोऽयम्। तृषा आदयस्तु तदपवादा इति बोद्धव्यम्। कर्ता इति—इदमेवोदाहरणत्रयसाधकम्। शीलं धर्मं साधुकारित्वं वा पुरस्कृत्य कर्तुः प्रवृत्तेः। कटमित्यत्र न षष्ठी। 'न लोकाव्यय—' इति निषेधात्। तत्र तृन्निति हि 'लटः शतृ—' (३।२।१२४) इत्यतः 'तृ' इत्यादाय तृन् इत्येतस्य सूत्रस्य नकारेण प्रत्याहारत्वेन व्याख्यातम्।

३११६। अलङ्कृञ्—निराकृञ्—प्रजनोत्पचोत्पतोन्मद—रुच्यपत्रप—वृतु वृधु सह—चर इष्णुच् ॥ ३।२।१३६ ॥

टी—। अलङ्करिष्णुरित्यादि ( निराकरिष्णुः। प्रजनिष्णुः। उत्पचिष्णुः। उत्पतिष्णुः। उन्मदिष्णुः। रोचिष्णुः…)।

मित—। अलङ्कृञिति। अलङ्-कृञ्, निरा-कृञ्, प्रजन, उत्-पच, उत्-पत, उत्-मद, रुचि, अप-त्रप ( लज्जायाम् ), वृतु ( वृत् ), वृधु ( वृध् ), सह, चर इति द्वादशभ्य इष्णुच प्रागुक्तार्थेषु इत्यर्थः। उदाहरणानि स्पष्टानि।

३११७। णेश्छन्दसि ॥ ३।२।१३७ ॥

टी—। वीरुधः पारयिष्णवः।

इष्णुच comes after a causal root in the vedas as 'वीरुधः—' etc. प+णिच्+इष्णुच—The creepers naturally fill up (?).

मित—। णेरिति। छन्दसि ( वैदिकप्रयोगे ) ण्यन्तादिष्णुजित्यर्थः। वीरुध इति। पृ-पालनपूरणयोः। बहुवचनम्। स्वभावात् पूरणस्वभावा इत्यर्थः (?) छान्दसोऽयं प्रयोगः।

३१२८। भुवश्च ॥ ३।२।१३८ ॥

टी—। छन्दसीत्येव। भविष्णुः। कथं तर्हि 'जगत्प्रभोरप्रभविष्णु वैष्णवम्' इति। निरङ्कुशाः कवयः। चकारोऽनुक्तसमुच्चयार्थः। भ्राजिष्णुरिति वृत्तिः। एवं क्षयिष्णुः। नैतद्भाष्ये दृष्टम्।

इष्णुच is appointed after भू in the former senses in the vedas. Poets are unrestricted i,e. do not pay heed and hear to such restrictions. The provision of च in the rule is to include what

is unsaid. Thus वृत्ति i.e. Kashika has भाजिष्णु etc. But this is not seen in the भाष्य ।

मित—। भुवश्चेति । प्रागुक्तेषु तच्छीलादिष्वर्थेषु भुव इष्णुच् प्रत्ययः स्याच्छन्दसि । निराङ्कुशाः—नियमानधीना इत्यर्थः । भाष्यस्यायं शेषांशः । नैतदिति । 'चकारोऽनुक्त—' इत्येवं व्याख्यानं भाजिष्णु—इत्यादुदाहरणं चेत्यर्थः ।

२११८ । ग्लाजिस्थश्च ग्स्नुः* ॥ ३।२।१३९ ॥

टी—। छन्दसीति निवृत्तम् । गिदयं न तु कित् । तेन स्थ ईत्वं न । ग्लास्नुः । गित्त्वान्न गुणः । जिष्णुः । स्थास्नुः । चाङ्क्ष्णवः । 'श्र्युकः किति' ( २३८१ ) इत्यत्र गकारप्रश्लेषान्नेट् । भूष्णुः । "दंशेश्छन्दस्युपसंख्यानम्" ( वार्तिक )। 'दङ्क्ष्णवः पशवः' ।

The term 'छन्दसि' has ceased to follow. Thus the affix ग्स्नु is employed after roots in the senses of तच्छील etc in भाषा. The affix is गित् and not कित्. Hence था of स्था is not replaced by ई by 'घुमास्था—' (2462). गित्त्वान्नगुणः i,e. by 'क्ङिति (2217). भूष्णुः from चकार in the rule. दंशेश्छन्दसि—' etc (varttika)—easy.

मित—। ग्लाजीति । चकाराद् भुवोऽनुवृत्तिः । तेन ग्ला, जि, स्था, भू इत्येतेभ्यो ग्स्नुः स्यात्तच्छीलादिषु इत्यर्थः । गित्त्वस्य फलमाह—तेनेति । 'घुमास्था—', ( २४६२ ) इत्यनेन विधीयमान इत्यर्थः । न गुणः । 'क्ङिति च' ( २२१२ ) इति निषेधात् । गकारप्रश्लेषादिति । तस्यापि संग्रहादित्यर्थः । एतच्च तत् सूत्रव्याख्याने स्पष्टम् । 'दंशेश्छन्दसि—' इति वार्तिकम्—दंष्ट्राव इति । दंशदशने = 'भ्रष—' इति पत्वे 'षढोः—' इति कत्वे षत्वे च रूपम् ।

---

* "ग्स्नु' इति किदयं प्रत्यय" इति बालमनोरमा । तन्न 'सूत्रे चत्वेन ककारनिर्देश' इति सोक्तिविरोधादुपेक्ष्यम् ।

३१२७। त्रसिगृधिधृषिक्षिपेः क्नुः॥ ३।२।१४०॥

दी—। त्रस्नुः। गृध्नुः। धृष्णुः। क्षिप्नुः।

३१२८। शमित्यष्टाभ्यो घिनुण्॥ ३।२।१४१॥

दी—। उकार उच्चारणार्थ इति काशिका। अनुबन्ध इति भाष्यम्। तेन शमिनितरा—शमिनीतरा इत्यत्र 'उगितश्च'(९८७) इति ह्रस्वविकल्पः। नचैवं शमी शमिनाविति नुम्प्रसङ्गः। झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात्। 'नोदात्तोपदेशस्य—'(२७६०) इति वृद्धिनिषेधः। शमी। तमी। दमी। श्रमी। भ्रमी। क्षमी। क्लमी। प्रमादी। उत्पूर्वान्मदेरलङ्कृञादिसूत्रेणेष्णुजुक्तः। वाऽसरूपविधिना घिनुणपि। उन्मादी। 'ताच्छीलिकेषु वाऽसरूपविधिर्नास्ति' इति तु प्रायिकम्।

The affix घिनुण् ( इन् ) is employed in the senses of तच्छील etc after the eight roots शम्, तम्, दम्, श्रम्, भ्रम्, क्षम्, क्लम् and मद्. Kashika wrongly takes उकार in घिनुण् as for the sake of pronunciation, while भाष्य rightly asserts that the उकार is one of the indicatories ( अनुबन्ध ) here. Thus (for this assertion of भाष्य ) when तर follows शमिनी the feminine form of शमी, we have two forms शमिनितरा—शमिनीतरा due to ह्रस्वविकल्प by the rule 'उगितश्च' (987), whereas काशिका has got one form शमिनीतरा only ( as in this case 'उगितश्च' does not apply). Bhashya takes शमी as with उगित् yet you cannot expect नुम् here by 'उगिदचाम्—' (361). For the नुम् there has been enjoined to झलन्त bases after carrying up ( अपकृष्य ) झल् form the following ( subsequent ) rule

('नपुंसकस्य झलचः' 314—7.1.72). Though the घिनुण् is णित् yet we have no उपधादीर्घ in शमी (naturally peaceful) etc, due to 'नोदात्तोपदेशस्य—' (2763). इष्णुच् has been enjoined after उद्+मद in the rule 'अलङ्कृञ—'. But it (उन्मद) may, by the परिभाषा rule 'वासरूप—' take घिनुण् as well, for the dictum 'ताच्छीलिकेषु—' the provision of वाऽसरूप does not take effect in connection with affixes enjoined in the senses of तच्छील etc, is but a general saying and therefore does not hold good persistently.

मित—। शमित्यष्टाभ्य इति। अत्र 'इति' शमाद्यर्थः। तेन शम्, तम्, दम्, श्रम्, भ्रम्, क्षम्, क्लम्, मद इत्येभ्यः अष्टाभ्यो घिनुण् (इन्) प्रत्ययःस्यात्तच्छीलादिषु इत्यर्थः। इति काशिकेति—चरुचिकरमेतत्। तदवीजस्तु भाषेण विरोधः। तेनेति अनुवन्धत्वेनेत्यर्थः। शमिनितरा—शमिनीतरेति—शमीत्यस्य स्त्रियां शमिनीति। ततः पुनस्तरप्रत्ययो 'उगितश्च' (८८७) इति ह्रस्वविकल्पाद् रूपद्वयम्। काशिकामते तु प्रत्ययस्य उगित्त्वाभावात् 'शमिनीतरा' इति दीर्घ एव। न तु ह्रस्वोऽपि। ननु चैवं प्रत्ययस्य भाष्यपक्षे उगित्त्वाद् 'उगिदचाम्—' (३६१) इति शमी शमिनो इति नुम् स्यादित्याशङ्कां समाधत्ते—भलन्तलक्षणमपकर्षेति। 'नपुंसकस्य—' (३१४—७।१।७२) इत्युत्तरसूत्रादित्यर्थः। घिनुण् प्रत्ययस्य णित्त्वात् 'अत उपधायाः' (२२८२) इत्युपधावृद्धिमाशङ्क्य आह—'नोदात्तोपदेशस्य—' (२७६३) इति वृद्धिनिषेध इति। उत्पूर्वान्मदेरिति। 'अलङ्कृञ—' इति सूत्रे उन्मदेरिष्णुजुक्तः। वासरूपविधिनेति—ननु 'ताच्छीलिकेषु वासरूपविधिर्नास्ति' इति निषेधात कथमत्र घिनुण्? तत्राह—एतत् प्रायिकमिति। एवञ्च उन्मादीत्यपि साध्विति बोध्यम्।

२१२२। सम्पृचानुरुधाङ्यमाङ्यस—परिसृ—संसृज—परिदेवि—सञ्ज्वर—परिक्षिप—परिरट—परिवद—परिदह परिमुह—दुष—द्विष—द्रुह—दुह—युजाक्रीड—विविच—त्यज—रज—भजातिचरापचरामुषाभ्याहनश्च॥ ३।२।१४२॥

दी—। घिनुण् स्यात्। सम्पर्की। अनुरोधी। आयामी। आयासी। परिसारी। संसर्गी। परिदेवी। संज्वारी। परिक्षेपी। परिराटी। परिवादी। परिदाही। दोषी। द्वेषी। द्रोही। दोही। योगी। आक्रीडी। विवेकी। त्यागी। रागी। भागी। अतिचारी। अपचारी। आमोषी। अभ्याघाती।

घिनुण् is employed in the senses of तच्छील etc after सम्पृच, अनु रुध्, आङ् यम्, आङ् यस्, परिसृ, संसृज्, परिदेव, सम् ज्वर, परिक्षिप्, परिरट्, परिवद्, परिदह, परिमुह्, दुष्, द्विष्, द्रुह्, दुह्, युज्, आ-क्रीड़, विविच्, त्यज्, रज भज्, अति चर्, अपचर, आ-मुष् and अभि आ हन्. Thus सम्पर्की (having connection) etc, here and elsewhere कुत्व by 'चजो, कु—' and here and elsewhere गुण of the short penultimate ( लघूपधगुण ) by 'पुगन्त—'। In परिदेवी the root in देवृ देवने भ्वादि। अभ्यघाती—अभि आ हन+घिनुण् by 'हनस्तः—', कुत्व—by 'हो हन्तेः' and here and elsewhere उपधावृद्धि by 'अत उपधायाः' (2282). N. B.—रञ्ज elides its न, for we have "रज" in the sutra.

मित—। सम्पृचानुरुधेति। सप्तविंशतिः धातवः। घिनुण् स्यादिति। तच्छीलादिष्विति शेषः। सम्पर्कीति। लघूपधगुणः। चजोरिति कुत्वञ्च। एवमन्यत्र। अदुपधस्थले तु ( संज्वर, परिवट् इत्यादौ ) 'अत उपधायाः' ( २२८२ ) इत्युपधावृद्धिः। परिदेवीति—देवृ देवने इति भौवादिको धातुः। न तु दिव इत्यस्य दैवादिकस्य ग्रहणम्। 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति लाक्षणिकस्य ग्रहणायोगात्। अभ्याघातीति—अभ्याङ् पूर्वाद्धन्तेर्घिनुण्। 'होहन्तेः—' इति हस्य कुत्वेन घः। 'हनस्तोऽचिण्णलोः' इति नस्य तः। 'अत उपधायाः' ( २३८२ ) इत्युपधावृद्धिः।

सूत्रमेतत् द्विधाव्याख्यानसहम्—विधिपरत्वेन नियमपरत्वेन वा। विधिपरत्वेन यथा—ताच्छील्यादिषु धातोः सोपपदे णिनिर्विहितः, किन्तु एभ्यः घिनुण् स्यात्।

अर्थं लयाव उपपदे सति असति वा। [ घिनुण्प्रत्ययफलन्तु "चजोः कुः घिण्यति" इति कुत्वार्थमिति बोध्यम् ]। नियमपरत्वं यथा—पृचवधादिभ्यश्चेत् तदा यथाक्रमं समनूपसर्गादेव घिनुण्, अन्यस्मिन् उपसर्गे सति घिनिरेव स्यात्. [ अनुपसर्गाल्लिम्प विन्देति सूत्रे उद्देशेरेव यथा शः नाम्योपसर्गयुक्तस्य ]। तत्र रजविषदुषद्रुहदुहेय प्रयोजारितात् घिनुण् अन्यत्र तु परित्यजादिः घिनिरिति। ननु "प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य च ग्रहणम्" इत्येतावता किं न त्यजादिः सर्वावस्थायां घिनुण्? एतत्पक्षे उत्तरं यथा—घिनौ प्रकृते सति विशिष्य घिनुण्विहिते एतेषां संज्ञाकत्वात् ततः "संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणाभावः"। यद्वा—"लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्" इति परिभाषया प्रतिपदोक्तानां संपृचादीनामेव यथा स्यात्।

नन्वे विधिपरत्वमेव न्याय्यः। अन्यथा सर्वारम्भपरित्यागी, दारपरित्यागी इत्यादौ घिनुण् न स्यात्। घिनौ तु कुत्वं दुरुपपादम्। घिनुण् विषये घिनिः इति घिनेः स्थानिवद्भावेन विकल्पना तु गौरवदुष्टा अनाकरा च स्यात्।

सुखसङ्गी इत्यादिषु घिनुण् विधेरभावात् घिनौ कथं कुत्वम्? अजन्तात् मत्वर्थीय इनिरिति हि समाधानम्। यदा घिनौ आग्रहश्चेत् एवम्विधानां कुत्वार्थं न्यङ्क्वादित्वं बाहुलकं वा कल्पनीयम्।

**२१२३। वौ कषलसकत्थस्रम्भः ॥ ३।२।१४३ ॥**

**टी—। विकाषी। विलासी। विकत्थी। विस्रम्भी।**

घिनुण् comes in after कष् लस् कत्थ and स्रम्भ preceded by the उपसर्ग वि to express तच्छील etc.

मिस—। वौ इति। व्युपसृष्टेभ्यः तच्छीलादिषु घिनुण् स्यादित्यर्थः। कष हिंसार्थः। लस श्लेषणक्रीडनयोः। कत्थ श्लाघायाम्। स्रम्भु विश्वासे।

**२१२४। अपे च लषः ॥ ३।२।१४४ ॥**

**टी—। चाद्वौ। अपलाषी। विलाषी।**

घिनुण् after लष in these senses when अप or वि precedes.

मित—। अपेचेति। अपपूर्वाद्विपूर्वाच्चलषेः घिनुण् प्रागुक्तार्थेषु। लषकान्तौ (कान्तिरिच्छा)।

३१२५। प्रे लप—सृ—द्रु—मथ—वद—वसः ॥३।२।१४५॥

टी—। प्रलापी। प्रद्रावी। प्रमाथी। प्रवादी। प्रवासी।

मित—। प्रे इति। प्रोपसृष्टेभ्य एभ्यो घिनुण्। प्रलापीति। प्रलापोऽनर्थकं वा इत्यमरः। प्रमाथीति। मथ विलोडने मृादिः।

३१२६। निन्द—हिंस—क्लिश—खाद—विनाश—परिक्षिप—परिरट—परिवादि—व्याभाषासूञोवुञ्॥ ३।२।१४६॥

टी—। पञ्चम्यर्थे प्रथमा। एभ्यो वुञ् स्यात्। निन्दकः। हिंसक इत्यादि। ण्वुला सिद्धे वुञ्वचनं ज्ञापकं ताच्छीलादिषु वाऽसरूपन्यायेन तृजादयो नेति।

वुञ् or अकञ् ( by 'युवरनाकौ' ) is employed after these roots ( निन्द, हिंस, क्लिश्, खाद, वि+नाश्, परिक्षिप् परिरट् परिवादि ( ण्यन्त ) वि-आ भाष् and असूञः = क्लेशकः खादकः, विनाशकः परिक्षेपकः परिराटकः, परिवादकः, व्याभाषकः and असूयकः। Although ण्वुल would suffice here yet the application of वुञ् is an indication that in the sense of तच्छील etc, तृच्, ण्वुल etc do not apply having recourse to वासरूपन्याय. But as a matter of fact ण्वुल also holds good in these cases as the dictum ताच्छीलिकेषु वासरूपविधिर्नास्ति is a general statement ( प्रायोवादः ) which the author himself has said (before in R-3121).

मित—। निन्द हिंसेति। वुञ् इति। 'युवोरनाकौ' इत्यनुसारादकञ् प्रत्ययः। ततश्च निन्दकेत्यादि। सूत्रेऽस्मिन् विनाशेति विपूर्वस्य नशेर्ण्यन्तस्य भाविना णिलोपेन

( 'णेरनिटि' इति विहितेन ) निर्देशः। केचित्तु 'विनाशि' इति ण्यन्तमेव पठन्ति। 'परिवादि' इति तु ण्यन्तमेव सूत्रे पठ्यते। निन्दादीनाम् समाहारद्वन्द्वात् सौत्रं पुंस्त्वम्। तदाह—पञ्चम्यर्थे प्रथमेति। तेन 'असूत्रो वुञ्' इति विश्लिष्य असूयतेरेव वुञ् विधीयताम् निन्दादिभ्यो ण्वुलैव सिद्धेः। न च स्वरे विशेषः। नित्स्वर ञित्स्वरयोरुभयोरपि उदात्तत्वेन समानत्वात्। असूयतेः ण्वुलि प्रत्ययात् पूर्व ऊकार उदात्तः। वुञि तु धातोरकार उदात्तः इत्यादित्यस्ति विशेषः। तस्मादसूयतेरेव वुञ्विधिरस्त्वित्यताह—ण्वुला सिद्धे वुञ्वचनं ज्ञापकमिति। नेदं ण्वुल्विषयमात्र-ज्ञापकं किन्तु सामान्यापेक्षम्। तदाह—तृजादय इति। आदिपदात् ण्वुलादीनां संग्रहः। एतत्तु ज्ञापकं प्रायिकमिति प्रागेवोक्तम्।

२१२७। देविक्रुशोश्चोपसर्गे॥ ३।२।१४७॥

दी—। आदेवकः। आक्रोशकः। 'उपसर्गे' किम्? देवयिता। क्रोष्टा।

देवि (दिव्+णिच्) and क्रुश् take वुञ् in these senses when preceded by any उपसर्ग. Otherwise तृन्.

मित—। देवि क्रुशोरिति। सोपसर्गाभ्यामाभ्यां वुञ् ताच्छीलादिषु। अन्यथा तृनादयः। अत्र देवीति दीव्यतेर्हेतुमण्ण्यन्तस्य चौरादिकस्य च ग्रहणम्।

२१२८। चलनशब्दार्थादकर्मकाद्युच्॥ ३।२।१४८॥

दी—। चलनार्थात् शब्दार्थात् च युच् स्यात्। चलनः। चोपनः। कम्पनः। शब्दनः। रवणः। अकर्मकात् किम्? पठिता विद्याम्।

The affix युच् (अन्) is employed after अकर्मक roots expressing movement and sound (in the senses of तच्छील etc). चोपनः। कम्पनः are synonyms of चलनः. Similarly चरणः (चर+युच्) ...

मित—। चलनेति। युच् इति। तस्य 'युवो—' रित्यनादेशः। चलन इति। चल कम्पने। चुप मन्दायां गतौ। कपि चलने। शब्द शब्दने चुरादिः। धात्वर्थोपसंग्रहादकर्मकः। रु शब्दे। पठितेति। सकर्मकत्वात्तृन्।

२१२९। अनुदात्तेतश्च हलादेः ॥ ३।२।१४९ ॥

दी—। अकर्मकाद युच् स्यात्। वर्तनः। वर्धनः। अनुदात्तेतः किम्? भविता। 'हलादेः' किम्? एधिता। 'अकर्मकात्' किम्? वसिता वस्त्रम्।

युच् is employed after अकर्मक roots dropping the अनुदात्त pitch (or sound) and beginning with a हल्। वर्तनः—(staying) etc.

मित—। अनुदात्तेतश्चेति। अत्र हलादेरित्यादि ग्रहणाभावे हलन्तादित्यर्थः स्यात्। ततश्चानुदात्तेतः सन्नन्तस्य च गुपिहलन्तत्वाभावाद्द 'जुगुप्सन' इति न स्यात्। अत्र अकर्मकादिति पूर्वसूत्रादनुवर्तते। तदाह—अकर्मकादिति। अन्यत् स्पष्टम्।

२१३०। जु-चङ्क्रम्य-दन्द्रम्य-सृ-गृधि-ज्वल-शुच-लष-पत-पदः ॥ ३।२।१५० ॥

दी—। 'जु' इति सौत्रो धातुर्गतौ वेगे च। जवनः। चङ्क्रमणः। दन्द्रमणः। सरणः। पूर्वेण सिद्धे 'पदि'-ग्रहणं 'लषपत पद—' इत्युकञो बाधा मा भूदिति। तेन ताच्छीलिकेषु-परस्परं वाऽसरूपविधिर्नास्तीति। तेनालङ्कृञस्तृन्।

युच् after जु (which is found in the rule only means movement and force), चङ्क्रम्य, दन्द्रम्य, सृ, गृधि, ज्वल्, शुच, लष्पत् and पद is employed to bring out तच्छील etc. चङ्क्रमणः—excessive movement—युच् after the यङन्त form of क्रम (क्रम्+यङ्), य elides by 'यस्य हलः' and अ by 'अतो लोपः'। Similarly दन्द्रमणः

also सरणः ज्वलनः शोचनः लषणः पतनः and पदनः are to be instanced. पद being अनुदात्तेत् and हलादि would have युच् by the previous rule 'अनुदात्तेतश्च—' (3129), yet the mention of the same here is to the effect that युच् ( उत्सर्ग ) after पद may not be barred by उकञ् ( the अपवादप्रत्यय under 'लषपतपदः—' 3134 ). Hence the twice mention of पद indicates that the affixes under तच्छीलाधिकार are not barred by one another according to the परिभाषा rule 'वासरूप—' ( 2830 ). Thus तृन् the affix in general ( उत्सर्गप्रत्यय ) is not to be employed after अलंकृञ्, for इष्णुच has only once been mentioned after it 'अलङ्कृञ्निराकृञ्—' (3116) and nowhere else. The behaviour of the author ( पाणिनि ) is thus our inferential guide in such cases of doubt.

मित—। जुचङ्क्रमीति दश धातवः। तत्र चङ्क्रमादन्द्रमौ यङन्तौ। एभ्यो युजुक्तार्थे। सौत्र इति सूत्रे एव दृष्टो नान्यत्रेत्यर्थः। जवन इति। 'जु' वेगेन गमनमित्यर्थः। सार्वधातुकेति गुणः। एवं सरणः इत्यादि। चङ्क्रमणः इति—युचिपरे 'यस्य हलः' इति यकारलोपः। 'अतो लोपः' इत्यल्लोपश्च। एवं दन्द्रमणः। ननु कृतः पदधातुरनुदात्तेद्धलादिश्च। ततश्च 'अनुदात्तेतश्च—' (३१२७) इत्यनेनैव तस्मादुत्तरं युच् स्यात्। एवञ्चायमुल्लेखो व्यर्थः इति चेन्मैवम् इत्याह—पूर्वेण सिद्धे इति। युजित्युत्सर्गः। उकञित्यपवादः। ततश्च (२८३०) उकञ् युचं बाधेत। तदस्य बाधोऽनेन माभूदित्येवमर्थं पुनः निर्देशः। असति त्वस्मिन् निर्देशे पद्यतेर्युच् न स्यादिति ज्ञापयन्नाह—तेनालङ्कृञ-सूत्रेति। यथा-तृन् उत्सर्गः, इष्णुच् अपवादः ( 'अलङ्कृञ्निराकृञ्—' ( ३११६ ) इति अत्र तदुल्लेखाभावादिति भावः)। अत्रापि तृन्नित्युत्सर्गो इष्णुच् इत्यपवादः। ततश्च न केवलं सामान्येन ताच्छीलिकेषु वासरूपविधिर्नास्ति किन्तु परस्परमपीत्याह—तेन ताच्छीलिकेषु इति। 'निन्दहिंस—'

(३१२६) इत्यत्र 'तच्छीलादिषु वासरूपविधिर्नास्ति' इति सामान्येन ज्ञापितम्। इह तु परस्परप्रतिषेधो विज्ञाप्यतइति न पौनरुक्त्यम्।

३१३१ क्रुधमण्डार्थेभ्यश्च ॥ ३।२।१५१ ॥

टी—। क्रोधनः। रोषणः। मण्डनः। भूषणः।

युच् comes after roots denoting anger and decoration.

मित—। क्रुधेति। तच्छीलादिषुयुजिति शेषः। रोषणभूषणाविति। क्रमेण क्रुधमण्डार्थकत्वाद् युच्। मण्डनम् अलङ्करणमित्यर्थः।

३१३२। न यः ॥ ३।२।१५२ ॥

टी—। यकारान्ताद् युज् न स्यात्। क्नूयिता। क्ष्मायिता।

युच् doesnot come after roots ending in यकार.

मित—। न य इति। अत्र य इति तदन्ते लाक्षणिकस्तदाह—यकारान्तादिति। क्नूयितेत्यादि। क्नूयी शब्दे उन्दने च। क्ष्मायी विधुनने। अनयोरनुदात्तेत्त्वादपि यत्त्वेन न युच्।

३१३३ सूददीपदीक्षश्च ॥ ३।२ १५३ ॥

टी—। युज् न स्यात्। सूदिता। दीपिता। दीक्षिता। 'नमि कम्पि—' इति रेण युजो बाधे सिद्धे दीपेर्ग्रहणं ज्ञापयति 'ताच्छीलिकेषु वाऽसरूपविधिर्नास्तीति' प्रायिकमिति। तेन कम्रा कमना युवतिः। कम्प्रा कम्पना शाखा ॥ यदि सूदेर्युज् न कथं 'मधुसूदनः'? नन्द्यादिः।

युच् doesnot come after सूद, दीप् and दीक्ष. And as युच् is an अपवाद प्रत्यय or a special affix, so युच् is to bar तृन् the affix in general (उत्सर्गप्रत्यय) when ताच्छीलिक comes in. Although the युच् after दीप् could have been barred by the affix र under the later rule 'नमि

कमिप—' (3147) yet the expressed mention of दीप here indicates that the dictum 'ताच्छीलिकेषु—' is but a general case and does not hold good everywhere. Thus in places of र, we can have युच् also e.g. कम्रा or कमना युवतिः—(a young woman is habitually or naturally desireful) etc. As to the term मधुसूदन, though युच् is for-bidden after सूद, it may be derived with the affix ल्यु ( अन् ) added to it which had been advised under 'नन्दिग्रहि—' (2896),

सिता—। सूददीपेति। युजित्यपवादः तृन्नित्युत्सर्गः। तेन युजभावे तृन् प्राप्नोतीत्याह—सूदिता दीपितेति। रेणेति—रप्रत्ययेनेत्यर्थः। युचो बाधे सिद्धं इति। नमिकमीत्यत्रापि दीपेर्ग्रहणात्। प्रायिकमिति। सर्वत्र न प्रसज्यत इत्यर्थः। एवञ्च 'नमिकम्पिस्म्यजसकमहिंसदीपो रः' इत्यत्रोक्तेन रप्रत्ययेन युचो बाधाभावाद्य दीपो ग्रहणं सार्थकमेव। ततश्च रप्रत्ययविषयेऽपि युजित्याह—कम्रा कमना युवतिरिति। स्वभावात् कामशीलेत्यर्थः। कम्प्रा कम्पनेति—वेपनस्वभावा। एवं गमेः 'लषपतपद—' ( २१२४ ) इत्युकञ् विषये तृन्नपि। गन्ता। गामुकः। 'वौ कषलस—' ( ३१२३ ) इति घिनुण् विषये युजपि। थविकत्थी अविकत्थनो वा शूरः इति। यदि सूदेर्नयुज् इति—कथं मधुसूदनः सिध्यति इत्यत आह—नन्द्यादिरिति। युचकार्यं ल्युनापि सिध्यतीत्याह—एवञ्च 'नन्दिग्रहि पचादिभ्यो ल्युणिन्यचः' ( २८९६ ) इति ल्युरिति भावः।

३१३४। लष-पत-पद-स्था-भू-वृष-हन-कम-गम-शॄभ्य उकञ् ॥ ३।२।१५४ ॥

टी—। लाषुकः। पातुक इत्यादि।

लाषुकः, पातुकः ( one wishing and falling by nature ) etc. Similarly पादुकः, स्थायुकः ( युक by 'आतो युक् चिण्कृतोः' ), भावुकः, वर्षुकः, घातुकः ( 'हनस्तः—' and हो हन्तेः—' ), कामुकः, गामुकः and शारुकः।

मित—। लषपतेति। एभ्यो द्वाभ्यां धातुभ्य उकञ् तच्छीलादिषु। अन्यत् स्पष्टम्।

३१३५। जल्प-भिक्ष-कुट्ट-लुण्ट-वृङः षाकन् ॥ ३।२।१५५ ॥

दी—। जल्पाकः। भिक्षाकः। कुट्टाकः। लुण्टाकः। वराकः। (स्त्रियाम् ?) वराकी।

जल्पाकः (garrulous by nature). Similarly भिक्षाकः—beggar by nature etc. in order. वराकी—with ङीष् in fem. by 'षिद्गौरादिभ्यश्च' (498) as षाकन् leaves ष as इत्.

मित—। जल्पभिक्षेति। पञ्चभ्यः षाकन् (आक) प्रत्ययस्तच्छीलादिषु। जल्पाक इति। वाचाल इत्यर्थः। 'स्याज्जल्पाकस्तु वाचाल' इत्यमरः। वराकीति। षाकनः षित्वात् 'षिद्गौरादिभ्यश्च' (४१३८) इति स्त्रियाम् ङीष्।

३१३६। प्रजोरिनिः ॥ ३।२।१५६ ॥

दी—। प्रजवी—प्रजविनौ—प्रजविनः।

The affix इनि वा इन् is employed after जु preceded by प्र in the sense of तच्छील etc. प्रजवी—forcible by nature.

मित—। प्रजोरिति। जु इति सौत्रो धातुरित्युक्तम्। प्रपूर्वादस्मादिनिस्तच्छीलादिष्वित्यर्थः। नकारादिकार उच्चारणार्थः।

३१३७। जि-दृ-क्षि-विश्रि-इण्-वमाव्यथाभ्यम-परिभू-प्रसूभ्यश्च ॥ ३।२।१५७ ॥

दी—। जयी। दरी। क्षयी। विश्रयी। अत्ययी। वमी। अव्यथी। अभ्यमी। परिभवी। प्रसवी।

इन comes after जि, दृ, क्षि etc. अत्ययी—अति + इ इनि by गुण by 'सार्वधातुक—' (2168). Similarly elsewhere.

मित—। जिदचीति। जि जये, जि अभिभवे, दृङ् आदरे, चि चये, चि निवासगत्योः, (वि पूर्वः) श्रिञ् सेवायाम, इ गतौ, वमु उद्गिरणे, (नञ् पूर्वः) व्यथ भयसञ्चलनयोः। निपातनात् नञो धातुना समासे 'नलोपो नञः' इति नकारलोपः। (अभिपूर्वः) अम गत्यादिषु, (परिपूर्वः) भू सत्तायाम्। प्रपूर्वः सू प्रेरणे इत्येतेभ्यो दशभ्यस्तच्छीलादिष्विनिप्रत्ययः। सूतिसूयत्योस्तु सानुबन्धकत्वान्नेह ग्रहः।

२१२८। स्पृहि-गृहि-पति-दयि-निद्रा-तन्द्रा-श्रद्धाभ्य आलुच् ॥ ३।२।१५८ ॥

दी—। आद्यास्त्रयश्चुरादावदन्ताः। स्पृहयालुः। गृहयालुः। पतयालुः। दयालुः। निद्रालुः। तत्पूर्वो द्रा। तदो नान्तत्वं निपात्यते। तन्द्रालुः। श्रद्धालुः। 'शीङो वाच्यः' (वार्तिक)। शयालुः।

आलुच् comes in after these (seven only) in the senses of तच्छील; of these seven the first three are read in चुरादि class and are अकारान्त। Thus णिच् (स्वार्थे) following we have अयादेश् by 'अयामन्ताल्वाय्य—'(2311) and then elision of अत् or अ when आलु follows by 'अतो लोपः'। But this अल्लोप being स्थानिवत्, there is no गुण of the penultimate in स्पृहयालु (desirous) and गृहयालुः (a receiver by nature), and no वृद्धि in पतयालुः. In निद्रा, तन्द्रा the root is 'द्रा कुत्सायां गतौ'। in the latter case तत् which precedes द्रा has become तन् by निपातन. श्रद्धालु—श्रत् (अव्यय) धा + आलुच् (devoted) 'शीङो—' Vartika. शयालु by गुण।

मित—। स्पृहि गृहीति। एभ्यः सप्तभ्य आलुच तच्छीलादिषु तत्साधुकारित्वर्थेषु। स्पृहि इच्छायाम्। गृह ग्रहणे, पत गतौ। एते त्रयश्चुरादिका अदन्ताः चेत्याह—आद्या इति। एतेभ्यो णौ परे 'अयामन्ताल्वाय्य—' (२३११) इत्या-

देश:। ततोऽदन्तत्वम्। अल्लोपस्य स्थानिवत्त्वात् स्पृहयालु: गृहयालुरित्युभयत्र लघूपधगुणो न। पतयालुरित्यत्र च नोपधावृद्धि:। तन्नामित्याह—तत्पूर्वं इति स्पष्टम्। द्राइति कुत्सायां गतौ। उपसर्गवशादर्थान्तरम्। अद्रालुरिति। श्रदित्य-व्ययपूर्वो धा धारणे। 'शीङ:—' (वार्तिकम्)। अत्रापयालुज् वाच्य—इत्यर्थ:। शयालुरितिगुण:।

३१३९। दाधेट्सिशदसदो रु:॥ ३।२।१५९॥

दी—। दारु:। धारु:। सेरु:। शद्रु:। सद्रु:।

The affix रु comes after दा, धेट् (धा by 'आदेच:—'), सि, शद and सद.

मित—। दाधेडिति। ताच्छील्याद्यर्थेषु एभ्यो: रु: (प्रत्यय:)। धारुरिति। 'आदेच:—' (२३७१) इत्यात्त्वम्।

३१४०। सृघस्यद: क्मरच्॥ ३।२।१६०॥

दी—। सृमर:। घस्मर:। अद्मर:।

N. B.—घसि here is other than the substitute घस्तृ for अद्. सृमर etc—No guna due to कित्त्व।

मित—। सृघसीति। ताच्छील्यादौ घस क्मरच्—चावितौ। सृमर इत्यादि। प्रत्ययस्य कित्वान्न गुण:। घसि: प्रकृत्यन्तरम्। अदो ग्रहणाज्ज्ञापकात्।

३१४१। भञ्जभासमिदो घुरच्॥ ३।१६१॥

दी—। भङ्गुर:। भासुर:! मेदुर:।

मित—। भञ्जेति। ताच्छील्यादौ घुरच्। घचावितौ। घित्वात् 'चजो:—' इति कुत्वेन भङ्गुर इति। मेदुर:=लघूपधगुण:। 'मेघैर्मेदुरमम्बरं वनभुव: श्यामास्त-मालद्रुमै:' (गीतगोविन्दम्)।

३१४२। विदिभिदिच्छिदे: कुरच्॥ ३।२।१६२॥

दी—। विदुर:। भिदुरम्। छिदुरम्।

विदि here is to know. Hence विदुरः ( wise )—no guna due to कित्त्व of the affix. भिदुरम्—thunderbolt.

मित—। विदिभिदि इति। विदिर्ज्ञानार्थः। तच्छीलादिषु एभ्यः कुरच्। कपावितौ। 'भिदुरं पवि'रित्यमरः। छिदुरमिति। कर्मकर्तरि प्रयोग इति काशिका। नैतद् भाष्ये दृष्टम्। 'प्रियतमाय वपुर्गुरुमत्सरच्छिदुरयाऽदुरया चितमङ्गना' ( माघः )। सर्वत्र कित्वान्न लघूपधगुणः।

२१४३। इण्नशिजिसर्तिभ्यः क्वरप् ॥ ३।२।१६३ ॥

दी—। इत्वरः। इत्वरी। नश्वरः। जित्वरः। सृत्वरः।

क्वरप् ( वर ) comes in after इण्, नश्, जि and सृ in the senses of तच्छील etc. इत्वर (moving or falling by the nature) तुक् due to पित्त्व of the affix by 'ह्रस्वस्य पिति—' and no guna due to कित्त्व. इत्वरी—ङीप् by 'टिड्ढाणञ—' ( 470 ).

मित—। इणनशीति। ताच्छील्यादिषु क्वरप्। कपावितौ। गुणनिषेधः तुगागमश्च। इत्वरीति। 'टिड्ढाणञ्—' ( ४७० ) इति ङीप् स्त्रियाम्।

२१४४। गत्वरश्च ॥ ३।२।१६४ ॥

दी—। गमेरनुनासिक लोपो निपात्यते। गत्वरी।

मित—। गत्वरश्चेति। झलादिप्रत्ययपरत्वाभावेन अनुनासिकलोपस्याप्राप्तेर्वचनम्।

२१४५। जागुरूकः ॥ ३।२।१६५ ॥

दी—। जागर्तेरूकः स्यात्। जागरूकः।

जागुः in the rule is the 5th case—ending of जागृ. जागरूकः—the affix not being कित्, गुण takes effect with र following (रपरत्वम्)।

मित—। जागुरिति। पञ्चम्यन्तमिदमित्याह—जागर्तेरिति। जागरूक इति।

प्रत्ययस्य क्वित्वाभावादगुणः। रपरत्वम्। दीर्घादिरयं प्रत्ययः ( ऊकः ) इति द्रष्टव्यम्। [ क्वचित् जागरूकः इति सूत्रपाठो दृश्यते ]।

३१४६। यज-जप-दशां यङः ॥ ३।२।१६६ ॥

दी—। एभ्यो यङन्तेभ्यो ऊकः स्यात्। दशामिति भाविना नलोपेन निर्देशः। यायजूकः। जञ्जपूकः। दन्दशूकः।

ऊक comes in after these three, affixed already with यङ्, in the said senses. दन्श्—will drop its नकार by निपातन, as is indicated by 'दशाम्' in this rule. यायजूकः ( यज् + यङ् = यायज्य by द्वित्व and दीर्घ of the अभ्यास by the rule 'दीर्घोऽकितः'. Then यायज्य + ऊक = यायज् + ऊक by 'यस्य हलः', 'अतो लोपः—' a frequent sacrificer, cp— 'तं यायजूकाः सहभिक्षुमुख्याः—' ( भट्टि ). जञ्जपूकः—Here नुक् after the अभ्यास comes in by 'जपजभदहदश—' (2638) = muttering evil repeatedly. Similarly दन्दशूकः ( a serpent or demon) with the elision of नकार irregularly.

मित—। यजजपेति। पञ्चम्यर्थे षष्ठी। अत आह—एभ्य इति। ताच्छील्याद्यर्थेष्विति योजनीयम्। सूत्रे दशामिति कथमित्याह—भाविनेति। ऊकप्रयोगापेक्षया इत्यर्थः। एवञ्च निपातनादेवात्र नकारलोपः। यायजूका इति। पुनः पुनः यजत इति यङि द्वित्वादूर्ध्वं 'दीर्घोऽकितः' ( १६३२ ) इत्यभ्यासदीर्घे यायज्य इति स्थिते ऊकः। 'यस्य हलः' ( २६३१ ) इति यलोपादूर्ध्वम् 'अतो लोपः' ( २३०८ ) इत्यल्लोपे रूपम्। जञ्जपूक इति। गर्हितं भृशं जपति इति यङि, तस्य लोपे 'जपजभदहदश—' ( २६३८ ) इत्यभ्यासस्य नुगागमे च रूपम्। एवं दन्दशूकः [ 'दन्दशूको विशधरः' इत्यमरः ]।

३१४७। नमि-कम्पि-स्म्यजस-कम-हिंस-दीपो रः ॥३।२।१६७॥

दी—। नम्रः। कम्प्रः। स्मेरः। जसिर्नञ्पूर्वः क्रिया-

सातत्ये वर्तते। अजस्रम्, सन्ततमित्यर्थः। कम्रः। हिंस्रः। दीप्रः।

Easy ; of these seven roots अजस् is the जस् ( or जसु मोक्षणे ) with नञ् preceding and denotes frequency of action. Thus अजस्रम् (frequently—adv).

मित—। नमिकम्पी-ति। यथागणमिकानिर्देशः। एभ्यः स्रप्रत्ययः ताच्छील्यादौ। तत्र 'अजस' इत्यस्य धातुपाठेऽदर्शनादाह—जसिर्नञ्पूर्वः इति। क्रियासातत्ये वर्तते इति। शक्तिवशादिति भावः। धातुपाठे तु 'जसु मोक्षणे' 'जसु ताडने, जसि रक्षणे ( मोक्षणे इति केचित् ) इति च पठ्यते। अजस्रं सन्ततमिति। एवञ्च क्रियाविशेषणमिदम्। तथाचामरः—'सततेऽनारताश्रान्त-सन्तताविरतानिशम्। नित्यानवरताजस्रम्—' इति। 'कम्रः कामयिताऽभीकः' इत्यमरः। [ हिंस्रेषु दीप्रास्त्रधरः कुमारः ( भट्टिः—१मः सर्गः ) ]।

२१४८। सनाशंसभिक्ष उः॥ ३।२।१६८॥

दी—। चिकीर्षुः। आशंसुः। भिक्षुः।

The affix उ in the senses of तच्छील etc is employed after सन्नन्त roots, and आ+शंस् and भिक्ष्। चिकीर्षुः ( कृ+सन्+उ ) similarly जिहीर्षुः, जिगीषु etc.

मित—। सनाशंसेति। सन् इति प्रत्ययः। तेन तदन्तस्य ग्रहणम्। षणु दाने षण संभक्तौ इत्यनयोस्तु न ग्रहणम्। गर्गादिषु उप्रत्ययान्तजिगीषुशब्दस्य पाठाज्ज्ञापनात्। तेन सन्नन्तेभ्य आङ्पूर्वात् शंसेः (आङः शंसु इच्छायाम् इत्यस्मात्), भिक्षतेश्च उप्रत्ययः स्यात् शीलादिषु इत्यर्थः। चिकीर्षुरिति—डुकृञ् करणे इत्यस्मात् सन्नन्तात्। एवं जिहीर्षुरित्यादि।

२१४८। विन्दुरिच्छुः ॥ ३।२।१६८ ॥

दी—। वेत्तेर्नुम् इषेश्छत्वं च निपात्यते। वेत्ति तच्छीलो विन्दुः। इच्छति इच्छुः।

These two words are formed by निपातन with the affix उ added in the said senses, and with the augment नुम् after विद् (to know) and छत्व of the ष of इष् ( to intend) ; विन्दुः—naturally wishing to know. बिन्दु (adrop) is different which has usually वर्गीय बकार in the beginning.

मित—। विन्दुरिच्छुरिति। उप्रत्ययान्तावेतौ निपात्येते। तत्र निपातनप्रकारमाह—वेत्तेरिति। एवञ्च विद ज्ञाने इत्यस्यात्र ग्रहणम्। एवमिषेरपि इच्छार्थकस्यैतत् न त्विष गतौ, इष आभीक्ष्ण्ये इत्यनयोः। विन्दुशब्दस्तु स्वाद् भिन्नः। तस्य पवर्गतृतीयादित्वाद् विदि अवयवेऽस्माद् मृगय्वादित्वात् कुप्रत्ययान्तत्वात्।

२१५०। क्याच्छन्दसि ॥ ३।२।१७० ॥

दी—। 'देवान् जिगाति सुम्नयुः'।

The affix उ comes in after bases ending in क्यच् in the vedas to bring out the said senses. Thus 'देवान—' one wishing pleasure ( also wealth ) approaches gods. सुम्न + क्यच् = सुम्नय for ईत्त्व by 'क्यचि च' and दीर्घ by 'अकृत्—' is forbidden under 'छन्दस्यपुत्रस्य'. Then सुम्नय + उ = सुम्नयुः by अतो लोपः। जगाति = goes.

मित—। क्यादिति। क्यात् + छन्दसि इतिच्छेदः। 'क्य' इत्यस्य पञ्चम्यन्तं पदम् 'क्यात्' इति। क्य इति च क्यच् क्यषक्यङां सामान्यग्रहणम्। तेन तत्प्रत्ययान्तात् उप्रत्ययो भवति छन्दसि तच्छीलादिषु। सुम्नयुरिति—सुम्नं धनं सुखं वा। तदात्मन इच्छतीति क्यचि 'छन्दस्यपुत्रस्ये'ति निषेधात् 'क्यचि च' इति अकारस्य ईत्त्वं 'अकृत्

सार्व—' इति दीर्घश्च न। अतो लोपः। ततः उप्रत्ययः। जिघाति गच्छतीत्यर्थः। 'बहुलं छन्दसी'ति शपः श्लुः। वैदिकप्रक्रिया द्रष्टव्या।

२१५१। आदृगमहनजनः किकिनौ लिट् च॥ ३।२।१७१॥

टी—। आदन्तादृदन्ताद्गमादिभ्यश्च किकिनौ स्तश्छन्दसि, तौ च लिड्वत्। पपिः सोमम्। ददिर्गाः। बभ्रिर्वज्रम्। जग्मिर्युवा। 'जघ्निर्वृत्रममित्रियम्'। जज्ञिः। 'भाषायां धाञ्कृसृगमिजनिनमिभ्यः' (वार्तिक)। दधिः। चक्रिः। सस्रिः। जग्मिः। जज्ञिः। नेमिः॥ 'सासहि-वावहि-चाचलि-पापतीनामुपसंख्यानम्' (वार्तिक)। यङन्तेभ्यः सहेत्यादिभ्यः किकिनौ पतेर्नीगभावश्च निपात्यते।

The affixes कि and किन् are used in the vedas after roots ending in आ and ऋ, and after गम् हन् and जन्, and these (कि + किन्) are treated like लिट्. Thus पपिः सोमम् (He drank soma juice) पा + कि—द्वित्व etc as in लिट् and elision of आ by 'आतो लोपः—' etc. Similarly ददि with किन्; the difference between the two (कि and किन्) being in sound. ददिः—दा + कि। बभ्रिः—भृ + कि (ऋदन्त). जग्मिः—गम् + कि। जघ्निः—हन् + कि (उपधालोप by 'गमहन—'. Then 'अभ्यासाच्च' (2430) directs कुत्व)। जज्ञिः—जन् + कि। 'भाषायाम्—' varttika. दधि etc as before by द्वित्व etc. नेमि (नम् + कि) by एत्व and अभ्यासलोपः. In continuation of all the instances of this varttika Bhattoji has laid down the above two rules although they deserve to be treated on the vaidika section. 'सासहि—' (varttika)—The यङन्त forms of सह्, वह्, चल् and पत् take the affixes कि + किन्,

and the augment नीक् (directed by 'नीग्वञ्चु'—2642) is irregularly withdrawn from being applied after पत्. In सासहि etc द्वित्व and यलोप as before, दीर्घ of the अभ्यास is by 'दीर्घोऽकितः' (2638).

मित—। आदृगमेति। आत् + कृ इति च्छेदः। तदाह—आदन्ताद् ऋदन्तादिति। ताच्छील्यादिष्विति शेषः। लिट् चेत्यस्य विवरणम्। लिड्वदिति। तेन पपिः (पा + कि); ददिः (दा + किः) इत्यादौ सर्वत्र द्वित्वादिकं लिट्कार्यमवगन्तव्यम्। ऋदन्तस्योदाहरणं बभ्रिरिति (भृ + कि)। जग्मिः—गम् + कि। 'गमहन—' इत्युपधालोपः। द्वित्वचुत्वादि। जघ्निः—हन् + किः। प्रागुवदुपधालोपः। 'अभ्यासाच्च' (२४३०) इति कुत्वम्। जज्ञिः—जन् + कि। एवं किन्यपि बोध्यम्। स्वरे भेदः। 'भाषायाम्—' इति वार्तिकम्—एतद् वार्तिकानुरोधाच्छान्दसमपि सूत्रद्वयमिहोपन्यस्तम्। दधिरिति। दधाति पुष्णातीति विग्रहः। प्रागुवदतो लोपः। लिट्कार्यम्। ऌस इत्यादिना कर्मणोदाहरणम्—चक्रिः, सस्रिरित्यादि। नेमिरिति—'अत एकहल्मध्ये—' (२२६०) इत्येत्त्वम् अभ्यासलोपश्च। 'सासहि—' इति इदमपि वार्तिकम्। तदर्थमाह—यङन्तेभ्य इति। प्रसङ्गादाह—पतेर्नीगभावश्च निपात्यत इति। 'नीग्वञ्चु—' (२६५२) इति विहितस्य निपातस्याभाव इत्यर्थः। सासहि इत्यादौ यङि प्राग्वत् 'दीर्घोऽकितः' (२६३८) इत्यभ्यासदीर्घः। 'यस्य हलः' इति यलोपः 'अतो लोपः' इत्यल्लोपश्च बोध्यः।

## २१५२। स्वपितृषोर्नजिङ्॥ ३।२।१७२॥

**दी—। स्वप्नक्। तृष्णक्—तृष्णजौ—तृष्णजः। 'धृषेश्चेति वाच्यम्' (वार्तिक) इति काशिकादौ। धृष्णक्।**

The affix नजिङ् or नज् comes in the said sense after स्वप् and तृष (and also after धृष—says Kashika). स्वप्नक् (habitually remains lying)—क् in the affix is to forbid गुण।

मित—। स्वपितृषोरिति। ताच्छील्यादिषु नजिङ् प्रत्ययः। इकार उच्चा-

रणार्थः। ऊकार इत् गुणनिषेधार्थः। स्वप्नक्शयालुरित्यत्रः। काशिकादाविति। अस्य भाषेऽदर्शनमरुचिवीजम्।

२१५३। शॄवन्द्योरारुः॥ ३।२।१७३॥

टी—। शरारुः। वन्दारुः।

The affix आरु: comes in those senses after शृ (to injure) वन्द् (to praise or worship).

मित—। शॄवन्द्योरिति। शॄ हिंसायाम्। वदि अभिवादनस्तुत्योः। शरारुर्घातुकः। वन्दारुरुपासकः।

२१५४। भियः क्रुक्लुकनौ॥ ३।२।१७४॥

टी—। भीरुः। भीलुकः। 'क्रुकन्नपि वाच्यः' (वार्तिक)। भीरुकः।

मित—। भिय इति। भीधातोस्ताच्छील्यादौ क्रमेण क्रु, (रु), क्लुकन् (लुकः) क्रुकन् (रुकः—वार्तिकादिदम्) इति प्रत्ययाः स्युः। कित्त्वात् सर्वत्र गुणाभावः। [ 'भीरुभीरुकभीलुका' इत्यमरः ]।

२१५५। स्थेशभासपिसकसो वरच्॥ ३।२।१७५॥

टी—। स्थावरः। ईश्वरः। भास्वरः। पेस्वरः। कस्वरः।

The affix वरच after स्था, ईश् etc comes in, in the senses of तच्छील etc. पेस्वरः—पिस् + वरच्—गुणः।

मित—। स्थेशभासेति। स्पष्टम्। ष्ठा गतिनिवृत्तौ। ईश ऐश्वर्य्ये। भासृ दीप्तौ। पिसृ पेसृ गतौ। कस गतौ।

२१५६। यश्च यङः॥ ३।२।१७६॥

टी—। यातेर्यङन्ताद्वरच् स्यात्। 'अतो लोपः' (२३०८)। तस्य 'अचः परस्मिन्—' (५०) इति स्थानिवद्भावे प्राप्ते [पदस्य

चरमावयवे द्विर्वचनादौ च कर्तव्ये परनिमित्तोऽजादेशो न स्थानिवत् इति तस्य यलोपं प्रति स्थानिवद्भावनिषेधात्—' इति तत्त्वबोधिन्यां पठ्यते ] 'न पदान्त—'इति सूत्रेण यलोपं प्रति स्थानिवद्भावनिषेधात् 'लोपो व्योः—' ( ८७१ ) इति यकारलोपः। अल्लोपस्य स्थानिवत्त्वमाश्रित्य आतो लोपे प्राप्ते—'वरे लुप्तं न स्थानिवत्'। यायावरः।

After the root या, affixed with यङ्, comes in the affix वरच् in the senses of तच्छील, तद्धर्म etc. Thus या + यङ् = यायाय by 'सन्यङोः'। Then यायाय + वरच् = यायाय् + वरच् the अ of य disappearing by 'अतो लोपः' (2308) = याया वरच् by elision of य by 'लोपोव्योः—' (873) = यायावरः (a habitual rover). Here after 'अतो लोपः' the elision of अ although was to be considered स्थानिवत् by 'अचः परस्मिन्—' (50), ceases to be so considered by the prohibition under 'न पदान्तद्विर्वचनवरेयलोपः—'(51) and thus there being no intervening letter in the middle (for अ of य disappearing य only is left) the यकार now disappears by 'लोपोव्योः—'। आ of या (second of the verbal stem अङ्ग) does not go away by 'आतो लोपः—' (2372) due to the prohibiton 'वरेलुप्तं न स्थानिवत्' or that which has been dropped (by 'अतो लोपः') is not स्थानिवत् (or like the स्थानी अकार) when वर (the affix वरच्) follows.

मित—। यश्चेति। य इति धातोः कृताकारस्य षष्ठ्यन्तरूपम्। यङ इति पञ्चम्यन्तेन तदन्तस्य यातेर्ग्रहणम्। तदाह—यातेर्यङन्तादिति। तदेवम् या इत्यस्य यङि यकारस्य 'यस्य हलः' इत्यनेन लोपाभावे 'अतो लोपः' ( २३०८ ) इति तस्य ( अल्लोपस्य ) 'अचः परस्मिन्—' (५०) इति स्थानिवद्भावमाशङ्क्य निराचष्टे

न पदान्तेति। 'न पादन्तद्विर्वचनवरेयलोप—' (५१) इत्यनेनेत्यर्थः। यलोपे कर्तव्ये अल्लोपो न स्थानिवदिति वाक्यार्थः। एवंचाल्लोपादूर्ध्वम् यायाय+वरच् इति अकारव्यवधानरहितं यकारमात्रं तिष्ठति। तस्य (यकारस्य) 'लोपो व्योः—' (८७३) इति लोपश्च सिध्यति। नन्वेवमपि अल्लोपस्य स्थानिवत्त्वमाश्रित्य 'आतो लोप इटि च' (२३७२) इत्यालोपः प्राप्नोतीत्याशङ्क्य तमपि वारयन्नाह—'वरे लुप्तं न स्थानिवत्' इति। वरे वरच् प्रत्यये लुप्तम् 'अलोपः' न स्थानिवत् अकारवदित्यर्थः। एवञ्चातो लोपस्यापि प्रतिषेधात् सिद्धं यायावरः (नियतदेशाद् देशान्तरगमनस्वभावः)। अत्रेदमवधेयम्—यायवर इति 'न पदान्त—' इति सूत्रस्य 'वरे' इत्यंशस्य 'यलोपे' इत्यंशस्य चोदाहरणमिति।

२१५७। भ्राज- भास- धुर्विद्युतोर्जि- पॄ- जु- ग्रावस्तुवः क्विप्॥ ३।२।१७७॥

दी—। विभ्राट्। भाः-भासौ। धूः—धुरौ। विद्युत्। ऊर्क्। पूः—पुरौ। दृशिग्रहणस्यापकर्षाज्जुवतेर्दीर्घः। जूः—जुवौ—जुवः। ग्रावशब्दस्य धातुना समासःसूत्रे निपात्यते। ततः क्विप्। ग्रावस्तुत्।

क्विप् in the senses of तच्छील, तद्धर्म and तत्साधुकारी comes after the roots भ्राज्, भास्, धुर्वि,द्युत्, ऊर्जि, पॄ,जु and स्तु preceded by the word ग्रावन्. Thus विभ्राट् (वि+भ्राज्+क्विप्, षत्व by 'व्रश्च—' (294) and चर्त्व by 'वावसाने' (206), भाः (भास+क्विप् by रुत्व+विसर्ग)। धूः (धुर्वि+क्विप्—elision of व by 'राल्लोपः')। Then धुर्+सु=धुर्—सुलोप by 'हल्ङ्याब्भ्यः—'=धूर्, 'दीर्घ by र्वोरुपधायाः'। पूः (पॄ+क्विप्—उत् and रपरत्व by 'उदोष्ठ्यपूर्वस्य' and उरण्—' then as before), विद्युत् (वि—द्युत् क्विप्)। The root जु is ह्रस्वान्त. Hence to explain its दीर्घत्व in क्विप् says दृशिग्रहणस्यापकर्षात् etc—i.e taking here दृशि from the next

following rule 'अन्येभ्योऽपि—'(3158)we get दीर्घ in जु here जुवौ—जुवः in con. with उवङ् by 'अचि श्नु—' (271). ग्रावशब्दस्य— i.e the term ग्रावन् has been irregularly compounded with the root स्तु in the rule. ग्रावस्तुत्—(तुक् by 'ह्रस्वस्य पिति कृति—').—One praising or worshipping a stone or mountain. Here end the senses of तच्छील etc drawn from the rule 'आक्वे:—(3115).

मित—। भ्राजभासेति। भ्राज, भास, धुर्वी [धुर्वि' इति पाठस्त्वार्षः। यद्वा इका निर्देशः], द्युत, ऊर्जि, पॄ, जु, ग्रावपूर्वः स्तु इत्यष्टाभ्यस्तच्छीलादिषु क्विप् स्यात्। 'आक्वे:—' (३११५) इत्युक्तत्वादतः तच्छीलादयो विरमन्तीति बोध्यम्। विभ्राडिति। विपूर्वाद् भ्राजतेः क्विपि 'व्रश्च—' (२९४) इति षत्वे 'वावसाने' (२०८) इति चर्त्वविकल्पः। धूरिति—धुर्वी+क्विप् इति स्थिते 'राल्लोपः' इति वस्य लोपः। हल्ङ्यादिना सुलोपः। 'वोरुपधायाः' इति दीर्घः। एवं पूरिति (पॄ+क्विप्) केवलम् 'उदोष्ठ्य—' इत्युत्वं 'उरण् —' इति रपरत्वं च विशेषः। विद्युदिति—विपूर्वाद् द्युत्। ऊर्गिति—'चोः कुः'। 'रात् सस्य' इति नियमान्न संयोगान्तलोपः। जु इति सौत्रो धातुरिति 'जुचङ्क्रम्य—' (३१२०) इत्यत्रोक्तम्। तस्य ह्रस्वत्वात् क्विपि दीर्घनिति दीर्घार्थमाह—दृशिग्रहणसामर्थ्यादिति। 'अन्येभ्योऽपि—' (३१५८) इत्युत्तरसूत्रादिति भावः। तत्र क्वचिद् दीर्घस्यापि विधानात्। जुवौ जुव इति— 'अचि श्नु —' (२७१) इत्युवङ्। ग्रावस्तुदिति। ग्रावाणं स्तौतीति विग्रहः। शैलस्तावकः पाषाणस्तावको वेत्यर्थः। 'ग्रावाणौ शैलपाषाणौ' इत्यमरः। 'ह्रस्वस्य पिति कृति—' इति तुगागमः।

## ३१५८। अन्येभ्योऽपि दृश्यते ॥ ३।२।१७८ ॥

दी—। क्विप्। छित्। भित्। दृशिग्रहणं विध्यन्तरोपसंग्रहार्थम्। क्वचिद्दीर्घः। क्वचिदसंप्रसारणम्। क्वचिद्द्वे। क्वचिद्ध्रस्वः। तथा च वार्तिकम्—'क्विब्वचिप्रच्छ्यायतस्तु कट-

प्रजुश्रीणां दीर्घोऽसंप्रसारणं च' ( वार्तिक )। क्विब्वचीत्यादिनोणादिसूत्रेण केषाञ्चित् सिद्धे तच्छीलादौ तृनाबाधा मा भूदिति वार्तिके ग्रहणम्। वक्तीति वाक्। पृच्छतीति प्राट्। आयतं स्तौति आयतस्तूः। कटं प्रवते कटप्रूः। जूरुक्तः। श्रयति हरिं श्रीः। 'द्युतिगमिजुहोतीनां द्वे च' ( वार्तिक )। हश्ग्रहणादभ्याससंज्ञा। दिद्युत्। जगत्। 'जुहोतेर्दीर्घश्च' ( वार्तिक )—जुहूः। 'दृभये'—अस्य ह्रस्वश्च। दीर्यति—दद्दत्। 'ध्यायतेः संप्रसारणं च' ( वार्तिक )—धीः।

क्विप comes in the sense of तच्छील etc. These senses are contained along with क्विप् which extends to 'भुवः संज्ञान्तरयोः' (3159), and is seen to be employed after other roots also than spoken of in the rule 'भ्राजभास—' (3157). Thus छिद ( काष्ठच्छिद ), भिद ( गोत्रभिद ) etc. The acceptance of दृशि ( दृश् ) in the rule is to include other injuctions (than dealt with in connection with क्विप i.e with क्विप and पित्त ). Thus somewhere दीर्घ somewhere want of सम्प्रसारण, elsewhere duplication and shortness of the vowel in the fourth case. Cp. the varttika—'क्विब्वचिप्रच्छि—'। क्विप् is added after वच् प्रच्छ आयत—स्तु, कटप्रु, जु, and श्रि and दीर्घ and want of सम्प्र. take effect. Although some of these roots would take क्विप by the parallel उणादि aphorism 'क्विब्वचि'—yet the acceptance of them in the varttika is to forbid the expected intervention of तृन dealt with in the तच्छीलाधिकार। वाक् (वच् + क्विप्) दीर्घ and want of सम्प्र. Similarly (प्राट् questioner, paper setter) प्रच्छ + क्विप्। आयतस्तूः—speaks highly of what is vast

or inspiring. कटप्रूः (an evil spirit). The root is प्रुङ् to go (भ्वादि). In these two cases दीर्घ only takes place. जु has been dealt with in the previous rule. Similarly श्रीः (with दीर्घ only). 'द्युतिगमि—' varttika. These roots areduplicated in क्विप्। Here also अभ्याससंज्ञा which has been spoken of later (in the 6th chap) is said to appear due to the acceptance of दृश् in 'अन्येभ्योऽपि—' i.e. this rule. Thus दिद्युत् (द्वित्व, 'द्युतिस्वाप्योः सम्प्रसारणम') जगत् (गम् + क्विप्—द्वित्व, अभ्यासकार्य्य, elision of म by 'गमः क्वौ' then तुक्)। 'जुहोतेः—'varttika. दद्रत् (fearful) द्रु + क्विप्। 'ध्यायतेः—' दीर्घ as also सम्प्र. in con. with क्विप्—धीः (ध्यै + क्विप). Though this and some of the previous injunctions are to be met with in the उणादि chapter as well yet as the उणादि rules are not spoken of directly by पाणिनि so also the varttikas are serviceable and not superfluous.

मित—। अन्येभ्य इति। 'भ्राजभास—' इति सूत्रोक्तेभ्यो धातुभ्योऽन्येभ्योऽपि धातुभ्यः तच्छीलादिषु क्विप्प्रत्ययः स्यादित्यर्थः। तच्छीलाद्यर्थस्य क्विपमभिव्याप्य वर्तमानाद् यत्र यत्र क्विप् तत्र तत्र तदर्थेष्वेव स इति बोध्यम्। अन्येभ्योऽपि इत्यनेनैव सिद्धे सूत्रे दृशिग्रहणं किमर्थमित्यत आह—विध्यन्तरोपसंग्रहार्थमिति। क्विपि परे कित्त्वपित्त्वनिमित्तमाश्रित्य ये विषयाः (कर्माणि) प्राप्नुवन्ति तेभ्योऽन्येऽपि विषयाः प्रत्ययान्तरनिमित्तफलकाः प्राप्नुवन्तीत्यर्थः। अत एवाह—क्वचिद्दीर्घ इत्यादि। क्वचिदे इति। दीर्घः सम्प्रसारणाभावश्च इत्यर्थः। यद्वा धातोर्द्वित्वमुभयथाऽपि वार्तिकस्वरसाद्व्याख्यानसम्भवात्। अत्र विनिगमकमाह—तथाच वार्तिकम्—'क्विब्वचि प्रच्छि—' इति। यद्यपि तदुणादावपि सूत्रं लभ्यते तथापि तस्य (उणादि सूत्रजातस्य) अपाणिनीयत्वेन शास्त्रान्तरत्वादिह वार्तिकोपस्थापनं सङ्गच्छत एव। तदाह—क्विब्वचीत्यादिना उणादिसूत्रेणेति। उणादिसूत्रेण तु तत्फलं न

सिध्यति। तस्य शास्त्रान्तरीयत्वादिति भूयोऽप्राचीनाम वागिति। वच्+क्विप्। प्रागुक्तवचनाद् दीर्घः। 'वचिस्वपि—' (२५१२) इति सम्प्रसारणाभावश्च। आयतस्तूरिति कटप्रूरित्यत्रभयत्र व दीर्घः। प्राडिति वाग्वत्। प्रश्नक इति तदर्थः। जुरुक इति। पूर्वसूत्र इत्यर्थः। श्रोरिति—श्रि+क्विप्। दीर्घः। 'द्युतिगमि—' (वार्तिकम्)। पञ्चम्यार्थस्यायं ग्राहकः। एभ्य क्विप् एषां द्वित्वञ्च। ननु द्वित्वं नाम षष्ठे (अष्टाध्यायाः) षष्ठेऽध्याये) समनुशास्ति तत् कृतोऽस्य तत्पूर्वस्ये तृतीये प्रवृत्तिरित्याशङ्का समाधत्ते इग्नियहणादिति। तस्य सर्वोपाधिव्यभिचारायत्वादिति भावः। दिद्युदिति। द्युत्+क्विप्। द्वित्वम् अभ्यासकार्यम्। द्युतिस्वाप्योरिति सम्प्रसारणम्। जगत्—गमः क्विप्। द्वित्वाभ्यासकार्यं 'गमः क्वौ' इति मलोपः। प्रत्ययस्य पित्त्वात्तुक्। 'जुहोतेः—' वार्तिकम्। चकारेण द्वित्वं समुच्चीयते। करणस्य कर्तृत्वविवक्षायां कर्तरि क्विबिति धीरित्यत्र हरदत्तः। दहत्—भीकरित्यर्थः। 'ध्यायतेः—' वार्तिकम्। चाद् दीर्घः धीरिति। ध्यायतीति ध्यै चिन्तायाम्+क्विप्। 'आदेचः—' इत्यात्वे सम्प्रसारणदीर्घौ।

## २१५८। भुवः संज्ञान्तरयोः ॥ ३।२।१७९ ॥

क्विप् after भू is employed when a technical name or security (अन्तर) is implied. Thus मित्रं भवतीति—मित्रभूः (particular person). प्रतिभूः a security who stands between the debtor and the creditor to creat a confidence.

मित्र—। भुव इति। भवतेः क्विप् स्यात् संज्ञायामन्तरे चार्थे गम्ये। तत्र संज्ञायां मित्रभूरिति। मित्रं भवतीति विग्रहः। अन्तरे उदाहरति—प्रतिभूरिति। अत्रापि प्रतिभवतीति विग्रहः। अत्र व्याख्यानमेव शरणम्। तेन ग्रामयोरन्तरे यस्तिष्ठतीत्यादौ नेति बोध्यम्। इग्नियहणानुवृत्त्या ताहशोऽर्थो लभ्यत इत्याहुः। नन्वेवमपि प्रतिभूशब्दस्य संज्ञैव फलितम्। तत्र संज्ञायामित्येव सिद्धे अन्तरग्रहणं व्यर्थमिति चेदत्राहुः—यावद्द्रव्यभाविनि संज्ञा। प्रतिभूशब्दस्तु तस्मिन् (अन्तरे) ऋणप्रदानेन निवर्तत इति भेदः।

३१६० । विप्रसंभ्यो ड्वसंज्ञायाम् ॥ ३।२।१८० ॥

दी—। एभ्यो भुवो डुः स्यान्नतु संज्ञायाम् । विभुर्व्यापकः । प्रभुः स्वामी । सम्भुर्जनिता । संज्ञायां तु विभूर्नाम कश्चित् ॥ 'मितद्र्वादिभ्य उपसंख्यानम्' (वार्तिक) । मितं द्रवति मितद्रुः । शतद्रुः । शम्भुः । अन्तर्भावितण्यर्थोऽत्र भवति ।

The affix डु comes in after the root भू following any of the उपसर्ग वि, प्र and सम् provided no संज्ञा is implied. सम्भु: progenitor. Note that everywhere in cases of डु the 'टि' disappears due to डित्त्व of the affix. 'मितद्र्वादिभ्यः—' Varttika. डु comes after these ( सोपपद द्रु etc, ). In शम्भु: the root has the sense of णिच् e.g. सुखम् भावयति.

मित—। विप्रेति । वि+प्र+सम्भ्यः+डु+असंज्ञायामितिच्छेदः । एभ्य इति । एभ्य उपसर्गेभ्यः परतो भुव इत्यर्थः । सम् भवति उत्पादयतीत्यर्थः—सम्भुः । तदाह—उत्पादयितेति तदर्थः । अत्र सर्वत्र डित्त्वसामर्थ्यात् अभस्यापि टेर्लोपः । तेन दीर्घस्वरलोपात् प्रत्ययस्वरश्रुतिः । मितद्र्वादिभ्य इति—वार्तिकमिदम् । एभ्यो डुः स्यात् । अत्रापासंज्ञायामित्येव । कथं 'शम्भुरीशः पशुपतिः—' इति ? यतः 'भुवः संज्ञान्तरयो'रिति संज्ञायाम् क्विपा निष्पाद्य सः । किन्त्वत्र अनेन डुप्रत्ययः । तत्र विवरणमाह—अन्तर्भावितण्यर्थः । शम् सुखं भावयति जनयतीति विग्रह इत्यर्थः ।

३१६१ । धः कर्मणि ष्ट्रन् ॥ ३।२।१८२ ॥

दी—। धेटो धाञश्च कर्मण्यर्थे ष्ट्रन् स्यात् । षोङीषर्थः । 'धात्री जनन्यामलकीवसुमत्युपमातृषु' ।

The ष्ट्रन् in a passive sense ( कर्मण्यर्थ ) is used after the root

धेट् ( पाने ) or धा ( धारणे ). The affix being षित् we have धात्री in fem. with ङीष्—One who or which is drunk or resorted to as a mother etc.

मित:—। ष: इति। अयं धेट पाने धाञ् धारणे इत्युभयोरपि गाइकसदाह—धेटो धाञश्चेति। धेट् पचे 'आदेच:—' इत्यात्वम्। सूत्रे कर्मणीति नोपपदम्। किन्तु प्रत्ययार्थविशेषणं तदाह—कर्मण्यर्थे इति। तेन धीयते पीयते इति धात्री। प्रत्ययस्य षित्वाद् षिद्गौरादिभ्यश्च इति ङीष्। तदाह—षो ङीषर्थ इति। एवञ्च षकारनिवृत्त्या टकारस्यापि निवृत्तिस्तकारशेषात् 'त्रन्' इति प्रत्यय:। नित्वं स्वरार्थम्।

२१६२। दाम्नी-शस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नह: करणे ॥ ३।२।१८२॥

टी—। दाबादे: ष्ट्रन् स्यात् करणेऽर्थे। दात्यनेन दात्रम्। नेत्रम्।

ष्ट्रन् comes in after दाप ( to cut ), नी ( to lead ) etc. in the करणवाच्य. Thus दात्रम् ( any instrument for cutting ) etc.

मित—। दाम्नीति। दाप्, नी, शस, यु, युज्, स्तु, तुद, सि, सिच्, मिह, पत्, 'दन्श दंशने' नह बन्धने—एभ्यदशभ्य: ष्ट्रन् स्यात् करणवाच्ये। दात्रमिति। दाप् लवने। नेत्रमिति—नीयतेऽनेनेति। शस: पतेश्चेटि प्राप्ते आह—

२१६३। ति-तु-त्र-त-थ-सि-सु-सर-क-सेषु च ॥ ७।२।९॥

टी—। एषां दशानां कृत्प्रत्ययानामिट्न स्यात्। शस्त्रम्। योत्रम्। योक्त्रम्। स्तोत्रम्। तोत्त्रम्। सेत्रम्। सेक्त्रम्। मेढ्रम्। पत्रम्। दंष्ट्रा। नद्ध्री।

The augment इट् is not prefixed to these कृत् affixes viz.—ति, तु त्र etc. Thus शस + ष्ट्रन् ( त्र ) = शस्त्रम् ( weapon ), यु + ष्ट्रन्

=यौवम्, युज+ष्ट्रन्=योक्त्रम् etc. in order of the roots enumerated in the preceding rule. मेढ्रम्—मिह+ष्ट्रन्—by गुण, होढः, 'झषस्तथोः—', 'ष्टुना ष्टुः' and ढोढे लोपः। नद्ध्री—नह्+ष्ट्रन्—'नहोधः' 'झषस्तथोः—' 'षिद्गौरा—' ( नह्यते वध्यतेऽनयेति )। In the rule ति is the part of क्ति ( भुक्तिः ), त of ष्ट्रन्, सि of क्सि ( उणादि ). सु of क्सु ( उणादि ) and सर of क्सरन् ( उणादि ) and the rest are themselves affixes.

मित—। तितुत्रेति। दश प्रत्ययाः प्रत्ययांशाश्च। तदाह—एषामिति। 'नेड्वशि—' (७।२।८) इत्यतो नेडित्यनुवर्तते। तदाह—इट्नेति। शस्त्रमित्यादि पूर्वसूत्रोक्तानाम् शस्, यु, युजित्यादीनां क्रमेणोदाहरणम्। मिह सेचने। लघूपधगुणः ढत्वषत्वष्टुत्वढलोपाः। जननेन्द्रिय इत्यर्थः। अमरस्तु पुंस्त्वमेवाह—'शिश्नो मेढ्रो मेहन' इति द्रष्टव्यम्। दंष्ट्रेति—शित्परत्वाभावान्नलोपो न। सूत्रे दशेति शपानिर्देशः। तेन 'दंशसञ्ज—' इति नलोपः। इह दशीत्यत्र अकार उच्चारणार्थः। तेनान्यस्मिन्नकित्यपि प्रत्यये नलोपे दशनेति भवति अत्र नलोपनिर्देशादित्यपरे। ष्ट्रन्निति प्रत्ययस्य षित्वेऽपि इह दंष्ट्रशब्दस्य अजादित्वात् टाप्। दश्यतेऽनयेति दंष्ट्रा, दन्तः। नद्ध्रीति—नहः बन्धने ष्ट्रन्। अत्र षित्वादेव ङीष्। 'नहो धः' इति धः। 'झषस्तथोः—' इति प्रत्यय तकारस्य धकारः। जश्त्वम्। नह्यते वध्यतेऽनयेति विग्रहः। चर्मरज्जुरित्यर्थः। पत्रं वाहनम्। इडभाव सूक्त एव। ति इत्यादीनां त्विडभावे उदाहरणानियथा—भूति। स्त्रियां क्तिन् इति क्तिन्। तु—सक्तुः, 'तनिगमि—' इति तुप्रत्ययः। त—हस्तः ( उणादिकः तप्रत्ययः ), नायं क्तप्रत्ययांशः। तस्मिन हि हसेः इट् भवत्येव। थ—कुष्ठम् ( उणादिकः थप्रत्ययः ), सि—कुक्षिः ( कुषेरौणादिकः क्सिः ), सु—इक्षुः ( उणादिकः क्सुः ), सर अक्षरम् ( अशेः सरप्रत्ययः ), क—शल्कः। स—वत्सः ( वदेः सः इति )।

## ३१६४। हलसूकरयोः पूवः ॥ ३।२।१८३ ॥

दी—। पूङ्पूञोः करणे ष्ट्रन् स्यात्। तच्चेत्करणं हलसूकरयोरवयवः। हलस्य सूकरस्य वा पोत्रम्, मुखमित्यर्थः।

करणे or in the instrumental sense comes ष्ट्रन् after पू ( पूङ् पूञ् ) denoting any part of a plough or boar and thus only the affix is justified. Thus पोत्रम् the face or facing part of a boar or plough.—no इट् by 'तितुत्र—' ( 2163 )

मित—। हलसूकरयोरिति। तच्चेत् करणमिति। एतेन अभिधेयोपपदार्थौ निरस्तः। पोत्रमिति—पूयतेऽनेनेति विग्रहः। सार्वधातुकेति गुणः। 'तितुत्र—' इति इण्निषेधश्च।

२१६५। अर्ति-लू-धू-सू-खन-सह-चर इत्रः ॥ ३।२।१८४ ॥

दी—। अरित्रम्। लवित्रम्। धुवित्रम्। सवित्रम्। खनित्रम्। सहित्रम्। चरित्रम्।

मित—। अर्ति लिति। एभ्यः करणे इत्रप्रत्ययः स्यात्। अरित्रम् इति। ऋ+इत्र, गुणः। धुवित्रम् इति—धु—विधूनने इति कुटादित्वम्। तस्य निरनुबन्धकत्वात्। अत एव 'गाङ् कुटादि—' इति ङित्वाद गुणनिषेधादुवङ्।

२१६६। पुवः संज्ञायाम् ॥ ३।२।१८५ ॥

दी—। पवित्रम्। येनाज्यमुत्पूयते यच्चानामिकावेष्ठनम्।

इत्र after पू in करण comes if a technical name is implied. पवित्रम् =whereby clarified butter is purified, the circle round the ring-finger.

मित्—। पुव इति। करणे इत्रिति शेषः। पवित्रमिति। पूयतेऽनेनाज्यमिति विग्रहः। यच्चानमिकेति। उपकनिष्ठिकाङ्गुलीयेन च वेष्ठ्यत इत्यर्थः।

२१६७। कर्तरि चर्षिदेवतयोः ॥ ३।२।१८६ ॥

दी—। पुव इत्रः स्यात् ऋषौ करणे देवतायां कर्तरि।

ऋषिर्वेदमन्त्रः। तदुक्तमृषिणेति दर्शनात्। पूयतेऽनेनेति पवित्रम्। देवतायां तु 'अग्निः पवित्रं स मा पुनातु'।

इत्र् comes in after पू in the करणवाच्य provided a seer is signified, but in the कर्तृवाच्य when a diety is denoted. Here seer or ऋषि means वेदमन्त्र, cp— तदुक्तमृषिणा etc. Thus पवित्र ( मन्त्रः ) also पवित्र ( अग्निः )—कर्तरि in the sense of a देवता।

सित—। कर्तरि चेति। चकारेण करणमनुवर्तते। यथासंख्यञ्चार्थो भवतीत्याह—ऋषौ करणे देवतायां कर्तरीति। अत्र ऋषिशब्दस्यार्थमाह—वेदमन्त्र इति। तत्र प्रमाणम्—तदुक्तमिति। तेन पवित्रः मन्त्र इति करणे, पवित्रः अग्निरिति कर्तरिति विवेकः॥ इति मितभाषिण्यां पूर्वकृदन्तप्रकरणम्॥

Addendum

(a) P. 52, line 12 "इह लोटा बाधा मा भूत" etc.—

[ N. B.—Here we give another easy interpretation of the passage from the Sutrakara's point of view only ]—

In the rule "प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च"—लोट् will not bar कृत्य affixes having these senses, so even without the mention of "कृत्याः" here we will have कृत्य affixes also by "वासरूपोऽस्त्रियाम्" for there are dissimilar affixes ( cp. "वासरूपविधिना अत्र लोटा कृत्यप्रत्ययस्य बाधा न भविष्यति" ); still from the use of "कृत्याः" here by Sutrakara we infer that in 3rd chap. acc. to Sutrakara वासरूपविधि already ceased to operate here beyond स्त्र्यधिकार and so to have कृत्य affixes also in these senses he had to mention कृत्याः again. Thus Bhattoji from the mention of "कृत्याः" here by the Sutrakara draws this inference and says "स्त्र्यधिकारादूर्ध्वं वासरूपविधिः क्वचित् न इति ज्ञापयति"।

N. B.—In this expl. however, "क्वचित्' in Dikshita Vritti loses significance. So we have explained all these after भाष्य's and other inferences.

[ This explanation will also hold good with respect to "लिङा बाधा मा भूदिति क्त्वोक्तिः" P. 54 under "शकिलिङ च" ]

(b) P, 117, line 1-5, for "when an उत्तरपद ( subsequent member ), other than an indeclinable, affixed with a खeliding affix..." etc. read "when an उत्तरपद ( subsequent member ) affixed with a खeliding affix ( as खश्, खच् etc. ) follows, the augment मुम् ( म् ) is added to the contiguous words ( उपपदs ) such as अरुस्, द्विषत् and one having an अच् (vowel) at the end but other than an indeclinable."

[N. B.—In the rule अनव्ययस्य got by अनुवृत्ति from "खित्यनव्ययस्य" the preceding rule, goes with अजन्तस्य mainly. Note that-Thus a स्वरान्त अव्यय उपपद will not have either मुम् or ह्रस्व for दीर्घ when a खित् affix follows. See the rules "खित्यनव्ययस्य" and "अरुर्द्विषदजन्तस्य मुम्" ] ।

## ॥ अथ उणादयः ॥

### प्रथमः पादः ।

१। कृवापाजिमिस्वदिसाध्यशूभ्य उण् ॥ १।१ ॥

दीक्षितः—। करोतीति कारुः—शिल्पी कारकश्च। 'आतो युक् चिण्कृतोः' ( २७६१ )। वातीति वायुः। पायुर्गुदम्। जयत्यभिवति रोगान् जायुः औषधम्। मिनोति प्रक्षिपति देहे उष्माणमिति मायुः पित्तम्। स्वादुः। साध्नोति परकार्य्यम् इति साधुः। अश्नुते आशु शीघ्रम्। आशुर्व्रीहिः पाटलः स्यात्।

Introductory remark—उणादि rules i.e. rules beginning with 'कृवापाजि—उण्' and ending in 'मङ्गेरलच्' (उण्+आदि—उण् and other affixes) are not to be met with fully in the अष्टाध्यायी of पाणिनि as they were not enunciated by him. This is evident from भाष्य, वार्तिक and कैयट under the rule 'उणादयो बहुलम्' ( see उत्तरकृदन्त ) where the line runs thus—"नाम च धातुजमाह निरुक्ते···व्याकरणे शकटस्य च तोकम्" i.e. the son of Shakata (=शाकटायन) has in his grammar or निरुक्त (a Vaidika Vyakarana explaining the significance of words issuing from roots in the form of derivation in various ways)—derivation of words or nominal bases ( धातुजं नाम ); under the rule 'उणादयोबहुलम्' Kaiyata states 'उणादीनां शास्त्रान्तरपठितानां साधुत्वाभ्यनुज्ञानार्थं बहुलग्रहणम्' i.e. पाणिनि accepts the term बहुल to indicate grammatical rightness of the

bases formed with उण् etc. which have been read or enunciated in a different treatise ( other than that of पाणिनि's अष्टाध्यायी ). Thus it is safe to conclude that the उणादि rules came from the sage Shakatayana etc and not from Panini and that although they did not have their descent from him (Panini) yet they were admitted by him as grammatical. Panini himself, however, seems sometimes to hold that words derived with उण् etc. as अव्युत्पन्न प्रातिपदिकs or crude terms admitting no dissolution as the senses of the parts ( अवयव ) are not always similar with those of the whole (समुदाय) whence it follows that they are conventional words (रूढशब्द) and not derivatives ( यौगिक शब्द ) like पाचक etc. cp शब्दशक्तिप्रकाशिका = 'औणादिकप्रत्ययस्य शक्तिविरहेण यौगिकत्वायोगात्' ( p—73 ). It must also be noted in this connection that these rules (उणादि) are by no means posterior to Panini but on the other hand prior to him as the latter mentions the name of the author in rules like 'त्रिप्रभृतिषु शाकटायनस्य' ( 56 सि कौ ) 'व्योर्लघुप्रयत्नतरः शाकटायनस्य' ( 108 सि. कौ ) etc. उण्— here the indicatory (ण्) is to effect वृद्धि of the penultimate or finalvowel as the case, in confirmity with 'अत उपधायाः' ( 2282 ) or 'अचो ञ्णिति' ( 254 ) laid down by Panini and to effect युक् in the cases of वा, पाetc. by 'आतो युक् चिण्कृतोः' ( 2761 ). It must also, in this connection, besaid that उणादि affixes are कृत् affixes and as such are enjoined genrally in the active voice ( कर्तरि ) in accordance with the rule 'कर्तरि कृत्' ( 2832 ).

N. B.—We however refrain from explaning all these in details being easy. Advanced students should do well to consult the

प्रौढमनोरमा' of Bhattoji which verbally or in sense has been copiously reproduced in बालमनोरमा or तत्त्वबोधिनी।

मित—। अथोणादय आरभ्यन्ते। उणादिप्रत्ययविधायकानि सूत्राणि तावन्न पाणिनिना प्रणीतानि, एतच्च 'उणादयो बहुलम्' ( ३१६८ ) इति सूत्रभाष्ये 'नाम च धातुजमाह निरुक्ते···व्याकरणे शकटस्य च तोकम्' इति व्याख्यानावसरे निर्णीतम्।

कृवापाजीति—स्पष्टं मूले।

**२। छन्दसीणः॥ १।२॥**

**टी—। 'मा न आयौ'।**

मित—। छन्दसीति। छन्दसि इधातोः उणप्रत्ययः स्यादित्यर्थः। 'त्वामग्ने प्रथमायुमायवे' इति ऋग्वेदे प्रयोगः। तत्रायुं मनुष्यमिति सायनः। एति गच्छतीत्यायुः। लोके तु 'एते णिंच्च' इति वक्ष्यमाणउप्रत्यये सकारान्त आयुःशब्दः लभ्यते। 'आयूंषि क्षपयन्त्याशु' इति।

**३। दृसनिजनिचरिचटिभ्यो ञुण्॥ १।३॥**

**टी—। दीर्यत इति दारु। 'स्नुः प्रस्थः सानुरस्त्रियाम्'। जानु-जानुनी। इह 'जनिवध्योश्च' ( २५१२ ) इति न निषेधः! अनुबन्धद्वयसामर्थ्यात्। चारु रम्यम्। चाटु प्रियं वाक्यम्। मृगय्वादित्वात् कुप्रत्यये 'चटु' इत्यपि।**

इति न निषेधः i.e. the prohibition of उपधावृद्धि of जन does not apply here by 'जनिवध्योश्च' as here there are two indicatories 'ञ' and 'ण्' in the affix 'ञुण्'।

मित—। इति न निषेध इति। उपधावृद्धिनिषेधो न प्रवर्तते किन्तु उपधाया वृद्धिरेव भवति। कुत इत्यत आह—अनुबन्धद्वयेति। 'ञ' इत्यनेनैव सिद्धेर्णकारानुबन्धस्य अधिकविधानार्थत्वादिति भावः।

४ । किञ्जरयोः श्रीणः ॥ ११४ ॥

टी—। किं शृणातीति किंशारुः । सस्यशूकं वाणश्च । जरामेति जरायुर्गर्भाशयः । 'गर्भाशये जरायुः स्यात्' ।

The affix ञुण् comes in after the roots शॄ and इण् following the उपपद किम् and जरा in order.

मित—। किञ्जरयोरिति । श्री+इणः इति छेदः । समाहारद्वन्द्वपञ्चम्येक-वचनम् । यथासंख्यमन्वयः । किम्पूर्वात् शृणातेर्जरापूर्वादिनश्च ञुण् प्रत्ययः स्यादित्यर्थः । सस्यशूकं वाणश्चेति किंशारुशब्दस्यार्थनिर्देशः ।

५ । तॄ रश्च लः ॥ ११५ ॥

टी—। तरन्त्यनेन वर्णा इति तालु: ।

The affix ञुण् is added to the root तॄ ( तरणे ) and the रेफ of the root after वृद्धि comes, is replaced by ल. तॄ+ञुण् ( उ ) = तार्+उ = तालु ।

मित—। त इति । तरतेः षष्ठ्या निर्देशः त इति । तरतेर्ञुण् प्रत्ययः स्यादवृद्धेः परस्य रेफस्य च लकारादेशः । केचित्तु लोरिति छित्त्वा लधातोरपि प्रत्ययं पठन्ति अर्यते वा आलुः । शाकविशेषो घटी चेत्याहुः । 'कर्कर्यालुर्गलन्तिका' इत्यमरः ।

६ । कृके वचः कश्च ॥ ११६ ॥

टी । कृकेन गलेन वक्तीति कृकवाकुः । 'कृकवाकुर्मयूरे च सरटे चरणायुधे' इति विश्वः ॥

मित—। कृके इति । कृकशब्दे उपपदे वच्धातोर्ञुण्प्रत्ययः स्यात् कश्चान्तादेशः । यद्यपि 'चजोः कुः—' इत्यस्ति तथापि घित्यति तद्विधानादत्र कुत्वाप्राप्तेर्वचनम् ।

७। भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः ॥ १।७ ॥

टी—। भरति बिभर्ति वा भरुः—स्वामी हरश्च। म्रियन्तेऽस्मिन् भूतानि मरुर्निर्जलदेशः। शेते शयुः अजगरः। तरुर्वृक्षः। चरन्ति भक्षयन्ति देवता इममिति चरुः। त्सरुः खड्गादिमुष्टिः। तनुः स्वल्पम्। तन्यते कर्मपाशोऽनया इति तनुः शरीरञ्च। 'स्त्रियां मूर्तिस्तनुस्तनूः'। धनुः शस्त्रविशेषः। धनुषा च धनुर्विदुः,। 'धनुरिवाजनि वक्रः' इति श्रीहर्षः। मयुः किन्नरः। 'मद्गुः पानीयकाकिका' इति रभसः। न्यङ्क्वादित्वात् कुत्वम्। जश्त्वेन सस्य दः।

८। अणश्च ॥ १।८ ॥

टी—। 'लवलेशकणाणवः'। चात् कटिवटिभ्याम्। कटति रसनां कटुः। वटति वदतीति वटुः।

मित—। अणः कटिवटिभ्याञ्च ( व्यख्यानादिदम् ) उप्रत्ययः स्यात्।

९। धान्ये नित् ॥ १।९ ॥

टी—। धान्ये वाच्येऽण उप्रत्ययः स्यात्। स च नित्। नित्त्वादाद्युदात्तः। 'प्रियङ्गवश्च मे अणवश्च मे'। व्रीहिभेदस्त्वणुः पुमान्। निद्ग्रहणं 'फलिपाटि—' इत्यादि सूत्रमभिव्याप्य सम्बध्यते।

मित—। स च निदिति। यद्यपि धान्यार्थे अणुरित्येव पदं तथापि तस्य णित्त्वं न किन्तु नित्त्वमेव। नित्करणमाद्युदात्तार्थमित्याह—नित्वादिति। 'फलिपाटि—' इति अष्टादशं सूत्रम् ( १।१८ )। अन्यत् स्पष्टम्।

१० । शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च ॥१।१०॥

दी—। शृणातीति शरुः । 'शरुरायुधकोपयोः' । स्वरुर्वज्रम् । स्नेहुर्व्याधिः । चन्द्र इत्यन्ये । त्रपु सीसम् । 'पुंसि भूम्न्यसवः प्राणाः' । 'वसुर्दैवेऽग्नौ योक्त्रे रश्मौ वसु तोये धनेमणौ' । हनुर्वक्त्रैकदेशः । क्लेदुश्चन्द्रः । बन्धुः । मनुः । चात् बिदि अवयवे-बिन्दुः ।

मित—। एभ्य उप्रत्ययः स्यादिति शेषः । बिन्दुरिति । बिन्दुरिति 'बिन्द रिच्छुः' (३१४९) इति सूत्रे व्याख्यातम् ।

११ । स्यन्देः संप्रसारणं धश्च ॥ १।११ ॥

दी—। 'देशे नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम्' इत्यमरः ।

मित—। स्यन्देरिति । स्यन्दू प्रस्रवणे इत्यस्मादुप्रत्ययः । संप्रसारणं धश्चान्तादेशः ।

१२ । उन्देरिच्चादेः ॥ १।१२ ॥

दी—। उनत्ति इन्दुः ।

मित—। उन्देरु प्रत्ययः आद्यस्योकारस्येदादेशश्च । उन्दी क्लेदने ।

१३ । ईषेः किच्च ॥ १।१३ ॥

दी—। ईषेरुः स्यात् स च किदादेरिकारादेशश्च । इषति हिनस्ति इषुः शरः । 'इषुर्द्वयोः' ।

मित—। ईषेरिति । ईष गतिहिंसादानेषु । स च किदिति—उप्रत्ययस्य कित्त्वम् । तेन गुणाभावः । आदेरिति । ईकारस्य इकारादेशः ।

१४ । स्कन्देः सलोपश्च ॥ १।१४ ॥

दी—। कन्दुः । (चादुप्रत्ययः) ।

१५। स्रजेरसुम् च ॥ १।१५ ॥

दी—। चात् सलोप उप्रत्ययश्च। रज्जुः।

मित—। सृजेरिति। सृज विसर्गे। सृजतीति रज्जुः स्त्रियाम्। 'रज्जुर्वेण्यां गुणे योषित्' इति मेदिनी। आगमसकारस्य श्चुत्वेन शः। जश्त्वेन जः।

१६। कृतेराद्यन्तविपर्ययश्च ॥ १।१६ ॥

दी—। ककारतकारयोर्विनिमयः। तर्कुः सूत्रवेष्टनम्।

१७। नावञ्चेः ॥ १।१७ ॥

दी—। न्यङ्क्वादित्वात् कुत्वम्। नियतमञ्चति न्यङ्कुर्मृगः।

मित—। अञ्चु गतौ। न्युपपदादञ्चेरुप्रत्ययः।

१८। फलिपाटिनमिमनिजनां गुक्पटिनाकिधतश्च॥१।१८॥

दी—। फलेर्गुक् फल्गुः। पाटेः पटिः। पाटयतीति पटुः। नम्यतेऽनेन नाकुर्वल्मीकम्। मन्यत इति मधु। जायते इति जतु।

१९। वलेर्गुक्च ॥ १।१९ ॥

दी—। वलसंवरणे। वल्गुः।

२०। शः कित् सन्वच्च ॥ १।२० ॥

दी—। श्यतेरुः स्यात्। स च कित् सन्वच्च। शिशुर्बालः।

मित—। श इति। शो तनूकरणे। तस्माद् प्रत्ययः। 'आदेचः…' (२३७१) इत्यात्त्वे द्वित्वम्। 'सन्यतः' इत्यभ्यासस्य इत्त्वम्।

२१। यो द्वे च ॥ १।२१ ॥

दी—। ययुरश्वोऽश्वमेधीयः। सन्वदिति प्रकृते द्वे ग्रहणमित्त्वनिवृत्त्यर्थम्।

मित—। या प्रापणे इत्यस्मादुः। तस्य द्वित्वं च। अभ्यासकार्यम्।

२२। कुर्भ्रश्च ॥ १।२२ ॥

दी—। बभ्रुः। 'बभ्रुर्मुन्यन्तरे विष्णौ बभ्रू नकुलपिङ्गलौ' चादन्यतोऽपि। चक्रुः कर्ता। जघ्नुर्हन्ता। पपुः पालकः।

मित—। कुरिति। भृञ् भरणे। तस्मात् कुप्रत्ययः। चाद्‌द्वित्वं च। भरतीति बभ्रुः। अन्यत् स्पष्टम्।

२३। पॄभिदिव्यधि-गृधि-धृषिभ्यः ॥ १।२३ ॥

दी—। कुः स्यात्। पुरुः। भिनत्ति भिदुर्वज्रम्। 'ग्रहि-ज्या—' (२४१२) इति सम्प्रसारणम्। विरहिणं विध्यति विधुः। 'विधुः शशाङ्के कर्पूरे हृषीकेशे च राक्षसे'। गृधुःकामः। धृषुर्दक्षः।

२४। कृग्रोरुच्च ॥ १।२४ ॥

दी—। करोतीति कुरुः। गृणातीति गुरुः।

मित—। डुकृञ् करणे, गॄ शब्दे। आभ्यां कुः, धात्वोरादेरुच्च।

२५। अपदुःसुषु स्थः ॥ १।२५ ॥

दी—। 'सुषामादिषु च' (१०२२) इति षत्वम्। अपष्ठु। प्रतिकूलम्। दुष्ठु। सुष्ठु। (कुप्रत्ययः इति शेषः)।

२६। रपेरिच्चोपधायाः ॥ १।२६ ॥

दी—। अनिष्टं रपतीति रिपुः। (चात् कुप्रत्ययः)।

२७। अर्जिदृशिकम्यमिपशिबाधामृजिपशि ['पसि' इति तत्त्वबोधिनी] तुगधुग्दीर्घहकाराश्च ॥ १।२७ ॥

दी—। अर्जयति गुणानृजुः। सर्वानविशेषेण पश्यतीति पशुः। कन्तुः कन्दर्पः। अन्धुः कूपः। 'पांसुर्ना न द्वयो रजः'।

'तालव्या अपि दन्त्याश्च सम्बसूकरपांसवः'। बाधत इति बाहुः। बाहुः स्त्रीपुंसयोर्भुजः।

२८। प्रथिम्रदिभ्रस्जां संप्रसारणं भ्रस्जेः सलोपश्च ॥१।२८॥

टी—। त्रयाणां कुः सम्प्रसारणं भ्रस्जेः सलोपश्च। पृथुः। मृदुः। न्यङ्क्वादित्वात् कुत्वम्। भृज्जति तपसा भृगुः।

२९। लङ्घिबंह्योर्नलोपश्च ॥ १।२९ ॥

टी—। लघुः। 'बालमूललघ्वलमङ्गुलीनां वालो रत्वमापद्यते' (वार्तिक)। रघुर्नृपभेदः। बहुः।

मित—। चात् कुप्रत्ययः। रघुर्नृप भेद इति। एतेन 'अवेक्ष्य धातोर्गमनार्थमर्थविच्चकार नाम्ना रघुमात्मसम्भवम्' इति कालिदासवचनं (रघु—३य सर्ग) व्याख्यातम्।

३०। ऊर्णोतेर्नुलोपश्च ॥ १।३० ॥

टी—। ऊरु सक्थि। (चात् कुप्रत्ययः)

३१। महति ह्रस्वश्च ॥ १।३१ ॥

टी—। उरु महत्।

मित—। महतीति। महति अर्थे मति ऊर्णोतेर्नुलोपः ऊकारस्य उकार कुप्रत्यये परतः।

३२। श्लिषेः कच्च ॥ १।३२ ॥

टी—। श्लिष्यतीति श्लिकुर्भृत्यः उद्यतो ज्योतिश्च।

मित—। श्लिषतीति। स हि यावत् कर्म श्लिष्यति लगति व्याप्रियत इति यावत्।

३३। आङ्परयोः खनिशृभ्यां डिच्च ॥ १।३३ ॥

दी—। आखनतीति आखुः। परं शृणातीति परशुः। पृषोदरादित्वादकारलोपात् पर्शुरपि।

मित—। कुप्रत्ययः। स च डित्। 'पर्शुः परशुना सह' इति विश्वः।

२४। हरिमितयोर्द्रुवः ॥ १।२४ ॥

दी—। 'द्रु गतौ'। अस्मात् हरिमितयोरुपपदयोः कुः स च डित्। हरिभिर्द्रूयते हरिद्रुर्वृक्षः। मितं द्रवति मितद्रुः समुद्रः।

मित—। स च डिदिति। अनुवृत्तिलभ्यमिदम्। मितद्रुशब्दस्तु वार्तिकमते डुप्रत्ययसिद्धमिति 'मितद्र्वादीनामुपसंख्यानम्' इति 'विप्रसंभ्यः—' (३१६०) इत्यत्रोक्तम्।

२५। शते च ॥ १।२५ ॥

दी—। शतधा द्रवति शतद्रुः। बाहुलकात् केवलादपि। द्रवत्यूर्ध्वमिति द्रुर्वृक्षः शाखा च। तद्वान् द्रुमः।

मित—। शत इति। शत शब्दे उपपदे द्रवतेः कुः स च डित्। तद्वानिति। शाखावानित्यर्थः।

२६। खरु-शङ्कु-पीयु-नीलङ्गु-लिगु ॥ १।२६ ॥

दी—। पञ्चैते कुप्रत्ययान्ता निपात्यन्ते। खनते रेफश्चान्तादेशः। खरुः कामः क्रूरो मूर्खोऽश्वश्च। 'शङ्कुर्ना कीलशल्ययोः'। पिबतेरीत्वं युगागमश्च। पीयुर्वायसः कालः सुवर्णञ्च। निपूर्वाल्लगि गतावस्मात् कुर्नलोपो न दीर्घश्च। नीलङ्गुः कृमिविशेषः शृगालश्च। 'नीलाङ्गुः' इति पाठान्तरं। तत्र धातोरपि दीर्घः। 'लग सङ्गे' अस्य अत इत्त्वञ्च। लगतीति लिगु चित्तम्। लिगुर्मूर्खः।

३७। मृगय्वादयश्च ॥ १।३७॥

टी—। एते कुप्रत्ययान्ता निपात्यन्ते। मृगं यातीति मृगयु-र्व्याधः। देवयुर्धार्मिकः। मित्रयुर्लोकयात्राभिज्ञः। आकृति-गणोऽयम्।

३८। मन्दिवाशिमथिचतिचङ्क्यङ्किभ्य उरच् १।३८॥

टी—। मन्दुरा वाजिशाला। वाशुरा रात्रिः। मथुरा। चतुरः। चङ्कुरो रथः। अङ्कुरः। खर्जूरादित्वादङ्कूरोऽपि।

३९। व्यथेः सम्प्रसारणं किच्च ॥ १।३९॥

टी—। विथुरश्चोररक्षसोः।

मित—। व्यथेरिति। अस्मादुरच्प्रत्ययः। स च कित्। धातोः सम्प्रसारणं च।

४०। मुकुर-दर्दुरौ ॥ १।४०॥

टी—। मुकुरो दर्पणः। बाहुलकान्मकुरोऽपि। 'दृ विदारणे धातोर्द्विवचनमभ्यासस्य रुक्टिलोपश्च। 'दर्दुरस्तोयदे भेके वाद्यभाण्डादिभेदयोः'। 'दर्दुरा चण्डिकायां स्याद् ग्रामजाले च दर्दुरम्' इति विश्वः।

मित—। मुकुरेति। उरच प्रत्ययान्तौ निपात्येते। मकि धातुः—अस्मादुरच्। बाहुलकादिति। पक्षे अकारादिरित्यर्थः।

४१। मद्गुरादयश्च ॥ १।४१॥

टी—। उरजन्ता निपात्यन्ते। माद्यतेर्गुक्। मद्गुरो मत्स्यभेदः। 'कबृ वर्णे'। रुगागमः। 'कर्बुरं श्वेतरक्षसोः'। बध्नातेः खर्जूरादित्वादूरोऽपि। 'बभ्रूरबभ्रुरौ स्यातां नम्रसुन्द-

रयोस्त्रिषु' इति रन्तिदेवः। 'कोकतेर्वा कुक् (च)—' ( गणसूत्र )। कुक्कुरः—कुकुरः।

४२। असेरुरन् ॥ १।४२ ॥

दी—। असुरः। प्रज्ञाद्यण्। आसुरः।

४३। मसेश्च ॥ १।४३ ॥

दी—। पञ्चमे पादे 'मसेरूरन्' इति वक्ष्यते। मसूरा मसुरा व्रीहिभेदे पण्ययोषिति'। 'मसूरा मसुरा वा ना वेश्याव्रीहिप्रभेदयोः'। 'मसूरी पापरोगे स्यादुपधाने पुनः पुमान्'। मसूरमसुरौ च द्वौ' इति विश्वः। ( मित। सुगमा )।

४४। शावशेराप्तौ ॥ १।४४ ॥

दी—। शु इत्याशुअर्थे। श्वशुरः। 'पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः' इत्यमरः।

मित—। शु इत्यव्ययपूर्वादशेः प्राप्त्यर्थकादुरप्रत्ययः।

४५। अविमह्योष्टिषच् ॥ १।४५ ॥

दी—। अविषः। महिषः।

मित—। अविषो राजा समुद्रश्च। महिषो महान्। महिषी राजपत्नी।

४६। अमेर्दीर्घश्च ॥ १।४६ ॥

दी—। 'आमिषं त्वस्त्रियां मांसे तथा स्याद् भोग्यवस्तुनि'॥ ( चात् टिषच्प्रत्ययः )।

४७। रुहेर्वृद्धिश्च ॥ १।४७ ॥

दी—। 'रङ्कुशम्बररौहिषाः'। 'रौहिषो मृगभेदे स्याद्रौहिषश्च तृणं मतम्' इति संसारावर्तः॥ ( चाट्टिषच् )।

४८। तवेर्णिद्वा ॥ १।४८ ॥

दी—। 'तव' इति सौत्रो धातुः। 'तविषताविषावब्धौ स्वर्गे च'। स्त्रियां तविषी—ताविषी=नदी देवकन्या भूमिश्च। 'तविषी बलम्' इति वेदभाष्यम्।

मित—। तविषी बलमिति। 'तविषीं दधानः' इत्यादौ यथा। 'ओजः पाजः—' इति बलनामसु तविषीशब्दस्य पाठात्।

४९। नञि व्यथेः ॥ १।४९ ॥

दी—। 'अव्यथिषोऽब्धिसूर्ययोः'। अव्यथिषी धरारात्र्योः।

५०। किल्बेर्बुक् च ॥ १।५० ॥

दी—। किल्बिषम् ॥ (चाट्टिषच्। किल्विषं पापम्)।

५१। इषिमदिमुदिखिदिच्छिदिभिदिमन्दिचन्दितिमिमिहि-मुहिमुचिरुचिरुधिबन्धिशुषिभ्यः किरच् ॥ १।५१ ॥

दी—। इषिरोऽग्निः। मदिरा सुरा। 'मुदिरः कामुकाभ्रयोः' इति विश्वमेदिन्यौ। खिदिरश्चन्द्रः। 'छिदिरोऽसि-कुठारयोः'। भिदिरं वज्रम्। मन्दिरं गृहम्। स्त्रियामपि। 'मन्दिरं मन्दिरापि स्यात्' इति विश्वः। 'चन्दिरौ चन्द्रहस्तिनौ'। तिमिरं तमोऽक्षिरोगश्च। मिहिरः सूर्यः। 'मुहिरः काम्यसभ्ययोः' मुचिरो दाता। रुचिरम्। रुधिरम्। बधिरः। 'शुष शोषणे'। शुषिरं छिद्रम्। शुष्कमित्यन्ये।

मित—। प्रत्ययस्य कित्वात् सर्वत्र गुणाभावः।

५२। अशेर्णित् ॥ १।५२ ॥

दी—। आशिरो वह्निरक्षसोः।

मित—। अशेरिति। अश भोजने। अस्मात् किरच् स च णित्। णित्वात् 'अत उपधायाः' इति वृद्धिः।

५३। अजिरशिशिरशिथिलस्थिरस्फिरस्थविरखदिराः॥ १।५३॥

टी—। अजेर्वीभावाभावः। अजिरमङ्गणम्। शशेरुपधाया इत्वम्। शिशिरं स्याद्दतोर्भेदे तुषारे शीतलेऽन्यवत्'। 'श्रथ-मोचने'। उपधाया इत्व' रेफलोपः। प्रत्ययरेफस्य लत्वम्। शिथिलम्। स्थास्फाय्योष्टिलोपः। स्थिरं निश्चलम्। स्फिरं प्रभूतम्। तिष्ठतेर्वुक् ह्रस्वत्वञ्च। स्थविरः। खदिरः। बाहुल-काच्छीङो वुक् ह्रस्वत्वञ्च—शिविरम्।

मित—। अजिरेति। एते किरजन्ता निपात्यन्ते। शिविरमिति। शेरतेऽस्मिन् राजानः ( सैनकाश्च ) इति विग्रहः। अधिकरणे किरच्। 'निवेशः शिविरं षण्ढम्' इत्यमरः।

५४। सलिकल्यनिमहिभडिभण्डिशण्डिपिण्डितुण्डिकुकि-भूभ्य इलच्॥ २।५४॥

टी—। सलति गच्छति निम्नमिति सलिलम्। कलिलः (?)। अनिलः। महिला। पृषोदरादित्वान्महेलापि। भड इति सौत्रो धातुः। 'भडिलौ शूरसेवकौ'। भण्डिलो दूतः कल्याणश्च। शण्डिलो मुनिः। पिण्डिलो गणकः। तुण्डिलो मुखरः। कोकिलः। भविलो भव्यः। बाहुलकात् कुटिलः।

मित—। कलिल इति। अमरे तु 'कलिलं गहनं समम्' इत्यपि। महिलेति। 'महिला फलिनीस्त्रियो'रिति मेदिनी।

५५। कपेः पश्च ॥ १।५५ ॥

दी—। कपिलः। (चादिलच्)।

५६। गुपादिभ्यः कित् ॥ १।५६ ॥

दी—। गुपिलो राजा। तिजिलो निशाकरः। गुहिलं वनम् ॥ (प्रत्ययस्य कित्त्वान्न गुणः)।

५७। मिथिलादयश्च ॥ १।५७ ॥

दी—। मथ्नन्तेऽत्र रिपवो मिथिला नगरी। पथिलः—पथिकः। (एते इलजन्ता निपात्यन्ते)।

५८। पतिकठिकुठिगडिगुडिदंशिभ्य एरक् ॥ १।५८ ॥

दी—। पतेरः पक्षी गन्ता च। कठेरः कृच्छ्रजीवी। कुठेरःपर्णाशः। बाहुलकान्नुम्। गडेरो मेघः। गुडेरो गुडकः। दंशेरो हिंस्रः।

मित—। कुठि चेतस—इदित्वान्नुमि प्राप्ते आह—बाहुलकादिति। अन्ये तु धातवोऽत्र इका निर्दिष्टाः।

५९। कुम्बेर्नलोपश्च ॥ १।५९ ॥

दी—। कुबेरः। (चादेरक्प्रत्ययः)।

६०। शदेस्त च ॥ १।६० ॥

दी—। शतेरः शत्रुः।

मित—। शद्लृ शातने। अस्मादेरच्। अस्य दकारस्य तकारश्च।

६१। मूलेरादयः ॥ १।६१ ॥

दी—। एरगन्ता निपात्यन्ते। मूलेरो जटा। गुधेरो गोप्ता। गुहेरो लोहघातकः। मुहेरो मूर्खः।

६२। कवेरोतच् पश्च ॥ १।६२ ॥

टी—। कपोतः पक्षी।

मित—। कवेरोत इति। गुपादिसूत्रादारभ्य एतदन्तानि सप्त सूत्राणि केषाञ्चिद्-सम्मतानि। 'कपोतः पक्षिमात्रेऽपि' इति त्रिकाण्डशेषः।

६३। भातेर्डवतुः ॥ १।६३ ॥

टी—। भातीति भवान्। ( भवदिति प्रातिपदिकम्। भवती स्त्रियाम् )

६४। कठिचकिभ्यामोरन् ॥ १।६४ ॥

टी—। कठोरः। चकोरः।

६५। किशोरादयश्च ॥ १।६५ ॥

टी—। किंपूर्वस्य शृणातेष्टिलोपः। किमोऽन्त्यलोपः। किशोरोऽश्वशावः। सहोरः साधुः।

मित—। किशोरोऽश्वशाव इति। 'किशोरोऽश्वस्य शावके। तैलपर्ण्यौषधी च स्यात्तरुणावस्थसूर्ययोः' इति मेदिनी।

६६। कपिगडिगण्डिकटिपटिभ्य ओलच् ॥ १।६६ ॥

टी—। कपीति निर्देशान्नलोपः। कपोलः। गडोलगण्डोलौ गुडकपर्यायौ। कटोलः कटुः। पटोलः।

मित—। पटोल इति। ओषधिवाचकोऽयम् पुंस्येव। 'पटोलं वस्त्रभेदे वनौषधी ज्योत्स्नायान्तु योषिति' इति मेदिनी।

६७। मीनातेरूरन् ॥ १।६७॥

टी—। मयूरः।

६८। स्यन्देः सम्प्रसारणञ्च ॥ १।६८ ॥

टी—। सिन्दूरम्।

मित—। चादूरन्। 'सिन्दूरस्तरुभेदे स्यात् सिन्दूरं रक्तचूर्णके' इति मेदिनी।

६९। सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन् ॥ १।६९ ॥

टी—। सिनोतीति सेतुः। 'तितुत्र—' (३१६३) इति नेट्। तन्तुः। गन्तुः। मस्तु दधिमण्डम्। सच्यत इति सक्तुः। अर्धर्चादिः। 'ज्वरत्वर—' (२६५४) इत्यूठ्। तत्र क्ङितीत्यनुवर्त्तते इति मते तु बाहुलकात्। ओतुर्विडालः। धातुः। क्रोष्टा।

मित—। सिनोतीति। षिञ् बन्धने। अवेस्तुनि ओतुरिति कथमित्याह—'ज्वरत्वर—' (२६५४) इत्यनेन। एतत् तत्रैव सूत्रे सूचितम्।

७०। पः किच्च ॥ १।७० ॥

टी—। पिबतीति 'पितुर्वह्नौ दिवाकरे'।

मित—। पिबतेस्तुन् स च कित्।

७१। कमिमनिजनिगाभायाहिभ्यश्च ॥ १।७१ ॥

टी—। एभ्यस्तुः स्यात्। 'कन्तु कन्दर्पचित्तयोः'। मन्तुरपराधः। जन्तुः प्राणी। 'गातुः पुंस्कोकिले भृङ्गे—गन्धर्वे गायनेऽपि च'। भातुरादित्यः। 'यातुरध्वगकालयोः। रक्षसि क्लीवम्'। हेतुः कारणम्।

मित—। रक्षसि क्लीवमिति। वेदभाष्ये तु 'यातवो यातना एषु धीयन्त इति यातुधानाः रक्षांसी'त्यपि दृश्यते।

७२। चायः किः ॥ १।७२ ॥

टी—। 'केतुर्ग्रहपताकयोः'।

मित—। चायतेराद्यस्य किः स्यात् तुप्रत्यये परतः। 'सार्वधातुकार्ध—' इति गुणः।

७४। आप्नोतेर्ह्रस्वश्च ॥ १।७४ ॥

दी—। अप्तुः शरीरम्।

मित—। तुप्रत्यये परे धातोरादिर्ह्रस्वः।

७५। वसेस्तुन् ॥ १।७५ ॥

दी—। वस्तु। (नित्त्वम् आद्युदात्तार्थम्)।

७६। अगारे णिच्च ॥ १।७६ ॥

दी—। 'वेश्मभूर्वास्तुरस्त्रियाम्'

मित—। गृहेऽर्थे वसेस्तुन् स च णित्। उपधा वृद्धिः। वास्तुः अस्त्रियाम्।

७७। कृञः क्तुः ॥ १।७७ ॥

दी—। क्रतुर्यज्ञः।

मित—। डुकृञ् करणे। अस्मात् क्तुप्रत्ययः। कित्त्वाद् गुणाभावे यण्।

७८। एधिवह्योश्चतुः ॥ १।७८ ॥

दी—। एधतुः पुरुषः। वहतुरनड्वान्।

मित—। अनयोर्धात्वोश्चतुप्रत्ययः। चित्त्वमन्तोदात्तार्थम्। 'वहतुः पथिके वृषभे पुमान्' इति मेदिनी।

७९। जीवेरातुः ॥ १।७९ ॥

दी—। 'जीवातुरस्त्रियां भक्ते जीविते जीवनौषधे'।

मित—। 'जीवातु जीवनौषधमि'त्यमरः'। जीवतीति विग्रहः। —"जीवातवे विसृज कृपाणम्" इति भवभूतिः।

८०। आतृकन्वृद्धिश्च ॥ १।८० ॥

दी—। जीवेरित्येव। जैवातृकस्त्विन्दुभिषगायुष्मत्सु कृशो-वले।

मित—। जीवधातोरातृकन् प्रत्ययः। तस्मिन् परे वृद्धिश्चोपधायाः। 'जैवातृकः स्यादायुष्मति' इत्यमरः।

८१। कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः॥ १।८१॥

दी—। 'कर्षूः पुंसि करीषाग्नौ कर्षूर्नद्यां स्त्रियां मता'।

चमूः। तनूः। धनूः शस्त्रम्। 'सर्ज सर्जने'। 'सर्जूर्वणिक्'। खर्ज व्यथने। खर्जूः पामा। (पामेति चर्मव्याधि-विशेषः)।

८२। मृजेर्गुणश्च॥ १।८२॥

दी—। मर्जूः शुद्धिकृत्। (चादुप्रत्ययः)।

८३। वहो धश्च॥ १।८३॥

दी—। 'वधूर्जायास्नुषास्त्रिषु'।

मित—। वहेरन्त्यस्य धकारादेशस्तस्मादूप्रत्ययश्च। वह प्रापणे। वहति सुखं प्रापयतीति वधूः स्त्री। 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः।

८४। कषेश्छश्च॥ १।८४॥

दी—। कच्छूः पामा। (चादुप्रत्ययः। छे तुगिति तुक्)।

८५। णित्कसिपद्यर्तेः॥ १।८५॥

दी—। कासूः शक्तिः। पादूश्चरणधारिणी। आरूः पिङ्गलः।

मित—। कस गतौ, पद गतौ, ऋगतौ। एभ्य ऊ प्रत्ययः स्यात्। स च णिद् भवति। उपधावृद्धिः।

८६। अणो डश्च॥ १।८६॥

टी—। आडूर्जलप्लवद्रव्यम्।

८७। नञि लम्बेर्नलोपश्च ॥ १।८७ ॥

टी—। 'तुम्ब्यलाबूरुभे समे' इत्यमरः।

मित—। लवि अवभंसने। न लम्बते जले इत्यलाबुः।

८८। के श्र एरङ् चास्य ॥ १।८८ ॥

टी—। कशब्दे उपपदे शृणातेरूः स्यात्। एरङादेशः। 'कशेरुस्तृणकन्दे स्त्री'। बाहुलकादुप्रत्यये कशेरुः। क्लीबे पुंसि च।

८९। त्रो दुट् च ॥ १।८९ ॥

टी—। तरतेरूः स्यात्तस्य दुट्। 'तर्दूः स्याद्दारुहस्तकः'।

मित—। 'आद्यन्तौ टकितौ'। 'नेड् वशि—' इति नेट्।

९०। दरिद्रातेर्यालोपश्च ॥ १।९१ ॥

टी—। इश्च आश्च यौ। तयोर्लोपः। दद्रुः कुष्ठप्रभेदः।

९१। नृतिशृध्योः कूः ॥ १।९१ ॥

टी—। नृतूर्नर्तकः। शृधूरपानम्। (कित्त्वान्न गुणः)।

९२। ऋतेरम् च ॥ १।९२ ॥

टी—। ऋतिःसौत्रो धातुः। ततः कूरमागमश्च। रन्तूर्देव-नदी सत्यवाक् च।

९३। अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः ॥ १।९३ ॥

टी—। एते कूप्रत्ययान्ता निपात्यन्ते। अन्दूर्बन्धनम्। 'दृभी ग्रन्थे'। निपातनान्नुम्। दृम्भूः। अनुस्वाराभावोऽपि

निपातनादित्येके। हन्भूः। जनेर्बुक्—जम्बूः। 'जमु अदने' इत्येके। बाहुलकाद्ध्रस्वोऽपि—जम्बुः। कफं लाति कफेलूः श्लेष्मातकः। निपातनादित्वम्। कर्कं दधाति कर्कन्धूर्बदरी। निपातनान्नुम्। दिधिं धैर्यं स्यति त्यजतीति दिधिषूः पुनर्भूः। केचित्तु 'अन्दूदृम्फूजम्बूकम्बू' इति पठन्ति। 'दृम्फ उत्क्लेशे। दृम्फूः सर्पजातिः। 'कमेर्बुक्'। कम्बूः परद्रव्यापहारी।

मित—। अदि बन्धने। अन्दूरिति। 'अन्दूः स्त्रियां स्यान्निगडे प्रभेदे भूषणस्य च' इति मेदिनी। बहुलकाद्ध्रस्वोऽपि। अन्दुः। 'अन्दुको हस्तिनिगडे' इत्यमरः। दृम्भूरिति। सन्दर्भकर्तेत्यर्थः। दृभीग्रन्थे तुदादिः। तेन दृम्भतीति विग्रहः। जम्बुरिति—अस्य ह्रस्वपाठे भारविरप्यनुकूलः। 'व्यथितमपि भृशं मनो हरन्ती परिणतजम्बुफलोपभोगहृष्टा' (किरात—१०।२२)। अत्र 'इको ह्रस्वोऽङ्यः—' इति ह्रस्वः इति व्यवस्थाः परास्ता इत्याहुः। 'तस्या जम्बोः नदीभूय प्रवर्तते' इति विक्रमादित्येन च ह्रस्व उदाहृतः। दिधिषूः पुनर्भूरिति। द्विर्विवाहितेत्यर्थः। 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरः।

८४। मृगोरुतिः॥ १।८४॥

दी—। मरुत्। गरुत्पक्षे। (अनयोरुतिप्रत्ययः। इकार उच्चारणार्थः)।

८५। ग्रो मुट् च॥ १।८५॥

दी—। गिरतेरुतिस्तस्य च मुट्। गर्मुत् सुवर्णं तृणविशेषश्च।

८६। हृषेरुलच्॥ १।८६॥

दी—। 'हृषुलो मृगकामिनोः'। बाहुलकाच्चटतेः। चटुलं शोभनम्। ('चटुलनयना' इत्यादौ यथा)।

९७। हृसृरुहियुषिभ्य: इति: ॥

दी—। 'हरित् ककुभि वर्णे च तृणवाजिविशेषयो:'। सरित् नदी। रोहिन्मृग विशेषस्य स्त्री। युष इति सौत्रो धातु:। 'मत्स्यस्य रोहित् पुरुषस्य योषित्' इति भाष्यम्।

९८। ताडेर्णिलुक् च ॥ १।९८ ॥

दी—। ताडयतीति तड़ित्।

मित—। ताडयतेर्णेर्लुक् स्याद् इति प्रत्यये परे। इतिरित्यत्र इकार उच्चारणार्थ:।

९९। शमेर्ढ: ॥ १।९९ ॥

दी—। बाहुलकादित्संज्ञा एयादेश: इट् च न। 'शण्ढ: पुंसिगोपतौ। शण्ढ: क्लीव:।

मित—। शम उपशमे। अस्माद् ढप्रत्यय:। गोपताविति वृषभे इत्यर्थ:। इत्संज्ञेति—अनुनासिकस्य लोपाभावश्च। एयादेश इति—'आयनेयीनीयिय: फढखछघां प्रत्ययादीनाम्' (४०५) इत्यनेनेत्यर्थ:।

१००। कमेरठ: ॥१।१०० ॥

दी—। कमठ:। 'कमठ: कच्छपे पुंसि भाण्डभेदे नपुंसकम्' इति मेदिनी। बाहुलकाज्जरठ:।

१०१। रमेर्वृद्धिश्च ॥ १।१०१ ॥

दी—। रामठं हिङ्गु। ( चादठप्रत्यय: )।

१०२। शमे: ख: ॥ १।१०२ ॥

दी—। शङ्ख:। ( अनुस्वारस्य ययीति परसवर्णेन ङ: )।

१०३। कणेष्ठ: ॥१।१०३॥

दी—। कण्ठ:।

१०४। कलस्तृपश्च ॥१।१०४॥

दी—। तृपतेः कलप्रत्ययः। चात्तृफतेः तृपला लता। 'तृफला तु फलत्रिके'। (त्रिफला तृफला च सा—इति विश्वः)।

२०५। शपेर्वश्च ॥१।१०५॥

दी—। शबलः। (चात् कल प्रत्ययः)।

मित—। 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः।

१०६। वृषादिभ्यश्चित् ॥१।१०६॥

दी—। वृषलः। पललम्। बाहुलकाद् गुणः। सरलः। तरलः। 'कमेर्वुक् (च)—(गणसूत्र)। कम्बलः। 'मुस खण्डने'। मुसलम्। 'लङ्गेर्वृद्धिश्च' (गणसूत्र)। लाङ्गलम्। 'कुटिकशिकौतिभ्यः प्रत्ययस्य मुट्' (च) (गणसूत्र)—कुट्मलः। कुडेरपि—कुड्मलः। कश्मलम्। बाहुल-कादगुणः—कोमलम्।

मित—। एभ्यः कलप्रत्ययः स्यात्। स च किद् भवति। अन्तोदात्तः। वृषलः शूद्रः। पल गतौ। पललमिति। 'पललं तिलचूर्णे च पङ्के मांसे नपुंसकम्। ना राक्षसे'—इति मेदिनी। सरल इति—'सरलः पूतिकाष्ठे नाऽयोदारवक्रयोस्त्रिषु' इति च मेदिनी। 'सरला विरलायन्ते घनायन्ते कलिद्रुमाः। न शमो न च पुन्नागा अस्मिन् संसारकानने' इत्यभियुक्तप्रयोगः। 'कम्बलो नागराजे स्यात् सास्नाप्राकारयोरपि। अपावरणरासङ्गे सलिले च नपुंसकम्' इति मेदिनी। मुषल इति मूर्धन्यमध्यो-ऽप्ययम्। विस्तरस्तु प्रौढमनोरमायाम्।

१०७। मृजेष्टि-लोपः ॥१।१०७॥

दी—। मलम्। (टिलोपात् 'म' इति तिष्ठति। ततः कलप्रत्ययः)।

१०८। चुपेरच्चोपधायाः ॥१।१०८॥

दी—। चपलम्। (अदुपधत्वं चप् इति भवति। ततः कल प्रत्ययः)।

१०९। शकिशम्योर्नित् ॥१।१०९॥

दी—। शकलम्। शमलम्।

मित—। 'भित्तं शकलं खण्डं वा' इति 'शमलं शकृत्' इति चामरः।

११०। छो गुग्घ्रस्वश्च ॥१।११०॥

दी—। छगलः। प्रज्ञादित्वात् 'छागलः'।

मित—। छो छेदने। तस्य 'आदेच:—' इत्यात्त्वं 'छ' इति। ततो ह्रस्वः। 'छगलं नीलवस्त्रे ना च्छागे स्त्री वृद्धदारके' इति मेदिनी।

१११। ञमन्ताड्डः ॥१।१११॥

दी—। दण्डः। रण्डा। खण्डः। मण्डः। वण्डश्छिन्नहस्तः। अण्डः। बाहुलकात् षत्वाभावः। षण्डः सङ्घातः। तालव्यादिरित्यपरे। शण्डः। गण्डः। चण्डः। पण्डः क्लीबः। पण्डा बुद्धिः।

मित—। ञमिति प्रत्याहारः। तेन ञ, म, ङ, ण, न इत्यन्तेभ्यो धातुभ्यो डप्रत्ययः स्यादिति सूत्रार्थः। दमु उपशमे। रमु क्रीडायाम्। खन अवदारणे। मन ज्ञाने। वन संभक्तौ। अम गत्यादिषु। षणु दाने। गम गतौ। चण दाने। पण व्यवहारे स्तुतौ च इति क्रमेणात्र धातवः। 'दण्डोऽस्त्री लगुडेऽपि स्यात्' इत्यमरः। 'रण्डा मूषिकपर्ण्यां च विधवायां च योषिति'। 'मण्डः पञ्चाङ्गुले शाकभेदे क्लीबं तु मस्तुनि'। 'वण्डा पांशुलायां स्त्री त्रिषु हस्तादिवर्जिते'। अण्डं मुष्कम्। अण्ड प्राण्यवयवः। षत्वाभाव इति—'षणु' इत्यस्य 'धात्वादेः षः सः' इत्यनेन। 'चण्डस्त्वत्यन्तकोपनः' इत्यमरः। पण्डा बुद्धिरिति। 'पण्डा शास्त्रोज्ज्वला बुद्धिस्तद्योगात् पण्डितः स्मृतः'।

११२। क्वादिभ्यः कित् ॥१।११२॥

दी—। कवर्गादिभ्यो डः कित् स्यात्। कुण्डम्। काण्डम्। गुड्—गुडः। 'घु ण भ्रमणे'=घुण्डो भ्रमरः।

११३। स्थाचतिमृजेरालज्वालञ्श्रालीयचः ॥१।११३॥

दी—। तिष्ठतेरालच। स्थालम्—स्थाली। चतेर्वालञ्। चात्वालः। मृजेरालीयच्। मार्जालीयो विड़ालः।

११४। पति चण्डिभ्यामालञ् ॥१।११४॥

दी—। पातालम्। चण्डालः। प्रज्ञादित्वादणि चाण्डालोऽपीत्येके।

मित—। पातालम्—अत्रोपधावृद्धिः। 'पातालं नागलोके स्याद् विवरे बड़वानले' इति मेदिनी।

११५। तमिविशिविडिमृणिकुलिकपिपलिपञ्चिभ्यः कालन् ॥१।११५॥

दी—। तमालः। विशालः। विड़ालः। मृणालम्। कुलालः। कपालम्। पलालम्। पञ्चालः।

११६। पतेरङ्गच् पक्षिणि ॥१।११६॥

दी—। पतङ्गः। (वाहुलकादर्थान्तरेऽपि। 'पतङ्गः पक्षिसूर्य्ययोः' इत्यमरः)।

११७। तरत्यादिभ्यश्च ॥१।११७॥

दी—। तरङ्गः। लवङ्गम्।

११८। विड़ादिभ्यः कित् ॥१।११८॥

दी—। विड़ङ्गः। मृदङ्गः। कुरङ्गः। वाहुलकादुत्वं च।

११९। शृवॄभ्यो ह्रस्वश्च ॥१।११९॥

दी—। शारङ्गः। वारङ्गः खड्गादिमुष्टिः।

१२०। गन् गम्यद्योः ॥ १।१२० ॥

दी—। गङ्गा। अद्गः पुरोडाशः।

१२१। छापूखड़िभ्यः कित् ॥१।१२१॥

दी—। छागः। पूगः। खड्गः। बहुलकात् 'पिङ्ग अनादरे'—गन् सत्वाभावश्च। पिङ्गस्तरलः। 'पिङ्गैरगच्छत ससम्भ्रममेवमेका' इति माघ.। (गन्प्रत्ययः। स च कित्)

मित—। अत्र सर्वत्र 'बाहुलकादि'ति यदुक्तं तत् सर्वम् 'उणादयो बहुलम्' इत्यनुसारादिति विभाव्यम्।

१२२। भृञः किन्नुट् च ॥१।१२२॥

दी—। भृञोगन् कित् स्यात् तस्य नुट् च। भृङ्गाः 'पिङ्गालिधूम्याटाः'।

१२३। शृणातेर्ह्रस्वश्च ॥१।१२३॥

दी—। शृङ्गम्। (शॄ हिंसायाम् इत्यस्य ह्रस्वः। अस्माद् गन्प्रत्ययः तस्य कित्वं नुडागमश्च)।

१२४। गण् शकुनौ ॥१।१२४॥

दी—। नुट् चेत्यनुवर्तते। शार्ङ्गः।

मित—। शकुनौ वाच्ये शृणातेर्गण्प्रत्ययः स्यात्, तस्य नुट्। 'अचीञ्चिति' इति वृद्धिः। शार्ङ्गः पक्षी। 'शार्ङ्गम्' इति धनुर्वाचकः शब्दस्तु शृङ्गस्य विकार इति।

१२५। मुदिग्रोर्गग्गौ ॥१।१२५॥

दी—। मुद्गः। गर्गः।

१२६। अण्डन् कृसृभृवृभ्यः ॥१।१२५॥

टी—। करण्डः। मरण्डः पक्षी। भरण्डः स्वामी। वरण्डो मुखरोगः।

१२७। दृभसोऽदिः ॥१।१२७॥

टी—अरत्। 'दरद्वृदयकूलयोः'। भसज्ज घनम्।

मित—। 'भसत् स्त्री भास्वरे योनौ' इति मेदिनी।

१२८। दृणातेः पुग्घ्रस्वश्च ॥१।१२८॥

टी—। दृषत्।

१२९। त्यजितनियजिभ्यो डित् ॥१।१२९॥

टी—। त्यद्। तद्। यद्। सर्वादयः।

१३०। एतेस्तुट् च ॥१।१३०॥

टी—। एतद् (चकाराद् अदिप्रत्ययः। तुडागमः। गुणः)

१३१। सर्तेरटिः ॥१।१३१॥

टी—। 'सरट् स्याद्वातमेघयोः'। वेदभाष्ये तु 'याभिः कृशानुम्' इति मन्त्रे 'सरड्भ्यो मधुमक्षिकाभ्यः' इति व्याख्यातम्।

१३२। लङ्घेर्नलोपश्च ॥ १।१३२ ॥

टी—। लघट् वायुः। (चादटिप्रत्ययः)।

१३३। पारयतेरजिः ॥१।१३३॥

टी—। पारक् सुवर्णम्। [अजि (अज्) इति, णन्तात् पॄ इत्यास्माद् विधीयते]।

१२४। प्रथेः कित् सम्प्रसारणञ्च ॥१।१२४॥

टी—। पृथक्। स्वरादिपाठादव्ययत्वम्। (अजिप्रत्ययः)।

१२५। भियः षुग्ह्रस्वश्च ॥१।१२५॥

टी—। भिषक्।

१२६। युष्यसिभ्यां मदिक् ॥१।१२६॥

टी—। युष सौत्रो धातुः। युष्मद्। अस्मद्। त्वम्। अहम्।

मित—। त्वम् अहमिति। मपर्यन्तस्य 'त्वाहौ सौ' (३८४), 'शेषे लोपः' (३८५) इति युष्मदस्मदोर्मपर्यन्तस्य त्वाहादेशे अन्त्यलोपे च रूपे।

१२७। अर्तिस्तुसुहुसृधृक्षिक्षुभायावापदियक्षिनीभ्यो मन ॥१।१२७॥

टी—। एभ्यश्चतुर्दशभ्यो मन्। अर्मश्चक्षूरोगः। स्तोमः सङ्घातः। सोमः—होमः। सर्मो गमनम्। धर्मः। क्षेमं कुशलम्। क्षौमम्। प्रज्ञाद्यणि क्षौमञ्च। भाम आदित्यः। यामः। वामः शोभनदुष्टयोः। पद्मम्। यक्ष पूजायाम्। यक्ष्मो रोगराजः। नेमः।

मित—। अर्तीति। ऋ गतौ, ष्टुञ् स्तुतौ, षुञ् अभिषवे, हुदानादनयोः' सृ गतौ धृञ् धारणे, क्षि क्षये, टुक्षु शब्दे, भा दीप्तौ, या प्रापणे, वा गतिगन्धनयोः, पद गतौ, णीञ् प्रापणे। 'धर्मः पुण्ये यमे न्याये स्वभावाचारयोः क्रतौ' इति विश्वः। 'भामः क्रोधे रवौ दीप्तौ'। 'यामस्तु प्रहरे पुंसि संयमोऽपि प्रकीर्तितः'। यक्ष्मा इति—'क्षयः शोषश्च यक्ष्मा च' इत्यमरः। "क्षोभो यक्ष्मा क्षयो रोगः" इति आयुर्वेदे च।

१३८। जहाति सन्वदालोपश्च ॥१।१३८॥

टी—। 'जिह्मः कुटिलमन्दयोः'।

मित—। चात् मन्प्रत्ययः। सन्वद्भावादभ्यासस्येत्वम्। 'तथापि जिघ्नः स भवज्जिगीषया तनोति शुभ्रं गुणसम्पदा यशः' ( भारविः )।

१३९। अवतेष्टिलोपश्च ॥१।१३९॥

टी—। मन्प्रत्ययस्यायं टिलोपो न प्रकृतेः। अन्यथा ङिदित्येव ब्रूयात्। 'ज्वरत्वर—' ( २६५४ ) इत्यूठौ तयोर्दीर्घे कृते गुणः। चादिपाठादव्ययत्वमित्युज्ज्वलदत्तस्तन्न। तेषामसत्त्वार्थत्वात्। वस्तुतस्तु स्वरादिपाठादव्ययत्वम्। अवतीति ओम्। ( 'ओं' प्रश्नेऽङ्गीकृतौ रोषे' इति विश्वः )।

१४०। ग्रसेराच ॥१।१४०॥

टी—। ग्रामः। ( ग्रसु अदने। अस्यमन्। 'ग्रामः स्वरे वृन्दे शब्दादिपूर्वके' इति विश्वः। शब्दादिपूर्वको ग्रामशब्दो वृन्दे। शब्दग्रामो गुणग्राम इति यथा। संपूर्वोऽयं युद्धे। तदुक्तं 'संपूर्वः संयुगोक्तः' इति )।

१४१। अविसिविसिशुषिभ्यः कित् ॥१।१४१॥

टी—। ऊमं नगरम्। स्यूमो रश्मिः। सिमः सर्वः। 'शुष्ममग्निसमीरयोः'।

मित—। स्यूमीरश्मिरिति। स्यूतन्तुरित्यन्ये। शुष्ममग्नीत्यादि वेदभाष्ये तु 'शुष्मं बलम्' इत्यपि।

१४२। इषियुधीन्धिदसिश्याधूसूभ्यो मक् ॥१।१४२॥

टी—। 'इध्मः कामवसन्तयोः'। ईषेति पाठे दीर्घादिः। युध्मः शरो योद्धा च। इध्मः समित्। दस्मो यजमानः। श्यामः। धूमः। सूमोऽन्तरिक्षम्। बाहुलकादीमं व्रणः।

मित—। बाहुलकादीर्ममिति। ईर गतौ। अस्माद् मक्। 'अर्थोऽस्त्रियामीर्मंमव: क्लीबे' इत्यमर:। एवं जन्मम्। मनिनस्तु—नान्त:। 'जनुजननजन्मानि' इत्यमर उभयसाधारण:।

१४३। युजिरुचितिजां कुश्च ॥१।१४३॥

दी—। युग्मम्। रुक्मम्। तिग्मम्। (एभ्यो मक्। कवर्गश्चान्तादेश:)।

१४४। हन्तेर्हि च ॥१।१४४॥

दी—। हिमम्। (चात् मक्प्रत्यय:। हिरिति सर्वादेश:)।

१४५। भिय: षुग् वा ॥१।१४५॥

दी—। भीम:। भीष्म:। (मक्प्रत्ययान्तौ)।

१४६। घर्म: ॥१।१४६॥

दी—। घृधातोर्मग् गुणश्च निपात्यते। ('घर्म: स्यादातपे ग्रीष्मस्वेदाम्भसोरपि')।

१४७। ग्रीष्म: ॥१।१४७॥

दी—। ग्रसते र्निपातोऽयम् (मक् प्रत्यये)

१४८। प्रथे: षिवन् सम्प्रसारणं च ॥१।१४८॥

दी—। पृथिवी। षवन्नित्येके। पृथवी। 'पृथवी पृथिवी पृथ्वी' इति शब्दार्णव:। (षिवन्निति प्रत्ययस्य षित्त्वाद् ङीष्)।

१४९। अशू प्रुषिलटिकणिखटिविशिभ्य: क्वन् ॥१।१४९॥

दी—। अश्व:। 'प्रुष स्नेहनादौ'। 'प्रुष्व: स्यादृतु-सूर्ययो:'। प्रुष्वा जलकणिका। लट्वा पक्षिभेद: फलं च। कण्वं पापम्। बाहुलकादित्त्वे किण्वमपि। खट्वा। विश्वम्।

१५०। इण्शीभ्यां वन् ॥१।१५०॥

टी—। एवो गन्ता। 'ये व एवा मरुतः'। असत्त्वे निपातोऽयम्। शेवं लाञ्छनं पुंसाम्। 'शेवं मित्राय वरुणाय'।

मित—। शेवं सुखमिति वेदभाष्यम्।

१५१। सर्वनिघृष्वरिष्वलष्वशिवपट्वप्रह्वेष्वा अतन्त्रे ॥१।१५१॥

टी—। अकर्तर्येते निपात्यन्ते। सृतमनेन विश्वमिति सर्वम्। निपूर्वाद्घृषेर्गुणाभावोऽपि। निघृष्यते अनेन निघृष्वः खुरः। रिष्वो हिंस्रः। लष्वो नर्तकः। लिष्व इत्यन्ये। अत्रोपधाया इत्त्वमपि। शेतेऽस्मिन् सर्वमिति शिवः शम्भुः। शीङो ह्रस्वत्वम्। पटो रथो भूलोकश्च। प्रह्वयते इति प्रह्वः। ह्वञ आकारवकारयोर्लोपः। जहातेरालोपो वा। ईषेर्वन्। ईष्वः आचार्यः। इष्व इत्यन्ये। 'अतन्त्रे' किम्? सर्ता। सारकः। बाहुलकाद्भ्रसतेः ह्रस्वः।

मित—। अतन्त्रे इत्यस्य विवरणम्—'अकर्तरि' इति। एतेनान्यत्र विशेषनिर्देशाभावे सर्वं कर्तर्येवेति बोध्यम्।

१५२। शेवयह्वजिह्वाग्रीवापामीवाः ॥ १।१५२ ॥

टी—। शेव इत्यन्तोदात्तार्थम्। यान्त्यनेन यह्वः। ह्रस्वो हुगागमश्च। लिहन्त्यनया जिह्वा। लकारस्य जः गुणाभावश्च। गिरन्त्यनया ग्रीवा। ईडागमश्च। आप्नोतीत्यापा वायुः। मीवा उदरकृमिः। वायुरित्यन्ये।

मित—। श्रेव इति 'इण्शीभ्याम्—' (१५०) इत्यत्रोक्तमपि अत्र निपातनादन्तोदात्तत्वदर्शनार्थमारम्भः। यत्रः मार्गः। 'इतमाय यत्री' इत्यत्र 'मत्री' इति वेदभाष्यम्। मीवेति—वेदभाष्ये तु अमीव इति क्विला 'अम रोगे' इत्यस्मात् ईट् चेत्युक्तम्। 'अमीवातन—' रोगनाशक इति व्याख्यानात्।

१५२। कॄगॄशॄदॄभ्यो वः ॥ १।५२ ॥

टी—। कर्वः कामः आयुश्च। गर्वः। शर्वः। दर्वो राक्षसः।

१५४। कनिन् युवृषितक्षिराजिधन्विद्यु प्रतिदिवः ॥१।१५४॥

टी—। यौतीति युवा। वृषा इन्द्रः। तक्षा। राजा। धन्वा मरुः। धन्व शरासनम्। द्यु्वा सूर्यः। प्रतिदीव्यन्त्यस्मिन् प्रतिदिवा दिवसः।

मित—। युवृष्यादिभ्यः कनिन्प्रत्ययः कर्तरि। युवेति। 'युवास्यात्तरुणे श्रेष्ठे निसर्गबलशालिनि' इति मेदिनी। धन्वामरुरित्यादि। 'धन्वा तु मरुदेशे ना क्लीबे चापि स्थलेऽपि च' इति मेदिनी। चापः शरासनम्।

१५५। सप्यशूभ्यां तुट् च ॥ १।१५५ ॥

टी—। सप्त। अष्ट। (चकारात् कनिन् प्रत्ययः। तुडित्यागमः)।

१५६। नञि जहातेः ॥ १।१५६ ॥

टी—। अह्नः। (नञ्पूर्वाद्द हाधातोः कनिन्। धातोरालोपः)।

१५७। श्वन्नुक्षन्पूषन्प्लीहन्-क्लेदन्-स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्निति ॥ १।१५७ ॥

टी—। एते त्रयोदश कनिन्प्रत्ययान्ता निपात्यन्ते। श्वयतीति श्वा। उक्षा। पूषा। 'प्लिह गतौ'। इकारस्य दीर्घत्वम्।

प्लेहतीति प्लीहा कुक्षिव्याधिः । 'क्लिदू आर्द्रीभावे' । क्लिद्यतेः क्लेदा चन्द्रः । स्निह्यतेर्गुणः । स्निह्यतीति स्नेहा सुहृच्चन्द्रश्च । मुह्यन्त्यस्मिन्नाहते मूर्धा । मुहेरुपधाया दीर्घो धोऽन्तादेशो रमागमश्च । मज्जत्यस्थिषु मज्जा अस्थिसारः । अर्यपूर्वो माङ् । अर्यमा । विश्वं प्सातीति विश्वप्सा अग्निः । परिजायते परिज्मा चन्द्रोऽग्निः । जनेरुपधालोपो मश्चान्तादेशः । मातर्यन्तरिक्षे श्वयतीति मातरिश्वा । धातोरिकारलोपः । 'मह पूजायाम्' । हस्य घो वुगागमश्च । मघवा इन्द्रः ।

इत्युणादिषु प्रथमः पादः ।

These thirteen words are irregularly formed with the affix कनिन् added to them in the active voice. The word इति in the rule signifies that the list is not exhaustive.

श्वन्—। श्वन्नित्यादि । टुओश्वि गतिवृद्ध्योः, उक्ष सेचने, पूष वृद्धौ, ष्णिह प्रीतौ, मुह वैचित्त्ये, मुर्वी बन्धने (उकारस्य दीर्घत्वे वकारस्य धकार इत्युज्ज्वलदत्तः), टुमस्जो शुद्धौ (मस्जेः सकारस्य शकारस्तस्य जश्त्वेन जः), माङ् माने शब्दे च, प्सा भक्षणे, जनी प्रादुर्भावे, 'टुओश्वि—' इति मूलानुक्ता धातवः । कनिन्निति निदित्याकरे । श्वेति—इकारलोपो निपात्यते 'इन्हन्पूषार्यम्णां—' इति नियमात् पूषणौ पूषण इत्यादौ न दीर्घः । 'अर्यमा तु पुमान् सूर्यः—' इति मेदिनी । परिजायत इति दशपादीवृत्त्यनुरोधादिदम् । वेदभाष्ये तु 'परिज्मानं सुखं वयम्' इत्यत्र परिज्मा परितो गन्ता । अजेः परिपूर्वस्य 'श्वन्नुक्षन्—' इत्यादिना मन् प्रत्ययः अकारलोपः, आद्युदात्तत्वं च निपात्यत इत्युक्तम् । मातरिश्वेति—सप्तम्या अलुक् इहविषये सम्प्रसारणं न भवति । 'श्वयुव—' इति सूत्रे अभिव्यक्ततरत्वेन कुक्कुरवाचकस्यैव श्वशब्दस्य ग्रहणम् । इह सूत्रे इतिशब्द आद्यर्थः । तेनान्येभ्योऽपि यथादर्शनं कनिन् । दशपाद्यान्तु इतिशब्दो नास्ति ।

१५८। कृहृभ्यामेणुः ॥ २।१ ॥

दी—। करेणुः। हरेणुः गन्धद्रव्यम्।

मित—। डुकृञ् करणे। हृञ् हरणे। 'करेणुरिभ्यां स्त्री, ना इभे' इत्यमरः। गन्धद्रव्यमिति—कलायश्चेति वैश्यवर्गे अमरः—'कलायस्तु सतीनकः। हरेणुखण्डिकौ—' इति।

१५९। हनिकुषिनीरमिकाशिभ्यः क्थन् ॥ २।२ ॥

दी—। हथो विषयः। कुष्ठः। नीथो नेता। रथः। काष्ठम्।

१६०। अवे भृञः ॥ २।३ ॥

दी—। अवभृथः।

१६१। उषिकुषिगार्तिभ्यः स्थन् ॥ २।४ ॥

दी—। ओष्ठः। कोष्टम्। गाथा। अर्थः। बाहुलकाच्छोथः।

मित—। अर्थ इति। 'अर्थोऽभिधेयरैवस्तुप्रयोजननिवृत्तिषु' इत्यमरः। बाहुलकादिति। शुगतौ। अस्मात् थन् शोथः=श्वयथुः।

१६२। सर्तेर्णित् ॥ २।५ ॥

दी—। सार्थः समूहः। (अस्मात् स्थन् णिद्वत्)।

१६३। जृवृञ्भ्यामूथन् ॥ २।६ ॥

दी—। जरूथं मांसम्। 'वरूथो रथगुप्तौ ना'।

मित—वरूथो रथगुप्तौ नेति। 'वरूथो रथगुप्तौ स्याद् वरूथं रथवेश्मनोः' इति विश्वः। 'भवा वरूथं गृणते विभावा—' इत्यादौ वेदभाष्ये वरूथं गृहमिति व्याख्यातम्।

१६४। पातृतुदिवचिरिचिसिचिभ्यस्थक् ॥ २।७ ॥

दी—। पीथो रविः घृतं पीथम्। 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु। अवतारर्षिजुष्टाम्भः स्त्रीरजःसु च विश्रुतम्'

इति विश्वः। तुथोऽग्निः। उक्थं सामभेदः। रिक्थम्। बाहुलकात्‌टचेरपि। 'रिक्थमृक्थं धनं वसु'। सिक्थम्। ( 'सिक्थो भक्तपुलाके ना' )।

१९५। अतो निंरि ॥ २।८ ॥

निरुथं साम। ( निरित्युपपदेऽर्तेः स्थक् प्रत्ययः )।

१९६। निशीथगोपीथावगथाः ॥ २।९ ॥

टी—। निशीथोऽर्धरात्रो रात्रिमात्रं च। गोपीथं तीर्थम्। अवगथः प्रातः स्नातः।

मित—। एते स्थन्प्रत्ययान्ता निपात्यन्ते। निपूर्वात् शेतेः स्थक्। गुणाभावः। 'निशीथस्तु पुमानर्धरात्रे स्याद्रात्रिमात्रके' इति मेदिनी। गोपीथं तीर्थमिति वृत्तिकारमतेनेदम्। वेदे तु 'प्रतीत्यथाश्वमध्वरम्' इत्यत्र गोपीथः सोमपानमिति भाष्यकारनिरुक्तकारौ ( सायनयास्कौ )। अवगथ इति—गाहेर्निपातनाद्‌ध्रस्वः।

१९७। गथोद्गि ॥ २।१० ॥

टी—। उद्‌गीथः साम्नो भागविशेषः। ( उद्‌पूर्वगायतेः स्थक्। 'घुमास्था—' इति ईत्वम्। )।

१९८। समीणः ॥ २।११ ॥

टी—। समिथो वह्निः संग्रामश्च।

१९९। तिथपृष्ठगूथयूथप्रोथाः ॥ २।१२ ॥

टी—। तिजेर्जलोपः। तिथोऽनलः कामः। पृष्ठम्। गूथं विष्ठा। यूथं समूहः। 'प्रोथमस्त्री तुरङ्गास्ये प्रोथः प्रस्थित उच्यते'।

These are irregularly formed with स्थक्.

मित—। तिज निशाने। पृषु सेचने। गुपुरीषोत्सर्गे। यु मिश्रणे। प्रुङ्

गतौ। एते थक्प्रत्ययान्ता निपात्यन्ते। 'पृष्ठं' तु अवयवविशेषेस्मात् स्तोत्रविशेषेऽपि'। 'पृष्ठैः स्तुवते' इत्यादौ दर्शनात्।

**१७०। स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपि-वन्द्यु-न्दिश्वितिवृत्यजिनीपदिमदिमुदिखिदिछिदिभिदिमन्दिचन्दिदहि-दसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्॥ २।१२॥**

दी—। द्वाविंशतो रक् स्यात्। वलि यलोपः। स्फारम्। न्यङ्क्वादित्वात् कुत्वम्। तक्रम्। वक्रम्। शक्रः। क्षिप्रम्। क्षुद्रः। सृप्रश्चन्द्रः। तृप्रः पुरोडाशः। दृप्रो बलवान्। वन्द्रः पूजकः उन्दी—उन्द्रो जलचरः। श्वित्रं कुष्ठम्। 'वृत्रो रिपौ ध्वनौ ध्वान्ते शैले चक्रे च दानवे'। अजेर्वी। वीरः। नीरम्। पद्रो ग्रामः। मद्रो हर्षो देशभेदश्च। 'मुद्रा प्रत्ययकारिणी'। 'खिद्रो रोगो दरिद्रश्च। छिद्रम्। भिद्रं वज्रम्। मन्द्रः। चन्द्रः। पचाद्यचि चन्दोऽपि। 'हिमांशुश्चन्द्रमाश्चन्द्रः शशी चन्दो हिमद्युतिः'। दह्रोऽग्निः। दस्रः स्वर्वैद्यः। 'दभ्रः समुद्रःस्वल्पं च'। वसेः सम्प्रसारणे—

मित—। द्वाविंशत इति। दशपाद्यां तु त्रयस्त्रिंशदुक्ताः। तत्र दम्भिवहिवसीति पठित्वा 'वह प्रापणे उह्रोऽनड्वान्' इत्युदाहरणात्। माधवेऽप्येवम्। स्फारमिति। स्फायी वृद्धौ। 'नेड्वशि—' इति नेट्। वलि यलोप इति—'लोपो व्योर्वलि' इत्यनेन। 'स्फारः स्यात् पुंसि विकटे करकादिशश्च बुद्बुदे' इति मेदिनी। तक्रम् इति। तञ्चु संकोचने। 'तक्रं ह्युदश्विन्मथितं पादाम्ब्वम्बु निर्जलम्' इत्यमरः। वक्रम् इति—वञ्चु प्रलम्भने। विशेष्यलिङ्गोऽयम्। 'वक्रः स्याज्जटिले क्रूरे पुटभेदे शनैश्चरे' इति विश्वः। 'शक्रः पुमान् देवराजे कुटजार्जुनभूरुहोः' इति मेदिनी। क्षुद्र इति—अयमपि विशेष्यलिङ्गः। 'क्षुद्रः स्यादधमक्रूरकृपणाल्पेषु वाच्यवत्' इति मेदिनी। तृप्रः पुरोडाश

र्थात्। वैदभाषायादुज्ज्वलदत्तार्थेदम्। दशपाद्यां तु वर्जमान्यं काठं चेत्युक्तम्। वर्ज दुःखमिति सुबधाती माधवः। पचादापि चन्दोऽपि बाहुलकादिति भावः। हिमांशुरिति शब्दार्णवसंवादोऽयम्। दस्रः स्वर्वैद्य इति। 'स्वर्वैद्यावश्विनीसुतौ दस्रौ—' इत्यमरः। 'द्रास्ना युवकवः सुताः—' इत्यादिस्य वैदभाषामप्यनुकूलम्। परं दसु उपक्षये इति दस्रः उपक्षपयिता इत्यपि वैदभाषाम्। स्वर्वैद्यपक्षे तु दसति रोगानुपक्षपयतीति विग्रहः। वसेः सम्प्रसारणे प्राप्ते इति। 'शसिवसि—' (२४१०) इत्यनेनेत्यर्थः। अत्र पुनः वसेः सकारस्य मूर्धन्यादेशवारणार्थमाह—

**२१६८। न रपरसृपिसृजि स्पृशिस्पृहिसवनादीनाम्॥८।३।११०॥**

**दी—। रेफपरस्य सकारस्य सृप्यादीनां सवनादीनां च मूर्धन्यो न स्यात्। 'पूर्वपदात्—'( २१४२ ) इति प्राप्तः प्रतिषिध्यते इति वृत्तिभूयोऽभिप्रायो तेन 'शासिवसि—' ( २४१० ) इति प्राप्तमपि न। उस्रो रश्मिः। उस्रा गौः। वास्रो दिवसः। वास्रं मन्दिरम्। शीरोऽजगरः। हस्रो मूर्खः। सिध्रः साधुः। शुभ्रम्। बाहुलकात् मुसे रक्। मुस्रम् अश्रु।**

N. B.—This rule is of पाणिनि.

मित—। नेदमुणादिसूत्रम्। किन्तु पाणिनीयमेवेति द्रष्टव्यम्। वसेः रकि मूर्धन्यादेशवारणार्थमिहोपन्यस्तम्। भूयोऽभिप्रायेति—'पूर्वपदात्—' ( २०४२ ) इति प्राप्तप्रतिषेधादधिकमपि विधानपरेत्यर्थः। किन्तदित्यत आह—तेनेति। माधवस्तु वृत्तिस्वरसमनुरुध्य 'अविन्द उस्रिया गावः—' इति मन्त्रे बाहुलकात् षत्वं नेति व्याचष्टे। 'उस्रो वृषे च किरणे—' इति मेदिनी। 'उस्रा गव्युपचित्रायामुस्रस्तु किरणे स्मृतः' इति विश्वः। 'उस्रा इव स्वसराणि'-इति मन्त्रव्याख्याने माधवोऽप्येवम्। वास्रो दिवस इत्यादि। माधवस्तु 'वाश्रा इव धेनवः स्यन्दमाना अञ्जः समुद्रमवजग्मुरापः' इत्यत्र 'वाश्रा हम्भारवोपेताः ( शब्दायमानाः ) गाव इवे'ति व्याख्यातवान्। वाशेर्वा विद्यान्त्रि-मातीत्यादौ पुनः 'शब्दयुक्तापस्रुतस्तना धेनुर्वाश्रा' इत्येव। मुस्रमिति। मुस खण्डने।

१७१। चकिरम्योरुच्चोपधायाः ॥२।१४॥

दी—। चुक्रमम्लद्रव्यम्। रुक्मोऽरुणः।

१७२। वौ कसेः ॥२।१५॥

दी—। विकस्रश्चन्द्रः। (उपधाया उत् रक् च विधीयते)।

१७३। अमितम्योर्दीर्घश्च ॥२।१६॥

दी—। आम्रम्। ताम्रम्।

१७४। निन्देर्नलोपश्च ॥२।१७॥

दी—। निद्रा।

१७५। अर्देर्दीर्घश्च ॥२।१८॥

दी—। आर्द्रम्।

१७६। शुचेर्दोर्घश्च ॥२।१९॥

दी—। शूद्रः।

मित—। शुच शोके। अस्माद्रक्। दस्यान्तादेशः। धातोर्दीर्घश्च। शूद्रो वृषलः। 'अहहा वै त्वा शूद्र' इति श्रुतौ तु शद्वेर्बाधाद् योग एव (शु इत्यस्य इत्यर्थ एव) पुरस्कृतः। तथाचोत्तरमीमांसायां भगवता व्यासेन सूत्रितम् 'शुद्रस्य तदनादरश्रवणात्' इति।

१७७। दूरीणो लोपश्च ॥२।२०॥

दी—। दुःखेनेयते प्राप्यते इति दूरम्।

मित—। दुरुपसर्गोपपदादिण् गतावित्यस्माद्रक्। धातोर्लोपश्च। 'रो रि' इति रेफस्य लोपे 'ढ्रलोपे—' इति दीर्घः।

१७८। क्रतेश्छः क्रू च ॥२।२१॥

दी—। कृच्छ्रम् क्रूरम्।

मित—। कृती छेदने। अस्मादुकि 'कृ' 'क्रू' इत्येतावादेशौ क्रमेण स्तः। कृादेशः अन्तस्य। क्रू सर्वस्य। 'स्यात्कृच्छ्रं कष्टमाभीलम्—' इत्यमरः। 'क्रूरस्तु कठिने घोरे नृशंसे—'।

१७९। रोदेर्णिलुक् च ॥२।२२॥

दी—रोदयतीति रुद्रः।

मित—। रुदिर् अश्रुविमोचने। अस्माण्ण्यन्ताद्रक् णेश्च लुक्। 'णेरनिटि' (२३१३) इति लोपे तु 'पुगन्त—' (२१७९) इति गुणः स्यात्तेन णिलुक् चेत्युक्तम्। रोदयति। उपलक्षणमिदम्। 'सोऽरोदीद् यदरोदीत्तद् रुद्रस्य रुद्रत्वम्' इत्यादिना बह्वृचस्य वेदभाष्ये प्रपञ्चितत्वात्।

१८०। बहुलमन्यत्रापि संज्ञाच्छन्दसोः ॥२।२३॥

दी—। णिलुगित्येव। 'वान्ति पर्णशुषो वातास्ततः पर्णमुचोऽपरे ततः पर्णरुहोवान्ति ततो देवः प्रवर्षति'।

मित—। संज्ञायां छन्दसि च अन्यत्रापि (धात्वन्तरे प्रत्ययान्तरे चेत्यर्थः) णेर्बहुलं लुक् स्यादिति सूत्रार्थः। संज्ञायां तावत्—बृंहयति वर्धयति प्रजा इति ब्रह्मा। शं सुखं भावयति शम्भुरित्यादि। छन्दसितु—'वर्धन्तु त्वा सुष्टुतयः' वर्धयन्त्वित्यर्थः। जनी प्रादुर्भावे, संज्ञाच्छन्दसोरपि क्वचिदित्याह—वान्तीत्यादि। पर्णानि शोषयन्तीति पर्णशुषः। पर्णानि मोचयन्तीति पर्णमुचः।

१८१। जोरीच ॥२।२४॥

दी—। जीरोऽनुः। ज्यसेत्यके।

मित—। ज्यतेति। ज्या वयोहानौ। अस्माद्रक्। ग्रहिज्येति सम्प्रसारणं ततो दीर्घः। तथाच 'न धातुलोपे—' इति सूत्रे जीवेरदानुः इत्यस्य प्रत्याख्यानार्थं नैतज्जीवे रूपं किन्तु रकि ज्यः सम्प्रसारणमिति भाष्ये उक्तम्।

१८२। सुसूधाग्टधिभ्यः क्रन् ॥२।२५॥

दी—सुरः। सूरः। धीरः। गृध्रः।

१८३। शुसिचिमीनां दीर्घश्च ॥२।२६॥

टी—। शुः सौत्रः। शूरः। सीरम्। चीरम्। मीरः समुद्रः।

१८४। वाविन्धेः ॥२।२७॥

टी—। वीध्रं विमलम्।

१८५। वृधिवपिभ्यां रन् ॥२।२८॥

टी—। वर्ध्रं चर्म। वप्रः प्राकारः।

मित—। वृधु वृद्धौ। डुवप बीजसन्ताने। 'वप्रः पितरि केदारे चन्द्रः प्राकाररोधसोः'।

१८६। ऋज्रेन्द्राग्रवज्रविप्र कुब्रचुब्रक्षुरखुरभद्रोग्रभेरभेल शुक्रशुक्ल गौरवन्रेरामालाः ॥२।२८॥

टी—। रन्नन्ता एकोनविंशतिः। निपातनाद् गुणाभावः। ऋज्रो नायकः। इदि इन्द्रः। अङ्गेर्नलोपः। अग्रम्। 'वज्रोऽस्त्री हीरके पवौ'। डुवप्, उपधाया ह्रस्वम्। विप्रः। कुम्बिचुम्ब्योर्नलोपः। कुब्रमरण्यम्। चुब्रं मुखम्। 'क्षुर विलेखने'। रेफ लोपः। खण्डनः। क्षुरः। 'खुर छेदने'। रलोपो गुणाभावश्च। खुरः। भन्देर्नलोपः। भद्रम्। 'उच समवाये'। चस्य गः। उग्रः। ञिभी-भेरी। पक्षे लः। भेलो जलतरणद्रव्यम्। शुचेश्चस्य कः। शुक्रः। पक्षे लः। शुक्लाः। गुङ्—वृद्धिः। 'गौरोऽरुणे सिते पीते'। 'वन संभक्तौ'। वन्रो विभागी। इणो गणाभावः। 'इरा मद्ये च वारिणि'। 'मा माने'—माला।

गौरीऽरुणे इति। 'गौरीलसञ्जातरजः कन्याशङ्करभार्ययोः' इति मेदिनी। 'नदीभेदे च गौरी स्यादरुणस्य च योषिति' इति विश्वः। 'अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते। सा गौरी तत्सुतो यस्तु स गौरः परिकीर्तितः' इति ब्रह्माण्डपुराणे। गौरः शुद्धाचार इति भाष्यम्। मालेति। प्रत्ययरेफस्य लत्वम्। 'मालं चैत्रे स्त्रियां पुष्पादन्योऽन्यत्र पुमान्' इति मेदिनी।

१८७। समि कस उकन् ॥२।३०॥

टी—। 'कस गतौ'। सम्यक् कसति पलायन्तेजना अस्माद् इति सङ्कसुको दुर्जनः, अस्थिरश्च। ('सङ्कसुकोऽस्थिरः' इत्यमरः)।

१८८। पचिनशोर्णुकन् कनुमौ च ॥२।३१॥

टी—। पचे कः। पाकुकः सूपकारः। नशेर्नुम्। नंशुकः।

१८९। भियः क्रुकन् ॥२।३२॥

टी—। भीरुकः। ('भियः क्रुक्लुकनौ' (३१५५) इत्यत्र 'क्रुकन्नपि वाच्य' इति वार्तिकम्)।

१९०। क्वुन् शिल्पिसंज्ञयोरपूर्वस्यापि ॥२।३३॥

टी—। रजकः। इक्षुकुट्टकः। चरकः। 'चष भक्षणे'। चषकः। स्तवकः। भषकः।

मित—। शिल्पिनि अभिधेये संज्ञायां च गम्यायां धातोः क्वुन्प्रत्ययः स्यादपूर्वस्य निरुपपदस्य अपिशब्दात् सोपपदस्य चेत्यर्थः। पञ्चम्यर्थे षष्ठी। यद्वा षष्ठ्यर्थकारकसम्बन्धे षष्ठी। प्रकृतिप्रत्यययोः क्रियाकारकभावात्। एवं च निरुपपदप्रकृत्यर्थनिरूपित-कर्तृकारके क्वुन्नित्याद्यर्थः। शिल्पिनि उदाहरति—रजक इत्यादि। संज्ञायां चषक

इत्यादि। 'चषकोऽस्त्रीं पानपात्रम्' इत्यमरः। शुन गतौ। भष भर्त्सने। शुनकः भषकः श्वा।

१८१। रमेरश्च लो वा ॥२।३४॥

टी—। रमको विलासी। लमकः।

१८२। जहातेर्द्वे च ॥२।३५॥

टी—। जहकस्त्यागी कालश्च। (द्वित्वं चात् क्वुन्)।

१८३। ध्मो धम च ॥२।३६॥

टी—। धमकः कर्मकारः।

१८४। हनवध च ॥२।३७॥

टी—। वधकः। (क्वुनि परे हन्तेर्वधादेशः)।

१८५। बहुलमन्यत्रापि ॥२।३८॥

टी—। 'कुह विस्मापने'। कुहकः। क्षतकम्।

१८६। कृषेर्वृद्धिश्चोदीचाम ॥२।३९॥

टी—। कार्षकः—कर्षकः।

मित—। उदीचामिति विकल्पार्थम्। कार्षकः कृषीवलः। सच कृषकः। 'कृषकः पुंसि काले स्यात् कार्षके त्वभिधेयवत्' मेदिनी

१८७। उदकं च ॥२।४०॥

टी—। प्रपञ्चार्थम्।

मित—। उन्दी क्लेदने। अस्माच्च 'क्वुन् शिल्पि—' इत्येव सिद्धे आह—प्रपञ्चार्थमिति।

१८८। वृश्चिकृषयोः किकन् ॥२।४१॥

टी—। वृश्चिकः। कृषिकः।

१९९। प्राङ्‌ पणिकषः ॥२।४२॥

टी—। प्रापणिकः पण्यविक्रयी। प्राकषिकः परदारोपजीवी।

मित—। पण व्यवहारे। कष हिंसार्थकः। प्रापूर्वाभ्यामाभ्यां किकन् (इक) प्रत्ययः स्यात् कर्त्तरि। परदारोपजीवीति—जार इत्यर्थः।

२००। मुषेर्दीर्घं च ॥२।४३॥

टी—। मूषिकः आखुः।

मित—। मुषस्तेये। अस्मात् किकनि स्वरदीर्घः।

२०१। स्यमेः संप्रसारणं च ॥२।४४॥

टी—। चाद्दीर्घः। सीमिको वृक्षभेदः।

२०२। क्रिय इकन् ॥२।४५॥

टी—। क्रयिकः क्रेता।

२०३। आङि पणिपनिपतिखनिभ्यः ॥२।४६॥

टी—। आपणिकः। आपनिकः इन्द्रनीलः किरातश्च। आपतिकः श्येनो दैवायत्तश्च। आखनिको मूषिको वराहश्च।

२०४। श्यास्त्याहृञ्‌विभ्य इनच् ॥२।४७॥

टी—। श्येनः। स्त्येनः। हरिणः। अविनोऽध्वर्युः।

मित—। श्यैङ् गतौ, स्त्यै ष्ट्यै शब्दसंघातयोः, हृञ् हरणे अवरक्षणादौ। 'श्येनः पक्षिणि पाण्डुरे' इति मेदिनी। स्त्येनश्चौरः। स्तेन चौर्य्ये इति चौरादिकात् पचाद्यचि तु स्तेन इति यकाररहितोऽपि। केचित्तु 'स्तायूनां पतये नमः' इत्यादि प्रयोगदर्शनात् माधवादिभिर्निर्यकारस्यापि स्वीकृतत्वात् स्तेन इत्येवेत्याहुः। 'हरिणः पाण्डुरः पाण्डु'रित्यमरः। पशुभेदश्च।

२०५। वृजेः किच्च ॥२।४८॥

टी—। वृजिनम्।

मित—। वृजी वर्जने। वृजिनं पापम्। 'सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि—' इति श्रीमद्भगवद्गीतायाम्।

२०६। अजेरज च ॥२।४८॥

दी—। वीभावबाधानार्थम्। अजिनम्।

मित—। अज गतिक्षेपणयोः। अस्मादिनच्प्रत्ययः स्यात्। अजेरज्यादेश-विधानमत्र किमर्थमित्यत आह—वीभावबाधनार्थमिति। अन्यथा 'अजेर्व्यघञपोः' इत्यनेन वीभावः स्यात्। 'अजिनं चर्म कृत्तिः स्त्री' इत्यमरः।

२०७। बहुलमन्यत्रापि ॥२।५०॥

दी—। कठिनम्। नलिनम्। मलिनम्। कुण्डिनम्। द्यतेः='यत् परुषि दिनम्'। दिवसोऽपि दिनम्।

मित—। बाहुलकादन्यस्मादपि धातोरिनच्। कठ कृच्छ्रजीवने। णल गन्धे। मल मल्ल धारणे। कुडि दाहे। दोऽवखण्डने। 'कठिनमपि निष्ठुरे स्यात् स्त्र्यां तु नपुंसके स्थाल्याम्। कठिनी खटिकायामपि कठिना गुडशर्करायामिति' इति मेदिनी 'मलिनं दूषिते कृष्णे ऋतुमत्यां तु योषिति' इति च। कुण्डिनो ऋषिः। तस्यापत्यं कौण्डिन्यः। 'तक्रकौण्डिन्यन्याय' इति भाष्यम्। ['नगरं कुण्डिनमण्डपे ययौ' श्रीहर्षः]। यत्परुषीति। परुषि पर्वणि यत् दिनम् खण्डितमित्यर्थः। तैत्तिरीयश्रुतेरिदं वचनम्। लोके वेदे च दिवसोऽपि।

२०८। द्रुदक्षिभ्यामिनन् ॥२।५१॥

दी—। द्रविणम्। दक्षिणः। दक्षिणा।

मित—। द्रु गतौ। दक्ष वृद्धौ। 'द्रविणं ना द्वयोर्वित्ते काञ्चने च पराक्रमे' इति मेदिनी। 'दक्षिणः सरलोदारपरच्छन्दानुवर्तिषु। वाच्यवद्दक्षिणावाची यज्ञदान-प्रतिष्ठयोः' इति विश्वः।

२०९। ऋतेः किदिच्च ॥२।५२॥

दी—। इरिणं शून्यम्। (इरिणं शून्यमूषरमित्यमरः)।

मित—। ऋ गतौ। अस्मादिनन्। स च कित् स्यात्। धातोरिकारश्चादेः। रपरत्वम्।

२१०। वेपितुह्योर्ह्रस्वश्च ॥२।५३॥

टी—। विपिनम्। तुहिनम्।

२११। तलिपुलिभ्यां च ॥२।५४॥

टी—। 'तलिनं विरले स्तोके स्वच्छेऽपि तलिनं त्रिषु'। पुलिनम्। ( तल प्रतिष्ठायां पुल महत्त्वे। आभ्यामिनन् )।

२१२। गर्वेरत उच्च ॥२।५५॥

टी—। गौरादित्वात्ङीष्। गुर्विणी गर्भिणी।

२१३। रुहेश्च ॥२।५६॥

टी—। रौहिणः। ( प्रज्ञादित्वादणि रौहिणश्चन्दनतरुः )।

२१४। महेरिनण् च ॥२।५७॥

टी—। चादिनन्। माहिनम्—महिनम् राज्यम्।

इति। मह पूजायामित्यस्मादिनन् इनण् च प्रत्ययौ। माहिनं राज्यमिति। 'पृथिव्या इन्द्र सदनेषु माहिनः' इत्येस्मिन् मन्त्रे माहिनः प्रवृद्ध इति वेदभाष्यम्। अत उपधाया इति णित्पक्षे उपधावृद्धिः।

२१५। क्विब्वचिप्रच्छिश्रिस्रुद्रुप्रुज्वां दीर्घोऽसम्प्रसारणं च ॥२।५८॥

टी—। वाक्। प्राट्। श्रीः। स्रवत्यतो घृतादिकमिति स्रूर्यज्ञोपकरणम्। द्रूर्हिरण्यम्। कटप्रूः कामरूपी कीटश्च। 'जूराकाशे सरस्वत्यां पिशाच्यां जवने स्त्रियाम्'।

मित—। वच परिभाषणे। प्रच्छ ज्ञीप्सायाम्। श्रिञ् सेवायाम्। स्रु गतौ। द्रु गतौ। प्रु ङ गतौ। ज्वु गतौ सौत्रोऽयम्। एभ्यः क्विप् स्यादेषामुपधादेर्दीर्घः

स्यात् सम्प्रसारणं तु न। वागिति। वक्तीति वाक्। 'वचिस्वपि—' इति सम्प्रसारणाभावः। प्राडिति—पृच्छति प्राट्। 'ग्रहिज्या—' इति सम्प्रसारणाभावः। 'च्छ्वोः शूट्—' इति शः। तस्य 'व्रश्च—' इति षत्वे जश्त्वचर्त्वे। श्रीरिति। श्रयतीति श्रीः। 'कृदिकारात्—' इति ङीष् तु न। कृत्प्रत्ययो य इकार इति व्याख्यानात्। कृदन्तं यदिकारान्तमिति पक्षे तु यद्यपि ङीष्प्राप्तिरस्ति तथापि कारग्रहणसामर्थ्येन केवलस्येकारस्य ग्रहणादिकारस्य पक्षो दुर्बल इत्याहुः। दुर्घटस्तु ङीषि श्रीमत्यपि रचति इच्छतीत्याह। 'श्रीर्वेषरचना-शोभा-भारती-सरलद्रुमे। लक्ष्म्यां त्रिवर्गसम्पत्तिविधोपकरणेषु च। विभूतौ च मतौ च स्त्री' इति मेदिनी। लूरित्यादि मूलोदाहृतम्। 'अन्येभ्योऽपि दृश्यते' (३१५८) इति सूत्रे 'क्विब्वचि—' इति वार्तिकमपि प्रायेणैवम्।

२१६। आप्नोतेर्ह्रस्वश्च ॥२।५८॥

दी—। आपः। अपः। अद्भिः। अद्भ्यः। (चात् क्विप्)।

२१७। परौ व्रजेः षः पदान्ते ॥२।६०॥

दी—। व्रजेः क्विब्दीर्घौ स्तः। पदान्ते तु षश्च। परिव्राट्। परिव्राजौ। ('व्रश्च—' इत्यप्राप्ते षत्वे इति वचनम्)।

२१८। हुवः श्लुवच्च ॥२।६१॥

दी—। जुहूः।

२१९। स्रुवः कः ॥२।६२॥

दी—। स्रुवः। (स्रु गतौ उवङ्। स्रुवो यज्ञपात्रम्)।

२२०। चिक् च ॥२।६३॥

दी—। इकार उच्चारणार्थः। क इत्। कुत्वम्। स्रुक्।
'स्रुवं च स्रुचश्च सम्मृड्ढि'।

मित—। स्रुव इत्येव। योगविभाग उत्तरार्थः।

२२१। तनोतेरनश्च वः ॥२।६४॥

दी—। तनोतेश्चिक् प्रत्ययः। अनो वशब्दादेशश्च—त्वक्।

२२२। ग्लानुदिभ्यां डौः ॥२।६५॥

दी—। ग्लौः। नौः।

२२३। च्विरव्ययम् ॥२।६६॥

दी—। डौरित्येव। ग्लौ करोति। 'कृन्मेजन्तः' (४४८) इति सिद्धे नियमार्थमिदम्। उणादिप्रत्ययान्तस्यान्त एवेति।

२२४। रातेर्डैः ॥२।६७॥

दी—। राः। रायौ। रायः। (रादाने। रै इति शब्दः)।

२२५। गमेर्डोः ॥२।६८॥

दी—। गौर्नादित्ये बलीवर्दे किरणक्रतुभेदयोः। स्त्री तु स्यादुदिशि जरत्यां भूमौ च सुरभावपि। 'नृस्त्रियोः स्वर्ग-वज्राम्बु रश्मिदृग्बाणलोमसु' (इति केशवः)। 'द्यौः स्त्री स्वर्गान्तरिक्षयोः' इति कोशः।

मित—। गौरिति। 'गोतो णित्' इति णिद्वचनाद् वृद्धिः। बाहुलकाद् द्युतेरपीत्याहुः—द्यौरिति। द्योतन्तेदेवा अस्यामित्यधिकरणे द्योतत इति कर्तरि प्रत्ययः।

२२६। भ्रमेश्च डूः ॥२।६९॥

दी—। भ्रूः। चाद्गमेः। अग्रेगूः। (अग्रेगूः सेवकः)।

२२७। दमेर्डोसिः ॥२।७०॥

दी—। दोः। दोषौ।

मित—। दमयतीत्युपशमयतीति दोर्बाहुः। 'दोर्दोषा भुजो बाहुः' इति धनञ्जयः।

२२८। पणेरिज्यादेश्च वः ॥२।७१॥

दी—। वणिक्। स्वार्थेऽण्। 'नैगमो वाणिजो वणिक्'।

२२९। वशेः कित् ॥२।७२॥

दी—। 'उशिगग्नौ घृतेऽपि च'।

मित—। वशेरुत्तरम् इच् प्रत्ययः कित्। तेन ग्रहिज्येति सम्प्रसारणम्। उशिगग्नाविति। 'निरमन्थन्नुशिक्‌चया' इत्यत्र उशिक् वह्निरिति श्रीधरस्वामिपादाः। वश कान्तौ अस्मादिनः किदिति व्याचक्षाणा तत्त्वबोधिनी उपेक्ष्या। पूर्वत्र इनि प्रत्ययानुवृत्तेरत्र तदनुवृत्तेरभावादिति ध्येयम्।

२३०। भुव ऊच्च ॥२।७३॥

दी—भूरिक् भूमिः।

मित—। भुव् भवने। अस्मादिच् प्रत्ययः। अस्यादेश ऊकारादेशः। अस्मादपि इनिः किदिति व्याचक्षाणा तत्त्वबोधिनी हेयैव अतत्त्वबोधनत्वात्।

२३१। जसिसहोरुरिन् ॥२।७४॥

दी—। जसुरिर्वज्रम्। सहुरिरादित्यः पृथिवी च।

२३२। सुयुरुवृञो युच्।

दी—। सवनश्चन्द्रमाः। यवनः। रवणः कोकिलः। वरणः।

मित—। 'प्राकारो वरणः सालः—' इत्यमरः। युजिति। 'युवोरनाकौ' इत्यनादेशः। गुणः।

२३३। अशेरश च ॥२।७६॥

दी—। अश्नोतेर्युच् स्यात् रशादेशश्च। रशना काञ्ची। जिह्वावाची तु दन्त्यसकारवान्।

मित—। अशू व्याप्तौ। अश्नोति व्याप्नोति कटिमिति। जिह्वेति। रस आस्वादने इत्यस्माद् युच्।

२३४। उन्देर्नलोपश्च ॥२।७७॥

दी—। ओदनः। (चाद् युच प्रत्ययः)।

मित—। 'ओदनं न स्त्रियां भक्ते बलायामोदनी स्त्रियाम्' इति मेदिनी।

२३५। गमेर्गश्च ॥२।७८॥

दी—। गमेर्युच् स्याद् गश्चादेशः। गगनम्।

२३६। बहुलमन्यत्रापि ॥२।७९॥

दी—। युच् स्यात्। स्यन्दनः। रोचना।

मित—। 'स्यन्दनं तु स्रुती नीरे तिनिशे रथेऽस्त्रियाम्' इति मेदिनी। 'रोचना रक्तकह्लारगोपित्तवरयोषितोः। रोचनः कूटशाल्मल्यां पुंसि स्यादोचकेऽपि त्रिषु इति च'। एवं चदि आह्लादने। चन्दन—चन्दनम्। असु क्षेपणे। असनम्। एवमन्येऽपि।

२३७। रञ्जेः क्युन् ॥२।८०॥

दी—। रजनम्।

२३८। भूसूधूभ्रस्जिभ्यश्छन्दसि ॥२।८१॥

दी—। भुवनम्। सुवनः आदित्यः। धुवनोवह्निः। निधुवनं सुरतम्। भृज्जनमम्बरीषम्।

मित—। छन्दसीति। बहुलग्रहणाद् भाषायामपि। 'भुवनं विष्टपेऽपि स्यात् सलिले गगने जले'ति मेदिनी। 'विष्टपं भुवनं जगत्' इत्यमरः। 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना'इत्यमरः।

२३९। कॄ पॄ वृजिमन्दिनिधाञः क्युः ॥२।८२॥

दी—। किरणः। पुरणः समुद्रः। वृजनमन्तरिक्षम्। मन्दनं स्तोत्रम्। निधनम्। ('निधनं स्यात् कुले नाशे' इति मेदिनी)। निधनं कुलनाशयोरिति हेमचन्द्रः।

२४० । धृषिशिषि च संज्ञायाम् ॥२।८३॥

टी—। धिषणो गुरुः । धिषणा धीः ।

२४१ । वर्तमाने पृषद्बृहन्महज्जगच्छतृवच्च ॥२।८४॥

टी—। अतिप्रत्ययान्ताः । 'पृषु सेचने' । गुणाभावः । पृषन्ति । बृहत् । महान् । गमेर्जगादेशः ॥ जगत् ।

मिति—। एषाम् अतिप्रत्ययान्तानां शतृप्रत्ययान्तत्वाद् वर्तमान इति । शतृवद्भावाद् 'उगिदचाम्' इति नुम् । अतो बहुवचनमाह—पृषन्तीति । बृहत्—बृहती—बृहन्ति । महानिति—स्त्रियां तु महती नारदीया वीणा । 'उगितश्च' इति ङीप् । 'अवेक्षमाणं महतीं मुहुर्मुहुरि'ति माघः । 'जगत् स्याद्विष्टपे क्लीबं वायौ ना जङ्गमे त्रिषु । जगती भुवने क्ष्मायां छन्दोभेदे जनेऽपि च' ॥ इति मेदिन्यां वायुवाचिनः पुंलिङ्गस्य नुमि—जगन् जगन्तौ जगन्तः इत्यादि । 'द्युगमिजुहोतीनां द्वे च' ('अन्येभ्योऽपि—' इत्यधस्ताद् वार्तिकम् ) इति व्युत्पादितस्य तु नुमभावाद् जगत्—जगती इत्यादि भूभृद्वत् । सूत्रे अतिप्रत्ययान्ता इति सामर्थ्याल्लभ्यत इति ध्येयम् ।

२४२ । संश्चत्तृपद्वेहत् ॥२।८५॥

टी—। एते निपात्यन्ते । पृथक्करणं शतृवद्भावनिवृत्त्यर्थम् । सञ्चिनोतेः सुट् । इकारलोपः । संश्चत् कुहकः । तृपत् छत्रम् । विपूर्वाद् हन्तेष्टिलोपः इत एच । 'वेहद् गर्भोपघातिनी' ।

मित—। एते निपात्यन्त इति । अतिप्रत्ययान्ता इति शेषः । शतृवद्भावनिवृत्त्यर्थमिति । एवं चैषु 'उगिदचाम्—' इति नुमागमो न । तृपच्छत्रमिति । चन्द्रमा इत्यन्ये । इत एचेति । वि इत्युपसर्गस्थस्येकारस्येत्यर्थः । वेहद् गर्भोपघातिनीति । अमरादिदम् । विहन्ति गर्भमिति विग्रहः ।

२४३ । छन्दस्यसानच्शृजृभ्याम् ॥२।८६॥

टी—। शवसानः पन्थाः । जरसानः पुरुषः ।

२४४। ऋञ्जिवृधिमन्दिसहिभ्यः कित् ॥२।८७॥

दी—। ऋञ्जसानो मेघः। वृधसानः पुरुषः। मन्दसानोऽग्नि-जीवश्च। सहसानो यज्ञो मयूरश्च।

मित—। छन्दसीत्यनुवर्तते। ऋजि भर्जने। वृधु वृद्धौ। मदि स्तुत्यादौ। षह मर्षणे। एभ्यः असानच् प्रत्ययः स्याच्छन्दसि विषये। स च प्रत्ययः कित् स्यात्। ऋञ्जसानो मेघ इति। 'रैवो न ऋञ्जसान तनाय' इत्यत्र वेदभाष्ये त्वन्यथाऽयं व्याख्यातः। कित्त्वात् सर्वत्र गुणाभावः।

२४५। अर्त्तेर्गुणः शुट् च ॥२।८८॥

दी—। अर्शसानोऽग्निः।

मित—। ऋ गतौ इत्यस्माद्धातोरसानच् प्रत्ययः स्यात्। धातोर्गुणः शुडागमश्च। छन्दसीत्येव।

२४६। सम्यानच् स्तुवः ॥२।८९॥

दी—। संस्तवानो वाग्मी।

मित—। समि उपपदे ष्टुञ् स्तुतावित्यस्मादानच् स्याच्छन्दसि। गुणः। बाहुलकात् केवलादप्यानच्। स्तवान इति वेदभाष्यम्।

२४७। युधिबुधिदृशिभ्यः किच्च ॥२।९०॥

दी—। युधानः। बुधानः। दृशानः लोकपालकः।

मित—। एभ्योऽसानच्। स च कित्। बाहुलकात् कृपेरपि कृपाणः खड्गः। 'कृपाणेन कयद्वारं कृपणः सह गच्छति। परेषां दानसमये यः स्वकोशं विमुञ्चति।

२४८। हुर्छेः सनो लुक् छलोपश्च ॥२।९१॥

दी—। जुहुराणश्चन्द्रमाः।

मित—। हुर्च्छा कौटिल्ये। अस्माद सन्नन्तादानच् स्यात्। सनो लुक् धातोश्छलोपश्च कित्त्वाद्गुणो न गुणः। जुहुराणश्चन्द्रमा इति। 'युयोध्यस्मज्जुहुराण-मेनः' इत्यस्मिन् मन्त्रे जुहुराणं कौटिल्यकारीति वेदभाष्यम्। [युयोधि पृथक् कुरु]।

२४८। श्वितेर्दश्च ॥२।८२॥

दी—। श्विश्विदानः पुण्यकर्मा।

मित—। श्वितावर्ये। अस्मात् सन्नन्तादानच्, सनो लुक्, तकारस्य दकारश्च। किदित्यनुवृत्तेर्नगुणः। पुण्यकर्मेति। 'श्विश्विदानोऽकृष्णकर्मा' इत्यमरः। 'अकृष्ण' शुक्लं शुद्धमित्यर्थः। कृष्णकर्मेति पाठान्तरे तु विपरीतार्थः।

२५०। तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ ॥२।८३॥

दी—। शंसेः क्षदादिभ्यश्च क्रमात्तृन्तृचौ स्तः। तौ चानिटौ। शंस्ता स्तोता—शंस्तारौ—शंस्तारः। क्षदिः सौत्रो धातुः शकलीकरणे भक्षणे च। अनुदात्तेत्। 'तुक्ये चक्षदानम्' इति मन्त्रात्। 'उच्चाणं वा वेहतं वा क्षदन्ते' इति ब्राह्मणाच्च। 'क्षत्ता स्यात् सारथौ द्वाःस्थे वैश्यायामपि शूद्रजे'। (इति कोशः)।

२५१। बहुलमन्यत्रापि ॥ २।८४ ॥

दी—। मन्—मन्ता। हन्—हन्ता इत्यादि। (तृन्-तृचाविति शेषः)।

२५२। नप्तृनेष्टृ त्वष्टृ होतृपोतृभ्रातृजामातृमातृपितृदुहितृ- ॥ २।८५ ॥

दी—। नपतन्त्यनेन पितरो इति नप्ता पौत्रो दौहित्रश्च। नयतेः षुग् गुणश्च। नेष्टा। त्विषेरितोऽत्वम्। त्वष्टा। होता। पोता ऋत्विग्भेदः। भ्राता। जायां माति जामाता। 'मान पूजायाम्' नलोपः। माता। पातेराकारस्येत्वम्। पिता। दुहेस्तृच्। इट् गुणाभावश्च। दुहिता।

मित—। नप्त्रिति। एते दश तृजन्ता निपात्यन्ते। नञः प्रकृतिभावः। पत गतावित्यस्मात्तृच्। टिलोपः। णीञ् प्रापणे। त्विष दीप्तौ। हु दानादानयोः।

पूञ् पवने। भ्राजृ दीप्तौ। मा माने। मान पूजायाम्। पा रक्षणे। दुह पूरणे इति क्रमेण धातवः। नेष्ट नेता। जायां मातीत्यन्तर्भावितण्यर्थः।

२५३। सुञ्यसेर्ऋन्॥ २।८६॥

टी—। स्वसा।

मित—। असु क्षेपणे। अस दीप्त्यादिषु। सुञि उपपदे आभ्याम् ऋन्प्रत्ययः स्यात् (सु+अस्+ऋण्)। [ स्यावसेरित्यत्र पाठान्तरम् इति तत्त्वबोधिनी ]।

२५४। यतेर्वृद्धिश्च॥ २।८७॥

टी—। याता। 'भार्यास्तु भ्रातृवर्गस्य यातारः स्युः परस्परम्' (इत्यमरः)। (यती प्रयत्ने। अस्मादृन्। उपधा वृद्धिः)।

२५५। नञि च नन्देः॥ २।८८॥

टी—। न नन्दति ननान्दा। इह वृद्धिर्नानुवर्तत इत्येके। 'ननान्दा तु स्वसा पत्युर्ननन्दा नन्दिनी च सा' इति शब्दार्णवः।

२५६। दिवेर्ऋः॥ २।८९॥

टी—। देवा। देवरः। 'स्वामिनो देवृदेवरौ'। (इत्यमरः)

२५७। नयतेर्डिच्च॥ २।१००॥

टी—। ना। नरौ। नरः। (नी+ऋ। प्रत्ययस्य डित्त्वाट्टिलोपः)

२५८। सव्ये स्थश्छन्दसि॥ २।१०१॥

टी—। 'अम्बाम्ब—' (२८१८) इत्यत्र 'स्थास्थिन् स्थूणामुपसंख्यानम्' (वार्तिक) इति। सव्येष्ठा सारथिः। सव्येष्ठरौ। सव्येष्ठरः।

मित—। 'सव्ये' उपपदे स्थाधातोः प्रत्ययश्छन्दसि विषये। स च डित्। 'तत्पुरुषे कृति—' इति सप्तम्या अलुक्।

२५८। अर्तिसृधृधम्यम्यश्यवितृभ्योऽनिः ॥ २।१०२ ॥

दी—। अष्टभ्योऽनिप्रत्ययः स्यात्। अरणिरग्नेर्योनिः। सरणिः। धरणिः। धमनिः। अमनिर्गतिः। अशनिः। अवनिः। तरणिः। बहुलकाद्रजनिः।

मित—। अत्र 'धमि' इति सौत्रो धातुर्न तु ध्माधातोर्धमादेशः। 'सरणिः श्रेणिवर्त्मनोः' इति रभसः। बाहुलकात् शरणिः। 'सरणिः पथि चावली' इत्यमरः। धमनी शिरा हट्टविलासिन्याश्चयोषिति।

२६०। आङि शुषेः सनश्छन्दसि ॥ २।८० ॥

दी—। आशुशुक्षणिरग्निर्वातश्च।

मित—। आङ्पूर्वात् सन्नन्ताच्च शुष शोषणे इत्यस्मादनिप्रत्ययः। 'शिखावान् आशुशुक्षणि'रिति।

२६१। कृषेरादेश्च चः ॥ २।१०४ ॥

दी—। चर्षणिर्जनः।

मित—। कृषेरनिप्रत्ययः। तस्य गुणादुत्तरं ककारस्थाने चादेशः। चर्षणिर्जन इति। वैदिकनिघण्टौ चर्षणिशब्दस्य मनुष्यनामसु पाठात्। चर्षणीधृतः इत्यादौ तथैव तत्रस्थ भाष्ये व्याख्यानाच्च।

२६२। अदेर्मुट् च ॥ २।१०५ ॥

दी—। अद्मनिः अग्निः। ( चादनिप्रत्ययः )।

२६३। वृतेश्च ॥ २।१०६ ॥

दी—। वर्तनिः। गोवर्धनस्तु चकारान्मुट् वर्त्मनिरित्याह।

मित—। वर्तनिरिति। 'कृदिकारात्—' इति पक्षे ङीष्। 'सरणिः पद्धतिः पद्या वर्तन्येकपदीति च' इत्यमरः।

२६४। त्विषेः किच्च ॥ २।१०७ ॥

टी—। त्विषिर्गिरायुधम्।

२६५। अर्चिशुचिहुसृपिछादिछर्दिभ्य इसिः ॥ २।१०८ ॥

अर्चिर्ज्वाला। इदन्तोऽप्ययम्। 'अग्नेर्भ्राजन्ते अर्चयः'। शोचिर्दीप्तिः। हविः। सर्पिः। 'इस्मन्—' इति ह्रस्वः। छदिः पटलम्। छर्दिर्वमनव्याधिः। इदन्तोऽपि। 'छर्द्यतीसारशूलवान्'।

२६६ बृंहेर्नलोपश्च ॥ २।१०९ ॥

टी—। 'बर्हिर्ना कुशशुष्मणोः'।

मित—। नलोपश्चेति। चात् इसिः (इस्प्रत्ययः)। बृहि वृद्धौ इति धातुः। कुशशुष्मणोरिति। शुष्मेति अग्निरित्यमरे स्पष्टम्।

२६७। द्युतेरिसिन्नादेश्च जः ॥ २।११० ॥

टी—। ज्योतिः।

मित—। आदेश्चेति। दकारमात्रस्य जकारः ततो गुणः। 'ज्योतिरग्नौ दिनकरे। पुमान्नपुंसकं दृष्टौ स्यान्नक्षत्रप्रकाशयोः' इति मेदिनी।

२६८। वसौ रुचेः संज्ञायाम् ॥ २।१११ ॥

टी—। वसुरोचिर्यज्ञः। (बाहुलकात्केवलादपि। रोचिर्दीप्तिः)।

२६९। भुवः कित् ॥ २।११२ ॥

टी—। भुविः समुद्रः।

मित—। भवतेरिसिन् (इस्) प्रत्ययः। स च किद् भवति।

२७०। सहो धश्च ॥ २।११३ ॥

टी—। सधिरनड्वान्।

२७१। पिबतेस्थुक् ॥ २।११४ ॥

दी—। 'पाथिश्चक्षुः समुद्रयोः'।

मित—। पा पानेऽस्मादिनि परे धातोस्थुक् (थ्) आगमः।

२७२। जनेरुसिः ॥ २।११५ ॥

दी—। जनुर्जननम्। ('जनुर्जननजन्मानि' इत्यमरः)।

२७३। मनेर्धश्छन्दसि ॥ २।११६ ॥

दी—। मधुः। (उसिप्रत्ययः। धश्चान्तादेशः। मधुः पवित्रद्रव्यम्)।

२७४। अर्ति-पॄ-वपि-यजि-तनि-धनि-तपिभ्यो नित् ॥२।११७

दी—। अरुः। परुर्ग्रन्थिः। वपुः। यजुः। तनुः—तनुषी-तनूंषि। धनुरस्त्रियाम्। 'धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति'। सान्तस्योदन्तस्य वा रूपम्। तपुः सूर्याग्निशत्रुषु।

मित—। ऋ गतौ। पॄ पालनपूरणयोः। डुवप् बीजसन्ताने। यज देवपूजादौ। तनु विस्तारे। धन धान्ये। तप सन्तापे। एभ्य उसिप्रत्ययो नित् आद्युदात्त इत्यर्थः। मरुन्नर्म्मणः। 'स्यात्तनुस्तनुषा सार्धं धनुषा च धनुर्विदुरिति द्विरूपेषु विश्वः। 'अथास्त्रियां धनुश्चापौ' इत्यमरः। सान्तस्योदन्तस्य चेति सान्तपक्षे 'उद्देश्यविधेययोर्लिङ्गवचनतन्त्रता नास्ति' तिवचनाद् विशेष्यविशेषणयोर्विभिन्नलिङ्गता।

२७५। एतेर्णिच्च ॥ २।११८ ॥

दी—। आयुः—आयुषी। (चादुसिप्रत्ययः। णित्त्वाद् वृद्धिः)।

२७६। चक्षेः शिच्च ॥ २।११९

दी—। चक्षुः। (चादुस् प्रत्ययः)।

मित—। श्वित्वेन सार्वधातुकत्वात् 'चक्षिङः ख्याञ्' इति ख्याञादेशो न। तस्यार्धधातुकमात्रविषयत्वात्। चष्टेरूपमनुभवत्यनेनेति चक्षुः।

२७७। मुहेः किच्च ॥ २।१२० ॥

टी—। मुहुरव्ययम्।

मित—। मुह वैचित्ये। अस्मादुस्। स च कित्। अगुणः। 'मुहुः पुनः पुनः सकृत् अभीक्ष्णं सकृत् समाः' इत्यमरः।

२७८। बहुलमन्यत्रापि ॥ २।१२१ ॥

टी—। आचक्षुः। परिचक्षुः।

मित—। सूत्रमेतन्न्यासकृता परित्यक्तमपि तत्त्वबोधिनीकारबालमनोरमाकाराभ्यां सूत्रे सन्निविष्टं दृश्यते। ततश्चास्माभिरप्यत्रोपन्यस्तम्। 'अस्मात् परं ('मुहेः किच्च इत्यस्मात्) परं 'बहुलमन्यत्रापि' (२।१२१) इति सूत्रं स्य 'तत्त्वम्' इति प्रौढमनोरमा।

२७९। कृगृशृवृञ्चतिभ्यः ष्वरच् ॥ २।१२२ ॥

टी—। 'कर्वरो व्याघ्ररक्षसोः'। गर्वरोऽहङ्कारी। शर्वरी रात्रिः। 'बर्वरः प्राकृतो जनः'। चत्वरम्।

मित—। कॄ विक्षेपे। गॄ निगरणे। शॄ हिंसायाम्। वृञ् वरणेचत याचने।

२८०। नौ सदेः ॥ २।१२३ ॥

टी—। 'निषद्वरस्तु जम्बालः'। निषद्वरी रात्रिः (ष्वरजनुवर्तते। सदिरप्रतेरिति षत्वम्)।

मित—। 'निषद्वर। स्मरे पङ्के निशायान्तु निषद्वरी'ति मेदिनी।

## ॥ अथ तृतीयः पादः ॥

२८१ । क्षित्वरक्षत्वरधीवरपीवरमीवरचीवरतीवरनीवरगह्वरकट्वरसंयद्वराः ॥ ३।१॥

टी—। एकादश ष्वरच् प्रत्ययान्ता निपात्यन्ते। 'क्ष्विदिर्' 'क्षद' अनयोस्तकारोऽन्तादेशः। क्ष्विदेर्गुणाभावश्च। क्ष्वित्वरो धूर्त्तः। 'क्षत्वरी गृहकुञ्जयोः'। धीवरः कैवर्तः। पीवरः स्थूलः। चिनोतेर्दीर्घश्च। चीवरं भिक्षुकप्रावरणम्। तीवरो जातिविशेषः। नीवरः परिव्राट्। गाहतेर्ह्रस्वत्वम्। गह्वरम्। कटे वर्षादौ। कट्वरं व्यञ्जनम्। यमेर्दकारः। संयद्वरो नृपः। पदेः सम्पद्वर इत्येके।

मित—। अथोणादिषु तृतीयः पाद आरभ्यते। पूर्वपादादुपान्तिमसूत्रात् 'कृ गृ शृ—' (२।१२२) इत्यतः ष्वरच्प्रत्ययोऽनुवर्तते। तदाह—एकादश ष्वरच्—प्रत्ययान्ता इति।

२८२ । इण् सिञ्जिदीङुष्यविभ्यो नक् ॥ ३।२ ॥

टी—। 'इनः सूर्ये नृपे पत्यौ'। सिनः काणः। जिनः अर्हन्। दीनः। उष्णः। ऊनः।

मित—। इन् गतौ। षिञ् बन्धने। जि जये। दीङ् क्षये। उष दाहे। अवरक्षणे। जिनः अर्हन्निति। ऊन इति—ऊनो हीनः असम्पूर्णे च। 'ऊन सलेष्वधिको बबाधे' (रघु—२य)। 'ज्वरत्वर—' इत्यूठ्।

२८३ । फेनमीनौ ॥ ३।३ ॥

टी—। एतौ निपात्येते। स्फायतेः फेनः। मीनः।

मित—। एताविति। नक्प्रत्ययान्ताविति शेषः। स्फायी वृद्धौ।

२८४। कृषेर्वर्णे ॥ ३।४ ॥

दी—। कृष्णः। (कृष विलेखने। अस्माद्वर्णे वाच्ये नक्)।

२८५। बन्धेर्ब्रधिबुधी च ॥ ३।५ ॥

दी—। ब्रध्नः। बुध्नः। ( नक् प्रत्यये परत एतावादेशौ)।

२८६। धापॄवस्यज्यतिभ्यो नः ॥ ३।६ ॥

दी—। 'धाना भृष्टयवे स्त्रियः'। पर्णं पत्रम्। पर्णः किंशुकः। 'वस्नोमूल्ये वेतने च'। अजेर्वी। वेनः। अत्नः आदित्यः। बाहुलकाच्छ्रृणोतेः श्रोणः पङ्गुः।

मित—। वसि + अजि + अतिभ्यः इतिच्छेदः। वस निवासे। अजगतौ। अत सातत्यगमने। इतन्त्रयोक्तौ। 'पर्णं पत्रे किंशुके ना' इति मेदिनी। वेन इति। लुप्टाकः प्रजापतिश्च।

२८७। लक्षेरट् च ॥ ३।७ ॥

दी—। लक्षेशुरादिण्यन्तान्नः स्यात्। तस्याडागमश्च। चान्मुडित्येके। 'लक्ष्मणं लक्षणं नाम्नि चिह्ने च'। लक्षणो लक्ष्मणश्च रामभ्राता। 'लक्षणा हंसयोषायां सारसस्य च लक्षणा'।

मित—। लक्ष्मण लक्षण शब्दौ द्वावपि नामचिह्नयोः क्लीबौ। रामानुजे पुमान्। हंससारसयोषायां स्त्री।

२८८। वनेरिच्चोपधायाः ॥ ३।८ ॥

दी—। वेना नदी। ( नक् प्रत्ययः। लघूपधगुणः )।

२८९। सिवेष्टेयू च ॥ ३।९ ॥

दी—। दीर्घोच्चारणसामर्थ्यान्न गुणः। स्यूनः आदित्यः। बाहुलकात् केवलो नः। ऊठ्। अन्तरङ्गत्वाद् यण्। गुणः। स्योनः।

The टि portion of the root सिव् ( षिवु तन्तुसन्ताने ) is replaced by 'यू' when the affix न follows. Thus सूनः ( स्+यू+नः ) the son. By बाहुलक the affix न by itself aslo i.e. without the substitute यू replacing इव् of सिव् may take effect. Here ऊठ् comes in by 'च्छ्वोः शूठ्—' ( 2561 ) and replaces व् of सिव् by giving स्यु by यण् in connection with ऊठ् which is अन्तरङ्ग in comparison with गुण, Hence गुण taking place later, we have स्योनः—the sun. But had गुण taken place before यणादेश then we would have सयोन. This is clear in काशिका under 'च्छ्वोः शूठ्—' and also in प्रदीप under 'येन विधि—' of भाष्य.

सिन—। सिवेः+टेः+यूः+इतिच्छेदः। षिवु तन्तुसन्ताने। अस्मान्नप्रत्ययः स्यादस्य टेयूँ इत्यादेशश्च। एवं इव् इति टेर्यूदेशे 'सार्वधातुकार्ध—' ( २१६८ ) इति गुणे प्राप्ते आह—दीर्घोच्चारणसामर्थ्यादिति। बाहुलकादिति। केवलो नप्रत्ययः। न तु टेर्यूदेशोऽपीति भावः। ऊठिति। 'च्छ्वोः शूठ्—' ( २५६१ ) इत्यनेनेति भावः। नन्वेवं ऊठि परे गुणे च प्राप्ते कतरोऽत्र विधेयः। ऊठिति गुण इति वा इत्याशङ्कां समाधत्ते—अन्तरङ्गत्वाद् यणिति। ततो गुणः। स्योन इति। 'स्योनः किरणसूर्ययो'रिति मेदिनी। पूर्वं गुणे कृते सयोन इत्यनिष्टं स्यादिति बोध्यम्। तदेतत् सर्वं 'च्छ्वोः—' इति सूत्रे वृत्तौ 'येन विधिः—' इत्यत्र कैयटग्रन्थे च स्पष्टम्।

२८० । कॄवॄजॄसिद्रुपन्यनिस्वपिभ्यो नित् ॥ ३।१० ॥

टी—। कर्णः। वर्णः। 'जर्णश्चन्द्रे च वृद्धे च'। सेना। द्रोणः। पन्नो नीचैर्गतिः। अन्नमोदनः। स्वप्नो निद्रा।

२८१ । धेट इच्च ॥ ३।११ ॥

टी—। 'धेनः सिन्धुर्नदी धेना'।

मित—। धेट इति। नकारप्रत्ययः। आत्वे कृते इत्वान्तादेशः। गुणः। 'धेना जिगाति दाशुषे' इति मन्त्रे धेना वागिति वेदभाष्यम्।

२८२। तृषिशुषिरसिभ्यः कित् ॥ ३।१२ ॥

दी—। तृष्णा। शुष्णः सूर्यो वह्निश्च। रस्नं द्रव्यम्।

२८३। सुञो दीर्घश्च ॥ ३।१३ ॥

दी—। सूना वधस्थानम्। 'पञ्च सूना गृहस्थस्य—'इति मनुः।

२८४। रमेस्त च ।। रमयतीति रत्नम् ॥ ३।१४ ॥

दी—। रास्ना गन्धद्रव्यम्। सास्ना गोगलकम्बलः। स्थूणा गृहस्तम्भः। वीणा वल्लकी।

मित—। रस आस्वादने। षस स्वप्ने। ष्ठा गतिनिवृत्तौ। विगत्यादिषु। एभ्यो नप्रत्यये परत एते निपात्यन्ते।

२८६। गादाभ्यामिष्णुच् ॥ ३।१६ ॥

दी—। गेष्णुर्गायनः। देष्णुर्दाता। ( गै—शब्दे। डुदाञ् दाने )।

२८७। कृत्यशूभ्यां क्स्नः ॥ ३।१७ ॥

दी—। कृत्स्नम्। अक्ष्णमखण्डम्।

२८८। तिजेर्दीर्घश्च ॥ ३।१८ ॥

दी—। तीक्ष्णम्। ( उपधादीर्घः। चात् क्स्नप्रत्ययः )

२८९। श्लिषेरच्चोपधायाः ॥ ३।१९ ॥

दी—। श्लक्ष्णम्। ( चात् क्स्नप्रत्ययः )।

२०० । यजिमनिशुन्धिदसिजनिभ्यो युच् ॥ ३।२० ॥

टी—। यज्युरध्वर्युः । 'मन्युर्दैन्ये क्रतौ क्रुधि' । शुन्ध्युरग्निः दस्युस्तस्करः । जन्युः शरीरी । ( बाहुलकादनादेशेन )।

२०१ । भुजिमृङ्भ्यां युक् त्युकौ ॥ ३।२१ ॥

टी—। भुज्युर्भोजनम् । मृत्युः ।

मित—। भुजेर्युक् प्रत्ययः । म्रियतेस्त्युक् इति यथासंख्यामन्वयः । कित्वाद् गुणाभावः ।

२०२ । सर्तेरयुः ॥ ३।२२ ॥

टी—। सरयुर्नदी । अयूरिति पाठान्तरम् । सरयूः ।

२०३ । पानीविषिभ्यः पः ॥ ३।२३ ॥

टी—। पाति रक्षत्यस्मादात्मानमिति पापम् । तद्योगात् पापः । नेपः पुरोहितः । बाहुलकादगुणाभावे नीपो वृक्षविशेषः । वेप्यः पानीयम् ।

मित—। तद्योगादिति । पापमस्यास्ति इति अर्श आदिभ्योऽचि निष्पन्नः पापः इति पुंलिङ्गशब्दः पापवति रूढ इत्यर्थः । नीपो वृक्षविशेष इति । 'नीपः कदम्ब बन्धूक नीलाशोकद्रुमेऽपि च' इति मेदिनी ।

२०४ । च्युवः किच्च ॥ ३।२४ ॥

टी—। च्यपो वक्त्रम् ।

मित—च्युङ् गतौ । धातूनामनेकार्थत्वादपभाषणे । अस्मात् पप्रत्ययः । स च कित् । गुणाभावः । चुपो वक्त्रमिति । च्यवन्ते भाषन्तेऽनेनेति विग्रहः ।

२०५ । स्तुवो दीर्घश्च ॥ ३।२५ ॥

टी—। स्तूपः समुच्छ्रायः । ( चात् प्रत्ययः किच्चानुवर्तते )

२०६। सुशृभ्यां निच्च ॥३।२६॥

दी—। चात् कित्। सूपः। बाहुलकादुत्वम्। शूर्पम्।

मित—। सूञ् अभिषवे। शृ हिंसायाम्। आभ्यां पप्रत्ययः। स च नित् कित्। 'सूपो व्यञ्जनसूदयो'रिति मेदिनी। शृ+प इति स्थिते गुणेन शर्पम इति स्यादित्यत उ शूर्पमिति। तत् कथमत उत्वमित्याशङ्क्य आह—बाहुलकादिति। एवं उत्वे कृते तस्य च रपरत्वे 'हलि चे'ति दीर्घः। [ऊत्वमिति पाठस्तु न समीचीनः] 'प्रस्फोटनं शूर्पमस्त्री' इति—तेन शूर्प इत्यपि। ['कुला' इति भाषा।]

२०७। कुयुभ्याञ्च ॥३।२७॥

दी—। कुवन्ति मण्डूका अस्मिन् कूपः। युवन्ति बध्नन्त्यस्मिन् पशुमिति यूपो यज्ञस्तम्भः।

मित—। कु शब्दे। यु मिश्रणे। आभ्यां पः स च निच्च किच्च धातो दीर्घश्च।

२०८। खष्पशिल्पशष्पबाष्परूपपर्पतल्पाः ॥३।२८॥

दी—। सप्तैते पप्रत्ययान्ता निपात्यन्ते। खनतेर्नकारस्य षत्वम्। 'खष्पो क्रोधबलात्कारौ'। शीलतेः ह्रस्वश्च। शिल्पं कौशलम्। 'शसु हिंसायाञ्च'। निपातनात् षत्वम्। शष्पं बालतृणं प्रतिभाक्षयश्च। बाधतेः षः। 'बाष्पो नेत्रजलोष्मणोः' बाष्पश्च। रौतेर्दीर्घः। 'रूपं स्वभावे सौन्दर्ये'। पॄ। पर्पं गृहं बालतृणं पङ्गुपीठञ्च। 'तल प्रतिष्ठाकरणे। चुरादिणिचो लुक्। 'तल्पं शय्याट्टदारेषु।'

२०९। स्तनिहृषि पुषिगदिमदिभ्यो णेरित्नुच् ॥३।२९॥

दी—। 'अयामन्त—' (२३११) इति णेरायादेशः। स्तनयित्नुः। हर्षयित्नुः। पोषयित्नुः। गदयित्नुः वावदूकः। मदयित्नुः मदिरा।

२१० । कृहनिभ्यां क्त्नु ॥२।२०॥

टी—। क्त्नुः शिल्पी। हत्नुर्व्याधिः शस्त्रञ्च।

मित—। करोतीति क्त्नुः कर्ता। कित्वान्न गुणः। 'सुरूपकृत्नुमूतये' इति इति मन्त्रे एवं व्याख्यातम्। हन्तीति हत्नुः। हन्तेत्यर्थः। 'अनुदात्तोपदेश—' इत्यनुनासिकलोपः। 'मृगं न भीममुपहत्नुमुग्रम्' इति श्रुतिः। अत्र 'कृहनिभ्यां क्नुः' इति दशपादीस्थः पाठः प्रामादिकः। सुरूपकृत्नुत्वादिश्रुत्यविसंवादादित्याकरे विस्तरः।

२११ । गमेः सन्वच्च ॥२।२१॥

टी—। जिगत्नुः। (गन्तेत्यर्थः। सन्वत्वादुदित्वादि। चात् क्त्नुः)।

२१२ । दाभाभ्यां नुः ॥२।२२॥

टी—। दानुर्दाता। भानुः। ('भानू रश्मिदिवाकरौ' इत्यमरः)।

२१३ । वचेर्गश्च ॥२।२३॥

टी—। वग्नुः। (गकारोऽन्तादेशः। चान्नुः। वग्नुर्वक्ता)।

२१४ । धेट इच्च ॥२।२४॥

टी—। धयति सुतानिति धेनुः।

मित—। इच्चेति। आदेरिदादेशः। चकारान्नुः। गुणः। 'धेनुः स्यान्नव—सूतिका' इत्यमरः।

२१५ । सुवः कित् ॥२।२५॥

टी—। 'सूनुः पुत्रेऽनुजे रवौ' (इति विश्वः)। कित्वान्न गुणः।

२१६। जहातेर्द्वे अन्तलोपश्च ॥३।३६॥

दी—। जह्नुः।

२१७। स्थाणुः ॥३।३७॥

दी—। 'स्थाणुः कीले स्थिरे हरे' (इति विश्वः)।

२१८। अजि वृरीभ्यो निच्च ॥३।३८॥

दी—। अजेर्वी। वेणुः। वर्णुर्नददेशभेदयोः। ('वणुर्द्वयोः स्त्रियां धूलिः'—इत्यमरः)। चान्नुप्रत्ययः।

२१९। विषेः किच्च ॥३।३९॥

दी—। विष्णुः।

मित—। विषल्व्याप्तौ। अस्मान्नुप्रत्ययः कित् निच्च। कित्त्वान्न गुणः। नित्त्वादाद्युदात्तः। विषति व्याप्नोतीति विग्रहः।

२२०। कृदाधाराचिंकलिभ्यः कः ॥३।४०॥

दी—। बाहुलकान्न कस्येत् संज्ञा। 'कर्को धवलघोटकः'। दाको दाता। धाकोऽनडुनाधारश्च। राका पौर्णमासी। अर्कः। 'कल्कः पापाशये पापे दम्भे विट्किट्टयोरपि'।

मित—। राका पौर्णमासीति। पूर्णिमेत्यर्थः। 'राका तु सरिदन्तरे। राका नवरजः कन्या पूर्णेन्दुः पूर्णिमाऽपि च' इति विश्वः। 'या राका शशिशोभना गतधना सा यामिनी' त्यभियुक्तोक्तिश्च। कल्क शब्दस्य पापार्थकत्वं महाभारते आदिपर्वणि—तपो न कल्कोऽध्ययनं न कल्कः। प्रसह्य वित्ताहरणं न कल्कः। तान्येव भावोपहतानि कल्कः इति। बाहुलकात् रमेरपि कः। 'रकः कृपणानन्दयो'रिति मेदिनी। बाहुलकाल्लत्वं टाप्। 'लङ्का रक्षःपुरी शाखाशाकिनी कुलटासु च' इति विश्वमेदिनी।

२२१। सृवृभूशुषिमुषिभ्यः ॥२।४१॥

दी—। 'सृक् उत्पलवातयोः'। 'वृकः श्वापदकाकयोः'। भूकं छिद्रम्। शुष्कः। मुष्काऽण्डम्।

२२२। शुकवल्कोल्काः ॥२।४२॥

दी—। शुभेरन्त्यलोपः। शुकः। 'वल्कं वल्कलमस्त्रियाम्'। उष दाहे। षस्य लः। उल्का।

मित—। 'शुकी व्याससुते कीरे रावणस्य च मन्त्रिणि' इति मेदिनी। 'उल्का ज्वाला विभावसोः' इति भूतिचन्द्रः।

२२३। इण् भीकापाशल्यतिमर्चिभ्यः कन् ॥२।४३॥

दी—। 'एके मुख्यान्यकेवलाः'। 'भेको मण्डूकमेषयोः' इति विश्वमेदिन्यौ। काकः। पाकः। शिशुः। शल्कं शकलम्। अत्कः पथिकः शरीरावयवश्च। मर्कः शरीरवायुः।

मित—। एके इति। अमरादिदम्। इन्+कन्। गुणः। एकः। एवं भेकादयः। 'पीत पाकोऽर्भको डिम्भ' इत्यमरः। मर्चिः सौत्रो धातुः। 'मर्च शब्दे' चौरादिक इति तु 'मिदचोऽन्त्यात्—' इत्यत्र कैयटः।

२२४। नौ हः ॥२।४४॥

दी—। जहातेः कन् स्यान्नौ। निहाका गोधिका।

मित—। ह इति। हाक् त्यागे इत्यस्य ग्रहणं तदाह—जहातेरिति। नाविति। 'नि' इत्युपसर्गे उपपदे इत्यर्थः।

२२५। नौ सदेर्डिच्च ॥२।४५॥

दी—। 'निष्कोऽस्त्री हेम्नितत्पले'।

मित—। निपूर्वात् सदः कन् स च डित्। डित्वाट्टिलोपः। सदिरप्रतेरिति षत्वम्। निष्कम्। तत्पले इति हेमपले इत्यर्थः।

२२६। स्यमेरीट् च ॥२।४६॥

दी—। स्यमीको वल्मीकः वृक्षभेदश्च। इट् ह्रस्व इति केचित्। स्यमिकः। (स्यमु शब्दे। अस्मात् कन्)।

२२७। अजियुधिनीभ्यो दीर्घश्च ॥२।४७॥

दी—। 'वीकः स्याद्वातपक्षिणोः'। यूकाः। धूको वायुः। नीको वृक्षविशेषः। (चात् कन्। 'अजेर्व्यघञपो'रिति वीभावः। दीर्घसामर्थ्यात् सर्वत्र गुणाभावः)।

२२८। ह्रियो रश्च लो वा ॥२।४८॥

दी—। 'ह्लीका ह्रीका त्रपा मता'। (चात् कन्। त्रपा लज्जा)।

२२९। शकेरुनोन्तोन्त्युनयः ॥२।४९॥

दी—। 'उन' 'उन्त' 'उन्ति' 'उनि' एते चत्वारः स्युः। शकुनः। शकुन्तः। शकुन्तिः। शकुनिः।

मित—। 'शकुन्ति पक्षिशकुनिशकुन्तशकुनद्विजाः' इत्यमरः। बाहुलकात् कमेरपि प्रत्ययादिलोपे कुशब्दादेशः। कुन्तिः।

२३०। भुवो झिच् ॥२।५०॥

दी—। भवन्तिर्वर्तमानकालः। बाहुलकादवेश्च। अवन्तिः। वदेर्वदन्तिः। 'किंवदन्ती जनश्रुतिः'।

मित—। किंवदन्तीति। 'कृदिकारात्—' इति पक्षे ङीष्। झच्प्रत्ययान्तात् गौरादिङीष् इत्यपि केचित्।

२३१। कन्युच् क्षिपेश्च ॥२।५१॥

दी—। चाद् भुवः। क्षिपण्युर्वसन्तः इत्युज्ज्वलदत्तः। 'भुवन्युः स्वामिसूर्ययोः'।

२३२। अनूङ् नदेश्च ॥३।५२॥

दी—। चात् चिपिः। नदनुर्मेघः। चिपणुर्वातः।

२३३। कृवृदारिभ्य उनन् ॥३।५३॥

दी—। 'करुणो वृक्षभेदः स्यात् करुणा च कृपा मता'। वरुणः। दारुणम्।

२३४। त्रो रश्च लो वा ॥३।५४॥

दी—। 'तरुणस्तलुनो युवा'।

मित—। तरतेरुनन् प्रत्ययः रेफस्य लादेशश्च वा। तरति सर्वम् इति तरुणो युवा। 'तरुणी तलुनीति च' इति विश्वः।

२३५। क्षुधिपिशिमिथिभ्यः कित् ॥३।५५॥

दी—। क्षुधुनो म्लेच्छजातिः। पिशुनः। मिथुनम्।

मित। एभ्य उननप्रत्ययः कित्। अतो न गुणः।

२३६। फलेर्गुक् च ॥३।५६॥

दी—। फल्गुनः पार्थः। प्रज्ञाद्यण्। फाल्गुनः। (चादुनन्)।

२३७। अशेर्लश्च ॥३।५७॥

दी—। लशुनम्।

मित। अश भोजन इत्यस्मादुनन्। धातोर्लमादेशश्च।

२३८। अर्जेर्णिलुक् च ॥३।५८॥

दी—। अर्जुनः। (चादुनन्)।

मित—। अत्र 'णेरनिटि' इति लोपेन सिद्धे णिलुक्चेति चिन्त्यमित्याकरः। 'अर्जुनः ककुभे पार्थे—' इति विश्वः।

३३९ । तृणाख्यायां चित् ॥२।५९॥

दी—। चित्त्वादन्तोदात्तः । अर्जुनं तृणम् ।

३४० । अर्तेश्च ॥२।६०॥

दी—। अरुणः । (उनन् प्रत्ययश्चित्त्)

३४१ । अजियमिशीङ्भ्यश्च ॥२।६१॥

दी—। 'वयुनं देवमन्दिरम्' । यमुना । शयुनः अजगरः । (अजेर्वीभावे गुणेऽयादेशेचोननि परे रूपम्) ।

३४२ । वृतॄवदिहनिकमिकषिभ्यः सः ॥२।७२॥

दी—। वर्षम् । तर्षः । 'तर्षः प्लवसमुद्रयोः' । वत्सः वत्सं । वक्षः । हंसः । 'कंसोऽस्त्री पानभाजनम्' । कक्षम् अरण्यम् ।

मित—। 'सितन—' इति सर्वत्र (नेड्वशि) इडभावः । बाहुलकात् षत्वं नेति भाष्यतत्प्रदीपपदमञ्जरीषु इत्याहुः । कक्ष शब्दे तु भवत्येव । कक्षमरण्यमिति । अत एव 'याचकानां कल्पतरोररिकक्षहुताशनात् । शृङ्गवेरपुराधीशाद्रामतो लब्ध-जीविकः' इति शब्देन्दुशेखर मङ्गलाचरणश्लोकी नागेशः ।

३४३ । प्लुषेरच्चोपधायाः ॥२।६३॥

दी—। 'प्लक्षः । (चात्सप्रत्ययः) ।

३४४ । मनेर्दीर्घश्च ॥२।६४॥

दी—। मांसम् । (चात्सः । मांसमामिषम्) ।

३४५ । अशेर्देवने ॥२।६५॥

दी—। अक्षः ।

मित—। अशूव्याप्तौ । देवनेऽर्थे पश्चात् सप्रत्ययः । व्रश्चादिना षत्वे "षढोः—" इति कत्वे च षत्वम् । अत्र इन्द्रियपाशकादिषु ।

२४६। स्नुव्रश्चिकृत्यृषिभ्यः कित् ॥३।६६॥

टी—। स्नुषा। वृक्षः। कृत्समुद्रकम्। ऋक्षं नक्षत्रम्।

मित—। एभ्यः सप्रत्ययाः। स च कित्। स्नुषा वधूः। 'ऋक्षः पर्वतभेदे स्याद् भल्लुकी शोनके पुमान्। कृतवेधनेऽन्योलिङ्ग' नक्षत्रे च नपुंसकम्' इति मेदिनी।

२४७। ऋषेर्जातौ ॥३।६७॥

टी—। 'ऋक्षोऽद्रिभेदे भल्लुके शोणके कृतवेधने। ऋक्ष-मुत्तम नक्षत्रे—' इति विश्वः।

मित—। जातावेवेति नियमार्थमिदम्। तेनाग्येभ्यः केवलयौगिकत्वेऽपि प्रत्यय इत्याहुः।

२४८। उन्दि गुधिकुषिभ्यश्च ॥३।६८॥

टी—। उत्सः प्रस्रवणम्। गुत्सः स्तवकः। कुक्षी जठरम्।

मित—। गुत्स इति। गुच्छ इति च। 'गुत्सो गुच्छो गुलुच्छवत्' इति द्विरूपकोशात्।

२४९। गृधिपण्योर्दकौ च ॥३।६९॥

टी—। गृत्सः कामदेवः। पक्षः।

मित— गृधु अभिकाङ्क्षायाम्। पण व्यवहारे स्तुतौ च। आभ्यां सप्रत्ययः स्यात्।

२५०। अशेः सरः ॥३।७०॥

टी—। अक्षरम्। ( अशूव्याप्तौ। अस्मात् सरः। कत्वषत्वे )

२५१। वसेश्च ॥३।७१॥

टी—। वत्सरम्। ( सरप्रत्यय इति शेषः )

२५२ । सपूर्वाच्चित् ॥३।७२॥

दी—। संवत्सरः ।

मित—। पूर्वेण सहितः सपूर्वः । सोपपदपूर्वाद् वसेः सः । स च चित् । संवत्सरः, परिवत्सर इत्यादि ।

२५३ । कृधूमदिभ्यः कित् ॥३।७३॥

दी—। बाहुलकान्न षत्वम् । 'कृसरः स्यात्तिलौदनम्' । धूसरः । मत्सरः । 'मत्सरा मक्षिका ज्ञेया भम्भराली च सामता' । ( एभ्यः सरप्रत्ययः । स च कित् )

२५४ । पतेरश्च लः ॥३।७४॥

दी—। पत्सलः पन्थाः ।

२५५ । तन्यृषिभ्यां क्सरन् ॥३।७५॥

दी—। 'तसरः सूत्रवेष्टनम्' । ऋक्षरः ऋत्विक् ।

२५६ । पीयूकणिभ्यां कालन् ह्रस्वः सम्प्रसारणञ्च ॥३।७६॥

दी—। पीयूः सौत्रः । पियालो वृक्षभेदः । कुणालो देशभेदः ।

मित—। पीयुधातोरादेर्ह्रस्वः कणतेस्तु सम्प्रसारणमिति विवेकः । बाहुलकाद् भत्वे; कालन् । नलोपः । तकुभगालं नरमस्तकम् । न्यङ्क्वादित्वात्कुत्वम् । मत्वर्थे इनिः । 'चण्डिकान्तो भगाली च शितिशानी वृषध्वजः' इति शेखरः ।

२५७ । कठिकुषिभ्यां काकुः ॥३।७७॥

दी—। कठाकुः पक्षी । कुषाकुरग्निः सूर्य्यश्च ।

२५८ । सर्तेर्दुक् च ॥३।७८॥

दी—। सृदाकुर्वातसरितोः ।

मित—। स धातु इत्यस्मात् काकुः धातोर्दुक्चागमः। 'सदाकुर्नानिले चक्र-ज्वलने प्रतिसूर्यके'—मेदिनी।

३५९। वृतेश्च ॥३।७९॥

दी—। वार्ताकुः। बाहुलकादुकारस्य अत्वम्। वार्ताकम्।

मित—। वृतुवर्तनेऽस्मात् काकुः। धातोरुपधाया वृद्धिश्च। वार्ताकुः [ 'बैगुन' इति भाषा ]। बाहुलकादिति। 'वार्ताकुरपि वार्ताकी वृन्ताकोऽपि च दृश्यते' इतिद्विरूपे विश्वः। 'वार्ताकं पित्तलं किञ्चिदङ्गारपरिपाचितम्' इति वैद्यकशास्त्रम्।

३६०। प्रदेर्नित् सम्प्रसारणमल्लोपश्च ॥३।८०॥

दी—। 'पृदाकुर्वृश्चिके व्याघ्रे चित्रके च सरीसृपे'।

मित—। पर्द कुत्सिते पर्दे। अस्मात् काकुः। धातो रेफस्य सम्प्रसारणम् अकारस्य लोपश्च। 'पृदाकुर्भुजग' इत्यमरः।

३६१। सृ-यु-वचिभ्योऽन्युजागूजक्नुचः ॥३।८१॥

दी—। अन्युच्, आगूच्, अक्नुच् एते क्रमात् स्युः। 'सरण्यु-र्मेघवातयोः'। यवागूः। 'वचक्नुर्विप्रवाग्मिनोः'।

मित—। सरतेरन्युच्। यौतेरागूच्। वचेरक्नुच्। 'सरण्युर्मेघवातयोरिति। 'सरण्युस्तु पुमान् वारिवाहे स्यान्मातरिश्वनि' इति मेदिनी। 'सरण्युरस्य सूनुरश्वः' इति मन्त्रे तु सरणः शीघ्रगामीति व्याख्यातम्। 'यवागूरुष्णिका श्राणा विलेपी तरला च सा' इत्यमरः। 'वचक्नुस्तु पुमान् विप्रे वावदूकेऽभिधेयवत्' मेदिनी।

३६२। आनकः शीङ्भियः ॥३।८२॥

दी—। शयानकोऽजगरः। भयानकः।

३६३। आणको लूधूशिङ्घिधाञ्भ्यः ॥३।८३॥

दी—। लवाणकं दात्रम्। धवाणको वातः। शिङ्घाणकः

श्लेष्मा। पृषोदरादित्वात् पक्षे कलोपः। 'शिङ्घाणं नासिकामले'। घाणको दीनारभागः।

२६४। उल्मुकदर्विहोमिनः ॥२।८४॥

दी—। उषदाहे। षस्य लः मुकप्रत्ययश्च। उल्मुकं ज्वलदङ्गारम्। दृणातेर्विः। दर्विः। जुहोतेर्मिनिः। होमी।

२६५। ह्रियः कुग्रश्च लो वा ॥२।८५॥

दी—। ह्रीकुः ह्लीकुः लज्जावान्।

२६६। हसिमृग्रिण्वामिदमिलूपूधुर्विभ्यस्तन् ॥२।८६॥

दी—। दशभ्यस्तन् स्यात्। 'तितुत्र—' इति नेट्। हस्तः। मर्तः। गर्तः। एतः। कवुंरः। वातः। अन्तः। दन्तः। 'लोतः स्यादश्रुचिह्नयोः'। 'पोतो बालवहित्रयोः'। धूर्त्तः बाहुलकात्तुसे दीर्घश्च। तूस्तं पापं धूलिर्जटा च।

मित—। हस हसने। मृङ् प्राणत्यागे। गॄ निगरणे। इण् गतौ। वा गतिगन्धनयोः। अम गत्यादिषु। दमु उपशमे। लूञ् छेदने। पू पवने। धूञ् कम्पने। धुर्वी हिंसायाम्। 'हस्तः करे करिकरे सप्रकोष्ठे करेऽपि च्चक्षे केशात् परोऽपि' इति मेदिनी। मर्तो भूलोकः। तत्र भवो मर्त्यः। दिगादेराकृतिगणत्वमाश्रित्ययत्। लोतो मेष इति 'क्त—क्तवतू' इत्यत्र कैयटः। 'पोतः पाकोऽर्भको डिम्भः' इत्यमरः।

२६७। नञ्याप इट् च ॥२।८७॥

दी—। नापितः।

मित—। नञ्पूर्वादाप्नोतेस्तन् प्रत्ययस्य इडागमश्च। बाहुलकात् नञो लोपाभावः। 'तितुत्र—'इति निषेधादिद्वचनम्।

२६८। तनिमृङ्भ्यां किच्च ॥२।८८॥

दी—। ततम्। मृतम्।

मित—। आभ्यां तन्। स च कित्। गुणाभावः। 'ततं वीणादिकं वाद्यम्' इत्यमरः। 'स्ततन्तु याचिते स्त्री क्लीबं अल्पमति त्रिषु' इति मेदिनी।

३६९। अञ्जिघृसिभ्यः क्तः ३।८९॥

दी—। अक्तम्। घृतम्। सितम्।

मित—। अक्तं परिच्छिन्नम्। 'सितमवसिते च बद्धे, धवले त्रिषु, शर्करायां स्त्री' इति मेदिनी। 'पित्तेन दूने रसने सिताऽपि तिक्तायते हंसकुलावतंस' इति श्रीहर्षः।

३७०। दुतनिभ्यां दीर्घश्च ॥३।९०॥

दी—। दूतः। तातः।

मित—। चात्तन्। दूतो वार्तावहः प्रेष्योवा। गौरादित्वान्ङीष्—दूती। 'क्तिच् क्तौ च संज्ञायाम्'—दूतिः। टुङ् परितापे—अस्मात् क्ति। 'दूत्या दूतिरपि स्मृता' इति विश्वपकोशः। 'तेन दूतिविदितं निषेदुषा' इति रघुः। 'पूज्ये पितरि पुत्रे च तातशब्दः स्मृतो बुधैः' इति। बाहुलकात् शीङोऽपि तन्। शीता लाङ्गलपद्धतिः। रामपत्नी च।

'शीता नभःसरिति लाङ्गलपद्धती च
शीता दशाननरिपोः सहधर्मिणी च।
शीतं खलु हिमगुणे तदन्विते च
शीतोऽलसे च बहुवारतरौ च दृष्टः॥

इति धरणिः। दन्त्यादिरप्ययं शब्दः।

३७१। जेमूँड् चोदात्तः ॥३।९१॥

दी—। जीमूतः।

३७२। लोष्टपलितौ ॥३।९२॥

दी—। लुनातेः क्तः। तस्य सुट्। धातोर्गुणः। लोष्टम्। पलितम्। ('लोष्टानि लोष्टवः पुंसि' इत्यमरः)।

३७३ । हृश्याभ्यामितन् ॥३।८३॥

दी—। हरितश्येतौ वर्णभेदौ ।

३७४ । रुहे रश्च लो वा ॥३।८४॥

दी—। 'रोहितो मृगमत्स्ययोः' । लोहितं रक्तम् ।

मित—। रुहेरित्यादि । इतन्प्रत्यये परत इति शेषः ।

३७५ । पिशेः किच्च ॥३।८५॥

दी—। पिशितं मांसम् ।

३७६ । श्रुदक्षिस्पृहिगृहिभ्य आय्यः ॥३।८६॥

दी—। श्रवाय्यो यज्ञपशुः । दक्षाय्यो गरुड़ो गृध्रश्च । स्पृहयाय्यः । गृहयाय्यो गृहस्वामी ।

मित—। श्रवाय्यस्त्रवणीया इति 'उपायसुपे भवसि श्रवाय्य' इति मन्त्रे माधवः । स्पृहयाय्यः स्पृहयालुः ।

३७७ । दधिषाय्यः ॥३।८७॥

दी—। दधातेर्द्वित्वमित्त्वं षक् च । 'मित्र इव यो दिधिषाय्यः अभूत्' ।

३७८ । वृञ एण्यः ॥३।८८॥

दी—। वरेण्यः । ( प्रत्ययस्य कित्त्वाभावाद् गुणः ) ।

३७९ । स्तुवः क्सय्यश्छन्दसि ॥३।८९॥

दी—। 'स्तुषेय्यं पुरुवर्चसम् ऋभ्वम्' । ( स्तोतव्यमित्यर्थः । बहुरूपमिति वेदभाष्यम् ) ।

३८१ । राजेरन्यः ॥३।९०॥

दी—। राजन्यो वह्निः ।

मित—। राजन्यो वह्निरिति। क्षत्रियजातौ तु 'राजश्वशुराद्—' इति यत्प्रत्यये राजन्य इत्यन्तस्वरित इत्याहुः।

३८१। शूरम्योश्च ॥२।१०१॥

दी—। शरण्यम्। रमण्यम्।

३८२। अर्तेर्निच्च ॥२।१०२॥

दी—। अरण्यम्। ('चादण्यः। 'अटव्यरण्यं विपिनम्' इत्यमरः)

३८३। पर्जन्यः ॥२।१०३॥

दी—। 'पृषु सेचने'। षस्य जः। 'पर्जन्यः शत्रु मेघयोः'।

३८४। वदेरान्यः ॥२।१०४॥

दी—। 'वदान्यस्त्यागिवाग्मिनोः' (इत्यजयः)।

३८५। अमिनक्षियजिवधिपतिभ्योऽत्रन् ॥२।१०५॥

दी—। अमत्रं भाजनम्। नक्षत्रम्। यजत्रः। वधत्रमायुधम्। पतत्रं तनूरुहम्।

३८६। गडेरादेश्च कः ॥२।१०६॥

दी—। कडत्रम्। डलयोरैकत्वस्मरणात् कलत्रम्।

मित—। गड सेचने। अस्मादत्रम्। 'कलत्रं श्रोणिभार्य्ययोरित्यमरः'।

३८७। वृञश्चित् ॥२।१०७॥

दी—। वरत्रा चर्ममयी रज्जुः। (अस्मादत्रन् चित् स्यात्)।

३८८। सुविदेः कत्रन् ॥२।१०८॥

दी—। 'सुविदत्रं कुटुम्बकम्'।

३८९। कृतेर्नुम् च ॥३।१०९॥

दी—। कृन्तत्रं लाङ्गलम् ।

मित—। कृती छेदने। अस्मात् कत्रप्रत्ययः। धातोर्नुमागमश्च।

३९०। भृमृदृशियजिपर्विपच्यमितमिनमिहर्यिभ्योऽतच् ॥३।११०॥

दी—। एभ्योऽतच् स्यात् । भरतः । मरतो मृत्युः । 'दर्शतः सोमसूर्ययोः' । यजतः ऋत्विक् । पर्वतः । पचतोऽग्निः । अमतो रोगः । तमतस्तृष्णापरः । नमतः प्रह्वः । हर्यतः अश्वः ।

मित—। भृञ् भरणे । मृङ् प्राणत्यागे । दृशिर् दर्शने । यज देवपूजादौ । पर्व पूरणे । डुपचष् पाके । अम गतौ । तमु काङ्क्षायाम् । णम प्रह्वत्वे शब्दे च । हर्य गतिकान्त्योः । 'भरतो नाट्यशास्त्रे मुनौ नटे । रामानुजे दौष्यन्तौ' इति मेदिनी । यजत ऋत्विगिति । उज्ज्वलदत्तानुरोधेनेदम् । 'हिरण्यशम्यं यजतो बृहन्तम्' इत्यत्र तु यजतो यष्टव्य इति वेदभाष्यम् । हर्यतोऽश्व इति—एतदपि वेदभाष्यविरुद्धम् । 'हर्यतक्रतो—' 'परित्यं हर्यतं हरिम्' इत्यादौ हर्यतं स्पृहणीयम् इति व्याख्यातत्वात् ।

३९१। पृषिरञ्जिभ्यां कित् ॥३।१११॥

दी—। पृषती मृगी बिन्दुश्च । रजतम् । ( आभ्यामतच् कित् ) ।

३९२। खलतिः ॥३।११२॥

दी—। खलतेः सलोपः । अतच् प्रत्ययान्तस्येत्वञ्च । खलति निष्केशशिराः ।

३९३। शीङ्शपिरुगमिवञ्चिजीविप्राणिभ्योऽथः ॥३।११३॥

दी—। एभ्योऽथः स्यात् । शयथोऽजगरः । शपथः ।

रवथः कोकिलः। गमथः पथिकः पन्थाश्च। वश्वथोधूर्त्तः। वन्दोति पाठे कर्मणि कर्तरि वा प्रत्ययः वन्द्यते वन्दते वा वन्दथः। स्तोता स्तुत्यश्च। जीवथ आयुष्मान्। प्राणथो बलवान्। बाहुलकाच्छमिदमिभ्याम्। शमथस्तु शमः शान्तिर्दान्तिस्तु दमथो दमः।

मित—। शीङादयः स्पष्टाः। शमथइति। अमरकोषस्थमुदाहृतम्।

३८४। भृञश्चित् ॥३।११४॥

दी—। भरथो लोकपालः। (भृञः परोऽथप्रत्ययश्चित्)।

३८५। रुदिविदिभ्यां ङित् ॥३।११५॥

दी—। रोदिति इति रुदथः शिशुः। वेत्तीति विदथः।

मित—। आभ्यामथप्रत्ययोङिद्भवत्। विदथो विद्वानिति मत्त्वाह—वेत्तीति। वेदभाष्ये तु 'विदथेष्वाशुषः' इति मन्त्रे विदथेषु यज्ञेषु इति व्याख्यातम्।

३८६। उपसर्गे वसेः ॥३।११६॥

दी—। आवसथो गृहम्। संवसथो ग्रामः।

३८७। अत्यविचमितमिनमिरभिलभिनभितपिपतिपथिपणिमहिभ्योऽसच् ॥३।११७॥

दी—। त्रयोदशभ्योऽसच् स्यात्। अततीत्यतसो वायुरात्मा च। अवतीत्यवसो राजा भानुश्च। चमन्त्यस्मिन् चमसः सोमपानपात्रम्। ताम्यन्त्यस्मिन् इति तमसोऽन्धकारः। नमसोऽनुकूलः। 'रभसो वेगहर्षयोः'। लभसो धनं याचकश्च। नभते नभ्यति वा नभस आकाशः। तपसः पक्षी चन्द्रश्च। पतसः

पक्षी। 'पनसः कण्टकिफलः'। पनसः पण्यद्रव्यम्। महसं ज्ञानम्।

मित—। अत सातत्यगमने। अव रक्षणादौ। चमु अदने वशु काङ्क्षायाम्। पसु प्रकाले शब्दे च। रभ राभस्ये। डुलभष् प्राप्तौ। णभ तुभ हिंसायाम् (भ्वादिः क्र्यादिश्च)। तप सन्तापे। पत गतौ। पण व्यवहारे स्तुतौ च। मह पूजायाम्। अतसो वायुरात्मा चेति। 'तृष्वविश्वन् अतसेषु तिष्ठति' इत्यत्र वेदभाष्ये तु 'अतसेषु काष्ठेषु' 'अतसेन न गुरुकम् इति दर्शनात्' इति व्याख्यातम्। गौरादित्वाद् ङीष्। अतसी। 'अतसी स्यादुमा क्षुमा' इत्यमरः'।

३९८। वेञस्तुट् च ॥३।११८॥

दी—। बाहुलकादात्वाभावः। वेतसः।

मित—। तुट् चेति। चात् असच्प्रत्ययः। 'आदेचः—' इत्यात्वे प्राप्ते आह बाहुलकादिति।

३९९। बहियुभ्यां णित् ॥३।११९॥

दी—। वाहसोऽजगरः। यावसस्तृणसङ्घातः।

४००। वयश्च ॥३।१२०॥

दी—। वयगतौ। वायसः काकः। (अस्मादपि असच् णित्)।

४०१। दिवः कित् ॥३।२१॥

दी—। दिवसम्—दिवसः। (असच् प्रत्ययः। सच कित्)।

४०२। कृशृशलिकलिगर्दिभ्योऽभच् ॥३।१२२॥

दी—। करभः। शरभः। शलभः। कलभः। गर्दभः।

मित—। 'सद्यिवश्चादाकनिष्ठं करस्य करभो बहिः' इत्यमरः। 'शरभस्तु पशौ' इति च मेदिनी। 'शमी पतङ्गशलभौ' इति। 'कलभः करिशावकः' इति चामरः।

४०३। ऋषिवृषिभ्यां कित् ॥ ३।१२३ ॥

दी—। ऋषभः। वृषभः।

४०४। रुषेर्नित्लुष् च ॥३।१२४॥

दी—। 'रुष हिंसायाम्'। अस्मादभच् नित् कित् स्यात्। लुषादेशश्च। 'लुषभो मत्तदन्तिनि'।

४०५। रासिवल्लिभ्याञ्च ॥३।१२५॥

दी—। रासभः। वल्लभः।

४०६। जॄविशिभ्यां झच् ॥३।१२६॥

दी—। जरन्तो महिषः। वेशन्तः पल्वलम्।

मित—। 'झोन्तः' इति झस्य अन्तादेशः। गुणः।

४०७। रुहिनन्दिजीविप्राणिभ्यः षिदाशिषि ॥३।१२७॥

दी—। रोहन्तो वृक्षभेदः। नन्दन्तः पुत्रः। जीवन्त औषधम्। प्राणन्तो वायुः। षित्त्वान्ङीष्। रोहन्ती।

४०८। तॄभूवहिवसिभासिसाधिगडिमण्डिजिनन्दिभ्यश्च ॥३।१२८॥

दी—। दशभ्यो झच् स्यात्। स च षित्। तरन्तः समुद्रः। तरन्ती नौका। भवन्तः कालः। वहन्तो वायुः। वसन्त ऋतुः। भासन्तः सूर्यः। साधन्तो भिक्षुः। गडेर्घटादित्वान्मित्त्वं ह्रस्वः। 'अयामन्त—' (२३११) इति णेरयः। गण्डयन्तो जलदः। मण्डयन्तो भूषणम्। जयन्तः शक्रसुतः। नन्दयन्तो नन्दकः।

मित—। 'जयन्तः पाकशासनि'रित्यमरः। बहु नन्दिषेणान्तः। तदाह—नन्दयन्त इति।

४०९। हन्तेर्मुट् हि च ॥३।१२९॥

दी—। हेमन्तः। चाद् झच्प्रत्ययः। हन्ति आतपमिति विग्रहः।

४१०। भन्देर्नलोपश्च ॥३।१३०॥

दी—। भदन्तः प्रव्रजितः। (भदि कल्याणे सुखे चास्माद् झच्)।

४११। ऋच्छेररः ॥३।१३१॥

दी—। ऋच्छरा वेश्या। बाहुलकाज्जर्झरझर्झरादयः।

४१२। अर्तिकमिभ्रमिचमिदेविवासिभ्यश्चित् ॥३।१३२॥

दी—। षड्भ्योऽरश्चित् स्यात्। अररं कपाटम्। कमरः कामुकः। भ्रमरः। चमरः। देवरः। वासरः।

मित—। 'अररं छदमपाटयोः।' भ्रमरः कामुके भृङ्गे। 'चमरं चामरस्त्री मञ्जरी मृगभेदयोः' इति सर्वत्र मेदिनी। वासरः—वसिश्चन्नादरः। वाश्च शब्दे। वाश्यते वाशरः कोकिल इति च केचित्।

४१३। कुवः क्ररन् ॥३।१३३॥

दी—। कुररः पक्षिभेदः।

मित—। कुरर उत्क्रोशः। 'उत्क्रोशकुररौ समा'वित्यमरः। कुररीत्यपि दृश्यते। "कुररीवभूव" इति रघौ।

४१४। अङ्गिमदिमन्दिभ्य आरन् ॥३।१३४॥

दी—। अङ्गारः। मदारो वराहः। 'मन्दारः पारिजातकः'।

४१५। गडेः कड च ॥२।१२५॥

दी—। कडारः। ('कडारः पिङ्गले दासे' मेदिनी)।

४१६। शृङ्गारभृङ्गारौ ॥२।१२६॥

दी—। शृभृञ्भ्यामारन् नुमृगुगमस्य। शृङ्गारो रसः। 'भृङ्गारः कनकालुका'।

मित—। 'शृङ्गारः सुरते नाट्ये रसे च गजमण्डने। नपुंसकं लवङ्गेऽपि नागसम्भवचूर्णयो'रिति मेदिनी।

४१७। कञ्जिमृजिभ्यां चित् ॥२।१२७॥

दी—। कञ्जिः सौत्रः। कञ्जारो मयूरः। मार्जारः।

४१८। कमेः किदुच्चोपधयोः ॥२।१२८॥

दी—। चिदित्यनुवृत्तेरन्तोदात्तः। कुमारः।

मित—। कामयते इति कुमारः। आरन् प्रत्ययः। 'कुमारः स्याच्छुके स्कन्दे युवराजेऽश्ववारके। बालके वरुणाद्रौ ना नद्योर्जात्यकाञ्चने। कुमारी श्यादि—सीतापराजिता कन्याजम्बुद्वीपेषु च स्त्रियाम्' इति मेदिनी।

४१९। तुषारादयश्च ॥२।१२९॥

दी—। तुषारः। कासारः। सहार आम्रभेदः।

मित—। आरन्प्रत्ययान्ता निपात्यन्ते।

४२०। दीङो नुट् च ॥२।१४०॥

दी—। दीनारः सुवर्णाभरणम्। (चादारन् प्रत्ययः)।

४२१। सर्तेरपः षुक् च ॥२।१४१॥

दी—। सर्षपः। (अपः प्रत्ययः। धातोः षुक्)।

४२२। उषिकुटिदलिकचिखजिभ्यः कपन् ॥२।१४२॥

दी—। 'उषपो वह्निसूर्ययोः'। कुटपो मानभाण्डम्। दलपः प्रहरणम्। काचपं शाकपात्रम्। खजपं घृतम्।

४२३। क्णोः सम्प्रसारणञ्च ॥३।१४३॥

दी—। कुणपम्। (चात्कपन्। कुणपः पूतिगन्धे शवेऽपि)।

४२४। कपश्चाक्रवर्मणस्य ॥३।१४४॥

दी—। स्वरे भेदः। (कुणप इति तूभयत्रैव समानमिति भावः)।

४२५। विटप पिष्टपविशिपोलपाः ॥३।१४५॥

दी—। चत्वारोऽमी कपन्प्रत्ययान्ताः। 'विट शब्दे'। 'विटपः'। विशतेरादेः पः। प्रत्ययस्य तुट्। षत्वम्। पिष्टपं भुवनम्। विशतेः प्रत्ययादेरित्वम्। विशिपं मन्दिरम्। वलतेः सम्प्रसारणम्। 'उलपं कोमलं तृणम्'।

मित—। 'पिष्टपं भुवनं जगदि'त्यमरः।

४२६। वृतेस्तिकन् ॥३।१४६॥

दी—। वर्तिका।

४२७। कृतिभिदिलतिभ्यः कित् ॥३।१४७॥

दी—। कृत्तिका। भित्तिकाभित्तिः। लत्तिका गोधा।

४२८। इष्यशिभ्यां तकन् ॥३।१४८॥

दी—। इष्टका। अष्टका।

४२९। इणस्तशन्तशसुनौ ॥३।१४९॥

दी—। एतशो ब्राह्मणः। स एव एतशाः।

मित—। इणः+तशन्तशसुनौ इति छेदः। तशन् (तश) प्रत्यये एतशः। तशसुन् (तशस्) प्रत्यये तु एतशस्। एतशाः एतशसौ एतशसः इत्यादि वेधस्-शब्दवत्। एतशो नमचिद्राजा इति वेदभाष्ये माधवः।

४३०। वीपतिभ्यां तनन् ॥३।१५०॥

टी—। 'वी गत्यादौ'। वेतनम्। पत्तनम्। ('पत्तनं पुटभेदनम्')।

४३१। दृदलिभ्यां भः ॥३।१५१॥

टी—। दर्भः। 'दल्भःस्यादृषिचक्रयोः'। (दर्भः कुशः)।

४३२। अर्तिगृभ्यां भन् ॥३।१५२॥

टी—। अर्भः। गर्भः। ('गर्भो भ्रूणेऽर्भके कुक्षौ' इति मेदिनी)।

४३३। इणः कित् ॥३।१५॥

टी—। इभः। ('इणोभः। स च कित्। इभः स्तम्बेरमः —इत्यमरः)।

४३४। असिसञ्जिभ्यां क्थिन् ॥३।१५४॥

टी—। अस्थि। सक्थि।

४३५। प्लुषिकुषिशुषिभ्यः क्सिः ॥३।१५५॥

टी—। प्लुक्षिर्वह्निः। कुक्षिः। शुक्षिर्वातः।

४३६। अशेर्नित् ॥३।१५६॥

टी—। अक्षि। (अशू व्याप्तौ। अस्मात् क्सिः नित्। षत्वकत्वषत्वानि)।

३३७। इषेः क्सुः ॥२।१५७॥

टी—। इक्षुः। ( प्रत्ययस्य कित्त्वान्न गुणः। षत्वकत्व-षत्वानि )।

३३८। अवितॄस्तृतन्त्रिभ्य: ई ॥२।१५८॥

टी—। 'अवीर्नारी रजस्वला'। तरीर्नौः। स्तरीर्धूमः। 'तन्त्रीर्वीणादेर्गुणः'।

४३८। यापोः किद्द्वे च ॥२।१५८॥

टी—। ययीरश्वः। 'पपीः स्यात् सोमसूर्ययोः'।

मित—। या प्रापणे, पा पानि आभ्यामीप्रत्ययो:। स च कित्। धातोर्द्वित्वमभ्यासकार्यं च। कित्त्वा'दातो लोपः—' इति लोपश्च।

४४०। लक्षेर्मुट् च ॥२।१६०॥

१७२। लक्ष्मीः।

इत्युणादिषु तृतीयः पादः।

# अथ चतुर्थ पादः

४४१। वातप्रमीः ॥४।१॥

दी—। वातशब्द उपपदे माधातोरीप्रत्ययः। स च कित्। वातप्रमीः। अयं स्त्रीपुंसयोः।

The affix ई and the कित्त्व of the same are drawn from the previous rules 438 and 439. Thus वातप्रमी is obtained with ई which is कित् and by निपातन the आ of मा disappears irregularly. The base is both masc. & fem. as it implies a kind of deer cp—'द्विचतुःषट्पदोरगाः—' etc—Amara.

मित—। ईप्रत्ययः स च किदिति। द्वयमपि 'अविन्—' (४३८) इत्यतः 'वापी—' (४३९) इत्यतश्चानुवर्तते इति भावः। निपातनात्तु धातोराकारलोपः। वातप्रमीर्मृगभेदः। 'वातप्रमीर्वातमृग' इत्यमरः। वातं वायुं प्रमीते माति तदभिमुखं गच्छतीति विग्रहः। अयं स्त्रीपुंसयोरिति। 'स्त्रीपुंसयोरपत्यान्ता द्विचतुःषट्पदोरगाः' इत्यमरोक्तेः। अन्यैश्च सुभूतिचन्द्रादिभिराभिधानिकैस्तथानुकरणादिति भावः। परे तु 'कृदिकारात्—' इति पाक्षिकोऽत्र ङीषित्याहुः। आकरे विस्तरः।

४४२। ऋतन्यञ्जिवन्यञ्ज्यर्पिमद्यत्यङ्गिकुयुकृशिभ्यः कत्निज्यतुजलिजिष्ठुजिष्ठजिसन्स्यनिथिनुल्यसासानुकः ॥४।२॥

दी—। द्वादशभ्यः क्रमात् स्युः। ऋतेः कत्निच्। यण्। 'बद्धमुष्टिः करो रत्निः सोऽरत्निः प्रसृताङ्गुलिः'। तनोतेर्यतुच। तन्यतुर्वायु रात्रिश्च। अञ्जेरलिच। अञ्जलिः। वनेरिष्ठुच्। वनिष्ठुः स्थविरान्त्रम्। अञ्जेरिष्ठच। अञ्जिष्ठो भानुः। अर्पयतेरिसन्। अर्पिसोऽग्रमांसम्। मदेः स्यन्। मत्स्यः। अतेरिथिन्

अतिथिः। अङ्केरुलिः अङ्गुलिः। कौतिरसः। कटसः। अच इत्येके। कवचम्। यौतिरासः। यवासो दुरालभा। कृषेरानुक्। कृशानुः।

The twelve affixes कत्रिच्, यतुच्, अलिच्, इष्टुच्, इष्णच्, इसन्, स्यन्, इथिन्, उलि, अस, आस, and आनुक् are added respectively after the twelve roots ऋ, तनि (तन्), अञ्जि (अञ्ज्), वनि (वन्), अञ्जि (अञ्ज्), अर्पि, मदि (मद्), अति (अत्), अङ्गि (अङ्ग्), कु, यु and कृशि (कृश्).

मित—। ऋ गतौ, तनु विस्तारे, अञ्जू व्यक्तादौ, वनु याचने, अञ्जूव्यक्तादौ (व्यक्तिम्रक्षणकान्ति गतिषु), ऋ गतौ ण्यन्तः (अर्पिः), मदी हर्षे, अत सातत्यगमने, अगि गत्यर्थः, कु शब्दे, यु मिश्रणे, कृश तनूकरणे—एभ्यः द्वादशभ्यः क्रमेण कत्रिच्, यतुच् अलिच्, इष्टुच्, इष्णच्, इसन्, स्यन्, इथिन्, उलि, अस, आस, आनुक् इत्येते द्वादश प्रत्ययाः स्युः। कत्रिच इत्यस्य कित्त्वाद् गुणाभावे आह—यत्रिति। रत्रिः। अरत्रिरिति प्रसङ्गादुक्तम्। न रत्रिरत्रिरिति नञ्समासः। तन्यतुर्वायुरिति। उज्ज्वलदत्तानुसारादेतदर्थद्वयम्। वेदे तु 'नाकौ विद्युन्न तन्यतुः सिषेध' इत्यत्र तन्यतुर्गर्जनमिति भाष्यम्। तथा तत्रैवान्यत्र 'सजातइष्टिं न तन्यतु'रित्यादौ तन्यतुरशनिरिति व्याख्यातम्। मत्स्य इति 'मत्स्यो मीनोऽथ पुंभूम्नि देशे' इति मेदिनी। अच इत्येके इति। अस इत्यत्र अच इति पठन्तीत्यर्थः। कवचमिति। पुंनपुंसकलिङ्गोऽयम्। तनुत्रं वर्म दंशनम्। उरश्छदः कङ्कटको जगरः कवचोऽस्त्रियाम्' इत्यमरः। कृशानुरग्निः। 'कृशानुः पावकोऽनलः' इत्यमरः।

४४२। शः करन् ॥४।२॥

टी—। उत्तरसूत्रे किद्ग्रहणादिह ककारस्य नेत्त्वम्। शर्करा।

मित—। शॄ हिंसायाम्। शर्करा खण्डविकृतिः रोगभेदश्च।

४४४। पुषः कित् ॥४।४॥

दी—। पुष्करम्।

मित—। पुष—पुष्टे अस्मात् करणे कित्। न गुणः। 'पुष्करं अब्ज पद्मयोः। हस्तिहस्ताग्रकाण्डयोः।' इति मेदिनी। पुष्करार्थे पाक्रम्य वमज्जेति दशकुमारचरितम्।

४४५। कलंश्च ॥४।५॥

दी—। पुष्कलम्।

मित—। पुष्यतेः कलन्। सोऽपि कित्। 'पुष्कलं प्रचुरं प्राज्यम्' इत्यमरः।

४४६। गमेरिनिः ॥४।६॥

दी—। गमिष्यतीति गमी। ('भविष्यति गम्यादयः' इति सूत्रादिदम्)। [अयमपि णिद्वत् तेन गामी इति; यद्वा-भविष्यति णिनौ गामी इति केचित्]।

४४७। आङि णित् ॥४।७॥

दी—। आगामी। (भविष्यतीत्येव)।

४४८। भुवश्च ॥४।८॥

दी—। भावी। (भुवः पर इनिर्णित्)। [यद्वा-भविष्यति णिनौ भावी इति मल्लिनाथादयः]।

४४९। प्रे स्थः ॥४।९॥

दी—। प्रस्थायी। (इनिर्णित्। आतोयुगिति युक्)।

४५०। परमे कित् ॥४।१०॥

दी—। परमेष्ठी।

मित—। परमशब्दे उपपदे स्थाधातोरिन् स च कित्। कित्त्वादातोलोप इटि चेत्यालोपः। 'परमेष्ठी पितामहः' इत्यमरः। 'हलदन्तात्—' इति सप्तम्या अलुक्। षण्कोरिति षत्वम्।

४५१। मन्थः ॥४।११॥

दी—। मन्थति रिनिः कित् स्यात्। कित्त्वान्नकारलोपः। ( मथिन् इति ) मन्थाः—मन्थानौ—मन्थानः।

मित—। कित्त्वादिति। 'अनिदिताम्—' ( ४१८ ) इत्यनेनेत्यर्थः। मथिन् इति प्रातिपदिकम्। तस्य सौपरि आह—मन्था इति। 'पथिमथि—(३५६) इत्यात्त्वम्। 'इतोऽत्सर्वनामस्थाने' ( २६६ ) इति इकारस्य फलत अकारः। 'थो न्थः' ( २६७ ) इति थस्य न्थादेशः। 'मन्था मन्थनदण्डे स्याद् वज्रे वनेऽपि च स्मृतः'।

४५२। पतस्थ च ॥४।१२॥

दी—। पन्था—पन्थानौ।

मित—। पत्लृ गताविल्यस्मादिनिः। धातोसकारस्य थकारः। पथिन्। पथे गताविल्यस्मात् पचाद्यचि पथ इत्यकारान्तोऽपि। 'वाधः पथस्य मार्गस्य' इति सुभूतिचन्द्रः।

४५३। खजेराकः ॥४।१३॥

दी—। खजाकः पक्षी। ( खज मन्थे )।

४५४। बलाकादयश्च ॥४।१४॥

दी—। बलाका। शलाका। पताका।

मित—। बलाका बकपंक्तिः स्याद् बलाका बिसकण्ठिका। बलाका कामुकी भीरुः बलाकश्च बकी मतः' इति विश्वशाश्वतौ। 'पताका वैजयन्त्यां च सौभाग्ये नाटकाङ्कयोः' इति मेदिनी।

४५५। पिनाकादयश्च ॥४।१५॥

दी—। पातेरित्वं नुम् च। 'क्लीवपुंसोः पिनाकः स्याच्छूलशङ्करधन्वनोः'। 'तड आघाते'। तडाकः।

मित—। क्लीवेति। अमरादिदम्॥ पिष्लृ सञ्चूर्णने—षकारस्यनत्वं धातोर्नुमागमः 'पिन्याकोऽस्त्री तिलकल्के' इत्यादि मेदिनी।

४५६। कषिदूषिभ्यामीकन् ॥४।१६॥

दी—। कषीका पक्षिजातिः। दूषीका नेत्रयोर्मलम्।

मित—। दूषीकेति। अमरस्थमिदम्। पुनश्च दूषयतेः 'अच इः' इति इप्रत्यये दूषिः। 'कृदिकारात्—'इतिङीषि=दूषी। स्वार्थे कनि दूषिका। 'केऽणः' इत्यनुशासनात्। 'पिचण्डी दूषिका दूषिः पिचाटश्च दृशो मलम्' इति विक्रमादित्यकोशः॥

४५७। अनिहृषिभ्यां किच्च ॥४।१७॥

दी—। अनीकम्। हृषीकम्।

४५८। चङ्कणः कङ्कणश्च ॥४।१८॥

दी—। 'कण शब्दे'। अस्माद् यङ्लुगन्तादीकन्। धातोः कङ्कणादेशश्च। 'घण्टिकायां कङ्कणीका सैव प्रतिसरापि च'।

मित—। चङ्कण इति कणशब्दे इत्यस्यङ्लुगन्तस्य पञ्चम्येकवचनम्। तस्यैव धातोर्यङ्लुगन्तस्य कङ्कणादेश ईकनि परे इति बोध्यम्।

४५९। शॄ पॄ वॄञां द्वे रुक् चाभ्यासस्य ॥४।१९॥

दी—। शर्शरीको हिंस्रः। पर्परीको दिवाकरः। वर्वरीकः कुटिलकेशः। (चादीकन् प्रत्ययः)।

४६०। फर्फरीकादयश्च ॥४।२०॥

दी—। 'स्फुर स्फुरणे'। अस्मादीकन् धातोः फर्फरादेशः। फर्फरीकं किसलयम्। दर्दरीकं वादित्रम्। भर्भरीकं शरीरम्। तित्तिड़ीको वृक्षभेदः। 'चरेर्न् म् च' (गणसूत्र)। चर्चरीको भ्रमरः। मर्मरीको हीनजनः। कर्करीका गलन्तिका।

पुणातिः पुण्डरीकं वादित्रम्। पुण्डरीको व्याघ्रोऽग्निर्दिग्-गजश्च।

मित—। ईकन्प्रत्ययान्ता निपात्यन्ते। फर्फरादिशब्देति। उज्ज्वलदत्तोक्तिरियम्। वस्तुतस्तु धातोर्द्वित्वम्। उकारस्याकारः सलोपः। 'कुक् चाभ्यासस्य' इति दशपाद्यक्तमेवात्रान्वाय्यमित्याकरे। 'तिन्तिडीचिञ्चाम्लिका' इत्यमरे तु शब्दान्तरम्। तिन्तिडीत्वम्लिका चिञ्चा तिन्तिडीकापि स्त्रियाम्' इति वाचस्पतिः। ककर्यालुर्गलन्तिकेत्यमरः। 'पुण्डरीकं सिताम्भोजे सितच्छत्रे च भेषजे। पुंसि व्याघ्रे च दिङ्नागे कोशकारेऽपि च' इति मेदिनी।

४६१। ईषेः किदुधस्वश्च ॥४।२१॥

दी—। इषीका शलाका। (चादीकन् प्रत्ययः)।

४६२। ऋजेश्च ॥४।२२॥

दी—। ऋजीक उपहतः। (ईकन् प्रत्ययः)।

४६३। सर्तेर्नुम् च ॥४।२३॥

दी—। सृणीका लाला।

मित—। नुम चेति। चादीकन्। 'सृणीका स्यन्दिनी लाला' इत्यमरः।

४६४। मृडः कीकन्कङ्कणौ ॥४।२४॥

दी—। मृडीको मृगः। मृडङ्कणः शिशुः।

मित—। कीकन् कङ्कणः इति प्रत्ययद्वयम्। मृडीको मृग इति। वेदभाष्ये तु मृडीकः सुखयितेति व्याख्यातम्।

४६५। अलीकादयश्च ॥४।२५॥

दी—। कीकनन्ता निपात्यन्ते। 'अल भूषणादौ'। अलीकं मिथ्या। विपूर्वाद् व्यलीकं विप्रियं खेदश्च। 'वलीकं पटलप्रान्ते' इत्यादि।

मित—। इत्यादीति। आदिपदेन वलते वल्मीकम्। 'वामलूरश्च नाकुश्च वल्मीकं पुंनपुंसकम्' इत्यमरः। वहतेर्हश्च वाहीको गीर्वाहश्च। सुप्रपूर्वादियस्तुट् च। सुप्रतीको दिग्गजभेदः। शाम्यतेः शमीकः इत्यादीनां संग्रहः। 'कुर्वन्नपि व्यलीकानि यः प्रियः प्रियः एव सः'—इति।

४६६। कॄतॄभ्यामीषन् ॥४।२६॥

दी—। करीषोऽस्त्री शुष्कगोमये। तरीषः तरिता।

४६७। शॄ पॄभ्यां किच्च ॥४।२७॥

दी—। शिरीषः। पुरीषम्। ( चादीषण् प्रत्ययः )।

४६८। अर्जे ऋज च ॥४।२८॥

दी—। ऋजीषं पिष्टपचनम्। ( ईषनि परे इति शेषः )।

४६९। अम्बरीषः ॥४।२९॥

दी—। अयं निपात्यते। 'अबि शब्दे'। अम्बरीषः पुमान् भ्राष्ट्रम्'। अमरस्तु 'क्लीबेऽम्बरीषं भ्राष्ट्रो ना'।

मित—। अयमिति। ईषन् प्रत्ययः। तस्य च अरुट् इत्यागमः।

४७०। कॄ शॄ पॄ कटि पटि शौटिभ्य ईरन् ॥४।३०॥

दी—। करीरो वंशाङ्कुरः। शरीरम्। परीरं फलम्। कटीरः कन्दरो जघनप्रदेशश्च। पटीरश्चन्दन कन्दकः कामश्च। शौटीरस्त्यागिवीरयोः। ब्राह्मणादित्वात् ष्यञ्—शौटीर्यम्।

मित—। 'शरीरं वर्ष्म विग्रहः' इत्यमरः। अर्धर्चादित्वात् पुंलिङ्गोऽपि। बाहुलकात् हिडि गत्यनादरयोः इत्यादेः ईरन्। एवं हिण्डीरकिम्मीरजम्बीरतूणीरादयः।

४७१। वशेः कित् ॥४।३१॥

दी—। उशीरम्।

मित—। अस्मादीरन्प्रत्ययः कित्। कित्वाद् 'वचिस्वपि—' इति सम्प्रसारणम्। उशीर इत्यादि। 'उशीरं वीरणमूलं उशीरमस्त्रियाम्' इत्यमरः।

४७२। कशेर्मुट् च ॥४।३२॥

दी—। काश्मीरो देशः। (चादीरन्)।

४७३। कृञ उच्च ॥४।३३॥

दी—। कुरीरं मैथुनम्।

मित—। करोतेरादेरुत्। अस्मादीरंश्च। कपिलादित्वाल्लत्वे कुलीरः कर्कटकः।

४७४। घसेः किच्च ॥४।३४॥

दी—। क्षीरम्।

मित—। घस्लृ अदने। अस्मादीरन् कित् स्यात्। कित्वाद् 'गमहन—' इत्युपधा-लोपः। कत्वषत्वे। क्षीरं दुग्धं च नीरे चेति विश्वः।

४७५। गभीरगम्भीरौ ॥४।३५॥

दी—। गमेर्भः। पक्षे नुम् च। (निम्नं गभीरगम्भीर-मित्यमरः)।

४७६। विषा विहा ॥४।३६॥

दी—। ष्यतेर्जहातेश्च विपूर्वाभ्याम् आप्रत्ययः। विषा बुद्धिः। विहा स्वर्गः। अव्यये इमे।

४७७। पच एलिमच् ॥४।३७॥

दी—। 'पचेलिमो वह्निरव्योः'।

मित—। 'केलिमर उपसङ्ख्यानम्' इति वार्तिकात् ('तव्यत्—' २८३४) प्राप्त 'पचेलिम' इति कर्मणि निष्पन्नः। पचेलिमा माषाः। पक्तव्या इत्यर्थ इति तत्रै-वोक्तत्वात्। अयन्तु कर्तर्येवेति भेदः। वह्निरव्योरिति। वह्नौ रवौ चेत्यर्थः।

४७८। शीङो धुक्लक्वलञ्वालनः ॥४।३८॥

टी—। चत्वारः प्रत्ययाः स्युः। शीधु मद्यम्। शीलं स्वभावः। शैवलः। शैवालम् शेवालम्। बाहुलकात् वस्य पोऽपि—शेपालः जलनीलिका।

मित—। शेरतेऽनेन शीधुर्मद्यविशेषः। 'मैरेयमासवः शीधुः' इत्यमरः। अर्धर्चादिपाठात् क्लीवत्वञ्च। 'शीलं स्वभावे सद्वृत्ते' इत्यमरः। 'जलनीली तु शैवालं शैवलः' इति च स एव। 'सरसिजमनुविद्धं शैवलेनापि रम्यम्' इति शाकुन्तलम्।

४७९। मृकण्भ्यामूकोकणौ ॥४।३९॥

टी—। मरूको मृगः। काणूकः काकः। (ऊक—ईकौ)।

४८०। वलेरूकः ॥४।४०॥

टी—। वलूकः पक्षी उत्पलमूलं च।

४८१। उलूकादयश्च ॥४।४१॥

टी—। वलेः सम्प्रसारणमूकश्च। उलूकाविन्द्रपेचकौ। वावदूको वक्ता। भल्लूकः। 'शमेर्बुक् च' (गणसूत्र)। शम्बूको जलशुक्तिः। (वल संवरणे इति धातुः)।

मित—। वावदूक इति। वदेर्यङन्तादूकः। 'यस्य हल' (२६२१) इति यलोपः। 'वाचोयुक्तिःपटु र्वाग्मी वावदूकोऽतिवक्तरि' इत्यमरोक्तौ 'वावदूकश्च वक्तरि' इति पाठभेदमाश्रित्याह—वावदूको वक्तेति। बाहुलकादुकप्रतिकम्बमध्योऽपि प्रत्ययः। 'जम्बूकं जम्बुकं प्राहः शम्बूकमपि शम्बुकम्' इति द्विरूपकोशः।

४८२। शलिमण्डिभ्यामूकण् ॥४।४२॥

टी—। शालूकं कन्दविशेषः। मण्डूकः। मण्डूकोभेकः।

४८३। नियो मिः ॥४।४३॥

टी—। नेमिः।

मित—। 'चक्रं रथाङ्गं तस्यान्ते नेमिः स्त्रीस्यात् प्रधिः पुमान्' इत्यमरः। बाहुलकादन्यतोऽपि प्रत्ययः। या प्रापणे। 'यामिःस्वस्कुलस्त्रियोः' इति रभसः। जै क्षये। 'जामिः स्वसृकुलस्त्रियोः' इत्यजयः।

४८४। अर्तेरूच्च ॥४।४४॥

दी—। ऊर्मिः। ('ऊर्मिः स्त्रीपुंसयोर्वीच्याम्—' मेदिनी)।

४८५। भुवः कित् ॥४।४५॥

दी—। भूमिः। ( अस्मान्मिप्रत्ययः कित्। गुणाभावः )।

४८६। अश्नोते रश्च ॥४।४६॥

दी—। रश्मिः किरणो रज्जुश्च।

४८७। दल्मिः ॥४।४७॥

दी—। दल विशरणे। दल्मिरिन्द्रायुधम्।

४८८। वीज्याज्वरिभ्यो निः ॥४।४८॥

दी—। बाहुलकाण्णत्वम्। 'वेणिः स्यात् केशविन्यासः प्रवेणी च स्त्रियामुभे'। ज्यानिः। ह्वानिः। जूर्णिः।

मित—। 'वेणी' इति च। 'कृदिकारात्—' इति ङीष्। 'ज्यानिर्हानी सवन्त्याश्च' इति विश्वः। जूर्णिरिति। 'ज्वरत्वर—' इत्यूठ्। जूर्णिः स्त्रीरोगः।

[ "वीज्याह्वाज्वरिभ्यो निः" इति माघे मल्लिनाथधृतः पाठः ]।

४८९। सृवृषिभ्यां कित् ॥४।४९॥

दी—। सृणिरङ्कुशः। 'वृष्णिः चौन्निय मेषयोः'।

मित—। आभ्यां निप्रत्ययः कित्। 'अङ्कुशोऽस्त्री सृणिः स्त्रियाम्' इत्यमरः।

४९०। अङ्गेर्नलोपश्च ॥४।५०॥

दी—। अग्निः। ( चात् निप्रत्ययः )।

४८१। वह्रिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित् ॥४।५१॥

दी—। वह्निः। श्रेणिः। श्रोणिः। द्रोणिः। ग्लानिः। हानिः। तूर्णिः। बाहुलकात्क्षानिः।

मित—। एभ्यो निप्रत्ययो नित् स्यात्। श्रेणिरिति। 'कृदिकारात्—' इति पक्षे श्रेणी इत्यपि। 'कटिः श्रोणिः ककुद्मती' इत्यमरः। यु मिश्रणे। यौति मिश्रयति 'योनिः स्त्रीपुंसयोश्च स्यादाकरे स्मरमन्दिरे' इति मेदिनी। द्रोणिः सेचनी। 'कृदिकारात्—' इति ङीष=द्रोणी। ग्लानिर्हर्षक्षयः। 'आदेचः—' इत्यात्वम्। हानिरपचयः। तूर्णिर्मानः। 'ज्वरत्वर—' इत्यूठ्।

४८२। घृणिपृश्निपार्ष्णिचूर्णिभूर्णि ॥४।५२॥

दी—। एते पञ्च निपात्यन्ते। 'घृणिः किरणः। स्पृशतेः सलोपः। पृश्निरल्पशरीरः। पृषेर्ष्णिश्च। पार्ष्णिः पादतलम्। चरेरुपधाया उत्त्वम्। चूर्णिः कपर्दकशतम्। बिभर्तेरुत्वम्। भूर्णिर्धरणी।

मित—। घृ सेचने। निप्रत्ययो गुणाभावश्च। किरण इति। ज्वालातरङ्गौ च। स्पृशतेः सलोप इति। वेदभाष्ये तु 'अधिश्रियो दधिरे पृश्निमातरः' इत्यत्र 'पृश्नेर्नानारूपायाः भूमेः पुत्रास्तत्र: श्रियः ऐश्वर्याणि अधिदधिरे आधिक्येन धृतवन्तः। प्रश्नुते (न तु स्पृशतीति) सर्वाणि रूपाणीति पृश्निर्भूमिः। श्रूयते च—'इयं वै पृश्निः।' घृणिपृश्निरित्यादौ निपातनादभिमतरूपसिद्धिः। पृश्निर्माता येषां ते तथोक्ताः। 'ऋतश्छन्दसि इति समासान्तस्य कपः प्रतिषेधः' इति व्याख्यातम् ( Rigveda R. C. Dutta Ed. P—1054—55 ) भूर्णिर्धरणीति। 'न भूर्णि'रित्यत्र वेदभाष्ये भूर्णिर्धारकः पोषको वा इति च।

४८३। वृदृभ्यां विन् ॥४।५३॥

दी—। वर्विर्घस्मरः। दर्विः। ( प्रत्यय नकारस्येत्वम्: )।

४८४। जॄशॄस्तॄजागृभ्यः क्विन् ॥४।५४॥

दी—। जीर्विः पशुः। शीर्विर्हिंस्रः। स्तीर्विरध्वर्युः। जागृविर्नृपः। (जागृविर्जागरूक इति वेदभाष्यम्)।

४८५। दिवो द्वे दीर्घश्चाभ्यासस्य ॥४।५५॥

दी—। 'दीदिविः स्वर्ग-मोक्षयोः'।

मित—। क्विन् प्रत्यये परे इत्यनुषङ्गः। 'गोपामृतस्य दीदिविम्' इत्यत्र मन्त्रे दीदिवं द्योतमानमित्येव। दीदिविर्वेहस्पतिश्चेति विश्वप्रकाशे दृश्यते।

४८६। कृविघृष्विछविस्थविकिकीदिवि ॥ ४।५६ ॥

दी—। कृविस्तन्तुवायद्रव्यम्। घृष्विर्वराहः। छास्थोर्ह्रस्वत्वञ्च। छविर्दीप्तिः। स्थविस्तन्तुवायः। दिव्यतेःकिकीपूर्वात्। किकीदिविश्चाषः। बाहुलकाद्ध्रस्वदीर्घयोर्विनिमयः। 'चाषेण किकिदीविना'।

मित—। एते क्विन्नन्ता निपात्यन्ते। उग्रस्य पुनः स्थविरस्य घृष्वेः इति मन्त्रेतु घृष्वेः कामानां वर्षकस्येत्यर्थः। 'घृषु सेचने' इति धात्वनुगमात्। 'शोभा कान्ति-द्युतिश्छवि' रित्यमरः। चाषः पक्षिभेदः। अथ चाषः किकीदिवि'रित्यमरः।

४८७। पातेर्डतिः ॥ ४।५७ ॥

दी—। पतिः। (डित्त्वाट्टिलोपः)।

४८८। शकेर्ऋतिन् ॥ ४।५८ ॥

दी—। शकृत्। 'उच्चारावस्करौ शमलं शकृत्। गूथं पुरीषम्—' इत्यमरः।

४९९। अमेरतिः ॥ ४।५९ ॥

दी—। अमतिः कालः। 'अथामतिः पुंसि हिमदीधितिकालयोः'।

५००। वहिवस्यर्तिभ्यश्चित् ॥ ४।६० ॥

दी—। वहतिः पवनः। 'वसतिर्गृहयामिन्योः'। अरतिः क्रोधः। ( आभ्यः अतिप्रत्ययः चित्। अन्तोदात्तः )

५०१। अञ्चेः को वा ॥ ४।६१ ॥

दी—। अङ्कतिरञ्चतिर्वातः। ( अतिप्रत्ययः )।

५०२। हन्तेरंह च ४।६२ ॥

दी—। हन्तेरतिः स्यादंहादेशश्च धातोः। हन्ति दुरितमनया अंहतिर्दानम्। 'प्रादेशनं निर्वपनमपवर्जनमंहतिः'।

५०३। रमेर्णित् ॥ ४।६३ ॥

दी—। 'रमतिः कालकामयोः'। (अतिप्रत्ययः। स च नित्)

५०४। सूडः क्रिः ॥ ४।६४ ॥

दी—। सूरिः।

मित—। सूङ् प्राणिप्रसवने। सूते रचयति शास्त्रमिति सूरिर्विद्वान्। 'धीमान् सूरिः कृती कृष्टिर्लब्धवर्णो विचक्षणः' इत्यमरः। सूरिन् इत्यपि। दशपाद्यां 'सूङ रिन् दीर्घश्चे'ति पाठात्। तत्र रिनो नकारस्य नेत्त्वम्। एवं सूरी सूरिणौ सूरिण इत्यादि।

५०५। अदिशदिभूशुभिभ्यः क्रिन् ॥ ४।६५ ॥

दी—। अद्रिः। शद्रिः शर्करा। भूरि प्रचुरम्। शुभ्रिर्ब्रह्मा।

५०६। वङ्क्र्यादयश्च ॥ ४।६६ ॥

दी—। क्रिन्नन्ता निपात्यन्ते। वङ्क्रिर्वाद्यभेदे गृहदारु

पार्श्वास्थि च। वध्रिः चेत्रम्। 'अङ्घ्रिरङ्घ्रिः स्मरणः'। तद्रिः सौत्रो धातुः। तन्द्रिर्मोहः। बाहुलकाद् गुणः। भेरिः।

मित—। वकि कौटिल्ये। तन्त्रिर्मोह इति। निद्रा आलस्यं वेति च। 'विभज्य नक्तन्दिवमस्ततन्द्रिना' इति भारविः। 'कृदिकारात्—' इति ङीष्। एवं 'भेरी स्त्री पटहः पुमान्' इत्यमरः।

५०७। रामदिभ्यां त्रिप्॥ ४।६७॥

दी—। रात्रिः। शत्त्रिः कुञ्जरः।

५०८। अदेस्त्रिनिश्च॥ ४।६८॥

दी—। चात्त्रिप्। अत्त्री। अत्त्रिणौ। अत्त्रिणः। अत्रिः। अत्त्रौ। अत्त्रयः।

५०९। पतेरत्रिण्॥ ४।६९॥

दी—। पतत्रिः पक्षी। (पतत्रशब्दान्मत्वर्थे इनि तु पतत्रीति)

५१०। मृकणिभ्यामीचिः॥ ४।७०॥

दी—। मरीचिः। कणीचिः पल्लवो निनादश्च।

मित—। 'मरीचिर्मुनिभेदे ना गभस्तावनपुंसकम्' इति मेदिनी।

५११। श्वयतेश्चित्॥ ४।७१॥

दी—। श्वयीचिर्व्याधिः। (अस्मादीचिप्रत्ययः चित्)।

५१२। वेञो डिच्च॥ ४।७२॥

दी—। वीचिस्तरङ्गः। नञ्समासेऽवीचिर्नरकभेदः।

५१३। ऋहनिभ्यामूषन्॥ ४।७३॥

दी—। अरूषः सूर्यः। हनूषो राक्षसः।

५१४ । पुरः कुषन् ॥ ४।७४ ॥

टी—। 'पुर अग्रगमने' पुरुषः । 'अन्येषामपि—' इति दीर्घः । पूरुषः ।

मित—। कुषनः कित्त्वान्न गुणः । इति दीर्घ इति । तथा चामरः 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इति ।

५१५ । पॄनहिकलिभ्यः उषच् ॥ ४।७५ ॥

टी—। परुषम् । नहुषः । कलुषम् ।

मित—। 'परुषं कर्बुरे रूक्षे निष्ठुरोक्तौ च वाच्यवत्' इति मेदिनी । 'नहुषो राजविशेषे नागभिद्यपि' इति हेमचन्द्रः । 'कलुषंत्वाविलैनसोः' इति विश्वः ।

५१६ । पीयेरूषन् ॥ ४।७६ ॥

टी—। पीय इति सौत्रो धातुः । पीयूषम् । बाहुलकाद् गुणे 'पेयूषोऽभिनवं पयः' । ( पीयूषममृतम् ) ।

५१७ । मस्जेर्नुम् च ॥ ४।७७ ॥

टी—। मञ्जूषा । ( चादूषन् । 'पिटकः पेटकः पेटा मञ्जूषा' इत्यमरः ) ।

५१८ । गडेश्च ॥ ४।७८ ॥

टी—। गण्डूषः—गण्डूषा । ( उषन् प्रत्ययः ) ।

५१९ । अर्त्तेररुः ॥ ४।७९ ॥

टी—। अररुः शत्रुः । अररू । अररवः । ( ऋ + अरुः । गुणः )

५२० । कुटः किच्च ॥ ४।८० ॥

टी—। कुटरुर्वस्त्रगृहम् । कित्त्वप्रयोजनं चिन्त्यम् ।

The root कुट कौटिल्ये takes the affix अरम् which is कित् after it. This indication of कित्त्व is objectionable for the rule 'गाङ् कुटादिभ्य—' ( 2461 ) provides for ङित्त्व of such affixes as are neither ञित् nor णित् and this might be treated as ङित् whence the prohibition of गुण which is the object of the author for pronouncing the term कित्त्व here, would have been executed by the same rule 'क्ङिति च'। Thus कुटरु means the drawing room.

मित—। कुट: कित्चेति। कुट कौटिल्ये। अस्मात् अरम्। स च कित्। कित्त्वप्रयोजनं चिन्त्यम्। तथाच प्रत्ययस्यास्य कित्त्ववचनं गुणनिषेधार्थम्। तच्च तस्य ङित्त्वादपि असेत्स्यत्। 'गाङ् कुटादिभ्य:—' ( २४५१ ) इति सूत्रानुसारात् तस्य अञित्वेन ङित्वात् 'क्ङिति' इत्यस्य प्रवृत्तेरिति भाव:।

५२१। शकादिभ्योऽटन् ॥ ४।८१ ॥

टी—। शकटोऽस्त्रियाम्। ककिर्गत्यर्थ:। कङ्कट: सन्नाह:। देवट: शिल्पी। करट इत्यादि।

५२२। ककदिकडिकटिभ्योऽम्बच् ॥ ४।८२ ॥

टी—। करम्बं व्यामिश्रम्। कदिकडी सौत्रौ। कदम्बो वृक्षभेद:। कडम्बोऽग्रभाग:। कटम्बो वादित्रम्।

मित—। करम्बमिति। तथाच विश्व:—'करम्बो मिश्रिते वाल्लभान्तस्तु दधिसक्तुषु' इति। 'कदम्बं निकुरम्बे स्यान्नीपसर्षपयो: पुमान्' इति मेदिनी। रलयोरभेदात्—'कलम्बी शाकभेदे स्यात्—' इति मेदिनी।

५२३। कदेर्णित् पक्षिणि ॥ ४।८३ ॥

टी—। कादम्ब: कलहंस:। अम्बच्प्रत्यय:। स च णित्। उपधावृद्धि:।

५२४। कलिकर्द्योरमः ॥ ४।८४ ॥

टी—। कलमः। कर्दमः।

मित—। कल सङ्ख्याने। कर्द कुत्सिते शब्दे। कलमः पुंसि लेखन्यां शालौ पाटच्चरेऽपि च' इति मेदिनी।

५२५। कुणिपुल्योः किन्दच ॥ ४।८५ ॥

टी—। 'कुण शब्दोपकरणयोः'। कुणिन्दः शब्दः। पुलिन्दो जातिविशेषः। (पुल महत्त्वे)।

५२६। कुपेर्वा वश्च ॥ ४।८६ ॥

टी—। कुपिन्दकुविन्दौ तन्तुवाये।

मित—। कुप क्रोधे। अस्मात् किन्दचप्रत्ययः। धातु र्वकारान्तोऽपि। 'तन्तुवायः कुविन्दः स्यात्' इत्यमरः। बाहुलकात् 'अल भूषणादौ'। अलिन्दः। 'प्रघाणप्रघणालिन्दा बहिर्द्वारप्रकोष्ठकः' इत्यमरः। 'अस्मामलिन्दे न चकु रेव मुग्धाङ्गना गोमय—गोमयानि' इति माघः।

५२७। नौषञ्जेर्घ थिन् ॥४।८७॥

टी—। निषङ्गथिरालिङ्गकः। (चजोरिति कुत्वम्)।

५२८। उदयर्तेश्चित् ॥४।८८॥

टी—। उदरथिः समुद्रः। (उदि+ अर्तेरितिच्छेदः। थिन्। सचचित्)।

५२९। सर्तेर्णिच ॥४।८९॥

टी—। सारथिः। (सर्त्तेर्घ थिन्। सचनित्। वृद्धिः)।

५३०। खर्जिपिञ्जादिभ्य ऊरोलचौ ॥४।९०॥

दी—। खर्जूरः। कर्पूरः। वल्लूरं शुष्कमांसम्। पिञ्जूलं कुशवर्तिः। 'लङ्गेर्वृद्धिश्च' (गणसूत्र) लाङ्गूलम्। कुसूलः। 'तमेर्वुक् वृद्धिश्च' (गणसूत्र)। ताम्बूलम्। 'शृणातेर्दुग्‌ गुरवृद्धिश्च' (गणसूत्र)। शार्दूलः। 'दुक्रोः कुक् च' (गणसूत्र)। दुकूलम्। कुक्कूलम्।

मित—। खर्जिपिञ्जादिभ्य इति। ऊर+ऊलचौ इतिच्छेदः। 'खर्ज मार्जने' एवमादिभ्यो धातुभ्य ऊरः। 'पिञ्ज हिंसायाम्' एवमादिभ्यस्तु ऊलच् इति विवेकः। तत्र खर्जूरादित्रिकम् ऊर उदाहरणम्। शिष्टा ऊलचः। कर्पूर इति। कर्पूसामर्थ्ये। अथ कर्पूरमस्त्रियाम् इत्यमरः। अत्र बाहुलकाद्‌गुणाभाव इति प्रौढमनोरमा। वल्लूरमिति। वल्ल संवरणे। एवं शालूरमासूरादयः। 'भेकै मण्डूकवर्षाभूशालूरप्लवद-र्दुराः' इत्यमरः। तन्दूरं लौहमलम्। 'लङ्गेर्वृद्धिश्चे'ति। चादूलच्।' लाङ्गूलं पुच्छ शेफयोः' इति मेदिनी। कुसूल इति। कुस श्लेषणे। दन्त्यसकारवानयम्। 'कुसूलश्च कुसीदश्च मध्यदन्त्यमुदाहृतम्' इति विश्वः। ताम्बूलमिति। तमु ग्लानौ। 'ताम्बूलं विशदं रुच्यमिति—आयुर्वेदसंग्रहः। शृणातेरिति। शॄ हिंसायाम्। ऊलचि परे धातोर्दुगागमश्च। 'शार्दूलो राक्षसान्तरे। व्याघ्रे च पशुभेदे च सत्तमे तूत्तरस्थिते,' इति मेदिनीविश्वप्रकाशौ। उत्तरस्थितमुत्तरपादम्। राज शार्दूल इति यथा। दुक्रोरिति। दुगतौ। कुङ् शब्दे। ऊलचि चानयोः कुक्। 'दुकूलं शुक्लवस्त्रं' क्षौमं च। 'कुकूलं शङ्कुसङ्कीर्णश्वभ्रे ना तु तुषानले' इति विश्वमेदिनी।

५३१। कुवश्चट् दीर्घश्च ॥ ४।९१ ॥

दी—। कूर्चो चित्रलेखनिका।

मित—। कुङ् शब्दे। अस्मात् चट् प्रत्ययः। धातो दीर्घः। कूच: स्तनः। 'कूचकुचौ स्तने मुतौ' इति विश्वः। कूचीति 'टिड्ढाणञ्—' इति ङीप् स्त्रियाम्।

५३२ समीणः ॥ ४।८२ ॥

दी—। समीचः समुद्रः। समीची हरिणी।

मित—। सम्पूर्वादिणश्चट्। दीर्घश्चेत्यनुषङ्गः।

५३३। सिविष्टेरू च ॥ ४।८४ ॥

दी—। सूचो दर्भाङ्कुरः। सूची।

मित—। षिवु तन्तुसन्ताने। अस्माट्टेरूः स्याचट् प्रत्यये परतः। सूचीति। टित्वात् ङीप्। सूची सीवनद्रव्ये स्यादाङ्गिकाभिनयद्रव्ये इति मेदिनी। 'पराभिमर्शो न तवास्ति कः करं प्रसारयेत् पन्नगरत्नसूचये' (कुमार—५) इत्यत्र सूचिरिति "इन् सर्वधातुभ्य" इति इन्प्रत्ययान्तोऽयं बोध्यः हरिवत्।

५३४। शमेर्वन् ॥ ४।८४ ॥

दी—। शम्बो मुसलम्।

५३५। उल्वादयश्च ॥ ४।८५ ॥

दी—। वन्नन्ता निपात्यन्ते। 'उच समवाये'। चस्यलत्वं गुणाभावश्च। उल्वो गर्भाशयः। शुल्वं ताम्रम्। निम्बः। बिम्बम्।

मित—। उल्व इति। 'यथोल्वेनावृतो गर्भस्तथा तेनेदमावृतम्' (गीता—३।३८)। 'गर्भाशयो जरायुः स्यादुल्वश्च कललोऽस्त्रियाम्' इत्यमरादयः। बिम्बमिति। बिम्ब इति च। 'बिम्बस्तु प्रतिबिम्बे स्यात् मण्डले पुन्नपुंसकम्' इति मेदिनी। बी गत्यादिषु। अस्माद् वन्। नुमागमः धातोर्ह्रस्वत्वञ्च।

५३६। स्थः स्तोऽम्बजवकौ ॥ ४।८६ ॥

दी—। तिष्ठतेरम्बच् अवक एतौ स्तः स्तादेशश्च। 'स्तम्बो गुच्छस्तृणादिनः'। स्तवकः पुष्पगुच्छः।

मित—। तिष्ठतेः 'स्त' इत्यादेशः स्यादम्बचि अवके च प्रत्यये परे इत्यर्थः। अमरोक्तिमाह—स्तम्बो गुच्छ इति।

५३७। शाशपिभ्यां ददनौ ॥ ४।९७ ॥

दी—। 'शादो जम्बालशष्पयोः'। शब्दः।

मित—। शो तनूकरणे। शप आक्रोशे। 'आदेचः—' इत्यात्वम्। पूर्वस्माद् दः। अपरस्माद् दन् इति प्रत्ययविभागः।

५३८। अब्दादयश्च ॥ ४।९८ ॥

दी—। अवतीत्यब्दः। 'कौतेर्नुम् च' (गणसूत्र)। कुन्दः।

मित—। अब्दो वत्सरो मेघश्च। कौतेरिति। कुशब्दे इति। उभयत्र दः, दन् वा प्रत्ययः। कुन्दः पुष्पविशेषः।

५३९। वलिमलितनिभ्यः कयन् ॥ ४।९९ ॥

दी—। वलयम्। मलयः। तनयः।

५४०। वृहोः षुग्दुकौ च ॥ ४।१०० ॥

दी—। वृषय आश्रयः। हृदयम्।

मित—। वृञ् वरणे। हृञ् हरणे। आभ्यां कयन् प्रत्ययः। क्रमादनयोः षुक् दुक् इत्यागमौ च। ह्रियते विषयैरिति हृदयं मनः। कित्त्वादुभयत्र गुणाभावः।

५४१। मिपीभ्यां रुः ॥ ४।१०१ ॥

दी—। मेरुः। पेरुः सूर्यः। बाहुलकात् पिबतेरपि। 'संवत्सरवपुः पारुः पेरुर्वासोर्दिनप्रणीः'।

५४२। जत्र्वादयश्च ॥ ४।१०२ ॥

दी—। जत्रु। जत्रुणी। अश्रु अश्रुणी।

मित—। रुप्रत्ययान्ता निपात्यन्ते। जनी प्रादुर्भावे। नकारस्य तकारः। जत्रु स्कन्धसन्धिः। असु क्षेपणे। अशू व्याप्तौ। अस्रु अश्रु वा नेत्रवारि।

५४३। रुशातिभ्यां क्रुन् ॥ ४।१०३ ॥

दी—। रुरुर्मृगभेदः। शातयतीति शत्रुः। प्रज्ञादौ पाठाद्ध्रस्वत्वम्।

मित—। रु शब्दे। शद्लृ शातने—ण्यन्तः।

५४४। जनिदाच्युसृवृमदिषमिनमिभृञ्भ्य इत्वन्-त्वन्-त्वण्-क्तिन्-अक्-स्य-ढ-डटाटचः ॥ ४।१०४ ॥

दी—। जनित्वौ मातापितरौ। दात्वो दाता। च्यौत्नो गन्ता अण्डजः क्षीणपुण्यश्च। सृणिरङ्कुशश्चन्द्रः सूर्यो वायुश्च। वृश्च आर्द्रकं मूलकं च। मत्स्यः। षण्ढः। डित्वाट्टिलोपः। नमतीति नटः शैलूषः। बिभर्ति भरटः कुलालो भृतकश्च।

मित—। जनी प्रादुर्भावे। डुदाञ् दाने। च्युङ् गतौ। सृ गतौ। वृञ् वरणे। मदी हर्षे। षम वैकल्ये। नम प्रह्वत्वे। डुभृञ् धारणपोषणयोः एभ्यो नवभ्यो धातुभ्यः क्रमेण इत्वन्, त्वन्, त्वण्, क्तिन्, अक्, स्य, ढ, डट्, अटच् इत्येते नव प्रत्ययाः स्युः। जनयतीति जनित्वो माता पिता च। तदाह—जनित्वाविति। अश्वेट्। सृणिरिति। नित्स्वरेण आद्युदात्तोऽयम्। 'स्मृहपिभ्याम्—' इति तु निप्रत्ययस्वरेणान्तोदात्तः। षम वैकल्ये इत्यस्माद् ढः। षण्ढ इति। बाहुलकाद्धातोः सत्वं न शमो ढ इति सूत्रे तु तालव्यादिः साधितः। 'सायं सायो भवेत् कोषः कोशः षण्डश्च शण्डवत्' इति द्विरूपकोषः। नटः शैलूष इति। सूत्रधारपर्याय इत्यर्थः। टित्वात् ङीप्। 'नटी विदूषकौ वापि—' सा, दर्प, ।

५४५। अन्येभ्योऽपि दृश्यन्ते ॥ ४।१०५ ॥

दी—। पेत्वममृतम्। भृशम्।

मित—। अन्येभ्योऽपि धातुभ्य इत्वनादयः प्रत्यया दृश्यन्ते भवन्तीत्यर्थः। पेत्वमिति। पिबतेरित्वन्। भृशमिति। बिभर्तेः शक।

५४६ । कुसेरुम्भोमेदेताः ॥ ४।१०६ ॥

टी—। कुसुम्भम् । कुसुमम् । कुसीदम् । कुसीतो जनपदः ।

मित—। कुस श्लेषणे । अस्मात् उम्भः, उमः, ईदः, ईतः इत्येते प्रत्ययाः क्रमेण स्युः । 'कुसुम्भं हेमनि महारजते ना कमण्डलौ' इति मेदिनी । 'कुसुमं स्त्रीरजो नेत्ररोगयोः फलपुष्पयो' रिति च । 'कुसीदं जीवने वृद्ध्याम्—' इति च ।

५४७ । सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलपल्वल-धिष्ण्यशल्याः ॥ ४।१०७ ॥

टी—। सनोतेरसिप्रत्ययः उपधावृद्धिः । सानसिर्हिरण्यम् । वृञो नुक् च । वर्णसिर्जलम् । पॄ—पर्णसिर्जलगृहम् । 'तड आघाते' । तण्डुलाः । 'अकि लक्षणे' । उशच् । अङ्कुशः । 'चषेरालः । चषालो यूपकटकः' । इल्वलो दैत्यभेदः । पल्वलम् । ञिधृषा—ण्यः । ऋकारस्येकारः । धिष्ण्यम् । शलेर्यः । शल्यम् । 'वा पुंसि शल्यं शङ्कुर्ना' ।

मित—। एते निपात्यन्ते । आद्याः असिप्रत्ययान्तास्त्रयः । शिष्टाः क्रमेण उलच्—उशच् आल—वलच्—ष्ण—य प्रत्ययान्ताः । तण्डुला इति । उलच्प्रत्ययो नुमागमश्च । चषाल इति प्रत्ययस्वरेणाद्युदात्तः । उज्ज्वलदत्तादयस्तु 'आलच्' इति चित्त्वमाहुः । तन्नेत्याकरे विस्तरः । इल्वल इति । 'इल प्रेरणयोः' । वलच् प्रत्ययो गुणाभावश्च । 'इल्वला तारकाभेदे ना भेदे दैत्यमत्स्ययोः' इति मेदिनी । 'इल्वलास्तच्छिरोदेशे—' इत्यत्रामरग्रन्थे इल्वका इति पाठान्तरम् । तत्र 'इवि प्रीणने' अस्मात् 'कुन्शिल्पिसंज्ञयोः' इति कुनि बोध्यम् । पल्वलमिति । पिबतेर्वलच् । लुगागमः । धातोरत्वं च । पिबन्त्यस्मिन्निति पल्वलम् । अल्पसरः । 'वेशन्तः पल्वलं चाल्पसरः' इत्यमरः । 'धिष्ण्यं स्थाने गृहे भेऽग्नौ' इति च । ऋकारस्येकार इत्यत्र रपरत्वाभावो ष्णप्रत्ययश्च बोध्यः ।

५४८। मूशक्यविभ्यः क्लः ॥ ४।१०८ ।

द्दौ—। मूलम्। शक्लः प्रियंवदे। अम्लो रसः। बाहुलकादमेः। अम्लः।

मित—। मूङ् बन्धने। शक्ल गतौ। अमि शब्दे। प्रत्ययस्य कित्त्वान्न गुणः।

५४९। माछासमिभ्यो यः ॥ ४।१०९ ॥

दी—। माया। छाया। सव्यम्। बाहुलकात् सुनोतेः। 'सव्य' दक्षिणवामयोः'

मित—। मा माने। यप्रत्यये माया। [ मयस्य दानवस्य इयम् इति वा निपातनान्माया ]। छो छेदने। षस स्वप्ने। 'छाया सूर्यप्रिया कान्तिः प्रतिबिम्बमनातपः' इत्यमरः। 'दृक्षादीनां फलं सस्यम्' इति च।

५५०। जनेर्यक् ॥ ४।११० ॥

दी—। 'ये विभाषा'। जन्यं युद्धम्। जाया भार्य्या।

मित—। 'जन्या मातृवयस्यायां जन्यः स्याज्जनके पुमान्' इति मेदिनी। 'तज्जाया जाया भवति यदस्यां जायते पुनः' इति श्रुतिः।

५५१। अघ्न्यादयश्च ॥ ४।१११ ॥

दी—। यगन्ता निपात्यन्ते। हन्तेर्यक् अडागम उपधालोपश्च। अघ्न्या माहेयी। अघ्न्यः प्रजापतिः। 'कनी दीप्तौ'—कन्या। बवयोरैक्यम्। वन्ध्या।

मित—। अघ्न्या माहेयीति। अहननमघ्नः। तमर्हतीत्यर्थे 'छन्दसि च' इति वेदभाष्ये व्याख्यातम्। हन्तुमशक्योऽघ्न्यः पर्वत इति च तत्रैवान्यत। 'माहेयी सौरभेयी गौः' इत्युपक्रम्य 'अघ्न्या रोहिणी स्यात्' इत्यमरः। बन्ध बन्धने धातो यक् आतो लोपः—बन्ध्या। बन्धोऽस्ति। बध बन्धने-फलं बध्नाति स्तम्भयतीति बन्ध्या अप्रजावती। कनी दीप्तौ कन्यति। 'कामयते सर्वान् विशेषेण इति कन्येति' भारतभावदीपे व्याख्यातम्। कन्या कुमारी।

५५२। स्नामदिपद्यर्तिपॄशकिभ्यो वनिप् ॥ ४।११२ ॥

दी—। स्नावा रसिकः। मद्वा शिवः। पद्वा पन्थाः। 'अर्वा तुरङ्गगर्ह्ययोः'। पर्वा ग्रन्थिः प्रस्तावश्च। शक्वा हस्ती। (स्त्रियाम्) ङीब्रौ। शक्वरी अङ्गुलिः। ('वनो र च' इति ङीप् रश्च)।

मित—। स्नावन्, मद्वन् इत्यादि प्रातिपदिकम्। राजवद्रूपम्।

५५३ श्वीङ्क्रुशिरुहिजिक्षिसृधृभ्यः क्वनिप् ॥ ४।११४ ॥

दी—। शीवा अजगरः। क्रुश्वा शृगालः। रुह्वा वृक्षः। जित्वा जेता। क्षित्वा वायुः। सृत्वा प्रजापतिः। धृत्वा विष्णुः।

मित—। क्वनिपः कित्त्वात् सर्वत्र गुणाभावः। जित्वा जेतेति। जयशील इत्यर्थः। 'सजित्वानं सदासहम्' इत्यत्र मन्त्रे वेदभाष्ये प्रोक्तम्।

५५४। ध्याप्योः संप्रसारणं च ॥ ४।११४ ॥

दी—। धीवा कर्मकरः। पीवा स्थूलः।

मित—। ध्यै चिन्तायाम्। प्योङ् वृद्धौ। आभ्यां क्वनिप् अनयोः सम्प्रसारणं च। 'हलः' इति दीर्घः।

५५५। अदेर्ध च ४।११५ ॥

दी—। अध्वा।

मित—। दकारस्य धकारः। क्वनिप्। अत्ति बलमिति विग्रहः 'अध्वा जरा मनुष्याणाम्' इत्युक्तेः। अध्वा मार्गः।

५५६। प्रे ईरशदोस्तुट् च ॥४।११६॥

दी—। प्रेत्वा प्रशत्त्वा च सागरः। प्रेत्वरी प्रशत्त्वरी च नदी।

मित—। प्रपूर्वादीरः शदेश्च क्वनिप्। तुडागमश्च प्रत्ययस्य। प्रेत्वरीति। 'वनोरच' इति ङीब्रौ।

५५७। सर्वधातुभ्य इन् ॥ ४।११७ ॥

दी—। पचिरग्निः। तुडिः। तुण्डिः। वलिः। वटिः। यजिः। देवयजिः। काशत इति काशिः। यतिः। मलिः। मली। केलिः। मसी—परिणामे। मसिः। बाहुलकाद् गुणः। कोटिः। हेलिः। बोधिः। नन्दिः। कलिः।

मित—। पचिरग्निरिति। एषु क्रमेण डुपचष् पाके, तुडि तोडने (तोडनं दारणं हिंसनं च) वल संवरणे, वट वेष्टने, यज देवपूजादौ, काशृ दीप्तौ, मल, मल्ल धारणे। केलृ चलने—भ्वादिः, हेला विलासे इति। किल श्वैत्यक्रीडनयोः तुदादिः इति वा। कुट कौटिल्ये। हिल भावकरणे। बुध अवगमने। टुनदि समृद्धौ। कल शब्दसंख्यानयोः इति धातवः। यजिः पूजकः। काशत इति। काशिरिति। 'कृदिकारात्—' इति पक्षे ङीष्। काशी वाराणसी। स्वार्थे कनि काशिका। यतिरिति। यती प्रयत्ने। 'यतिः स्त्री पाठविच्छेदे निकारयतिनोः पुमान्' इति मेदिनी। बाहुलकादिति। 'गाङ्कुटादिभ्यः—' इति ङित्त्वाद् गुणाप्राप्तौ इति भावः। 'कोटिः स्त्री धनुषोऽग्रेऽश्रौ संख्याभेदप्रकर्षयोः। बोधिः पुंसि समाधेश्च भेदे पिप्पलपादपे। इह "इन्" इत्येव सूत्रमस्तु "सर्वधातुभ्य" इति तु प्रक्षिप्तं व्यर्थं च। एवं "सर्वधातुभ्यः ष्ट्रन्" इत्यादावपि इत्याहुः।

५५८। हृपिषिरुहिवृतिविदिछिदिकीर्तिभ्यश्च ॥ ४।११८ ॥

दी—। 'हरिर्विष्णावहाविन्द्रे भेके सिंहे हये रवौ। चन्द्रे कोले प्लवङ्गे च यमे वाते च कीर्तितः' ॥ पेषिर्वज्रम्। रोहिर्व्रीही। वर्तिः। वेदिः। छिदिश्छेत्ता। कीर्तिः।

मित—। इन् प्रत्यय इति शेषः। हरतेः कौलेयस्येव 'अच इः' इति प्राप्ते इतरेषां तु 'इगुपधात्—' इति किच्चे प्राप्ते वचनम्। कीर्तिः प्रसादे यशसोर्विस्तारे कर्दमेऽपि च' इति विश्वः। "सा रसवत्ता विहता नवका विलसन्ति चरति नो कंकः

(कल्पः)। सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये"। इति सुबन्धुप्रयोगश्च। कीर्तिशेषमिति सरःपक्षे प्रसादशेषं राजपक्षे यशःशेषमिति बोध्यम्।

५५९। इगुपधात् कित् ॥ ४।११९ ॥

टी—। कृषिः। ऋषिः। शुचिः। लिपिः। बाहुलकाद् षत्वे। लिखिः। तूल निष्कर्षे। तूलिः। तूली। कूर्चिका।

मित—। इनः कित्त्वं गुणाभावार्थम्।

५६०। भ्रमेः संप्रसारणं च ॥ ४।१२० ॥

टी—। भृमिर्वातः। बाहुलकाद् भ्रमिः। (चादिन्प्रत्ययः)।

५६१। क्रमितमिशतिस्तम्भामत इच्च ॥ ४।१२२ ॥

टी—। क्रिमिः। संप्रसारणानुवृत्तेः कृमिरपि। तिमिर्मत्स्यभेदः। शितिर्मेचकशुक्लयोः। स्तिम्भिः समुद्रः।

मित—। क्रमु पादविक्षेपे, तमु काङ्क्षायाम्, शतिस्तम्भौ सौत्रौ। एभ्य इन् स्यादातोऽतोऽदेरित्त्वं च। तिमिर्मत्स्यभेद इति। 'अस्ति मत्स्यस्तिमिर्नाम तथा चास्ति तिमिङ्गिलः। तिमिङ्गिलगिलोऽप्यस्ति तद्गिलोऽप्यस्ति' इति रामायणे।

५६२। मनेरुच्च ॥ ४।१२२ ॥

टी—। मुनिः। (मनेरकारस्य उत्। चकारादिन् प्रत्ययः)।

५६३। वर्णेर्वलिश्चाहिरण्ये ॥४।१२४॥

टी—। वर्णिः सौत्रः। अस्य वलिरादेशः। 'करोपहारयोः पुंसि बलिः प्राण्यङ्गके स्त्रियाम्'। बवयोरैक्याद् वलिः। हिरण्ये तु वर्णिः—सुवर्णम्।

मित—। वर्ण इत्यस्य धातोर्वल् इत्यादेशो भवति इन्प्रत्यये परतो न तु हिरण्ये। बवयोरैक्याद्वलिरिति। 'बलिर्दैत्यप्रभेदे च करचामरदण्डयोः। उपदायां पुमान्

स्त्री तु जरयासूयचर्मणि। गन्धद्रव्यप्रभेदे जठरावयवेऽपि च' इत्यन्तःस्थवकारपक्षे मेदिनी।

५६४। वसिवपियजिराजिव्रजिसदिहनिवासिवाशिवारिभ्य-इञ् ॥ ४।१२४ ॥

दी—। वासिश्छेदनवस्तुनि। वापिः। वापी। याजि-र्यष्टा। राजिः। राजी। व्राजिर्वातालिः। सादिः सारथिः। निवातिर्लोहघातिनी। वाशिरग्निः। वादिर्विद्वान्। वारिर्गज-बन्धनी। जले तु क्लीबम्। बाहुलकाद् वारिः (वारि?) पथिकसंहतौ।

मित—। वस निवासे, डुवप् बीजसन्ताने, यज देवपूजादौ, राजृ दीप्तौ, व्रज गतौ, षद्लृ विशरणगत्यवसादनेषु, हन् हिंसागत्योः, वाशृ शब्दे, वद व्यक्तायां वाचि(ण्यन्तः), वृञ्वरणे (ण्यन्तः)—एभ्यो दशभ्य इञ्। वादिरिति ण्यन्तो निर्दिष्टः। बाहुलकादण्यन्तादपि। तथा च भूवादिसूत्रे 'वदन्तीति वादयो वाचकाः' इति न्यास-कारादयः। वारिरिति। एवं 'वारि पथिकसन्तान द्रुतादिभङ्ग्योः स्त्रियाम्' इति मेदिनी। खटतेः खाटिः। 'खाटिस्तु सदृशङ्केऽपि स्यात् किणे शवरथे स्त्रियाम्' इति च।

५६५। नहो भश्च ॥ ४।१२५ ॥

दी—। 'नाभिः स्यात् क्षत्रिये पुंसि'। प्राण्यङ्गे तु स्त्रियाम्। पुंस्यपीति केचित्।

मित—। नह्यतेर्भकारोऽन्तादेश इञ् प्रत्यये परतः। केचिदिति। तथाच मेदिनी। 'नाभिर्मुख्यनृपे चक्रमध्यक्षत्रिययोः पुमान्। द्वयोः प्राणिप्रतीके स्यात् स्त्रियां कस्तूरिकामदे' इति।

५६६। कृषेर्वृद्धिश्छन्दसि ॥ ४।१२६ ॥

दी—। कार्षिः। (भाषायां तु कृषिरित्येव)।

५६७। शः शकुनौ ॥ ४।१२७ ॥

दी—। शारिः शारिका।

मित—। शॄ हिंसायाम् इत्यस्मादशकुनौ (पक्षिणि) वाच्ये इञ् प्रत्ययः।

५६८। कृञ उदीचां कारुषु ॥ ४।१२८ ॥

दी—। कारिः शिल्पी।

मित—। शिल्पिनि वाच्ये करोतेरिञ् उदीचां मतेन। 'कारिः स्त्रियां क्रियायां स्यादाच्यलिङ्गन्तु शिल्पिनि' इति मेदिनी।

५६९। जनिघसिभ्यामिण् ॥ ४।१२९ ॥

दी—। जनिर्जननम्। घासिर्भक्ष्यमग्निश्च।

मित—। 'जनिवध्योश्च' इति वृद्धिनिषेधः। णित्करणं स्वरार्थम्।

५७०। अज्यतिभ्याञ्च ॥ ४।१३० ॥

दी—। आजिः संग्रामः। आतिः पक्षी। (इञ्प्रत्ययः इत्येव युक्तम् इति केचित्—येषां मतेन इण्)।

५७१। पादे च ॥ ४।१३१ ॥

दी—। पदाजिः। पदातिः।

मित—। पादे उपपदे अज्यतिभ्यामिण् (इञ्)। 'पादस्य पदाज्यातिगोपहतेषु' इति पदादेशः। अतएव निर्देशादजेर्वीभावोन। 'पदातिपत्तिपदगपादातिक पदाजयः। पद्गश्च पदिकश्च' इत्यमरः। पादाभ्यामजतीति अततीति च विग्रहौ।

५७२। अशिपणाय्यो रुडायलुकौ ॥ ४।१३२ ॥

दी—। अशेरुट्। राशिः पुञ्जः। पणायतेरायलुक्। पाणिः करः।

मित—। अशू व्याप्तौ। पण व्यवहारे स्तुतौ च। आभ्यामिण् (इञ्)। प्रत्ययस्य

नित्त्वादायादेशेन निर्देशः। अश्निं पचादिरिति विग्रहः। आयलुक् इति। आय-प्रत्ययस्य लोप इत्यर्थः।

५७३। वातेर्डिच्च ॥ ४।१३३ ॥

टी—। विः पक्षी। स्त्रियां वी इत्यपि।

मित—। वा गति गन्धनयोः। अश्वादिण् (इञ्)। डित्वाट्टिलोपः।

५७४। प्रे हरतेः कूपे ॥ ४।१३४ ॥

दी—। प्रहिः कूपः। (पुंस्येवान्धुः प्रहिः कूप उदपानन्तु पुंसिवेत्यमरः)

५७५। नौ व्यो यलोपः पूर्वस्य च दीर्घः ॥ ४।१३५

दी—। व्येञ इण् स्याद् यलोपश्च। नेर्दीर्घः। नीविः। नीवी। वस्त्रग्रन्थौ मूलधने च।

मित—। 'स्त्री कटिवस्त्रबन्धेऽपि नीवी परिपणेऽपि च' इत्यमरः।

५७६। समानेख्यः स चोदात्तः ॥४।१३६ ॥

दी—। समानशब्दे उपपदे ख्या इत्यस्मादिण् स्यात्। स च डित् यलोपश्च। समानस्य तूदात्तः स इत्यादेशश्च। समानं ख्यायते जनैरिति यथा।

मित—। उज्ज्वलदत्तेनोक्तम्—इञ् स्यात् स चोदात्तो इति तन्नेति प्रौढ़-मनोरमायां विस्तरेण प्रपञ्चितम्। इणः सन्निधानात् इणो विच्छिन्नत्वान्न पुनरनुवृत्ति-रिति तु वक्तव्यः।

५७७। आङि श्रिहनिभ्यां ह्रस्वश्च ॥ ४।१३७ ॥

दी—। इण् स्यात् स च डित्। आङो ह्रस्वश्च। 'स्त्रियः पाल्यश्रिकोटयः'। सर्पं हत्वासुरेण्यहिः'।

५७८। अच इः ॥ ४।१३८ ॥

दी—। रविः। पविः। तरिः। कविः। अरिः। अलिः।

मित—। अजन्तेभ्यो धातुभ्य इप्रत्ययः स्यात्। रविरित्यादौ क्रमेण रु, पू, तॄ, कु, ऋ इति धातवः।

५७९। खनिकष्यज्यसिवसिवनिसनिध्वनिग्रन्थिचलिभ्यश्च ॥ ॥ ४।१३९ ॥

दी—। खनिः। कषिर्हिंस्रः। अजिः। असिः। वसिर्वस्त्रम्। वनिरग्निः। सनिर्भक्तिर्दानं च ध्वनिः। ग्रन्थिः। चलिः पशुः।

मित—। खनिरिति। एतस्मादेव ञ्चरिति इप्रत्यये खानिरपि। 'खनिरेवं मता खानिः' इति द्विरूपकोशः। अजिरिति। बाहुलकाद् वीभावाभावः। यद्वा 'पादे च' (५७१) इति ज्ञापकादत्र वीभावाभावः।

५८०। वृतेश्छन्दसि ॥ ४।१४० ॥

दी—। वर्तिः। (छन्दसीति। लोकेऽप्ययं प्रागुदाहृतः)।

५८१। भुजः किच्च ॥ ४।१४१ ॥

दी—। भुजिः।

मित—। भुज पालनाभ्यवहारयोः। अच्चादिप्रत्ययः। स च कित्। भुजिरग्निः।

५८२। कॄगॄशॄपॄकुटिभिदिच्छिदिभ्यश्च ॥ ४।१४२ ॥

दी—। इः कित् स्यात्। किरिर्वराहः। गिरिर्गौलाक्षि-रोगयोः। गिरिणा काणः गिरिकाणः। शिरिः शलभो हन्ता च। पुरिर्नगरं राजा नदी च। कुटिः शाला शरीरं च। भिदिर्वज्रम्। छिदिः परशुः।

मित—। किरिर्वराह इति। वराहः शूकरो घृष्टिः कोलः पोत्री किरिः किटि' रित्यमरः। 'इसपत्रायी—' इति कप्रत्यये किर इत्यपि। 'स्यात् किरो किरिः प्रोक्तः पथः पथिन्' इति त्रिरूपकोशः। गिरिरिति। 'गिरिर्ना नेत्ररुग्भिदि। पट्टी गिरिजके योषित्,—पूज्ये पुनस्त्रिषु' इति मेदिनी। कुटिरिति। कृदिकारात्—' इति ङीषि कुटी इत्यपि।

५८३। कुडिकम्प्योर्नलोपश्च ॥ ४।१४३ ॥

टी—। कुडि दाहे। कुडिर्देहः। कपिः। (चादिप्रत्ययः। कपिर्मर्कटः)

५८४। सर्वधातुभ्यो मनिन् ॥ ४।१४४ ॥

टी—। क्रियते इति कर्म। चर्म। भस्म। जन्म। शर्म। स्थाम बलम्। इस्मन्निति छद्मः। छद्म। सुत्रामा।

मित—। सर्वधातुभ्य इति प्रचित' व्यर्थञ्च 'सर्वधातुभ्य इन्' इत्यत्र प्रौढ़मनोरमायां स्पष्टम्। चर्मेत्यत्र चर गतौ, भस्मेत्यत्र भस भर्त्सनदीप्त्योः', शर्म (सुखम्) इत्यत्र शृ, स्थामेत्यत्र ष्ठा (स्था), छद्मेत्यत्र छद अपवारणे ण्यन्तः, सुत्रामेत्यत्र त्रैङ् इति धातवः। स्थाम बलमिति। धातोरुपधायाः ह्रस्व इत्याह—इस्मन्निति। 'सुत्रामा गोत्रभिद्‌ वज्री वासवो वृत्रहा वृषा' इत्यमरः।

५८५। बृंहेर्नोऽच्च ॥ ४।१४५ ॥

टी—। नकारस्याकारः। 'ब्रह्म तत्त्वं तपो वेदो ब्रह्मा विप्रः प्रजापतिः'।

मित—। बृहि वृद्धौ। अस्माद् मनिन्। इदित्त्वस्य नुमो नकारस्य अकारश्च। वन्। बृंहेः नः + अत् + च इतिच्छेदः।

५८६। अश्विशकिभ्यां छन्दसि ॥ ४।१४६ ॥

टी—। अश्मा। शक्मा।

मित—। अनयोर्मनिन् इति शेषः। अश्मा प्रस्तरः। एतद् भाषायामपीष्यते। 'अश्मापि याति महात्मान्' इत्यादि कविप्रयोगात्।

५८७। हृभृधृसृस्तृशृभ्य इमनिच् ॥ ४।१४७ ॥

दी—। हरिमा कालः। भरिमा कुटुम्बम्। धरिमा रूपम्। सरिमा वायुः। स्तरिमा तल्पम्। शरिमा प्रसवः।

मित—। हरिमा इति। हरिमाणौ हरिमणः इत्यादि रूपम् काल इति अर्थः। वेदभाष्ये तु 'हृद्रोगं मम सूर्य हरिमाणं च नाशय' इति रोगशान्त्यर्थकसूर्योपस्थान—मन्त्रे हरिमाणं शरीरगतकान्तिहरणशीलं वायुं रोगं यद्वा शरीरगतं हरिद्वर्णरोग-प्राप्तम्' इति व्याख्यातम् तद्धरणे 'जनिहृभ्यामिमनन्' इति व्युत्पादितम्। तद्धमन्त्रे विस्मृतिविजृम्भितम् इत्युपेक्ष्यम्।

५८८। जनिमृङ्भ्यामिमनिन् ॥ ४।१४८ ॥

दी—। जनिमा जन्म। मरिमा मृत्युः।

५८९। वेञः सर्वत्र ॥ ४।१४९ ॥

दी—। छन्दसि भाषायां चेत्यर्थः। वेमा तन्तुवायदण्डः। अर्धर्चादिः। सामनी वेमनी इति वृत्तिः। (वेमन्निति शब्दः)।

५९०। नामन् सीमन्व्योमन्रोमन् लोमन् पाप्मन् धामन् ॥४।१५०॥

दी—। सप्त अमी निपात्यन्ते। म्नायतेऽनेनेति नाम। सिनोतेर्दीर्घः। सीमा। सीमानौ। सीमानः। पक्षे डाप्। सीमे। सीमाः। व्येञोऽन्त्यस्योत्त्वं गुणः। व्योम। रौतेः रोम। लोम। पाप्मा पापम्। धाम परिमाणं तेजश्च।

मित—। निपात्यन्त इति। मनिनन्ता इति शेषः। म्नायत इति। म्ना अभ्यासे। धातो र्मलोपः। सीमेति। षिञ् बन्धने। सत्वम्। दीर्घश्च। स्त्रीलिङ्गोऽयम्।

'भीमसोमी स्त्रियासुभे' इत्यमरः। लोम इति। कपिलकादित्वाल्लत्वम्। पाप्मेति। पिवतेः पुगागमः। बाहुलकादन्यतोऽपि। यच्च पूजायाम्। यक्ष्मा इति प्रौढ़मनरमा। सूत्रचिन्त्यम्। सूत्रान्तरेणैवास्य प्राप्तत्वात्। प्राक्प्रतिपादितत्वाच्च व्यत्वम्। बाहुलकात् सोमा चन्द्रः।

५८१। मिथुने मनिः॥ ४।१५१॥

टी—। उपसर्गक्रियासम्बद्धो मिथुनम्। न तु स्त्रीपुंसौ। स्वरार्थमिदम्। सुशर्मा।

मित—। सुशर्मेति। ञ्नुत्तरपद स्वरेणाद्योदात्तं पदम्। मनिनि तु मध्योदात्तं स्यात् सुष्ठु श्रणातीति विग्रहः। 'स्यात् सुधर्मा देवसभा' इत्यमरस्तु मनिन् प्रत्ययान्तः समासनिष्पन्नो वा। सूत्रार्थस्तु धातूपसर्गसम्बन्धे सति मनिन्निति।

५८२। सातिभ्यां मनिन्मनिणौ॥ ४।१५२॥

टी—। स्यतीति साम। सामनी। आत्मा।

मित—। षोऽन्तकर्मणि। स्यति दुःखयतीति साम। तस्य दुरध्येयत्वादेवं संज्ञानिर्देशः। 'साम क्लीबमुपायस्य भेदे वेदान्तरेऽपि च' इति मेदिनी। अत मनिन्। अतति गच्छतीति आत्मा। 'आत्मा पुंसि स्वभावेऽपि प्रयत्न मनसोरपि। धृतावपि मनीषायाम् शरीरब्रह्मणोरपि' इति च।

५८३। हनिमशिभ्यां सिकन्॥ ४।१५३॥

टी—। हंसिका हंसयोषिति। मक्षिका।

मित—। मक्षिकेति। अश्नु व्रश्चादिना षत्वे कत्वं षत्वं च।

५८४। कोररन्॥ ४।१५४॥

टी—। कवरः। (कवरः पाठकः। 'कबरी केशविन्यासः'। ववयोरैक्यात् 'जनपद—'इति ङीष्। अन्यत्र कवरा)।

५८५। गिर उडच्॥ ४।१५५॥

टी—। गरुड़ः। (गॄ निगरणे। इदं सूत्रं केचिन्न पठन्ति।

अतएव गरुता याति इति विग्रहश्च प्रत्यये पृषोदरादित्वाल्लोपे गरुडशब्दं व्युत्पादयन्ति )।

५८६। इन्देः कमिन्नलोपश्च ॥ ४।१५६ ॥

टी—। इदम्। ( इदि परमैश्वर्य्ये। अस्मात् कम्। धातोर्नलोपः। सर्वनामशब्दः )

५८७। कायतेर्डिमिः ॥ ४।१५७ ॥

टी—। किम्। ( कै गै शब्दे। आत्वे कृते डित्वाट्टिलोपे च इदम् )

५८८। सर्वधातुभ्यः ष्ट्रन् ॥ ४।१५८ ॥

टी—। वस्त्रम्। अस्त्रम्। शस्त्रम्। दम्भन्निति ह्रस्वत्वम्। छादनाच्छत्रम्।

मित—। सर्वधातुभ्य इति प्रक्षिप्तं व्यर्थञ्चेति प्राक्प्रोक्तम्। ष्ट्रन् इति। षिदयं प्रत्ययः नित्स्त्र। अतएव षकारविगमात् टकारस्यापि मूर्धन्यत्वनिवृत्तेर्दन्त्यतकार मात्रशेषेण त्र इति प्रत्ययः। अतः—वस्+ष्ट्रन्=वस्+त्र=वस्त्रम् इत्यादि। छादयतेरुपधाह्रस्वार्थमाह—दम्भन्निति। एवं पत्रं वाहनम्। षित्वात् पत्री। पिबतेः पात्रम्। ङीषि पात्री इत्यादि।

५८९। भ्रस्जि गमिनमिविश्यशां वृद्धिश्च ॥ ४।१५९ ॥

टी—। भ्राष्ट्रः। गात्रं शकटम्। नान्त्रं स्तोत्रम्। हान्त्रं मरणम्। वैष्ट्रं पिष्टपम्। आष्ट्रमाकाशम्।

मित—। भृज्जति पक्विमिन्निति भ्राष्ट्रः भर्जनपात्रम्। 'क्लीवेऽम्बरीषं भ्राष्ट्रो ना' इत्यमरः। स्कोरिति संयोगादेः सकारस्य लोपादुत्तरं व्रश्चादिना षत्वे ष्टुत्वम्। वैष्टं 'पिष्टपमिति। पिष्टपो भुवनं जगत्' इत्यमरः। विशप्रवेशने। षत्वष्टुत्वे।

६०० । दिवेर्द्युं च ॥ ४।१६० ॥

दी— । द्यौत्रं ज्योतिः ।

६०१ । उषिखनिभ्यां कित् ॥ ४।१६१ ॥

दी— । उष्ट्रः । खात्रं खनित्रं जलाधारश्च ।

६०२ । सिविमुच्योष्टेरूच ॥ ४।१६२ ॥

दी— । सूत्रम् । मूत्रम् ।

मित— । षिवु तन्तुसन्ताने । मुच मोचने । अनयोष्टेरूकारः स्यात् ष्ट्रन् प्रत्यये परतः । सूत्रिमूत्रिभ्यां चुरादिण्यन्ताभ्यामेरचा सिद्धे आद्युदात्तार्थमिदं सूत्रम् । न च घञा तत्सिद्धिः । 'एरच्' इत्यस्य घञो बाधकत्वादित्याहुः । 'सूत्रन्तु सूचना ग्रन्थे सूत्रतन्तुव्यवस्थयोः' इति विश्वः ।

६०३ । अमिचिमिदिशसिभ्यः क्त्रः ॥४।१६३ ॥

दी— । आत्रम् । चित्रम् । मित्रम् । शस्त्रम् ।

मित— । ष्ट्रन् प्रत्ययेनैव सिद्धे प्रत्ययस्वरेणान्तोदात्तत्वं यथा स्यादित्येवमर्थं सूत्रम् ।

६०४ । पुवो ह्रस्वश्च ॥ ४।१६४ ।

दी— । पुत्रः ।

मित— । पूञ पवने । क्त्रप्रत्यये परतः अस्य ह्रस्वादेशः । पुनातीति पुत्रः । 'पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः । तस्मात् पुत्रः—' इति तु आतोऽनुपसर्गे इति कप्रत्ययनिष्पन्नः ।

६०५ । स्त्यायतेर्ड्रट् ॥ ४।१६५ ॥

दी— । स्त्री ।

मित— । स्त्यै ष्ट्यै शब्दसंघातयोः । अस्मात् क्त्रः । स च डित् । डित्त्वाट्टिलोपः । 'लोपो व्योः—' इति यलोपः । टित्त्वात् ङीप् । 'स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः' इत्यमरः ।

६०६। गुधृवीपचिवचियमिसदिक्षदिभ्यस्त्रः ॥ ४।१६६ ॥

दी—। 'गोत्रं' स्यान्नामवंशयोः। गोत्रा पृथिवी। धर्त्रं गृहम्। वेत्रम्। पत्त्रम्। वक्त्रम्। यन्त्रम्। सत्त्रम्। क्षत्त्रम्।

मित—। गुङ् अव्यक्तशब्दे। 'सत्त्रमाच्छादने यज्ञे सदादाने धनेऽपि च' इत्यमरः। क्षत्त्रं बलम् इति 'यद्धिते क्षत्त्रं न सद्यो न मन्युरित्यत्र वेदभाष्ये व्याख्यातम्। क्षतात् किल त्रायत इत्युदग्रः क्षत्त्रस्य शब्दो भुवनेषु रूढ इति कामन्दयान्तम्। पुत्रवत्।

६०७। हुयामाश्रुभसिभ्यस्त्रन् ॥४।१६७॥

दी—। होत्रम्। यात्रा। मात्रा। श्रोत्रम्। भस्त्रा।

मित—। होत्रं हविः। ऋत्विग्वाची च स्त्रीलिङ्गः होत्रा इत्यपीत्याहुः। 'यात्रा तु यापनेऽपि स्यात् गमनोत्सवयोः स्त्रियाम्। मात्रा कर्णविभूषायां वित्ते माने परिच्छदे। अक्षरावयवे स्वल्पे क्लीबं कात्स्न्येऽवधारणे'। इत्युभयत्र मेदिनी। 'कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः' इत्यमरः। 'भस्त्रा चर्मप्रसेविका' इति च स एव। चर्ममयं पात्रमित्यर्थः।

६०८। गमेरा च ॥४।१६८॥

दी—। गात्रम्। ( चात् त्रन्। धातोराकारोन्तादेशः )।

६०८। दादिभ्यश्छन्दसि ॥४।१६९॥

दी—। दात्रम्। पात्रम्। [ लोके त्वन्यत्र (प्राक्) द्रष्टव्यम् ]।

६१०। भुवादिगृभ्यो णित्रन् ॥४।१७०॥

दी—। भावित्रम्। वादित्रम्। गारित्रम् ओदनम्।

मित—। प्रत्ययस्य णित्त्वात् सर्वत्र वृद्धिः।

६११। चरेर्वृत्ते ॥४।१७१॥

टी—। चारित्रम्।

मित—। चरेरित्रण् प्रत्ययः स्याद् वृत्तं चेदर्थो भवति। चारित्रं चरित्रम्। उपधावृद्धिः। इत्रप्रत्यये चरित्रमित्युक्तं प्राक्। न चैवं प्रज्ञाद्यणा सिद्धे इदं व्यर्थमिति वाच्यम्। स्वरे विशेषात्।

६१२। अमित्रादिभ्य इत्रोत्रौ ॥४।१७२॥

टी—। अमित्रम्। वहित्रम्। धरित्री मही। त्वेङ् एवमादिभ्य उत्रः। तोत्रं प्रहरणम्। वृञ्—वरुत्रं प्रावरणम्।

मित—। अमिप्रभृतिभ्य इत्रः। तेप्रभृतिभ्य उत्रः। अमित्रमित्यादौ अमूल्यात्रौ। वह प्रापणे। धृञ् धारणे इति धातवः। धरित्रीति। गौरादित्वात् ङीष्। तोत्रं प्रहरणम्। 'तोत्रवेत्रैकपाणये।' इति गीतायां मङ्गलाचरणम्।

६१३। अमेर्द्विषति चित् ॥४।१७३॥

टी—। अमित्रः शत्रुः।

मित— इत्र एवानुवर्तते नोत्रः। चित्त्वं स्वरार्थम्। 'द्विड्विपक्षाहितामित्ररिपु शात्रवशत्रवः' इत्यमरः। न मित्रमिति विग्रहेत्वमित्रम् क्लीवम् इति बहवः। दीक्षितस्तु न मित्रममित्र इत्याह। तन्मते "भ्रूत्रामित्र—" इति लिङ्गानुशासनसूत्रेण पुंसि।

६१४। आ समिण् निकषिभ्याम् ॥४।१७४॥

टी—। संपूर्वादिणो निपूर्वात् कषेश्च आ स्यात्। स्वरादित्वादव्ययत्वम्। समया। निकषा।

मित—। समयानिकषाशब्दौ सामीप्ये वर्तते। बाहुलकाद्दुषेः दोषा रात्रिः। दिवेर्गुणाभावश्च दिवा दिवसः। स्वदेर्धश्च स्वधा इत्यादि।

६१५। चितेः कणः कश्च ॥४।१७५॥

टी—। बाहुलकादगुणः। 'चिक्कणं मसृणं स्निग्धम्'।

मित—। चिती संज्ञाने। अस्मात् कथप्रत्ययः। धातोः कथान्तादेशः। अमरोक्तिमाह—चिकणमिति।

६१६। सूचेः स्मन् ॥४।१७६॥

टी—। सूक्ष्मम्।

मित—। सूच पैशून्ये चुरादिः। णिलोपः। कुत्वषत्वे। 'सूक्ष्मं स्यात् कतकेऽध्यात्मे पुंस्यतौ त्रिषु चाल्पके' इति मेदिनी।

६१७। पातेर्डुमसुन् ॥४।१७७॥

टी—। पुमान्।

मित—। पा रक्षणे। अस्माद् डुमसुन् प्रत्ययः। 'पुङो डुमसुन्' इत्यन्ये। डित्वाट्टिलोपः। अत्र उमस् इत्यस्य योगः। पुमस् इति प्रातिपदिकम्। 'सुन्' इत्यत्र उकार' उच्चारणार्थ इत्युज्ज्वलदत्तः। तन्न। 'बहुपुंसी' इत्यादौ ङीबर्थं तस्य इत्त्वमेव। अन्यथा उगितश्चेत्यास्याप्राप्तौ ङीपो दुर्लभत्वात्। भाष्ये तु 'सूतेः सम्प्रसवे पुमान्' इत्युक्तम्। अतएवोक्तं हरिणा 'उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिता' इति। एकस्य शब्दस्य बहुधा निरुच्यमाणत्वमेवास्यहरिकारिकाया बीजम्।

६१८। रुचिभुजिभ्यां किष्यन् ॥४।१७८॥

टी—। रुचिष्यमिष्टम्। भुजिष्यो दासः।

६१९। वसेस्तिः ॥४।१७९॥

टी—। 'वस्तिर्नाभेरधो द्वयोः'। 'वस्तयः स्युर्दशास्त्रे'। बाहुलकात् शासः—शास्तिः राजदण्डः। विन्ध्यमगमगमस्यतीति अगस्तिः। शकन्ध्वादिः।

मित—। अगस्तिरिति। यावदहं नागच्छामि तावत्त्वया न वर्द्धितव्यम् इत्यगं विन्ध्यं व्यक्तवान् इत्यगस्त्यः। अन्येष्वपीति डः। पारस्करादित्वात्सुट्। 'अगस्त्यः कुम्भसम्भवः' इत्यमरः। 'अगस्तिः कुम्भयोनिः स्यादगस्त्यः कलशीसुतः' इति व्याडिः।

६२०। सावसेः ॥४।१८०॥

दी—। स्वस्ति। स्वरादिपाठादव्ययत्वम्।

मित—। असुभुवि। सुपूर्वादस्मात् तिप्रत्ययः। बहुलवचनाद् भूभावो न।

६२१। वौ तसेः ॥४।१८१॥

दी—। वितस्तिः।

मित—। तसु उपक्षये। विपूर्वादस्मात् तिः। 'अङ्गुष्ठे सकनिष्ठे स्याद् वितस्ति-र्द्वादशाङ्गुलः' इत्यमरः। स्त्रीपुंलिङ्गः।

६२२। पदिप्रथिभ्यां नित् ॥४।१८२॥

दी—। पत्तिः। प्रथितिः। "तितुत्रेष्वग्रहादीनाम्" (वार्तिक) इतीट्।

In प्रथिति, which means eminence, we have the augment इट् by the Varttika 'तितुत्रेषु—' which means that इट् is not prefixed to ति, तु, त्र etc coming after roots other than ग्रह etc. Hence ग्रहादि class necessitates इट्।

मित—। पत्तिः पदातिः। प्रख्यातिः प्रथितिः। तितुत्रेति इट्निषेधे प्राप्ते आह—'तितुत्रेषु—' इति। वार्तिमिदम् इड्विधायकम्। ग्रहादिभिन्नेभ्य एव परतस्तितुत्रादिना नेट्। प्रथेस्तु ग्रहादित्वादिट्।

६२३। दृणातेर्ह्रस्वश्च ॥४।१८३॥

दी—। दृतिः।

मित—। दॄ विदारणे। अस्मात्तिः। धातोर्ह्रस्वश्च। 'तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम्'—मनुः। 'दृतिश्चर्मपुटे मत्स्ये ना' इति मेदिनी।

६२४। कॄतॄकृपिभ्यः कीटन् ॥४।१८४॥

दी—। किरीटं शिरोवेष्टनम्। तिरीटं सुवर्णम्। कृपीटं कुक्षिवारिणोः।

६२५। रुचिवचिकुचिकुटिभ्यः कितच् ॥४।१८५॥

दी—। रुचितमिष्टम्। उचितम्। कुचितं परिमितम्। कुटितं कुटिलम्।

मित—। रुच्, वच् इत्यादयो धातवः। उचितमिति। कित्त्वाद् 'वचिस्वपि—' इति सम्प्रसारणम्। 'उचितं तु भावे न्याय्ये मिते जाते समञ्जसे' इति मेदिनी।

६२६। कुटिकुषिभ्यां क्मलन् ॥४।१८६॥

दी—। कुट्मलम्। कुष्मलम्।

मित—। किदयं प्रत्ययः। 'कुट्मलो मुकुले पुंसि न द्वयोर्नरकान्तरे' इति मेदिनी। कुष्मलं कदनं विकासितमिति वा।

६२७। कुषेर्लश्च ॥४।१८७॥

दी—। कुल्मलं पापम्। (लकारोऽन्तादेशः)

६२८। सर्वधातुभ्योऽसुन् ॥४।१८८॥

दी—। चेतः। सरः। पयः। सदः।

मित—। सर्वधातुभ्य इति प्रपञ्चार्थं व्यर्थं च। दशपाद्याम् 'असुन्' इत्येव दर्शनादित्याहुः। चेत इति। चिती संज्ञाने—चित सञ्चेतने चुरादिरिति वा धातुः। सर इति। सृ गतौ। अयं स्त्रियामपि 'सरसी तु महासरः' इति शब्दार्थः। गौरादित्वात् ङीष्। पय इति। पीङ् पाने। 'पयः क्षीरं पयोऽम्बु च' इत्यमरः। सद इति। षदॢ विशरणादौ। स्त्रीनपुंसकयोरयम्। 'समज्या परिषद् गोष्ठी सभासमितिसंसदः। आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः' इत्यमरः। एवं वच दीप्तौ। अस्मात् 'वर्चो नपुंसकं रूपे विष्ठायामपि तेजसि। पुंसि चन्द्रस्य तनये' इति मेदिनी। णभ हिंसायाम्। भौवादिकः क्र्यादिकश्च। तप सन्तापे। षह मर्षणे। मह पूजायाम्। तसु क्षाने। रञ्ज रागे। एभ्यः षड्भ्योऽसुनि सान्तम्। अयादन्तमपि। 'नभन्तु नभसा सार्द्धं तपन्तु तपसा सह। सहश्च सहसा सार्द्धम् महश्च महसा सह। तमेन च तमः प्रोक्तं रजेनापि रजः समम्' इति द्विरूपकोशः। 'तपो लोकान्तरेऽपि च।

चान्द्रायणादौ धर्मे च पुमान् शिशिरमाघयोः। सहो बले ज्योतिषि च पुंसि हेमन्तमाघयोः' इति च मेदिनी। 'मह उत्सवतन्मव' इत्यमरः। 'तमः क्लीबं गुणे—शोके सैंहिकेयान्धकारयोः' इति रभसः। रुदिर्—रोदस—रोदसी चापि दिविभूमौ पृथक् पृथक्। सह प्रयोगेऽप्यनयो रोदस्याश्चरोदसी' इति विश्वः। वी गत्यादिषु। 'वयः पक्षिणि बाल्ये यौवने च नपुंसकम्' इति मेदिनी। अण प्राणने। अनौ भक्तं तत्स्था नञ्च। 'अनोऽश्मायःसरसां जातिसंज्ञयोः' इति टचि तु अदन्तम्। 'पाकस्थानं महानसम्' इत्यमरः।

६२९। रपेरत एच्च ॥४।१८९॥

दी—। रेपोऽवद्यम्। (असुन्। धातोरादेरिकारः)।

६३०। अशेर्देवने युट् च ॥४।१९०॥

दी—। देवने स्तुतौ। यशः।

मित—। अशूव्याप्तौ। देवनेर्थे (स्तुत्यर्थे) अस्मादसुन्। धातोर्युट् च।

६३१। उब्जेर्बले बलोपश्च ॥४।१९१॥

दी—। ओजः। (चादसुन। गुणः। 'तजो दीप्तावबष्टम्भे प्रकाशबलयोरपि')।

६३२। श्वेः सम्प्रसारणं च ॥४।१९२॥

दी—। शवः। शवसी। बलपर्य्यायोऽयम्।

मित—। टुओश्वि गतिवृद्ध्योः। अस्मादसुन्नन्तस्य सम्प्रसारणञ्च। गुणः। बलपर्य्याय इति। 'शवसाहिमन्यव' इत्यादौ वेदभाष्ये तथैव व्याख्यातत्वात्।

६३३। श्रयतेः स्वाङ्गे शिरः किच्च ॥४।१९३॥

दी—। श्रयतेः शिरः आदेशोऽसुन् किच्च। शिरः। शिरसी।

मित—। श्रयतेरिति। श्रिञ् सेवायाम्। इत्यस्य शिर आदेश इत्यादि। कित्त्वादतो लोप इति लोपाद्रूत्व' पुगन्तेति, लघूपधगुणो न भवति। 'उत्तमाङ्गं' शिरः

शीर्षम्' इत्यमरः। अथ शातेर्धनर्थे कप्रत्यये अदन्तोऽपि 'शिरोवाची शिरोऽदन्तो रजोवाची रजस्तथा' इति कोशान्तरम्। 'पिण्डं दद्याद् गयाशिरे' (वायुपुराणम्) इति प्रयोगश्च। "शिरोपधानम्" इति स्वप्नवासवदत्ते भासश्च।

६३४। अर्तेरुच्च ॥४।१८४॥

दी—। उरः। (चादसुन्। कित्वानुवृत्तेर्न गुणः। 'उरो वत्सञ्च वक्षश्च') इत्यमरः।

६३५। व्याधौ शुट् च ॥४।१८५॥

दी—। अर्शो गुदव्याधिः।

मित—। अर्तेः शुट् स्याद् रोगेऽर्थे। चादसुन् प्रत्ययः।

६३६। उदके नुट् च ॥४।१८६॥

दी—। अर्तेरसुन् स्यात्तस्य च नुट्। अर्णः। अर्णसी। (अर्णोजलम्)।

६३७। इण आगसि ॥४।१८७॥

दी—। एनः।

मित—। इण् गतावित्यस्मादसुन्, धातोर्नुट् च, पापेऽर्थे। गुणः=एनः।

६३८। रिचेर्धने घिच्च ॥४।१८८॥

दी—। चात् प्रत्ययस्य नुट्। घित्वात् कुत्वम्। रेक्णः सुवर्णम्।

मित—। रिचिर विरेचने इत्यस्मात् रिच वियोजनसम्पर्चनयोरित्यस्माद्वा असुन् प्रत्ययः स्याद्धनं चेदर्थो भवति। चकारफलं नित्करणफलञ्चाह—चादित्यादिना। कुत्वमिति। 'चजोः कु घिण्ण्यतो' रित्यनेन इति बोध्यम्। 'षट् कु—' इति णत्वम्।

६३९। चायतेरन्ने ह्रस्वश्च ॥४।१८९॥

दी—। चनो भक्तम्।

मित—। चाय—पूजानिशामनयोः। अस्मादसुन् स्वादनेऽर्थे। प्रत्ययस्य नुट्। धातोश्च श्च। चनो भक्तमिति। भक्तम् अन्नम्। 'पुरुभुज्य चनस्यतम्' इत्यत्र मन्त्रे चैवमेव भाष्यम्। 'हविर्लक्षणमन्नम् इच्छतम्' इति व्याख्यानात्।

६४०। वृञ्शीङ्भ्यां रूपस्वाङ्गयोः नुट् च ॥४।२००॥

टी—। वर्णो रूपम्। शेपो गुह्यम्।

मित—। वृङ् वरण इत्यस्मादसुन् रूपार्थे शीङ् स्वप्ने इत्यस्मात्तु स्वाङ्गेऽर्थे। प्रत्ययस्य नुडागमः। गुणः। 'शेपः स्याद्वृषणं पलम्' इति।

६४१। स्रुरिभ्यां तुट् च ॥४।२०१॥

टी—। स्रोतः। रेतः। (चात् असुन्। स्रोतः प्रवाहः। रेतः शुक्रम्)।

६४२। पातेर्बले जुट् च ॥४।२०२॥

टी—। पाजः। पाजसी।

मित—। पा रक्षणेऽस्मादसुन् बलं चेदर्थो भवति। प्रत्ययस्य जुडागमः। पाजो बलम। उज्ज्वलदत्तस्तु युडिति बभास। 'अभिव्रजन्नक्षितं पाजसा रजः' इत्यादि मन्त्रभाष्ययोस्तथैवोपलब्धेः।

६४३। उदके थुट् च ॥४।२०३॥

टी—। पाथः। (पातेरसुन् उदकेऽर्थे। प्रत्ययस्य थुडादेशश्च। पाथ उदकम्)।

६४४। अन्ने च ॥४।२०४॥

टी—। पाथो भक्तम्॥ (अन्नेचार्थे पातेरसुन्। प्रत्ययस्य थुडादेशश्च)।

६४५। अदेर्नुम्धौ च ॥४।२०५॥

दी—। अदेर्भक्ते वाच्ये असुन्नुमागमो धादेशश्च। अन्धोऽन्नम्।

मित—। अन्धः—अन्धसी इत्यादि। 'भिस्सास्त्रीभक्तमन्धोऽन्नम्' इत्यमरः।

६४६। स्कन्देश्च स्वाङ्गे ॥४।२०६॥

दी—। स्कन्धः—स्कन्धसी। (असुन् धश्चान्तादेशः)।

६४७। आपः कर्माख्यायाम् ॥४।२०७॥

दी—। कर्माख्यायां ह्रस्वो नुट् च वा। अप्नः। अपः। बाहुलकात् आपः, आपसी। (असुन्। धातोर्ह्रस्वः। प्रत्ययस्य नुडागमो वा)।

६४८। रूपे जुट् च ॥४।२०८॥

दी—। अज्नो रूपम्।

मित—। आप्नोतेरसुन्। धातोर्ह्रस्वत्वम्। प्रत्ययस्य जुट् च। अप्न इति। जश्त्वे पकारस्य बकारः। अब्नसी—अब्नांसि।

६४९। उदके नुम्भौ च ॥४।२०९॥

दी—। अम्भः। (आप्नोतेरसुन्। धातोर्ह्रस्वत्वम्। धातोर्भश्चान्तादेशः। अम्भोजलम्)।

६५०। नहेर्दिवि ॥४।२१०॥

दी—। नभः। (नहेरसुन् आकाशे वाच्ये। भश्चादेशः। नभमित्यपि। अकारान्तत्वात्)।

मित—। "नभन्त नभसा साकम्" इति।

६५१। इण आगोऽपराधे च ॥४।२११॥

दी—। 'आगः पापापराधयोः'। ( इण् गतावित्यस्मादसुन्। धातोरागादेशः )।

६५२। अमेर्हुक् च ॥४।२१२॥

दी—। अंहः। ( असुनि परे। अमन्ति गच्छन्त्यधोऽनेनेत्यंहो दुरितम् )।

६५३। रमेश्च ॥४।२१३॥

दी—। रंहः। ( असुन्। धातोर्हुगागमः। रंहो वेगः )।

६५४। देशे ह च ॥४।२१४॥

दी—। रमन्तेऽस्मिन् रहः। ( असुन्। हश्चान्तादेशः )।

६५५। अञ्चियुजिभृजिभ्यः कुश्च ॥४।२१५॥

दी—। एभ्योऽसुन् कवर्गश्चान्तादेशः। 'अङ्कश्चिह्न शरीरयोः'। अग्नः पक्षी। योगः समाधिः। भर्गस्तेजः।

मित—। अङ्कः—अङ्कसी—अङ्कांसि। अग्नः—अग्नसी—अग्नांसि। योगः—योगसी—योगांसि। अकारान्तः पुमांश्चापि। 'योगेन दलिताशयः'। उच समवायेऽस्मादसुन्। बाहुलकात् न्यङ्कादित्वाद्वा कुत्वम्। "ओक आश्रयमात्रेऽपि मन्दिरेऽपि नपुंसकम्" मेदिनी। ओक—ओकसी इत्यादि।

६५६। भूरञ्जिभ्यां कित् ॥४।२१६॥

दी—। भुवः। रजः।

मित—। आभ्यामसुन् कित् स्यात्। अगुणः। भुवः अन्तरिक्षम्। अव्ययं प्रतिरूपकम व्ययमिदम्। रजो रेणुः। अजर्थे कप्रत्यये तु अकारान्तोऽप्ययम्। 'रजोऽयं रजसा सार्द्धम् स्त्रीपुष्पगुणधूलिषु' इत्यजयः।

६५७। वसेर्णित् ॥४।२१७॥

टी—। वासो वस्त्रम्। (वस निवासे आच्छादने वा। अस्मादसुन् नित्। वृद्धिः)।

६५८। चन्देरादेश्च छः ॥४।२१८॥

टी—। छन्दः। (चादसुन्। 'छन्दः पद्यप्रभेदेऽपि स्वैरचाराभिलाषयोः'। छन्द इत्यदन्तोपि इति केचित्।)

६५९। पचिवचिभ्यांसुट् च ॥४।२१९॥

टी—। 'पचसौ तु स्मृतौ पक्षौ'। वक्षो हृदयम्।

मित—। पच:—पचसी—पचांसि। पच: पक्षौ पक्षा इत्यपि।

६६०। वहिहाधाञ्भ्यश्छन्दसि ॥४।२२०॥

टी—। वक्षा अनड्वान्। हासाश्चन्द्रः। धासाः पर्वत इति प्राञ्चः। वस्तुतस्तु णिदित्यनुवर्तते न तु सुट्। तेन वहेरुपधावृद्धिः। इतरयोः 'आतो युक्—' इति युक्। 'श्रोणा घृष्णू न्ववाहसा'। 'योता इवं गृणतः स्तोमवाहाः'। 'विश्वो विहायाः'। 'वाजम्भरो विहायाः'। 'देवो नरः पृथिवीं विश्वधायाः'। 'अधारयत् पृथिवीं विश्वधायसम्'। 'धर्णसिंभूरिधायसम्' इत्यादि।

मित—। वह प्रापणे, ओहाक् त्यागे, डुधाञ् धारणादौ। छन्दसि एभ्यः असुन्। प्राचां मतेन सुडनुवर्त्य आह—वक्षाः हासाः धासा इति। प्राञ्च इति—सर्वे हरिदत्तादयः प्रसादकारादयश्चेत्याशयः। तेनेति। इतरयोः। हाको धाञश्चेत्यर्थः। वेदभाष्यमेवात्र मानमित्याहुः।

६६१। इण आसिः ॥४।२२१॥

दी—। अयाः वह्निः। स्वरादिपाठादव्ययम्। ( आस् प्रत्ययो गुणायादेशौ )।

६६२। मिथुनेऽसिः पूर्ववच्च सर्वम् ॥४।२२२॥

दी—। उपसर्गविशिष्टो धातु र्मिथुनम्। तत्रासुनोऽपवादोऽसिः। स्वरार्थः। यस्य धातोर्यत् कार्यम् असुन्प्रत्यये उक्तं तदत्रापि भवतीत्यर्थः। अग्नेर्दवने युट् चेत्यादि। सुयशाः।

मित—। प्राग्व्याख्यातम्। अग्नेर्दवने युटचेति ( ६२८ सूत्र )। अत्रादि-पदेन सुपयाः, सुस्रोताः इत्याद्युदाहार्य्यम्।

६६३। नञि हन एह च ॥ ४।२२३ ॥

दी—। अनेहाः। अनेहसौ ॥

मित—। नञ् पूर्वाद्धन्तेरसि ( अस् ) प्रत्ययः। एह च सर्वादेशः। अनेहाः कालः। 'कालो दिष्टोऽप्यनेहा अपि समयः' इत्यमरः। 'उदुशनस् पुरुदंस—' इति अनवङ्।

६८४। विधाञो वेध च ॥ २२४ ॥

दी—। विदधातीति वेधाः।

मित—। विपूर्वाद् धाञोऽसिर्वेधश्चादेशः। 'वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि' इति मेदिनी।

६६५। नुवो धुट् च ॥ ४।२२५ ॥

दी—। नोधाः ऋषिः।

मित—। णु स्तुतौ। अस्मादसिः। प्रत्ययस्य धुडागमश्च। 'सद्यो भुव वीर्याय नोधाः' इति मन्त्रे नोधा ऋषिर्भवतीति निरुक्तम्। तत्र नवं ( स्तुतिं ) दधातीति नैरुक्तं व्युत्पत्त्यन्तरम्।

६६६। गतिकारकोपपदयोः पूर्वपदप्रकृतिस्वरत्वञ्च ॥४।२२४॥

दी—। असिः स्यात्। सुतपाः। जातवेदाः। 'गतिकारकोपपदात् कृत्' (३८७३) इत्युत्तरपदप्रकृतिस्वरत्वे सति शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिदम्।

The affix असि is attached to roots preceded by गति i.e. प्रetc and कारक as उपपद्s, the preceding members (पूर्वपद) in such derivatives are accentuated as the roots following i.e. they get the accents of the roots themselves. Thus गति—सुतपाः; कारक—जातवेदाः (fire) जातान् वेत्तीति असिः। This rule is to supersede अनुदात्त accent due to the remaining portion after the subsequent member has got the account of the root ( which is अन्तोदात्त by 'धातोः' 3071 ) by the rule 'गतिकारकोपपदात्—' ( 3873 ).

मित—। असिः स्यादिति। शेषं पूरणमिदम्। गत्युपपदात् कारकोपपदाच्च धातोरसिप्रत्ययः स्यात्। अत्र पूर्वपदस्य धातुस्वरत्वं चेत्यर्थः। तत्र गतावुदाहरति—सुतपा इति। सुतपा नाम ऋषिः। सुष्ठु तप्यत इति। कारके आह—जातवेदा इति। जातान् वेत्तीति विग्रहः। अग्निरित्यर्थः। 'जातवेदास्तनूनपात्' इत्यमरः। ननु 'गतिकारकोपपदात्—' ( ३८७३ ) इत्येव सिद्धे किमर्थमिदमित्याशङ्का समाधत्ते—शेषस्यानुदात्तत्वे प्राप्ते तदपवादार्थमिति। 'अनुदात्तं पदमेकवर्जम्' ( ३६५० ) इति स्वरविधिविषयकपरिभाषयेत्यर्थः।

६६७। चन्द्रे मो डित् ॥ ४।२२७॥

दी—। चन्द्रोपदान्माङोऽसिः स्यात् स च डित्। चन्द्रमाः। ( चन्द्रं रजतममृतञ्च। तदिव मीयतेऽसौ चन्द्रमाः इति हरदत्तः )।

६६८। वयसि धाञः ॥ ४।२२८ ॥

टी—। वयोधास्तरुणः। (असिः। स च डिदिति योज्यम्। डित्वाट्टिलोपः)।

६६९। पयसि च ॥ ४।२२९ ॥

टी—। पयोधाः समुद्रो मेघश्च।

६७०। पुरसि च ॥ ४।२३० ॥

टी—। पुरोधाः। (धाञोऽसिः। स च डित्। 'पुरोधास्तु पुरोहितः' इत्यमरः)।

६७१। पुरूरवाः ॥ ४।२३१ ॥

टी—। पुरुशब्दस्य दीर्घो रौतेरसिश्च निपात्यते।

मित—। 'पुरूरवा बुधसुतो राजर्षिश्च पुरूरवाः' इत्यमरः।

६७२। चक्षेर्बहुलं शिच्च ॥ ४।२३२ ॥

टी—। नृचक्षाः। (चादसिः। शित्त्वोक्तेः सार्वधातुकत्वात् ख्याञादेशो न। नृचक्षा राक्षसः)।

६७३। उषः कित् ॥ ४।२३३ ॥

टी—। उषः। (असिः कित्। दशपाद्यां तु वसः किदिति पाठः। वसति सूर्येण सहेत्युषा)।

६७४। दमेरुनसि ॥ ४।२३४ ॥

टी—। 'सप्तार्चिर्दमुना'। दमुना अग्निः। (पक्षे 'अन्येषामपि—' इति दीर्घः। दमूनाः)।

६७५। अङ्गतेरसिरिरुडागमश्च ॥ ४।२३५ ॥

टी—। अङ्गिराः। (असिः+इरुट्+आगमश्च इतिच्छेदः)।

६७६ । सर्तेरप्-पूर्वादसिः ॥ ४।२३४ ॥

दी—। अप्सराः । प्रायेणायं भूम्नि । अप्सरसः ।

मित—। प्रायेणेति । 'स्त्रियां बहुष्वप्सरसः' इत्यमरः । 'स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि' इति शब्दार्णवः । 'एकाप्सरप्रार्थितयोर्विवादः' इति रघुः । भूम्नि इत्यस्य बहुत्वे इत्यर्थः ।

६७७ विदिभुजिभ्यां विश्वे ॥ ४।२७७ ॥

दी—। विश्ववेदाः । विश्वभोजाः ।

मित—। असिप्रत्ययः । विश्वं वेत्ति ( वन्दतीति ) भुङ्क्ते इति च विग्रहौ । उज्ज्वलदत्तेन विश्ववेदा अग्निः विश्वभोजाः इन्द्र । 'तत्पुरुषे कृति' इत्यलुगित्युक्तम् । तन्न । तथा सति विभक्त्यादेशस्य दुर्वारत्वापत्तेः ।

६७८ । वशेः कनसिः ॥ ४।२७८ ॥

दी—। संप्रसारणम् । उशनाः ।

मित—। वश कान्तौ । कान्तिरिच्छा । 'उशना भार्गवः कवि' रित्यमरः । कित्त्वात् 'ग्रहिज्या—' इति सम्प्रसारणमिति बोध्यम् ।

इति मितभाषिण्यामुणादिषु चतुर्थः पादः

---

## ॥ अथ उणादिषु पञ्चमः पादः ॥

६७९। अदि भुवो डुतच् ॥ ५।१ ॥

दी—। अद्भुतम्।

मित—। अदित्यव्ययम् आकस्मिकार्थे तस्मिन्नुपपदे भुवो डुतच् प्रत्ययः ( उतच् )। डित्वाट्टिलोपेन प्रत्ययावयवः शिष्यते।

६८०। गुधेरूमः ॥ ५।२ ॥

दी—। गोधूमः।

६८१। मसेरूरन् ॥ ५।३ ॥

दी—। मसूरः। प्रथमेपादे 'असेरुरन्' (४२) 'मसेश्च'(४३) इत्यत्र व्याख्यातः। ( मसी परिणामे। मसुर इत्यपि )।

६८२। स्थः किच्च ॥ ५।४ ॥

दी—। स्थूरो मनुष्यः। ( ष्ठा गतिनिवृत्तौ। अस्मादूरन् प्रत्ययः कित् )।

६८३। पातेरतिः ॥ ५।५ ॥

दी—। पातिः स्वामी। संपातिः पक्षिराजः।

६८४। वातेर्नित् ॥ ५।६ ॥

दी—। 'वातिरादित्यसोमयोः' ( इति रभसः )।

६८५। अर्तेश्च ॥ ५।७ ॥

दी—। अरतिरुद्वेगः। ( ऋगतावित्यस्मादतिः। गुणः। रपरत्वम् )।

६८६। तृहेः क्नो हलोपश्च ॥ ५।८ ॥

दी—। तृणम्। (तृह हिंसायाम्। अस्मात् क्नः। किच्त्वान्नगुणः)।

६८७। वृञ्लुटितनिभ्य उलच् तण्डश्च ॥ ५।९ ॥

दी—। व्रियन्ते लुट्यन्ते तन्यन्ते ताड्यन्त इति वा तण्डुलाः।

मित—। वृञादिभ्यः प्रत्येकमुलच्। तण्डश्चादेशः। स च भक्त्येव भवतीति नेति। यद्यपि 'सानसिवर्णसि—' (५४७) इत्यत्र तन्डुलशब्दो निपातितः। तथापि प्रत्ययस्वरेण मध्योदात्तः सः। अयं तु चित्स्वरेणान्तोदात्त इति भेदः।

६८८। दंसेष्टटनौ न आ च ॥ ५।१० ॥

दी—। 'दासः सेवकशूद्रयोः'।

मित—दसि दंसनदर्शनयोः। अस्मात् टटनौ प्रत्ययौ स्याताम्। दंसेरुपधास्थस्य नकारस्य अकारादेशश्च। पित्त्वं स्वरार्थम्। टित्वम् ङीबर्थम्। दासी। 'दासः शूद्रे दानपात्रे भृत्यधीवरयोरपि' इति विश्वः।

६८९। दंशेश्च ॥ ५।११ ॥

दी—। दाशः धीवरः।

६९०। उदि चेर्डसिः ॥ ५।१२ ॥

दी—। उच्चैः। (उत् पूर्वाच्चिणोतेर्डैस् प्रत्ययः)।

६९१। नौ दीर्घश्च ॥ ५।१३ ॥

दी—। नीचैः। (प्राग्वद् डैस् प्रत्ययः। दीर्घः)।

६९२। सौ रमेः क्तौ दमे पूर्वपदस्य च दीर्घः ॥ ५।१४ ॥

दी—। रमेः सुपूर्वाद्दमे वाच्ये क्तः स्यात्। कित्त्वादनुनासिकलोपः। सूरत उपशान्तो दयालुश्च।

मित—। रमु क्रीडायाम्। पूर्वपदस्येति। सु इत्यस्य दीर्घः। सूरतः। सूत्रे दम इति मत्वर्थीयः। तेन दमवान् संयत इत्यर्थः। तदाह—उपशान्त इति।

६८३। पूञो यण्णुक् ह्रस्वश्च ॥५।१५॥

दी—। यत् प्रत्ययः। पुण्यम्।

मित—। पूञः + यत् + णुक् + ह्रस्वः च इतिच्छेदः। तदाह—यत्प्रत्यय इति। धातोर्नुक् ह्रस्वश्च। 'पुण्यं मनोज्ञेऽभिहितं तथा सुकृतधर्मयोः' इति विश्वः।

६८४। स्रंसेः शिः कुट् किच्च ॥५।१६॥

दी—। स्रंसतेः शिरादेशो यत्प्रत्ययः। कित्तस्य कुडागमश्च। शिक्यम्। ( स्रंसु अधःपतने। शिक्यमिति। शिक्या इति भाष्यम् )।

६८५। अर्तेः क्युरुच्च ॥ ५।१७ ॥

दी—। उरणो मेषः।

मित—। कित्वाद् गुणाभावे 'यु' इत्यस्य अनादेशे ऋ स्थाने 'उ' इत्यस्य रपरत्वेन प्रवृत्तेश्च उरण इति। नत्वम्। 'मेढ्रोरभ्रोरणोर्णायु मेषवृष्णय एडके' इत्यमरः।

६८६। हिंसेरीरन् नीरचौ ॥ ५।१८ ॥

दी—। 'हिंसीरोव्याघ्रदुष्टयोः'।

मित—। ईरन् नीरचाविति। स्वरे भेदः।

६८७। उदि दृणातेरजलौ पूर्वपदान्त्यलोपश्च ॥ ५।१९ ॥

दी—। उदरम्।

मित—। उद् पूर्वाद् दृ निवारणे इत्यस्मात् अच् अल् इत्येतौ प्रत्ययौस्तः। पूर्वपदस्य उदित्यस्य दकारस्य लोपश्च। 'उदरं परिमाति मुष्टिना' इति श्रीहर्षः।

६८८। डित् खनेर्मुट् स चोदात्तः ॥ ५।२० ॥

दी—। अजल् च डित् स्याद्धातोर्मुट् स चोदात्तः। मुखम्।

मित—। खनु अवदारणे। अस्मादच् अल् च प्रत्ययौस्तः। तौ च डित्। डित्वाट्टिलोपे धातोर्मु टि च मुखम्। 'मुखं निःसरणे वक्त्रे प्रारम्भोपाययोरपि' इति विश्वः।

६९९। अमेः सन् ॥ ३।२१ ॥

दी—। अंसः। (अम गतौ। अस्मात् सन् प्रत्ययः। 'स्कन्धो भुजशिरोऽंसोऽस्त्री')।

७००। मुहेः खो मूर्च ॥ ५।२२ ॥

दी—। मूर्खः।

मित—। मुह वैचित्त्ये। अस्मात् खप्रत्ययः। धातोर्मूरादेशश्च। मुह्यतीति मूर्खः। 'अज्ञे मूढो यथाजात मूर्खवैधेयबालिशाः' इत्यमरः।

७०१। नहेर्हलोपश्च ॥ ५।२३ ॥

दी—। नखः। (नह बन्धने। चात् ख प्रत्ययः)।

७०२। शीङो ह्रस्वश्च ॥ ५।२४ ॥

दी—। शिखा। (चात् खः। ह्रस्वविधिसामर्थ्यान्न गुणः)।

७०३। माङ ऊखो मयच् ॥ ५।२५ ॥

दी—। मयूखः।

मित—। माङ् मानेऽस्मादूख प्रत्ययः। धातोर्मय (मयच्) इत्यादेशश्च। 'मयूखस्त्विट् करज्वालासु' इत्यमरः।

७०४। कलिगलिभ्यां फगस्योच ॥ ५।२६ ॥

दी—। कुल्फः शरीरावयवो रोगश्च। गुल्फः पादग्रन्थिः।

७०५। स्पृशेः श्वणशुनौ पृ च ॥ (श्वण शुनौ प्रत्ययौ पृ इत्यादेशः)। पार्श्वम्। 'पार्श्वोऽस्त्री कक्षयोरधः'। पर्शुरायुधम्।

मित—। स्पृशतीति पार्श्वम् (अण्), पर्शुः कुठारः—शुन्। 'पर्शुं परशुना सह' इति विरूपकोशः।

७०६। श्मनि श्रयतेर्डुन् ॥ ५।२८ ॥

श्मञ्छब्दो मुखवाची। मुखमाश्रयत इति श्मश्रुः।

मित—। श्मन् इति शब्दोपपदात् श्रि धातोरस्मात् डुन्। श्मनम् श्रयत इति श्मन् श्रि + डुन् = श्मश्रु। डित्त्वात्टिलोपः। श्मनी मुखमित्यादि अर्थनिर्देशनात्र न विवक्षः।

७०७। अश्रुादयश्च ॥ ५।२९ ॥

टी—। अश्रु नयनजलम्।

मित—। डुन् प्रत्ययान्ता निपात्यन्ते इत्यर्थः। नञ्पूर्वात् श्रयतेर्डुन्। अशू व्याप्तौ। अस्माद् रुन्निति वैयाकरः।

७०८। जनेष्टन् लोपश्च ॥ ५।३० ॥

टी—। जटा। (टन् धातोरन्त्यलोपः)।

७०९। अच् तस्य जङ्घ ज ॥ ५।३१ ॥

टी—। तस्य जनेर्जङ्घादेशः स्यादच्च। जङ्घा।

मित—। जनेरच् प्रत्ययः। 'अजाद्यतः—' इति टाप्। शेषं सूले।

७१०। हन्तेः शरीरावयवे द्वे च ॥ ५।३२ ॥

टी—। जघनम्। 'पश्चान्नितम्बं स्त्रीकट्याः क्लीबे तु जघनंपुरः'।

मित—। शरीरावयवे वाच्ये हन्तेरच् प्रत्ययः स्याद्धातोर्द्वित्वं च। अभ्यासकार्यम्। 'अभ्यासाच्च' इति कुत्वम्। अमरस्त्वमाह—पश्चादिति। 'ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः' मेघदूतम्।

७११। क्लिशेरन् लो लोपश्च ॥ ५।३३ ॥

टी—। लकारस्य लोपः। केशः।

मित—। क्लिशू विबाधनेऽस्मादन् प्रत्ययः। क्लिश्नातीति केशः।

७१२। फलेस्तिजादेश्च पः ॥ ५।२४ ॥

दी—। पलितम्।

मित—। फल निष्पत्तौ। अस्मादितच्। फस्यपः। 'पलितं जरसा शौक्ल्यं केशादौ' इत्यमरः।

७१३। क्रुञादिभ्यः संज्ञायां वुन् ॥ ५।२५ ॥

दी—। करकः—करका। कटकः। नरकम्—नरकः। 'नरको नारकोऽपि च' इति द्विरूपकोशः। सरकं गमनम्। कोरकः कोरकं च।

मित—। वुन्निति। 'युवोः—' इति तस्य अकादेशः। गुणः। 'करकस्तु पुमान् पक्षिविशेषे दाड़िमेऽपि च। द्वयोर्मेघोपले ना स्त्री करके च कमण्डलौ' इति मेदिनी। कटक इति। 'क्वुन् शिल्पिसंज्ञयोः' (१९०) इति क्वुनाप्ययं सिद्धः। गुणभाज इहैवोदाहार्य्याः। गुणनिषेधभाजस्तु क्वुन। उदासीनास्तु यत्र कुत्रचिदिति भावः। नॄनये। 'नरकः पुंसि निरये देवारातिप्रदेशयोः' इति मेदिनी। उदयणाचार्य्यास्तु 'न नरकाण्येव सन्ती'ति क्लीवं प्रयुज्यते। तत्र मूलं मृग्यम्। सृगतौ। सरकः शीधु पात्रम्। कुर शब्दे। 'कोरकोऽस्त्रीकुट्मले स्यात्' इति मेदिनी।

७१४। चीकयतेराद्यन्तविपर्ययश्च ॥ ५।२६ ॥

दी—। कीचको वंशभेदः।

The affix वुन् (अक) is employed after the root चीक to address (आमन्त्रणे) चुरादि and the beginning and finalletter of the root change their respective places. Thus कीचक a kind of bamboo ( also the companion under the king Virata ). Similarly पेचक ( owl ) and मेचक ( the green spot in the plume

of the peacock ) through interchange of इकार of पचि and मचि.

मित—। चीक आमर्षणे चुरादिः। अस्माद् वुन् ( अक ) स्यात्। धातोराद्यन्तावयवयोः चकारककारयोः परस्परस्य विपर्ययश्च। बाहुलकबललभ्योऽयमर्थं इत्याकरः। अतएव गुणो न। 'स कीचकैर्मारुतपूर्णरन्ध्रैः कूजद्भिरापादितवंशकृत्यम्। शुश्राव कुञ्जेषु यशः स्वमुच्चैरुद्गीयमानं वनदेवताभिः' इतिरघुः।

७१५। पचिमच्योरिच्चोपधायाः ॥ ५।३७ ॥

दो—। पेचकः। मेचकः।

मित—। डुपचष् ( पच् ) पाके। मचि ( मच् ) कल्कने। आभ्यां वुनि परे अनयोरुपधाया इत्। पचि मचि इति स्थिते आद्यन्तस्वरविपर्ययेन पिच मिच इति जाते गुणेन पेचकः मेचक इति। 'पेचको गजलाङ्गुलमूलोपान्ते च मेचकस्तु मयूरस्य चान्द्रके श्यामले पुमान्। तद्वति वाच्यवत् क्लीबं स्रोतोऽञ्जनान्धकारयोः' इति।

७१६। जनेररष्ठ च ॥ ५।३८ ॥

दो—। जठरम्।

मित—। जनेः + अरः + ठ चेतिच्छेदः। 'अन्तोऽन्त्यस्य' इति नकारस्य ठकार इति बोध्यम्। उदरमित्यर्थः।

७१७। वचिमनिभ्यां चिच्च ॥ ५।३९ ॥

दो—। वठरो मूर्खः। 'मठरो मुनिशौण्डयोः'। बिदादित्वान्माठरः। गर्गादित्वान्माठर्यः।

मित—। आभ्याम् अरप्रत्ययः चित्। चकार नकारयोष्टय।

७१८। ऊर्जि दृणातेरलचौ पूर्वपदान्त्यलोपश्च ॥ ५।४० ॥

दो—। 'ऊर्दरः शूररक्षसोः'।

७१९। क्षुदरादयश्च ॥ ५।४१ ॥

दो—। क्षुदरः कुसूलः। मुदरं विलसत्। स्खदरः सर्पः।

७२०। हन्तेर्मुँ नाद्यन्तयोर्घत्वतत्वे ॥ ५।१४२॥

दी—। घातनो मारकः।

मित—। हन्तेर्मुँ प्रत्ययः स्यात्। तेन मुना (प्रत्ययेन) सहनकारस्य तकारश्च। पूर्वसूत्राद् वृद्धेरपकर्षादुपधावृद्धिः।

७२१। क्रमिगमिक्षमिभ्यस्तुन् वृद्धिश्च ॥ ५।४३॥

दी—। क्रान्तुः पक्षी। गान्तुः पथिकः। क्षान्तुमर्शकः।

७२२। हर्य्यतेः कन्यन् हिरच ॥ ५।४४॥

दी—। कन्यण् प्रत्ययः। हिरण्यम्।

मित—। हर्य गतिकान्त्योः। अस्मात् कन्यन् (अन्य)। धातोर्हिरादेशश्च। हिरण्यं सुवर्णं ग्रस्म्श्च। 'हिरण्येन सवितारथेन' इति मन्त्रः।

७२३। कृञः पासः ॥ ५।४५॥

दी—। कर्पासः। बिल्वादित्वात् कार्पासं वस्त्रम्।

७२४। जनिस्तु रश्च ॥ ५।४६॥

दी—। जतुँ हस्ती योनिश्च।

मित—। तु इत्यविभक्तिकम्। रेफश्चान्तादेशः।

७२५। ऊर्णोतेर्डः ॥ ५।४७॥

दी—। ऊर्णा। डित्त्वाट्टिलोपः। डाप् स्त्रियाम्। (ऊर्णा मेषादिलोम्नि स्यादावर्तें च इत्यादि)।

७२६। दधातेर्यन् नुट् च ॥ ५।४८॥

दी—। धान्यम्। (धा इत्यस्माद् यत्। प्रत्ययस्यनुडादेशः)

७२७। जीर्यतेः क्रिन् रश्च वः ॥ ५।४९॥

दी—। 'जिव्रिः स्यात् कलपक्षिणोः'। बाहुलकात् 'हलिच' इति दीर्घो न।

मित—। जॄ इत्यस्मात् क्रिन्। क्रित्वान्न गुणः। 'ऋत इद्धातोः' इति इत्वम् रपरत्वम्। तस्य रेफस्य वकारः। ततो रिः।

७२८। मव्यतेर्यल्लोपो मश्चापतुट् चालः ॥ ५।५० ॥

टी—। मव्यतेरालप्रत्ययः स्यात्तस्यापतुडागमो धातोर्यल्लोपो मकारस्यान्त्यस्य (यकारस्य इत्यर्थः)। ममापतालो विषये।

७२९। ऋजेः कीकन् ॥ ५।५१ ॥

टी—। ऋजीक इन्द्रो धूमश्च।

७३०। तनोतेर्डउः सन्वच्च ॥ ५।५२ ॥

टी—। 'तितउः पुंसि क्लीबे च'।

The affix डउ is employed after the root तन् (तनुविस्तारे) and the root in connection with the affix becomes (duplicated) as when सन् follows. Thus तन्+डउ=ततन् अउ=तितउ by इत्व, हलादिः शेषः, and सन्वतः and टिलोप due to डित्त्व of the affix. It means a sieve or an winnowing fan. Thus in the पस्पश (introduction) of the Mahabhashya under the verse—

सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत।

अत्रा सखायः सख्यानि जानते भद्रैषां लक्ष्मीर्निहिताधिवाचि ॥

we find the भाष्यकार explains the term as denoting both the above sense viz—तितउ परिपवनम् भवति। ततवद्वा तुन्नवद्वा (or 'तितउ is a purifier which is either spacious (as a fan) or having holes (तुन्न). Amara, however, takes it to mean a sieve only ('चालनी तितउः पुमान्'). Thus from भाष्य and Amara it is also evident that the term is both neuter and masculine.

मित—। तनोतेरिति। तनु विस्तारे इत्यस्माद् उणप्रत्ययः स्यात्। धातोः कार्यश्च। एवं छिलइलादि अभ्यासश्चित्त्वम्। डित्त्वात्टिलोपः। पृथगुच्चारणसामर्थ्याद् गुणो नेति तत्त्वबोधिनी। तन्न। डित्त्वसामर्थ्याट्टिलोपादूर्ध्वं गुणप्रसक्तेरेव विरहा-दिति बोध्यम्। तितउः पुंसि क्लीबे चेति। पुंसि तावत् 'चालनी तितउः पुमान्' इत्यमरः। क्लीबे च 'तितउ परिपवनं भवति। तत्तवदा तुन्नवदे'ति 'सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत' इत्यत्र महाभाष्यपस्पशः। [ 'तथा स्यात्तु लिङ्ग तितउ' इति पुंनपुंसकवर्गे त्रिकाण्डशेषश्च ]।

७२१। अर्भकपृथुकपाका वयसि ॥ ५।५३ ॥

दी—। 'ऋधु वृद्धौ'। अतो वुन्। भकारश्चान्तादेशः। प्रथेः कुकन् संप्रसारणं च। पिबतेः कन्।

मित—। एते क्रमेण वुन् कुकन् कन्प्रत्ययान्ता निपात्यन्ते। भकारश्चान्तादेश इति। धकारस्य भकारः। गुणः। अर्भकः। प्रथेरिति। पृथुकः। पिबतेरिति। पा पानेऽस्मात् कन्। [ 'पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुः' रित्यमरः ]।

७२२। अवद्यावमाधमार्वरेफाः ॥ ५।५४ ॥

दी—। कुत्सिते वदेर्नञि यत्। अवद्यम्। अवतेरमः। वस्य पक्षे धः। अवमः। अधमः। अर्तेर्वन्। अर्वा। रिफतेस्तौ-दादिकात् अः। रेफः।

मित—। एते क्रमेण, यत्—अम—वन्—अ प्रत्ययान्ता निपात्यन्ते। [ निकृष्ट प्रतिकृष्टार्वरेफयाप्यावमाधमाः। विपूयकुत्सितावद्यखेटगर्ह्याणकाः समाः—इत्यमरः ]। 'अधमः स्याद्गर्ह्ये ऊर्णेऽपि'। 'अर्वा तुरङ्गमे पुंसि कुत्सिते वाच्यलिङ्गता। 'रेफो रवर्णे पुंसि स्यात् कुत्सिते पुनरन्यवत्। इति विश्वमेदिनी।

७२३। लीरीङोर्ह्रस्वः पुट् च तरौ श्लेषणकुत्सनयोः ॥ ५।५५ ॥

दी—। तरौ प्रत्ययौ क्रमात् स्तो धातोर्ह्रस्वः प्रत्ययस्य पुट्। लिप्तं श्लिष्टम्। रिप्रं कुत्सितम्।

७२४। क्लिशेरीच्चोपधायाः कन् लोपश्च लो नाम् च ॥५।५६॥

दी—। क्लिशेः कन् स्यादुपधाया 'ईत्त्वं' लस्य लोपो नामागमश्च। कीनाशो यमः। कित्त्वफलं चिन्त्यम्।

कित्त्वफलं चिन्त्यम्—i. e. कित्करण of the affix or the indicatory क् in the same is objectionable or useless; for the root would not, on the strength of ईत्त्व of its उपधा, have गुण which the indicatory क is expected to bar.

७२५। अश्नोतेराशुकर्मणि वरट् च ॥ ५।५७ ॥

दी—। चकारादुपधाया ईत्त्वम्। ईश्वरः।

मित—। अश्नुव्याप्तौ अस्माद् वरट्प्रत्ययः स्यादाशुकर्मणि वाच्ये। चकारार्थमाह—चकारादिति। आशुकर्म वरदानादिक्रिया—तस्मिन् वाच्ये। शीघ्रदातरि इत्यर्थः। टित्वात् ङीप्। ईश्वरी। मध्योदात्तार्थमिदम्। वनिपि ङीब्रयोस्तु आद्युदात्तः। पुंयोगलक्षणे ङीषि अन्तोदात्तः। 'स्थेशभास—' इति वरजन्तात् 'ईश्वरा' इति वोपालितः। दशपाद्यान्तु सूत्रान्तरमपि—'हन्तेरन् घश्च' इति। तस्य हन्तेः रन्प्रत्ययः स्याद् घश्चादेश इत्यर्थः। हन्यते गम्यते अतिथिभिरिति घरो गृहम्।

७२६। चतेरुरन् ॥ ५।५८ ॥

दी—। चतुरः। (चती प्रयत्ने। अस्मादुरन्। चतुरो दक्षः)।

७२७। प्रा ततेररन् ॥ ५।५९ ॥

दी—। प्रातः। (प्रपूर्वादाततेः अरन्। प्रातः प्रभातम् स्वराद्यव्ययम्)।

७२८। अमेस्तुट् च ॥ ५।६० ॥

दी—। अन्तर्मध्यम्। (अम गत्यादौ। अरन्। तस्य तुट्। स्वराद्यव्ययम्)।

७३९। दहेर्गो लोपो दश्च नः ॥ ५।६१ ॥

दी—। गप्रत्ययो धातोरन्त्यस्य लोपो दकारस्य नकारः । नगः ।

मित—। दह भस्मीकरणे। दहतीति नगः। वृक्षः पर्वतः सूर्यः सर्पो वा ।

७४०। सिचेः संज्ञायां हनुमौ कश्च ॥ ५।६२ ॥

दी—। सिञ्चतेः कप्रत्ययो हकारादेशो नुम् च स्यात् । सिंहः ।

मित—। सिचेरिति। 'हिंसेर्वर्णव्यत्ययतः सिंह' इति व्युत्पत्त्यन्तरम्। तदुक्तं 'भवेद् वर्णागमाद् हंसः सिंहो वर्णविपर्ययादि'ति। सिंहः कण्ठीरवे राशौ सप्तमे चोत्तरस्थिते। सिंही क्षुद्रबृहत्योः स्वाहसकी राजमातरि इति विश्वः। सिंहीति जातेः ङीष् इति बोध्यम् ।

७४१। व्याङि घ्रातेश्च जातौ ॥ ५।६३ ॥

दी—। कप्रत्ययः स्यात् । व्याघ्रः ।

मित—। 'व्याघ्रः स्यात् पुंसि शार्दूले रक्तैरण्डकरञ्जयोः। श्रेष्ठे नराद्युत्तरस्थः—' मेदिनी ।

७४२। हन्तेरच् घुर् च ॥ ५।६४ ॥

दी—। घोरम् । ( 'घोरं भीमे हरे घोरः' इति विश्वः ) ।

७४३। क्षमेरुपधालोपश्च ॥ ५।६५ ॥

दी—। चादच्। क्ष्मा। ('क्ष्मावनिर्मेदिनी मही'त्यमरः) ।

७४४। तरतेर्ड्रिः ॥ ५।६७ ॥

दी—। त्रयः। त्रीन् ।

७४५। ग्रहेरनिः ॥ ५।६७ ॥

दी—। ग्रहणिः। ङीष्। ग्रहणी व्याधिभेदः ।

७४६। प्रथेरमच् ॥ ५।६८ ॥

दी—। प्रथमः। ('प्रथमस्तु भवेदादौ प्रधानेऽपि च वाच्यवत्' इति मेदिनी)।

७४७। चरेश्च ॥ ५।६९ ॥

दी—। चरमः। (चादमच्। 'प्रथिचरिभ्याम्' इति सुवचमित्याहुः)।

७४८। मङ्गेरलच् ॥

दी—। मङ्गलम्।

मित—। कल्याणं मङ्गलं शुभम्। तत्र साधुरिति यत्। मङ्गल्यं शिवकरम्। "सर्वमङ्गलमङ्गल्ये" इत्यत्र यथा। इति मितभाषिण्याम् उणादिषु पञ्चमः पादः।

---

## ॥ अथ उत्तरकृदन्तप्रकरणम् ॥

३१६८। उणादयो बहुलम् ॥ ३।३।१ ॥

दी—। एते वर्तमाने संज्ञायां च बहुलं स्युः। केचिदविहिता अप्यूह्याः।

"संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥"—(भाष्यम्)।

These i. e. the affixes उण् etc dealt with by the sage Sakatayana under the rules 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' etc are variously used after roots to express present tense as also

designation. Thus the affixes which are not mentioned therein are to be taken as understood. Thus 'सुयुरुहभ्यो युच्' (232) सवनः, यवनः etc; but by बाहुलक ('बहुलमन्यत्रापि'—238) युच् is employed after other roots also—चन्दनः, असनम्, राजादन etc. moreover the affixes फिड फिड्ड are nowhere to be met with. But they should be inferred to be employed after such roots as ऋ etc so as to give ऋफिड ऋफिड्ड etc. Hence it is that भाष्यकार says—संज्ञासु etc— other roots and affixes as well are to be understood (in this way to form some other words not dealt with herein, and the indicatories (अनुबन्ध) too by the operations). This is (in short) what is to be instructed in the matter of उणादि affixes (N. B—In अनुबन्ध the दीर्घ is to be accounted for by 'उपसर्गस्य घञ्यमनुष्ये बहुलम्')।

मित—। अथैवं पूर्वकृदन्तप्रकरणं शाकटायनाचार्यप्रणीतोणादिसूत्रजातञ्च निरूप्य उणादय इयन्त एवेति भ्रमं निवारयिष्यन् तदनुरूपम् उत्तरकृदन्तगतं सूत्रमवतारयति उणादय इति। अष्टाध्याय्याः तृतीयाध्यायस्य तृतीयपादस्य प्रथममिदं सूत्रम्। अत्र बहुलग्रहणादेव उणादिप्रत्ययसिद्धपदानाम अव्युत्पन्नप्रातिपादिकत्वम् पाणिनेः अभिमतमिति प्रागेव प्रकरणारम्भे प्रपञ्चितम्। एते इति। उणादयः प्रत्ययाः। वर्तमाने संज्ञायाञ्चेति। 'वर्तमाने लट्' (३।२।१२३) इत्यतः 'पुवः संज्ञायाम्' (३।२।१८५) इत्यतश्च तदनुवृत्तेरिति भावः। अतएव भाष्ये 'नञि कृश चे'ति नञ् पूर्वाद्धन्तेरसि प्रत्यये परत एहादेशे व्युत्पन्नः अनेहस्शब्दो वर्तमानकाले एवेत्युक्तम्। संज्ञाशब्दस्यात्र रूढिशब्दत्वं द्रष्टव्यम्। रूढा एवैते उणादिप्रत्ययान्ताः शब्दा न तु पाचकादिवत् यौगिकाः। अवयवार्थविरहात्। यत्र तत्र अवयवार्थमाश्रित्य व्युत्पादितं तत् कल्पनामात्रं न तु तात्त्विकम्। बहुलशब्दस्यार्थमाह—केचिदविहिता अपीति। तथाच इर्युवकल्प्विहितः स च शकेरपि भवति। इर्षुंसवत् शङ्कुसित्यस्यापि प्रयोगदर्शनात्। अपरञ्च फिडफिड्डौ प्रत्ययौ न कुत्रापि विहितौ।

किन्तु ऋफिड: ऋफिड्ड: इत्यस्ति शब्दद्वयम्। एवञ्च तौ ऊहेन लभ्येते इत्यलम्। अत्र भाष्यसंमतिमाह—संज्ञास्विति। भाष्यस्थ: श्लोकोऽयम्। संज्ञासु उणादिनिष्पन्नेषु रूढशब्देषु विषये धातुरूपाणि धातव: तत: तेभ्य: परे परतौ वर्तमाना प्रत्ययाश्च उक्ता इति शेष:। इति प्रथमार्द्धस्यार्थ:। तथाच 'वृषेकलच्' इत्युलच् प्रत्ययं विलोक्य शक्ति: प्रकृत्यन्तरम् ऊह्यते। एवं फिडफिड्डौ प्रत्ययौ ऊह्येते। कार्य्याद्विद्यादिति। कार्य्याद् गुणनिषेधादिकार्यवशात् अनूबन्धम् अनुबन्धम् ककार ङकारादि विद्यात् जानीयात्। उणादिषु प्रत्ययेषु विषये एतत् शास्त्रम् संक्षेपादितन्मात्र शासितव्यमित्यर्थ: इति द्वितीयार्द्धस्यार्थ:। [अनूबन्धमित्यत्र 'उपसर्गस्य घञि अमनुष्ये बहुलम्' इति दीर्घ:]।

२१७०। भूतेऽपि दृश्यन्ते ॥ ३।३।२ ॥

२१७१। भविष्यति गम्यादय: ॥ ३।३।३ ॥

२१७२। दाशगोघ्नौ सम्प्रदाने ॥ ३।४।७३ ॥

दी—। एतौ सम्प्रदाने कारके निपात्येते। दाशन्ति तस्मै दाश:। गां घ्नन्ति तस्मै गोघ्नोऽतिथि:।

N. B.—The first & second of these three rules viz 'भूतेऽपि—' and 'भविष्यति—' are not explained as they are very easy; for the first means—उणादि affixes, though generally used in the present tense, may take place in the past tense also. Similarly the second rule means गमी etc. are irregularly formed with इनि in the future tense; thus ग्रामंगमी brushing to go to the village But if गम् is preceded by आङ् we have आगामी—Coming—वृद्धि being effected by the rule 'आङ्कित्'। The third rule means—

The words दाश (a fisherman or boatman) and गोघ्न: (a

guest for whom a cow is killed) are irregularly formed with the affix क in the sanse of संप्रदान.

मित—। भूतेऽपीति। उणादय इत्यनुवर्तितेरुणादयः प्रत्यया न केवलं वर्तमाने किन्तु भूते (भविष्यति च) काले दृश्यन्त इत्यर्थः। तेन बाहुल्येन वर्तमाने भूतभविष्यतोस्तु कचिदेवेत्यर्थः। भविष्यतीति। गम्यादयो इनिप्रत्ययान्ताः शब्दाः भविष्यदर्थे निपात्यन्त इत्यर्थः। तेन ग्रामं गमीत्यत्र क्तप्रभावः। एवं प्रस्थायी इत्यादि। आङ्पूर्वात् तु गमेः 'आङि णित्' इति णित्वोक्तेर्वृद्धिः स्यादेव—आगामी। दाशगोघ्नाविति स्पष्टम्।

२१७३। भीमादयोऽपादाने ॥ ३।४।७४ ॥

टी—। भीमः। भीष्मः। प्रस्कन्दनः। प्रपतः। मूर्खः। खलतिः।

Words like भीम etc are irregularly found in the अपादान वाच्य with the affixes मक् etc. Thus भीमः (from whom one fears)—मक्। भीष्म—with मक् and षुक् by 'भियो हेतुभये—'। प्रस्कन्दनः from whom one flies away with ल्युट् in अपादान। प्रपतः from whom something is saved—with अच् in अपादान। मूर्खः—by 'मुहेः खो मूर्च'—One who swoons at the sight of something. खलतिः—a bald-headed person (see ante उणादि)।

मित—। भीमादय इति। अपादाने कारके एते निपात्यन्ते। बिभेत्यस्मादिति भीमः। भीष्मश्च। मक्प्रत्ययः। परत्र 'भियोहेतुभये षुक्' इति षुगागमः। प्रस्कन्दादपि पलायतेऽस्मादिति प्रस्कन्दनः। अपादाने ल्युट्। प्रपतत्यस्मादिति प्रपतः। पचाद्यच्। मुह्यत्यस्मादिति मूर्खः। 'मुहे खो मूर्च' (उणादि)। खलति निष्केशशिराः।

२१७४। ताभ्यामन्यत्रोणादयः ॥ ३।४।७५ ॥

टी—। संप्रदानापादानपरामर्शार्थं ताभ्यामिति। ततोऽसौ

भवति तन्तुः। वृत्तं तदिति वर्त्म। चरितं तदिति चर्म।

उणादि affixes take place under any sense other than that of dative and ablative. Thus तन्तुः ( fibre ) etc तनोतुन्। after वृत् and चर add मनिन।

मित—। ताभ्यामिति। संप्रदानापादानाद्न्यत्र एव उणादयः। तदाह संप्रदानापदानापरामर्शायमिति। तन्तुरिति। तनोतेस्तुन्। वृतचराभ्यां मनिन् प्रत्ययः।

२१७५। तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्॥ ३।३।१०॥

टी—। क्रियार्थायां क्रियायामुपपदे भविष्यत्यर्थे धातोरेतौ स्तः। मान्तत्वादव्ययत्वम्। कृष्णं द्रष्टुं याति। कृष्णं दर्शको याति। अत्र वाऽसरूपन्यायेन तृजादयो न, पुनर्ण्वुलुक्तेः।

When an action, which stands or is meant for another action, is an उपपद or a contiguons word then the root ( which helps to express the latter act ion ) takes the affixes तुमुन् ( तुम् ) and ण्वुल् ( अक ) in the sense of future. The term arrived at with the addition of तुम् being मान्त or ending in मकार is to be considered as an indeclinable by the rule 'कृन्मेजन्तः' ( 449 ). कृष्णं द्रष्टुं वा दर्शको ( ण्वुल् ) याति—He goes to visualise, or as a visualiser of, krishna.

**Elucidation**—Here याति is the उपपद ; for the action of going ( यानक्रिया ) is meant forseeing Krishna. Hence this being a क्रियार्था क्रिया, the root of the क्रिया for which it is meant viz 'to see' takes the affix तुम् वा ण्वुल्। ण्वुल् is changed into अक by the rule 'युवोरनाकौ' ( 1247 ).

Here by the rule 'वाऽसरूपोऽस्त्रियाम्'—तृच् etc in place of ण्वुल् (as also of तुम्) cannot apply; for ण्वुल् has already been pronounced in the rule 'ण्वुल्तृचौ' (3. 1. 133) both of which (ण्वुल् & तृच्) as already said take place in any tense in the active voice. Therefore the utterance of ण्वुल् again here is to bar the application of तृच् (as also ल्यु, णिनि and अच् etc) in the room of ण्वुल्, thisis an instauce of ज्ञापकसिद्धन्याय।

मित—। तुमुन्निति। क्रिया अर्थः प्रयोजनं यस्याः क्रियायाः सा क्रियार्था क्रिया। तस्यामुपपदे सति या क्रिया अर्थभूता विद्यते तद्वाचकधातोरुत्तरं तुमुन् (तुम्) ण्वुल् (अक:) च विधीयेते भविष्यदर्थे। भविष्यतीति 'भविष्यति गम्यादयः' (३।३।३) इत्यतोऽनुवृत्त्या लभ्यते। तुमुनो नकारस्य इत्वम्। मकारादुकारस्य उच्चारणार्थत्वम्। ण्वुलो णलावितौ। 'वु' इत्यस्य 'युवोरनाकौ' (१२४७) इत्यनेन अकादेशः। 'कृन्मेजन्त' इतीदं सूत्रमनुसृत्याह—मान्तत्वादव्ययत्वमिति। तुमुन्ण्वुलोरुभयोरेव अविशेषेऽपि 'अव्ययकृतो भावे' इति भाष्यकारवचनाद् भावे तुमुन्। 'अव्ययवाचिनः कृतः कृत्प्रत्ययान्ताः शब्दा भावे भाववाच्य एव वेदितव्या इति प्रतिपत्तव्यमि'ति भाष्यकारवचनार्थः। ण्वुल् तु कर्तर्य्येव इति विवेकः। कृष्णं द्रष्टुं याति कृष्णं दर्शको याति इति। अत्रोभयत्र यातीत्यस्य 'तत्रोपपदं सप्तमीस्थम्' इति सूत्रानुसारात् द्रष्टुमिति अस्य उपपदत्वं द्रष्टव्यम्। 'न लोकाव्यय—' इति चोभयत्र षष्ठीनिषेधः। एवमत्र यातीति प्रयोजनवती क्रिया दृशिश्च प्रयोजनम्। अतो दृशेरुत्तरं तुमुन् ण्वुल् च विधीयेते। तुमुनो झलादित्वादकित्त्वाच्च 'सृजिदृशोर्झल्यमकिति' (२४०५) इति अमागमः। व्रश्चादिना षत्वे ततः ष्टुत्वे च द्रष्टुमिति। दर्शक इति पुगन्तलघूपधस्य चेति गुणेन बोध्यम्। ननु 'वासरूपोऽस्त्रियाम्' इति न्यायेन 'कृष्णं द्रष्टा याति' इति तृजपि भवेत्। तत्राह—तृजादयो नेति। आदिपदेन 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति ल्युणिन्यादेः संग्रहः। तृजादयः कुतो नात्र अत आह—पुनःण्वुलुक्तेरिति। ण्वुल्तृचौ हि 'ण्वुल्तृचौ' (३।१।१३३) इत्यत्र कालसामान्ये कर्तरि विहितौ। तत्र क्रियार्थायां क्रियायाम् उपपदेऽपि

भविष्यत्यपि भवति। तत्रश्चात्र ण्वुलविधानं व्यर्थं सत् ज्ञापयति त्वजादयः क्रियार्थ-क्रियोपपदविषये वासरूपन्यायमाश्रित्य न प्रवर्तेरन्निति।

२१७६। समानकर्तृकेषु तुमुन् ॥ ३।३।१५८ ॥

दी—। अक्रियार्थोपपदार्थमेतत्। इच्छार्थेष्वेककर्तृकेषूपपदेषु धातोस्तुमुन् स्यात्। इच्छति भोक्तुम्। वष्टि वाञ्छति वा।

This rule is intended to take effect where an action for another action is not an उपपद। तुमुन् takes place after a root when the selfsame कर्ता, having इच्छा for its predicate, stands as an उपपद to the verb taking तुमुन्। Thus इच्छति etc he wishes to eat. Here the verbs इच्छति and भोक्तुम् agrees with the selfsame nominative सः or हरिः or यदुः etc understood. Similarly वष्टि भोक्तुम्, वाञ्छति भोक्तुम्, कामयते भोक्तुम् etc. Note that had not the word समान been pronounced then पठ् in the sentence पुत्रस्य पठनमिच्छति would have तुमुन where पुत्र is Subj. of पठनक्रिया only; the sense being पुत्रकर्तृकं पठनम् and पिता is the subject of इच्छति। Thus it must be remembered that तुमुन् does not take place where each of the verbs is governed by a separate subject. But instances like 'सुखमर्थोभविष्ट दातुम्—' etc (in स्वप्नवासवदत्तम्) are to be easily defended as भावे तुमुन् by the dictum 'अव्ययकृतो भावे'.

मित—। समानकर्तृकेष्विति। पूर्वसूत्राविषये सूत्रमिदं प्रवर्तत इत्याह—अक्रियार्थोपपदार्थमेतदिति। 'इच्छार्थेषु लिङ्लोटौ' (३।३।१५७) इति पूर्वसूत्रं तदाह—इच्छार्थेषु इति। सूत्रे समानकर्तृकेषु इत्यस्य विवरणम् एककर्तृकेषु इति तस्य उपपदत्वं तु 'समानकर्तृकेषु' इति सप्तमीनिर्देशाल्लभ्यते। 'तत्रोपपदं सप्तमीस्थम्' इत्यनुसारात्। तद्व्याचष्टे—उपपदेषु इति। इच्छति भोक्तुमिति। यः कश्चित् कर्ता ऊह्यः। स एवात्र उपपदम्। तथाच य एव कर्ता इच्छतोत्यत्रान्वेति

स एव भोक्तुमित्यत्रापि। तदेवमस्ति क्रिययोरेककर्तृकता। ततस्तुमुन्। इष्टं यातीत्यादौ यातीत्यादेरिव इच्छतीत्यस्यात्र क्रियार्थत्वं नास्तीति द्रष्टव्यम्। इच्छार्थेष्वित्यस्य वाचकमाह—वष्टि वाञ्छति इति। भोक्तुमिति शेषः। एवं कामयते अभिलषतीत्यादि। 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (२६०८) इत्यत्र वा—ग्रहणात् पचे वाक्यस्यापि साधुत्वादत्र बुभुक्षतीति वृत्तिर्नेति बोध्यम्। एकेति किम्? पुत्रस्य पठनमिच्छति। अत्र कर्तृभेदात् पठनमित्यत्र तुमुन्प्रत्ययो न।

२१७७। शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन् ॥ ३।४।६५ ॥

दी—। एषूपपदेषु धातोस्तुमुन् स्यात्। शक्नोति भोक्तुम। एवं धृष्णोतीत्यादौ। अर्थग्रहणमस्तिनैव संबध्यते। अनन्तरत्वात्। अस्ति भवति विद्यते वा भोक्तुम्।

A root takes तुमुन् when any of the roots, शक्, धृष, ज्ञा, ग्लै (ग्ला), घट्, रभ लभ्, क्रम्, सह्, अर्ह, अस्ति i. e. अस् (and similarly भू, विद् etc) stands as उपपद्s. Thus शक्नोति भोक्तुम etc. Similarly धृष्णोति भोक्तुम् etc. Here the term अर्थ in the rule (in अस्त्यर्थ) is connected with अस्ति only and not with शक् etc on the ground of proximity or immediate nearness.

मित—। शकधृषेति। एतदपि अक्रियार्थोपपदार्थमिति द्रष्टव्यम्। तदाह—एषु उपपदेष्विति। न तु क्रियार्थेषु एष्विति। शक्नोति भोक्तुमित्यादौ शक्नोतीत्यादेर्भोजनोद्देश्यत्वाभावात्। एवमिति। जानाति, ग्लायते, घटते, आरभते, लभते, प्रक्रमते, उत्सहते, अर्हति वा भोक्तुम् इति साकल्येनोदाहरणम्। ननु किं सूत्रे शकेत्यादिर्द्वन्द्वं कृत्वा पश्चादर्थेन सर्वस्य योगः? नेत्याह—अर्थग्रहणमस्तिनैव संबध्यत इति। कुत इत्यत आह—अनन्तरत्वादिति। आनन्तर्यात् सामीप्यादित्यर्थः। उदाहरति भवति विद्यते वेति। व्याख्यानमेवात्र शरणम् इति नागेशोऽपि। वस्तुतस्तु

पारयति कर्तुम्, वेत्ति, प्रक्रमते वेत्यादेरप्युपपदत्वमादाय—तुमुन् प्रयोगात् तेषाञ्च शक ज्ञारभेत्यादेःपरिदर्शनादथग्रहणम् अन्यत्रापि यथासम्भवं संबध्यत इति विभाव्यम्।

३१७८। पर्य्याप्तिवचनेष्वलमर्थेषु ॥ ३।४।६६ ॥

दी—। पर्य्याप्तिः पूर्णता। तद्वाचिषु सामर्थ्यवचनेषूपपदेषु तुमुन् स्यात्। पर्य्याप्तो भोक्तुं प्रवीणः कुशलः पटुरित्यादि। 'पर्य्याप्तिवचनेषु' किम्? अलं भुक्त्वा। 'अलमर्थेषु' किम्? पर्य्याप्तं भुङ्क्ते। प्रभुततेहगम्यते न तु भोक्तुः सामर्थ्यम्।

पर्य्याप्ति in the rule means fullness or what is required to meet the adequateness of the person. Thus the rule means—तुमुन् is employed after a root when words of ability ( सामर्थ्यवचन ) i. e. words expressing ability which is but the just requirement or need ( पर्य्याप्ति ) stand as उपपद्s. Thus पर्य्याप्तःभोक्तुम् or प्रवीणः भोक्तुम् etc—he is able to take food to his capacity—. Why say 'पर्य्याप्तिवचनेषु' ?—witness अलम् भुक्त्वा—here अलम् implies negation or prohibition and therefore भुज् has taken क्त्वाच् by the rule 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' ( 3316 ) and not तुमुन् by this rule; 'why say 'अलमर्थेषु'? witness—पर्य्याप्तं भुंक्ते he takes enough food i.e. more than what is his exact need.

मित—। पर्य्याप्तिवचनेष्विति। पर्य्याप्तिः पूर्णतेति। यावता आकाङ्क्षापूरणं तावन्मात्रमित्यर्थः। न तु तदधिकम्। पर्य्याप्तिं पूर्णतां वक्ति द्योतयतीति पर्य्याप्तिवचनः। अलमर्थेषु इत्यत्र अलं सामर्थ्यवाचि न तु निषेधार्थकमित्याह—सामर्थ्य वचनेष्विति। उपपदत्वं तु सप्तमीनिर्द्देशात् प्रागवल्लभ्यम्। प्रवीण इति। प्रवीणो भोक्तुम्। कुशलो भोक्तुमित्यादि। प्रवीणादयः शब्दाः पय्याप्तिवाचिनः सामर्थ्य-वचनाश्चतेषां पर्य्यायतया उपादानम्। अलं भुक्त्वेति। अत्रालं निषेधवाची। तेन 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' ( ३३१६ ) इति भुजेः क्त्वाच् न तुमुन्

प्राप्नोति। पर्य्याप्तं भुङ्क्ते इति। अत्र पर्य्याप्तमिति क्रियाया विशेषणं न तु कर्तुः। तदाह—प्रभूततेह गम्यत इत्यादि। प्रचुरं भुंक्ते इत्यर्थः।

२१७८। कालसमयवेलासु तुमुन् ॥ ३।३।१६७ ॥

**दी—। पर्यायोपादानमर्थोपलक्षणार्थम्। कालार्थेषूपपदेषु तुमुन् स्यात्। कालः समयो वेला अनेहा वा भोक्तुम्। प्रैषादिग्रहणमिहानुवर्तते। तेनेह न। 'भूतानि कालः पचतीति वार्ता'।**

The terms काल, समय and वेला mean the same thing viz, time. Hence the acceptance of the Synonyms ( of काल ) is to indicate that words expressing the sense of काल which stand as उपपदs to a root takes तुमुन्। कालः समयः etc this is time for taking meal. अनेहा means time. Here प्रैष (.or विधि ) etc comes down from the previous rule 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' ( 2817—3.3.163 ); Thus in 'भूतानि कालः—' ( महाभारत वनपर्व ) we have no तुमुन् for there is no implication of प्रैष etc, but it only expresses a fact the action of nature. Similarly we have no तुमुन् in 'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्' etc.

मित—। कालसमयेति। अत्र समयवेलयोः कालपर्यायत्वादाह—पर्यायोपादानमिति। अर्थोपलक्षणार्थमिति। कालार्थोपलक्षणार्थमित्यर्थः। नन्वेवं कालार्थेषु इत्येवोच्यताम्। एवं हि लाघवं स्पष्टतरं च स्यादिति चेन्न। वैचित्र्याद् व्याख्यानतो विशेषप्रतिपत्तेश्च यथान्यासमेव रमणीयम्। अनेहा वेति। कालपर्यायोऽयं शब्दः। 'कालो दिष्टोऽप्यनेहापि' इत्यमरः। प्रैषादिग्रहणमिति। 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' ( २८१७—३।३।१६३ ) इत्यत इत्यर्थः। तथा च 'भूतानि कालः पचति—' (महाभारतवनपर्वस्थमिदं श्लोकार्द्धम्) इत्यत्र प्रैषादेरभावात् पचतेस्तुमुन् न। अत्र हि यथास्थितवस्तुवर्णनमात्रम्। न तु विधिः कामचारानुज्ञा वा गम्यते।

एवम् 'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्' (हितो—) इत्यादावपि अनुवादमात्रमेव। न तु विध्यादयः। तेन तुमुन् न।

३१८०। भाववचनाश्च ॥ ३।३।११ ॥

टी—। भाव इत्यधिकृत्य वक्ष्यमाणा घञादयः क्रियार्थायां क्रियायां भविष्यति स्युः। यागाय याति। 'तुमर्थात्—' (५८२) इति चतुर्थी।

Affixes like घञ् etc to be dealt with under the section 'भावे' (3184—3.3.18) take place when क्रियार्था क्रिया or one action for another is implied in the future tense. Thus यागाय याति—he goes for a sacrifice. Here in यागाय we have चतुर्थी by the rule 'तुमर्थाच्च भाववचनात्' (582), the sense being यष्टुं यातीत्यर्थः (with a view to making a sacrifice).

मित—। भाववचनाश्चेति। 'भविष्यति गम्यादयः' (३।३।३) इत्यतः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' (३।३।१०) इत्यतश्च क्रमेण भविष्यतीति क्रियार्थायां क्रियायामिति च वर्तते। भाववचना इत्यस्यार्थमाह—भावे इत्यधिकृत्य वक्ष्यमाणा इति। 'भावे' (३१८४—३।३।१८) इत्यत्रानुपदमेव वक्ष्यमाणा इत्यर्थः। यागाययातीति। यागोद्देश्यकयानमित्यर्थः। तुमर्थादिति। 'तुमर्थाच्च भाववचनात्' (५८२) इति पूर्णसूत्रशरीरम्। अत्र यष्टुं यातीत्यर्थाद् भावे घञा सिद्धे यागशब्दे चतुर्थी। तुमर्थस्य भावविहितघञा उपलम्भादित्यभिप्रायः।

३१८१। अण् कर्मणि च ॥ ३।३।१२ ॥

टी—। कर्मण्युपपदे क्रियार्थायां क्रियायां चाण् स्यात्। ण्वुलोऽपवादः। काण्डलावो व्रजति। परत्वादयं कादीन् बाधते। कम्बलदायो व्रजति।

When there are two क्रिया and two उपपद and one is क्रियार्था

क्रिया i. e. an action meant for another action, and the first root having an object, takes the affix अण्. Thus this rule supersedes ण्वुल enjoined under 'तुमुन्ण्वुलौ—' ( 3175 ). काण्डलावो व्रजति—he goes to cut down the branch. By the परिभाषा—'विप्रतेषेधे परं कार्य्यम्' the affix अण् directed by this सूत्र bars क instructed by the सूत्र 'आतोऽनुपसर्गे' ( 2917—3.2.3. ) as the former ( this सूत्र—'अण् कर्मणिच' ) follows upon 'आतोऽप्रपसर्गे'। Thus कम्बलदायो व्रजति he goes to give away blankets and not कम्बलदो व्रजति ( with the affix क added ).

मित—। अण् कर्मणि चेति। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' ( ३।३।१० ) इति वर्तते। तस्मात् 'क्रियार्थायां क्रियायाम्' इति चकारेणात्र समुच्चीयते। तथाच कर्मणि उपपदे क्रियार्थायां क्रियायां चोपपदे इति द्विविधे उपपदे सत्येवास्य ( अण् प्रत्ययस्य ) प्रवृत्तिरिति भाष्यम्। कर्तरि प्रत्ययः 'कर्तरि कृत्' इत्यनुसारात्। तदाह—काण्डलावो व्रजतीति। काण्डं लविष्यति छेत्स्यति इति व्रजतीत्यर्थः। अत्र काण्डमिति व्रजतीति च द्विविधमुपपदम्। नन्वत्र काण्डलावको व्रजतीत्यपि स्यात् क्रियार्थायां क्रियायां ण्वुलोऽपि प्रवृत्तेरित्याशङ्क्य ण्वुलं निराचष्टे—ण्वुलोऽपवाद इति। विशेषविहितत्वाच्चेति शेषः। अयमर्थः—'ण्वुल्तृचौ' ( ३।१।१३३ ) इति बाधित्वा 'कर्मण्यण्' ( ३।२।१ ) इत्यण् प्राप्तः। सोऽपि 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' ( ३।३।१० ) इति क्रियार्थायां क्रियायां विशिष्य विहितेन ण्वुला प्रतिषिध्यते। पुनस्तमपि ण्वुलं परत्वात् 'अण् कर्मणि चे'ति अण्प्रत्ययो बाधते इति। नन्वस्तुत्र ण्वुल् बाधितः। 'आतोऽनुपसर्गे' ( ३।२।३ ) इति कप्रत्ययस्तु भवेदेव कर्मण्युपपदे तस्य प्रवृत्तेरितीमामपि आशङ्कां निराचष्टे—परत्वादिति। एवञ्च कम्बलदो व्रजतीतिनेति भावः।

**३१८२। पदरुजविशस्पृशो घञ् ॥३।३।१६॥**

**दी—। भविष्यतीति निवृत्तम्। पद्यतेऽसौ पादः। रुजतीति रोगः। विशतीति वेशः। स्पृशतीति स्पर्शः।**

The catching word 'भविष्यति' ceases to follow hence; so that पद्, रुज्, विश् and स्पृश् take the affix घञ् ( in the कर्तृवाच्य ) in the present tense only. Thus पद्यते etc that which goes—पादः—a foot. रुजति etc that which breaks down is रोगः or disease. वेशः—the house of a prostitute or dress.

मित—। पदरुजेति। भविष्यतीति निवृत्तमिति। अत्र व्याख्यानमेव शरणम्। ततश्च वर्तमाने एव प्रत्ययः। तदाह—पद्यतेऽसाविति। अत्र कर्तरि प्रत्यय इति बोध्यम्। पदधातुः—पद्यते गच्छतीत्यर्थः। रुजतीति। रुजो भङ्गे तुदादिः। विशतीति वेश इति। अधिकरणस्यात्र विवक्षावशात् कर्तृत्वम्। 'वेशो वेश्याजन—समाश्रयः' इति। 'आकल्पवेशौ नपथ्ये प्रतिकर्म प्रसाधनम्' इति चामरः। 'घञ्' इत्यस्य 'एरच्' ( ३२३१ ) इति यावदधिकार इति बोध्यम्।

३१८३। सृ स्थिरे॥ ३।३।१७॥

दी—। 'सृ' इति लुप्तविभक्तिकम्। स्थिरे कर्तरि सर्तेर्घञ् स्यात्। सरति कालान्तरमिति सारः। 'व्याधिमत्स्यबलेषु चेति वाच्यम्' ( वार्तिक )। अतीसारो व्याधिः। 'उपसर्गस्य—' ( १०४४ ) इति दीर्घः। अन्तर्भावितण्यर्थोऽत्र सरतिः। रुधिरादिकमतिशयेन सारयतीत्यर्थः। विसारो मत्स्यः। 'सारो बले स्थिरांशे च'।

The word 'सृ' in the rule is what has dropped its termination ( विभक्ति ) for it is elliptical for the ablative 'सर्त्तेः' or 'सरतेः'. This mention of 'सृ' however is purposely made so that it can include both जुहोत्यादि-सृ and भ्वादि-सृ. Thus Bhattoji says सर्त्तेर्घञ् and सरति कालान्तरम्। The affiix घञ् is employed after a root in the active voice, when the agent has got stability or want of wastage ( consumption ) Thus सरति etc that which remains

( unchanged ) for another time to come—is सारः ( सृ + घञ् )। 'व्याधिमत्स्य—' ( Varttika ) It must be said that सृ takes घञ् in the कर्तृवाच्य or active voice when—व्याधि, ( disease ), मत्स्य ( fish ) and बल ( Strength ) are meant. Thus अतीसारः—diarrhoea. Here the final of the उपसर्ग has been lengthened by the rule 'उपसर्गस्य घञि—' ( 1044 ). In this case the root has got a casual sense within, the sense being—the disease brings about excessive discharge of blood etc ( as in blood-desentery—रक्तातीसार ). विसार—a fish. 'सारोबले—' this is form Amara. Note that the word 'सार' is included in the अर्धर्चादि list therefore it is both masculine and neuter ; cp.—'नैतत् सारम्' ( this is not sound ) etc.

मित—। सृ स्थिरे इति। लुप्तविभक्तिकमिति। लुप्तपञ्चमीकमित्यर्थः। सर्त्तेः, सरतेरिति वा वक्तव्ये सृ इति निर्देशः भौवादिकस्य—जुहोत्यादिकस्य च सङ्ग्रहार्थम् इति ध्वनयन्नाह—सर्तेरिति सरतेरिति च। स्थिरे इति नोपपदम्। किन्तु कर्तृविशेषणमेवेत्येतज्ज्ञापयन्नाह—स्थिरे कर्तरि इति। स्थिरशब्दस्य कालान्तरेऽपि अनपायित्वमिति मत्वा व्याचष्टे—सरति कालान्तरमिति। यथास्वं तिष्ठतीति तदर्थः। 'व्याधिमत्स्य—' इति वार्तिकमिदम्। व्याधिमत्स्यबलेषु कर्तृषु सर्त्तेः सरतेर्वा घञ् इति वक्तव्यमित्यर्थः। एवञ्चात्र अस्थिरेऽपि कर्तरि घञ् इति बोध्यम्। व्याध्यादीनां कालान्तरेऽपायदर्शनात्। अतीसार इत्यत्र कथं दीर्घ इत्यत्राह— 'उपसर्गस्य—' इति। एवञ्च पचे अतिसार इति ह्रस्वोऽपि साधुः। 'उपसर्गस्य—' इत्यंशः तत्त्वबोधिन्यां नोपलभ्यते। तन्नूनमयं प्रक्षेपो वा प्रमादो वा। नूनं प्रक्षेपः। दीक्षितकृतसूत्रोद्धारस्थले तत्र तत्र सूत्रसंख्याया अपि निर्देशात्। अत्रानिर्देशाच्च यत्र सूत्रसंख्या दृश्यते सास्माभिरेव संयोजिता। अन्तर्भावितण्यर्थ इति। तदाह—अतिशयेन सारयतीत्यर्थ इति। विसारो मत्स्य इति। विविधं सरतीति विग्रहः। [ पृथुरोमा झषो मत्स्यो मीनो वैसारिणोऽण्डजः। विसारः शकुली

त्यमरः ]। 'सारो बले—' इति अमरस्थोऽयं श्लोकांशः। भाषेऽनुमते 'खदिरसार' इत्येवोदाहृतम्। अर्धर्चादिगणेऽस्य पाठात् नपुंसकोऽप्ययम्। 'नैतत् सारम्' इत्यादिदर्शनाच्च।

२१८४। भावे ॥ ३।३।१८ ॥

**दी—। सिद्धावस्थापन्ने धात्वर्थे वाच्ये धातोः घञ् स्यात्। पाकः। पाकौ।**

The affix घञ् is employed after a root when such a sense of the root as indicates its having already attained the state of being सिद्ध or complete is to be expressed. It is important to note here that words arrived at with adding तिङ् affix after a root as पचति etc are known as साध्यावस्थापन्न or coming to the state of being complete but not already so; for these words पचति etc are unfit for the gender, number etc whereas कृदन्त words as पाक etc arrived at with घञ् etc are fit for the addition of the same. Thus Bhattoji says पाकः पाकौ etc.

मित—। भाव इति। भावशब्दस्यार्थमाह—सिद्धावस्थेति। अयमभिप्रायः। अत्र शास्त्रे द्विविधो धात्वर्थः साध्यावस्थापन्न इति सिद्धावस्थापन्न इति च। तत्र साध्यावस्थापन्नत्वे वाच्ये धातोस्तिङ् स्यात्। सिद्धावस्थापन्नत्वे तु घञादयः। अत्र लिङ्गसंख्याकारकान्वयित्वमेव सिद्धसाध्ययोर्भेदकारणम्। साध्यावस्थायां लिङ्गादेरभावात् सिद्धावस्थायां तेषां सत्त्वाच्च। तथाच ओदनस्य पाकः इतिवत् ओदनस्य पचतीति न। अत एवाह—पाकः पाकौ इति। स्पष्टतरं चैतद् वैयाकरणभूषणसारे। तत्र हि उक्तम्—

"साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना च।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः॥" इति।

२१८५। स्फुरतिस्फुलत्योर्घञि ॥ ३।१।४७॥

टी—। अनयोरेच आत्त्वं स्यादघञि। स्फारः—स्फालः। 'उपसर्गस्य घञि—' (१०४४) इति दीर्घः। परीहारः। 'इकः काशे' (१०४५)—काशे उत्तरपदे इगन्तस्यैव प्रादेर्दीर्घः स्यात्। नीकाशः। अनूकाशः। 'इकः' किम्? प्रकाशः। 'नोदात्तोपदेश—' (२७६३) इति न वृद्धिः। शमः। आचमादेस्तु—आचामः। कामः। वामः। विश्राम इति त्वपाणिनीयम्।

The एच् or औकार, arrived at after गुण, of स्फुर् and स्फुल् becomes आ when घञ् follows. स्फारः स्फालः—depth or purvision cp—'स्फारान्धकारेऽपि—' (पञ्चतन्त्र) 'उपसर्गस्य घञि—' (1044) [ explained' ] gives परीहारः—quitting. Optionally—परिहारः। Similarly प्रतीहारः—प्रतिहारः etc. 'इकः काशे' (1045)—when काश stands as the subsequent member the इक् (इ, उ, ऋ) only of प्र etc becomes दीर्घ—नीकाश (resembling) etc, शमः (शम्+घञ्) दमः (दम्+घञ्) etc. are not lengthened by the rule 'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (2793) but आ+चम् being excluded, आ+चम्+घञ् gives आचामः (touching water). Similarly कामः etc. विश्राम, though profusely used by writers, is against Panini for श्रम् being both उदात्तोपदेश and मान्त cannot have its उपधा lengthened in connection with घञ्. The correct form, therefore, in accordance with पाणिनि is विश्रमः। Thus Kasika says "सूर्यविश्रामा भूमिः इत्यादि अन्याय्यमेव।"

मित—। स्फुरतीति। एच आत्त्वं स्यादिति। 'आदेचः—' (६।१।४५) इत्यतस्तदनुवृत्तेरिति भावः। गुणेकृते आत्वमिति बोध्यम। अन्यत्र व्याख्यातं सूत्रद्वयम् अत्रौचित्यात् स्मारयति 'उपसर्गस्य घञि—' (१०४४) इति 'इकः काशे' (१०४५) इति च। परीहार इति। पक्षे परिहार इति ज्ञेयोऽपि। प्रकाश इति।

अत्र इकोऽभावाद् दीर्घाभावः। शम्यत इति शमः। दम्यते इति दमः। भावे घञ्। तत्र 'अतउपधायाः' (२२८२) इति वृद्धिः कृतो नेष्यत आह—'नोदात्तोपदेशस्य मान्तस्यानाचमेः' (२७६२) इति। आङ्पूर्वाचमेस्तु पर्युदासाद् वृद्धिः। आचामः आचमनमित्यर्थः। कामः वाम इति। एतद् द्वयमपि तत्रैव सूत्रे 'अनाचमिकमिवमीनाम्' इति वार्त्तिकाद् वृद्धिनिषेधाभावात् सिद्धम्। नन्वेवम् 'विश्राम' लभतामिदञ्च शिथिलज्यावन्धमस्माद्धनुः' (शकुन्तला—२य अङ्क) 'यज्जीवति सोऽस्य मरणं यत् मरणं सोऽस्य विश्रामः' (पञ्चतन्त्रम्) 'विश्रामहेतोः' (मेघदूतम्) इत्यादौ विश्राम इति कथं सङ्गच्छते। श्रमतेरुदात्तोपदेशतयामान्तत्वाच्च 'नोदात्तोपदेशस्य—' इत्यनुसाराद् वृद्ध्यभावस्यैव न्याय्यतया घञि विश्रम इत्यस्यैव इष्टत्वात्। तत्राह—अपाणिनीयमिति। व्याकरणान्तर-लभ्यमिति तदर्थः। नत्वसाधुरिति भावः। बहुशस्तत्प्रयोगदर्शनादिति भावः। तत्त्वबोधिन्यां एतस्य पाणिनीयत्वेनापि व्याख्यानं दृश्यते। वि+श्रम+णिच्+अच् इत्यादि तत्रैव द्रष्टव्यम्। अस्माकं शकुन्तलामेघदूतयन्योपि द्रष्टव्याः।

## २१८६। अकर्तरि च कारके संज्ञायाम्॥ ३।३।१९॥

## टी—। कर्तृभिन्ने कारके घञ् स्यात्।

The affix घञ् is appointed after a root when in any case other than the nominative the sense of the derivative is obtained and the same (the derivative) expresses some संज्ञा or a conventional word (रूढ़िशब्द).

मित—। अकर्तरीति। अकर्तरीति पर्युदासः। तदाह—कर्तृभिन्ने कारक इति। घञ् स्यादिति। 'पदरुज—' (३।३।१६) इत्यतस्तदनुवृत्तेरिति भावः। संज्ञायामिति वाक्यशेषः। अत्र संज्ञाशब्देन रूढ़िशब्दो विवक्षितः। न तु रामादिवत् कश्चित्। तथा सति राग इति वक्ष्यमाणमुदाहरणं न सङ्गच्छते। अतएव मूलकृता एव 'संज्ञायाम्' इति प्रायेणकथितम्। तथाच काशिका—"संज्ञाव्यभिचारार्थः चकारः"॥ 'अकर्तरि' इत्यस्य 'कारके' इति विशेषणात्, प्रसज्यप्रतिषेधत्वमपि ज्ञाप्यते 'भावे च

उपदेशे ऽजिति" "अकृत्सार्वधातुकयोः "इत्यादौ यथा। एवञ्च एतत् 'प्रसज्य-प्रतिषेधेपि समासोस्ति इति ज्ञापयति इति वक्ष्यते।

३१८७। घञि च भावकरणयोः ॥ ६।४।२७ ॥

टी—। रञ्जेर्नलोपः स्यात्। रागः। अनयोः किम्? रज्यत्यस्मिन् रङ्गः। प्रास्यत इति प्रासः। 'संज्ञायाम्' इति प्रायिकम्। को भवता लाभो लब्धः। इत उत्तरं 'भावे' 'अकर्तरि कारके' इति 'कृत्यल्युटो बहुलम्' (२८४१) इति यावद् द्वयमप्यनुवर्तते।

The root रञ्ज् drops its नकार, also when घञ् follows in the भाव or in the करणवाच्य। Thus रागः—here न of रञ्ज first disappears by this then अ or उपधा of रज is lengthened by 'अतउपधायाः' ( 2282 ) and finally the ज् of रज् is changed into ग by the rule 'चजोः कु घिण्ण्यतोः' । why say अनयोः ( or भावकरणयोः )' ? witness—रङ्गः ( a stage or performance house ) when though घञ् is employed there is no elision of नकार as the form is arrived at in the अधिकरणवाच्य। The word 'संज्ञायाम्' in the rule 'अकर्तरि च कारके—' ( 3186 ) is a saying in general and therefore does not necessarily hold good in each and every case. Thus 'को भवता—' where लाभ is formed with घञ् in अकर्तृ—वाच्य or भाववाच्य and yet it does not mean a technical object on the other hand it a is used to express some 'gain' 'fruit' etc. Henceforth upwards the word 'भावे' and the words 'अकर्तरि कारके' will be carried as far as the rule 'कृत्यल्युटो बहुलम्' ( 2841—3.4.113 ).

मित—। घञि चेति। अपेक्षितं पूरयन्नाह—रञ्जेर्नलोप इति। 'अनिदिताम्—' ( ६।४।२४ ) इत्यत आदनुवृत्तेः। राग इति। अनेन रञ्जेर्नकारस्य लोपे कृते 'अत

उपधायाः' ( २२८२ ) इति उपधावृद्धिः । 'चजोः कु घिण्ण्यतोः' इति जकारस्य कुत्वं न जकारस्य । अनयोः किमिति । भावकरणयोः किम् इत्यर्थः । रङ्ग इति । अत्र घञः अधिकरणवाच्ये प्रयोगात् नलोपो नकारलोपोपधावृद्धी नेति भावः । रागो रञ्जनक्रियेति भाववाच्येऽर्थः रज्यतेऽनेन इति कारणविवक्षायां तु रञ्जनद्रव्यमिति विवेकः । प्रास्यत इति प्रास इति । भाववाच्येऽयम् । करणेऽपि भवति । संज्ञायामिति प्रायिकमिति । कदाचित् कुत्रचित् प्रकृत्यावपि न सार्वत्रिकमित्यर्थः । अत एवाह को भवतीति । अत लाभ इति अकर्तर्य्येव कारके उत्पन्नमपि न संज्ञाभावइति । एवमन्यत्र । भाष्ये त्वन-भिधानमाश्रित्य इदं प्रत्याख्यातम् इति तत्त्वबोधिनी । प्राचामभिमताह—इत उत्तरमिति । 'कृत्यल्युटो बहुल'मिति । तस्य ( ३।३।११३ ) एवम् अष्टाध्यायीक्रमः ।

३१८८ । स्यदो जवे ॥ ६।४।२८ ॥

दी—। स्यन्दे र्घञि नलोपो वृद्ध्यभावश्च निपात्यते । स्यदो वेगः । अन्यत्र स्यन्दः ।

When force ( जवः ) is meant, the root ( स्यन्द ) after घञ् has been attached to it, drop its नकार and has no वृद्धि ( of its उपधा ) irregularly. Thus स्यन्द + घञ् = स्यदः—force. But स्यन्द + घञ् = स्यन्दः meaning 'flow' or 'current' without elision of न ।

मित—। स्यद इति । नलोप इति । 'अनिदिताम्—' ( ३।४।२४ ) इत्यत-स्तदनुवृत्तेः । एवं क्तेऽपि नलोपे उपधावृद्धिः स्यादित आह—वृद्ध्यभावश्च निपात्यते इति । एतच्च 'स्यद' इत्यकारोच्चारणादेव लभ्यते इति बोध्यम् । स्यदो वेग इति । 'रंहस्तरसी तु रयः स्यदः' इत्यमरः । अन्यत्रेति । प्रस्रवणे इत्यर्थः । अत्र नलोपाभावः ।

३१८९ । अवोदैधौद्मप्रश्रथहिमश्रथाः ॥ ६।४।२९ ॥

दी—। अवोदः अवक्लेदनम् । एधः इन्धनम् । ओद्म उन्दनम् । अन्येनलोपो वृद्ध्यभावश्च । प्रश्रथः । हिमश्रथः ।

The words अवोद, एध, ओद्म, प्रश्रथ and हिमश्रथ are irregularly formed with घञ् appointed after them ; the result of irregularity ( निपातन ) being elision of नकार, want of गुण, गुण and want of वृद्धि of the roots. अव + उद + घञ्, इन्ध् + घञ्, उन्द + मन्, प्र + श्रथ + घञ् ; हिम + श्रथ + घञ् ।

मित—। अवोदेति। अवोद, एध, ओद्म, प्रश्रथ हिमश्रथ, इत्येते घञन्ता निपात्यन्ते। अवोद इति। अवपूर्वादुन्दतेर्घञ्। अत्र घञि निपातनात् नलोपे कृते 'न धातुलोप—' इति लघूपधगुणाभावे च अव+उद इतिस्थिते आद्गुणेन रूपम्। एध इन्धनमिति। 'काष्ठं दार्विन्धनं त्वेध' इत्यमरः। 'इन्धी' दीप्तौ। अस्माद् घञि नलोपे 'न धातुलोपे—' इति बाधित्वा निपातनाद् गुणः। ओद्म इति। उन्दीक्लेदने। अस्मादौणादिके मन्प्रत्यये निपातनान्नलोपो गुणश्च। श्रथेरिति। प्रपूर्वस्य हिमपूर्वस्य चेत्यर्थः। अनयोर्घञ्।

२१९० । परिमाणाख्यायां सर्वेभ्यः ॥ ३।३।२० ॥

दी—। घञ्। अजपोर्बाधनार्थमिदम्। एकस्तण्डुलनिचायः—तण्डुलानां निचायः राशिः परिच्छेद्यते। द्वौ शूर्पनिष्पावौ। शूर्पेण निष्पावौ। द्वौ कारौ। अत्र विक्षिप्यमाणोधान्यादिः परिच्छेद्यते॥ 'दारजारौ कर्तरि णिलुक च' (वार्तिक)। दारयन्तीति दाराः। जारयन्तीति जाराः। जारः उपपतिः।

The affix घञ् is employed after all roots when the expression or determination of some measure is implied. This rule i.e. the affix घञ् is to forbid अच् and अप् ( for in the भाववाच्य there are three affixes only ( घञ्, अच् and अप् ) giving masculine forms. Thus एकः तण्डुलनिचाय;—or a heap of rice. Here ( नि + चि + घञ् )

bars the affix अच which was due by the rule 'एरच' ( 3231 ). Here the replacing of चकार by ककार by the rule 'चजो: कु'—(2893) cannot be insisted upon for the rule does not apply here as this 'च' ( of चिञ् ) is आदिचकार i.e चकार in the beginning and not final. द्वौ शूर्पनिष्पावौ—two purifications with a winnowing fan. i.e. two fans measuring purified rice. Here घञ् ( निस्पु + घञ् ) supersedes अप् which was due by the rule ऋदोरप ( 3232 ). शूर्पेण निष्पावौ—this explains the samasa in शूर्पनिष्पावौ। द्वौ कारौ —two scatterings ( of paddy etc ). The village people scatter or spread paddy here and there on the ground to dry the same in the sun. This practice is spoken of here—( 'धान शुक्नो करा' वा 'धानरोद्दे देओया' etc as they are colloquially expressed ). Here कृ takes घञ् excluding अप् which was legitimate by the rule 'ऋदोरप्' ( 3232 ). 'दारजारौ—'This is a Varttika. The words दार and जार are formed in the कर्तृवाच्य and the णि or णिच् of दारि ( दृ + णिच् ) and जारि ( जृ + णिच् ) is to be dropped in the way as लुक् suggests. Thus दारा:—a wife. Note that this is always plural and masculine. जार:—a paramour or gallant ; without this Varttika घञ् would not take place after simple दृ and जृ and consequently by अप् we would have दर and जर which are not intended in the senses as above. Moreover, had not the term 'णिलुक् च' been appended to 'दारजारौ—' (the Varttika) the णि or णिच् eliding by 'णेरनिटि' ( 2313 ) would have been स्थानिवत् by the rule 'अच: परस्मिन्—'and consequently the वृद्धि due to घञ् would not have taken effect. But as लुक् does not necessitate such स्थानिवत्त्व on the strength of 'न लुमताङ्गस्य' ( 263 )

we have the वृद्धि due to घञ् and the forms intended are got.

मिल—। परिमाणाख्यायामिति। शेषं पूरयन्नाह—घञिति। परिमाणं परिच्छेदः। इयत्तयावधारणम्। आख्या उक्तिः। तेन प्रत्ययार्थस्य परिच्छेदे गम्ये तेभ्यो धातुभ्यो घञ् प्रत्ययः स्यादित्यर्थः। ननु भावे पुंसि घञपावपि विधीयेते। तर्हि तावपि स्यातामित्यत आह—अजपोर्बाधनार्थमिदम् इति। 'एरच्' (३२३१) इत्यच् 'ऋदोरप्' (३२३२) इत्यप् चात्र न भवतामित्यर्थः। तण्डुलनिचाय इति। अत्र षष्ठीसमास इति दर्शयति—तन्दुलानां निचाय इति। निचायशब्दस्य राशिरर्थः। निचीयते राशीक्रियत इति निचायः। भावे घञ्। चिनोतेश्चि इत्यस्य आदिचकारत्वात् 'चजोः कु—' (२८६३) इति न प्रवर्तते तेन कुत्वं न। अत्र तण्डुलानां राशीकरणेन परिच्छेदो गम्यते। तदाह—परिच्छेद्यत इति। 'एरच्' इत्यचि प्राप्ते घञ्। द्वौ शूर्पनिष्पावौ इति। 'कर्तृकरणे कृता बहुलम्' (६९४) इत्यनुसारादत्र करणे तृतीयान्तस्य समास इत्याह—शूर्पेण निष्पावौ इति। निष्पूयते तुषाद्यपनयनेन परिशोध्यते यस्तण्डुलादिः स निष्पावः। कर्मणि घञ्। 'ऋदोरप्' इत्यपि प्राप्ते घञ्। 'अचो ञ्णिति' (२५४) इति वृद्धिः। अत्र शूर्पसंख्यया तण्डुलस्य परिच्छेदो गम्यते [“कुलाधारा परिष्कृत दुइ कुला चाल वा धान” इति भाषा]। न चैवं 'शूर्पाभ्यां निष्पावौ' इति वाक्यशेषात् शूर्पद्वयपरिमाणस्य बोधात् 'निरभ्योः पुल्वोः' (३१९८) इत्यस्य तु घञ् विधायकत्वेऽपि परिमाणाख्यायामप्राप्ते नात्र तेन घञ् स्वीकार्य्यः, तस्य केवलात् पूञो लवतेश्च घञ् वारयितुं प्रयुक्तत्वात्। द्वौ कारौ इति। कॄ विक्षेपे। कीर्य्यते विक्षीर्य्यते यो धान्यादिराशिः स कारः। कर्मणि घञ्। अजपवादः। अत्र द्वाविति परिमाणस्य प्रदर्शनार्थम्। तदाह—विक्षिप्यमाणो धान्यादिः परिच्छिद्यत इति। धान्यादीनां शुष्ककरणार्थं यदेषां वस्त्रादीनामुपरि विक्षेपः स कार इत्युच्यते घञ्प्रत्ययलभ्यस्त्वर्थः॥ 'दारजारौ—' इति वार्तिकमिदम्। “दॄ विदारणे” “जॄ वयोहानौ” इत्याभ्यां ऋन्ताभ्यां कर्तरि घञ् प्रत्ययः स्याद् घेर्लुक् च। 'परिमाणाख्यायाम्—' (३१९०) इत्यनेनाप्यत्र घञ् स्यात् तथापि 'अकर्तरि च कारके—' (३१८५) इत्यनुसारात् स कर्तरि न स्यात्। इष्यते तु

कर्तव्यैव अतोपि वार्तिकम्। अन्तत्वमनयोः दर्शयति—दारयतीति दाराः इति। जारयतीति जारः इति च। दारा इति पुंसि भूम्न्येव। 'दाराः पुंसि च भूम्न्येव' इति स्त्रीपर्य्यायेऽमरः। 'जारस्तूपपतिः समौ' इति च स एव। अत्र 'दारजारौ—' इति वार्त्तिके 'णिलुक्' इत्यस्यानुक्तौ तु 'णेरनिटि (२३१३)' इति णिलोपेऽपि 'अचः परस्मिन—' (५०) इत्यनुसाराद् घञाश्रयाऽवृद्धिर्नस्यात्। णिलोपस्य अनेन (अचःपरस्मिन् इत्यनेन) स्थानिवत्वेन व्यवधानात्। लुकि तु सति न 'लुमताङ्गस्य' (२६२) इत्यनुसारादङ्गकार्य्यनिषेधात् स्थानिवत्वाभावेन 'अचो ञ्णिति' (२५४) इत्यस्य प्रवृत्तेः अवश्यमेव घञाश्रया वृद्धिरिति दिक्।

२१८१। इङश्च ॥३।३।२१॥

टी—। घञ्। अचोऽपवादः। उपेत्यास्मादधीयते उपाध्यायः। 'अपादाने स्त्रियामुपसंख्यानम् तदन्ताच्च वा ङीष्' (वार्तिक)। उपाध्याया—उपाध्यायी। 'शॄ वायुवर्णनिवृतेषु' (वार्तिक)। 'शॄ' इत्यविभक्तिको निर्देशः। शारो वायुः—करणे घञ्। शारो वर्णः। चित्रीकरणमिह धात्वर्थः। निव्रियते आव्रियतेऽनेनेति निवृतमावरणम्। बाहुलकात् करणे क्तः। गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः। अकृतप्रावरण इत्यर्थः। 'प्रदक्षिणप्रसव्यगामिनां शाराणाम्' इति वार्तिककार प्रयोगादक्षेष्वपि शार इति भवति।

घञ् is appointed after इङ् (i.e अधि+इ) also (in other-than nominative case). This overrules अच्। उपाध्यायः=उप अधि+इ+ घञ्—a professor or preceptor from whom one receives instruction or lesson. The fifth case ending in उपाध्याय is accounted for by the rule 'आख्यातोपयोगे' (592). 'अपादानेस्त्रियाम् उपसंख्यानम्—' This is a Varttika. 'The affix is to be employed after अधि+इ

in the अपादानवाच्य, also when a female is implied and the word thus derived takes ङीष् optionally. Thus उपाध्याया with घञ् and टाप् and उपाध्यायी with घञ् and ङीष् both meaning the same thing viz a female who is herself a professor or preceptor. But उपाध्यायानी the wife of a preceptor with the aug. आनुक् and the affix ङीष् only ( and not टाप् also ). Note that without this Varttika उप अधि+इ would, to express a female, take क्तिन् only by 'स्त्रियां क्तिन्' which is not barred by घञ् as it is to forbid अच् and अप् only ; cp, 'घञनुक्रमणमजपोर्बाधनार्थम्' ( भाष्य ! ) ।

'शॄ वायुवर्ण—' This also is a Varttika here. The root शॄ takes घञ् in the active voice when वायु, वर्ण and निवृत are meant. Thus शार:—wind, here we have करणे घञ्—the sense being by which something (a leaf etc) is caused to fall down. शार:—colour ; here this denotes painting ( वर्ण ) ? In निवृतम् we have करणे क्त by बाहुलक This third शार means a covering ; Cp—गौरिवाकृतनीशार:—' the line quoted is from the Bhashya. The line means one who has not made covering for himself is often reduced like a cow in winter. The word शार means अक्ष or the rod under the navel of a wheel on which it revolves ; compare 'प्रदक्षिण—'the sayingof the Varttikakara.

मित—। इङश्चेति। शेषं पूरयन्नाह—घञ् इति। इङ् धातु: प्रायेणाधि-पूर्व:। तेनाधिपूर्वादिङो घञ् स्यादकर्तरि कारके इत्यर्थ:। अचोऽपवाद इति। 'एरच्' (३२३१) इति प्राप्ते अकर्तरि कारके इत्यनुवृत्तेराह—उपेत्यास्मा-दिति। अत्र अपदाने घञ्। यस्य समीपमागत्य नियमपूर्वकमधीयते स उपाध्याय:। अस्मादित्यत्र 'आख्यातोपयोगे' इति पञ्चमी। 'अपादाने स्त्रियाम्—' इति वार्तिक मिदम्। अपादाने कारके स्त्रियां गम्यायामुपपूर्वादीयतेर्घञ् स्यात् घञन्ताच्चास्मात्

ङीष् वा स्यात्। पक्षे टाप्। तदाह उपध्याया—उपध्यायी इति। यास्वयमध्यापिका तस्येयं संज्ञा। पुंयोगेतु आनुगागमौ ङीष् च। उपाध्यायानी—उपध्यायी। अत्र अमरः—उपाध्यायाप्युपाध्यायी स्यादाचार्यापि च स्वतः। आचार्यानी तु पुंयोगे स्यादर्यी क्षत्रियी तथा। उपाध्यायान्युपाध्यायी—' इति। न च 'अकर्तरि च कारके—' इत्येव सिद्धे वार्तिकं व्यर्थमिति वाच्यम्। 'घञनुक्रमणम् अजपोर्बाधनार्थम्' इति भाष्यकारवचनात् अजपोरेव प्रत्यययोर्घञ्बाधकः स्यात् 'स्त्रियां क्तिन्' इत्यस्य तु बाधको न स्यात्। तस्मात् घञ्वचनमत्र सार्थकम् एव। अन्यथा उपाध्याय इति स्यात्। 'शॄ वायुवर्ण—' इति इदमपि वार्तिकम्। अविभक्तिको निर्देश इति। लुप्तपञ्चमीक इत्यर्थः। वायौ वर्णे निवृते (आवरणे) च वाच्ये शृणातेर्घञ् इति वार्तिकार्थः। शारो वायुः। शीर्यन्ते पर्णादीनि अनेनेति करणे घञ्। एवं शीर्यते चित्रीक्रियते पटादिकमनेनेति शारो वर्णः। निवृतम् इत्यस्य आवरणमर्थ इति दर्शयति निवृतमित्यादिना। करणे क्त इति। न तु भावे। तेन शीर्यते आव्रियतेऽनेनेति शार आवरणम्। उदाहृत्य दर्शयति—गौरिवाकृतनीशार इति। भाष्यस्थोऽयं श्लोकांश इति साम्प्रदायिकाः। अकृतनीशारः अकृततनुत्राणः शिशिरे शीतार्त्तौ प्रायेण गौरिव कृशः चीणो भवतीति तदर्थः। निपूर्वात् शॄधातोर्घञ्। 'उपसर्गस्य घञि—' इति दीर्घः। शरशब्दस्य अचोऽप्ययं इति प्रसङ्गादाह—मदचिणेति। शाराणामचाणामित्यर्थः। प्रदचिणेत्यंशस्तत्त्वबोधिन्यां नास्ति।

## २१८२। उपसर्गे रुवः॥३।३।२२॥

## टी—। घञ्। संरावः। 'उपसर्गे' किम्? रवः।

The root रु takes घञ् only when an उपसर्ग precedes otherwise it takes अप् ( by 'ऋदोरप्'—3232 ) ; witness वयसां विरावैः etc.

मित—। उपसर्गे इति। उपसर्गे उपपदे रुधातोर्भावे घञ्। अनुपसर्गे तु 'ऋदोरप्' (३२३१) इति यथाप्राप्तमेव। [ "आरवं विरवे" इत्यत्र तु वा अप् ]।

३१८३। अभिनिसः स्तनः शब्दसंज्ञायाम् ॥३।३।८६॥

दी—। अस्मात् स्तनः सस्य मूर्धन्यः। अभिनिष्टानो वर्णः। 'शब्दसंज्ञायां' किम्? अभिनिःस्तनति मृदङ्गः।

When a शब्दसंज्ञा is meant the स of the root स्तन followed by the उपसर्गs अभि and निस् ( both at a time ) becomes cerebral e.g—अभिनष्टानः वर्णः।

मित—। अभिनिस इति। अत्र अभिनिस इति अभि इत्यस्य निप् इत्यस्य च द्वयोरपीत्रवात्र ग्रहणं तदाह—अस्मादिति। मूधन्य इति। 'अपदान्तस्य मूर्धन्यः' ( ८।३।५५ ) इत्यतस्तदनुवृत्तेः। अभिनिष्टान इति घञ् प्रत्ययः।

३१८४। समि युद्रुदुवः ॥३।३।२३॥

दी—। संयूयते मिश्रीक्रियते गुड़ादिभिरिति संयावः= पिष्ट-विकारोऽपूपविशेषः। संद्रावः। संदावः।

यु, द्रु and दु take घञ् when prececed by सम्। संयावः a kind of cake mixed up with molasses etc. Without सम्=यवः etc with अप्।

मित—। समीति। समि उपपदे यु, द्रु, दु इत्येभ्योऽकर्तरि घञ् स्यात्। समभावे तु यथाप्राप्तम् अप्।

३१८५। श्रिणीभुवोऽनुपसर्गे ॥३।३।२४॥

दी—। श्रायः। नायः। भावः। 'अनुपसर्गे' किम्? प्रश्रयः। प्रणयः। प्रभवः। कथम् 'प्रभावोराज्ञः' इति? प्रकृष्टो भाव इति प्रादिसमासः। कथम् 'राज्ञो नयः' इति। बाहुलकात्।

घञ् is employed after श्रि, नी and भू in the भाववाच्य (usually) when they are not preceded by any उपसर्ग. Thus श्राय etc. But प्रश्रयः etc in the same sense with अच् and अप् due to the precedence of the उपसर्ग 'प्र'. प्रभाव, however, is to be broken up as प्रकृष्टो भावः ( प्रादि-समास ) and not as प्र+भू+घञ्. Explain नयः as in 'नयवर्त्म विद्विषाम्' ( किरात ), 'नयेन जेतु' जगतीं सुयोधनः' ( Ibid ) etc, as नी+अच् करणे by the rule 'कृत्यल्युटोबहुलम्' ; or नयः can be got with कर्त्तरि अच् by attributing कर्त्तृता to नीति।

मित—। श्रिणीभुव इति। उपसर्गे असति श्रि, णी, भू एभ्य परं भावे घञ् स्यात्। श्राय, इति। 'अचो ञ्णिति' ( २५४ ) इति वृद्धिः। उपसर्गे तु अजपौ भवत इत्याह—प्रणय इत्यादि। प्रभाव इति तुप्रपूर्वाद्द भवतेघञ् इति न मन्तव्यं, किन्तु निरुपसृष्टात् भवतेघञि भावे इति सिद्धे ततः प्रादिसमासः। नय इत्यत्र 'कृत्यल्युटो बहुलम्' इत्यनुसाराद्द बाहुलकादच् प्रत्ययः। 'नयप्रचारं भवितव्यतां तथा—' मृच्छकटिकम् इत्यादि।

### २१८६। वौ क्षुश्रुवः ॥३।३।२५॥

### दी—। विक्षावः। विश्रावः। 'वौ' किम् ? क्षवः। श्रवः।

क्षु and श्रु take घञ् in the भाववाच्य when the उपसर्ग वि precedes otherwise क्षवः ( Sneezing ) & श्रवः ( hearing )

मित—। वौ इति। व्युपसृष्टाभ्यां क्षु, श्रु इत्याभ्यां भावे घञ्। विक्षाव इति। उपसर्गाभावे तु क्षवः क्षवथुः। श्रवः श्रवणम्। अनयोर्भावे अप् प्रत्यय इति बोद्धव्यम्।

### २१८७। अवोदोर्णियः ॥३।३।२६॥

### दी—। अवनायोऽधोनयनम्। उन्नाय ऊर्द्धनयनम्। कथम् 'उन्नय उत्प्रेक्षा' इति ?—बाहुलकात्।

The root नी coming after the उपसर्गs अव and उद् take घञ् e.g. अवनाय:—leading or dragging downwards; उन्नाय:—leading upwards. उन्नय:, however, is derived with अच् by बाहुलक expressed in 'कृत्यल्युटोबहुलम्'।

मित—। अवोदोरिति। अवपूर्वात् उत्पूर्वाच्च नयतेर्भावे घञ्। अवनाय इत्यादि। स्पष्टम्। उन्नय इत्यत्र तु 'कृत्यल्युट:—' इत्यनुसारादच् इत्याह—बाहुलकादिति।

२१८८। प्रे द्रुस्तुस्त्रुव:॥३।३।२७॥

टी— प्रद्राव:। प्रस्ताव:। प्रस्राव:। 'प्रे' इति किम्? द्रव:। स्तव:। स्रव:।

When प्र precedes द्रु, स्तु and स्रु take घञ् in the भाववाच्य but अप् comes in when प्र is wanting.

मित—। 'प्र' इत्युपसर्गे उपपदे द्रु, स्तु, स्रु, इत्येभ्यो भावे घञ्। प्रे असति तु ऋदोरित्यप्।

२१८९। निरभ्यो: पूल्वो:॥३।३।२८॥

टी—। निष्पूयते शूर्पादिभिरिति निष्पावो धान्यविशेष:। अभिलाव:। 'निरभ्यो:' किम्? पव:। लव:।

When निर् and अभि precede the roots, पू and लू take घञ् in the करणवाच्य। Thus निष्पाव:—a particular (heap of) paddy which has been purified with winnowing fans etc. Similarly अभिलाव:। पव: and लव: with अप् after पू and लू only.

मित—। निरभ्योरिति। निर् इत्यस्मिन् 'अभि' इत्यस्मिंश्चोपपदे पूधातोर्लूधातोश्चोत्तरं करणे घञ। तदाह—निष्पूयते शूर्पादिभिरिति। निष्पावो धान्यविशेष:

इति धान्यराशिविशेषः इत्यर्थः। 'परिमाणाख्यायां सर्वेभ्यः' (३१९०) इत्यत परिच्छेदे गमेर एव घञ् विधानात्। स च धान्यराशिः शूर्पपूत। अभिलाव इति। अभिलूयते निकृन्तते कुठारादिभिरिति अभिलावो विटपविशेषः। पवः लव इति। ऋदोरित्यप्।

३२००। उन्न्योर्ग्रः ॥३।३।२९॥

दी—। उद्गारः। निगारः। 'उन्न्योः' किम् ? गरः।

When उद् and नि precede as उपपद, गृ takes घञ् in the भाव or कर्मवाच्य। उद्गार etc. गर with अप् ~~by 'ऋदो' (३०९१)~~

मित—। उन्न्योरिति। उद्, नि इत्यनयोरुपसर्गयोरुपपदयो गिरतेः भावे कर्मणि वा घञ्। उद्गार इति। 'अचो ञ्णिति' (२५४) इति वृद्धिः। निगार इति। रलयोरैकत्वाद् गिरते रेफस्य लत्वम्। निगाल इत्यपि। निगिरतीति निःशेषेण गिलतीति बाहुलकात् कर्तरि अत्र घञ्। 'निगालमगाद्देव मणे-रिवोत्थितैर्विराजितं केशरकेशररश्मिभिः' (श्रीहर्षः—१।५८)

३२०१। कॄ धान्ये ॥३।३।३०॥

दी—। 'कॄ' इत्यस्माद्धान्यविषयकादुन्न्योर्घञ् स्यात्। उत्कारो निकारो धान्यस्य विक्षेप इत्यर्थः। 'धान्ये' किम् ? भिक्षोत्करः। पुष्पनिकरः।

After the root कॄ, with reference to paddy, is employed घञ् when the same is preceded by the उपसर्गs उद् and नि as उपपदs, Thus उत्कारः and निकारः the scattering of paddy i.e. when the seeds are separated from the clusters against a plank. भिक्षोत्करः etc. here अप् comes in as कॄ has reference to भिक्षा etc.

मित—। कॄ इति। लुप्तपञ्चमीकोऽयं निर्देशः। पूर्वसूत्रात् उन्न्योरिति वर्तते।

धान्ये इति विषयपञ्चमी। तदाह—कृ इत्यस्माद धान्यविषयकादित्यादि। भिक्षोत्करः। भिक्षाया विक्षेपः उपचयो वा। पुष्पाणां निकरः समूहः। चय किरतेर्धान्य विषयकत्वाभावादप्।

२२०२। यज्ञे समि स्तुवः ॥३।३।३१॥

**टी—। समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्तावः। 'यज्ञे' किम्? संस्तवः परिचयः।**

When the root has reference to a sacrifice and it is preceded by सम् the उपसर्ग, the affix घञ् takes place in the अधिकरणवाच्य। This संस्तावः a particular spot in a sacrifice where the priests known as 'छन्दोग's get together and address the ditey. But संस्तवः acquaintance—with अप् there being no ref. to यज्ञ.

मित—। यज्ञे समीति। अत्र अधिकरणे घञ्। तेन 'करणाधिकरणयोश्च' इति ल्युटोऽपवादोऽयम्। संस्ताव इति। यज्ञसम्बन्धी देशविशेषः। यज्ञविषयकत्वाभावे तु अप्। संस्तवः परिचय इति 'संस्तवः स्यात् परिचय' इत्यमरः। 'गुणाः प्रियत्वेऽधिकृता न संस्तवः' इति भारविप्रयोगश्च।

२२०३। प्रे स्त्रोऽयज्ञे ॥३।३।३२॥

**टी—। अयज्ञे इतिच्छेदः। यज्ञे इति प्रकृतत्वात्। प्रस्तारः। 'अयज्ञे' किम्। बर्हिषः प्रस्तरो मुष्टिविशेषः।**

Here the dissolution (of सन्धि) is स्त्रः+अयज्ञे, for the term यज्ञ being used in the previous rule you cannot break up as स्त्रः+यज्ञे as यज्ञ in that case would be tautologous. The rule means स्तृ, the root, preceded by प्र takes घञ् if there is no reference to sacrifice. Thus प्रस्तारः a kind of joining together of bricks. But प्रस्तरः with अप as it means a handful of कुश used in a sacrifice.

मित—। प्रे इति। अयज्ञे इति छेद इति। न तु स्तः+यज्ञे इतिच्छेदः। कुत इत्यत आह—यज्ञे इति प्रकृतत्वादिति। तथाच यज्ञे इति पूर्वसूत्रादनुवृत्तिबलेनैव लब्धे पुनर्यज्ञग्रहणं व्यर्थं स्यादिति भावः। यज्ञाविषये प्रपूर्वात् स्तृणातेर्घञ्। प्रस्तार इति। इष्टकासन्निवेशविशेषः इति साम्प्रदायिकाः। यज्ञे तु विषये अबेव=प्रस्तरः। कुशमुष्टिर्यज्ञगतः।

२२०४। प्रथने वावशब्दे ॥३।३।३३॥

दी—। विपूर्वात् स्तृणातेर्घञ् स्यादशब्दविषयेप्रथने। पटस्य विस्तारः। 'प्रथने' किम्? तृणविस्तरः। 'अशब्दे' किम्? ग्रन्थविस्तरः।

After the root स्तृ, preceded by the उपसर्ग वि, takes place घञ provided the spread or width, not having reference to that of words, is meant. Thus 'पटस्य—' the width of a cloth. But तृणविस्तरः—a heap of straw and ग्रन्थविस्तरः elaboration or exaggeration of a book (which is nothing but a sum total of works) one derived with अप् as in the former case (तृणविस्तरः) there is no sense of spread i.e प्रथन and in the latter (शब्दविस्तरः) there is clear reference to words. So घञ् does not come in these cases.

मित—। प्रथने वौ इति। वौ+अशब्दे इतिच्छेदः। वौ इति वि इत्यस्य सप्तम्यन्तम्। अशब्दे इति प्रथने इत्यस्य विशेषणम्। पूर्वसूत्रात् 'स्तः' इति पञ्चम्यन्तमनुवर्तते। तदाह—विपूर्वादित्यादि। पटस्य विस्तार इति। भावे घञ्। विस्तारो विस्तृतिः प्रथनम्। तृणविस्तर इति। अत्र तृणबाहुल्यमर्थो न तु तत्प्रथनम्। तेन यथाप्राप्तं (वक्ष्यमाणम्) अबेव। ग्रन्थविस्तरः इति। अत्रतु न बाहुल्यमेवार्थो किन्तु शब्दस्य प्रथनम्। तेनाप् प्रत्ययः। ['विस्तारो विग्रहो व्यासः स च शब्दस्य विस्तरः' इत्यमरः]।

३२०५। छन्दोनाम्नि च ॥३।३।३४॥

दी—। 'स्तृ' इत्यनुवर्तते। विष्टारपंक्तिश्छन्दः। विस्तीर्य्यन्तेऽस्मिन्नक्षराणीत्यधिकरणे घञ्। ततः कर्मधारयः।

If the name of a metre is implied the root स्तृ (which is carried down from the previous rule) takes घञ् in the अधिकरण वाच्य। Thus विष्टारपङ्क्ति—a vedic metre which is an intance of कर्मधारय compound। विष्टारः च असौ पंक्तिश्च इति—The षत्व here, however is accounted for by the rule—.

मित—। छन्दोनाम्नीति। 'स्तृ' इत्यनुवर्तते इति। 'प्रे स्त्रः—' (३।३।३२) इत्यत इति शेषः। छन्दोविशेषस्य नाम्नि गम्ये विपूर्वात् स्तृणातेरधिकरणवाच्ये घञ् इत्यर्थः। तदाह—विस्तीर्य्यन्तेऽस्मिन्नित्यादि। ततः कर्मधारयः इति। विष्टारश्चासौ पङ्क्तिश्चेति विग्रहः। नन्वत्र षत्वं कथं 'सात्पदाद्यो'रिति निषेधादादेशसकाराभावाच्चेत्यत आह—

३२०६। छन्दोनाम्नि च ॥८।३।९४॥

दी—। विपूर्वस्य स्तृणातेर्घञन्तस्य सस्य षत्वं स्याच्छन्दोनाम्नि। इति षत्वम्।

Cerebral comes in the स of विस्तृ when affixed with घञ् and the derivative thus arrived at refers to a metre.

मित—। छन्दोनाम्नीति। स्पष्टम्। छन्दोवाचकत्वाभावे तु, विस्तार इत्येव। विष्टर इति तु 'वृक्षासनयो'र्निपात्यते इति वक्ष्यति (३२३३ इत्यत्र)।

३२०७। उदि ग्रहः ॥३।३।३५॥

दी—। उद्ग्राहः।

उद् preceding ग्रह takes घञ् in the भाववाच्य. This supersedes अप् under 'ग्रहवृद—' (3234).

मित—। उद्‌ग्राह इति उदित्युपपदे ग्रहेर्भावे घञ्। 'ग्रहवृदृनिश्चिगमश्च' (३२३४) इत्यस्य वक्ष्यमाणस्य अप्प्रत्ययस्यापवादोऽयम्।

३२०८। समि मुष्टौ ॥३।३।३६॥

टी—। मल्लस्य संग्राहः। 'मुष्टौ' किम्। द्रव्यस्यसंग्रहः।

ग्रह preceded by the सम् ( उपसर्ग ) takes घञ् in the भाववाच्य provided the derivative refers to clutches or holding (of a wrestler) ; as मल्लस्य संग्राहः—the holding of wrestlers, but 'द्रव्यस्य—' the collection of a thing ( here अप् ).

मित—। समीति। समुपपदात् ग्रहेर्घञ् स्याद् भावे मुष्टिश्चेद् गम्यते। संग्राह—मल्लस्येति। 'मुष्टिरस्य तु संग्रह' इत्यमरः। संग्रह इति। द्रव्यसंग्रह ( ३२३४ ) इत्यप् प्रत्ययः।

३२०९। परिन्योर्नीणोर्द्यूताभ्रेषयोः ॥३।३।३७॥

टी—। परिपूर्वान्नयतेर्निपूर्वादिणश्च घञ् स्यात् क्रमेण द्यूते अभ्रेषे च विषये। परिणायेन शारान् हन्ति। समन्तान्नयनेनेत्यर्थः। एषोऽत्रन्यायः। उचितमित्यर्थः। 'द्यूताभ्रेषयोः' किम्? परिणयो विवाहः। न्ययो नाशः।

घञ् takes place after नी preceded by परि and after इण् ( इ ) preceded by नि when the reference is to gambling and to non-deviation from the the right ( अभ्रेष ). Thus परिणायः—परि नी + घञ्—as in 'परिणायेन—' he beats the dice (of another) by causing its movement every where. Similarly न्यायः = नि + इ + घञ्—as in 'एषः अत्र—' this is the right or justice here. Note that अभ्रेष means non-deviation from right or justice. परिणयः and न्यय take अच् because there is no reference to द्यूत and अभ्रेष।

मित—। परिन्योरिति। अचेर्देवनम् (क्रीडा) द्यूतम्। उचितापरित्यागो-ऽभ्रेषः। भ्रेषो भ्रंशः। स न विद्यतेऽस्मिन्निरिति भ्रेषः। यथोचितकरणमित्यर्थः। द्यूतविषये परिपूर्वाण्णयतेर्घञ्—परिणायः—समन्तान्नयनम्। तदर्थत्वं तु शारशब्दस्य 'इक्ष्य' (२१९१) इत्यत्र प्रदर्शितेति वार्तिककारवचने स्पष्टम्। अभ्रेषविषये निपूर्वादिणश्च घञ्। अन्यत्र तु यथाप्राप्तमच् इत्याह—परिणय इत्यादि।

२२१०। परावनुपात्यय इणः ॥३।३।३८॥

दी—। क्रमप्राप्तस्यानतिपातोऽनुपात्ययः। तव पर्य्यायः। 'अनुपात्यये' किम्? कालस्य पर्य्ययः। अतिपात इत्यर्थः।

The term अनुपात्यय in the rules means not surpassing the order. Hence घञ् after इण् (root) preceded by परि takes place when non-violation of order is meant. Thus पर्य्यायः—परि इण् घञ् =turn. But in पर्य्यय we have अच् because the term means surpassing or violation.

मित—। पराविति। उपात्ययः अतिपातः अतिक्रम इत्यर्थः। तेन अनतिक्रमे गम्ये परिपूर्वादिणो घञ् स्यादित्यर्थः। तव पर्य्याय इति। क्रमः प्राप्त इत्यर्थः। कालस्य पर्य्यय इति। 'मा भूत् कालस्य पर्य्ययः' इत्यादौ यथा। अत्र अतिक्रमस्यैव गम्यत्वात् प्राप्तः अच् न घञ्।

२२११। व्युपयोः शेतेः पर्य्याये ॥३।३।३९॥

दी—। तव विशायः। तव राजोपशायः। 'पर्य्याये' किम्? विशयः संशयः। उपशयः समीपशयनम्।

The root शी preceded by वि and उप takes घञ् when turn (of action) is implied. Thus तव etc this is your turn and तव राजोपशायः—this is your (turn) to lie near the king. विशयः—वि—शी + अच्—denotes doubt and उपशयः—उप + शी + अच् signifies lying near hence no घञ् after शी।

मित—। लुपयोरिति। 'वि' इत्युपसर्गे 'उप' इत्युपसर्गे च उपपदे शीधातोरुत्तरं घञ् प्रत्ययः स्यात् पर्य्यायश्चेद गम्यत इत्यर्थः। विशायः—पर्य्याय इत्यर्थः। राजोपशायः राजसेवनपर्य्याय इत्यर्थः। पर्य्यायः प्राप्तकालता। अजपवादः।

३२१२। हस्तादाने चेरस्तेये ॥३।३।४०॥

टी—। हस्तादान इत्यनेन प्रत्यासत्तिरादेयस्य लक्ष्यते। पुष्पप्रचायः। 'हस्तादाने' किम्? वृक्षाग्रस्थानां फलानां यष्ट्या प्रचयं करोति। 'अस्तेये' किम्? पुष्पप्रचयश्चौर्येण।

The root चि takes घञ् when either plucking up with the hand (from close quarter) or non-stealing is implied. Here the term हस्तादान in the rule indicates proximity of the thing to be taken. Thus पुष्पप्रचायः the picking up of flowers (as from the ground or plucking the same) with the hand. Then we have प्रचयः with अच् to चि as in 'वृक्षाग्रस्थानाम्—' he brings down the fruits lying on the top of the tree, because here there is remoteness implied and no proximity. 'पुष्पप्रचयः—' the taking or plucking of flowers through stealing. Here stealing necessitates अच् and not घञ्। Compare also 'अभ्यवसुयं कुसुमावचायं कुरुष्वमत्रास्मि करोमि सख्यः'. But how to explain 'ततः प्रविशतः कुसुमावचयं नाटयन्त्यौ सख्यौ'—शकु fourth act—and Vamana also in his अलङ्कारसूत्रवृत्ति says 'अवतारावचायशब्दयोर्दीर्घव्यत्यासो बालानाम्' or the ignorant only replace the दीर्घ in अवतार and अवचाय with ह्रस्व i.e. use अच् in place of घञ्? The answer is Kalidasa deliberately ignores the rule as he does so elsewhere; also cp—' 'प्रभंशयां यो नहुषं चकार' (रघु) 'तं पातयां प्रथममास पपात पश्चात्' (रघु), यत् प्रभविष्णवे रोचते etc. For he not only uses it..

( कुसुमावचय ) here but also in मालविकाग्निमित्र. Bhasa in स्वप्ननाटक and भवभूति in Uttara also use it. This shows that the poet adheres more to archaism or vedic usage than to the secular one the path of which was paved by Panini and that transgression of the rules of Panini was not held a defect on the part of the then writers. Or—you are to fancy that अनसूया and प्रियंवदा ( सख्यौ ) caused the falling of flowers by means of a stick. But this sort of fancy is rather queer and will not be in agreement with 'नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् etc. Hence अवचय means picking up from the ground and thus it is a transgression of Kalidasa's etc from Panini. An irregular use.

मित—। हस्तादाने इति। हस्तेन आदानं ग्रहणमिति इति करणे तृतीयासमासः। तच्च ( आदानम् ) हस्तस्थितस्य, हस्तच्युतस्य वा भूमिस्थितस्य सम्भवतीति मत्वाह—हस्तादान इत्यनेनेति। प्रत्यासत्तिः सामीप्यं हस्तपरामर्शयोग्यतेत्यर्थः। आदेयस्य आदातुमिष्टस्य पुष्पफलादिकस्य। हस्तादाने ( प्रत्यासत्तौ ) अस्तेये ( चौर्याभावे ) च गम्ये चिञ्धातोर्घञ् स्यादिति इत्यर्थः। अजपवादः। तदाह—पुष्पप्रचाय इति। उच्चस्थानां भूमिस्थानां हस्तकरणकम् आदानमित्यर्थः। उच्चायस्थानामिति। अत्र प्रत्यासत्तेरभावात् यष्टिकरणकत्वादादानस्य अपूर्वाचिनोतेरजेव न घञ्। पुष्पप्रचय इति। अत्र चौर्येणोपयुक्तत्वात् स्तेये भावेऽच्। तथा—'अन्यत्र यूयं कुसुमावचायं कुरुध्वमत्रास्मि करोमि सख्यः' इत्यादि द्रष्टव्यम्। नन्वेवम् 'ततः प्रविशतः कुसुमावचयं नाटयन्त्यौ सख्यौ' ( अभिज्ञानशकुन्तलम्—चतुर्थाङ्कप्रवेशकमुखम् ) इत्यत्र अवचय इति कथम्? न चात्र प्रत्यासत्तिर्नास्तीति वाच्यम्। तथा हि सति 'यष्ट्या कुसुमावचयं नाटयन्त्यौ' इत्यवक्ष्यत्। न च तादृशं करणं दृश्यतेऽत्र। येन दूरस्थानां पुष्पाणां यष्ट्यादिना परामर्शात् प्रत्यासत्तेरभावादत्र अच् इति युज्यते वक्तुम्। अथ यष्ट्यादिकं करणमत्र अध्याहृत्य व्याख्येयमिति चेत्तदपि न। कुतः?—तादृशार्थस्यात्र अविवक्षितत्वात् भूमिस्थानामेव पुष्पाणां हस्तकरणक-

परामर्शस्य विवक्षितत्वाच्च। अन्यथा—'पातुं न प्रथमं व्यवस्यति जलं युष्मास्वपीतेषु या, नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्—' इत्यादि न सङ्गच्छते। वृन्तस्थितानां प्राणवतां पुष्पाणां बलादाकर्षणौचित्यात्। तस्मात् प्रत्यासत्त्यावेवात्र घञ् युक्तः। एवं तर्हि प्रमाद एवायम्। 'अवतारावचाययोर्दीर्घ' इत्यासीत् बालानाम्' इति वामनाचार्योक्तेश्च कविचूडामणित्वतः पाणिनेरति-क्रमोऽयम्। तेन युक्तमपि दीर्घं विहाय ह्रस्वं प्रायुङ्क्त। दीर्घापेक्षया ह्रस्वस्य श्रुतिसुखाधिकावहत्वात्। निरङ्कुशत्वाच्च कवीनाम्। अथवा कालिदासादिसमयकाले पाणिनेरतिक्रमस्यास्य प्रामादिकत्वेन ग्रहणं नाभवदित्येवात्र युक्तम्। अन्यथा कविरयं 'तंपातयां प्रथममास पपात' 'यत् प्रभाविष्यते रौचते'—इत्यादिनैव प्रायोक्ष्यत। तस्मात् पणिनीयसूत्राणां तदानीमपि प्रतिष्ठितत्वात् तथाविधप्रयोगानां साधुत्वाच्च कविनैवं प्रयुक्तमिति तिष्ठतु तावत्।

२२१२। निवासचितिशरीरोपसमाधानेष्वादेश्च कः ३।३।४१॥

दी—। एषु चिनोतेर्घञ् स्यात्। आदेश्च ककारः। उपसमाधानं राशीकरणम्। तच्च धात्वर्थः॥ अन्ये प्रत्ययार्थस्य कारकस्योपाधिभूताः। निवासे। काशीनिकायः। चितौ। आकायमग्निं चिन्वीत। शरीरे। चीयतेऽस्मिन्नस्थ्यादिकमिति कायः। समूहे—गोमयनिकायः। 'एषु' किम्? चयः। 'चः कः' इति वक्तव्ये आदेरित्युक्तिर्यङ्लुगादेरेव यथा स्यादिति गोमयानां निकेचायः। पुनःपुना राशीकरणमित्यर्थः।

The roots चि takes घञ् as also the चकार at the outset becomes क when निवास (dwelling) चिति (a particular or sacrificial spot for kindling fire) शरीर (body) and उपसमाधान (accumulation or collection). उपसमाधान means to make a heap or accumulate which is the sense of the root (चिञ्). Others

i.e. the three words निवास, चिति and शरीर are the qualifying words or adjectives of the कारक in the sense or accordance with which the प्रत्यय ( घञ् ) is employed. The drift is—चि takes घञ् in the अधिकरणवाच्य in the first three senses निवास, चिति and शरीर which thus limiting the sense of the affix and thereby the Karaka are adjectives of the same. But उपसमाधान being the sense of the root itself, it takes घञ् here in the भाववाच्य। काशीनिकाय:—residence in Kashi or Benares. 'आकायम्—' one should kindle fire in a spot particularised for sacrifice. काय:—the body where the bones etc grow. गोमयनिकाय:—the accumulation of cow-dung. चय:—चि + अच् because it does not express any of the above senses. Thongh the सूत्रकार would have said 'च: क:' for 'आदे: क:' yet that he utters 'आदे:—' is to indicate that the beginning or अभ्यास-letter only in the case of यङ् लुक् will be transformed into क. Thus गोमयानां निकेचाय:— the repeated accumulation of cow dung. गोमयानात् निकेचाय:= पुन: पुना राशीकरणम्—the result of सन्धि of पुन: पुन: + राशीकरणम् by 'रोरि' and 'ढ्रलोपे—।

निव—। निवासेति। 'शरीरोपसमाधानेषु आदे: च' इतिच्छेद:। आदेरिति चकारस्येत्यर्थ:। 'चजो: कु घिण्ण्यतो:' इत्यस्य चकारमात्रविषयत्वादत्र व्यवहिते आदिचत्वे चकारेऽप्राप्ते वचनम्। तत्रेति। उपसमाधनम् इति सम्बध्यते। अन्ये निवासचितिशरीराणोत्यर्थ:। प्रत्ययार्थस्य अधिकरणस्येत्यर्थ:। तस्मिन्नेव वाच्ये प्रत्ययस्य प्रयुज्यमानत्वात्। उपाधिभूता इति—विशेषणभूता इत्यर्थ:। निवासादिष्वे वार्थो यथा स्यादित्येवं नियमपरत्वात्। काशीनिकाय:—निचीयतेऽस्मिन्निति निकायो निवास:। तत: काश्यां निवास इति सुप्सुपा। आकायमिति आचीयतेऽस्मिन्नित्याकाय:। यज्ञियाग्नि: स्थलविशेष:। तन्नामविशेषो वा। अग्निस्थलविशेषं

चयनेन निष्पादयेदित्यर्थः। काय इति स्पष्टम्। गोमयनिकाय इति। निचीयत इति भावे घञ्। गोमयराशिरित्यर्थः। चय इति। अत्र निवासाद्यर्थाभावाद् भावे अजेव प्रत्ययोन घञ्। चः कः इति वक्तव्ये इति—'मात्रामात्रलाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणा' इति परिभाषानुसारात 'आदेः कः' इत्यत्र 'चः कः' इत्युक्ते सति मात्रालाघवं स्यात्। तथापि यदाचार्यः आदेरित्येव वक्ति तस्यायं प्रयोजनविशेषः—यङ्लुकि आदेरेव अभ्यासस्यस्यैव चकारस्य ककारो यथा स्यात् अत्रस्थितस्य मा भूदिति। तदाह—निकेचाय इति। द्विले कृतेऽनेन कुत्वे च 'गुणो यङ्लुको'रिति गुणः। पुनः पुनः रायीति। 'रीरि' इति लोपे 'ढ्लोपे पूर्वस्य दीर्घोऽणः' इति दीर्घः।

## २२१४। संघे चानौत्तराधर्ये ॥३।३।४२॥

**दी—। चेर्घञ् आदेश्च कः। भिक्षुनिकायः। प्राणिनां समूहः संघः। 'अनौत्तराधर्ये' किम्? सूकरनिचयः। स्तन्यपानादौ उत्तराधरभावेन शेरते। 'सङ्घे' किम्? ज्ञानकर्मसमुच्चयः।**

चि takes घञ् as also the चकार in the beginning becomes क when a body of creatures is meant and the state of lying or being upon or under ( one another ) is not implied. Thus भिक्षुनिकायः—a gathering of भिक्षुs. Here संघ or body is meant but the implication that they are lying apart (standiug distnict) is also present. Hence there is no sense of one lying upon another and the rule applies. शूकरनिचयः—a body of pigs or boars. Where the sense that one pig when taking milk lies upon another is present and hence the rule does not apply and makes room for अच् by 'एरच्' ( 3231 ). ज्ञानकर्मसमुच्चयः—collection of knowledge and action—here the sense 'body of beings' not being present चि takes अच् ( सम् + उद् + चि + अच् )।

मित—। संघे चेति। उत्तरश्च अधरश्च उत्तराधरे। तयोर्भावः औत्तराधर्यम्। भावेष्यञ्। उपर्युपरीत्यर्थः। नेयं ञ् इति। ननु औत्तराधर्ये इति योज्यम्। भिक्षुनिकायः। भिक्षुसमूह इत्यर्थः। शूकरनिचय इति। अत्र औत्तराधर्यस्य विवक्षितत्वाद् घञ् न किन्तु अजेव। ज्ञानकर्मसमुच्चय इति। अत्र प्राणवतां संघाभावाद् घञपवादोऽच्।

२२१५। कर्मव्यतिहारे णच् स्त्रियाम् ॥ ३।३।४३॥

दी—। स्त्रीलिङ्गे भावे णच्।

When reciprocity or interchange of mutual action is implied a root takes णच् in the भाववाच्य to form a feminine base.

मित—। कर्मव्यतिहार इति। कर्मव्यतिहारः क्रियाविनिमयः। परस्परकरणमिति यावत्। तस्मिन् विषये स्त्रीलिङ्गे च गम्ये धातोर्णच् स्याद् भावे एव। न तु अकर्तरि कारके इत्यपि तस्मात् अनुवृत्तेरभावादित्याहुः।

२२१६। णचः स्त्रियामञ् ॥ ५।४।१४॥

२२१७। न कर्मव्यतिहारे ॥ ७।३।६॥

दी—। अत्र ऐच् न स्यात्। व्यावक्रोशी। व्यावहासी।

The affix णच् which is enjoined in the feminine gender is replaced by the affix अञ् ( 3216 ) in its own sense ( स्वार्थे )।

When interchange of mutual action or कर्मव्यतिहार is meant the affix अञ् ( which replaces णच् ) does not necessitate ऐच् or ऐ and औ ( in place of इ + उ respectively ). Thus व्यावक्रोशी a woman who after being censured by another censures the latter in her turn—वि + आ + अव + क्रुश् + णच् ( अञ् स्वार्थे ) + ङीप् by the rule 'टिड्ढाणञ्—'। Similarly व्यावहासी = वि + आ + अव—हस् + णच् ('अञ्) + ङीप् one ( woman ) sneering at another in her turn. Here वृद्धि

takes place due to ञित्त्व of अञ्, for the वृद्धि is not prohibited by ऐच।

मित—। णच: स्त्रियाम् इति। कर्मव्यतिहारे विषये स्त्रियौ णचप्रत्ययो विहित: तस्य स्थाने स्वार्थे अञ् इति तद्धितप्रत्यय: स्यात्। अत्र अञ् विधानम् 'व्यावक्रोशी' इत्यादौ 'टिड्ढाणञ—' इत्यादिना ङीवर्थम् ऐजागम वाधनार्थम् च? ननु अञि सति ञित्त्वाद वृद्धौ व्यावक्रोशी इति स्यादिति व्याचष्टे—अत्र एज् नेति। अत्रेति कर्मव्यतिहारविषये इत्यर्थ:। व्यावक्रोशीति। वि+आ—अव पूर्वात् क्रुश आह्वाने इत्यस्माद णचोऽञ् स्वार्थे। ततोङीप्। परस्परं निन्दाकारिणीत्यर्थ:। व्यावहासीति। अत्र वृद्धि:। ऐचौ निषेधात्। परस्परमुपहासिका इत्यर्थ:।

३२१८। अभिविधौ भाव इनुण् ॥ ३।३।४४ ॥

दी—। आदि वृद्धि: (? अजन्ताङ्गस्य वृद्धि: )। *

३२१९। अणिनुण: ॥ ५।४।१५ ॥

दी—। 'इनण्यनपत्ये' (१२४५)। स्वभावत: पुंलिङ्गे (क्लीवलिङ्गे—?)। साराविणं वर्तते।

When अभिविधि or pervasion (व्याप्ति) is meant a root takes the affix इनुण् (इन्) in the भाववाच्य (3218). Here the term 'आदिवृद्धि' in दीक्षित is out of place, for it relates to अण (which is enjoined in the latter rule) and not in इनुण्. इनुण्। causes अजान्ताङ्गवृद्धि। So it is proper to read it in the 'दी—'of the subsequent rule अणिनुण:'।

[* 'आदिवृद्धि'रित्यंशस्तत्त्वबोधिन्यां न पठ्यते। स एव पाठो न्याय्य:। आदिवृद्धिरित्येतस्य यदि वा पाठ: कर्तव्य: तदा स 'अणिनुण:' (३२१९) इत्यत्रैव पठितुं युक्त:। 'स्वभावत:—' एतत्तत्त्वबोधिनी न पठति। स एव पाठ: साधीयान्। यदि वाऽस्य पाठ: कर्तव्य एव तदा क्लीवलिङ्गे इत्येव वाच्यम्। अन्यथा उदाहरणासङ्गति: स्फुटा एव]।

A word formed with इणुन् ( इन् ) takes the तद्धित affix अण्. Thus संराविन् ( सम् + रु + इन्—भावे ) = सांराविणम् ( संराविन् + अण् )— a tumultuous sound—here no टिलोप, by the rule 'नस्तद्धिते' due to the rule "इनण्यनपत्ये" i.e. अनपत्यार्थे अणि परे इन् प्रकृत्या स्यात् । (679).

Here the reading स्वभावतः पुंलिङ्गं is erroneons. It should be स्वभावतः क्लीबलिङ्गं otherwise it is at variance with the instance सांराविणम्. It is importont to note that both the readings 'आदिवृद्धि' and 'स्वभावतः—' are not to be met with in the expl. of Tatwabodhini. Hence they look like interpolations.

मित—। अभिविधाविति। अभिविधिः साकल्येन सम्बन्धो व्याप्तिरिति यावत्। तस्मिन् द्योत्ये भावे धातोरिनुण् ( इन् ) प्रत्ययः स्यात् । नकार इत् । उकार उच्चरणार्थः । अत्र दीक्षितग्रन्थस्य 'आदिवृद्धि'रिति अदीक्षितवचनमिव प्रतिभाति । स नूनं कस्यचिद्धस्तावलेपः । तस्याय अप्रासङ्गिकत्वात् परत्र ( 'अणिनुणः' इत्यत्र ) सङ्गतत्वात् । न हि इनुण् इति तद्धितप्रत्ययः किन्तु अण् इत्येव । तस्मात् तत्रैव पाठो युक्तः । अत्र "अजन्ताङ्गस्य वृद्धिः" इत्येव कथञ्चित् पठितुं शक्यते ।

अणिति । अण इनुण इतिच्छेदः । इनुण इति इनुण् प्रत्ययान्तस्य इत्यर्थः । तथाच इनुणि—सम् + रु + इनुण—संराविन् इति स्थिते संराविन्नेव इति संराविन् + अण ( स्वार्थे ) = सांराविन् भवति । समन्तात् कलकल इत्यर्थः । सांराविनं वर्त्तते इति । अत्र ( सांराविणम् ) इत्यत्र तद्धितेष्वचामादेरिति आदिवृद्धिः । एवमपि विहिते 'नस्तद्धिते' ( ६७८ ) इति टिलोपेन 'इन्' इत्यंशस्य लोपे प्राप्ते आह—'इनण्यनपत्ये' ( १२५५ ) इति । अनेन 'इन' इत्यंशस्य प्रकृतिभावो विधीयते । अत्र अन् प्रत्ययस्य अपत्याधिकारविहितत्वाभावस्वार्थिकत्वात् । 'स्वभावतः—' इति । एतदंशस्यापि पाठो मन्ये प्रक्षिप्त इति वचनोदाहरणयोः सङ्गतेरभावात् । तेन स्वभावतः क्लीबलिङ्गं इति पठनीयम् । 'आदि वृद्धि'रिति 'स्वभावतः—' इत्येतद् द्वयमपि तत्त्वबोधिन्यां न पठ्यते ।

३२२० । आक्रोशेऽवन्योर्ग्रहः ॥ ३।३।४५ ॥

टी—। 'अव' 'नि' एतयोर्ग्रहेर्घञ् स्यात् शापे। अवग्राहस्ते भूयात्। अभिभव इत्यर्थः। निग्राहस्ते भूयात्। बाध इत्यर्थः। 'आक्रोशे' किम ? अवग्रहः पदस्य। छेदः पदस्येत्यर्थः (छेद इत्यर्थः—?) *। निग्रहश्चोरस्य। निरोधश्चोरस्येत्यर्थः (निरोधः इत्यर्थः—?) *।

The root ग्रह preceded by the उपसर्गs अव and नि (separately) take घञ् when a curse is implied. Thus अवग्राहः—and निग्राहः—are derived with घञ् but अवग्रहः—dissolution of an expression and निग्रहः obstruction are formed with अप् by ग्रहवृद—(3234) as in both the cases there is no insinuation of a curse. It is important to note that the readings छेदः पदस्येत्यर्थः and निरोधश्चौरस्येत्यर्थः'—are unfair insertions or interpolations because they cannot come from the pen of Bhottoji as these are repetitions of the terms पदस्य and चोरस्य and because they are not found explained in Tattwabodhini.

सिद्ध—। आक्रोशे इति। आक्रोशः शापः। अवन्योरिति। उपसर्गद्वयम्। घञ इत्यनुवर्तते। तदाह—'अव' 'नि' इति। 'ग्रहवृदृनिश्चिगमश्च' (३२३४) इत्यस्यापवादः। अवग्रहः पदस्येति अवग्रहनिश्छेदः। [अवग्रहशब्दस्य अर्थान्तरं यथा सिद्धान्तकौमुदी पूर्वखण्ड अवग्रह इति तच्चितं द्रष्टव्यम्]। यथार्थं च सूत्रेऽवग्रहे कृते सूत्रस्य 'आक्रोशे अवन्योः ग्रहः' इत्येवमाकारो भवति। निग्रहः चौरस्येति। समुचितशास्ति रित्यर्थः। 'अभ्युपपत्तिरनुग्रहः। निग्रहस्तद्विरुद्धः स्यात्' (अमरः) 'अभियोगस्त्वभिग्रहः' (अमरः) इत्यनुग्रहाभिग्रहशब्दौ तु 'ग्रहवृदृ—' इति भावेऽप्प्रत्ययान्तौ निग्रहावग्रहशब्दवत्। अत्र 'छेदः पदस्येत्यर्थः' इति 'निरोधः चौरस्येत्यर्थः' इति चेत्येतद्द्वयमपि निःसन्देहं प्रक्षिप्तमेव। तयोः दीक्षितग्रहत्वे सति पदस्येति चौर-

स्त्वनयोः पुनरुक्तयोरनुक्तेरेव न्याय्यत्वात् तद्वाक्यानां विशेषेण संचितत्वाच्च। अपि च तत्त्वबोधिनीव्याख्यायाम् नैतद् लभ्यते द्वयमपि।

### ३२२१। प्रे लिप्सायाम् ॥ ३।३।४६ ॥

### टी—। पात्रप्रग्राहेण चरति भिक्षुः। अन्यत्र पात्रप्रग्रहः।

The root ग्रह preceded by the उपसर्ग 'प्र' takes घञ् provided a desire is implied. Thus प्रग्राह as in पात्रप्रग्राहेण etc—The mendicant moves ( from door to door for having alms ) with a pot in his hand· Elsewhere पात्रप्रग्रहः—the acceptance of a pot—with अप् by 'ग्रहवृदृ—'( 3234 ) as there is no desire implied.

मित—। प्रे इति। 'प्र' इत्युपसर्गे उपपदे लिप्सायाञ्च गम्यायां ग्रहधातोर्घञ् स्यात्। पात्रप्रग्राहेणेति। पात्रं गृहीत्वेत्यर्थः। अत्र लिप्सा गम्यते तण्डुललाभस्य इष्टत्वात्। अन्यत्रेति। लिप्साभावे इत्यर्थः। पात्रप्रग्रह इति। अत्र 'ग्रहवृदृ—' ( ३२३४ ) इत्यनेन न घञ्।

### ३२२२। परौ यज्ञे ॥ ३।३।४७ ॥

### टी—। उत्तरः परिग्राहः। स्फ्येन वेदेः स्वीकरणम्।

घञ् takes place after ग्रह preceded by परि when the derivative refers to or is applied in a sacrifice. Thus उत्तरः परिग्राहः—the subsequent acceptance or determination of the altar with a particular wood looking like a sword ( and which is called 'स्फ्य' )।

मित—। पराविति। परौ उपसर्गे उपपदे ग्रहधातोर्घञ् स्यात् स चेद्यज्ञो यज्ञे प्रयुज्यते। उत्तरः परिग्राह इति। 'वसवस्त्वा' इत्यादिमन्त्रैर्वेदेः पूर्वः परिग्राह उक्तः। तस्मात् परवर्तित्वादुत्तर इति विशेषणम्। परिग्राहशब्दस्यार्थमाह—स्फ्येन वेदेरिति। स्फ्य इति खड्गाकृतेर्दारुविशेषस्य संज्ञा। तेन समन्तात् खया

वेदिदेशस्य स्वीकरणं निर्धारणं परिग्रह इत्यर्थः। परिग्रह इति तु 'ग्रहवृदृ—' (३२३४) इत्यपप्रत्ययत्वेन सिध्यति।

३२२३। नौ वृ धान्ये ॥ ३।३।४८ ॥

टी—। 'वृ' इति लुप्तपञ्चमीकम्। नीवाराः। 'धान्ये' किम्? निवरा कन्या। क्तिन्विषयेऽपि बाहुलकादप्। प्रवरा सेना। प्रवरा गौरितिवत्। एवञ्च स्त्रीलिङ्गोऽपि।

The root वृ (which is elliptical for पञ्चम्यन्त 'वृञः') takes घञ् when preceded by नि and the term thus formed means (a kind of) paddy. Thus नीवाराः (as in नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः in शकु—the इकार of नि being lengthened by the rule 'उपसर्गस्य घञि—')। निवरा कन्या—a girl deserving choice i.e. an excellent girl—here अप् takes effect by 'ग्रहवृदृ—' (3234) and not घञ्; Even in the case of क्तिन्, अप् takes place by बाहुलक or 'कृत्यल्युटो बहुलम्' although the affix क्तिन् belongs to स्त्र्यधिकार and according to the परिभाषा 'वाऽसरूपोऽस्त्रियाम्' the affix अप् cannot be eligible there. Thus प्रवरा सेना an excellent arm—with अप् like प्रवरा गौः। एवञ्च स्त्रीलिङ्गोऽपि i.e due to usage or लौकिकप्रयोग।

मित—। नौ वृ इति। लुप्तपञ्चमीकमिति। निपूर्वाद् वृञः (पञ्चम्यन्तम्) घञ् प्रत्ययः स्याद् धान्यभेदार्थो भवतीत्यर्थः। नीवारा इति। धान्यविशेषा इत्यर्थः। श्यामाकाः। 'नीवाराः शुकगर्भकोटरमुखभ्रष्टास्तरूणामधः' इति अभिज्ञानशकुन्तलम्। निवरेति। उत्कृष्टेत्यर्थः। अत्र 'ग्रहवृदृ—' (३२३४) इति अप्प्रत्ययः। तेन 'उपसर्गस्य घञि—' इति दीर्घो न। पूर्वत्र तेनैव उपसर्गस्य दीर्घ इति बोद्धव्यम्। ननु प्रवरेत्यत्र कथमप् प्रत्ययः। स्त्रीविषये क्तिन एव प्रसङ्गात् 'अत्र नयवां स्त्रीखलनाः पूर्वविप्रतिषेधेन' इत्युक्तेः। न च 'वासरूपः—'

इति प्राप्नोतीति वाच्यम्। तस्य स्वाधिकारादन्यत्र प्रयुज्यमानत्वादित्याशङ्क्य आह—क्तिन्विषये अपीति। बाहुलकादिति। 'कृत्यल्युटो—' इत्यनेनेत्यर्थः। तत्र प्रमाणं दर्शयति—प्रवरा सेना, प्रवरा गौरितिवदिति। ततश्च वृद्धप्रयोगाल्लिङ्गात् क्तिन् विषयेऽपि अबिति भावः। नन्वेवं यथा क्तिन्विषये स्त्री उच्यते एवमनेनापि स्यादित्यत आह—एवञ्चेति। लौकिकात्लिङ्गादिति भावः।

## ३२२४। उदि श्रयतियौतिपूद्रुवः॥ ३।३।४९॥

टी—। उच्छ्रायः। उद्यावः। उत्पावः। उद्द्रावः। कथं 'पतनान्ताः समुच्छ्रयाः' इति? बाहुलकात्।

The उपसर्ग उद् preceding the roots श्रि, यु, पू, and द्रु, take घञ्. Thus उच्छ्रायः ( going or rising upwards ) etc. But उच्छ्रयः which is formed in instancss like 'पतनान्ताः समुच्छ्रयाः' ( Ramayan—Adi-kanda )—Rising to the pinnacle or topmost part of anything leads to a fall is to be derived with अच् by बाहुलक or 'कृत्यल्युटो बहुलम्'।

मित—। उदीति। श्रि, यु, पू, द्रु इत्येतेभ्यश्चतुर्भ्य उत्पूर्वेभ्यो भावे घञ्। श्रयतियौतीति वैचित्र्यार्थम्। उच्छ्राय इति। शङ्खोच्छ्रायैः इति कालिदासः, 'उच्छ्रायसौन्दर्यगुणा मृषोद्या' इति भारविश्च। कथं 'पतनान्ता' इति। रामायणस्यादिकाण्डस्थोऽयं श्लोकांशः। अयं पूर्णः श्लोकः—

'सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम्॥' इति।

बाहुलकादिति। 'कृत्यल्युटो बहुलम्' इत्यनुसाराद् 'एरच्' ( ३२३१ ) इत्यच् प्रत्यय इत्यर्थः। समुच्छ्रयाः समारूढ्या ऊर्ध्वदेशप्रापनानि अत्युच्चारोहणमित्यर्थः पतनान्ताः अधः प्रापणावसाना चरमे मुहूर्ते अधः पातयन्तीत्यर्थं इति। यद्वा उत्पूर्वाणामेव एषां घञ् नान्यपूर्वाणाम् इति व्याख्याय कथञ्चित समाधेयम्।

३२२५। विभाषाङि रुप्लुवोः ॥ ३।३।५० ॥

टी—। आरावः—आरवः। आप्लावः—आप्लवः।

रु and प्लु (the roots) take घञ् optionally when the उपसर्ग आङ् only precedes. Thus आरावः आरवः, (a tumult or great noise) and आप्लावः आप्लवः (a full bath or inundation). The second instance in each case is with अप् by 'ऋदोरप्' (3232).

मित—। विभाषेति। आङि उपसर्गोपपदात् रुधातोः प्लुधातोश्च परतो घञ् वा स्यात्। आरावः—आरवः इति। निर्घोष इत्यर्थः। तद् यथा—"भीषणाराव गदगदम्", "आरवं वितेने" इति भारविः। आप्लावः—आप्लव इति। समग्रकाया प्लावनं स्नापनं चेत्यर्थः। 'आरवाराव संरावाः—' इति शब्द पर्य्यायेऽमरः। 'आप्लावः—आप्लवः स्नानम्' इति च। आरवः आप्लव इति द्वयमपि 'ऋदोरप्' (३२३२) इत्यप्प्रत्ययान्तम्।

३२२६। अवे ग्रहो वर्षप्रतिबन्धे ॥ ३।३।५१ ॥

टी—। विभाषेति वर्तते। देवस्य अवग्रहः—अवग्राहः। देवकर्तृकमवर्षणमित्यर्थः। 'वर्षप्रतिबन्धे' किम् ? अवग्रहः पदस्य।

The root ग्रह with the उपसर्ग 'अव' as an उपपद takes the affix घञ्- optionally provided the sense of the derivative is want of rain or drought. Thus अवग्रह (with अप्) and अवग्राहः (with घञ्) as in 'देवस्य—' i.e cessation of pouring a shower on the part of the cloud (देवस्य)। अवग्रहः पदस्य—See 'आक्रोशे—' (3220) Here there being no sense of drought or वर्षप्रतिबन्ध, अवग्रह is the only form and not अवग्राह also as in this case 'विभाषा' does not apply and consequently अप् by 'ग्रहवृदृ—'(3234) predominates.

मित—। अवे ग्रह इति। अव इत्युपसर्गः। वर्षप्रतिबन्धः वृष्टिप्रतिघातः तस्मिन्नुपपदे ग्रहधातोरुत्तरं घञ्प्रत्ययो वा स्याद् वृष्टिप्रतिघातश्चेदर्थो भवतीति सूत्रार्थ इति मत्वा शेषं पूरयन्नाह—विभाषेत्यनुवर्तते इति। पूर्वसूत्रादिति शेषः। घञभावपक्षे 'ग्रहवृदृ—' (३२३५) इति अप्प्रत्यय इत्युदाहरति—देवस्येति। अत्र देवो मेघः वर्षं प्रतिबध्नातीति सिद्धान्तात्। देवोऽवगृह्णाति देवस्य अवग्रह इति कर्तरि षष्ठीति मत्वा व्याचष्टे—देवकर्तृकमिति। अवग्रहः पदस्येति। अत्र वर्षप्रतिबन्धार्थस्य अभावाद् नित्यमेव अप् इति भावः। विभाषार्थस्तत्र वर्षप्रतिबन्धे प्राप्ते घञोऽत्र दुर्लभत्वात्।

३२२७। प्रे वणिजाम् ॥ ३।३।५२ ॥

**दी—। प्रे ग्रहेर्घञ् वा वणिजां सम्बन्धी चेत् प्रत्ययार्थः। तुलासूत्रमिति यावत्। तुलाप्रग्राहेण चरति। तुलाप्रग्रहेण।**

घञ् after ग्रह preceded by प्र is employed optionally if the sense of the affix refers to the thread or rope of the scale or balance ( तुलासूत्रम् ) of a merchant. Thus प्रग्राहः—प्र + ग्रह + घञ्—as in 'तुलाप्रग्राहेण—' he receives ( everything after weighing ) by the scale. तुलाप्रग्रहेण—here अप् optionally by 'ग्रहवृदृ—' (3234)

मित—। प्रे इति। 'विभाषाङि—' ( ३२२६—३।३।५० ) इत्यतो विभाषेत्यनुवर्तते। तदाह—प्रे ग्रहेर्घञ् वेति। अत्र वणिजामित्यनेन तत्सम्बन्धीव प्रत्ययार्थः। तदाह—तुलासूत्रमिति। मानदण्डसूत्रमित्यर्थः। 'ग्रहवृदृ—' (३२३४) इत्यनेन अप् प्रत्यये नित्ये प्राप्ते एतेन सूत्रेण विभाषा आरभ्यते। तेन घञभावपक्षेऽप इति प्रतिपत्तव्यम्। 'तुलाप्रग्राहेण—' इति। तुलायां गृहीत्वा सर्वं स्वीकरोतीत्यर्थः। अत्र प्रग्राह इति घञन्तः। तुलया प्रग्राह इति तृतीयातत्पुरुषः समासः। तुलाप्रग्रहेणेति। अत्र अप् प्रत्ययः।

३२२८। रश्मौ च ॥ ३।३।५३ ॥

**दी—। प्रग्रहः—प्रग्राहः ( प्रग्राहः—प्रग्रहः—? )।**

घञ् takes place optionally after ग्रह preceded by 'प्र' also when the sense of the affix refer to ray or rein ( of the horse ) etc ). Thus प्रग्राहः—प्रग्रहः ( अप् ) ।

मित—। रश्मौचेति। प्रे उपपदे ग्रहेर्घञ् वा स्याद्रश्मिश्चेत् प्रत्ययार्थं इत्यर्थः। पक्षे अप् ( 'ग्रहवृदृ—' ३२३४ ) इत्यनेन। तदाह—प्रग्रहः—प्रग्राह इति। अत्र प्रग्राहः—प्रग्रहः इत्येव पठितुं युज्यते। घञः प्रागुपदेशादन्यत्र तथैव क्रमस्य उचितत्वात्। रश्मिः किरणः तुरगसंयमनरज्जुश्च। 'किरणप्रग्रहौरश्मी' इति 'तुलासूत्रेऽश्वादिरश्मौ प्रग्राहः प्रग्रहोऽपि' इति चेत्युभयत्राप्यमरः।

## ३२२९। वृणोतेराच्छादने ॥ ३।३।५४ ॥

**दी—। विभाषा प्र इत्येव। प्रावारः—प्रवरः।**

Here follow विभाषा ( from 'विभाषाङि—' 3325 ) and 'प्र' ( from 'प्रे वणिजाम्' 3227 ); So that the rule means that the root वृ (स्वादि) preceded by प्र takes घञ् optionally when the sense of the affix has reference to a dress ( आच्छादन ). Thus प्रावारः ( घञ् )—प्रवरः ( अप् by 'ग्रहवृदृ—' ) both meaning a cloth ; दीर्घ in प्रावार—is by 'उपसर्गस्य घञि—'

मित—। वृणोतेरिति। 'विभाषाङि—' (३।३।५०—३३२५) इत्यतो 'विभाषा' इति। 'प्रे वणिजाम्' ( ३।३।५२ ) इत्यतः प्रे इति चानुवर्तते। तेन शेषं पूरयन्नाह—विभाषा प्रे इत्येवेति। अयं सूत्रार्थः—प्रोपसर्गे उपपदे स्वादेर्वृञो घञ् वा आच्छादनचेत् प्रत्ययार्थं इति। प्रावारः—प्रवरः इति। पूर्वत्र घञ्। 'उपसर्गस्य घञि—' इति दीर्घः। पक्षे प्रवरः। उत्तरत्र 'ग्रहवृदृ—' ( ३२३४ ) इत्यप्। उभयोरेव पटोऽर्थः। उत्तरच्छिन्नङ्गेन यः पिधीयत इत्यर्थः। 'द्वौ प्रावारोत्तरासङ्गौ' इत्यमरः। आच्छादने किम् ? प्रवरो गौः। प्रशस्त इत्यर्थः।

## ३२३०। परौ भुवोऽवज्ञाने ॥ ३।३।५५ ॥

**दी—। परिभावः—परिभवः। 'अवज्ञाने' किम् ? सर्वतो भवनं परिभवः।**

When preceded by परि the root भू takes घञ् optionally—provided disregard is implied thereby. Thus— परिभाव: ( with घञ् ) and परिभव: ( with अप् ) both meaning the samething viz disregard. But परिभव:—meaning 'being everywhere' takes अप् only as there is no sense of अवज्ञान ।

मित—। पराविति। अवज्ञानमनादर:। तस्मिन् गम्ये परिपूर्वाद् भवतेर्घञ् वा स्याद्भावे। परिभाव:—परिभव: इति। उभयत्रापि अनादरोऽर्थ:। यथाचामर:—'अनादर: परिभव: परिभावस्तिरस्क्रिया' इति। अत्र वासरूपन्यायेन क्तल्युटौ न। सर्वतो भवनं परिभव इति। अत्रावज्ञानाभावाद् घञ् न। यद्यपि परिपूर्वाद् भवतेरवज्ञाने एव साधारणतो वृत्ति: तथापि उक्तार्थ: सङ्गच्छते धातूनामनेकार्थत्वात्।

## २२२१। एरच् ॥ ३।३।५६ ॥

### दी—। चय:। जय:। 'भयादीनामुपसंख्यानं नपुंसके क्तादिनिवृत्त्यर्थम्' ( वार्त्तिक )—भयम्। वर्षम्।

Any root ending in 'इ' takes the affix अच् in the भाववाच्य and in other-than- कर्तृवाच्य। Thus चय: etc. This supersedes घञ्। 'भयादीनाम्—' This is a Varttika ; it means—भय etc are to be enlisted under words formed with अच् i.e roots भी, वृष etc. should take the affix अच् and the derivatives thus formed ( भय etc ) are to be considered as नपुंसक or neuter so that affixes like क्त, ल्युट् etc ( which make the derivatives neuter ) will be excluded here ; Thus भयम् etc. It is important to note in this connection that although the Varttika prohibits ल्युट् also from being applied after वृष, yet the term 'वर्षणम्' in the sense of वर्षम्

is not held ungrammatical as the भाष्यकार himself has used 'वृषभोवर्षणात्—' ( cp—the introduction of महाभाष्य )।

मित—। एरजिति। 'इ' इत्यस्य षष्ठ्यन्तम्। 'येन विधिस्तदन्तस्य' इति परिभाषया इकारान्ताद् धातोरच् प्रत्ययः स्याद् भावे अकर्तरि च कारके इति सूत्रार्थः। इत उत्तरं 'भावे' 'अकर्तरि कारके' इति 'कृत्यल्युटो बहुलम्' ( २८४१—३।३।११३ ) इति यावद् द्वयमनुवर्तते। इति मूलकृतैव 'घञि च भावकरणयोः' ( ३१८७ ) इत्यत्रोक्तम्। अत्र घञो निवृत्तेस्तदपवादोऽयम्। उदाहरति चय इत्यादि। निश्चय इति तु अबन्त एवेति उत्तरत्र ( 'ग्रहवृदृनिश्चिगमश्च'—३२३४ ) इत्यत्र वक्ष्यति। 'भयादीनाम्—' इति वार्तिकमिदम्। अच प्रत्ययान्तानां पदानांभयवर्षादीनामपि पदानामुपसंख्यानं परिगणनं कर्तव्यमित्यर्थः। भीप्रभृतिभ्यो ऽपि धातुभ्योऽच् प्रत्ययः स्यादिति यावत्। कुत इत्यत आह— नपुंसके इति। 'नपुंसके भावे क्तः' ( ३०९० ) इति नपुंसके क्तः ल्युट च भीप्रभृतिभ्यो निवृत्तं यथा स्यात्। एवञ्च भयादीनां नपुंसकत्वमपि प्राप्तम्। तदुदाहरति भयम् वर्षमिति। अत्र क्तादिनिवृत्तिवचनाभावे तु परत्वात् क्तादयः स्युरिति बोध्यम्। न चैवमपि 'वासरूपोऽस्त्रियाम्' इत्यनेन भविष्यतीति वाच्यम्। तेषामचोऽपवादेषु अप्रवृत्तेः। नन्वेवं 'वृषभो वर्षणात्' वृषेर्ल्युडविधीयमानं भाष्यं कथं सङ्गच्छता-मिति चेत्। सत्यम्। 'यथोत्तरं मुनीनाम् प्रामाण्यम्'—इत्यनुसाराद् भाष्यप्रयोगाद् वृषेर्ल्युटि वर्षणम् इति अपि स्वीकर्तव्यमेव।

## ३२३२। ॠदोरप्॥ ३।३।५७॥

**दी—। ॠवर्णान्तादुवर्णान्तादप्। करः। गरः। शरः। यवः। लवः। स्तवः। पवः।**

The affix अप takes place in the भाव & other than कर्तृवाच्य, after a root ending in ॠ ( दीर्घ ॠकार only ) and after a root ending in उ ( or ऊ ). Thus करः ( कॄ+अप् )—etc. यवः—यु+अप्; लवः—लु+अप्।

मित—। ऋदोरिति—ऋत्+उ:=ऋदु:। तयो:। समाहारे क्लीबं पुंस्त्वम्। 'तपरस्तत्कालस्य' इत्यनुसाराद् 'ऋत्' इति दीर्घस्यैव ग्राहकम्। 'उ' इति द्वयोरपि। तदाह—कर (कृ+अप्) इत्यादि। यव: (यु+अप्) लव: (लू+अप् इत्यादि च। अत्रापि भावेऽकर्तरि च कारके प्रत्यय:। तेन चात्र 'भावे' 'अकर्तरि च—' इति विहितो घञ् अपोद्यते।

३२३३। वृक्षासनयोर्विष्टर: ॥ ८।३।९३ ॥

**दी—। अनयोर्विपूर्वस्य स्तृ: षत्वं निपात्यते। विष्टरो वृक्ष आसनं च। 'वृक्ष—' इति किम्? वाक्यस्य विस्तर:।**

The word विष्टर implying a tree or a seat is irregularly formed with अप् added to the root स्तृ preceded by the उपसर्ग 'वि' the स of स्तृ being cerebral as the consequence of irregularity and त becoming by 'ष्टुनाष्टु:' (113). In other sense—विस्तर: (वि—स्तृ+अप्) without षत्व (See 'प्रथने—' 3240).

मित—। वृक्षासनयोरिति। वृक्षे आसने चार्थे विष्टरशब्दो निपात्यते। स च विपूर्वात् स्तृणातेरपि सिद्ध: 'निपातनात् षत्वे कृते तकारस्य ष्टुना—' इति ष्टुत्वम्। 'विष्टरो विटप: प्रतिष्ठन्ताम्' इति मन्त्रे विष्टर आसनम्। 'वैकुण्ठो विष्टरश्रवा:' इति विष्णुपर्य्याये अमर:। वृक्षाद्यर्थाभावे षत्वाभाव इत्याह—वाक्यस्य विस्तर इति। अयमपि अप् प्रत्ययान्त:।

३२३४। ग्रहवृदृनिश्चिगमश्च ॥ ३।३।५८ ॥

**दी—। अप् स्यात्। घञचोरपवाद:। ग्रह:। वर:। दर:। निश्चय:। गम:। 'वशिरण्योरुपसंख्यानम्' (वार्तिक:)। वश:। रण:। 'घञर्थे कविधानम्' (वार्तिक:)। प्रस्थ:। विघ्न:। 'द्वित्वप्रकरणे के कृञादीनामिति वक्तव्यम्' (वार्तिक)। चक्रम्। चिक्लिदम्। चङ्क्रम: (चक्रस:)।**

The affix अप् is employed after the roots ग्रह, वृ, दृ' निश्चि ( निर् वा निस—चि ) and गम् in the भाववाच्य and other-than कर्तृवाच्य। This affix ( अप् ) here supersedes घञ् and अच् i.e अप् supersedes घञ् coming after ग्रह्, वृ' दृ and गम्, and अच् after निर्+चि। Thus ग्रह: etc are formed with अप् added to them. 'वशिरण्यो:—'. This is a Varttika—The affix ( अप् ) has to be employed after वश् and रण in the भाव and other-than-कर्तृ वाच्य। Thus वश: and रण: ( fight ). 'घञर्थे—' This is another Varttika. The enjoining of the affix क ( has to be made ) in the sense of घञ्. Thus— प्रस्थ: ( breadth or a measure )—प्र+स्था+क:—the आकार of स्था eliding by 'आतो लोप:—' ( 2372 ) and विघ्न: (obstacle) वि+हन्+क the penultimate ( उपधा ) of हन् disappearing by the rule 'गमहनजनखनघसाम्—' ( 2363 ) and कुत्व i.e घ in place of ह coming in by 'हो हन्ते:—' ( 358 ). 'द्वित्वप्रकरणे—' This is the third Varttika here. It has to be said that under द्वित्वप्रकरण or where duplication ( system ) is being dealt with द्वित्व or duplication has to be enjoined for the root क्रञ् etc when the affix क follows. Thus चक्रम्—क्र+क=क्रक्र+क etc ( See द्वित्व—section under 'एकाचो द्वे-प्रथमस्य' ( 2175 ) and लिटि धातो:—( 2177 ) etc for अभ्यासकार्य। No guna due to कित्व। चिक्लिदम्—क्लिद्+क—द्वित्व etc. चङ्क्रम:—क्रम्+क—द्वित्व etc. चक्रस:—क्रस्+क—द्वित्व etc.

मित—। ग्रहेति। ग्रह, वृ, दृ, निश्चि ( निर+चि ) गम् एभ्य: अप्प्रत्यय: स्याद् भावे अकर्तरि च कारके इत्यर्थ:। घञचोरपवाद प्रति। 'घञपवाद: अजपवादश्चायमप्। घञपवादस्तावद्—'भावे' 'अकर्तरि च कारके—' इति सूत्राभ्यां ग्रह, वृ, दृ, गम इत्येभ्यो ( घञ प्राप्त: )। अजपवादस्तु— 'एरच्' (३२३१) इत्यनेन निर पूर्वाच्चिनोते: ( अचि प्राप्ते ) इति विवेक:। ग्रह इत्यादि स्पष्टम्।

'वशिरण्योः—' इति वार्तिकमिदम्। वशधातो रणधातोश्चपरम् अप्प्रत्ययस्य उपसंख्यानं परिगणनं कर्तव्यमित्यर्थः। भावे इत्यादिना घञि प्राप्ते ऽयमारम्भः। वशकान्तौ। वशनं वशः। भावे अप्। रणन्ति शब्दं कुर्वन्ति अस्मिन् इति रणः संग्रामः। अधिकरणे अप्। 'घजर्थे—' अत्र वार्तिकान्तरमिदम्। क विधानमिति। कप्रत्ययस्यविधानं कर्तव्यमित्यर्थः। किमर्थं कप्रत्ययस्य विधानम् इत्यत्रोत्तरम्— 'स्थास्नापाव्यधिहनियुध्यर्थम्' इति भाष्यपठितः वार्तिकशेषः। प्रतिष्ठन्तेऽस्मिन् धान्यानीति प्रस्थः परिमाणविशेषः। अधिकरणे कः। 'आतो लोपः—' इत्यालोपः। एवं प्रस्नान्ति अस्मिन् प्रस्नः। प्रपिबन्त्यस्यामिति प्रपा। आविध्यन्त्यस्मिन्नित्याविधम्। 'ग्रहिज्या—' इति सम्प्रसारणम्। विहन्त्यस्मिन् मनांसि इति वाविहन्यते अस्मिन् विघ्नः प्रत्यूहः। 'गमहन—' (२३६३) इत्युपधालोपः। 'होऽन्तेः—' (२५८) इति कुत्वम्। आयुध्यन्तेऽनेनेत्यायुधम् अस्त्रम्। 'द्वित्वप्रकरणे—' इदमपि इत्येवं वार्तिकम्। एकाचोद्वे प्रथमस्य इत्यादिर्द्वित्वविधानस्थले कप्रत्यये परतः कृञादीनामेकाचः प्रथमस्यद्वित्वं इति वक्तव्यमित्यर्थः। एवमिति—चक्रम्। द्वित्वमभ्यासकार्यम्। चिक्लिदमिति। क्लिदेः कः। द्वित्वाभ्यासकार्यादि। चङ्क्रम इति क्रमेः कः। द्वित्वादि। पुनः पुनःक्रमणमित्यर्थः। चक्रस इति। क्रसेः कः—द्वित्वादि।

३२३५। उपसर्गेऽदः॥ ३।३।५९॥

टी—। अप् स्यात्।

३२३६। घञपोश्च॥ २।४।३८॥

टी—। अदेर्घस्लृ स्याद् घञि अपि च। प्रघसः। विघसः। 'उपसर्गे' किम्? घासः।

The root अद् takes अप् when any उपसर्ग precedes (3235) then by 'घञपोश्च' (3236) which means—अद् is replaced by घस्लृ or घस् when घञ् and अप् follows—we have प्रघसः (प्र + अद् + अप्)—eating and विघसः (वि + अद् + अप्) eating of the remnants of a

superior. घासः ( अद + घञ् ) grass etc—This is counter instance ( प्रत्युदाहरण ) of 'उपसर्गेऽदः' and the instance of 'घञपोश्च'

मित—। उपसर्गे इति। उपसर्गे उपपदे अद्धातोरप् स्याद् भावे अकर्तरि च कारके। ततोऽपि परे अदेर्घस्लादेशः स्यादित्याह—घञपोश्चेति। 'अदो जग्धिः—' ( २।४।३६ ) इत्यतोऽद इति। 'लुङ्सनोर्घस्लृ' ( २।४।३७ ) इत्यतो घस्लृ इति चानुवर्तते। तदाह—अदेर्घस्लृ स्यादिति। अपि उदाहरति—प्रघसः विघस इति। प्राद्यते इति प्रघसो भक्षणम्। खाद्यते भक्ष्यते अयमिति विघसो गुर्वाद्यवशिष्टमन्नम्। 'अमृतं विघसो यज्ञशेषभोजनशेषयो' रित्यमरः। घास इति। 'उपसर्गे—' इति पूर्वसूत्रस्य प्रत्युदाहरणमिदम् उत्तरस्य ( घञपोश्च इत्यस्य ) चोदाहरणम्। अद्यते अयमिति घासः चतुष्पदां भक्ष्यम्। 'शष्पं बालतृणं घासः' इत्यमरः।

३२३७। नौ ण च ॥ ३।३।६० ॥

दी—। नौ उपपदे अदेर्णः स्यादप् च। न्यादः। निघसः।

When नि precedes as उपपद, the root अद takes the affix ण as well as अप्। Thus न्यादः by वृद्धि in con. with ण ( नि + अद + ण ) which does not necessitate घस्लृभाव of अद, and निघसः with अप्. Both mean taking food.

मित—। नौणेति। चकारादप् समुच्चीयते। तदाह—अप् चेति। अपि परे अदेर्घस्लृ भावः। निघासः। णेतु न। 'घञपोश्चे'त्युक्तेः। न्यादः ( नि + अद + ण ) णित्वादुपधावृद्धिः। उभयोरपि भक्षणमर्थः। जग्धिस्तु भोजनम्। उभयत्रैव भावे प्रत्ययौ।

३२३८। व्यधजपोरनुपसर्गे ॥ ३।३।६१ ॥

दी—। अप् स्यात्। व्यधः। जपः। उपसर्गे तु—आव्याधः। उपजापो मन्त्रभेदः।

अप् after the roots व्यध् and जप is attached in the भाव and other-than-कर्तृ वाच्य when no उपसर्ग precedes these. Thus व्यधः

and जपः with अप् which thus supersedes the affix घञ्. But when there is any उपसर्ग preceding we have आव्याधः (आ+व्यध्+घञ्) in the same sense and उपजापः (उप+जप्+घञ्) in the sense of disclosing a (secret) counsel with the affix घञ् attached to them.

मित—। व्यधजपोरिति। व्यधश्च जप् च तयोः। पञ्चम्यर्थे षष्ठी। व्यध् जप् आभ्यां धातुभ्यामप्प्रत्ययः स्याद् भावे अकर्तरि च कारके उपसर्गे असति इत्यर्थः। घञपवादः। आव्याध इति। अत्र उपसर्गसद्भावाद् घञ्। वेधनमित्यर्थः। उपजापः। उपेत्युपसर्गवशाद् घञ। मन्त्रभेद इति। मन्त्रो रहस्यम्। तस्य भेदः प्रकाश इत्यर्थः। 'भेदोपजापौ समौ' इति चत्रियवर्गेऽमरः।

३२३८। स्वनहसोर्वा ॥ ३।३।६२ ॥

दी—। अप्। पक्षे घञ्। स्वनः—स्वानः। हसः—हासः। अनुपसर्ग इत्येव। प्रस्वानः। प्रहासः।

The root स्वन् and हस take the affix अप् optionally in the भाव and in other-than- कर्तृ वाच्य when they are not preceded by any उपसर्ग। अप् being optional घञ् will form the alternative here. Thus स्वानः (अप्) स्वनः (घञ्)—sound; and हसः (अप्) हासः (घञ्)—laughter. But when the roots are preceded by any उपसर्ग घञ् only takes place after them and not अप्. Thus प्रस्वानः and प्रहासः—a great tumult and a great laughter respectively.

मित—। स्वनहसोरिति। स्वनश्च हसः च द्वन्द्वः। तयोः। अत्रापि पञ्चम्यर्थे षष्ठी। स्वन् हस आभ्यामप्प्रत्ययो वा स्याद् भावे अकर्तरि च कारके उपसर्गे असतीत्यर्थः। पक्षे घञ। स्वनः (अप) स्वानः (घञ)—रव इत्यर्थः। उपसर्गे तु यथाप्राप्तं घञ् एव नाप् इत्याह—अनुपसर्ग इत्येवेति। प्रस्वान इत्यादि। नात्र प्रभाव इतिवत् प्रादिसमासः किन्तु प्रस्वन्यत इति प्रस्वान इत्युपसर्गवशाद्घञ् प्रत्ययः।

३२४० । यमः समुपनिविषु च ॥ ३।३।६३ ॥

टी—। एष्वनुपसर्गे च यमेरप् वा । संयमः—संयामः । उपयमः—उपयामः । नियमः—नियामः । वियमः—वियामः । यमः—यामः ।

अप् after यम् is optionally used in the भाव and in other-than-कर्तृ वाच्य when the उपसर्गs—सम्, उप, नि and वि precede it and also there is no उपसर्ग preceding. Thus संयम—संयामः etc the instance in order with सम्, उप, नि and वि preceding without उपसर्ग. घञ् is appointed in the second form in each case as an alternative.

मित—। यम इति । अत्र चकारेण व्यधजपोरित्यतः (३२३८—३।३।६१) अनुपसर्गे इति समुच्चीयते । तदाह—एषु, अनुपसर्गे चेति । स्वनहसोरित्यतो वेति वर्तते । तदयमर्थः—भावे अकर्तरि च कारके यम्धातोर्घञ् वा स्यात् ; सम्, उप, नि, वि एषु उपसर्गेषु उपपदेषु सत्सु असति चानुपसर्गोपपदे इति । संयम इत्यपि । संयाम इति चार्थि । एवमन्यत्र इति विवेकः । अनुपसर्गे चेत्यस्योदाहरणम्—यमः—यामः इति ।

३२४१ । नौ गदनदपठस्वनः ॥ ३।३।६४ ॥

टी—। अप् वा स्यात् । निगदः—निगादः । निनदः—निनादः । निपठः—निपाठः । निस्वनः—निस्वानः ।

अप् and घञ् as before after गद् ( to speak ) नद् ( to sound ), पठ् and स्वन ( to sound ) is employed, when precedes them the उपसर्ग नि only and no other.

मित—। नौ गदेति । नौ एव उपसर्गे उपपदे सति, असति चैतस्मिनुपसर्गोपपदे गदनदादिभ्यस्तरम् अप घञ् च प्रत्ययौ स्यातां भावे अकर्तरि च कारके । उपसर्गाभावे तु नादः गादः इत्यादि ।

३२४२ । क्वणो वीणायां च ॥ ३।३।६५ ॥

दी—। नावनुपसर्गे च वीणाविषयाच्च क्वणतेरप् वा स्यात् । वीणाग्रहणं प्राद्यर्थम् । निक्वणः—निक्वाणः । क्वणः—क्वाणः । वीणायां तु—प्रक्वणः—प्रक्वाणः ।

When the उपसर्ग नि precedes, or when no उपसर्ग precedes, or when it refers to the lyre, the root क्वण् ( to sound ) takes अप् as well as घञ् in the alternative case, in the भाववाच्य and in other-than- कर्तृवाच्य. "In acceptance of वीणा" here in the rule is for प्र etc i.e when प्र etc precede then only the root refers to the lyre and takes अप् and घञ् in the same sense. निक्वणः निक्वाणः ( with नि preceding )। क्वणः—क्वाणः ( without उपसर्ग )।

मित—। क्वण इति । वीणायामिति धात्वर्थस्य विशेषणम् । चकारेण अनुपसर्गे इति समुच्चीयते । स्वनहसोर्वेत्यत वेति च । तदाह—नौ, अनुपसर्गे चेत्यादि । वीणाग्रहणं प्राद्यर्थमिति । अयमर्थः—शब्दश्चेत् क्वणतेर्विषयो भवति तदा न्युपसर्गादनुपसर्गाच्चाभ्याद् घञपौ । अथ वीणायाः विषयः तदा प्रादौ उपसर्गे सत्युपपदे घञपौ प्राप्तुत इति । निक्वण इत्यादि । 'निक्वाणः निक्वणः क्वाणः क्वणः क्वणनमित्यपि' इति शब्दपर्य्यायेऽमरः । प्रक्वणो वीणादिवादनम् ।

३२४३ । नित्यं पणः परिमाणे ॥ ३।३।६६ ॥

दी—। अप् स्यात् । मूलकपणः । शाकपणः । व्यवहारार्थं मूलकादीनां परिमितो मुष्टिर्बध्यते सोऽस्य विषयः । 'परिमाणे' किम् ? पाणः ।

The root पण always takes the affix अप् after it when a (limited) measure is implied ( as in buying and selling some articles ). Thus मूलकपणः a fixed amount of raddishes 'मूलकानां पणः' i.e a handful of them bonnd in a limited quantity for sale. But पाणः

—पण+घञ्—( sale of something ) because परिमाण is not here implied.

मित—। नित्यं पण इति। परिमाणशब्दस्यार्थमाह—व्यवहारार्थमिति। विक्रयार्थमित्यर्थः। सोऽस्य विषय इति। तादृशः परिमितमुष्टिरस्य सूत्रस्य अप् प्रत्ययस्य वा विषयः। अर्थादेवम्भूते परिमाणे पणधातोर्नित्यमप् स्याद्। अत्र नित्यग्रहणाद् वेति निवृत्तं मन्तव्यम्। पण्यते व्यवहारार्थं मुष्टिमात्रं बध्यते इति पणः। कर्मण्यप्। तस्तो मूलकानां पण इति विग्रहः। पाण इति। अत्र परिमाणार्थत्वाभावाद् घञ्।

३२४४। मदोऽनुपसर्गे ॥ ३।३।६७ ॥

दी—। धनमदः। उपसर्गे तु—उन्मादः।

The root मद् takes अप् when there is no उपसर्ग leading. Thus मदः—pride ( धनमदः pride of riches ). But उन्मादः ( उद्+मद्+घञ् ) madness—due to the उपसर्ग उद्. Similarly प्रमादः ( recklessness ) etc.

मित—। मद इति। मद धातोरप स्यादुपसर्गेऽसति। मदोगर्वः। उन्माद इति। उपसर्गवशाद् घञ्। एवं 'प्रमादोऽनवधानता' इत्यमरः।

३२४५। प्रमदसम्मदौ हर्षे ॥ ३।३।६८ ॥

दी—। 'हर्षे' किम्? प्रमादः। सम्मादः।

The words प्रमद and संमद are irregularly derived with अप् in the sense of delight. This sort of framing of the सूत्र instead of 'प्रसंभ्यां मदः—' etc is to indicate that the words are रूढ although they are thus derived; moreover, this supersedes 'मदोऽनुपसर्गे' (3244) which enjoins अप् to मद when it is without उपसर्ग only whereas मद here although preceded by the उपसर्गs प्र and सम् takes अप्.

मित—। प्रमदसम्मदाविति। हर्षे एवानयौ'र्मदोऽनुपसर्गे' (३२४४) इति बाधित्वा अप इति सूत्रार्थमदाह—हर्षे इति। अप् एवात्र प्रत्ययो निपात्यते। रूढौ च शब्दौ भवतो न यौगिकाविति भावः। तथाच प्रयुज्यते कन्यानां प्रमादः कोकिलानां सम्माद इति।

३२४३। समुदोरजः पशुषु ॥ ३।३।६९ ॥

**दी—। संपूर्वोऽजिः समुदाये उत्पूर्वश्च प्रेरणे। तस्मात् पशुविषयकादप् स्यात्। 'अघञपोः' इत्युक्तेर्वीभावो न। समजः पशूनां संघः। उदजः पशूनां प्रेरणम्। 'पशुषु' किम्? समाजो ब्राह्मणानाम्। उदाजः क्षत्रियाणाम्।**

The root अज means a 'whole' or a good many when preceded by सम् and sending when preceded by उद्. This (अज्) takes अप् (preceded by सम् and उद्) when it refers to animals. Thus समजः (सम्—अज्+अप्)—the herd of animals and उदजः (उत्+अज्+अप्)—a sending of beasts. समाजः—(सम+अज+घञ्) refers to society of Brahmins and उदाजः (उद्+अज+घञ्) refers to that of the military tribe and therefore they take घञ् and not अप्. The root (अज) is not replaced by 'वी' when घञ् and अप follow due to the prohibition (पर्युदास) 'अघञपोः' in the rule 'अजेर्व्यघञपोः' (2292).

मित—। समुदोरिति। समुदोः+अजः इतिच्छेदः। सम चोत् च तयोरिति। सप्तमीद्विवचनम्। समि उदि चोपसर्गे उपपदे इत्यर्थः। समुदाये इति प्रेरणे इति च। उभयत्रैव वर्तते इति शेषः। तत्र घञि अपि च परे 'अजेर्व्यघञपोः' (२२९२) इत्यत्र 'अघञपो'रिति पर्युदासादजेर्वीभावो नेति स्मारयति—अघञपोरिति। समज इत्यादि स्पष्टम्। पशुविषयकसमुदाय—प्रेरणार्थयोरभावे घञ—इत्याह—समाज इति।

३२४७। अक्षेषु ग्लहः ॥ ३।३।७० ॥

दी—। अक्षशब्देन देवनं लक्ष्यते। तत्र यत् पणरूपेण ग्राह्यं तत्र 'ग्लह' इति निपात्यते। अक्षस्य ग्लहः। 'व्यातुक्षीमभिसरणग्लहामदीव्यन्'। 'अक्षेषु' किम्? पादस्य ग्रहः।

By the term 'अक्ष' in the rule is meant gambling or playing with dice ( but not dice only although it generally means so ). Thus the rule means—

The term ग्लह is irregularly formed with अप् ( added to ग्रह or ग्लह ) to mean that which is promised as a stake in the play. Thus 'अक्षस्य—' a stake (in respect) of gambling. 'व्यात्युक्षीम्—' etc. This is from Magha Kavya. They ( the lovers ) gambled with damsel who was playing water-throwing and promised a secret अभिसार in case she failed in the gambling. 'पादस्य—' Here also ग्रह takes अप् by the rule 'ग्रहवृदृनिश्चिगमश्च' ( 3234 ); but there is no लत्व of the रेफ of ग्रह here as the term means simply 'acceptence' but not that as a stake in the gambling.

मित—। अक्षेष्विति। अक्षशब्दस्य पाशकार्थत्वेऽत्र बहुवचनं नोपपद्यते इति विचिन्त्य व्याचष्टे—अक्षशब्देन देवनं लक्ष्यते इति। देवनं पाशकक्रीडा। सूत्रार्थमाह—तत्रेति। देवने इत्यर्थः। पणरूपेणेति। विजयिना पराजितस्य सकाशाद् यद्वस्तुप्राक् स्वीकृतमिति कृत्वा गृह्यते तत् पणम्। तद्रूपेणेत्यर्थः। ग्रह इति निपात्यत इति। ग्रह धातोरुत्तरं ग्लह धातोर्वोत्तरम् अप प्रत्ययेन इति शेषः। 'ग्लह उपादाने' इत्यत्र 'ग्लह च' इति पठितम्। तत्र गृह्णातेरपि लत्वमपि निपात्यते। ग्लह धातोरपि तु प्रत्ययमात्रमिति विवेकः। अक्षस्य ग्लह इति। अक्षसम्बन्धी ग्रहः स्वीकृतद्रव्यग्रह इत्यर्थः। अत्राक्षशब्दस्य देवनार्थत्वं द्रष्टव्यम्।

'व्यातुक्षीम्—' इति। जलनिचयस्य प्रतिजलनिक्षेपो व्यातुक्षः परस्परजलसेचनमित्यर्थः। सोऽस्ति अस्या इति 'कर्मव्यतिहारे णच् स्त्रियाम्' इति णच। तस्य 'णचः स्त्रियामञ्' इत्यञि 'टिड्ढाणञ—' इत्यादिना ङीप। 'तद्धितेषु—' इत्यादिवृद्धिः। एवम्भूताम् अभिसरणग्लहाम् 'अक्षक्रीडायां पराजये सति अभिसरिष्यामि' विधास्यामीति अभिसरणं ग्लहः पणत्वेन शर्तं वस्तु यस्याः ( सकाशात् ) यद्वा अभिसरणं ग्लहः प्रतिभूतिः यस्याः ताम् अदीव्यन् अक्रीडन्। तया अक्रीडन्नित्यर्थः। 'दिवस्तदर्थस्य' च' इति करणस्य कर्मत्वविवक्षा। पादस्येति। अत्र देवनार्थलाभावेन तत्त्वं न। 'ग्रहवृद्ध—' ( ३२३४ ) इत्यपप्रत्ययस्तु भवत्येव। ग्लहधातोस्तु 'ग्लाहः' इति घञन्ता एव प्रत्युदाहरणम्।

### ३२४८। प्रजने सर्तेः ॥ ३।३।७१ ॥

**टी—। प्रजनं प्रथमगर्भग्रहणम्। गवामुपसरः। कथम् 'अवसरः' 'प्रसरः' इति अधिकरणे 'पुंसि संज्ञायाम्—' (३२९६) इति घः।**

The term प्रजन in the rule means first conception. Thus when first conception is meant the root सृ takes the affix अप् in the भाववाच्य etc. 'गवाम्—' the first conception of cows. compare also, in this connection, 'उपसर्या काल्या प्रजने' (2852)। अवसरः, प्रसरः etc, however, are not derived with अप् by this rule but with the affix घ by the rule 'पुंसि संज्ञायाम् घः प्रायेण' ( 3296 ) in the अधिकरणवाच्य

मित—। प्रजन इति। प्रजने गम्ये सृधातोरप् स्याद् भावादौ वाच्ये इति सूत्रार्थः। तेन प्रजनशब्दस्यार्थमाह—प्रजनमिति। प्रथमगर्भग्रहणं गर्भाधानम्। प्रजनशब्दे प्र इत्याद्यर्थकम्—प्रथमं जायते इति प्र+जन्+घञ् प्रजनम्। भावे घञ्। 'जनिवध्योश्च' ( २५१२ ) इत्युपधावृद्धेः प्रतिषेधः। गवामिति। कर्तरि षष्ठी। गावः उपसरन्ति प्रथमगर्भग्रहणाय वृषभमुपगच्छन्तीत्यर्थात्। नन्वेवम् अवसरः प्रसरः

कल्यादयः कथम् ? तेषां प्रजनार्थकत्वाभावादित्यत आह—अधिकरणे इति। 'पुंसि संज्ञायां घः प्रायेण' (३२९६) इत्यनेनाधिकरणे अवसरत्यस्मिन् काले इति कालार्थे घ इत्यर्थः।

३२४९। ह्वः संप्रसारणं च न्यभ्युपविषु ॥ ३।३।७२ ॥

दी—। निहवः। अभिहवः। उपहवः। विहवः। 'एषु' किम् ? प्रह्वायः।

The root ह्वे gets सम्प्रसारण also अप् when preceded by नि, अभि, उप and वि, Thus निहवः etc—calling. नि+ह्वे+अप =नि+हु+अप=by सम्प्र. and पूर्वरूप=निहव अ by गुण and अवादेशः। प्रह्वायः calling—प्र+ह्वे+घञ्=प्र+ह्वा+घञ् by 'आदेचः—' (2271) =प्रह्वाय=by 'आतो युक—' (2361) or by वृद्धि and आयादेशः ?।

मित—। ह्व इति। ह्वे इति धातुः। तस्य कृतात्वस्य पञ्चम्येकवचनम्। नि, अभि, उप, वि एषु उपपदेषु ह्वयतेरप् संप्रसारणं च स्यादित्यर्थः निहव इति। ह्वयतेः संप्रसारणात् 'हु' इति जाते 'सार्वधातुकार्ध—' (३।६४) इति गुणे सति 'एचोय—' (६२) इति अवादेशे च रूपम्। प्रह्वाय इति। अत्र घञ् सम्पर्कात् संप्रसारणाभावाद 'आदेचः—' इत्यात्वे 'आतोयुक्—' इति युकि च, वृद्धयायादेशयोर्वा रूपसिद्धिः ?।

३२५०। आङि युद्धे ॥ ३।३।७३ ॥

दी—। आहूयन्तेऽस्मिन्नित्याहवः। 'युद्धे' किम् ? आह्वायः।

When the उपसर्ग 'आङ्' precedes the root (ह्वे) it takes अप् and gets सम्प्रसारण as well provided the derivative refers to 'fight'. Thus आहवः (as before) a fight where opponents are challenged. आह्वायः—Simply calling as before.

मित—। आङीति। आङि उपसर्गे उपपदे ह्वयतेरप् सम्प्रसारणं च स्याद् युद्धे अर्थे। आहवयन्ते इति। 'आङः स्पर्धायाम्' इत्यात्मनेपदम्। अत्र 'अकर्तरि च कारके—' इति अधिकरणे प्रत्यय इति ज्ञापयन्नाह—अस्मिन्निति। आहव इति। प्राग्वत्। आह्वाय इति—घञि प्राग्वत्।

३२५१। निपानमाहावः॥ ३।३।७४॥

टी—। आङ्पूर्वस्य ह्वयतेः संप्रसारणमब्वृद्धिश्चोदकाधारश्चेद् वाच्यः। 'आहावस्तु निपानं स्यादुपकूपजलाशये'।

The term आहाव meaning a pond or small tank of water is irregularly formed i. e the root ह्वे, preceded by आङ् takes अप्, gets सम्प्रसारण and वृद्धि as well when the resultant form means a receptacle of water. Thus अमर has 'आहावस्तु—' i.e आहाव is a synonym of निपान meaning a tank or cistern near a well

मित—। निपानमिति। निपानं क्षुद्रजलाधारः। तत्र वाच्ये आहावशब्दो निपात्यते। निपातनप्रकारमाह—आङ्पूर्वस्येति। पूर्वसूत्रात्तदनुवृत्तेः। संप्रसारणमिति। 'ह्वः संप्रसारणम्—'( ३।३।७२ ) इत्यतस्तदनुवृत्तेः। अबिति प्रकृतम्। वृद्धिरिति तु निपातनबलाल्लभ्यते। आहावस्त्विति। अमरस्यमिदमुदाहरणम्।

३२५२। भावेऽनुपसर्गस्य॥ ३।३।७५॥

टी—। अनुपसर्गस्य ह्वयतेः संप्रसारणमप् च स्याद् भावे। हवः।

मित—। भावे इति। स्पष्टम्। हव इति। उपसर्गे तु आह्वाय इति प्रत्युदाहार्यम्।

३२५३। हनश्च वधः॥ ३।३।७६॥

टी—। अनुपसर्गाद्धन्तेर्भावेऽप् स्यात्। वधादेशश्चान्तोदात्तः—'वधेन दस्युम्'। चाद् घञ्। घातः।

The root हन, when without any उपसर्ग, takes अप् and is replaced by that which is of high pitch at the end. 'वधेन—' This instance is cited from the RigVeda to show the अन्तोदात्तत्व of वध। From चकार in the rule we have घात:—कुत्व by 'होऽन्ते:' वृद्धि by 'अत उपधाया' ( 2282 ) and तकार by 'हनस्त:—'।

मित—। हनश्चेति। हन इति षष्ठ्यन्तम्। तेन 'अनुपसर्गस्य' इत्यनुवर्तमानां षष्ठीं तदनुगुणत्वेन व्याचष्टे—अनुपसर्गादिति। सूत्रे चकारो भिन्नक्रम:। वध: परो द्रष्टव्य:। तदाह—वधादेशश्चेति। अन्तोदात्त इति। सूत्रे 'वध' इत्यस्यान्तोदात्तत्वेनोच्चारणादित्यर्थ:। अत्रान्यत्र च हन्तेर्वधादेशेन वधिर्धात्वन्तरं न। अन्यथा घञर्थे कविधाने सति वध इति सिद्धे हनश्चेति सूत्रस्य व्यर्थप्रयोजनत्वात्। अत एव वधि: स्वतन्त्रो नास्त्येवेति शब्देन्दुशेखर:। वध इत्यस्य अन्तोदात्तत्वं दर्शयति। वधेनेति। ऋग्वेदस्थोऽयं मन्त्र:। सूत्रे चकारकरणफलान्तरमाह—चाद् घञिति। सन्निकृष्टमपि अपं विहाय विप्रकृष्टस्यघञ एव प्रवृत्ति: सामर्थ्यात्। घात इति। "हो हन्ते:—" इति कुत्वम्। 'अत उपधाया' इति वृद्धि:। 'हनस्तोऽचिण्णलो:' ( २५७४ ) इति तकारोऽन्तादेश:।

२२५४। मूर्त्तौ घन:॥ ३।३।७७॥

दी—मूर्त्ति: काठिन्यं तस्मिन्नभिधेये हन्तेरप्स्यात्। घनश्चादेश:। अभ्रघन:। कथम् 'सैन्धवघनमानय' इति। धर्मशब्देन धर्मी लक्ष्यते।

मूर्ति means hardness or solidity; when hardness is meant, the root हन takes अप in the भाववाच्य and it is replaced by घन्. Thus हन्+अप=घन: as in अभ्रघन:—the hardness of mica. In instances like 'सैन्धवघनम्—' the quality denotes ( by secondary sense ) the thing qualified. Thus the instance means—Bring the thing which is as hard as salt ( got out of the sea )

i.e काठिन्यम् ( the quality i. e, 'धर्म' ) means here कठिन ( a thing having the quality i. e, a धर्मिन् ).

मित—। मूर्त्ताविति। अभिधेये इति। वाच्ये इत्यर्थः। अभ्रघन इति। अभ्रस्य काठिन्यमित्यर्थः। घन इत्यत्र 'भावे—' ( ३२५२ ) इत्यतो भावे इत्यनुवृत्तेः काठिन्यमिति तदर्थतया लभ्यत इति बोध्यम्। अथ सैन्धवघनमित्यत्र सैन्धवकाठिन्यमित्यर्थासम्भवादाह—धर्मशब्देन धर्मी लक्ष्यत इति। कठिनत्वरूपेण धर्मेण कठिनरूपो धर्मी लक्ष्यत इत्यर्थः। तेन सैन्धवकठिनं पदार्थमानय इति उदाहरणार्थः। सैन्धवमित्यत्र भावार्थेऽण् प्रत्ययः। लवणविशेषे रूढोऽयम्।

### ३२५५। अन्तर्घनो देशे ॥ ३।३।७८ ॥

**दी—। वाहीकग्रामविशेषस्य संज्ञेयम्। 'अन्तर्घण' इति पाठान्तरम्।**

The term अन्तर्घन is irregularly formed, as a technical name of a village or country, with अप attached to हन् preceded by 'अन्तः'। Here णत्व which was due by the rule 'पूर्वपदात् संज्ञायाम्—' is barred by निपातन ; others, however, do not admit the निपातन here and read 'अन्तर्घण' with णत्व by 'पूर्वपदात्—'.

मित—। अन्तर्घन इति। देशविशेषे वाच्ये हन्तेरन्तरुपसर्गोपपदात् अप् प्रत्ययेन प्रकृतेर्घनादेशेन च अन्तर्घन शब्दो निपात्यते इत्यर्थः। वाहीकेति। वाहीको गोयानचालकः अपि। 'बलीकादयश्च' ( उणादि ) इति वहतेरीकन् प्रत्ययान्तो निपात्यते।

### ३२५६। अगारैकदेशे प्रघणः प्रघाणश्च ॥ ३।३।७९ ॥

**दी—। द्वारैकदेशे द्वौ प्रकोष्ठावलिन्दौ आभ्यन्तरो वाह्यश्च। तत्र वाह्ये प्रकोष्ठे निपातनमिदम्। प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते प्रघणः—प्रघाणः। कर्मण्यप्। पक्षे वृद्धिः।**

There are, in a part of the door, two sides—internal and external—Known as प्रकोष्ठ or अलिन्द ; of these two the external is refered to by this निपातन or irregularity i.e both प्रघण and प्रघाण are in this sense formed irregularly with अप् attached to हन् preceded by प्र। प्रघन literally means which is frequently struck with feet by entering persons.

मित—। अगारैकदेशे इति। अगारं भवनम्। बहिः प्रकोष्ठात्मके तदंश-विशेषे वाच्ये प्रघणप्रघाणशब्दौ अप् प्रत्ययान्तौ निपात्येते। द्वारैकदेश इति। 'प्रघाण प्रघणालिन्दा बहिर्द्वारप्रकोष्ठके' इत्यमरः। उभयत्रैव कर्मणि प्रत्यय इत्याह—प्रविशद्भिर्जनैरिति। पद्भिः इति। निपातनादेव प्रघाण इत्यत्र घनादेश-स्योपधाया वृद्धिः। 'रषाभ्याम्—' इति णत्वम्।

२२५६। उद्घनोऽत्याधानम् ॥ ३।३।८० ॥

टी—। अत्याधानमुपरिस्थापनम्। यस्मिन् काष्ठेऽन्यानि काष्ठानि स्थापयित्वा तक्ष्यन्ते तदुद्घनः। अधिकरणेऽप्।

The term उद्घन is irregulrrly formed with अप attached to उद् हन which in connection with the affix is replaced by घन provided superposition or placing over is implied. उद्घन is a piece of wood placed and brought upon for sawing other woods as incarpentery, The affix is thus enjoined in the locative sense.

मित—। उद्घन इति। अति अतिक्रम्य आधानं स्थापनम् अत्याधानम्। उपरिस्थापनमित्यर्थः। तेन उत्पूर्वाद्धन्तेरप् प्रत्ययेन प्रकृतेर्घनादेशे च उद्घन शब्दो निपात्यते अत्याधाने गम्ये इति सूत्रार्थः। अत्राधिकरणे प्रत्ययः। तदाह—यस्मिन्निति। तक्ष्यन्ते इति। तनूक्रियन्त इत्यर्थः। तदिति। तत् काष्ठमित्यर्थः।

३२५८। अपघनोऽङ्गम् ॥ ३।३।८१ ॥

टी—। अङ्गं शरीरावयवः। स चेह न सर्वः किन्तु पाणिः पादश्चेत्याहुः। करणेऽप्। अपघातोऽन्यः।

The term अपघन is irregularly formed with अप attached to हन preceded by अप (the उपसर्ग) when a certain limb of the body is meant—the root being changed into घन as before in connection with the affix. Here we have the affix in the करण-वाच्य or in instrumeutal sense—the sense being with which one strikes. अपघातः—takes घञ् for it means an abnormal shock' and not any limb of the body.

मित—। अपघन इति। अङ्ग' शरीरावयव इति। पाणिः पादश्चेति। अत्र व्याख्यानमेव शरणम्। अत्र चकारो वार्थकः। पाणिः पादौ वेत्यर्थः। तेन पाणौ पादे च वाच्ये अपहन्तेरप्प्रत्ययसम्पर्कात् घनादेशः अपघनशब्दो निपात्यते इति सूत्रार्थः। करणे इति। अपहन्यतेऽपहन्ति वानेनेति व्युत्पत्तिरिति भावः। अप-घातोऽन्य इति। उच्चपतनादिजन्य विसदृश आघात इत्यर्थः। अत्र भावे घञ्। 'हनस्तः—' इति तकारोऽन्तादेशः। 'होहन्तेः' इति कुत्वम्। अत उपधाया इति वृद्धिः।

३२५९। करणेऽयोविद्रुषु ॥ ३।३।८२ ॥

टी—। एषु हन्तेः करणेऽप् स्याद् घनादेशश्च। अयो हन्य-तेऽनेनेत्ययोघनः। विघनः। द्रुघनः। 'द्रुघण' इत्येके। 'पूर्वपदात् संज्ञायाम्—' (८५७) इति णत्वम्। संज्ञैषा कुठारस्य। द्रुघ्नः।

The root हन् takes अप् in the instrumental sense (करणवाच्य) and is replaced by घन when अयस्, वि and द्रु precede the root.

Thus अयोघन:—by which an iron is struck—a hammer. विघन:। द्रुघन: द्रुघण:—by which a tree is struck—Note the णत्व reading; but in a technical name (axe) we have the णत्व reading.

मित—। करण इति। अयस् लोह:। वि इत्युपसर्ग:। द्रुर्वृक्ष:। एषु उपपदेषु अयोघन इति। लोहमय मुद्गर इत्यर्थ:। संज्ञैषा कुठारस्येति। तेषां मते द्रुघण इति संज्ञाशब्द: तेषां मते पूर्वपदादिति णत्वम्। कुठारस्य तदर्थ:। द्रुर्वृक्ष: हन्यते ऽनेनेत्यर्थात्। द्रुघन इत्यस्य स्वमते संज्ञात्वं नास्तीति। णत्वाभाव:। एवं 'मुनीन्द्र: शीघन:—' इति बुधपर्यायेऽमर:।

३२६०। स्तम्बे क च ॥ ३।३।८३ ॥

टी—। स्तम्बे उपपदे हन्ते: करणे क: स्यादप् च पक्षे घनादेशश्च। स्तम्बघ्न:—स्तम्बघन:। करण इत्येव। स्तम्बघात:।

When the term स्तम्ब meaning a cluster of corn is a contiguous word or उपपद the root हन takes the affix क as well as अप् in the करणवाच्य or instrumental sense the root being replaced by घन in the case of अप्. स्तम्बघ्न:—स्तम्बघन: an instrument to cut the bunches of corn with. स्तम्बघात:—घञ्. See ante. स्तम्बघ्न is with क—स्तम्ब+हन्+क—where the penultimate (अ) of the root disappears by 'गमहन—'and ह is replaced by घ etc.

मित—। स्तम्ब इति। 'क' इति लुप्तप्रथमाविभक्तिकं तदाह—क: स्यादिति। पक्षे इति। अप् च पक्षे इत्यन्वय:। न तु पक्षे घनादेशश्चेति। घनादेशस्याप् प्रत्ययान्तरव्यतिरेकपरतन्त्रत्वादिति बोध्यम्। स्तम्बघ्न इति। स्तम्बानि हन्यन्ते-ऽनेनेति क:। तृणगुच्छकर्तनसाधनम् इत्यर्थ:। 'गमहन—' इत्युपधालोप:। कुलम्। स्तम्बघात इति। भावे घञ्। प्रक्रिया पूर्ववत्।

३२६१। परौ घः ॥ ३।३।८४ ॥

दी— परौ हन्तेरप् स्यात् करणे घशब्दश्चादेशः। परिहन्यतेऽनेनेति परिघः।

हन preceded by परि takes अप in the करणवाच्य and is substituted by घ. परिघ—an weapon for killing all i.e a club ( मुषल or bolt )।

मित—। परौ इति। क इति नानुवर्तते। किन्तु करणे, हन्, अप् इतीत् त्रयमनुवर्तते। परिघो मुषलः।

३२६२। परेश्च घाङ्कयोः ॥ ८।२।२२ ॥

दी—। परे रेफस्य लो वा स्याद्घशब्देऽङ्कशब्दे च। पलिघः—परिघः। पर्य्यङ्कः—पल्यङ्कः। इह 'तरप्तमपौ घः' (२००२) इति कृत्रिमस्य न ग्रहणं व्याख्यानात्।

The रेफ or रकार of परि is replaced by लकार optionally when the word 'घ' or अङ्क follows. Thus पलिघः परिघ etc. पर्य्यङ्कः etc—a bedstead. The word 'घ' in the rule 'तरप्तमपौ—' is artifical or designative but that which has been advised in this is a natural ( अकृत्रिम ) one. Thus by the परिभाषा 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसंप्रत्ययः' the घ advised in 'तरप्तमपौ—' becomes due here for operation but in that case the resultant forms will be पलितर परितर etc. Hence the authorities explain that the said परिभाषा will not hold good here and consequently the natural घ takes effect giving परिघ etc.

मित—। परेश्चेति। घश्च अङ्कश्च द्वन्द्वः। तयोरिति सप्तमीद्विवचनम्। 'कृपोरोलः' ( ८।२।१८ ) इतातो 'रोल' इत्यनुवर्तते। 'अचि विभाषा' ( ८।२।२१ )

इत्यतो विभाषेति च। तदाह—परे रेफस्य लो वेति। पर्य्यङ्कः—शयनीयम्। ननु घशब्दोऽत्र द्विविधो वर्त्तते। शिवसूत्रे निर्दिष्ट एकः। 'तरप्तमपौ—' (२००३) इति सूत्रे चापरः। तत्र प्रथमोऽकृत्रिमः। द्वितीयस्तु कृत्रिमः। ततश्च 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसंप्रत्ययः' इति न्यायात् 'घ' रूपं शब्दस्य घशब्दसंज्ञा' इत्यस्मात् शिवसूत्रस्थस्य ग्रहणं न स्यात्। तस्य अकृत्रिमत्वात्। एवञ्च परिघ—पलिघ इत्यनिष्टं स्यादित्यत आह—कृत्रिमस्य न ग्रहणमिति। कुतः?—व्याख्यानादिति। प्राचामिति शेषः।

## ३२६३। उपघ्न आश्रये ॥ ३।३।८५ ॥

**टी—। उपपूर्वाद्धन्तेरप् स्यादुपधालोपश्च। आश्रयशब्देन सामीप्यं लक्ष्यते। पर्वतेनोपहन्यते सामीप्येन गम्यत इति पर्वतोपघ्नः।**

The term उपघ्न is derived irregularly with अप attached to हन् preceded by उप, the penultimate of the root disappearing provided a (close) proximity is implied. Thus पर्वतोपघ्न is being struck by the hill i.e. going by the same.

मित—। उपघ्न इति। आश्रये गम्ये उपघ्न इति निपात्यते। निपातनप्रकारमाह—उपपूर्वाद्धन्तेरित्यादिना। उपधालोपश्चेति। हन्तेरकारलोपः। घत्वं निपातनात्। समीप्यं लक्ष्यते इति। अत्र व्याख्यानमेव शरणम्।

## ३२६४। संघोद्घौ गणप्रशंसयोः ३।३।८६ ॥

**टी—। संहननं संघः। भावेऽप्। उद्धन्यते उत्कृष्टो ज्ञायते इत्युद्घः—कर्मण्यप्। गत्यर्थानां बुद्ध्यर्थत्वाद्धन्तिर्ज्ञाने।**

The words संघ and उद्घ are irregularly formed with अप् appointed after हन् preceded by सम् and उद् provided the derivatives mean a gathering and an object of praise; अप्

in the former is in the भाववाच्य and in the latter कर्मवाच्य। गत्यर्थ roots or roots signifying movement being synonymous with those denoting knowledge, the root हन् here means to know.

मित—। सङ्घोद्घौ इति। संघः उद्घघशब्दौ यथाक्रमं समपूर्वाद्धनेरुत्पूर्वाच्च हन्तेरप् प्रत्ययेन निपात्येते क्रमेण गणः प्रशंसा च यदि वाच्ये भवतः। पूर्वत्र भावेप्रत्यय उत्तरत्र कर्मणीत्याह—संहननमित्यादिना। ननु उद्धन्यते उत्कृष्टो ज्ञायत इत्यप्। कथं व्याख्यानं भवति ?—हन्तेर्ज्ञाने दुर्घटत्वतेरित्यत आह—गत्यर्थायामिति। 'सर्वे गत्यर्था ज्ञानार्थाः' इति न्यायादिति भावः। एवञ्च 'हन हिंसागत्यो' रित्यनयोरर्थयोर्गत्यर्थ एवात्र प्रत्ययः।

## ३२६५। निघो निमितम्॥ ३।३।८७॥

## टी—। समन्तान्मितं निमितम्। निर्विशेषं हन्यन्ते ज्ञायन्ते इति निघाः वृक्षाः। समारोहपरिणाहा इत्यर्थः।

The word निघ is irregularly formed with अप् added to नि हन् of which the टि elides and ह is replaced by घ provided निमित meaning 'equal or limited everywhere' is implied thereby. निघ a tree which being equal in height and breadth is known without particularly.

मित—। निघ इति। निघ इति निपात्यते निमितं चेद् गम्यतेद्इत्यर्थः। अत्र हन्तेरप् टिलोपो हस्य घत्वञ्चेति द्रष्टव्यम्। निमितपदार्थं व्यनक्ति—समन्तादिति 'नि' इत्युपसर्गस्यात्र समन्तादर्थकत्वम् धातूनामनेकार्थत्वात्। 'मितमिति।' परिमित-मित्यर्थः। निघशब्दं साधयति—निर्विशेषमिति। कर्मण्यप् प्रत्ययः। समारोह-परिणाहा इति। आरोह उच्चता। परिणाहो विशालता व्याप्तिरिति। समः आरोह परिणाहो येषामिति विग्रहः।

३२६६। ड्वितः क्त्रिः ॥ ३।३।८८ ॥

दी—। अयं भाव एव स्वभावात्। 'क्त्रेर्मम्नित्यम्' (१५७०) क्त्रिप्रत्ययान्तान्मप्। निर्वृत्तेऽर्थे नित्यग्रहणात् क्त्रिमव्विषयः। अतएव क्त्र्यन्तेन न विग्रहः। डुपचष्। पाकेन निर्वृत्तं पक्त्रिमम्। डुवप्—उप्त्रिमम्।

A root that drops 'डु' occurring within it ( at the outset ) takes the affix क्त्रि in भाववाच्य by nature. That which is formed with क्त्रि ( or त्रि for the क drops at the time of operation) takes the affix मप्, and the term नित्य in the rule 'क्त्रेर्मप्—' (1570) being intended to denote निर्वृत्त—completed or finished, the affix क्त्रि i.e its derivation is the subject of application of मप्। The drift is this—the rule 'क्त्रेर्मम्नित्यम्' is a combination of two rules (1) 'क्त्रेर्मप्' and (2) 'नित्यम्'. The first enjoins मप् after a क्त्र्यन्त root in the sense of 'तेन निर्वृत्तम्'—It is finished or completed by that, and the second नित्यम् also in this, i.e according to comments ( व्याख्यानात् ) this always expressed the sense of निर्वृत्त. Thus the sense of निर्वृत्तbeing everywhere present the word being formed one (क्त्र्यन्त) is the subject of application of the other ( मप् ); and this always takes place for no word is to be formed affixed with क्त्रि only, but with the affix मप् also attached to क्त्रि that has already taken effect by the time. Thus क्त्रि and मप् are dependents on each other like the correlatives and one is incomplete or unfit to be used i.e, ungrammatical, without the other. Therefore it is that no explanatory expression ( विग्रह ) or expounding is made, when मप् is intended to be used, with a

term formed with क्त्रि but said with घञ् । Thus when मप् is going to be employed we expound as 'पाकेन निर्वृत्तम्' and not 'पक्त्या निर्वृत्तम्' । पक्त्रिमम्—पच + क्त्रि then पक्त्रि + मप = पक्त्रिम—'विपक्त्रिमज्ञानगतिर्मनस्वी' Bhatti (1st). उप्त्रिमम्—सम्प्रसारण by 'वचिस्वपियजादीनां किति' (2412).

मित—। ड्वित इति। डुरिति धातोराद्यवयवः। डुपचष्, डुवप्, डुकृञ् इत्यादौ यथा। ते च इतः 'आदिर्ञिटुडवः' इति सूत्रात्। 'डु' इत् यस्य इति बहुव्रीहिः। तस्मात्। ड्वितो धातोः क्त्रिप्रत्ययः स्याद् भावे (न तु अकर्तरि कारकेऽपि) इत्यर्थः। तदाह—अयं भाव एवेति। पाकेन निर्वृत्तम इत्यादिना पाकाद्यर्थे क्त्रिमपयोः प्रयुज्यमानत्वात् पाकादेश्च घञादिना भाव एव सिद्धत्वात् क्त्रि प्रत्ययोऽपि स्वभावेन भावे इति शेषः। क्त्रि प्रत्ययस्य ककार इत्। क्त्रेर्मम्नित्यमिति = क्त्रेः—मप् + नित्यम् इतिच्छेदः। क्त्रिग्रहणेन तदन्तस्य ग्रहणमिति—क्त्रिप्रत्ययान्तादिति। चतुर्थस्य चतुर्थे पादे इदं सूत्रम्। यद्यपि इदं तद्धितप्रकरणे स्वयमेव व्याख्यातं तथापि एतदवतारणपूर्वकव्याख्यानं तदर्थस्य साक्षात्कारणार्थमिति बोध्यम्। 'क्त्रेर्मप—' इत्यत्र योगद्वयं वर्तते। 'क्त्रेर्मप्' इत्येकः। 'नित्यम्' इत्यपरः। प्रथमं व्याचष्टे—क्त्रिप्रत्ययान्तान्मप् इति। द्वितीयं व्याचष्टे—निर्वृत्तेऽर्थे इति। अत्र योगविभागस्य द्वितीयव्याख्यानस्य चायमाशयः—'निर्वृत्तेऽक्षद्यूतादिभ्यः' इत्यतो 'निर्वृत्ते' इत्यनुवर्तते। 'निर्वृत्तेऽक्षद्यूतादिभ्यः क्त्रेश्च मप्' इत्येकयोगकरणेनैव सिद्धे योगद्वयकरणम् 'समर्थानां प्रथमाद्वा' इति महाविभाषानिवृत्त्यर्थम्। ततश्च नित्यग्रहणसामर्थ्याद् 'नित्यम्' इत्यस्य योगान्तरत्वविज्ञानात् 'निर्वृत्तेऽर्थे' एव तदिति (नित्यमिति) व्यनक्ति—निर्वृत्तेऽर्थे इति। क्त्रिमेव विषय इति। मपो विषय इति विग्रहः। निर्वृत्तेऽर्थे क्त्रिर्निर्वृत्तेऽर्थे च मप् इत्युभयोरेव प्रत्यययोरेकस्मिन्नर्थे अव्यवहितपरया प्रवृत्तिः परस्परसापेक्षता। तथाच क्त्रिप्रत्यये सत्येव मप् प्राप्नोति प्रयोक्ष्यमाणे च मपि क्त्रिः प्रवर्तते इति। एवं च केवलः क्त्रिः केवलश्च मप् न प्रयोक्तव्यमिति मन्तव्यम्। अत्र विनिगमकमाह—अत एवेति। 'पक्त्या निर्वृत्तम्' इति न विग्रहः किन्तु 'पाकेन निर्वृत्तम्' इत्येव। ततश्च क्त्रि प्रत्ययस्य केवलस्य नास्ति प्रवृत्तिः। अतः सिद्ध क्त्रिरिति भवति। सामान्येन निर्देशः। क्त्रि प्रत्ययान्तस्य तु विशेष्यनिघ्नतेति बोध्यम्। 'विपक्त्रिमज्ञानगतिर्मनस्वी' (भट्टिः)।

अत्र यमेन धर्मो लक्ष्यते। 'दत्रिमसभ्यतोषि' (भट्टिः)—दत्त्रिमेण दानेनेत्यर्थः। उप्त्रिमम् इति। 'वचिस्वपि' इति सम्प्रसारणम्। एवं कृत्रिमादयः।

३२६७। ट्वितोऽथुच् ॥ ३।३।८९ ॥

दी—। अयमपि स्वभावाद्भावे एव। टुवेपृ। वेपथुः। श्वयथुः।

After a root that drops 'टु' is employed the affix अथुच् (अथु) in the भाववाच्य by nature. वेपथुः—shaking or shivering श्वयथुः—a kind of disease called शोथ। The root is 'टु ओश्वि गतिवृद्ध्योः'।

मित—। ट्वित इति। टु इत् यस्य धातोस्तस्मादथुच् प्रत्ययः स्याद् भावे एव। वेपथुरिति। 'वेपथुश्च शरीरे मे रोमहर्षश्च जायते' इति गीता। श्वयथुरिति। 'टुओश्वि गतिवृद्ध्यो'रिति धातुः। 'सार्वधातुकार्ध—' (२१६८) इति गुणः। 'श्वयथुस्तु पुमान् शोथः' इत्यमरः। एवं टुओस्फूर्जा' इत्यादेः 'जन्मान्तरपातकानां विपाकविस्फूर्जथुरप्रसह्यः' (रघु—१४) इत्येवमादयः।

३२६८। यजयाचयतविच्छप्रच्छरक्षो नङ् ॥ ३।३।९० ॥

दी—। यज्ञः। याच्ञा। यत्नः। विश्नः। प्रश्नः। 'प्रश्ने चासन्न—' (१७७७) इति ज्ञापकान्न (निपातनान्न) संप्रसारणम्। ङित्त्वं तु 'विश्न' इत्यत्र गुणनिषेधाय। रक्ष्णः।

Roots यज्, याच्, यत्, विच्छ् and प्रच्छ् take the affix नङ् in the भाववाच्य as well as in the other than कर्तृवाच्य. यज्ञः—यज + न—न being changed into ञ in connection with ज्. Similarly याच्ञा। विश्नः—विच्छ + न—छ being replaced by श by the rule 'च्छ्वोः शूड्—' (2471) and गुण being prohibited here due to ङित्व of the

affix—which ( prohibition of गुण ) being the result of ङित्त्वकरण or reading नङ् in stead of न only in the rule, for ङित्त्व is evidently not for the injunction of सम्प्रसारण by 'ग्रहिज्या—' (2413) as we have ज्ञापक or indication in the rule 'प्रश्ने चासन्न—' (1777) that there will be no सम्प्र. here otherwise the author would enunciate 'पृश्ने चासन्न—'. Thus it is clear that the indicatory ( ङ ) is to prohibit गुण in the case of विश्न by 'क्ङिति च'। रक्ष्ण by णत्व।

मित—। यजयाचेति। भावे अकर्तरि च कारके यजादिभ्यस्त्वर' नङ् प्रत्ययः स्यादित्यर्थः। यज्ञ इति। नस्य श्चुत्वेन ञ। एवं याच्ञा इति। स्त्रीत्वं लोकादिति भावः। विश्न इति। विच्छतेर्नङ् 'च्छ्वोः शूठ्—' ( २५६१ ) इति श्। ननु प्रत्ययस्य ङित्वाद् 'ग्रहिज्या—' ( २४१३ ) इत्यनेन प्रच्छ+नङ् इति स्थिते सम्प्रसारणेन पृश्न इत्यनिष्टं स्यान्न तु प्रश्न इतीष्टमित्यताह—'प्रश्ने चासन्न—' ( १७७७ ) इति ज्ञापकादिति। नन्वेवं प्रत्ययस्य ङित्करणं व्यर्थमित्याशङ्क्य आह—ङित्त्व' त्विति। क्ङिति चेति निषेधादित्यर्थः। रक्ष्ण इति। 'ष्टुना—' इति नस्य ष्टुत्वेन ण। रक्षणमित्यर्थः।

## ३२६८। स्वपो नन् ॥ ३।३।८१ ॥

## टी—। स्वप्नः।

After स्वप्, नन् (the affix ) takes place in भाव etc.

मित—। स्वप्न इति। नित्त्व' स्वरार्थम्।

## ३२७०। उपसर्गे घोः किः ॥ ३।३।८२ ॥

## टी—। प्रधिः। अन्तर्धिः। उपाधीयतेऽनेनेत्युपाधिः।

If any उपसर्ग precedes as उपपद, the roots technically known as घु i.e दा and धा ( 'दा धा घ्वदाप' 2373 ) take the affix कि ( इ )

in the भाव and the other than कर्तृवाच्य। Thus प्रधि—in the करणवाच्य—The circumference of a wheel; the आकार of the root elides by 'आतोलोप:'—अन्तर्धि:—that which is placed within; —all the bases are masculine.

मित—। उपसर्गे इति। उपसर्गे उपपदे दाह्यधाह्यपिभ्यो धातुभ्य: किप्रत्यय: स्याद् भावादौ। प्रधिरिति। प्रधीयतेऽस्मिनित्यधिकरणे कि:। प्रत्ययस्य कित्त्वात् 'आतो लोप:—' (२३७२) इत्याल्लोप:। 'चक्रान्तं नेमि:स्त्री प्रधि: पुमान्' इत्यमर:। अन्तर्धिरन्तर्धानमन्तराधानं वा। 'कान्त:' इति पुंस्त्वम् सर्वत्र।

२२७१। कर्मण्यधिकरणे च ॥ ३।३।९३ ॥

दी—। कर्मण्युपपदे घो: कि: स्यादधिकरणेऽर्थे। जलानि धीयन्तेऽस्मिन्निति जलधि:।

If a word in the accusative is an उपपद then the roots दा and धा take the affix कि in the locative sense. Thus जलधि; a sea in which जल is stored up.

मित—। कर्मणीति। कर्मणीति प्रयुज्यमानोपपदस्योपाधि:। कर्मान्तं (द्वितीयान्तम्) यत्रोपपदं यथा स्यात्। न तु कर्मणि अधिकरणे च प्रत्यय इत्यर्थ:। तदाह—कर्मण्युपपदे इति। अत्र व्याख्यानमेव शरणम्। जलधिरिति। एवं पयोधि-वारिधिप्रभृतय:। निधीयते ऽस्मिन्निति निधिरिति कर्मण्येव कि:।

• २२७२। स्त्रियां क्तिन् ॥ ३।३।९४ ।

दी—। स्त्रीलिङ्गे भावादौ क्तिन् स्यात्। घञोऽपवाद:। अजपौ तु परत्वाद् बाधते। कृति:। चिति:। स्तुति:। स्फायी—स्फाति। 'स्फीतिकाम' इति तु प्रामादिकम्। क्तान्ताद्वा-त्वर्थे णिचि 'अच इ:' इति वा समाधेयम्। 'श्रुयजीषिस्तुभ्य:

करणे' ( वार्तिक )। श्रूयतेऽनया श्रुतिः। यजेरिषेश्च इष्टिः। स्तुतिः। 'ऋॄल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः' ( वार्तिक )। तेन नत्वम्। कीर्णिः। गीर्णिः। लूनिः। धूनिः। पूनिः। 'ह्लादः—' (२०७२) इति योगविभागात् क्तिनि ह्रस्वः। प्रह्लत्तिः। 'ति च' ( २०३७ )—चूर्तिः। फुल्तिः। 'चायतेः क्तिनि चिभावो वाच्यः' ( वार्तिक )—अपचितिः। संपादादिभ्यः क्विप् ( वार्तिक )। संपत्। विपत्। 'क्तिन्नपीष्यते' * संपत्तिः। विपत्तिः।

The affix क्तिन् is used after any root to form a feminine base in the भाववाच्य or in the other than कर्तृवाच्य, This supersedes घञ् enjoined by 'हलश्च' (3300) even, which also is used after any root ending in a हल् but forming a masculine base in the भाववाच्य ; for as the परिभाषा rule 'वासरूपोऽस्त्रियाम्' does not apply here in स्त्र्यधिकार, घञ् under 'हलश्च' (3321) although a particular injunction ( विशेषसूत्र ) and subsequent as well will not have the force expressed therein ( in the परिभाषा )। This ( क्तिन् ) however bars अच् and अप् also enjoined by 'एरच्' (3.3.56) and by 'ऋदोरप्' (3.3.57) as it ( क्तिन्—3.3.94) is subsequent to them. Thus they also ( अच् and अप् also), though particular by character, will not, by 'वाऽसरूप—' have supremacy over स्त्रियां क्तिन् and consequently have application only when a masculine base is sought for ; स्फायी is the root after which क्तिन् being employed gives स्फाति—यकार of the root disappearing by 'लोपो व्योर्वलि' and इट् not having taken effect due to the prohibition 'तितुत्रतथसि—' (3163). The form स्फीति, however, arrived at with

क्तिन् as in 'स्फीतिकाम' is erroneous, for by 'स्फाय: स्फी निष्ठायाम्' (3044) स्फायी is replaced by स्फी only when निष्ठा ( or क्त and क्तवतु ) follows and not क्ति. It ( स्फीति ) can, however, be solved with णिच् added to स्फीत ( स्फायी + क्त) in the case of a root by 'तत् करोति तदचेष्टे' or by 'प्रतिपदिकाद्धात्वर्थेबहुलम् इष्टवच्च' and then with अल्लोप + (णिल्लोप) and with the affix इ in the भाववाच्य by the (उणादि) 'अच इ:'. Then स्फीतिं कामयते स्फीतिकाम:—with अण् by 'कर्मण्यण्'। 'श्रुयजीषि—' (Varttika) श्रु, यज्, इष् and स्तु take क्तिन् in the करणवाच्य—श्रुति—the Veda—by which one becomes learned. Both यज् and इष् give इष्टि—a sacrifice or volition—with क्तिन्. The root यज् becomes इष् by सम्प्रसारण under 'वचिस्वपि—' (2412) and by 'ष' under, 'व्रश्चभ्रस्ज—' (294). ॠल्वादिभ्य:—' (another varttika here). It has to be said that the affix क्तिन् is like निष्ठा i.e, will have the force of it when coming after the roots ending in ॠ ( दीर्घॠ ) and after लु etc, Hence नत्व enjoined by 'रदाभ्यां निष्ठातोन: पूर्वस्य च द:' (3016) will take effect when क्तिन् follows after कॄ, लू etc. कीर्णि:—कॄ + क्तिन्—किर् इ by 'ॠत इद्धातो:', and नत्व in place of 'त' = कीर्णि: by 'हलिच' (354) and णत्व by 'रषाभ्याम्—'। लूनि:—लू + क्तिन् here नत्व of त is by 'ल्वादिभ्य:' (3018). कीर्णि—means scattering and लूनि means cutting as the affix is enjoined in the भाववाच्य। The penultimate of ह्राद when क्ति follows becomes ह्रस्व by breaking up of the rule 'ह्रादो निष्ठायाम्' (3073) the cause of such dissolution of a rule (योगविभाग) being to serve some special purpose viz to effect ह्रस्व when an affix other than निष्ठा ( as क्तिन् ) follows and to have प्रह्रत्ति:। The form प्रह्रत्ति, however, is not to be met with in

the भाष्य. चूर्ति—चर्+क्ति the penultimate or अ of चर् being 'उ' by the rule 'ति च' (3037) दीर्घ by 'हलि च' (354). फुल्लि:—फल्+क्ति by 'निच्'। 'चायते: क्तिनि—' Thus is third varttika here. It must be said the root चाय् or ('चायृ पूजानिशामनयो:'—भ्वादि) becomes replaced by चि when क्तिन् follows. Thus अपचिति:—अप+चाय+क्तिन् worship ; cp—'पूजा नमस्यापचिति:—'Amara. 'संपदादिभ्य: क्विप्' This is the fourth varttika here. सम् पद etc take the affix क्विप् in the भाववाच्य as also in other than कर्तृवाच्य to form feminine bases as संपद् etc. But although in the 'स्त्र्यधिकार' the परिभाषा 'वाऽसरूप:—' does not apply and therefore क्विप् will bar क्तिन् yet the latter will take effect giving संपत्ति: etc by बाहुलक advised under 'कृत्यल्युटो बहुलम्'.

मित—। स्त्रियामिति। इत: पुंनपुंसकाधिकार:। अत्र 'अकर्तरि च कारके' इत्यप्यनुवर्तते। तदाह—भावादाविति। क्तिन् स्यादिति। प्रतिवादप्रत्ययोऽयं विधीयते। घञोऽपवाद इति। 'हलश्च' (३३००) इति पुरस्ताद वक्ष्यमाणस्य घञोऽपवाद इत्यर्थ:। एवञ्चायं क्तिन्घञोर्विषयविभाग:। स्त्रीवाचके भावादौ क्तिन्नेव प्रयुज्यते। घञ् तु पुंस्तुवाचके एव भावादाविति। अस्त्रियामित्युक्ते: 'वाऽसरूप—' इति परिभाषाऽत्र न प्रवर्तते। एवं 'एरच्' 'ऋदोरप्' इति विशेषविहितौ अजपौ क्तिनो नित्यं बाधक: स्यादिति सन्दिह्य व्याचष्टे—अजपौ त्विति। क्तिन् प्रत्यय इत्यध्याहार:। कुत इत्यत आह—परत्वादिति। 'एरच्' (३।३।५६) 'ऋदोरप्' (३।३।५७) इत्याभ्यामपेक्षया 'स्त्रियां क्तिन्' (३।३।९४) इत्यस्य परवर्तित्वादिति द्रष्टव्यम्। कृति: चितिरित्यादि। प्रत्ययस्य कित्वान्न गुण:। स्फायी स्फीतिरिति। 'स्फायी' इति धातुनिर्देश:। स्फातिरिति क्तिप्रत्ययप्राप्तं रूपम्। अत्र धातोरोकारस्य इत्त्वात् यकारस्य 'लोपो व्यो:—' इति लोपे स्फातिरिति लभ्यते। नन्वेवं 'स्फाति-काम' इत्यत्र स्फीतिरिति कथम्? तत्राह—प्रामादिकमिति। स्फाय: स्फीभावस्य 'स्फाय: स्फीनिष्ठायाम्' (३०४४) इति निष्ठायामेव दृष्टत्वादन्यत्रादृष्टत्वाच्चेति भाव:।

कथमपि समाधत्ते—क्रान्तादित्यारभ्य इति वा समाधेयम् इत्यन्तेन। स्फायी+क्तः (नपुंसके भावे क्तः) इति 'स्फायः स्फी—' (२०४४) इत्यनेन स्फीभावे जाते स्फीतमिति प्रातिपदिकं भवति। ततः 'प्रातिपदिकाद्धात्वर्थे बहुलम्' इति 'तत्करोति तदाचष्टे' इति वा गणसूत्रात् स्फीतशब्दात् णिचि णाविष्टवद्भावेन अल्लोपे च 'अच इ'रिति भावे इप्रत्ययः। स्फातिरित्येव तु साध्विति द्रष्टव्यम्। 'श्रुयजीषि—' वार्तिकमिदम्। श्रु, यज्, इष्, स्तु एभ्यः करणे एव क्तिन् न तु भावादाविति वार्तिकार्थः। श्रुतिर्वेदः। यजिरिष्टेति। उभयोरेव क्तिनि रूपं तुल्यमित्याह—इष्टिरिति। तथाच इज्यतेऽनयेति यजतेः क्तिनि प्रत्ययस्य कित्त्वाद् 'वचिस्वपि—' (२४१२) इति सम्प्रसारणे 'व्रश्च भ्रस्ज—' (२९४) इति षत्वे च इष्टिरिति रूपम्। इषेस्तु स्पष्टमेव। स्तुतिरिति। स्तूयतेऽनयेति विग्रहः। सर्वत्र प्रत्ययस्य कित्त्वाद् गुणाभावः 'ग्लाम्लादिभ्यः—' द्वितीयमिदमत्र वार्तिकम्। ऋ—प्रभृतिभ्यो लूप्रभृतिभ्यश्च धातुभ्यः क्तिन् प्रत्ययो निष्ठेव स्यादिति वक्तव्यमित्यर्थः। तेनेति। निष्ठावद्भावेनेत्यर्थः। नत्वमिति—'रदाभ्यां निष्ठातो नः—' (३०१६) इत्यनुसारादिति भावः। कीर्णिरिति। कॄ+क्तिन् इति स्थिते 'ऋत इद्धातो'रिति इत्त्वे रपरत्वे च किर् इति जाते 'रदाभ्याम्—' इति निष्ठातकारस्य च क्तिनस्तकारस्य नत्वम्। ततः 'हलि चे'ति (३५४) इति दीर्घे 'रषाभ्याम्—' इति णत्वे च यथोक्तं रूपम्। किरणमित्यर्थः। एवं गीर्णिरिति। लूनिरिति। अत्र 'ल्वादिभ्यः' (३०१८) इति क्तिनो नत्वम्। लवनमित्यर्थः। 'ह्लादेः—' इति—'ह्लादो निष्ठायाम्' (३०७२) इति सूत्रम्। अनेन निष्ठायामेव परतो ह्रस्वो विधीयते न तु निष्ठेतर प्रत्यये परे। ततश्च क्तिन्प्रत्ययस्य प्रह्लत्तिरित्यत्र ह्रस्वो दुर्लभ इतिमत्वा ह्रस्वार्थमाह—योगविभागादिति। 'योगविभागादिष्टसिद्धिः' इति न्यायादिति भावः। चूर्तिः फुल्तिरित्यत्र चर्+क्ति, फल्+क्ति इति स्थिते चरेः फलेश्च अकारस्य उकारार्थमाह—'तिच' (३०२७) इति। एवमुत्त्वे पूर्वत्र रेफपरत्वाद 'हलि चे'ति दीर्घः। उत्तरत्र रेफवान्तत्वाभावान्न दीर्घः। 'धायतेः—' इति। इदमत्र तृतीयं वार्तिकम्। 'चायृ पूजानिशामनयो' इति धातुः। तस्य क्तिनि परे चिभावोऽनेन वार्तिकेनोपादिश्यते। अपचितिः पूजा। 'पूजा नमस्यापचितिः सपर्य्यार्चार्हणाः समाः'

इत्यमरः। 'संपदादिभ्य—' इति—इदमत्र चतुर्थं वार्तिकम्। क्विप् सर्वोपाधिव्याप्त्यै—संपदिति। भावे अकर्तरि कारके वेति बोध्यम्। ननु 'अस्त्रियाम्' इति निषेधात् 'वासरूपोऽस्त्रियाम्'। इति परिभाषया क्विपा क्तिनो बाधात् सम्पत्तिरित्यादि कथम् इत्याशङ्क्य आह—क्तिन्नपीष्यते इति। 'कृत्यल्युटो बहुलम्' इति बाहुलकादिदं सिद्धमित्याहुः। संपदिति सम्पत्तिरिति च स्त्रियामेवेति विभावनीयम्।

३२७३। स्थागापापचो भावे ॥ ३।३।९५ ॥

दी—। क्तिन् स्यादङोऽपवादः। उपस्थितिः। संगीतिः। संपीतिः। पक्तिः। कथम् 'अवस्था' 'संस्था' इति? 'व्यवस्थायाम्' इति ज्ञापकात्।

क्तिन् after स्था, गा, पा and पच् is used in the भाववाच्य to form a feminine base. This rule supersedes अङ् to be directed to स्था, गा and पा by 'आतश्चोपसर्गे' (3238) and to पच् or डुपचष् by 'षिद्भिदादिभ्यः—' (3381), प्रस्थितिः—इत्व or इकार in place of आ of स्था is by the rule 'द्यतिस्यतिमास्थाम्—' (3071). संगीतिः—ईत्व of the आकार of गै (i.e, 'गा' by आदेचः—') by the rule 'घुमास्था—' (2462). Although this rule bars अङ् after स्था yet अवस्था, संस्था etc will have the affix (अङ्) on the strength of Panini's own behaviour in 'व्यवस्थायाम्' (असंज्ञायाम्) which is an indication that स्था may take अङ् as well as क्तिन्।

मित—। स्थागा इति। स्था, गा, पा, पच् एभ्यश्चतुर्भ्यः क्तिन् स्याद् भावे स्त्रियाम्। गेति गै इत्यस्य कृतात्वस्य ग्रहणम्। पा इति पाने न तु पालने। 'आतश्चोपसर्गे' (३२३८) इत्यनेन स्था, गा, पा इत्येभ्यस्त्रिभ्योऽङः 'षिद्भिदादिभ्यः—' (३३८१) इत्यनेन डुपचष् पाकि इत्यस्माच्च प्राप्तस्य अङः अपवादः इत्यर्थः। उपस्थितिरिति। 'द्यतिस्यतिमास्थाम्—' इति (३०७१) इति इत्वम्। संगीतिरिति। गै इत्यस्य 'आदेचः—' इत्यात्वे कृते 'घुमास्थागा—' (२४६२) इति ईत्वम्। अवस्थे-

त्यादौ अङ् प्रत्ययमुत्प्रेक्ष्य समाधत्ते—व्यवस्थायाम् इति ज्ञापकादिति। 'ज्ञापकन्यायस्य असार्वत्रिकत्वेऽप्यत्र प्रवृत्तिः'। एवञ्च यथा व्यवस्थेति अङ्प्रत्ययान्तः शब्दः पाणिनिना प्रयुक्तो न तु 'व्यवस्थित्याम्' इति क्तिन् प्रत्ययान्तस्तथा ज्ञायते तिष्ठतेः क्तिन्नङौ उभावपि स्यातामिति भावः।

३२७४। ऊतियूतिजूतिसातिहेतिकीर्त्तयश्च ॥ ३।३।९७ ॥

टी—। अवतेः 'ज्वरत्वर—' (२६५४) इत्यूठ्। ऊतिः। स्वरार्थं वचनम्। उदात्त इति हि वर्तते। यूतिः। जूतिः। अनयोर्दीर्घत्वं च निपात्यते। स्यतेः सातिः। 'द्यतिस्यति—' (३०७४) इति इत्त्वे प्राप्ते इह इत्त्वाभावो निपात्यते। सनोतेर्वा 'जनसन—' (१५०४) इत्यात्त्वे क्तौ स्वरार्थं निपातनम्। हन्तेर्हिनोतेर्वा हेतिः। कीर्तिः।

These results viz ऊति, यूति, जूति, साति, हेति and कीर्ति are irregularly arrived at with the affix क्तिन् in the feminine sense. ऊतिः—अव्+क्तिन् with ऊठ् (ऊ) in the entire place of 'अव्' by the rule 'ज्वरत्वर—' (2654), Although the form ऊति could be had in connection with क्तिन् without this निपातन yet the mention of it here is for the sake of pitch; for ऊति is of उदात्त pitch as the term उदात्त occuring in the preceding rule 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' (3. 3. 96) is carried down herein. Thus the affix क्तिन् is here उदात्त, otherwise the very root (अव्) would have been उदात्त by the rule 'ञ्नित्यादिर्नित्यम्'। उदात्तत्व of ति as well as दीर्घत्व of उ in यूति (यु+क्ति) and जूतिः (जू+क्ति) is effected by this निपातन। In साति which is derivedas सो+क्ति=साति by 'आदेचः—' (2371)=साति, and not इत्त्व directed by 'द्यतिस्यति—' (3074)

is irregularly effected in addition to उदात्तत्व of the affix. Or, if साति is derived as, सन्+क्ति=साति by 'जनसन—' (1504) then उदात्तत्व only of the affix is irregularly formed; the procedure in the latter case is shorter than that in the former in which there is the operation of 'इत्वाभाव निपातनम्' as an extra one; हेति is derived as हन् or हि+क्ति. In the former case (हन्+क्ति) न् of हन्, by निपातन, is changed into 'इ' and then by 'आद्गुण'—हेति—aweapon, whereas in the latter case (हि+क्ति) the prohibition 'क्ङिति च' is barred and गुण, and उदात्तत्व of क्ति effected by this निपातन. कीर्ति—कृत्+णिच् (स्वार्थे)+क्ति here dy निपातन क्ति bars युच due by 'ण्यासश्रन्थो युच्' as also उदात्तत्व of क्ति।

मित—। ऊतियूति इत्यादि। एते षट् स्त्रियां क्तिन्प्रत्ययान्ता निपात्यन्ते। तत्र प्रत्येकं निपातनप्रकारमाह—अवतेरित्यादिना। अव+क्तिन् इति स्थिते 'ज्वर-त्वर—' (२६५४) इत्यनेन अकारवकारयोरुभयोरेव ऊठि ऊतिरिति। नन्वयं निपातनाभावेऽपि सिध्यति। तत्राह—स्वरार्थं वचनम् इति। कः स्वरइत्यत्राह—उदात्त इति। 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' इति (३।३।९६) हि अव्यवहितं पूर्वसूत्रम्। अत्र उदात्त इत्यनुवर्तते। तेन च क्तिन उदात्तत्वं लभ्यते। अन्यथा 'ञ्नित्यादिर्नित्यम्' इत्यनेन प्रकृतेरेव उदात्तत्वं स्यादिति भावः। एवं यूति जूति प्रभृतीनामपि प्रत्ययस्योदात्तत्वं बोध्यम्। अनयोरिति। 'यूति जूति' इत्यनयोः। दीर्घत्वमिति। 'यु, जु' इत्यनयोरित्यर्थः। चेति। उदात्तत्वं विभक्तेरनयोश्च दीर्घत्व-मित्यर्थः। सातिरिति। षोऽन्तकर्मणि इति धातुः। तस्य सत्वे 'आदेचः—' (२३७१) इति कृतात्वे 'द्यतिस्यति—' (३०७४) इति प्राप्तस्य निपातनान्निषेधे च रूपम्। अथ पक्षान्तरमाह—सनोतेर्वेति। अत्र पक्षे प्रत्ययस्य उदात्तत्वमात्रं निपात्यते। इत्त्वाभावप्रसक्तिस्तु नास्तीति लाघवम्। अर्थं तु भिद्यत इति बोध्यम्। हन्तेरिति। अस्मिन् पक्षे नकारस्य इत्त्वं निपात्यते। तत आद्गुणेन रूपम्। पक्षे हिधातोः क्तिनि तु क्ङिति चेति गुणनिषेधं बाधित्वा गुणो निपात्यते। कीर्तिरिति।

कृत संशब्दन इत्यस्मात् स्वार्थण्यन्तात् 'ण्यासश्रन्थो युच्' इति युचं बाधित्वा क्तिन् निपात्यते। हस्वरपरत्वदीर्घा:।

३२७५। *व्रजयजोर्भावे क्यप् ॥ ३।३।९८ ॥

टी—। व्रज्या। इज्या।

क्यप् after व्रज् and यज् is imployed in the भाववाच्य to form a feminine base. Thus व्रज्या—travelling and इज्या sacrifice, यज् + क्यप् + टाप् सम्प्रसारण by 'वचिस्वपि—' (2412).

मित—। व्रजयजोरिति। अनयोर्भावे क्यप् प्रत्ययः। स्त्रियाम् इत्येव। व्रज्येति। व्रजगतौ। क्यप्। व्रजीति पाठे व्रजीवर्जने। इज्येति। यज + क्यप् + टाप्। 'वचिस्वपि—' (२४१२) इति सम्प्रसारणम्। यज्ञ इत्यर्थः। * ['व्रजीयजो'-रिति पाठान्तरम्]।

३२७६। संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्-भृञिण: ॥ ३।३।९९ ॥

टी—। समजादिभ्यः स्त्रियां भावादौ क्यप् स्यात् स चोदात्तः संज्ञायाम्। 'अजेः क्यपि वीभावो नेति वाच्यम्' (वार्तिक) समजन्त्यस्यामिति समज्या सभा। निषीदन्त्यस्यामिति निषद्या आपणः। निपतन्त्यस्यामिति निपत्या पिच्छिला भूमिः। मन्यतेऽनयेति मन्या गलपार्श्वशिरा। विदन्त्यनया विद्या। सुत्या अभिषवः। शय्या। भृत्या। ईयतेऽनया इत्या शिबिका।

To form a technical term or particular class noun in the feminine gender the affix क्यप् after the roots सम्-अज्, नि—सद्, नि पत्, मन्, विद्, षुञ् i.e सु, शी भृ and इ is used in भाव etc i. e in the भाववाच्य and the affix (in these cases) is उदात्त। 'अजेःक्यपि—' This a Varttika here. It has to be said that when क्यप् follows the

root अज्, it is not to be replaced by वी' by the rule 'अजेर्व्यघञपोः' । Thus समज्या—a council. निषद्या—a market place. षत्व by the rule 'सदिरप्रतेः' । निपत्या—a slippery ground. मन्या—The artery of the neck. शिरा is also spelt as सिरा। सुत्या—The soma-sacrifice or expounding of the somaplant. सु+क्यप्—तकार by the rule 'ह्रस्वस्य पिति कृति तुक्', want of गुण being due to कित्व of the affix. शय्या=शी+क्यप्—But the final (ई) of शी is replaced by अयङ् (अय) by 'अयङ् यि क्ङिति' (2649). Then टाप्। भृत्या—remuneration of servants—तुक् and गुणाभाव as before. इत्या—a palanquin—तुक् and गुणाभाव।

मित—। संज्ञायामिति। संज्ञायां वाच्यायाम् सम अज्, निसद, निपत्, मन्, विद, सु, शी, भृ, इण् एभ्यः स्त्रियां क्यप् इत्याह—समजादिभ्य इति। समजन्ति सङ्गीभवन्तीत्यर्थः। 'अजः क्यपि—' इति वार्तिकमिदम्। 'अजेर्व्यघञपो'रिति क्यपो घञ भिन्नत्वाद वीभावे प्राप्तेऽयमारम्भः। मन्ये एवं यद्यपि बाधकाभावात्। 'समज्या परिषद् गोष्ठी सभा-समितिसंसदः' इत्यमरः। निषद्या आपण इति। 'आपणस्तु निषद्याच' इत्यमरः। 'सदिर प्रते'रिति षत्वम्। पिच्छिला भूमिरिति। उन्नतावनता कर्दमाक्ता वेत्यर्थः। एषु त्रिषूदाहरणेषु अधिकरणे क्यप्। मन्येत्यारभ्य विदेत्यन्तं करणे क्यप्। सिरा इत्यपि दृश्यते। विद्या—वेदादिः। सूयते अभिषूयते सोमः अस्यामिति विग्रहः। सोमयाग इत्यर्थः। 'ह्रस्वस्यपिति कृति—' इति तुगागमः। कित्वाद् गुणाभावः। शय्येति। शीयतेऽस्यामित्याह—करणे क्यप्। 'अयङ् यि क्ङिति' (२६४९) इकारस्य अयङादेशे टापि च यथोक्तं रूपम्। भृत्येति। वेतनमित्यर्थः। तुग् गुणाभावौ। इत्येति। तुग् गुणाभावौ। अत्र कोषो मृग्यः।

२२७७। कृञः श च ॥ ३।३।१०० ॥

दी—। 'कृञः' इति योगविभागः। कृञः क्यप् स्यात्। कृत्या। 'श च'। चात् क्तिन्—क्रिया। कृतिः।

The rule ( योग ) is to be broken up into two parts (1) 'कृञः' and (2) 'श च' Thus (1)कृञ् takes क्यप् in भाव etc, and श as well as क्तिन्। Note that without this योगविभाग we would have कृत्या ( with क्यप् ) and क्रिया ( कृ + श ) only and not कृतिः ( कृ + क्तिन् ) for by proximity चकार would relate to क्यप् only. In क्रिया we have the operation of रिङ् by 'रिङ् शयग्लिङ्क्षु' and of want of गुण due to ङित्त्व of श by 'सार्वधातुकमपित्'. Then इयङ् by 'अचि श्नु —'227.

मित—। कृञ इति। योगविभाग इति। अन्यथा 'कृति'रिति दुर्लभं स्यात्। श चेति चकारेण हि क्यप् एव सम्बध्यते योगविभागात्तु कृञ इत्यत्र क्यपोऽनुवृत्तिः 'शचे'ति चकारेण तु क्तिनोऽनुप्रवेशः। कृत्येति। 'ततः कृत्यां यथायाख्य करिष्यामोऽनिवर्तिनीम्' विष्णुपुराणम्। क्रियेति। कृ + श इति स्थिते 'रिङ् शयक्—' इति रिङ्। प्रत्ययस्य शित्त्वेन ङित्त्वाद् गुणाभावः। 'अचिश्नु—' इतीयङ्।

२२७८। इच्छा ॥ ३।३।१०१॥

टी—। इषेर्भावे शो यगभावश्च निपात्यते। इच्छा। 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्' (वार्तिक)। शो यक् च निपात्यते। परिचर्या पूजा। परिसर्या परिसरणम्। अत्र गुणोऽपि। 'मृग अन्वेषणे' चुरादावदन्तः। अतो लोपाभावोऽपि। शे यकि णिलोपः—मृगया। अटतेः शे यकि टशब्दस्य द्वित्वम्। पूर्वभागे यकारनिवृत्तिर्दीर्घश्च। अटाट्या। 'जागर्तेरकारो वा' (वार्तिक)। पक्षे शः। जागरा-जागर्या।

The term इच्छा is irregularly derived in भाववाच्य with the affix श and no यक् ( which was due by 'सार्वधातुके यक्' ( 2746 ) as श is both a सार्वधातुक and an affix in the भाववाच्य ). इष् + श = इच्छ + श by 'इषु गमियमां छः' (2460) = Then इच्छा with टाप् by rules of combi-

nation ( सन्धि )। 'परिचर्य्यापरिसर्य्या—' This is a Varttika here. These words viz परिचर्य्या, परिसर्य्या, मृगया and अटाट्या are irregularly formed with श and यक्. परि+चर्+श+यक्+टाप्। परि+सृ+श+यक्+टाप्। Here गुण also is irregularly effected for श being शित् and a सार्वधातुक too, and therefore ङिद्वत् by the rule 'सार्वधातुकमपित्' and there was no chance of गुण by 'क्क्ङिति च'। In मृगया the root is मृग to search. In अटाट्या, श and यक् are applied to अट् (—to go ) to have अट्या which then is duplicated and in the forepart of the duplicate or अभ्यास, the यकार disappears and the final vowel is lengthened—all these three operations are done irregularly. अटाट्या—rambling aimlessly. 'जागर्तेः—'This is the second Vartika here. The root जागृ takes 'अ'in place of श optionally in the भाववाच्य. जागरा—keeping late hours—जागृ+अ+टाप्+गुण by 'सार्वधाकार्द्ध—'। जागर्य्या—This also means the same thingजागृ+श+यक्+टाप्. Here गुण takes effect by the rule 'जग्रोऽविचिण्णल्ङित्सु' ( 2480 ) as the affix श is a ङित् सार्वधातुक।

मित—। इच्छेति। भावेऽयं निपात्यते स्त्रियां। तदाह—इषेर्भावे इति। यगभावश्चेति। शप्रत्ययस्य शित्त्वात् 'तिङ् शित्—' इति सार्वधातुकत्वे तस्य भावे विहितत्वेन भाववाचकत्वे च 'सार्वधातुके यक्' ( २७५६ ) इति प्राप्नोति। स च यक् निपातनात् प्रतिषिध्यत इत्यर्थः। इच्छेति। 'इषु गमियमां छः' ( २४०० ) इति षकारस्य छत्वे टापि च रूपम्। 'परिचर्य्या परिसर्य्येति—वार्तिकमिदम्। एते चत्वारः शप्रत्ययान्ताः स्त्रियां भावे निपात्यन्ते। यक् चेति। 'सार्वधातुके यक्' इत्यस्यात्र प्रतिषेधो नास्तीत्यर्थः। एवमन्यत्र। परिसर्य्येति। परिपूर्वात् सृधातोर्भावे शो यक् च निपात्यते। गुणोऽपीति निपात्यते इति शेषः। 'सार्वधातुकार्द्ध—' इति गुण इत्यर्थः। शप्रत्ययस्य शित्त्वाद् अपित्सार्वधातुकतया ङित्त्वात् गुणे

अप्राप्तं गुणोऽपि निपात्यत इत्यर्थः। मृगयेति साधयति—मृग अन्वेषण इति। अस्य अकारान्तत्वोपदेशात् 'अतो लोपः' (२३०९) इत्यल्लोपे प्राप्ते आह—अतो लोपाभावोऽपीति। निपातनादिति भावः। णिलोप इति। 'णेरनिटि' इति णिलोप इत्यर्थः। णिच् चात्र स्वार्थे इति मन्तव्यम्। मृगया आखेटकम्। अटाट्येति व्याचष्टे—अटतेरिति। टा शब्दस्य द्वित्वमिति। निपातनादिति भावः। पूर्वभागे इति। अभ्यासे इति यावत्। यकारनिवृत्तिर्दीर्घश्चेति। निपात्यते इति। न च 'हलादिः शेषः' इत्येव यलोपे सिद्धे यकारनिवृत्तिरिति न वक्तव्यमिति वाच्यम्। हलादिशेषसूत्रस्य यङ्द्वित्वविषयत्वादिहाप्रवृत्तेरित्याहुः। अटाटेति। इया भ्रमणमित्यर्थः। यङन्तादटतेस्तु 'अप्रत्ययात्' (२३७९) इति वक्ष्यमाणेन अप्रत्ययेन अतो लोपे यलोपे च 'अटटा' इत्येव रूपमिति बोध्यम्। जागर्तेरिति। इदमव द्वितीयं वार्त्तिकम्। जागृधातो रप्रत्ययो वा स्याद् भावे स्त्रियाम्। पचे शः। जागरेति। अप्रत्यये इदमुदाहरणम्। 'सार्वधातुकार्द्ध—' इति गुणः। टाप्। शे आह—जागर्य्येति। यस्य शित्वेन सार्वधातुकत्वाद् यक्। 'जाग्रोऽविचिण्णल्ङित्सु' (२४८०) इति गुणः। प्रत्ययस्य अपित्सार्वधातुकत्वेन ङित्त्वमित्युक्तम्।

२३७९। अ प्रत्ययात् ॥३।३।१०२॥

टी—। प्रत्ययान्तेभ्यो धातुभ्यः स्त्रियामकारप्रत्ययः स्यात्। चिकीर्षा। पुत्रकाम्या।

The affix 'अ' is attached to roots, ending in any other affix to form a feminine base (in the भाववाच्य), चिकीर्षा—पुत्रकाम्या etc. Note that टाप् comes naturally in all these feminine cases.

मित—। अप्रत्ययादिति। अ इति लुप्तप्रथमाविभक्तिकम्। प्रत्ययादित्यनेन तदन्तस्यग्रहणम्। श इति च निवृत्तम्। भावे अकर्त्तरि कारके इति तु वर्त्तते। तदाह—प्रत्ययान्तेभ्यो धातुभ्य इति। भावादाविति शेषः। चिकीर्षेति। करोतेः सनि 'चिकीर्ष्' इति सन्नन्तो धातुः। तस्माद् अः टाप्। पुत्रकाम्येति। आत्मनः पुत्र-

मिच्छति इच्छार्थे 'काम्यच्' इति काम्यचि 'पुत्रकाम्य' इति नामधातुः। तस्मात् अ टाप् च। एवं जिज्ञासा पापठ्या धनकाम्यादयः।

३२८०। गुरोश्च हलः ॥३।३।१०२॥

टी—। गुरुमतो हलन्तात् स्त्रियामकारः स्यात्। ईहा। ऊहा। 'गुरोः' किम्? भक्तिः। 'हलः' किम्? नीतिः। 'निष्ठायाः सेट इति वक्तव्यम्' (वार्तिक)। नेह। आप्तिः। 'तितुत्र—' (३१६३) इति नेट्। दीप्तिः। 'तितुत्रेष्वग्रहादीनामिति वाच्यम्' (वार्तिक)। निगृहीतिः। निपठितिः।

The affix 'अ' is imployed after a root, having a long vowel and ending in a consonant in the feminine sense in भाव and other than-कर्तृवाच्य। Thus ईह+अ+टाप्=ईहा—a striving attempt. ऊह (to debate)+अ+टाप्=ऊहा a debating through judgment. भक्तिः—here there being no long vowel the root takes क्तिन् the general affix and not 'अ'. नीति-here the vowel is long but there being no हल् following the root takes क्तिन्. 'निष्ठायां सेटः—' This is a Varttika here. It must be said that the affix is appointed after such गुरुमान् and हल् ending root as is सेट् or have इट् in निष्ठा (क्त क्तवतु) and none else. Thus आप्तिः—the root आप is both गुरुमान (having a long vowel) and हल्ending but it is अनिट् in निष्ठा (as आप्त) and therefore the rule 'गुरोश्च—' does not apply. consequently क्तिन् and not अ is appointed after it. दीप्तिः—with क्ति इट् here being prohibited (in निष्ठा by the rule 'तितुत्रतथसिसुसरकसेषु च'—(3163). 'तितुत्रेषु—' This is the second Vartika here. It has to be stated that the prohibition of इट् under the rule 'तितुत्र—' applies to

roots other than ग्रह् etc ( ग्रह, स्निह्, कुप् and पठ् ). Thus निग्रहीतिः infliction of punishment—इट्, and दीर्घ by 'ग्रहोऽलिटि'। निपठितिः—a deep study—with इट्. Similarly उपस्निहितिः, and निकुपितिः as भाष्य has.

मित—। गुरोश्चेति। गुरोरिति हल इत्यस्य न विशेषणं तस्य गुरुत्वासम्भवात्। तेन गुरुमान् कश्चिदन्य आक्षिप्यते। स च धातुरेव। दीर्घस्वरमान् इत्यर्थः। हल इत्यनेन तु तदन्तत्वं लभ्यम्। धातोरित्यनुवर्तमानात्तदाह—गुरुमतो हलन्तादिति। धातोरिति भावे अकर्तरि च कारके इत्यध्याहारः। ईहा चेष्टा। ऊहा वितर्कोऽध्याहारो वा। लघूपधत्वाभावाद् गुणेन। भक्तिरिति। गुरुमत्त्वाभावात् क्तिन्नेव। नीतिः। हलन्तत्वाभावात् क्तिन्। 'निष्ठायां सेट—' इति वार्तिकमिदम्। 'गुरोश्च हलः' इत्यनेन यस्मादकारो विधित्सितः स चेन्निष्ठायां सेट् तदैव तस्मादकारो ( प्रत्ययः ) विधीयते नान्यथेति वक्तव्यमित्यर्थः। आप्तिरिति। आप्धातोर्निष्ठायां सेटत्वाभावादकारो न किन्तु क्तिन्नेव। दीप्तिरित्यत्र इठभावश्च आह—'तितुत्रे'ति। 'तितुत्रेषु—' इति इदमपि द्वितीयं वार्तिकम्। तितुत्रेति सूत्रे ग्रहादिभिन्नानामेव इट् प्रतिषिध्यते न तु ग्रहादीनामपीति वाच्यम् इत्यर्थः। ग्रहादयश्च चत्वारो भाष्ये पठिताः। उदाहृताश्च तत्रैव—निग्रहीतिः, उपस्निहितिः, निकुपितिः, निपठितिरिति। निग्रहीतिरिति। अनेन इटि 'ग्रहोऽलिटि' इति दीर्घः। 'ग्रहिज्या—' ( २४१२ ) इति सम्प्रसारणम्। निग्रह इत्यर्थः। उपस्निहितिरादरः। निकुपितिः प्रबलः कोपः। निपठितिः—पाठदार्ढ्यम्।

२२८१। षिद्भिदादिभ्योऽङ् ॥३।३।१०४॥

**टी—। षिद्भ्यो भिदादिभ्यश्च स्त्रियामङ्। जॄष्—जरा। त्रपूष्—त्रपा। भिदा—'विदारण एवायम्' ( वार्तिक )। भित्तिरन्या। छिदा 'द्वैधीकरणे' ( वार्तिक )—अन्यत्र छित्तिः छिद्रम्। गुहा—'गिर्योषध्योश्च' ( वार्तिक )। अत्र गिरेरेकदेशो गिरिशब्देन विवक्षितः। अन्यत्र गूढिः। आरा, हारा,**

कारा, तारा, धारा—अत्र दीर्घत्वं निपात्यते। 'आरा शस्त्र्यामिति वक्तव्यम्' (वार्तिक) *। आर्तिरन्या। आङ्योऽर्त्तेश्च क्तिन्। रेखा लेखा (गणसूत्रम्)—अत्र गुणः। चूडा (गणसूत्रम्); 'धारा प्रपात इति वक्तव्यम्' (वार्तिक) *। धृतिरन्या। 'क्रपेः मृजेः (गणसूत्र)—' क्रपा मृजा इत्यादि।

The affix अङ् is employed after those roots which are षित् or षdropping and the roots belonging to the भिदादि class. Thus जृष् (to become old) + अङ् = जरा, here the prohibition of गुण due by 'क्ङिति च' is barred by 'ऋदृशोऽङि—' (2406). विदारणे—' This is Varttika here. The root भिद (or भिदिर विदारणे रुधादि) takes अङ् only when the sense is piercing. Otherwise भित्ति with क्तिन् in the sense of a wall. 'द्वैधीकरणे'—This is the second Vartika or ganasutra ? here. छिद (or छिदिर) takes अङ् in the sense of द्वैधीकरण or dividing into two. Otherwise छित्तिः—with क्ति, the sense being a hole. For the roots belonging to the भिदादि class see 'भित—' below. 'गिर्योषध्योः—' This the third Varttika here. The root गुह takes अङ् in the sense of a hill i.e part of it or the cave and a medicinal plant or herb to give गुहा ; otherwise गूढिः। आरा etc—roots underlying these results are respectively ऋ to go, हृ to take, कॄ to scatter, तॄ to pass over and धृ (ञ्) to hold. Here in all these cases, first गुण, inspite of the prohibition 'क्ङिति च' takes effect by 'ऋदृशोऽङि गुणः' (2406) and then the penultimate of them are all lengthened irregularly ; irregularly because there is no cause of lengthening. 'आराशस्त्र्याम—' This is the fourth

Varttika here. When आरा means शस्त्री or a whip then only the root ऋ takes the affix अङ्, otherwise it takes क्तिन् giving आर्तिः:— आ + ऋ + ति ( आ + ऋति ) वृद्धि being the Single Substitute here by 'उपसर्गादृति धातौ'। 'रेखा लेखा'—This is a गणसूत्र। The root लिख् taking अङ् गुण is irregularly effected and ल optionally changed into र। चूडा—This is another गणसूत्र। 'धाराप्रपाते—This is the fifth Varttika here. धारा is derived with अङ् ( added to धृ ) in the sense of a waterfall only or falling from a great height.—Otherwise धृतिः patience. मृजाः—गणसूत्र—Showing that मृज् to purify takes अङ्. त्रपा—त्रप् + अङ्.

भित—। षिद्भिदादिभ्यो इति। स्त्रियामङिति। भावे अकर्तरि च कारके इति योज्यम्। जॄष् वयोहानौ। जरेति। क्ङिति चेति निषेधं बाधित्वा 'ऋदृशोऽङि गुणः' ( २४०२ ) इति गुणः। त्रपा लज्जा। 'व्रीडस्त्रपा व्रीडा लज्जा' इत्यमरः। 'विदारणे—' इति वार्तिकमिदम्। अभिप्रेतार्थे भिदिर विदारणे इत्यस्मादङ्। अन्यस्मिन् 'भित्तिः स्त्री कुड्यम्' इत्यमरः। 'द्वैधीकरणे' इति इदमेव द्वितीयं वार्तिकम्। अन्यत्र छित्तिः छिद्रमित्यर्थः। गुहा गिर्योषध्योरिति इदमेव तृतीयं वार्तिकम्। गिरिशब्दस्यार्थमाह—गिर्येकदेश इति। कन्दरादावित्यर्थः। अस्मिन् ओषधौ चार्थे गुहतेरङ्। गुह्यते आत्मा अस्यामित्यधिकरणेऽङ्। अन्यथा क्तिन्नित्याह—गूढिरिति। आराहारेति। ऋ, हृ, कॄ, तॄ एभ्य इति क्रमेणात्र धातवः। एभ्यः अङि 'क्ङिति चेति' निषेधं बाधित्वा 'ऋदृशोऽङि गुणः' ( २४०६ ) इति गुणे विहिते सति 'अत उपधायाः' ( २२८२ ) इति निपातनाद्वृद्धिः। तदाह—अत्र दीर्घत्वमिति। उपधाया इति शेषः। अत्र दीर्घस्य कारणाभावेऽपि तत्प्रवृत्तौ निपात्यत इति वचनम्। 'आरा शस्त्र्याम्—' इति इदमेव चतुर्थंवार्तिकम्। शस्त्री प्रतोदः। आर्तिरन्येति। आङ्पूर्वोऽर्तेश्चेति। आङ्पूर्वाद् ऋ गतावित्यस्मात् क्तिन् इत्यर्थः। ततः आ + ऋति इति स्थिते 'उपसर्गादृति धातौ' इति वृद्धिरेकादेशः। रेखा लेखा इति गणसूत्रमिदम्। अत्र गुण इति।

निपात्यत इति शेषः। लिख + अङ् इति स्थिते क्ङिति चेति निषेधं बाधित्वा 'पुगन्त लघूपधस्य—' इति गुणः। लकारस्य पक्षे रेफादेशश्च। चूडा इति गणसूत्र मिदम्। 'धाराप्रपाते—' इति इदमत्र पञ्चमं वार्तिकम्। उर्द्धदेशाद् जलादि-प्रपतनं प्रपातः। अस्मिन्नेवार्थे ह्रस्वोऽङ्। अस्य प्रायिकत्वेनत्—"धारा रामपरस्त्रयस्य" इत्यादि दर्शनात्। अन्यत्र क्तिन्नित्याह—धृतिरस्येति। क्षमा धैर्यं वा। भिदादिगणः— भिदिर विदारणे, छिदिर द्वैधीकरणे, विद ज्ञाने, क्षिप प्रेरणे, डुधाञ् धारणपोषणयोः, मिधृ मेधृ हिंसासेचनयोः, आरती, हृञ् हरणे, चि चय, क्षि निवासगत्योः, तॄ प्लवनतरणयोः, धृञ् धारणे, लिख अक्षरविन्यासे, चुद प्रेरणे, पीड़ अवगाहने, टुवप् बीजसन्ताने, कॄ विक्षेपे, वसनिवासे, मृजू शुद्धौ, 'कृप कृपायाम्' इति।

३२८२। चिन्तिपूजिकथिकुम्बिचर्चश्च ॥३।३।१०५॥

**दी—। अङ् स्यात्। युचोऽपवादः। चिन्ता। पूजा। कथा। कुम्बा। चर्चा। चात्तुला।**

These चुरादि roots take अङ् in feminine sense in the भाववाच्य। As चुरादि roots take णिच् ( स्वार्थे ) so this bars the rule 'ण्यासश्रन्थो युच्' ( 3284 ) Thus चिन्ता etc.

मित—। चिन्तिपूजीति। अङ् स्यादिति भावे अकर्तरि च कारके इति शेषम्। चिन्ता पूजेति। एते ( चिन्तिप्रभृतयः ) चुरादयः अत एव स्वार्थण्यन्तत्वाद् 'ण्यासश्रन्थो युच्' इति युचि प्राप्ते वचनम्। तदाह—युचोऽपवादः। न तु क्तिनो-ऽपवादः। ण्यन्तेभ्योस्तस्या प्राप्तेरिति मन्तव्यम्। सूत्रे चकारोऽनुक्तं समुच्चिनोतीत्याह—चादिति। तुला। तोलयतेरङ्। णिलोपः।

३२८३। आतश्चोपसर्गे ॥३।३।१०६॥

**दी—। अङ् स्यात्। क्तिनोऽपवादः। प्रदा। उपदा। 'श्रदन्तरोरुपसर्गवद्वृत्तिः' ( वार्तिक )। श्रद्धा। अन्तर्धा। उपसर्गे घोः किः ( ३२७० )—इत्यनेन किः। अन्तर्धिः।**

Any root ending in आ takes the affix अङ् in the भाववाच्य and the other-than-कर्तृवाच्य provided it (the root) is preceded by any उपसर्ग as an उपपद:. This (being a special injunction of lesser scope supersedes क्तिन् (स्त्रियां क्तिन्—3272) Thus—प्रदा—प्र+दा+अङ्—giving away उपदा,—a present. 'श्रदन्तरो—' This is Varttika. It has to be said that श्रत् and अन्तर् behave like an उपसर्ग i.e they are to be treated as उपसर्गs and not indeclinables when the affix अङ् in one case and the affix अङ् and in other follow such (आकारान्त) roots. Thus श्रद्धा—श्रत्+धा+अङ्—respect, and अन्तर्धा or अन्तर्धि disappearance with अङ् and कि।

मित—। आत इति। उपसर्गे उपपदे सति आदन्ताद् धातोरङ् प्रत्ययः स्यात् स्त्रियां भावे अकर्तरि च कारके इत्यर्थः। 'स्त्रियां क्तिन्' (३२७२) इत्युत्सर्गः। अयं चापवादापरनामा विशेषविधिः। ततः 'वासरूपोऽस्त्रियाम्' इत्यनया परिभाषया अपवादोऽयमुत्सर्गस्य नित्यमेव बाधक इति मत्वा आह—क्तिनोऽपवाद इति। प्रदेति प्रदानमित्यर्थः। उपदेति उपहार इत्यर्थः। ['उपायनमुपग्राह्यमुपहारस्तथोपदा' इत्यमरः]। श्रदन्तरोरिति वार्तिकमिदम्। श्रदिति अन्तरिति चाव्ययम्। तयोरुपसर्गत्वाभावेन अङ्विधावप्राप्तावयमारम्भः। श्रदित्यस्य अङि परे अन्तरित्यस्य तु अङि कौ च प्रत्यये परे उपसर्गत्वमिति मन्तव्यम्। अत एवान्यत्र व्याख्यातमपि 'उपसर्गे घोः—' इत्येतत् सूत्रमत्रोपन्यस्यति। अन्तर्धा अन्तर्धिरिति। अन्तर्धानमित्यर्थः।

३२८४। ण्यासश्रन्थो युच् ॥३।३।१०७॥

दी—। अकारस्यापवादः। कारणा। हारणा। आसना। 'घट्टिवन्दिविदिभ्यश्चेति वाच्यम्' (वार्तिक)। घटना। वन्दना। वेदना। इषेरनिच्छार्थस्य (वार्तिक)। अन्वेषणा। 'परेर्वा' (वार्तिक)। पर्येषणा—परीष्टिः।

The affix युच् is employed after roots ending in णि i-e after causal roots and the roots आस and श्रन्थ् in the feminine sense in the भाववाच्य and in the other-than- कर्तृवाच्य। This overrules the affix 'अ' ( under 'अ प्रत्ययात्' 3279 ). Thus कारणा ( कृ + णिच् + युच् ) causing to do ; हारणा ( हृ + णिच् युच् ) causing to carry etc. Note that this supersedes अ as far as णि is concerned ; for आस् and श्रन्थ् has no chance of having अ affixed after them as they are not causal. Thus तत्त्वबोधिनी says—आस्यतेऽस्यामितिविग्रहः for the formation of आसना which thus means a seat. 'घट्टिवन्दि—'

This is a Varttika here. घट्टि etc are not causal. In this case they would have not युच् by the rule itself. They are घट्ट etc mentioned with the sffix इक् by 'इक्श्तिपौ धातुनिर्देशे' The root विद् giving वेदना with युच् here means 'to have' ( i. e. लाभार्थे ) but meaning to know it gives वित्तिः knowledge—with क्तिन्। 'इषेरनिच्छार्थस्य—' This is another Varttika here—(It has to be said that) the root इष meaning other-than-wishing i.e to search takes the affix युच् ( अन—by 'युवोरनाकौ' 1247 ). अन्वेषणा—searching by युच्। 'परेर्वा' This is the third Vartika here. The root इष् preceded by परि takes युच् optionally. Thus पर्य्येषणा ( युच् ) and परीष्टि ( क्तिन् ) —Searchiug everywhere.

ण्यास—। ण्यासश्रन्थ इति। णि, आस् श्रन्थ एषां द्वन्द्वात् पञ्चम्येकवचनम्। णि इत्यनेन तदन्तं लक्ष्यते। तेन ण्यन्तात् आसः श्रन्थश्च धातोः स्त्रियां युच् स्याद् भावे अकर्तरि कारके इत्यर्थः। अकारस्यापवाद इति। 'अप्रत्ययात्' (३२७९) इति विहितस्याप्रत्ययस्येत्यर्थः। ण्यन्तादेव युच् अप्रत्ययस्यापवाद इति प्रतिपत्तव्यम्। न तु इतरयोरपि। तयोर्ण्यन्तत्वाभावात् प्रत्ययान्तत्वाभावेन अप्रत्ययस्य तत्राप्रसक्तिः। कारणा हारणा इति। ण्यन्तयोः युच्। आसनेति।

आस्यतेऽस्यामिति विग्रहः। 'ण्वुच्लोप्युत्' इति ण्युत् प्रत्यये तु आसना। "न च स्त्रीप्रत्यये वासरूपविधिर्नेति शङ्क्यम्। युचः स्त्रीप्रकरणस्थत्वेऽपि अपवादत्वस्याभावात्-भावादि'ति तत्त्वबोधिनी। 'घटिवन्दि—' इति वार्तिकमिदम्। एषां ण्यन्तत्वाभावाद युचोऽप्राप्तेर्वचनम्। घटि इत्यादिषु 'इक्श्तिपौ धातुनिर्देशे' इति इका निर्दिष्टम्। वेदनेति—अत्र 'लाभार्थकस्यैव विदेर्ग्रहणम्। व्याख्यानात्। ज्ञानार्थकात्तु तस्मात् 'स्त्रियाम्—' इति क्तिन्नेव। वित्तिः। 'विदवेदनाख्याननिवासेषु' इति चुरादिस्तु विदः ण्यासश्रन्थ' इत्येव युचि वेदनेति मन्तव्यम्। इषेरनिच्छार्थस्येति। इदमव वार्तिकान्तरम्। इच्छाभिन्नार्थकस्य (मार्गणार्थकस्येति यावत्) इषेः युच् प्रत्ययो वक्तव्य इत्यर्थः। अन्वेषणेति। एषणा इत्यपि। उपसर्गोपपदत्वानियमात्। उपसर्गग्रहणं तु उत्तरवार्तिकस्य विशिष्टोपसर्गपूर्वकत्वादिति ध्येयम्। परे र्वेति इदमव तृतीयं वार्तिकम्। परिपूर्वादिषेर्युच् प्रत्ययो वा स्यादिति वक्तव्यमित्यर्थः। अत्रापि इषेरनिच्छार्थकस्यैव ग्रहणम्। इच्छार्थकस्य तु 'इच्छा' (३२७८) इत्येव। पर्येषणा इति। परि इष्+युच्—गुणः। परीष्टिरिति। परि+इष+क्तिन्। कित्त्वाद गुणाभावः।

३२८५। रोगाख्यायां ण्वुल् बहुलम् ॥ ३।३।१०८ ॥

**दी—।** प्रच्छर्दिकाव्याधिः। प्रवाहिका ग्रहणी। विचर्चिका पामा। क्वचिन्न। अर्दं—शिरोऽर्त्तिः *। 'धात्वर्थनिर्देशे ण्वुल् वक्तव्यः (वार्तिक)। आसिका। शायिका। 'इक्श्तिपौधातुनिर्देशे' (वार्तिक)। पचिः—पचतिः। 'वर्णात् कारः' (वार्तिक) निर्देश इत्येव। अकारः। ककारः। 'रादिफः' (वार्तिक)। रेफः। 'मत्वर्थाच्छः' (वार्तिक)। बहुलवचनादकारलोपः। मत्वर्थीयः। 'इणजादिभ्यः' (वार्तिकः)। आजिः। आतिः। 'इञ् वपादिभ्यः' (वार्तिकः)। वापिः। वासिः। स्वरे भेदः। 'इक् कृष्यादिभ्यः' (वार्तिकः)। कृषिः। गिरिः।

The affix ण्वुल् ( अक ) is employed Variously ( बहुलम् ) after roots to form such feminine bases as are names of certain diseases. Thus प्रच्छादिका प्र + चर्द + ण्वुल + टाप by 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः' ( 463 ) Vomitting. प्रवाहिका—Diarrhoea or dysentery. विचर्चिका an eruptive disease in the skin. क्वचिन्न i.eण्वुल due to बहुलग्रहण in the rule does not take place somewhere ; e.g अर्द takes क्तिन् ( and not ण्वुल् ) —शिरोऽर्तिः—headache or, the pain in the head शिरस अर्द + क्ति । धात्वर्थनिर्देशे—' This is a Vartika here : The affix ण्वुल् should be enjoined after roots in the sense of a Verb or action to form feminine bases like आसिका ( आस् + ण्वुल् = टाप् )—seating, शायिका (शी + ण्वुल् + टाप् इत्वि due to नित्व) sleeping etc. 'इक्श्तिपौ—' This is the second Vartika here. The affix इक् (इ) and श्तिप् ( ति ), in the masculine sense, are attached to roots when the utterance or nention of them is sought for; thus पचिः—पचतिः for the mention of पच्. Similarly वदि वदति etc. No गुण in पचि and वदि due to कित्व of the affix ( इक् ) and तिप् takes place after पच् and वद् in पचति and वदति due to शित्व of श्तिप् which is anidication of its being a सार्वधातुक. Thus although in पचति etc there is not sense of a nominative yet ति takes place from the fact of Panini's own behaviour in 'उपसर्गात् सुनोतिसुवति—' etc. 'वर्णात् कारः'—This is the third varttika here. When the mention of an alphabet is intended the very alphabet takes the affix कारः. Thus अ + कार = अकार etc. Note that although the affix कार is here not employed after a root yet it ( कार ) is treated as a कृत् affix (and not a तद्धित one) on the strength of its sphere of action ( अधिकारबलात् ). Thus as a प्रातिपदिक

the derivative gets सुप् ( सु, औ, जस् etc). Note also that the क of affix ( कार ) is significant and not an indicatory. More over the affix not being an आर्द्धधातुक, the base अ when कार is appointed after it does not elide by 'अतो लोपः—' (2372) nor does the very affix get इट् by 'आर्द्धधातुकस्येट—'. The term 'बहुल' in the rule being taken understood after the varttkas also some where the affix ( कार ) is not appointed after the alphabets, cp—'अस्य च्वौ' the enunciation of Panini for 'अकारस्य च्वौ. It is important to note also that the atfix ( कार ) sometimes used after two or three letters taken jointly in the form of a word eig एवकार, वाकार etc (also काकार ( क+आ+कार ) etc. 'रादिफः'—This is the fourth varttika here. The affix इफ is appointed after the alphabet र takes effect—Thus र+इफ=रेफः the affix कार also takes effect—रकार ; as the prohibition अस्त्रियाम् 'वाऽसरूप: अस्त्रियाम्' does not apply for the varttikas beginning from 'धात्वर्थनिर्देशे—' and ending in 'मत्वर्थाच्छः' here are enjoined not in the feminine sense but in that of masculine. 'मत्वर्थात्—' This is the fifth varttika here. The affix छ has to be stated taking place after the term मत्वर्थ so as to give मत्वर्थीय, छ, becoming ईय and the final अकार being dropped by the rule 'यस्येतिच' due to the expression 'बहुलम्' in the rule 'रोगाख्यायाम्—' (3284) although the affix छ is here not a तद्धित affix but a कृत् one, for the term मत्वर्थ, though a प्रातिपदिक, is treated as a root. Note that here the affix छ is here appointed in the very same sense of the base मत्वर्थ। Thus 'मत्वर्थीयः प्रत्ययः means the same as मत्वर्थः प्रत्ययः an affix inpressing the name of मतुप्। Due to the

अनुवृत्ति of 'बहुलम्' sometimes the affix क does not take place after मत्वर्थ as in 'तसी मत्वर्थे' etc sometimes it is used in the sense 'to be' (भावार्थे) as in 'शैषिकान्मतुवर्थीयात्' etc; others, however, hold that this क is not what is enjoined by this varttika but what is expressed in the rule 'गहादिभ्यश्च' (8362). 'इणजादिभ्यः'. This is the sixth varttika here. This (इण्) is enjoined in the feminine sense आजिः—अज + इण्, वृद्धि due to णित्व। अज् not being replaced by वी due to बहुल here; आतिः—अत + इण्। 'इञ्—' This is the seventh varttika here. वापिः वप् + इञ् a large tank cp—'वापो तु दीर्घिका'—Amara. स्वरे भेदः i.e between the affix इण् and इञ्; cp 'ञ्नित्यादिर्नित्यम्'। 'इक्—' This is the eighth varttika here. कृषिः = कृष् + इक् no गुण due to कित्त्व—agriculture. गिरिः गृ + इक् इत्त्व and रपरत्व of ऋ by 'ऋत इद्धातोः and 'उरण् रपरः'। गिरि is feminine and means to swallow but not mountain here.

मित—। [ * प्रच्छर्दिका। प्रवाहिका। विचर्चिका··शिरोऽर्त्तिः—इति तत्त्वबोधिनी सम्मतः पाठः। अत्र वमिः, ग्रहणी, पामा अर्दं इति शब्दचतुष्टयं नास्ति ]। रोगाख्यायामिति। धातोर्ण्वुल् प्रत्ययो बहुलं स्यात् स्त्रियां प्रत्ययान्तश्चेत् कस्यचिद् रोगस्य संज्ञा भवतीत्यर्थः। बहुलग्रहणात् प्रत्ययस्य क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिरिति बोध्यम्। तथाचोक्तम्—

"क्वचित् प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव।
विधेर्विधानं बहुधा समीक्ष्य चतुर्विधं बाहुलकं वदन्ति॥" इति।

प्रच्छर्दिकेति। छर्द वमने। प्रपूर्वादस्माद् ण्वुल्। 'युवोरनाकौ' (१२४७) इति वोरकादेशः। ततः स्त्रियां टापि परे 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः' (४६३) इति कात् पूर्वस्य अकारस्य इदादेशः। वमिरित्यर्थनिर्देशः। अत्र वमिः ग्रहणीत्याद्यर्थनिर्देशः प्रक्षिप्त इवाभाति। तत्त्वबोधिन्यामदर्शनात्। प्रवाहिकेति।

प्रकर्षेण रसरुधिरादिकं वहति सारयतीति विग्रहः। वहतेरदुपधत्वाद् 'अत उपधायाः' (२४८८) इति वृद्धिः। ग्रहणीति। 'ग्रहणीरुक् प्रवाहिका' इत्यमरः। यद्वा अन्तर्भावितण्यर्थोऽत्र वहति। प्रवाहयति सुदृढ़ं दृढ़मलादिकं प्रवर्तयतीति विग्रहः। विचर्चिकेति—चर्च अध्ययने। उपसर्गवशात् प्रत्ययमहिम्ना चासर्थे वृत्तिः। 'पामा विचर्चिका' इत्यमरः। चर्मरोगविशेष इति यावत्। क्वचिन्नेति। बहुलग्रहणादिति भावः। अर्दैति। शिरोऽर्तिरित्यत्र धातुनिर्देशोऽयम्। अर्द हिंसायाम् इति धातुः। अर्द्दतेः क्तिन्। शिरोऽर्तिः शिरःपीड़ा इत्यर्थः। 'तितुत्रतथसिसु—' (३१६३) इति इट् प्रतिषेधः। 'धात्वर्थ निर्देशे—' इति—वार्तिकमिदम्। धात्वर्थनिर्देश इत्यस्य क्रियानिर्देश इत्यर्थः। अत्र वार्तिकेषु 'रोगाख्यायाम्—' इति सूत्राद् 'बहुलम्' इत्यनुवर्तते इति व्याख्यातारः। तेन—क्रियानिर्देशे गम्ये स्त्रियां धातोर्बहुलं ण्वुल् स्यादिति वक्तव्यमित्यर्थः। आसिकेति। आसतेर्ण्वुल्। टापि इदादेशः प्राग्वत्। आसनमित्यर्थः। शायिकेति। शयनमित्यर्थः। 'अचो ञ्णिति' (२५४) इति वृद्धिः। 'इक्श्तिपौ—' इति इदमत्र द्वितीयं वार्तिकम्। धातोरिक् प्रत्ययः श्तिप् प्रत्ययश्च बहुलं स्याद् धातोः स्वरूपे निर्देष्टव्ये इत्यर्थः। इत आरभ्य 'मत्वर्थाच्छः' इति यावद् वार्तिकेषु स्त्रियामिति नानुवर्तत इति व्याख्यातमाकारे। पचिरिति पच् धातुरित्यर्थः। इका निष्पन्नोऽयम्। प्रत्ययस्य कित्त्वाद् गुणवृद्ध्योरभावः। पचतिरिति। पच् धातुरित्यर्थः। श्तिपा निर्देशः। प्रत्ययस्य शित्त्वात् 'तिङ्शित्—' इति सार्वधातुकत्वम्। ततः 'कर्तरि शप्' इति शपः। यद्यप्यत्र कर्तृवाचकत्वं नास्ति तथापि 'उपसर्गात् सुनोति सुवति—' 'अर्ति पिपर्त्योश्च' इत्यादिनिर्देशात् शप्। एवं भावकर्मणोरभावेऽपि क्वचित् यक्। यथा 'विभाषा लीयतेः' इत्यादौ। अत्र हि लीङाङो यका निर्देशो न तु श्नना इति तत्रैव स्पष्टम्। यत्तु शित्त्वसामर्थ्यादत्र शबादय इति वदन्ति। तन्न। पिबतिः गायतिरित्यादौ पिबाद्यादेशप्रवृत्त्या चात्वनिवृत्त्या च शित्त्वस्य चरितार्थत्वात्। बहुलग्रहणादिक्श्तिपौ क्वचिन्न। 'वदव्रज—' 'गुप्तिज्किद्भ्यः सन्', भियोऽन्यतरस्याम्, 'क्रञः श च' इत्यादि निर्देशात्। 'वर्णात् कार' इति। इदमत्र तृतीयं वार्तिकम्। निर्देशे इतीवेति। वर्णनिर्देशे इति यावत्। तथा च—अ, क इत्यादि वर्णनिर्देशे कर्तव्ये अ, क इत्यादिभ्यः

प्रातिपदिकेभ्यः स्वार्थे कारप्रत्ययः स्यादित्यर्थः। अत्रापि बहुलमिति योज्यम्। अकार इति। 'अ' इत्यस्य निर्देश इत्यर्थः। ककार इति। क् अ (क) इति अस्मादत्र प्रत्ययः। 'न पुनरन्तरेणाच' व्यञ्जनस्योच्चारणं भवति' इति 'उच्चैरुदात्त' इति सूत्रे भाष्यम्। एवं यकारः, चकारः, एवकार इत्यादौ बोध्यम्। इह कार प्रत्ययस्य यद्यपि धातोरुत्तरं नास्ति विधानं तथापि धात्वधिकारबलात् तस्य कृत्संज्ञा। ततश्च प्रातिपदिकत्वात् सुबुत्पत्तिः। कार इत्यत्र ककारस्य नेत् संज्ञा। प्रयोजनाभावात्। आकार इत्यत्र 'आ' इत्यस्य 'आतो लोपः—' इति लोपो न। प्रत्ययस्य धातोरविहितत्वेन आर्धधातुकत्वाभावात्। एवञ्च 'आर्धधातुकस्य इड् वलादेः' इत्यस्याप्रवृत्तेर्नेट् इति बोध्यम्। बाहुलकग्रहणस्यात्राप्यनुवृत्तेः क्वचिन्न। 'अ प्रत्ययात्' 'अस्य च्वौ' इत्यादिनिर्देशात्। 'तवाभिधानाद् व्यथते नताननः' इति भारविश्च। रादिफः इति। इदमेव चतुर्थं वार्तिकम्। वर्णनिर्देशे गम्ये 'र' इत्यस्मात् प्रातिपदिकादिफ प्रत्ययः स्यादित्यर्थः। रेफ इति। र इत्यर्थः। अत्र स्त्रियामित्यस्यानुवृत्तेरभावात् 'अस्त्रियाम्' इति निषेधाभावात् 'वासरूपविधिना' कार प्रत्ययोऽपि। रकारः। अत एव 'रकारादीनि नामानि शृण्वतो मम पार्वति' इत्यादि संगच्छते। बहुलग्रहणस्यात्राप्यनुवृत्तेः क्वचिन्न। 'नमिकाम्पिल्यराजर्षिसदीपैरः' इति निर्देशात्। 'मत्वर्थाच्छः' इति इदमेव पञ्चमं वार्तिकम्। मत्वर्थ इत्यस्मात् प्रातिपदिकात् स्वार्थे छप्रत्ययः स्यादिति वक्तव्यमित्यर्थः। बहुलग्रहणानुवृत्तेराह—बहुलवचनादिति। अयं भावः—मत्वर्थ + छ इति स्थिते प्रत्ययस्य ईय भावे मत्वर्थ + ईय इति जाते आद् गुणेन मत्वर्थेय इति स्यात्। इष्यते तु मत्वर्थीय इति। न च 'यस्येति च' (३११) इत्यकारलोपात् 'मत्वर्थीय' इति वाच्यम्। प्रत्ययस्यात्र कृत्संज्ञत्वेन प्रातिपदिकस्य अतद्धितपरत्वाभावाद् अभत्वाच्च तस्य (सूत्रस्य) अप्रवृत्तेः। बहुलग्रहणानुवृत्तेस्तु तस्य तद्धितविषयस्यापि सूत्रस्यात्र प्रवृत्तिरिति। मत्वर्थीय इति। मत्वर्थः इत्यर्थः। प्रत्ययस्य स्वार्थे विहितत्वात्। मतोः ('मतुप्' इति प्रत्ययस्य) अर्थः यस्य प्रत्ययस्य स मत्वर्थः। स एव मत्वर्थीयः। बहुलग्रहणात् क्वचिन्न। 'तसौ मत्वर्थे' इत्यत्र यथा। क्वचित् मतुबर्थ शब्दादपि छः। 'ग्रैवेयकाद् मतुबर्थीयात्' इत्यादौ यथा। अन्ये तु नायं कृत्संज्ञः किन्तु 'गहादिभ्यश्च'

(१३६२) इति विहितस्सन्निह एवेत्याहुः। 'इण् अजादिभ्य' इति इदमत्र षष्ठं वार्तिकम्। अजादिभ्यो धातुभ्य इण् प्रत्ययो वाच्य इत्यर्थः। अत्र स्त्रियामित्यनुवर्तते। व्याख्यानात्। आजिरिति। अत्र बाहुलकादजेर्वीभावो न। प्रत्ययस्य णित्वादुपधावृद्धिः। 'समुदायः स्त्रियः संयत् समित्याजि समिद्युधः' इत्यमरः। आतिरिति। अत सातत्यगमने इति धातुः। 'इञ् वपादिभ्य' इति। इदमत्र सप्तमं वार्तिकम्। वाच्य इति शेषः। स्त्रियामित्येव। वापिरिति। अत्र उपधाया इति वृद्धिः। 'कृदिकारात्—' इति पक्षे ङीष्। 'वापी तु दीर्घिका' इत्यमरः। 'शतहस्ता भवेद्वापी द्विगुणा पुष्करिणी मता' इति स्मृतिः। 'वाप्यां वापिरपि स्मृता' इति रत्नकोषश्च। वासिरिति। वसतेरिञ्। ननु इन् इत्यनेनैव सिद्धे किमर्थमिदम् इत्यत आह—स्वरे भेद इति 'ञ्नित्यादिर्नित्यम्' इति स्वरविशेषार्थम् इञ् विधिरित्यर्थः। 'इक् कृष्यादिभ्यः' इति इदमत्र अष्टमं चरमं च वार्तिकम्। 'कृषि' इति कृषेरिका निर्देशः। कृषि प्रभृतिभ्यो धातुभ्य इक् स्यात् स्त्रियामित्यर्थः। कृषिरिति। कित्त्वान्न गुणः। 'चौयनि वाक्षिस्य सत्वेनपतिता कृषिः' (मुद्राराक्षसम्)। गिरिरिति। गॄ इत्यस्माद् इक्। कित्त्वाद् गुणाभावे 'ऋत इद्धातो'-रिति इत्वम्। रपरत्वम्। गिरिर्गिरणं गलाधःकरणमिति यावत्। 'गीर्णिर्गिरौ' इत्यमरः। नायमत्र पर्वतार्थकः। स्त्रीवाचकत्वादिति बोध्यम्।

३२८६। संज्ञायाम् ॥ ३।३।१०९ ॥

दी—। अत्र धातोर्ण्वुल्। उद्दालकपुष्पभञ्जिका। * वरणापूरिका। अपूपविशेषः।

When a संज्ञा is implied any root may take ण्वुल् in the feminine sense. 'उद्दालक—' The tearing of the flowers of the tree known as उद्दालक। वरणा etc—seems to be interpolated.

मित—। संज्ञायामिति। संज्ञायां वाच्यायां धातोर्ण्वुल् स्यात्। स्त्रियामित्येव। तदाह—'उद्दालक—' इति। उद्दालकः श्लेष्मातकः। तस्य पुष्पाणि भज्यन्ते छिद्यन्ते यस्यां क्रियायां तस्या इयं संज्ञा। भञ्जनमेव भञ्जिका। भावे ण्वुल्।

टापि 'प्रत्ययस्थात्—' (४६२) इति कात्पूर्वस्यात इत्। उद्दालकपुष्पाणां भञ्जिका इति वा विग्रहः। 'वरणेति'। मन्ये प्रक्षिप्तोऽयमंशः।

३२८७। विभाषाख्यानपरिप्रश्नयोरिञ्च ॥ ३।३।११० ॥

टी—। परिप्रश्ने आख्याने च गम्ये इञ् स्यात्। चात् ण्वुल्। विभाषोक्तेर्यथाप्राप्तमन्येऽपि। कां त्वं कारिं—कारिकां क्रियां कृत्यां कृतिं वाऽकार्षीः। सर्वां कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षम्। एवं गणिं गणिकां गणनाम्। पाचिं पाचिकां—पचां पक्तिम्।

When a question and an answer (as in a dialogue) is implied, any root, in the feminine sense, may take the affix इञ् as also ण्वुल् (अक); and from the utterance of विभाषा or option, it may take other affixes also (which are similiar in the formation of feminine bases). Thus what sort of कारि (कृ+इञ् वृद्धि by 'अचो ञ्णिति' 254) कारिका (कृ+ण्वुल वृद्धि) क्रिया (कृ+श by the कृञः श च 3277) कृत्या—कृतिः (कृ+क्यप् and कृ+क्तिन् due to योगविभाग in 'कृञः श च 3277)—have you done? I have done all sort of कारि etc. Note that कारि कारिका etc mean the same—thing here viz an action or achievement, although कारिका and कृत्या are seen to be used in other senses also. Cp व्याघ्रभूतिकारिका a small book of verse (on grammar) composed by Vyaghrabhuti; and 'तत्र कृत्यां यथायास्य करिष्यामोऽनिवर्तिनीम्'—Then for his destruction we shall take to a sacerdotal performance, Note also that इञ् etc may be used without the sense of a dialogue or a question and the corresponding reply. गणिम् —counting—गण+इञ्—here. Here elision of अ by 'अतो लोपः'

being स्थानिवत् by 'अच: परस्मिन्—' (30) no वृद्धि by 'अत उपधाया:' (2282) takes place for the अकार of गण in that case ceases to be the penultimate. Similarly गणिका—counting गण+ण्वुल+टाप (463) गणना—with युच् by 'ण्यासश्रन्थ:—(3284). No क्तिन् which is barred by युच्। पाचि (cooking) etc—the affixes are इञ्, ण्वुल्, and अङ् by 'षिद्भिदादिभ्य:—(3981).

मिल—। विभाषेति। विभाषा आख्यानपरिप्रश्नयो: इञ्+च इति छेद:। आख्यानम् उत्तरप्रदानञ्च परिप्रश्नश्च द्वन्द्व:। तयोरिति सप्तमीद्विवचनम्। तदाह—परिप्रश्ने आख्याने चेति। अल्पाच्तरत्वेन आख्यानशब्दस्य सूत्रे पूर्वनिपातो विहित:। क्रमस्तु विवक्षित इति मत्वा परिप्रश्न इत्यस्यैव प्रागुपादानं तत आख्यानस्य इति ज्ञेयम्। इञ् स्यादिति। स्त्रियामिति शेष:। विभाषोक्तेरिति। अन्यथा अस्त्रियामिति निषेधाद् वासरूपविधेरप्रवृत्त्या स्त्रियां विहितौ ण्वुल्क्तिनादयो न स्युरिति भाव:। परिप्रश्ने आह—कां त्वं कारिम् इत्यादि। अकार्षीरित्यनेन अन्वय:। आख्याने आह—सर्वां कारिम् इत्यादि। कारिमिति। करोतेरिञ्। 'अचो ञ्णिति' (२५४) इति वृद्धि:। कारिकेति। करोतेर्ण्वुल्। टापि कात् पूर्वस्यात इत् (४६३ सूत्र)। क्रियेति। 'कृञ: श च' (३२७७) इत्यत्र योगविभागात् क्रिया, कृत्या, कृतिरिति स्पष्टम्। कारिकाकृत्ययोरर्थान्तरे सत्यपि अत्र क्रियापर्य्यायत्वं द्रष्टव्यम्। अर्थान्तरत्वं तु सांख्यकारिका, 'तत: कृत्यां यथायास्य करिष्यामोऽनिवर्त्तिनीम्' (विष्णुपुराणम्) इत्यादौ स्पष्टम्। एवमिति। परिप्रश्ने आख्याने चेति शेष:। न चैवम् आख्यानपरिप्रश्नयोरेव इत्यादय इति प्रतिपत्तव्यम्। किन्त्वन्यत्रापि। 'क्रियासु युक्तैर्नृप चारचक्षुषो न वञ्चनीया: प्रभवोऽनुजीविभि:' (भारवि:) 'इति कालिदासकृतौ—', गुणिगणगणनारम्भे (पञ्चतन्त्रम्) इत्यादौ यथा। गणिमिति गणनामित्यर्थ:। गणयतेरिञ्। अतो लोपस्य 'अच: परस्मिन्—' (५०) इत्यनेन स्थानिवत्त्वाद् गणयतेराद्यस्य अकारस्य उपधात्वनिवृत्त्या 'अत उपधाया' (२२८२) इत्यस्याप्रवृत्तेर्वृद्ध्यभाव:। एवं गणिकामित्यत्र। गणनामिति। 'ण्यासश्रन्थो युच्' (३२८४) इति युच्। क्तिन् तु न। युचा बाधात्। पाचिम् इञ्। वृद्धि:।

पाचिकाम ण्वुल्। वृद्धिः। पचाम्—डुपचष्। अङ् ('षिद्भिदादिभ्यः—')। वासरूपविधेः सार्वत्रिकनिषेधाभावात् क्तिन्नपि भवति। उक्तं ग्रन्थकृता स्वयमेव—'स्त्र्यधिकारादूर्ध्वं वासरूपविधिः क्वचिन्नेति 'त्रिव्याग्निचित्ये च' (२८९३) इत्यत्र।

३२८८। पर्य्यायार्हर्णोत्पत्तिषु ण्वुच् ॥ ३।३।१११ ॥

दी—। पर्य्यायः परिपाटी क्रमः *। अर्हणमर्हः योग्यता। पर्य्यायादिषु द्योत्येषु णुज् वा स्यात्। भवत आसिका। शायिका। अग्रगामिका। भवानिक्षुभक्षिकामर्हति। ऋणे—इक्षुभक्षिकां मेधारयसि। उत्पत्तौ—इक्षुभक्षिका उदपादि।

पर्य्याय means order and अर्ह means fitness. Any root may take ण्वुच (अक) optionally in the भाववाच्य in feminine sense when order (of action), fitness, debt (ऋण) and causation (उत्पत्ति) are implied. Thus भवतः—etc—i.e your sitting, taking rest and going ahead, respectively. ण्वुच् being णित्. वृद्धि takes effect where it is due. Then टाप etc at before. इक्षुभक्षिका उदपादि the eating of sugarcanes was caused. उद्+पद्+कर्मणि लुङ्।

मित—। पर्य्यायेति। पर्य्यायश्च अर्हश्च ऋणञ्च उत्पत्तिश्चेति द्वन्द्वात् सप्तमी बहुवचनम्। ण्वुल इत्यनेनैव सिद्धे 'चितः' इत्यन्तोदात्तत्वं यथा स्यादित्येवमर्थं चित्करणम्। पर्य्यायशब्दस्यार्थः परिपाटीति क्रम इति च। अर्ह इत्यत्र भावे घञ्। योग्यतेत्यर्थः। ण्वुजवेति। पक्षे ण्वुल इति शेषः। भावे स्त्रियां च प्रत्यय इति बोध्यम्। ण्वुचि ण्वुलि चैकमेव रूपम् इति पृथङ् नोदाहृतम्। पर्य्याये आह—भवतः आसिकेत्यादि। आसनं शयनम् अग्रगमनमित्यर्थः। अर्हे—भवानिक्षु—इत्युदाहरणम्। ऋणे स्पष्टम्। इक्षुभक्षिका उदपादीति इक्षुभक्षणमिक्षुभक्षिका। उत्पूर्वात्पद्यतेः—कर्मणि लुङि उदपादीति। [* परिपाटीक्रमः इति तत्त्वबोधिन्याम् एकवाक्यतया निर्देशः]।

३२८९। आक्रोशे नञ्यनिः ॥ ३।३।११२ ॥

दी—। विभाषेति निवृत्तम्। नञ्युपपदेऽनिः स्यादाक्रोशे।

अजीवनिस्ते शठ भूयात्। अप्रयाणिः *॥ 'कृत्यल्युटो बहुलम्' (२८४१)। भावेऽकर्तरि च कारके संज्ञायामिति च निवृत्तम्। राज्ञा भुज्यन्ते राजभोजनाः शालयः। 'नपुंसके भावे क्तः' (३०९०)।

The term विभाषा occured in the rule 'विभाषाख्यान—' (3287) has ceased to follow henceforth. Thus the rule means—Any root preceded by नञ् takes the affix अनि in the feminine sense when a curse (आक्रोश) is implied. Thus 'अजीवनिः—' May you, oh cheat, meet with non-living i.e death, नञ् जीव् + अनि। अप्रयाणि—नञ् + प्र + या + अनि cessation of proceeding. Note that here क्तिन् may not apply as अनि bars it; see the prohibition अस्त्रियाम् under 'वासरूप:—'. Here ends the feminine section (स्त्र्यधिकार)—।

'कृत्यल्युटो बहुलम्' (2841)—Although this rule has been explained before yet it is brought down here to remind the student that notwithstanding 'तयोरेव कृत्यक्तखलर्थाः' (2833) which enjoin कृत्य affixes in भाव and कर्मवाच्य only, the rule 'कृत्यल्युटः—' by force of the term बहुल suggests that कृत्य affixes and ल्युट् may take place after roots in the sensesof instrumentality (करण) locative (अधिकरण) etc as well. Thus करणे—स्नानीयं चूर्णम्—a powder by which one takes his bath (करणे अनीय) and राजभोजनाः शालयः—the shali rice which are partaken of by the king (कर्मणि ल्युट्); 'नपुंसके भावे क्तः'—This just precedes the rule ल्युट् च below hence it is laid down here again.

मित—। आक्रोशे इति। नञि + अनिरिति च्छेदः। अत्र 'विभाषाख्यान—'

(३।३।११०) इत्यतो विभाषेति नानुवर्तते व्याख्यानात्। तदाह—विभाषेति निवृत्तमिति। सूत्रं व्याचष्टे—नञीति। आक्रोशः शापः। तस्मिन् गम्ये इत्यर्थः। अत्रापि स्त्रियां भावे एव प्रत्ययः। अजीवनिरिति। अजीवनमित्यर्थः। मृत्युरिति यावत्। अप्रयाणिरिति। अप्रयाणमित्यर्थः। क्तिन् तु न भवति। अस्त्रियामित्युत्तरनिना तस्य बाधत्वात्। अत्रापि आक्रोशे एवेति बोध्यम्। उभयत्रैव इत्परत्वेन नञोऽकारः। आप्रयाणिरिति क्वचित् तत्त्वबोधिनीस्थः पाठस्तु भ्रान्तः। नञो इत्परत्वेन अकारस्यैव प्राप्तेर्न तु आकारस्य। इति स्त्र्यधिकारः।

'कृत्यल्युटः—' (२८४१—३।३।११३) इति एतत् प्रागेव व्याख्यातम्। इह तु क्रमप्राप्तत्वादुपन्यस्तम्। भावे अकर्तरि चेति। उक्तं हि 'घञि च भावकरणयोः' (२१८७) इत्यत्र 'इत उत्तरं 'भावे' अकर्तरि च कारके' इति कृत्यल्युटो बहुलम्' इति यावद् द्वयमप्यनुवर्तत इति। 'तयोरेव कृत्यक्तखलर्थाः' (२८३३) इत्यनुसारात् भावकर्मणोरेव कृत्यप्रत्यया इति नियमे सत्यपि 'कृत्यल्युटो बहुलम्' इत्यत्र बहुलग्रहणात्, ततोऽन्यत्रापि कृत्या ल्युट् च भवतीति मत्वा कर्मणि ल्युटमुदाहरति। राज्ञा भुज्यन्त इति। पुगन्तलघूपधस्य इति गुणः। एवं स्नाति अनेन 'स्नानीयं चूर्णम्' इति करणे अनीयः। 'नपुंसके भावे—' (३०९०) इति। इदमपि प्राङ्निष्ठाधिकारे व्याख्यातमपि क्रमप्राप्तत्वाल्लुट च ल्युटश्च सप्रयोजनत्वार्थं हीपन्यस्तम्। 'तयोरेव—' इत्यत्र सिद्धे तस्य भूत एव विहितत्वादस्य तु कालसामान्येऽपि प्रवृत्तेरुपयोगित्वं द्रष्टव्यम् इति तत्त्वबोधिन्यां विस्तरः।

### ३२९० । ल्युट् च ॥ ३।३।११५ ॥

### दी—। हसितम्। हसनम्। योगविभाग उत्तरार्थः।

The affix क्त as well as ल्युट् (अन by 'युवोरनाकौ') takes place in the भाववाच्य to form a base in the neuter gender. The सूत्रकार could have done with a single rule or योग as—'नपुंसके भावे क्तल्युटौ' without breaking it into two 'नपुंसके भावे क्तः' and 'ल्युट् च'. But in the former case, क्त also along with ल्युट् would have

been carried into the next rule although it (क्त) has nothing to do therein; hence to exclude this क्त and to carry ल्युट् only into the following rule 'कर्मणि च—' (3291), he separates the same (ल्युट्) from क्त.

मित—। ल्युट् चेति। 'नपुंसके—' (३।३।११४) इति सर्वमप्यनुवर्तते। तेन नपुंसके वाच्ये धातोः क्तः ल्युट् च स्याद् भावे इति सूत्रार्थः। तदाह—हसितं हसनमिति। 'पुंवीरनाकौ' इत्युपनादिष्वे हसनमिति। नन्वेवं लाघवात् 'नपुंसके भावे क्तल्युटौ' इत्येक एव योगोऽस्तु। मास्तु 'नपुंसके भावे क्तः' 'ल्युट् च' इति योगद्वयम्। तत्राह—योगविभाग उत्तरार्थ इति। 'कर्मणि च—' इत्यव्यवहितोत्तर-सूत्रार्थं इत्यर्थः। तथाचैवं ल्युट एव तत्रानुवृत्तिः स्यात्। अकृते तु योगविभागे क्तप्रत्ययस्यापि निष्प्रयोजनस्यात्रानुवृत्तिः स्यादिति भावः।

३२९१। कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम्॥ ॥३।३।११६॥

टी—। येन कर्मणा (१) स्पृश्यमानस्य कर्तुः शरीरस्य सुखमुत्पद्यते तस्मिन् कर्मण्युपपदे ल्युट् स्यात्। पूर्वेण सिद्धे नित्यसमासार्थं वचनम्। पयःपानं सुखम्। (२) ओदनभोजनं सुखम्। अत्र पानादेव सुखम्, चन्दनानुलेपनं सुखमितिवत्। सत्यम्। यत्र संस्पर्शं विना सुखाभावस्तदर्थकः। यत्र साक्षात्, परम्परया सुखं तत्रेति यावत्। कर्तुरिति किम्? गुरोः स्नापनं सुखम्। नेह गुरुः कर्ता, किन्तु कर्म। (४) कर्मणीति किम्? तूलिकाया उत्थानं सुखम्। स्पर्शात् किम्? अग्निकुण्डस्य सेवनं सुखम्। प्रत्युदाहरणेष्वसमासः।

When the term in the accusative or second caseending, having been touched by i.e enjoying which pleasure of the

person of the agent is caused stand as an उपपद, a root may take the affix ल्युट् ( in the भाववाच्य ) to form bases in the neuter genders. Although the previous rule 'ल्युट् च' would meet requirement here yet the enunciation of this is to form a नित्यसमास or an obligatory उपपदcompound as in पयःपानम् i.e the drinking of which is pleasant etc—the dissolution being पयः पीयते इति भावे ल्युट्. Similarly 'ओदन'—the taking of food being pleasure.. Well here as in चन्दनानुलेपन or smearing the body (all over) with sandal paste the pleasure arises from the very drink- How then the term 'संस्पर्शात्' in the rule becomes significant there being no question of contact here in the example. The answer is this—the rule is intended to apply in these cases where the want of contact causes want of pleasure or in other words where pleasure is dependent upon contact whether directly or indiectly. 'गुरोः—' the bathing of preceptor is pleasant—here the rule does not apply because here the preceptor is the accusative (गुरोः = कर्मणि षष्ठी। गुरुं स्नापयति = गुरोः स्नापनम्) and not the agent. 'तूलिकायाः—' the rising of तूलिका (cotton) is amusing—here the rule does not apply because there is no कर्म, the verb स्था being intransitive (अकर्मक)। 'अग्निकुण्डस्य—' Here शब्देन्दुशेखर reads—स्पर्शात् किम् ? अग्निकुण्डस्य—'। This reading is preferable as otherwise 'अग्नि—' would seem to be a counter example of 'कर्मणीति किम्'; whereas it is not so as the term 'अग्निकुण्डस्य' is an instance of कर्मणि षष्ठी। 'अग्निकुण्डस्य—' etc means—sitting by the hearth is pleasant—here ल्युट् does not take effect in the way the rule suggests because here there

is no actual touch. The thing to know that ल्युट् here has not taken effect by the rule (but by 'ल्युट् च' only) is that there in all these three counter examples ( गुरोः स्नापनम् etc) there is no compounding ( as we have in 'पयःपानम्—' ) ।

[ N.B.—तत्त्वबोधिनी omits कर्मणा here. The text beginning from 'ओदनभोजनं सुखम्' up to the end except 'कर्तुरिति किम्। गुरोः स्नापनं सुखम्। इह गुरुः न कर्ता, किन्तु कर्म' seems to be an interpolation for Tattwabodhini omits the portion and moreover, Shabdendushekhara cites 'कर्मणि किम् etc as its own expression or got from any other source and it does not explain 'कर्मणि किम् etc ].

मित—। कर्मणि चेति। 'नपुंसके भावे' इत्यनुवर्तते। येनेति कर्मणाऽऽदत्यनेन सम्बन्धः। तदाह—येन कर्मणेति। तच्च कर्म कर्तारं स्पृशति। अतः कर्मणोऽपि कर्तृत्वम्। ततश्च येनेति कर्तरि तृतीया 'उभयप्राप्तौ कर्मणि' इत्यनुसारात्। संस्पर्शशब्दस्य च कृत्प्रत्ययान्तत्वादिति द्रष्टव्यम्। अत एवाह—येन कर्मणा स्पृश्यमानस्येति। एवं कर्तुरित्यत्र 'उभयप्राप्तौ—' इत्यनुसारादेव कृद्योगा कर्मणि षष्ठी। 'कर्तुः शरीरसुखम्' इति असमर्थसमासः। शरीरशब्देन कर्तुरित्यस्य एकत्वेन अन्वयात्। तथाचात्र शरीर एव कर्ता। न तु ततः पृथक् कश्चित्। तेन कर्तृसंज्ञस्य शरीरस्य सुखमित्यर्थः। न चैवं शरीरशब्दस्य नपुंसकत्वात् कर्तृशब्दस्य च पुंस्त्वात् शरीरशब्दस्य कर्तृविशेषणत्वेन 'कर्तृणः' इति नपुंसकषष्ठी एव प्रयोक्तव्येति वाच्यम्। शरीरशब्दस्य अर्धर्चादित्वात् पुंनपुंसकलिङ्गत्वात्। कर्तुरित्यनेन शरीरधारी जीव एवाभिप्रेत इति बोध्यम्। नन्वस्त्वेवम्। तथापि 'ल्युट् च'त्यनेन पूर्वसूत्रेणैव ( ३।३।११५ ) सिद्धे 'कर्मणि च—' इत्यस्य आरम्भो व्यर्थ इत्याशङ्क्य आह—नित्यसमासार्थं वचनमिति। तथाच ल्युट् चेत्यनेन पीयत इति पानम् इति कृत्वा पयसः पानम् पयः पानम् इति षष्ठीसमास एव। अत्र तु पयः पीयत इति पयःपानम् इति नित्यः समासः ( उपपद-

समासः—उपपदसमासस्यापि नित्यत्वात् )। अतएव ल्युट् चेत्यनेनास्य न गतार्थता। नन्वेवम् 'पयःपानं भुजङ्गानां केवलं विषवर्द्धनम्' इत्यादौ का गतिरिति चेत्। 'कर्तुः शरीरसुखम्' इति सुखस्य अभावात् नात्र कर्मणि चेत्यनेन ल्युट्। किन्तु ल्युट् चेत्यनेनैव। समासश्च षष्ठीतत्पुरुष एव न तु नित्यः। ननु संस्पर्शादेव सुखं चेत्तदास्य प्रवृत्तिः। पयःपानमित्यादौ तु पानादेव सुखं तत् कुतोऽत्र ल्युट् इत्याशङ्कते स्वयमेव—अत्र पानादेवेति। न तु संस्पर्शादित्येवकारार्थः। समाधत्ते—यत्र संस्पर्शं विनेति। सत्यं पानादेवात्र सुखम्। तथापि आदौ संस्पर्शः ततः पानं ततः सुखम्। तथाच संस्पर्शमूलमेव ( पान ) सुखम्। स च संस्पर्शः साक्षाद्वा परम्परया वा भवत्विति भावः। तत्रेति यावदिति। तत्रैव सूत्रस्य प्रवृत्तिरित्यर्थः। एवम् ओदनभोजनमित्यत्रापि बोध्यम्। ओदनं भुज्यत इति नपुंसके भावे ल्युट्। गुरोः स्नापनमिति। अत्र ल्युट् चेत्यनेनैव ल्युट। तत्र कुत इत्यत आह—नेह गुरुः कर्मेति। तथाच गुरुं स्नापयति इति तिङन्तावस्थायां तस्यैव गुरोः कर्मत्वं तस्यैव 'गुरोः स्नापनम्—' इत्यत्र कर्मणि षष्ठी। ततश्चानेन ल्युट् 'गुरुस्नापनम्' इत्युपपदसमासश्च न भवति। तूलिकाया इति—'इषिका तूलिका समे' त्यमरः। अत्र तूलिकायाः 'पयः' इत्यस्येव कर्मोपपदत्वं नास्ति। इष्यते च कर्मण्येवोपपदे सूत्रप्रवृत्तिः। येन कर्मणा तस्मिन् कर्मणीति व्याख्यानात्। अतोऽत्र ल्युट न्। अग्निकुण्डस्येत्यादि—इदमुदाहरणमत्र चिन्त्यम्। अग्निकुण्डस्येत्यत्र कर्मणि षष्ठीविभक्तेः कर्मणीत्यस्य प्रत्युदाहरणत्वायोगात्। अतएव शब्देन्दुशेखरे "कर्मणि किम्? तूलिकाया उत्थानं सुखम्। स्पर्शात् किम्? अग्निकुण्डस्योपासनं सुखम्" इत्युक्तम्। एवञ्च संस्पर्शादित्यस्यैवेदं प्रत्युदाहरणमिति ज्ञेयम्। नहि अग्निकुण्डेनाग्निना वाऽङ्गेन स्पृश्यते। तस्य दाहकत्वात्। यद्यप्यत्रापि स्पर्शः अस्त्येव तथापि दूरादिना ग्रहणजन्यः स्पर्शो नास्तीति सूत्राप्रवृत्तिरिति ध्येयम्। 'गुरोः स्नापनम्—' इत्यत्र प्रत्युदाहरणवचस्यस्तेऽनेन सूत्रेण ल्युट नेति संज्ञायते। तत्राह—असमास इति। एषु समासाभाव एव ल्युट् चेत्यनेनैव ल्युट' ज्ञापयति। न तु कर्मणि इत्यनेन। एवं शरीरग्रहणं किम्? पुत्रपरिष्वजनं सुखम्। मानसी प्रीतिरत्रेति नार्थः:

[ अत्र ओदनभोजनमित्यादेरुभयोरिष्यमाणत्वादर्शनात् कर्मणीति किम् इत्यादेः शब्देन्दुशेखरेऽनुवादरूपेणोक्तत्वाच्च इदं वाक्यमपि प्रक्षिप्तमिव प्रतिभाति ]।

३२८२। वा यौ ॥ २।४।५७ ॥

टी— अजेर्वी वा स्याद् यौ। प्रवयणम्। प्राजनम्।

The root अज is optionally replaced by वी when यु ( as in ल्युट् ) follows. Thus—प्र + अज + ल्युट = प्र + वी—अन = प्रवयण blowing or growing—गुण by 'सार्वधातुकार्ध—', then अयादेश।

मित—। वा याविति। 'अजेर्व्यघञपोः' ( २।४।५६ ) इत्यतोऽजेर्वी, इत्यनुवर्तते। तदाह—अजेर्वी वेति। वीभावपक्षे प्रवयणम्। सार्वधातुकेति गुणः। अयादेशः। इदमन्यथा व्याख्यातं भाष्ये इति स्पष्टं शब्देन्दुशेखरे।

३२८३। करणाधिकरणयोश्च ॥ ३।३।११७ ॥

टी—। ल्युट् स्यात्। इध्मप्रव्रश्चनः कुठारः। गोदोहनी स्थाली। खलः प्राक् करणाधिकरणयोरित्यधिकारः।

ल्युट् after a root comes; in the sense of करण and अधिकरण. Thus इध्मप्रव्रश्चनः—where by fuels are cut down i.e as axes ( प्र—व्रश्च + ल्युट् करणे ) ; गोदोहनी—wherein cows are milked ( दुह + ल्युट् अधिकरणे and ङीप् by 'टिड्ढाणञ्—' 570). Note that this (ल्युट्) supersedes घञ् ( which was due by 'अकर्तरि च कारके—' ) and bars अच् and अप्, due to its following upon them. This करण and अधिकरण extends as far as 'ईषद्दुःसुषु—' (3305-3.3.126).

मित—। करणेति। ल्युट् स्यादिति। शेषपूरणमिदम्। करणे अधिकरणे च वाच्ये धातोर्ल्युट् स्यादित्यर्थः। अत्र 'अकर्तरि च—' इति प्राप्तस्य घञोऽपवादः अजपौ तु परत्वाद् बाधते। तदुक्तं वार्तिककृता 'अजब्भ्यां स्त्रीखलनाः स्त्रिया खलनौ विप्रतिषेधेन' इति। इध्मप्रव्रश्चन इति। इध्मानि प्रव्रश्च्यन्तेऽनेनेति विग्रहः।

यद्वा प्रवृश्चतेऽनेनेति प्रव्रश्चनः कुठारः। इध्मानां प्रव्रश्चन इति विग्रहः। अत करणे ल्युट्। अधिकरणे यथा—गोदोहनीति। गावः दुह्यन्तेऽस्यामिति षष्ठार्थे वा विग्रहः। खलः प्राक् इति। अत्र व्याख्यानमेव शरणम्। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' (३३०५—३।३।१२६) इत्यतः पूर्वमित्यर्थः।

३२८४। अन्तरदेशे ॥ ८।४।२४ ॥

दी—। अन्तःशब्दाद्धन्तेर्नस्य णः स्यात्। अन्तर्हणनम्। देशे तु अन्तर्हननो देशः। अत्पूर्वस्येत्येव। अन्तर्घ्नन्ति। तपरः किम्?। अन्तरघानि।

The नकार of हन् coming after the word अन्तः is cerebral if a country is not meant thereby. From the rule 'हन्तेरत्पूर्वस्य' (359-8.4 22) the term 'अत्पूर्वस्य' follows here also, so that णत्व of न takes place when it (न) has got an अकार only before it and no other letter. Thus अन्तर्घ्नन्ति where घ् precedes न। The significance of तपरकरण (using त् in अत्) is explained by अन्तरघानि (अन्तः + अ—घानि)—was heart or struck within (हन् + कर्मणि लुङ्, त)—Where न following आ which is not included by अत् (cp—तपरस्तत्कालस्य) does not become ण.

मित—। अन्तरिति। 'रषाभ्यां नोणः—' (८।४।१) इत्यतो 'नोण' इत्यनुवर्तते। तदाह—अन्तः शब्दादित्यादि। न तु देशे इति योजनीयम्। हन्तेरत्पूर्वस्य (८।४।२२) इत्यतोऽत्पूर्वस्येत्यनुवर्तते इति मत्वा व्याचष्टे—अत्पूर्वस्येत्येवेति। अत् अकारः पूर्वो यस्मादिति विग्रहः। नकारादकारेणैव व्यवहितपूर्ववर्ती भवति तदा णत्वं प्रवर्तते। नाऽन्यथा। अन्तर्घ्नन्ति इति। घकारस्य पूर्ववर्तित्वात् णत्वं न। अन्तरघानि इति। अदिति अकारमात्रं गृह्णाति। न तु आकारमपि। 'तपरस्तत्कालस्येति नियमात्। तेनोक्तोदाहरणे नकारात् प्रागाकारस्य सत्त्वाण्णत्वं न।

अन्तर्हतमित्यर्थः। अन्तःपूर्वाद्धन्तेः कर्मणि लुङि एकवचनम्। 'चिण्ते पदः' इति चिण्। 'अत उपधायाः' इति वृद्धिः। 'होहन्तेरि'ति कुत्वम्।

३२८५। अयनं च ॥ ८।४।२५ ॥

दी—। अयनस्य णोऽन्तःशब्दात् परस्य। अन्तरयणम्। अदेश इत्येव। अन्तरयनो देशः।

The term 'अयनम्' stands for 'अयनस्य'. Thus the rule means न of अयन ( इ or अय+ल्युट् भावे ) coming after the word अन्तर् is ण provided a country is not implied by the derivative. अन्तरयणम् going within etc.

मित—। अयनं चेति। षष्ठ्यर्थे प्रथमा। तदाह—अयनस्येति। 'रषाभ्याम्—' इति वर्तते। तदाह—न इति। 'नस्य' इति 'न तु देशे' इति च योज्यम्। अन्तरयणमिति। अन्तर्गमनमित्यर्थः। भावे ल्युट्।

३२८६। पुंसि संज्ञायां घः प्रायेण ॥ ३।३।११८ ॥

३२८७। छादेर्घेऽद्व्युपसर्गस्य ॥ ६।४।९६ ॥

दी—। द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वः स्याद् घे परे। दन्ताश्छाद्यन्तेऽनेन दन्तच्छदः। प्रच्छदः। अद्वीति किम्? समुपच्छादः। आकुर्वन्त्यस्मिन्नाकरः।

Very often a root takes the affix घ ( अ ) in the करण or अधिकरण वाच्य to form a technical name or संज्ञा in the masculine gender (3296).

The root छादि (causative) becomes ह्रस्व ( छद ) when it is bereft of two or more उपसर्गs preceding and has the affix घ following. Thus दन्तच्छद=दन्त छादि+घ ( करणे ) This is

without उपसर्ग। प्रच्छदः प्र—छादि घ (करणे) a covering sheet. Similary परिच्छदः etc. समुपच्छादः—No ह्रस्व of छादि as there are two उपसर्गs here. आकरः—आ+कृ+घ (अधिकरणे)—a mine wherein people find business.

मित—। पुंसि संज्ञायामिति। व्याख्यातम्। प्रायेणेति। नायमुत्सर्गः। किन्त्वपवादः। तेन प्रायवचनम्। 'करणाधिकरणयोश्च' (३।३।११७) इति सूत्रस्याय-मपवादः। तेन अत्रापि करणेऽधिकरणे च प्रत्ययः (३२९६)

छादेर्घे इति। छादेः+घे+अद्व्युपसर्गस्य इतिच्छेदः। द्वौ उपसर्गौ (अधिकौ वा) यत्र स द्व्युपसर्गः। तथा न भवतीति तादृशस्य छादेः (छाद इत्यस्य) वा। 'खचि ह्रस्वः' (६।४।९४) इत्यतो ह्रस्व इत्यनुवर्तते। तद् व्याचष्टे—द्विप्रभृत्युपसर्ग-हीनस्येति। घे परे इति। घकार इत्। अकारमात्रं तिष्ठति। ह्रस्वः स्यादिति। छादेरुपधाया इति शेषः। 'ऊदुपधाया गोहः' (६।४।८९) इत्यतस्तदनुवृत्तेः। एवं च छादिरिति ण्यन्तस्य न निर्देशः। किन्तु छाद इत्यस्यैव 'इक्श्तिपौ—' इतीका इति भावः। तथा सति 'एतेन घेऽपि ह्रस्वः स्यात्। तत्सामर्थ्याच्च णिलोपो न स्यादिति व्याचक्षाणाः परास्ता इति शब्देन्दुशेखरे स्पष्टम्। दन्ताश्छाद्यन्तेऽनेनेति। तेनात्र करणे प्रत्ययः। दन्तच्छद इति। उत्तरोऽधरो वा ओष्ठ इत्यर्थः। 'छे च' (१०४) इति तुक्। तस्य चर्त्वेन चः। प्रच्छद इति। प्रच्छाद्यतेऽनेनेति विग्रहः। अत्रापि करणेप्रत्ययः। आवरणम् इत्यर्थः। एवं परिच्छद इत्यादि। समुपच्छाद इति। सम्, उप इत्युपसर्गद्वयसत्त्वाद् घे सत्यपि ह्रस्वाभावः। प्रच्छद इत्यारभ्य एतदन्तं तत्त्वबोधिन्यां नास्ति। अधिकरणे उदाहरति। आकुर्वन्ति अस्मिन्निति। आ+कृ+घइति स्थिते गुणः। आ कुर्वन्त्यस्मिन् व्यवहार इत्याकर उत्पत्तिस्थानमिति तत्त्वबोधिनी।

२२९८। गोचरसंचरवहव्रजव्यजापणनिगमाश्च ॥३।३।११९॥

दी—। घान्ता निपात्यन्ते। 'हलश्च' (३३००) इति वक्ष्य-माणस्य घञोऽपवादः। गावश्चरन्त्यस्मिन्निति गोचरो देशः।

संचरन्त्यनेन सञ्चरो मार्गः। वहन्त्यनेन वहः स्कन्धः। व्रजः। व्यजस्तालवृन्तम्। निपातनाद्वीभावो न। आपणः पण्यस्थानम्। निगच्छन्त्यनेन निगमश्छन्दः। चात् कषः। निकषः।

These words viz—गोचर, सञ्चर, वह व्रज, व्यज, आपण and निगम् are irregularly formed with घ in the करण or अधिकरणवाच्य। गोचर;—a field of fodder for cattle. Secondarily proximity or neighbourhood. व्रजः—a good many. व्यजः—वि अज+घ, here अज is not replaced by वी due to निपातन. आपणः—market place. निगमः—the Veda. The चकार at the end of the rule suggests that कष also preceded by नि takes घ irregulary; निकषः—a touch-stone. Note that this supersedes the following rule 'हलश्च' (3300) which directs घञ्।

मित—। गोचरेति। 'पुंसि संज्ञायाम्—' इत्येव सिद्धे किमर्थमिदमित्यत आह—हलश्चेति। हलन्तेभ्योऽपीरभ्योऽनेन घञ नेत्यर्थः। गोचरोदेश इति। आभिधानिकोऽयमर्थः। लाक्षणिकार्थस्तु विषय इत्येव। 'अवाङ्मनसगोचरः' इत्यादौ दर्शनात्। 'गोचरा इन्द्रियार्थाश्च' इत्यमरः। यथा गावः चक्षुरादीन्द्रियाणि चरन्त्यस्मिन्निति विग्रहः। तथाच इन्द्रियविषय इत्यर्थः। 'स्वर्गेषु पशुवाग्वज्रदिङ्नेत्रघृणिभूजले। लक्ष्यदृष्ट्यां स्त्रियां पुंसि गौः' इत्यमरः। व्रजः सैव। व्यजस्तालवृन्तम् इति। विपूर्वादजेर्घः। 'अजेर्व्यघञपोः' इति नात्र प्रवर्तत इत्याह—निपातनादिति। व्यजन्त्यनेनेति विग्रहः। आपणः पण्यस्थानमिति। आपणन्त्यस्मिन् (व्यवहारं कुर्वन्ति) इत्यधिकरणे प्रत्ययः। निगच्छन्तीति। अधिगच्छन्ति श्रेयः प्राप्नुवन्तीत्यर्थः। छन्दो वेदः। सूत्रे चकारकरणफलमाह—चात् कष इति। निपूर्वादिति शेषः। निकषन्ति अस्मिन्निति निकषः। पाषाणविशेषः। 'शाणस्तु निकषः कषः' इत्यमरः।

३२९९। अवे तॄस्त्रोर्घञ् ॥ ३।३।१२० ॥

दी—। अवतारः कूपादेः। अवस्तारो जवनिका।

घञ् after तॄ and स्तॄ preceded by अव, comes in very often (प्रायेण) in the sense of a class name in the masculine gender (पुंसि संज्ञायाम्) in the करण or अधिकरणवाच्य। अवतारः—अव तॄ घञ् (करणे)—a step—whereby one goes down (and comes up) as in a ghat etc. अवस्तारः—a screen (करणे घञ्)। This (घञ्) bars घ under 'पुंसि संज्ञायाम्—' (3296).

मित—। अवे इति। 'अव' इत्युपसर्गे उपपदे तॄ, स्तॄ इत्याभ्यां करणाधिकरणे घञ् स्यात् पुंसि संज्ञायाम् इत्यर्थः। तॄस्त्रोरिति पञ्चम्यर्थे षष्ठी। घापवादः अवतार इति। अवतरन्ति अनेनेति विग्रहः। सोपानमित्यर्थः। कथं 'रामायण: कृतवती प्रथमावतारमि'ति "परीवादनवावतार" इति च। बाहुलकाद् भावे घञ्। यद्वा प्रायानुवृत्तेः क्वचित् असंज्ञायामिति। अवतरतीत्यवतार इति अवतारो विभूतिमान् रामादिः। अत्र कर्तर्य्येव घञ्।

३३००। हलश्च ॥ ३।३।१२१ ॥

दी—। हलन्ताद् घञ् स्यात्। घापवादः। रमन्ते योगिनोऽस्मिन्निति रामः। अपमृज्यतेऽनेन व्याध्यादिरित्यपामार्गः। विमार्गः समूहनी।

घञ् after हलन्त or consonant-ending roots is attached very often (प्रायेण) in the करण or अधिकरणवाच्यwhen a particular name in the masculine gender (पुंसि संज्ञायाम्) is sought for. Thus रामः, अपामार्गः (medicinal herb)—अप मृज+घञ् (करणे) वृद्धि by 'मृजेर्वृद्धिः' (2473), ग for ज by 'चजोः कु—'.

मित—। हलन्तादिति। पूर्वसूत्राद् घञ् अनुवर्तते। तदाह—

हलन्तादिति। घापवाद इति। 'पुंसि संज्ञायाम्—' (३२९६) इत्यत्र विहितस्य घस्यापवाद इत्यर्थः। अतएवात्र 'करणाधिकरणयोरिति, पुंसि संज्ञायाम् प्रायेण' चानुवर्त्तत इति बोध्यम्। अत एवाह—रमन्ते योगिनोऽस्मिन्निति। अत्र अधिकरणे घञ्। 'अत उपधायाः' इति वृद्धिः। करणे आह—अपमृज्यतेऽनेनेति। नाश्यत इत्यर्थः। अपामार्गो वैद्यकप्रोक्तऔषधिविशेषः। 'गुडुच्यापामार्गविडङ्ग-शङ्खिनीवचाभयाशुण्ठीशतावरी समा। घृतेन लीढा प्रकरोति मानवं त्रिभिर्दिनैः श्लोकसहस्रधारिणम्' (आयुर्वेद संग्रहः)। चजोरिति कुत्वम्। मृजेर्वृद्धिरिति (२४७३) वृद्धिः।

३३०१। अध्यायन्यायोद्यावसंहाराश्च ॥ ३।३।१२२ ॥

टी—। अधीयतेऽस्मिन्नध्यायः। नियन्त्युद्युवन्ति संहरन्त्यनेनेति विग्रहः। 'अवहाराधारावायानामुपसंख्यानम्' (वार्त्तिक)।

The words अध्याय, न्याय, उद्याव and संहार are irregularly formed with घञ् in the करण or अधिकरण वाच्य in the sense of a संज्ञा in the masculine gender. Thus घञ् supersedes घ. अध्यायः—अधि—इ+घञ (अधिकरणे) a chapter. नि+इ+घञ् (करणे)—justice, उद्यावः—उद् यु+घञ् (करणे). संहारः—सम्+हृ+घञ—anything for collection. संहारः—destruction is, however, with घञ् भावे—by बाहुलक. 'अवहार—'This is a Varttika. The words अवहार, आधार and आवाय (आ+वि—घञ्) have to be enlisted herein as they are irregularly formed with घञ्। Kasika says—"सूत्रे चकारः अनुक्तसमुच्चयार्थः"।

मित—। अध्यायेति। अध्याय, न्याय, उद्याव, संहार एते चत्वारः शब्दाः संज्ञायां पुंसि करणाधिकरणयोः घञन्ता निपात्यन्ते। घस्यापवादः। अधिपूर्वक इङ् अध्ययने निपूर्वक इण् गतौ, उत्पूर्वको यु मिश्रणे, समपूर्वको हृहरणे इति क्रमेण

धातव: । नियन्तीति । नितन्त्यनेनेति न्याय: । उद्यवन्त्यनेनेत्यादि: क्रम: । अवहारेति वार्तिकम् । अवहार, आधार आवाय इत्येतेषां निपातनाद् घञन्तानां ग्रहणम् । चकारात् अनुक्तअवहारादय: इति वृत्ति: ।

३३०२ । उदङ्कोऽनुदके ॥ ३।३।१२३ ॥

टी—। उत्पूर्वादञ्चते घञ् स्यान्नतु उदके । घृतमुदच्यत उद्धियतेऽस्मिन्निति घृतोदङ्कश्चर्ममयं भाण्डम् । 'अनुदके' किम् ? उदकोदञ्चन: ।

घञ् after अञ्च preceded by उद् is employed in the senses as above ( करणाधिकरणयो: पुंसि, संज्ञायाम् ) provided the term उदक does not lead as an उपपद. Thus घृतोदङ्क:—a leather pot for storing ghee within—घृत उत् अञ्च घञ्—क by 'चजो: कु'. घञ् supersedes घ under पुंसि संज्ञायाम्—' । उदकोदञ्चन:—उदक + उत्—अञ्च + ल्युट् ( अनट् )—any pot for storing water—Here घञ् is prohibited from taking place due to the existence of 'उदक', and घञ् being prohibited घ was expected to take effect but as घ and घञ् are nearly alike there being no difference in respect of formation ल्युट् ( in the sense as above ) come in by 'वासरूप:—' । 'घृतोदञ्चन also is allowable says some one'; but Nagesha seems to be against this.

मित—। उदङ्क इति । अनुदक इत्युपपदत्वेन विवक्षित: । उदकशब्दे उपपदे असति घञन्त उदङ्कशब्दो निपात्यत इत्यर्थ: । विग्रहमाह—उत्पूर्वादिति । घृतमुदच्यत इति । घृतस्य उदङ्क इति तु न विग्रहीतव्यमिति भाव: । घृतोदङ्क इति । घृ + उत् + अञ्च + घञ् ( अधिकरणे ) 'चजो: कु—' इति कुत्वम । अत्रापि करणाधिकरणयोरिति, पुंसि संज्ञायामिति चानुवर्तत इति मन्तव्यम् । तेन घञयं 'पुंसि संज्ञायाम्—' इति घस्यापवाद: । अत्र वाऽसरूपन्यायेन घृतोदञ्चन ( ल्युट् )

इत्यपीति कश्चित्। 'स्वाधिकारादूर्ध्वं वाऽसरूपविधि: क्वचिन्न' इत्यनुसारादिदमिति बोध्यम्। नागेशस्तु नेदमनुमन्यते। उदकोदञ्चन इति। उदकमुदच्यते उद्ध्रियतेऽस्मिन्नित्यधिकरणे ल्युट्। जलपात्रमित्यर्थ:। न च घञो घापवादत्वाद् घञि प्रतिषिद्धे घ एवात्र प्राप्नोतीति शङ्कितव्यम्। प्रतिषेधसामर्थ्यात् घस्याप्यप्रवृत्ते:। यद्यपि घघञोरस्ति विशेष:। तथापि नेह आकृतिगत: सोऽस्ति। उभयोरेव घित्करणसाम्य क्वत्वस्य सप्रयोजनत्वात्। न च स्वरे विशेष:। घे सति यथा अन्तोदात्तता भवति तथा घञि अपि सति ञ्नित्यादिस्वरेण अन्तोदात्ततैवेति समानात्।

३२०३। जालमानाय: ॥ ३।३।१२४ ॥

दी—। आनीयन्ते मत्स्यादयोऽनेनेत्यानाय:। 'जालम्' इति किम्? आनय:।

The word आनाय in the sense of a net is irregularly formed with घञ् in the करणवाच्य as a technical name in the masculine gender—आनी + घञ्. आनय:—with अच्-bringing.

नित—। जालमिति। तस्मिन् वाच्ये आनाय इति—आङ्पूर्वान्नयतेर्घञि पुंसि संज्ञायां करणे निपात्यत इत्यर्थ:। 'अचो ञ्णिति' (२५४) इति वृद्धि:। आनय इति। 'श्रिणीभुवोऽनुपसर्गे' (३१९५) इति निषेधाद् 'एरच्' इत्यच्। आनय आनयनमित्यर्थ:।

३२०४। खनो घ च ॥ ३।३।१२५ ॥

दी—। चाद् घञ्। आखन:—आखान:। घित्करणमन्यतोऽप्ययमिति ज्ञापनार्थम्। तेन भजे: भग: पदम्। करणे घ:। खल सञ्चये। अधिकरणे घ:—खल इत्यादि। 'खनेर्डडरेकेकवका वाच्या:' (वार्तिक)। आख:—आखर:—आखनिक:—आखनिकबक:। एते खनित्रवचना:।

The root खन् takes घञ् as also घ in the way as above (करणाधिकरणयोः पुंसि, संज्ञायाम्). Thus आखनः ( घ ) and आखान ( घञ् ) both the affixes are employed in the करणवाच्य the dissolution being आखन्यते अनेन—a digging instrument. घित्करणम् etc—The drift is this—The घित् or घ dropping affixes and घञ् are enjoined after खन् but it has no च or ज that may be replaced by क or ग due to this घित् करण by 'चजोः कु—', Hence although घित्करण fails here ( in the case of खन् ) yet it has been adopted here to suggest that the affix घ may be appointed after any other root ( अन्यतोऽपि ) e.g. भज् + घ = भगः— a foot ( पदम् ). Others however explain पदम् is not a meaning of भग but another word with घ ( पद ) and add that hence it is that पदम is neuter for by 'पुंसि संज्ञायाम्—' it would have been masculine 'पदः' and not neuter 'पदम्' ( See Tattwabodhini ). Nagesha seems to be favourable to our position when he says 'भगः पदमिति क्वचित् प्रयोगः' । By this suggestion ( ज्ञापन ) we have also अधिकरणे घ after the roots खल सञ्चये etc. 'खनेर्डडरेकेकवकाः—' This is Varttika here meaning the affix ड डर, इक and इकवक have to be mentioned taking place after the root खन् in the ways as above. Thus आखः ( आ खन् ड the 'टि' -portion eliding due to डित्त्व or elision of ड् ) आखर ( आ — खन् डर—Similarly ) आखनिकः ( आ खन् + इकः ) आखनिकवकः ( आ—खन् + इकवकः )—all these affixes are employed in the करणवाच्य and each of the derivatives means a digging instrument.

मित—। खन इति। घ इत्यविभक्तिको निर्देशः। 'अवे—' ( ३२९९— ३।३।१२० ) इत्यतो घञ अनुवर्तते। 'करणाधिकरणयोः' इति। 'पुंसि संज्ञायाम्' इति च। तेन करणादौ पुंसि संज्ञायां खनतेर्घञ् घश्च स्यादित्यर्थः। आखन इति।

आखन्यतेऽनेनेति। करणे घः। खनित्रमित्यर्थः। आखान इति। करणे घञ्। प्रागवदर्थः। 'अत उपधायाः' इति वृद्धिः। ननु खनतेर्घञ् अस्तु। घित्करणफलाभावेऽपि ञित्करणस्य आखान इत्यत्र उपधावृद्धिफलकत्वात्, घ चेति घित्करणन्तु व्यर्थम्। न हि खनतौ चकारो कश्चिदस्ति येन 'चजोः कु—' इति कुत्वं विधीयेत इत्याशङ्क्य घित्करणफलमाह—अन्यतोऽपीति ज्ञापनार्थमिति। अन्यतः अन्यस्मादपि धातोरयं घ प्रत्ययो यथा स्यादित्येतद् ज्ञापयितुमित्यर्थः। ज्ञापनमेवाह—तेनेति। भजेः भग इति। भज्यतेऽनेनेति करणे घः। चजोरिति कुत्वेन गः। तस्य विवरणं पदमिति। 'भगः पदमिति क्वचित् प्रयोगः' इति नागेश-स्वरसात्। तत्त्वबोधिनीकारादयस्तु पदमिति घान्तम् उदाहरणान्तरम् इति मत्वा—पद्यते ( गम्यते ) अनेनेति पदम्। करणे घः। अस्माज् ज्ञापनादेव घप्रत्यये सत्येव पदमिति नपुंसकम्। करणाधिकरणयोः 'पुंसि संज्ञायाम्—' इत्यनेन तु पद इति पुमानेव स्यादित्याहुः। ज्ञापनस्य अधिकरणे फलमुदाहरति—खल इति। खलति सञ्चिनोति अस्मिन्निति विग्रहः। 'खनेडडरेकेकवकाः—' इति वार्तिकमिदम्। खनतेर्धातोः ड, डर, इक, इकवक इत्येते चत्वारः प्रत्ययाः प्रागुक्तेऽर्थे वक्तव्या इत्यर्थः। आखः आखर इति। पूर्वत्र आपूर्वात् खनतेर्डः। उत्तरत्र तु डरः। डित्त्वसामर्थ्यादभस्यापि टेर्लोपः। उभयोरपि खनित्रमर्थः। आखन्यतेऽनेनेति प्राग्वद् विग्रहः। करणे प्रत्ययौ। एवम् इके इकवके च प्रत्यये—क्रमेण आखनिकः—आखनिकवक इति। प्राग्वदर्थे विग्रहौ। एते इति खनित्रवचनाः खनित्रार्थका इत्यर्थः। खनित्रमुच्यते एभिरिति करणे ल्युट्।

२२०५। ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्॥ ३।३।१२६॥

दी—। करणाधिकरणयोरिति निवृत्तम्। एषु दुःखसुखार्थेषूपपदेषु खल् स्यात्। 'तयोरेव—' ( २८३३ ) इति भावे कर्मणि च। कृच्छ्रे—दुष्करः कटो भवता। अकृच्छ्रे—ईषत्करः—सुकरः। 'निमिमीलियां खलचोरात्त्वं नेति वाच्यम्'

( वार्तिक )। ईषन्निमयः। दुष्प्रमयः। सुविलयः। निमयः। मयः। लयः।

The expression 'करणाधिकरणयोः' occurring in 'करणाधिकरणयोश्च' (3293) ceases to follow hence. Thus the rule means—any root may take the affix खल् in the भाव or कर्मवाच्य by 'तयोरेव—' (2833) when the terms ईषत्, दुर् and सु, denoting ease ( ईषत् + सु ) and difficulty ( दुर् ), stand as उपपदs. Thus in the sense of difficulty 'दुष्करः—' etc a mat can hardly be made by you. In भवता the case-ending is तृतीया as षष्ठी is barred by the rule 'न-लोकाव्ययनिष्ठाखलर्थ तनाम्. Here षत्व is to be accounted for by 'इदुदुपधस्य चाप्रत्ययस्य' (155). In the sense of अकृच्छ् or ease—'भवता ईषत् करः—' it can be done with ease by you. 'निमिमीलियाम—' This is a Varttika here. It has to be said that the roots मि, मी and ली preceded by नि cannot, (by 'मीनातिमिनोतिदीङांल्यपि च' and 'विभाषा लीयतेः) have their इ or ईङ replaced by आ when the affixes खल् and अच् follow them in the above senses. Thus ईषन्निमयः, ईषत्—नि + मि खल् भावे or कर्मणि; दुष्प्रमयः(दुर् प्र मी खल्), सुविलयः ( सु—वि—ली + खल—etc ) are without आत्व or आकार as, also निमयः ( नि—मि अच् by 'एरच्' ) मय ( मी अच् ) and लयः ( ली + अच् )

मित—। ईषद्ःसुष्विति। कृच्छ्रेति दुःखवचनम्। अकृच्छ्रेति सुखवचनम्। तत्र दुर् इति कृच्छ्रार्थकम्। ईषत्, सु इत्युभयं तु सुखार्थकम्। योग्यतादय एवात्र यथाविभाग इति उदाहरणेभ्यः स्पष्टम्। कृच्छ्राकृच्छ्रार्थकेषु ईषत्, दुर्, सु इत्येषु उपपदेषु धातोः खल् स्यादित्यर्थः। करणाधिकरणयोरिति—अत्र व्याख्यानमेव शरणमिति भावः। नन्वेवं किमर्थं 'कर्तरि कृत्' इति कर्तरि वाच्ये खल् विधीयते। नेत्याह—'तयोरेव—' ( २८३३ ) इति। कृच्छ्रे इति। उदाहरणमुक्तमिदम्।

दुष्कर इति। दुर् पूर्वात् करोतेः कर्मणि खल्। 'सार्वधातुकार्ध—' (२१६८) इति गुणः। 'खरवसानयोः—' (७७) इति रेफस्य विसर्जनीयः। 'इदुदुपधस्य चाप्रत्ययस्य' (१५५) इति विसर्गस्य षकारः। एवमीषत्करः सुकरः। न लोकेति षष्ठीनिषेधाद् भवतेत्यत्र कर्तरि तृतीया। भावे सुकरं त्वयेत्यादावुदाहार्य्यम्। लक्षेत्यादि किम्। ईषत्कार्य्यम्। अत्र ईषदित्यनर्थकम्। 'मिमिमीलियाम—' इति वार्तिकमिदम्। खलि अचि च प्रत्यये परे निपूर्वस्य 'डुमिञ्' इत्यस्य, 'मीञ्' इत्यस्य, लीङ् इत्यस्य चात्व' नेति वक्तव्यमित्यर्थः। 'मीनातिमिनोतिदीङां ल्यपि च' इति 'विभाषालीयतेः' इति च प्राप्तम् आत्वम् अनेन प्रतिषिध्यते इति ज्ञेयम्। अत्रापि भावे कर्मणि च प्रत्ययौ। तत्र खलि उदाहरति—ईषन्निमयः ( ईषत्—नि—मि + खल् ) दुष्प्रमयः ( दुर—प्र—मी + खल् ) षत्वं प्राग्वत्। सुविलयः ( सु—वि—ली + खल् ) अनेन सूत्रेण ('ईषद्दुःसुषु—' इत्यनेन) अत्र खल्। अचिउदाहरति—निमयः इति। 'एरच्' इत्यच्। मयः। लयः इति। पचाद्यच् एरच् च इति नागेशः।

२३०६। उपसर्गात् खल्घञोः ॥७।१।६७॥

टी—। उपसर्गादेव लभेर्नुम् स्यात्। ईषत्प्रलम्भः। दुष्प्रलम्भः। सुप्रलम्भः। उपालम्भः। 'उपसर्गात्' किम्? ईषल्लभः। लाभः।

लभ् takes the augment नुम् provided it comes after an उपसर्ग only when the affixes घञ् and खल् follow the root in भाव etc, Thus ईषत्प्रलम्भः—easily found—etc. खल in the कर्मवाच्य with नुम्। उपालम्भः— उप+आलभ्+घञ् + (भावे) नुम्— a rebuke. ईषल्लभः (खल), लाभः (घञ्)—No उपसर्ग so no नुम्।

मित—। उपसर्गादिति। खल्घञोरिति इत्यत्र सप्तमीद्विवचनम्। खलि घञि च परे इत्यर्थः। 'लभेश्च' इत्यतो लभेरिति 'इदितो नुम्—' इत्यतो नुमिति चानुवर्तते। तेन व्याचष्टे—उपसर्गादिति। भावकर्मणोः खलि घञि च परे इति

शेषः। ननु 'लभेश्च' इत्येव सिद्धे इदं व्यर्थमित्याशङ्का आह—( उपसर्गात् ) एवेति। तथाच 'लभेश्च' ( २५८२ ) इत्युपसर्गे सत्यसति वा नुम् प्रसज्यत नतु उपसर्गे सत्येवेति भावः। ईषत्प्रलम्भ इत्यादि। एषु त्रिषु 'ईषद्दुःसुषु—' इति भावे कर्मणि वा खल्। लभेर्नुम् मित्त्वादन्त्यादचः परः। अनुस्वारपरसवर्णौ। उपालम्भ इति। अत्र भावे घञ्। नुमः प्राक् प्रवृत्त्या अकारोपधत्वाभावाद 'अत उपधायाः' इत्यस्याप्रवृत्तेर्न वृद्धिः। ईषल्लभ इति। भावे खल्। उपसर्गाभावान्नुमभावः। लाभ इति। भावे घञ्। प्रागवन्नुमभावः। "इष्टलाभात् विकाशिवक्त्राः" इत्यादिरार्षः।

२३०७। न सुदुर्भ्यां केवलाभ्याम् ॥६।१।७८॥

दी—। उपसर्गान्तररहिताभ्यां लभेर्नुम् न स्यात् खल्घञोः। सुलभम्। दुर्लभम्। केवलाभ्याम्' किम्? सुप्रलम्भः। अतिदुर्लम्भः। कथं तर्हि अतिसुलभमति दुर्लभमिति। यदा स्वती कर्मप्रवचनीयौ तदा भविष्यति।

The augment नुम् is not allowed to लभ् if सु and दुर् preceding the roots are not joined by any other उपसर्ग—when खल् and घञ् follow. Thus सुलभम् and दुर्लभम्—with खल् but without नुम् as सु and दुर् are singly used.—But in the cases सुप्रलम्भः, अतिदुर्लम्भः—लभ् gets नुम् because the उपसर्गs सु and दुर् are joined by प्र and अति, hence the prohibition ( of नुम् ) does not apply. अतिदुर्लभ, अतिसुलभ etc, however, are grammatical ( साधु ) only when सु and अति are कर्मप्रवचनीय ( in the sense of worship or honour—पूजार्थक ) so that in that case, the prohibition of नुम् applies but not otherwise.

मित—। न सुदुर्भ्यामिति। केवलाभ्यामित्येतद् व्याचष्टे उपसर्गान्तररहिताभ्यामिति। 'लभेश्च' 'इदितो नुम्—' इत्याभ्यां लभेरिति नुम् इति चानुवर्तते। पूर्वसूत्रात् खल्घञोरिति च। तदाह—लभेर्नुम् नेत्यादि। सुलभम्। दुर्लभम्।

भावे खल्। केवलादिति नुमो निषेधः। सुमलभ्य इति। आद्ये प्रत्युदाहरणमिदम्। प्रे त्युपसर्गान्तरसहितत्वादत्र नुमो नास्ति निषेधः। द्वितीये प्रत्युदाहरति अतिदुर्लभ इति। अत्र अतिरित्यधिकम्। अतो नुम्। अतिसुलभमतिदुर्लभमिति। उपसर्गान्तरसहितत्वादपि कथमत्र नुमो निषेध उपसर्गान्तररहित एव तन्निषेधादिति प्रश्नः। समाधत्ते—यदा स्वतौ कर्मप्रवचनीयौ इति। 'सुः पूजायाम्' 'अतिरतिक्रमणे च' इति तयोः कर्मप्रवचनीयत्वम्। एवमनयोः कर्मप्रवचनीयत्वेन उपसर्गत्वाभावात् केवलाभ्यामेव सुदुर्भ्यां लभेः खलपरत्वान्नुमनेति भावः। अन्यथा अतिसुलभः अतिदुलभ इत्येव। सुदुरोरुपसर्गत्वप्रतिषेधात् कर्मप्रवचनीयत्वाकल्पनादपि भविष्यति इति चेन्न। अनयोरुपसर्गत्वं प्रति केवलतद्विषयत्वात्। सुदुर्लभमिति तु सूत्रोपात्तातिरिक्तेति विशेषणात् सिद्धमिति कैयट इति नागेशे स्पष्टम्।

२३०८। कर्तृकर्मणोश्च भूकृञोः ॥३।३।१२७॥

दी—। कर्तृकर्मणोरीषदादिषु चोपपदेषु भूकृञोः खल् स्यात्। 'यथासंख्यं नेष्यते'। कर्तृकमणी च धातोरव्यवधानेन प्रयोज्ये। ईषदादयस्तु ततः प्राक्। 'कर्तृकर्मणोश्चर्थयोरिति वाच्यम्' ( वार्तिक )। खित्वान्मुम। अनाढ्येन आढ्येन दुःखेन भुयते दुराढ्यंभवम। ईषदाढ्यंभवम्। स्वाढ्यंभवम। ईषदाढ्यंकरः। दुराढ्यङ्करः। स्वाढ्यंकरः। 'चार्थयोः' किम? आढ्येन सुभूयते।

When a कर्ता and a कर्म as well as ईषत् etc stand as उपपद the roots भू and कृञ् take the affix खल् in the भाववाच्य and कर्मवाच्य. यथासंख्यं नेष्यते—This is the statement of the Bhashyakara. The drift of it is this—The authors of Kashika, Nyasa (jinendrabuddhi) and Padamanjari (Haradatta) and others explain that भू and कृञ् will take खल् when कर्ता and कर्म along with ईषत्,

दुर् and सुर precede as उपपदs in order. In other words, when an agent ( कर्ता ) along with any of ईषत्, दुर् aud सु precede as an उपपद the root भू will take खल् and when an accusative (कर्म) along with any of ईषत्, दुर् and सु lead as an उपपद the root कृ will take खल्. This explanation has been accepted by the author of Prakriya-Kaumudi and he also has been followed by others. As this exposition is, however, against the statement of Bhashya as above, So Bhattoji rejects it and follows Bhashya. In the latter (or भाष्यकार's method of) explanation भू as well as कृञ् may take खल् no matter whether an agent or an object along with any of ईषत् etc lead as an उपपद. Now to reply the rejoinder whether of the five ( कर्ता, कर्म, ईषत्, दुर्, सु ) any of the first two or any of the last three will take the lead in the sphere of application, he says कर्तृकर्मणोः etc—. That is कर्ता and कर्म should be used invariably before the root ( भू or कृ ) with ईषत् etc before them. Thus ईषत् etc will lead and कर्ता and कर्म will follow them ( and last of all भू or कृ will take place ).

मित—। कर्तृकर्मणोश्चेति। कर्ता च कर्म च तयोरिति सप्तमीद्विवचनम्। कर्तरि कर्मणि चेत्यर्थः। अत्रानयोरुपपदत्वमेव। कर्तरि कर्मणि चोपपदे इत्यर्थः। न तु कर्तरि कर्मणि च वाच्ये इति। व्याख्यानमेवात्र विशेषप्रतिपत्तिकरम्। सूत्रमिदम् 'ईषद्दुःसुषु—' ( ३३०५—३।३।१२६ ) इत्यतोऽव्यवहितपरवर्ति। तेनात्र चकारेण सूत्रमिदम् ( ईषद्दुःसुषु' ) सर्वमप्यनुवर्तते। अतो व्चष्टे—कर्तृकर्मणोः ईषदादिषु चोपपदेषु इत्यादि। कृच्छ्राकृच्छ्रार्थकेष इति विशेषणमपि योज्यम्। 'तयोरेव—' ( २८३२ ) इत्यत्रापि भावे कर्मणि च प्रत्यय इति बोध्यम्। यथासंख्यं नेष्यत इति। भाष्यकारस्य वचनमिदम्। अयमत्राशयः—कर्तृकर्मणी द्वे

भवतः। भूकृञो च द्वौ भवतः। एवं तर्हि कर्तरि उपपदे भवतेः खल् कर्मणि उपपदे करोतेः खल् (ईषदादयस्तूभयत्रैव समानम्; तथाच—ईषदादि सहिते कर्तरि उपपदे भवतेः खल्, तत्सहिते कर्मणि उपपदे करोतेरिति सरलार्थः) इत्येवं यथासंख्यविवक्षितमित्यपि व्याख्यानं भवेत्। उपात्तं च तदेव व्याख्यानं काशिकाकृता। अनुसृतं च तद्ग्रासकारहरदत्तादिभिः, प्रक्रियाकौमुदीकृद्भिः विमलसरस्वत्यादिभिश्च। तदेतत् सर्वमपि न स्वीकर्तव्यम्। ईषदादिसहिते कर्तर्युपपदे करोतेरपि खल् प्राप्तिः स्यादिति हि भाष्यकारः इति यथासंख्याभावं भाष्ये स्पष्टम् इति तत्त्वबोधिनी। तत्त्व—भाष्यविरोधान्नात्र भूकृञोः क्रमो विवक्षितः। 'यथोत्तरं मुनीनां प्रामाण्यम्' इति। ननु कर्तृकर्मणी ईषदादयश्चेति उपपदानि भवन्ति। तदस्मिन्नुपपदसन्निपाते पौर्वापर्यनिर्णयो दुष्कर इत्यत आह—कर्तृकर्मणोः चेति। कर्ता कर्म च धातोः (भवतेः करोतेश्च) अव्यवधानेन (अव्यवहित पूर्ववर्तित्वेन) प्रयोज्ये (प्रयोक्तव्ये भवतः)। ततः प्रागिति। कर्तृकर्मणोः प्रवेशस्य पूर्वमित्यर्थः। तथाच—धातोः प्राक् कर्ता कर्म वा प्रयोक्तव्यम्। कर्तुः कर्मणो वा प्राक् ईषदादीनां कथिदिति भावः। सर्वमिदं न सम्यक् इति ज्ञापयन्नपेक्षितं पूरयितुमाह—'कर्तृकर्मणोश्चार्थयो—' इति वार्तिकमिदम्। (ईषदादिसहिते) कर्तरि कर्मणि चोपपदे भवतेः करोतेश्च खल् प्रत्ययश्चेद् भवति तदा यदा इमे कर्तृ कर्मणी च्व्यर्थे (अभूततद्भावार्थे) प्रयुज्येते तदैवायं भवति नान्यथेति वक्तव्यमित्यर्थः। खित्त्वान्मुम् इति। (खल्) प्रत्ययस्य खित्करणे इदमेव प्रयोजनम्। 'अरुर्द्विषदजन्तस्य मुम्' (२९४२) इति मुमागमोऽत्र यथा स्यात्। एतेन कर्तुः कर्मणश्च प्रत्ययार्थत्वं निरस्तं किन्तु उपपदार्थत्वमेवेति विज्ञापितम्। तथाच—कर्तृकर्मणोः प्रत्ययार्थत्वे ईषदादीनामेव उपपदत्वं स्यात्। तथा चात्र तेषाम् अव्ययत्वात् 'अरुर्द्विषत्—' इति विहितो मुम न प्रवर्तेत। अन-व्ययस्येति तत्र निषेधात्। कर्तुः कर्मणश्चोपपदत्वे तु मुम् निर्बाधमेव भवति। ईषदादी-नामप्युपपदत्वेऽपि कर्तृकर्मभ्यां तेषां व्यवहितत्वादिति विभावनीयम्। अनाढ्येन आढ्येन दुःखेन भूयत इति। अयं तत्त्वबोधिनीस्थः पाठः। 'अनाढ्येन दुःखेन भवते' इति तु बालमनोरमायां दृश्यते। अनयोस्तत्त्वबोधिनीस्थः पाठ एव साधुरुत्तरस्तु प्रामादिक इति स्पष्टमेव। अत्र च्व्यर्थप्रकाशकत्वेनैवैतस्मात् खलोऽप्रवृत्तेः। दुराढ्य-

भयमिति। भावे खल्। कर्तरि उदाहरणमेतदादि। अनाढ्येन आढ्येन कर्तरि तृतीया। विग्रहे—दुःखेन इत्यस्य कृच्छ्रार्थकत्वात् दुर इत्युपतिष्ठतु नेतव्यौ। 'मिदचोऽन्त्यात् परः' इति आढ्यशब्दादेव मुम्। ईषदाढ्यंभवम्—स्वाढ्यंभवमिति। अनाढ्येन आढ्येन सुखेन भूयते इत्यभयत्र एक एव विग्रहः। ईषदादिरकृच्छ्रार्थं कत्वात्। कर्मणि उपपदे खलमुदाहरति—ईषदाढ्यंकर इति। अनाढ्यः आढ्यः सुखेन क्रियत इति विग्रहः। दुराढ्यंकर इत्यत्र तु—अनाढ्यो आढ्यो दुःखेन क्रियत इति विशेषः। कर्मणि वाच्ये खल्। 'सार्वधातुकार्ध—' इति सर्वत्र गुणः। आढ्येनेति। प्रत्युदाहरणमिदम्। अत्र च्व्यर्थाभावात् प्रत्ययाप्रवृत्तिः। ईषद्दुःसुनामत्र कर्तृकर्मभ्यां व्यवहितत्वात् 'ईषद्दुःसुषु—' इत्यनेनाप्राप्ते रयमारम्भ इति बोध्यम्।

३३०८। आतो युच्॥ ३।३।१२८॥

दी—। खलोऽपवादः। ईषत्पानः सोमो भवता। दुष्पानः। 'भाषायां शासियुधिदृशिधृषिमृषिभ्यो युज्वाच्यः' (वार्तिक)। दुःशासनः। दुर्योधन इत्यादि।

The affix युच् ( अन् ) is appointed after roots ending in आ in the भाव and कर्मवाच्य when ईषत् दुर् and सु precede as उपपदs in the senses of कृच्छ्र and अकृच्छ्र. This ( युच् ) supersedes खल् directed by ( 'ईषद्दुःसुषु—' ( 3305 ). Nor can you say that खल् will take place optionally by 'वासरूप:—'as it is beyond the feminine section ( स्त्र्यधिकार ), for there runs the dictum 'क्त ल्युट् तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति। Thus by युच् or अन ईषत्पानः, दुष्पानः, etc ( कर्मणि खल् ). The sense is—the Somajnice can be easily or with difficulty, drunk by you. In दुष्पान षत्व is accounted for by 'इदुदुपधस्य चाप्रत्ययस्य' ( 155 ). 'भाषायां शासियुधि—' This is a Varttika. It has to be said that युच् after शास् युध् दृश, धृष् and मृष् takes

place in the same senses as above with ईषत् etc preceding as उपपद्s, in भाषा or secular language. Thus दुःशासनः—one hardly controllable—etc (कर्मणि युच्). Similarly ईषच्छासनः, सुशासनः ; सुशासनः, सुयोधनः दुर्दर्शनः सुदर्शन etc. Here also खल् cannot take place for reasons as above.

मित—। आत इति। 'ईषद्दुःसुषु—' इत्यत ईषदादयोऽनुवर्तन्ते। न तु कृच्छ्राकृच्छ्रार्थयोरिति। आचरितत्वादिति व्याख्यानात् च प्रत्ययः। तेनायमर्थः। कृच्छ्राकृच्छ्रार्थेषु ईषदादिषूपपदेषु आदन्ताद्धातोर्युच् स्याद् भावे कर्मणि च वाच्ये इति। 'ईषद्दुःसुषु—' इत्युत्सर्गः। 'आतः' इति तु तदपवादः। तदाह—खलोऽपवाद इति। इति। नन्वेवमपि 'वाऽसरूपः—' इति न्यायादत्र पक्षे खल् भवेदत्र स्त्र्यधिकाराभावादिति चेत्। न। 'क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति' इत्युक्तेः। अथो युचि उदाहरति—ईषत्पान इति। कर्मणि प्रत्ययः। युवोरित्यनादेशः। दुष्पान इति। भवतेति शेषः। 'इदुदुपधस्य चाप्रत्ययस्य' (१५५) इति षत्वम्। एवं सुपानः, सुदान इत्यादि। 'भाषायां शासियुधि—' इति वार्तिकमिदम्। एतच्च 'छन्दसि गत्यर्थेभ्यः, अन्येभ्योऽपि दृश्यते' इत्युत्तरमिदम्। अयं वार्तिकार्थः: कृच्छ्राकृच्छ्रार्थेषु ईषदादिषूपपदेषु भाषायां (लौकिकव्यवहारे न तु छन्दसि) शासिप्रभृतिभ्यः पञ्चभ्यो भावे कर्मणि च युच् स्यादिति। दुःशासन इति। दुःखेन शिष्यते इति कर्मणि युच्। अत्रापि खल्नेति बोध्यम्। इत्यादीति। आदिपदेन सुशासन सुयोधन—दुर्दर्शन सुदर्शनादयो बोध्याः। 'दुरोदरच्छद्मजितां समीहते नयेन जेतुं जगतीं सुयोधनः' इति भारविः।

३३१०। षात् पदान्तात् ॥ ८।४।३५ ॥

**टी—। नस्य णो न। निष्पानम्। सर्पिष्पानम्। 'षात्' किम्? निर्णयः। 'पदान्तात्' किम्? पुष्णाति। पदे अन्तः पदान्तः इति सप्तमीसमासोऽयम्। तेनेह न सुसर्पिष्केण।**

ण is not a substitute for न when it (न) comes after a ष occu-

ring in a पदान्त. Thus निष्पानम्-( drinking to entirety—युच—in the भाववाच्य ) etc without णत्व. षत्व however, is accounted for by 'इण: ष:' (153). निर्णय: ( निर्—नी + अच भावे ) णत्व of न is effected because it ( न ) follows a रेफ and not a ष. पुष्णाति ( पुष् क्र्यादि लट्ति ) here णत्व of न ( of श्ना ) is effected for ष here is not at the end of a पद but of a root. In पदान्त the samasa being of the सप्तमी तत्पुरुष variety ( as in the text ) so the prohibition of 'षात्—'does not apply in case like सुसर्पिष्केन etc. Here ष is पदस्य उपान्त but not पदे अन्त: (सुसर्पिष्क ), hence णत्व takes place by 'अट् कुप्वाङ्—' ( 197 )

मित—। षादिति। 'रषाभ्यां नोणः—' (८।४।१) इत्यतो नोण इत्यनुवर्तते। 'न भाभूपूकमिगमिप्यायीवेपाम्' (८।४।३४) इत्यतो नेति च। तेनापेक्षितं पूरयन्नाह—नस्य णोनेति। पदान्तोयः षकारस्तस्मात् परस्य नस्य णो नेत्यर्थः। 'कृत्यचः' (२८३५—८।४।२९) इति प्राप्तं णत्वमनेन प्रतिषिध्यते। नागेशस्तु 'कृत्यच' इति 'भावकर्मणो'रिति च प्राप्तं प्रतिषिध्यत इत्याह। 'भावकर्मणोः' (२६७९) इत्यनेन हि भावे कर्मणि च लकारस्यात्मनेपदमेव विधीयते न तु नत्वम्। तस्मादत्र नत्वस्याप्रसक्तेः 'कृत्यचः' इति प्राप्तमेव नत्वमत्र प्रतिषिध्यत इति ध्येयम्। निष्पानमिति। निःशेषेण पानमित्यर्थः, 'इदुदुपधस्य च—' (१५५) इति षत्वम् सर्पिष्पानमिति। घृतपानमित्यर्थः। निर्णय इति। षकारात् परत्वाभावादत्र 'रषाभ्याम्—' इति णत्वम्। पुष्णातीति। अत्र 'पुष' इति धातुः क्र्यादिः। स च न पदम् 'अधातुरप्रत्ययः प्रातिपदिकम्' इति 'सुप्तिङन्तं पदम्' इति च सिद्धान्तात्। अतः 'क्र्यादिभ्यः श्ना' इति प्राप्तस्य नकारस्य णत्वम्। सूत्रे पदान्तेति शब्दं व्याकरोति—पदे अन्त इति। अत्र चोत्तरपदत्वमेव मानमिति नागेशः। तस्यायमर्थः—यदि समासो विवक्षितो नाभविष्यत्तदा 'षात् पदात्' इत्येवासूत्रयिष्यत्। येन विधिस्तदन्तस्येति परिभाषाबलादेव पदान्तादित्यर्थस्य प्राप्तेरिति। सुसर्पिष्केणेति। शोभनं सर्पिर्यस्येति विग्रहः। 'उरः प्रभृतिभ्यः कप्' इति समासान्तः कप् प्रत्ययः। स च नित्यः। तेन 'सुसर्पिष्क' इत्येव

पदम् ( प्रतिपादिकम् ) 'कृत्तद्धितसमासाश्च' इति नयात्। ततः ककारस्य पदान्तत्वं न षकारस्य तथाभावान्निषेधो न प्रवर्तत इत्यत्र बलम्। अत्र व्याख्यानमेव शरणमिति भावः।

२२११। आवश्यकाधमर्ण्ययोर्णिनिः ॥ ३।३।१७० ॥

दी—। अवश्यंकारी। शतंदायी।

The affix णिनि ( इन् ) is appointed after a root in the active voice ( कर्तृवाच्य ) when the sense of sure duty or the state of a debtor (अधमर्ण) is implied. Thus अवश्यंकारी—कृ + णिनि वृद्धि by 'अचो ञ्णिति' (254) ( then add अवश्यम् )—an unfailing doer i.e a dutiful person. Here अवश्यम् (अव्यय) implies sure duty. शतंदायी—दा + णिनि —युक् by 'आतो युक् चिण्-कृतोः—' debtor by a hundred. In शतम् षष्ठी is barred by the rule 'अकेनोर्भविष्यदाधमर्ण्ययोः' ( 628 ).

मित—। आवश्यकाधमर्ण्ययोरिति। अवश्यमेवेत्यवश्यकम्। स्वार्थे कन्। ततस्तस्येदमित्यपि आवश्यकम्। यद्वा सूत्रकारव्यवहारात् वुञ् भावे भवार्थे वा। कर्तव्यमित्यर्थः। अधमर्णः ऋणी। तस्य भाव कर्म वा आधमर्ण्यम्। ष्यञ्। आवश्यके आधमर्ण्ये चार्थे गम्ये धातोर्णिनिः स्यात् कर्तरीत्यर्थः। 'कर्तरि कृत्' इत्येवानुवर्तते नतु भावादयः असम्भवात्। अवश्यंकारीति। करोतीति विग्रहः। ततः अवश्यमिति योज्यम्। 'अचो ञ्णिति' (२५४) इति वृद्धिः। अत्रावश्यकार्थस्य अन्वयानुपपत्त्या अवश्यमित्युपन्यस्तम्। तथाव्ययमिति बोध्यम्। आधमर्ण्ये आह— शतं दायीति। ददातीति दायी। 'आतो युक् चिण् कृतो'रिति युक्। ततः शतं दायी। शतमस्य ऋणं शतेनाधमधमर्ण इति वार्थः। 'अकेनोर्भविष्यदाधमर्ण्ययोः' इति षष्ठीप्रतिषेधः। अत्रसुपि उपपदे इति नास्ति नियमः।

२२१२। कृत्याश्च ॥ ३।३।१७१ ॥

दी—। आवश्यकाधमर्ण्ययोरित्येव। अवश्यं हरिः सेव्यः। शतं देयम्।

The कृत्य affixes also are appointed after roots in the sense of आवश्यक and that of आधमर्ण्य. 'अवश्यम्—' etc—कर्म णियत्।

मित—। कृत्या इति। आवश्यके आधमर्ण्ये चार्थे धातोः कृत्यप्रत्यया अपि स्युरित्यर्थः। अवश्यमिति, स्पष्टम्। देयमिति। दा+यदिति स्थिते 'ईद्यति' इत्यात ईत्त्वम्। गुणः।

३२२३। क्तिच्क्तौ च संज्ञायाम् ॥ ३।३।१७४ ॥

दी—। धातोः क्तिच् क्तश्च स्यादाशिषि संज्ञायाम्। 'तितुत्र' (३१६३) इति नेट्। भवतात् भूतिः।

The affixes क्तिच् and क्त are employed after roots in the sense of benediction ( आशिस् ) if a संज्ञा is implied. Thus भूतिः—भू+क्तिच welfare. No इट् by 'तितुत्र—' ( 3163 ). Although the prohibition of इट here is due by 'श्र्युकः किति' ( 2381—7.2.11 ) on the ground of its subsequence to 'तितुत्र—' (7.7.6), yet, says Tattwabodhini, the latter is brought down as it is necersary for रन्ति, वन्ति etc

मित—। क्तिचक्तौचेति। 'आशिषि लिङ्लोटौ' ( ३।३।१७३ ) इति पूर्वं सूत्रम्। ततः आशिषि इत्यनुवर्तते। धातोरित्यधिकृतं वर्तते। तद् व्याचष्टे—धातोरित्यादि। क्तिचा बाधामाभूदिति शब्देन्दुशेखरकाराः। तेषामयमाशयः—अत्र क्तप्रत्ययस्यानुक्तौ अपवादेन क्तिच बाध्येयः। वाऽसरूपविधिस्तु न प्रवर्तत इति। क्तप्रत्ययस्योदाहरणम्— 'सनः क्तिचि' ( ३३१५ ) इति वक्ष्यमाणसूत्रे देवदत्त इति। परसूत्रे 'क्तिचि' इति विशेषणार्थः। 'क्तौ' इत्युक्ते क्तिनोऽपि ग्रहणं स्यादिति भाव इति तत्त्वबोधिन्यां विस्तरः। भूतिरिति। आशीर्द्योतनार्थं भवतादिति। अत्र प्रतिषेधं व्याचष्टे—तितुत्रेति। वस्तुतस्तु 'श्र्युकः किति' ( २३३१ ) इत्येवात्र नेडिति वाच्यम् परत्वात्। तत्त्वबोधिनीकारास्तु 'रन्तिवन्त्योः इन्निषेधार्थमावश्यकत्वात् कालविशेषाभावाच्च 'तितुत्र—' इत्युपन्यस्तमिति। भूतिर्मङ्गले रूढः।

२२१४ । न क्तिचि दीर्घश्च ॥ ६।४।३९ ॥

दी—। अनिटां वनतितनोत्यादीनां च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे। यन्तिः। रन्तिः। वन्तिः। तन्तिः।

Lengthening (of the उपधा) as well as the elision of अनुनासिकs of अनिट root and of वन् etc does not take place when क्तिच् follows. यन्ति—यम्+क्तिच्। रन्ति:—रम्+क्तिच—No इट due to the roots being अनिट. वन्ति—वन्+क्तिच; तन्ति: तन्+क्तिच—No इट्।

मित—। न क्तिचीति। 'अनुदात्तोपदेश वनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' (६।४।३७) इत्यतो वनतितनोत्यादीनाम् इति अनुनासिकलोप इति चेहानुवर्तते। तदाह—अनिटां वनतितनोत्यादीनां चेति। दीर्घानुनासिकलोपौ नेति। एषाम् वनतितनोत्यादीनामनिटां, यमरमादीनां चोपधाया दीर्घो न अनुनासिकलोपश्च नेत्यर्थः। 'अनुनासिकस्य क्विझलोः—' (२६६६) इति दीर्घे प्राप्ते 'अनुदात्तोपदेश—' इति अनुनासिकलोपेच प्राप्तेऽयमारम्भः। यन्तीरन्तिरिति। अनिट्कत्वादुभयत्रेडभावः। संज्ञाशब्दा एते यमनरमनादार्थका इति बोध्यम्।

२२१५ । सनः क्तिचिलोपश्चास्यान्यतरस्याम् ॥ ६।४।४५ ॥

दी—। सनोतेः क्तिच्यात्वं वा स्याल्लोपश्च वा। सनुतात् सातिः। सतिः। सन्तिः। देवा एनं देयासुः देवदत्तः।

When the affix क्तिच follows the root सन् (to form a technical class name in the sense of benediction), the अनुनासिक or the nasal नकार of it is optionally replaced by आ as also the nasal elides optionally. Thus—साति:—सन+क्तिच=सा+ति; with आकार replacing न। सति—elision of न; optional non-elision—सन्ति। This has to be repeated twice. Each of the term means giving away. देवदत्त:—a name (संज्ञा) in the sense of benediction. May the

gods present him. देव + दा + क्त ( कर्मणि )। This is the instance of क्त under 'क्तिचक्तौच—' ( 3313 ).

मित—। सन: क्तिचीति। सन: = षणुदाने इत्यस्यैव ग्रहणं न तु षण संभक्तौ ( न वा सन्नन्तस्य कस्यचित् ) इति मत्वा व्याचष्टे—सनोतेरिति। सनो: इत्येव वक्तुं युक्तमिति नागेशः। एवञ्च षण संभक्तावित्यस्यैव ग्रहणं युक्तम्। 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषयेति भाव:। 'विड्वनोरनुनासिकस्यात्' ( ६।४।४१ )—आदित्यनुवृत्तेराह—आत्त्वमिति। लोपश्चेति। अस्येत्युक्तौ अन्त्यस्य नकारस्यैव लोप इत्यर्थ:। सनुतादिति। आशीरर्थे सतिरादय इति दर्शयितुमाशिषि लोटं गृह्णाति। सातिरिति। अत्र आल्लोप:। पक्षे सन्ति:। सतिरिति। अत्र नकारलोप:। पक्षे सन्तिरित्येव। तेन सन्तिवा उभयत्र योज्यम्। सर्वेषामेव संज्ञायां दानवचनत्वम् ( संभजनवचनत्वं वा )। 'तितुत्र—' ( ३१६३ ) इतीड् निषेध:। 'क्तिच क्तौ—' ( ३३१३ ) इत्यत्रोक्तस्य क्तस्य प्रयोगमुदाहरिष्यन्नाह—देवा एनं देयासुरिति। ददातेराशिषि लिङ् ग्रहणमुदाहरणस्य आशिष्येव संज्ञावचनप्रदर्शनार्थम्। तयोरेवेति कर्मणि क्त:। 'आतो लोप:—' ( २३७२ ) इत्यालोप।

**३३१६। अलंखल्वो: प्रतिषेधयो: प्राचां क्त्वा ॥ ३।४।१८ ॥**

**दी—। प्रतिषेधार्थयोरलंखल्वोरुपपदयो: क्त्वा स्यात्। प्राचांग्रहणं पूजार्थम्। 'अमैवाव्ययेन' (७८३) इति नियमान्नोपपदसमास:। 'दो दद्घो:' (३०७७)। अलं दत्त्वा। 'घुमास्था—' (२४६२)—पीत्वा खलु। 'अलंखल्वो:' किम्? मा कार्षीत्। 'प्रतिषेधयो:' किम्? अलंकार:।**

The affix क्त्वा ( त्वा ) after a root is appointed when अलम्, and खलु, implying negation, are used as उपपदs before it. The term 'प्राचाम्' in the rule is accepted for the sake of ( showing ) respect ( to the predecessor ) and not for option, because

लृट् ( which may take place, through option, in place of क्त्वा ) cannot appear ; as क्त्वा here is नित्य or obligatory. This नित्यत्व or obligation is inferred from the term 'उदीचाम्' adopted in the rule 'उदीचाम्—' ( 3318 ) where Bhattoji says 'उदीचांग्रहणादयथाप्राप्तमपि' i.e. from the acceptance of 'उदीचाम्', क्त्वा may as usual take place. This inference or remark holds good in this rule also according to Balamanorama where 'अलं रोदनेन' etc have been defended by बाहुलक under 'कृत्यल्युटोबहुलम्' ( 2841 ). This view, however, is objectionable on the ground that the acceptance of 'उदीचाम्' which is true in the case of मेङ् or माङ् will not necessarily hold good here also as there runs the परिभाषा 'ज्ञापकसिद्धं न सर्वत्र—'An Indication is not true for all cases'. Tattwabodhini, however, suggests a different exposition which seems to be preferable. It agrees with Balamanorama (or better Vice Versa for Balamonorama is posterior to Tattwabodhini) that the acceptance of 'प्राचाम्' is for the sake of showing respect and not for taking of option. The controversy lies on the question of ल्युट् in instance like 'अलं रोदनेन' etc. Here, according to Tattwabodhini ल्युट् is accounted for by the maxim of 'वासरूप,' for the prohibitory dictum 'क्तल्युट्तुमुन्खलर्थेषु वाऽसरूपविधिर्नास्ति' the sum and substance of which is that क्तल्युट् etc where themselves अपवादs or superseding ( अपवादभूताः ) bar persistently that or those of which they are अपवादs ( स्वबाध्यं नित्यं बाधन्ते )— does not apply here as क्त्वा is an अपवाद of ल्युट् and not Vice Versa. As to the indication in 'प्रैषातिसर्गे—' ( 2817 ) for which see 'चित्याग्निचित्ये च' ( 2893 ) the परिभाषा 'ज्ञापकसिद्धं न सर्वत्र' ( Explained ) will answer.

In अलं दत्त्वा etc उपपद समास is not allowed due to the restriction in 'अमैवाव्ययेन' (783). पीत्वा खलु—there is no need of drinking. पा=पी by 'घुमास्था—' (2462). मा कार्षीत् (कृ+लुङ्—prohibition of अट् by 'न माङ्योगे') here there is sense of निषेध but no अलम् or खलु as an उपपद—consequently no क्त्वा। So Bhasa's use of "मा अनर्थं विचिन्त्य" is archaic. अलंकारः—अलम्+कृ+घञ् (भावे)—there is अलम् but no sense of निषेध, so no क्त्वा।

मित—। अलंखल्वोरिति। अलं च खलुश्च। तयोरिति इन्द्वात् सप्तमी द्विवचनम्। उपपदार्थमेतत्। प्रतिषेधयोरित्युपदविशेषणम्। अतो व्याचष्टे—प्रतिषेधार्थयोरित्यादि। क्त्वा स्यादिति। 'अव्ययकृतो भावे' इति भावकृत्वः भावे एव। ननु सूत्रे प्राचां ग्रहणं किमर्थम्? तत्राह—पूजार्थमिति। पूर्ववैयाकरणेभ्यो बहुमानप्रदर्शनार्थमित्यर्थः। न तु विकल्पार्थम् क्त्वाधिकारेऽत्र ल्युटोऽपि समावेशो यथा न स्यादिति। नन्वेवम् अलं दानेन, अलं रोदनेन इत्यादौ का गतिः? अत्र हि वाऽसरूपविधिर्न प्रवर्तते। 'क्तल्युट्तुमुनखलर्थेषु वाऽसरूप परिधिर्नास्ती'ति वचनात् इति चेत्। सत्यम्। परमत्रायं निर्गलितार्थः—'क्तल्युटादयोऽपवादभूताः स्वबाध्यं नित्यं बाधन्ते' इति। इह तु ल्युट् नापवादः येन स्वबाध्यं क्त्वाप्रत्ययं बाधेत। किन्तु क्त्वाप्रत्यय एवास्यापवादः। तेनासरूपत्वात् क्त्वापि ल्युटो बाधको वा भवति न तु नित्यम्। तस्माद् वाऽसरूपन्यायेनैवात्र ल्युडपि भवति। न च 'प्रैषातिसर्ग—' (२८१७) इत्यत्र पुनः कृत्यविधिः स्त्र्यधिकारादूर्ध्वं वाऽसरूपन्यायो नास्तीति ज्ञापनाद् ल्युट् नेत्यपि वाच्यम्। 'ज्ञापकसिद्धं न सर्वत्र' इति ज्ञापकन्यायस्य सार्वत्रिकत्वाभावात्। तत्रैव मूलकृता (दीक्षितेन) क्वचिन्नित्यत्वाच्चेति बोध्यम्। एतच्च (मूलकृद्वचनम्) 'चित्याग्निचित्ये च' इत्यत्र स्पष्टम्। तत्त्वबोधिनीस्थोऽयं सिद्धान्तः। बालमनोरमाकारास्तु—उत्तरसूत्रे उदीचां ग्रहणादस्य (क्त्वाप्रत्ययस्य) नित्यत्वं स्वीकृत्य 'अलं रोदनेनेत्यादि तु बहुलग्रहणात् समाधेय' मिति सिद्धान्तयित्वा 'न च वाऽसरूपविधिराशङ्क्यः। तस्य 'स्त्रियां क्तिन्' इत्यतः प्रागेव प्रवृत्तेरुक्तत्वादि'त्याहुः। तच्चिन्त्यम्। 'चित्याग्निचित्ये च' (२८१३) इति

सूत्रे 'स्वाधिकारादूर्ध्वं वाऽसरूपविधिः क्वचिन्न' इति दीक्षितग्रन्थव्याख्यानावसरे लौकिकविरोधात्। ज्ञापकसिद्धस्यासार्वत्रिकत्वदर्शितत्वाच्चेति दिक्। अलं दत्त्वेत्यादौ अलमाद्युपपदे सत्यप्यसमास इत्याह—अमैवाव्ययेनेति नियमादिति। अलं दत्त्वेति—दानेन साध्यं नास्तीत्यर्थः। एवम् 'अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसङ्कुले' (महाभारतम्) इत्यादि। पीत्वेत्यत्र ईत्वमाह—घुमास्थेति। पीत्वा खल्विति। पानेन साध्यं (प्रयोजनं वा) नास्तीत्यर्थः। निषेधे खलु—"निषेध वाक्यालङ्कार जिज्ञासानुनये खलु" इत्यमरः। एवं 'खलु ऋत्वा खलु याचिकम्' (माघः) इत्यादि। मा कार्षीदिति—करोतेः लुङि एकवचने सिचि इडौ रूपम्। 'न माङ्योगे' इत्यट् प्रतिषेधः। अत्र निषेधार्थे सत्यपि अलंखल्वोरेकतरस्योपपदत्वाभावान्न क्त्वेति भावः। अलङ्कार इति भावे घञ्। अत्रालमि सत्युपपदे निषेधार्थविरहान्न क्त्वा।

## २३१७। उदीचां माङो व्यतीहारे ॥ ३।४।१९ ॥

## दी—। व्यतीहारार्थं माङः क्त्वा स्यात्। अपूर्वकालार्थमिदम्।

क्त्वा after the root माङ् (मा) is used if exchange of treatment is implied. This rule is intended to take effect where no sense of पूर्वकाल beforehand is present. The significance of 'उदीचाम्' in the rule is given in the next one.

मित—। उदीचां माङ इति। व्यतीहारो विनिमयः। भावे घञ्। 'उपसर्गस्य घञि—' इति दीर्घः। व्यतीहारो व्यतिक्रम इति तत्त्वबोधिनी। तन्न। शब्देन्दुशेखरकाराद्यनेकाननुमतत्वात् 'कर्तरि कर्मव्यतिहारे' (२६८०) इत्यादौ लौकिविरोधात्। माङ इति। मेङ् प्रणिदाने (प्रणिदानं विनिमयः) इत्यस्य ग्रहणम्। अत्र उदीचां ग्रहणस्योपयोगित्वम् तु 'मयतेरित्—' इत्युत्तरत्र स्पष्टम्। अपूर्वकालार्थमिति। पूर्वकालार्थे तु 'समान कर्तृकयोः—' (३३२०) इत्यनेनैव सिद्धमिति भावः।

## २३१८। मयतेरिदन्यतरस्याम् ॥ ६।४।७० ॥

## दी—। मेङ इकारोऽन्तादेशः स्याद्वा ल्यपि। अपमित्य

याचते। अपमाय। उदीचांग्रहणाद्यथाप्राप्तमपि। याचित्वा अपमयते।

इकार is optionally, the final substitute of मेङ् ( प्रणिदाने or to exchange—भ्वादि ) when the affix ल्यप् follows. Thus 'अपमित्य—' one asks ( something of another ) throuh exchange ( of something else ). अप + मे + ल्यप् = अप + मि + ल्यप्, then comes in तुक् by 'ह्रस्वस्य पिति कृति तुक्'। अपमाय ( याचते )—अप् मे + ल्यप् = अपमा + ल्यप् by 'आदेच:—' ( 2370 ); here इत्व of आ being barred by—न ल्यपि ( 3335 ). Here the acceptance of the term उदीचाम् in the rule suggests option. Thus as an alternative we have याचित्वा अपमयते ( first ) asking ( some one of something ) he gives something in exchange afterwards)—Where क्त्वा is used after याच in the sense of पूर्वकाल by 'समानकर्तृकयो:—' ( 3320 ).

मित—। मयतेरिति। मयतेरिति मेङ् प्रणिदाने इत्यस्य ङकारवर्जं षष्ठ्या रूपम्। मयते:—इत् + अन्यतरस्याम् इत्यवग्रह: ( छेद: )। मयतेरिति षष्ठीनिर्देशाद 'अलोऽन्त्यस्य' इति अन्त्यस्यैव इदादेश:। तदाह—मेङ इकारोऽन्त्यादेश इति। एकारस्थाने इकार इत्यर्थ:। वा ल्यपीति—अन्यतरस्यामित्यस्य विकल्पार्थकत्वादिति। 'न ल्यपि' ( ६।४।६९ ) इत्यतो 'ल्यपि' इत्यस्यानुवृत्तेर्ल्यपीति। बालमनोरमायां तु 'वान्यस्य—' ( ६।४।६८ ) इत्यतो वेत्यनुवर्तत इत्युक्तम्। तद्भ्रमादित्युपेक्ष्यम्। अपमित्य याचत इति। विनिमयेन याचत इत्यर्थ:। त्वयाधान्यं दीयते चेन्मया सर्षपं दास्यत इत्येवंरूपो विनिमयो बोध्य:। अत्र समानकर्तृकत्वेऽपि पूर्वकालिकत्वाभावात् 'समानकर्तृकयो: पूर्वकाले' ( ३३२० ) इत्यस्याप्रवृत्तिरिति बोध्यम्। अपमित्य इत्यत्र अनेन धातोरिकारान्तत्वेन ह्रस्वत्वात् 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' ( ३३३२ ) इति ल्यपि परे 'ह्रस्वस्यपिति कृति—' तुगागम:। पक्षे आह—अपमायेति। अत्र 'आदेच:—' ( २३७० ) इत्यात्वम्। ततो 'नल्यपि' ( ३३३५ ) इति निषेधात्

दैर्घ्यं न। उदीचांग्रहणमत्र विकल्पार्थमित्याह—उदीचांग्रहणादिति। यथाप्राप्तमत्र 'समानकर्तृकयोः पूर्वकाले' (३३२०—३।४।२१) इत्यस्यैव। तेन याचित्वा अपमयत इत्यत्र तस्मादेव सूत्रात् पूर्वकाले विद्यमानाद् याचः क्त्वाप्रत्ययो भवति इति विभावनीयम्। पूर्वं याचित्वा पश्चादपमयत इत्यर्थः। अपमयत इति प्रतिददाति। अत्र व्यतीहारार्थस्य विरहात् 'उदीचां माङः—' इति माङः क्त्वाप्रत्ययो न।

३३१८। परावरयोगे च॥ ३।४।२०॥

दी—। परेण पूर्वस्यावरेण परस्य योगे गम्ये धातोः क्त्वा स्यात्। अप्राप्य नदीं पर्वतः। परनदीयोगोऽत्र पर्वतस्य। अतिक्रम्य पर्वतं स्थिता नदी। अवरपर्वतयोगोऽत्र नद्याः।

Any root may take क्त्वा when the connection of that which precedes with what follows or vice versa i.e of what follows with what precedes is implied. Thus 'अप्राप्य नदीम्—' The mountain stands without having the river flowing over it. Here connection of the mountain, which precedes, with the river which follows, is afterwards but not beforehand. Thus there being no sense of पूर्वकालत्व in it क्त्वा takes place by this rule but not by 'समानकर्तृकयोः—' the next rule. Similarly 'अतिक्रम्यपर्वतम्—' The river rests crossing or passing over the mountain. Here the connection of the river which is subsequent ( पर ) is made with पर्वत which is antecedent ( अवर ). Thus क्त्वा here also takes place by this rule.

मित—। अवरशब्दोऽत्र पूर्वइत्तिवाची। एवं परस्थितेन द्रव्येण पूर्वस्ययोगे सति तथा 'अवरेण' पूर्ववर्तिना परस्य च योगे सति क्त्वा भवति इति सूत्रार्थः। अप्राप्य नदीं पर्वत.—अत्र परभूताया नद्याः पर्वतस्य योगो गम्यते। ततः आह—"परनदीयोगोऽत्र

पर्वतस्य"। अतिक्रम्य पर्वतमित्यादि—पर्वतस्य परस्तात् नदी वर्तते इत्यर्थः। तत आह—अवरपर्वतयोगोव नद्याः। फलतः प्रागुक्ते विषये अस्य प्रयोगः। केवलं विशेषणविशेष्यसंसर्गात् भेदो गम्यते। इह त्रिसूत्रां विधेयस्य क्त्वाप्रत्ययस्य यद्यपि भावमात्रमर्थस्तथापि द्वितीयक्रियाया पूर्वकालत्वस्य अभावात् पृथक्सूत्रोपन्यासः। वस्तुतः अपूर्वकालाय तिसूत्री इत्यवधेयम् इति मनोरमायां स्पष्टम्।

३३२०। समानकर्तृकयोः पूर्वकाले ॥ ३।४।२१ ॥

दी—। समानकर्तृकयोर्धात्वर्थयोः पूर्वकाले विद्यमानाद्धातोः क्त्वा स्यात्। भुक्त्वा व्रजति। द्वित्वमतन्त्रम्—स्नात्वा भुक्त्वा पीत्वा व्रजति। 'अनुदात्त—' (२४२८) इत्यनुनासिकलोपः। विष्णुं नत्वा स्तौति। स्वरत्यादेः 'श्र्युकः किति' (२३८१) इति नित्यमिडभावः पूर्वविप्रषिधेन। स्तृत्वा। सूत्वा। धूत्वा।

Of the two senses of the two roots or Verbs which have the self-same nominative, the root that stands in the sense of पूर्वकाल i.e has the sense of priority ( or before hand ) takes the affix क्त्वा. Thus भुक्त्वा व्रजति—At first he takes (his) meal and then proceeds. Here both भुज् and व्रज् have the selfsame subject say—Rama, Hari, Jadu etc and the first of them expresses the sense of priority as the action of going (व्रजनक्रिया) is dependent on the action of eating ( भोजनक्रिया ). [ Remember that this क्त्वा which is appointed in the sense of भाव by 'अव्ययकृतो भाव' ( भाष्य ) does not denote that sort of भाव that is expressed by घञ् etc ; for, here the action expressed is continued (साध्यावास्थापन्न) whereas the action expressed by घञ् is finished or complete (सिद्धावास्थापन्न)। द्वित्वमतन्त्रम्—duality is not intended ( by समानकर्तृकयोः i.e it is not binding upon a speaker to write two verbs only—one expre-

ing priority ( पूर्वकालत्व ) and the other posteriority ( परकालत्व ). On the other hand he can use more than two verbs as in 'स्नात्वा भुक्त्वा—' etc—here all the three क्त्वान्त verbs simultaneously bring out the sense of priority in comparison, ofcourse, with the final verb व्रजति—the subject of the verbs being the same ( समान ). In नत्वा ( नम्+क्त्वा ) the nasal म is dropped by 'अनुदात्तोपदेश—' ( 2428 ). In स्तृत्वा ( स्तृ+क्त्वा ) सूत्वा ( सू+क्त्वा ) etc the option of इट् due by 'स्वरति सूति सूयति धूञूदितो वा' ( 2276—7 2.44 ) is barred by 'श्र्युकः किति' ( 2381—7.2.11 ) on the strength of the पूर्वविप्रतिषेध system ( or prohibition by the previous rule ) which is clear from the text 'परत्वपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यादनेन निषेधे प्राप्ते—' etc under the rule 'श्र्युकः किति' ( 2381 ). Thus in सूत्वा etc there is absence of इट् persistently ( नित्यम् ).

मित—। समानकर्तृकयोरिति। समानः कर्ता ययोः धात्वर्थयोः क्रिययोरिति यावत् तयोरिति। निर्धारणे षष्ठ्याः सप्तम्या वा विवचनम्। पूर्वकाल इति। पूर्वः कालः यस्यासौ पूर्वकालः। न तु पूर्वः काल इति कर्मधारयः। पूर्वकाल इत्यस्य तद्विशिष्टार्थे वर्तमानत्वादिति नागेशे स्पष्टम्। अतएव चात्रापि समानकर्तृकयोः पूर्वकाले विद्यमानाद्धातोरित्युक्तम्। ननु धात्वर्थयोरित्युपक्रम्य कथं धातोरित्युक्तम्। न तुल्यत्वादिति। नैष दोषः। समानकर्तृकत्वं क्रिययोरेव सम्भवति। न तु धात्वर्थयोरसम्भवात्। तस्माद् ययोः क्रिययोरेककर्तृकत्वं भवति तयोर्या क्रिया पूर्वकालत्वविशिष्टेऽर्थे वर्तते तस्याः मूलभूतो यो धातुस्तस्मादेव क्त्वा इति फलितार्थः। 'अव्ययकृतो भावे' इति भाष्यवचनात् क्त्वाप्रत्ययो भाव एवेत्युक्तम्। स च न घञादाविव सिद्धावस्थापन्नः किन्तु साध्यावस्थापन्नः। अत विभक्त्युत्पन्नानुत्पन्नयोरिव मानत्वादिति विभाव्यम्। भुक्त्वा व्रजतीति आदौ भोजनं पश्चाद् व्रजनमित्यर्थः। अत व्रजनापेक्षया भोजनस्यैव पूर्वकालतेति भुजेरेव क्त्वा। पूर्वकालत्वस्य व्यवधानमप्यर्थः। तेन अधभुक्त्वा मासे व्रजिष्यामि इत्याद्यपि उपपद्यत इति शब्देन्दुशेखरे स्थितम्।

युक्तं चैतद् अतएव 'अद्य भुक्त्वाऽयं द्वाहे द्व्यहात् वा भोक्ता' इत्यादि सङ्गच्छते। विव-क्षतत्वमिति। समानकर्तृकयोरित्यत्र द्वित्वमविवक्षितमित्यर्थः। समानकर्तृकाणां बहूनामपि क्रियाणां या याक्रिया मिलित्वा पूर्वकालार्थे वर्तते तासां सर्वासामेव मूल-भूतधातुभ्यः क्त्वा प्रत्ययसिद्धिः। अत उदाहरति—स्नात्वा भुक्त्वा पीत्वेति। अत्र यद्यपि स्नानात् परं भोजनं भोजनात् परञ्च पानम् इत्यस्ति पानभोजनयोः स्नाना-पेक्षया परवर्तिता तथापि स्नानस्येव पानभोजनयोरपि व्रजनात् पूर्वकालिकत्वमस्त्येवेति स्नातेरिव भुजेः पिबतेश्चोत्तरं क्त्वा प्राप्नोत्येवेति सिद्धान्तः। एवं 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति वक्ष्यमाणे 'एत्य विहृत्य आपृच्छ्य गतम्' 'उपभुज्य गतम्' इत्यादौ ल्यबपि द्रष्टव्यः। पूर्वं भुङ्क्ते ततो व्रजतीत्यादौ तु न पूर्वशब्देनैव पूर्वत्वावगमात् 'उक्तार्थानामप्रयोगः' इति न्यायान्न क्त्वा। पूर्वं भुक्ते ततो व्रजति इत्यत्र तु न क्रिययोः पौर्वापर्यं किन्तु कर्तुरपि। द्वयोर्भोक्त्रोरेकतर आदौ भुक्ते पश्चाद् अन्यतरोऽयं व्रज-तीत्यर्थः। आस्यते भोक्तुमित्यत्र तु वाऽसरूपविधिना तुमुन् इतिभाष्यादौ स्थितमित्याहुः। क्त्वायां नमतेरनुनासिकलोपार्थमाह—अनुदात्त इति। अथ स्वृ+क्त्वा, स्तृ+क्त्वा इत्यादौ स्थिते 'स्वरति सूतिसूयति धूञूदितो वा' (२२७९—७।२।४४) इत्यनेन इड् विकल्पे प्राप्ते 'श्र्युकः किति' (२३८१—७।२।११) इति निषेधादिडभाव इत्याह—स्वरत्यादेरित्यादिना। ननु 'श्र्युकः—' (७।२।११) इति परवति 'स्वरति—' (७।२।४४) इतीदं कथं बाधेत—विप्रतिषेधसूत्रविरोधादित्यत्राह—पूर्वविप्रतिषेधेनेति। एतच्च 'आर्धधातुकस्य वलादेः' (७।२।३५) इति इड्विधेः प्राक् 'नेड्वशि कृति' (७।२।८) इति इट्निषेधारम्भसामर्थ्यादेव ज्ञापितम् 'परमपि स्वरत्यादिविकल्पं बाधित्वा पुरस्तात्प्रतिषेधकाण्डारम्भसामर्थ्यात्' इति दीक्षितग्रन्थव्याख्यानावसरे ('श्र्युकः किति'—२३८१) इति सूत्रे प्रतिपादितमस्माभिरित्यलम्।

२२२१। क्त्वि स्कन्दिस्यन्द्योः ॥ ६।४।३१ ॥

दी—। एतयोर्नलोपो न स्यात् क्त्वि परे। स्कन्त्वा। ऊदित्वादिड् वा। स्यन्त्वा स्यन्दित्वा।

The नकार of roots स्कन्द् and स्यन्द does not disappear when

क्त्वा follows. Thus स्कन्त्वा with नकार, there being no chance of इट् due to the prohibition 'एकाचउपदेशेनुदत्तात्' as स्कन्दिर (स्कन्द्) is अनुदात्त. स्यन्दू (स्यन्द) however, being ऊदित् or ऊdropping, in क्त्वा, it will have option of इट् by "स्वरति सूति—(2279) as स्यन्द being अनेकाच् 'श्र्युक्—' (2381) cannot apply.

मित—। क्ति इति। क्त्वाप्रत्ययस्य आकारलोपात् क्त इति। तस्य सप्तम्यां रूपम्। क्त्वाप्रत्यये परे इत्यर्थः। 'क्त्वाम्रलोपः' (६।४।२३) इत्यतो नलोप इत्यनुवर्तते। 'नाञ्चेः पूजायाम्' (६।४।३०) इत्यतो नेति च। तदाह—एतयोर्नलोपो नेति। स्कन्दिर गतिशोषणयोः, स्यन्दू प्रस्रवने इत्यनयोरित्यर्थः। स्कन्त्वा इति। 'अनिदिताम्—' (४१५) इति बाधित्वा अनेन नलोपो न। 'एकाच उपदेशे—' इत्यनुदात्तत्वादिडागमश्च न। स्यन्दित्वा—स्यन्त्त्वेति। 'स्वरति—' (२२७९) इतीड् विकल्पः अनेकाचत्वात् 'श्र्युकः—' (२३८१) इत्यस्याप्रसक्तेः।

## २३२२। न क्त्वा सेट्॥ १।२।१८॥

### दी—। सेट् क्त्वा किन्न स्यात्। शयित्वा। सेट् किम्? कृत्वा।

The affix क्त्वा is not कित् when it is सेट् (in connection with the root). Thus शयित्वा, here क्त्वा being सेट and therefore अकित् the prohibition 'क्ङितिच' does not apply and consequently the root is gunnated by 'सार्वधातुकार्ध—' (2168). कृत्वा-क्त्वा is here अनिट् so कित्।

मित—। न क्त्वा इति। 'असंयोगाल्लिट् कित्' (१।२।५) इत्यतः किदित्यनुवर्तते। तदाह—सेट् क्त्वा किन्नेति। शयित्वेति। कित्त्वाभावात् 'क्ङिति च'ेति निषेधाप्रवृत्तेर्गुणः। अयादेशः। कृत्वेति। अनिट्त्वात् कित्वेन गुणाभावः। क्त्वेति किम्। निगृहीतः।

२२२२। मृडमृदगुधकुषक्लिशवदवसः क्त्वा ॥ १।२।७ ॥

टी—। एभ्यः सेट् क्त्वा कित्। मृडित्वा। 'क्लिशः क्त्वा—' (३०४९) इति वेट्। क्लिशित्वा—क्लिष्ट्वा। उदित्वा। उषित्वा। 'रुदविद—' (२६०८) इति कित्त्वम्—रुदित्वा। विदित्वा। मुषित्वा। गृहीत्वा।

The affix क्त्वा which is सेट् is कित् when coming after these roots मृड्, मृद् etc (seven only). Thus मृदित्वा (मृदित्वा, गुधित्वा, कुषित्वा)—No गुण by 'पुगन्तलघूपधस्य च' (2186) due to कित्व। क्लिशित्वा क्लिष्ट्वा—option of इट्—by क्लिशः क्त्वानिष्टयोः (3049) No guna as before. उदित्वा वद्+क्त्वा—सम्प्रसारण by 'वचिस्वपि—' (2409). उषित्वा—वस्+क्त्वा —सम्प्र. as before. इट् by 'वसतिक्षुधोः—' and षत्व by 'शासिवसि—'. क्त्वा after रुद्, विद्, मुष् ग्रह् (स्वप् and प्रच्छ) is कित् by the rule 'रुदविद-मुषग्रहिस्वपिप्रच्छः संश्च' (2609). गृहीत्वा—सम्प्र. by 'ग्रहिज्या' (2412) and दीर्घ of इट् by 'ग्रहोऽलिटि—' (2562).

मित—। मृड मृदेति। 'न क्त्वा सेट्' इति निषेधस्यापवादोऽयम्। एभ्य इति। मृड, मृद क्षोदे, गुध परिवेष्टने, गुध रोषे च, कुष निष्कर्षे, क्लिश हिंसायाम् (दिवादिः), क्लिशू विबाधने (क्र्यादिः) वद व्यक्तायां वाचि, वस निवासे इत्येतेभ्य इत्यर्थः। किदिति। 'असंयोगाल्लिट् कित्' (१।२।४) इत्यतस्तदनुवृत्तेरिति भावः। मृडित्वेति। क्त्वायाः कित्त्वाल्लघूपधगुणो न। एवम् मृदित्वा, गुधित्वा, कुषित्वा। क्लिशित्वा—क्लिष्टेति। प्रागवद् गुणाभावः। क्लिशदवादिकस्येदम्। क्लिशू विबाधने इति क्र्यादिकस्य तु ऊदित्वेन वेट्त्वाद् रूपद्वयम्। उदित्वेति। 'वचिस्वपि—' (२४१९) इति यजादित्वात् सम्प्रसारणम्। उषित्वेति। 'वसतिक्षुधोः—' इतीट्। 'वचिस्वपि—' इति सम्प्रसारणम्। 'शासि-वसि—' इति षत्वम्। 'रुदविद—' (२६०९) इति। रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' इति पूर्णं सूत्रम्। तदुदाहरति—विदित्वेत्यादि। प्राग्वद् गुणाभावः।

गृहीत्वेति। कित्त्वाद् 'ग्रहिज्या—' (२४१२) इति सम्प्रसारणम्। 'ग्रहोऽलिटि—' (२५९२) इति दीर्घः।

२३२४। नोपधात्थफान्ताद्वा ॥१।२।२३॥

दी—। सेट् क्त्वा कित् स्याद्वा। ग्रथित्वा ग्रन्थित्वा। गुफित्वा—गुम्फित्वा। 'नोपधात्' किम्। कोथित्वा। रेफित्वा।

A क्त्वा which is सेट् is optionally कित् wheh coming after such a root as has न in its उपधा and also ends either in थ or in फ. Thus ग्रथित्वा—ग्रन्थित्वा—क्त्वा in the former case is कित् hence न elides py 'अनिदिताम्—' (415). Similarly गुफित्वा etc (गुफ्+क्त्वा), कोथित्वा रेफित्वा the roots are कुथ and रिफ respectively which having no न in their penultimates there is no optional कित्त्व of क्त्वा. Here 'रलो व्युपधात्—' (2617—1.7.76.) also does not apply due to the acceptance of नोपध here.

सिद्ध—। नोपधादिति। थश्च फश्च थफौ। तौ अन्तौ यस्य इति विग्रहः। तेन यो धातुर्नोपधः थान्तः फान्तश्च भवति तस्मात् सेट् क्त्वा किद्वेत्यर्थः। किदिति। प्रागृवदसंयोगादित्यतोऽनुवर्तते। यद्यप्यत्र थफाद्वित्येवोक्ते तदन्तविधिना थफान्तादित्यर्थो लभ्यते थफान्तादित्यस्य ग्रहणं स्पष्टार्थम्। ग्रथित्वेति। कित्त्वात् पूर्ववत् 'अनिदिताम्—' इति नलोपः। एवमन्यत्र। 'न क्त्वा सेट्' (२३१९) इति निषेधे नित्यं प्राप्ते विकल्पोऽयम्। कोथित्वा। कुथ पूतीभावे। रिफ इति क्रमेण धातुः। अनयोर्नोपधत्वाभावात्थफान्तत्वेऽपि न क्त्वायां कित्त्वविकल्पः। यद्यपि 'रलो व्युपधात्—' (२६१७— १।२।२६) इति विकल्पो वक्ष्यते तथापि सोऽपि नात्र प्रवर्तते नोपधग्रहण-सामर्थ्यादित्याहुः।

२३२५। वञ्चिलुञ्च्यृतश्च ॥१।२।२४॥

दी—। सेट् क्त्वा किद् वा। वचित्वा वञ्चित्वा। लुचित्वा लुञ्चित्वा। ऋतित्वा अर्तित्वा।

सेट् क्त्वा is optionally कित् when coming after the roots वञ्च्, लुञ्च् and ऋत् ( वञ्च to deceive लुञ्च to remove and ऋत् to hate ). ऋतित्वा no गुण by 'पुगन्त—' (2189) due to कित्त्व. अर्तित्वा—गुण due to absence of कित्त्व. The former two cases are as before.

मित—। वञ्चीति। वञ्चिश्च लुञ्चिश्च ऋत् चेति द्वन्द्वात् पञ्चमीबहुवचनम्। वञ्चु प्रलम्भने। लुञ्चु अपनयने इत्यनयोरिका निर्देशः। ऋदिति तु ऋती सौत्रो धातुर्घृणार्थकः। अनुवृत्तिः प्राग्वत्। वेति च पूर्वसूत्रात्। तदाह—सेट क्त्वेत्यादि। 'न क्त्वा सेट्' ( २२२२ ) इत्यस्यापवादः। वञ्चित्वेत्यादि। उभयत्र प्राग्वत् कित्त्वविकल्पः। ऋतित्वा अर्तित्वा। ऋतेः क्त्वा। पूर्वत्र क्त्वायाः कित्त्वाल्लघूपध गुणाभावः। उत्तरत्र कित्त्वाभावाद् गुणः। ऋतेरार्द्धधातुकविषये 'ऋतेरीयङ्' इत्यस्य वैकल्पिकत्वात् तदभावे ( ईयङभावे ) अनेन कित्त्वविकल्पः।

२२२६। तृषिमृषिकृशेः काश्यपस्य ॥१।२।२५॥

टी—। एभ्यः सेट् क्त्वा किद् वा। तृषित्वा—तर्षित्वा। मृषित्वा—मर्षित्वा। कृषित्वा—कर्षित्वा। 'रलो व्युपधात्—' ( २६१७ ) इति वा कित्त्वम्। द्युतित्वा—द्योतित्वा। लिखित्वा लेखित्वा। 'रलः' किम्? सेवित्वा। 'व्युपधात्' किम्? वर्तित्वा। 'हलादेः' किम्? एषित्वा। सेट् किम्? भुक्त्वा। 'वसतिक्षुधोरिट्' ( २०४६ ) उषित्वा। क्षुधित्वा क्षोधित्वा। 'अञ्चेः पूजायाम्' ( २०४७ ) इति नित्यमिट्। अञ्चित्वा। गतौ तु। अक्त्वापि। लुभित्वा—लोभित्वा। 'लुभो विमोहने' ( २२४८ ) इतीट्। अविमोहने तु लुब्ध्वा।

[ * इह तत्त्वबोधिन्यां 'तृषिमृषिकृशेः—' इति तालव्यान्तपाठो दृश्यते। उदाहृतं च कृशित्वा = कर्शित्वेति ]।

सेट् क्त्वा coming after these roots is optionally कित्. द्युषित्वा—दर्षित्वा—गुण and want of गुण according as क्त्वा is कित् ( द्युषित्वा ) or अकित् ( दर्षित्वा ). कृषित्वा कर्षित्वा—but तत्त्वबोधिनी reads कृशित्वा कर्शित्वा. द्युतित्वा दीतित्वा etc—द्युत् being उकारोपध or उकार in the penultimate and लिख् being इकारोपध the rule 'रलो व्युपधात्, (उ+इ+उपधात्) applies, and गुण by 'पुगन्त—' ( 2189 ) is effected when क्त्वा is not कित्. सेवित्वा for सेव् does not end in र or ल्. वर्तित्वा for वृत् has ऋ for its उपधा but not उ or इ. To understand हलादेः किम् and सेट् किम्, see the वृत्ति of दीक्षित under 'रलो व्युपधात्—' (2617 and Tika below )। अञ्चित्वा—अक्त्वा—option of इट by 'उदितोवा' ( 3328 ). अञ्चित्वा—worshiping but अक्त्वा—going. [ Tattwabodhini's reading 'लुभोऽविमोहने' is erroneons for reasons see our explanation under the very rule लुभो—' (3046 oute) ] लुब्ध्वा—लुभ् + क्त्वा = लुभ्त्वा लुभ्ध्वा by झषस्तथोर्धोऽधः। लुब्ध्वा by 'झलां जश—'.

[ * तत्त्वबोधिन्यां 'लुभोऽविमोहने' ( ३०४८ ) इतीट्। विमोहने तु लुब्ध्वा' इति पठितम्। तच्चिन्त्यमिति 'लुभो—' इत्यत्रैवानुसन्धेयम्। अतएव 'विमोहने तु लुब्धापपाठ' इति बालमनोरमा ]।

मित—। द्युषिश्चषि कृषेरिति। अत्र काश्यपग्रहणं पूजार्थम् 'नोपधात्—' ( १।२।२३ ) इत्यतो वेत्यनुवृत्तेर्विकल्पार्थकत्वात्। कितेति। तेनेदमपि 'न क्त्वा सेट्' इत्यस्यापवादः। द्युषित्वा—दर्षित्वेत्यादि। कित्त्वविकल्पाल्लघूपधगुणाभावविकल्पः। कृषित्वा कर्षित्वेति। अत्र कृशित्वा कर्शित्वेति तत्त्वबोधिन्यां पठति। 'रलो व्युपधा'दिति—अस्येयं दीक्षितवृत्तिः—'उश्च इश्च वौ। तौ उपाधे यस्य तस्माद्धलादेः रलन्तात् परौ क्त्वासनौ सेटौ वा कितौस्तः' इति। अत आह—हलादेः किमिति। सेट् किमिति च। द्युतित्वा—द्योतित्वेति द्युत् इति उकारोपधः। कित्त्वविकल्पाद् गुणविकल्पः। इकारोपधमुदाहरति लिखित्वा लेखित्वेति। रलः किमिति स्पष्टम्। वर्तित्वेत्यत्र वृतुवर्तने इति धातुः। एषित्वेत्यत्र इष इति धातुः। हलादित्वाभावाच्च

कित्त्वविकल्पः। इष्ट्वा इति तु यजेः क्त्वायां सम्प्रसारणेन ('वचिस्वपि—' इत्युक्तेन) व्रश्चादिना षत्वेन च रूपमिति बोध्यम्। मुक्त्वेति—अनिट्त्वान्न कित्त्वविकल्पः। किन्तु नित्यमेव कित्त्वम्। गुणाभावः। 'चोः कुः' (३७८) इति कुत्वेन गः। तस्य चर्त्वेन कः। वसतिक्षुधोरिति। वसतेः क्षुधेश्च अनुदात्तोपदेशत्वान्नित्यमिट्निषेधे प्राप्ते तदपवादोऽनेनारितः। उषित्वेति। एतत् 'मृडमृद—'(३३२३) इत्यत्र दर्शितम्। क्षुधित्वा क्षोधित्वेति। क्त्वायाः 'वसति—' इत्यनेन सेट्त्वात् "रलो" इति कित्त्वविकल्पाद् गुणागुणाद् रूपद्वयम्। अञ्चेः पूजायामिति। अञ्चु इत्यस्य उदित्त्वाद् 'उदितो वा' (३३२८) इति इड्विकल्पे प्राप्तेऽयमारम्भ इत्याह—नित्यमिट्। अञ्चित्वेति। अत्र 'न क्त्वा सेट्' (३३२२) इति कित्त्वाभावान्नलोपोन। तेन 'नाञ्चेः पूजायाम्' (४२४) इति नलोपो नेति प्रसादकृदुक्ती आह—अञ्चेः पूजायामेवेट् न तु गताविति भावः। एवञ्चार्थभेदेन उदितो वेति प्रवर्ततेऽत्रेति द्रष्टव्यम्। अक्त्वेति। 'अनिदिताम्—' (४१५) इति नलोपः। चोः कुरिति कुत्वम्। लुभ विमोहने इत्यस्येदाहरति लुभित्वेति। विमोहनार्थे इट्। ततो 'रलोव्युपधात्—' इति कित्त्वविकल्पेन गुणागुणाभ्यां रूपद्वयम्। विमोहनं व्याकुलीकरणम्। विमोहने इट्। नान्यत्रेत्याह—अविमोहने त्विति। लुभः क्त्वानिष्ठयोरिट् स्यात्तु गार्ध्ये इति प्रकृतसूत्रे व्याख्यातम्। तेन अविमोहनं गार्ध्यम् (लोभः) इति बोध्यम्। लुब्ध्वेति। लुभ+क्त्वा—लुभ्+त्वा, इतितः 'झषस्तथोः—' इति तस्य धः। 'झलां जश्—' इति जश्त्वेन बः।

३६२७। जॄव्रश्च्योः क्त्वि ॥ ७।२।५५ ॥

दो—। आभ्यां परस्य क्त्व इट् स्यात्। जरीत्वा—जरित्वा। व्रश्चित्वा।

The augment इट् is prefixed to क्त्वा following the roots जॄ (वयोहानौ) and व्रश्च् (ओव्रश्चू छेदने). This (injunction of इट्) is to supersede the prohibition under 'श्र्युकः—' (2381) in the case of जॄ (which is एकाच्) and the option of इट् by 'स्वरतिसूति—' (2279) in the case of ओव्रश्चू (व्रश्च्—which is ऊदित्)। जरीत्वा जरित्वा

गुण due to कित्त्वाभाव by नक्त्वा सेट् ( 3322 ) and option of दीर्घ of इट् by—वृतो वा. ग्रथित्वा—absence of सम्प्रसारण by 'ग्रहिज्या—' ( 2412 ) as क्त्वा is सेट् and therefore not कित् by 'नक्त्वा सेट्' ( 3322 ). Here Balamonorama wrongly cites 'ग्रहिज्या' to effect सम्प्रसारण.

मित—। जृव्रश्च्योरिति। क्त्वि इति क्त्व इत्यस्य लुप्ताकारस्य सप्तम्यां रूपम्। सप्तमी चात्र षष्ठ्यर्थे इति व्याचष्टे—आभ्यां परस्य क्त्व इति। 'वसतिक्षुधोरिट्' (७।२।५२) इत्यत्र इडित्यनुवर्तत इति बोध्यम्। जॄ वयोहानौ। व्रश्चू छेदने। जॄ इत्यस्य एकाच्त्वात् 'श्र्युकः किति' ( २३८६ ) इत्यनेन नित्यमिट्निषेधे प्राप्ते, ओव्रश्चू इत्यस्य चोदित्वात् 'स्वरति सूति सूयति धूञूदितो वा' ( २२७९ ) इति इड्विकल्पे प्राप्ते ऽयमारम्भः। जरीत्वा जरित्वेति। 'वृतो वा' इतीटो दीर्घविकल्पः। अत्र क्त्वाया सेट्त्वेन कित्त्वाभावात् सार्वधातुकार्धेति गुणः। ग्रथित्वेति—अत्रापि 'नक्त्वा सेट्' ( ३३२२ ) इति कित्त्वाभावात् 'ग्रहिज्या—' इति सम्प्रसारणं न। एतेनात्र ग्रहिज्येति सम्प्रसारणं विदधद् बालमनोरमाकारो भ्रान्त इति मन्तव्यम्।

## ३३२८। उदितो वा ॥ ७।२।५६ ॥

**दी—। उदितः परस्य क्त्व इड् वा। शमित्वा। 'अनुनासिकस्य क्वि—' ( २६६६ ) इति दीर्घः। शान्त्वा। द्यूत्वा—देवित्वा।**

इट् is optionally prefixed to क्त्वा coming after a root which drop its उ ( the indicatory ). Thus शमु to pacify—शमित्वा: शान्त्वा. The latter case being without इट् the penultimate of शम् is lengthened by 'अनुनासिकस्य क्विझलोः क्ङिति, ( 2262 ). Then अनुस्वार and परसवर्ण. दिवु to play ( with dice )—द्यूत्वा—देवित्वा. The former is without इट्। Thus व ( of दिव् ) is replaced by ऊठ् by 'च्छ्वोः शूड्—' ( 2561 ). Then सन्धि। The latter is with इट् but without कित्. Hence गुण takes place by 'पुगन्तलघूपधस्य—' (3189).

मित—। उदिति। 'वसतिक्षुधोः—' ( ७।२।५२ ) इत्यत इडित्यनुवर्तते।

पूर्वसूत्रात् क्त्वि इति च तदपेक्षया ( क्त्वापेक्षया ) अत्र पञ्चमीति मत्वा व्याचष्टे—उदितः परस्येति। शमु उपशमे। दिवु क्रीडायामिति भाष्यप्रदिप्ती। तत्र शमेराह—शमित्वेति। इटपक्षे इदम। अनिटपक्षे शान्त्वेति। तत्रोपधादीर्घं स्मारयति—अनुनासिकस्येति। अनुस्वारपरसवर्णौ। दीव्यतेराह—द्यूत्वा देवित्वेति। पूर्ववत् इडभावः। 'रलो व्युपधात्—' (२३१६) इति इकारोपधत्वेन क्त्वायाः कित्त्वविकल्पात् कित्त्वञ्च। ततश्च 'च्छ्वोः शूठ्—' (२४६१) इति तस्य ऊठि यणादेशे च रूपम्। उत्तरत्वेट्। कित्त्वाभावाद् लघूपधगुणः। ( देवनं पाशकक्रीडनम् )।

२३२८। क्रमश्च क्त्वि ॥ ६।४।१८ ॥

**दी—। क्रम उपधाया वा दीर्घः स्याद् झलादौ क्त्वि परे। क्रान्त्वा क्रन्त्वा। 'झलि' किम् ? क्रमित्वा। 'पूङश्च' ( २०५० ) इति वेट्। पवित्वा—पूत्वा।**

The penultimate of the root क्रम is optionally lengthened when the affix क्त्वा beginning with a झल् letter (i.e without इट्) follows. Thus—क्रान्त्वा क्रन्त्वा ( क्रम् + क्त्वा )—Note that this option of legthening ( दीर्घविकल्प ) bars the persistent lengthenation (?) ( नित्यदीर्घ ) by 'अनुनासिकस्य—' (2666). क्रमित्वा—No दीर्घ as there is इट् preceding क्त्वा, इट् is here optional by ( उदितो वा ) ( the previous rule ) as क्रमु is here उदित्। पवित्वा पूत्वा-गुण takes place when इट् is preceding क्त्वा।

मित—। क्रमश्चेति। 'नोपधायाः' ( ६।४।७ ) इत्यत उपधाया इत्यनुवर्तते। 'तनोतेर्विभाषा' ( ६।४।१७ ) इत्यतो विभाषेति। 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' ( ६।३।१११ ) इत्यतो दीर्घ इति। 'अनुनासिकस्य क्विझलोः—' ( ६।४।१५ ) इत्यतो झलि ( झलादौ इति तु तदादिविधिना लभ्यते ) इति चानुवर्तते। तदाह—क्रम उपधाया वेत्यादि। क्रान्त्वा—क्रन्त्वेति। अनेन दीर्घविकल्पादिडभावपक्षे रूपद्वयम्। इटि तु क्त्वायाः सेट्त्वेन झलादित्वाभावात् क्रमित्वेत्येकमेव। 'अनु-

नासिकस्य—' ( २६९६ ) इत्यनेन नित्यं दीर्घे प्राप्तेऽनेन विकल्पो विधीयते। वेट्कत्वं तु कमेरुदित्त्वाद् 'उदितो वेति' पूर्वसूत्रेणेति ज्ञेयम्। पवित्वा पूत्वेति। पूङ्क्त्वेति। वेट्कत्वादिट्पक्षे क्त्वाया सेट्त्वेन कित्त्वाभावात् 'सार्वधातुकार्ध—' ( २१६८ ) इति गुणः। अनिट्पक्षे तु कित्त्वाद् गुणाभावः।

२३३०। जान्तनशां विभाषा ॥ ६।४।३२ ॥

दी—। जान्तानां नशेश्च नलोपो वा स्यात् क्त्वि परे। भक्त्वा भङ्क्त्वा। रक्त्वा—रङ्क्त्वा। 'मस्जिनशोः—' ( २५१७ ) इति नुम्। तस्य पक्षे लोपः। नष्ट्वा नंष्ट्वा। 'रधादिभ्यश्च ( २५२५ ) इतीट्पक्षे नशित्वा। 'झलादाविति वाच्यम्' ( वार्तिकम् ) *। नेह—अञ्जित्वा। ऊदित्वादिट्। पक्षे—अक्त्वा—अङ्क्त्वा। 'जनसन—' ( २५०४ ) इति आत्त्वम्। खात्वा—खनित्वा। 'द्यतिस्यति—' ( ३०७४ ) इति इत्वम्। दित्वा। सित्वा। मित्वा। स्थित्वा। 'दधातेर्हिः' ( ३०७६ )—हित्वा।

Elision of नकार of roots ending in जकार and of नश् is optionally effected when क्त्वा follows. Thus भञ्ज् ( भञ्जो आमर्दने ) —भक्त्वा भङ्क्त्वा. The root is अनिट्। In the latter case here न having not been dropped it is changed into अनुस्वार by 'नश्च'- and then to ङ by 'अनुस्वारस्ययि—'. In both ज is first changed into ग by 'चोः कुः' and then to क by चर्त्व. Similarly रक्त्वा—रङ्क्त्वा ( रञ्ज+क्त्वा ). तस्य पक्षे etc—नुम् after नश् elides optionally as it is first added to the root whence the rule 'जान्तनशाम्—' applies. नष्ट्वा नंष्ट्वा ( there being no chance of परसवर्णत्व, अनुस्वार is retained). 'झलादाविति—' This is a varttika according to the author (Dikshita), but others hold that this sort of sense might be arrived at

from the consideration of order and significance of the very rules. They seek to modify and say that the term 'झलादौ' has to be added to the rule 'जान्तनशाम्—' so that it may qualify the affix क्त्वि ( i.e, क्त्वा without आकार ). This is the case of अञ्जित्वा ( अञ्ज + क्त्वा—इट् )—there is no elision of न of—अञ्ज् (the जकारान्त root ) by 'जान्तनशाम्—' as इट् having intervened between the root and the affix, the latter ( क्त्वा ) ceases to be झलादि। ऊदित्वात्—for the root and is अञ्चु is वेट् i.e. by 'स्वरति सूति सूयति धूञूदितो वा' (2279). भक्त्वा etc. as before. खात्वा खनित्वा—आत्त्व by 'जनसन—' applies when इट् is not added to क्त्वा। दित्वा—The root is दोऽवखण्डने ( दिवादि ). सित्वा—The root is षोऽन्तकर्मणि ( दिवादि ). मित्वा—the root is मा माने। In these cases first आत्त्व of ओकार is effected by 'आदेच:—(2379) and then इत्व of the same ( आकार ) by 'द्यतिस्यतिमास्थामित्ति किति' (3074).

मित—। जान्तनशामिति। 'श्नान्नलोप:' ( ६।४।२३ ) इत्यतो नलोप इत्यनुवर्तते। 'क्त्वि स्कन्दि' ( ६।४।३१ ) इत्यत: क्त्वि इति तद् व्याचष्टे—जान्तानामित्यादि। जकारान्तानां धातूनाम् इत्यर्थ:। भञ्जोआमर्दने इत्यस्य क्त्वामुदाहरति—भङ्क्त्वेति। पूर्ववन्नलोप:। चो: कुरिति कुत्वेन जस्य ग:। तस्य 'खरि चे'ति चर्त्वेन क:। उपरवच 'नश्चा—' इति नस्यानुस्वार: तस्य 'अनुस्वारस्य ययि—' इति परसवर्णो ङ:। रङ्क्त्वा रङ्क्त्वा इति। रञ्ज इति धातु:। इति नुमिति। नशेरिति भाव:। तस्यैवात्र सूत्रे उपात्तत्वादिति बोध्यम्। तस्येति—नुम् इत्यस्येति सम्बन्ध:। पचि लोप इति। 'जान्तनशाम्—' इत्यनेन इति भाव:। नष्ट्वा नंष्ट्वा इति। पूर्ववन्नलोप:। 'व्रश्च भ्रस्ज—' ( २९४ ) इति षत्वम्। ष्टुना ष्टुरिति तस्य ष्टुत्वेन ट:। उपरवत्पूर्ववम्। केवलं नशेति नस्यानुस्वार एव वर्गीयपञ्चमाननभावेन परसवर्णत्वाभावात्। रधादित्वान्नशेर्वेट्कत्वं स्मारयितुमाह—रधादिभ्यश्चेति। नशित्वेति। अत्र क्त्वाया: सेट्कत्वेन झलादित्वाद् मस्जिनशोरिति न प्रवर्तते। झला

दावितीति—वार्तिकमिदम् इति दीक्षितमतम्। अन्येषान्तु युक्तिसिद्धमित्याहुः। युक्तिसिद्धत्वञ्च—'अनिदिताम्—' (६।४।२८) इत्यतः क्ङितीत्यनुवर्त्य क्तिक्त्वि इति व्याख्येयमित्यर्थ इति शब्देन्दुशेखरे स्थितम्। वार्तिकार्थस्तु—झलादौ इति 'जान्तनशाम्—' इति सूत्रे वक्तव्यमिति। तत्रच झलादौ क्त्वि परे इत्यर्थे सति अञ्जित्वा (अञ्ज+इट् क्त्वा) इत्यत्र इड् व्यवधानेन झलादित्वाभावान्नलोपो न भवतीति भावः। ऊदित्त्वादिति। अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु (रुधादिः)। वेड्डिति—'स्वरति सूति—' (२२७९) इत्यनेन। वेट्त्वादिडभावपक्षे नलोपविकल्पाद् रूपत्रयमित्याह—अक्त्वेत्यादि। खात्वेति। खन विदारणे। उदित्वे वेति वेट्कत्वादनिट्पक्षे आत्वम्। दित्वेत्यादि—दोऽवखण्डने (दिवादिः) षोऽन्तकर्मणि (दिवादिः) मा, माङ, मेङ् इति ग्रहणम्। छा गतिनिवृत्तेति क्रमेणधातवः। 'आदेचः—' (२३७०) इत्यात्त्वे कृते 'द्यतिस्यति—' इत्यनेन इत्वम्।

२३३१। जहातेश्च ॥ ७।४।४३ ॥

क्त्वी—। हित्वा। हाङस्तु—हात्वा। 'अदोजग्धिः—' (३०८०)—जग्ध्वा।

हि is the substitute for जहाति ( हा to leave ) also when an affix beginning with a त ( तादि ) follows. Thus हित्वा having left. But हात्वा from हा to go (The former is ओहाक् त्यागे and the latter is ओहाङ् गतौ ). अद is replaced by जग्ध् when क्त्वा follows. जग्ध्वा = eating.

मित—। जहातेरिति। 'दधातेर्हिः' (७।४।४१) इत्यसौ हिरित्यनुवर्तते। 'द्यतिस्यतिमास्थादित्ति किति' (६।४।४०) इत्यतः 'ति' 'किति' इति च। तेन ओहाक त्यागे इत्यस्य च हिरादेशः स्यात् तादौ किति परे इत्यर्थः। हित्वेति। त्यक्त्वेत्यर्थः। 'ओहाङ् गतौ' इत्यस्य तु न ग्रहणमिति मत्वाह—हाङस्तु इति। अदो जग्धिरिति। अदोजग्ध् इत्यादेशः। इकार उच्चारणार्थः। तेन अद+क्त्वा इति स्थिते जग्ध्+त्वा तत्र धकारः। ततः पूर्वं धकारस्य 'झरोझरि सवर्णे' इति लोपे रूपम्।

२२२२। समासेऽनञ्पूर्वे क्त्वो ल्यप्॥ ७।१।३७॥

दी—। अव्ययपूर्वपदेऽनञ्समासे क्त्वो ल्यबादेशः स्यात्। तुक्। प्रकृत्य। 'अनञ्' किम्? अकृत्वा। पर्युदासाश्रयणान्नेह—परमकृत्वा।

The affix क्त्वा is replaced by ल्यप् when in other than नञ्समास the preceding member or पूर्वपद is an indeclinable. प्रकृत्य—। कृ+क्त्वा=कृत्वा; then प्र (प्रकर्षेण) कृत्वा=प्रकृत्य—an instance of नित्यसमासार्थक. But it is generally, for the sake of facility, derived as प्रकृ+ल्यप्. Here तुक् comes in by 'ह्रस्वस्यपितिकृति—'. In the term 'अनञ्पूर्वे' there is पर्युदासविधि. Thus in परमकृत्वा (परमंकृत्वा सुप्सुपेति) क्त्वा is not replaced by ल्यप् for although there is no नञ्, the samasa is not नित्य but optional and परम is not an अव्यय पूर्वपद.

मित—। समासेऽनञ् इति। अनञ् इति नञ्भिन्नं नञ्सदृशमव्ययमिति शब्देन्दुशेखरतत्त्वबोधिन्यौ। तत् (अव्ययम्) पूर्वं पूर्वपदं यत्र समासे इति मत्वा विवृणोति—अव्ययपूर्वपदे इति। प्रकृत्येति। प्रकर्षवाचिनः प्रशब्दस्य कृत्वान्तेन "कुगतिप्रादय" इति नित्यःसमासः। 'तुगिति ह्रस्वस्यपितिकृति—' इत्यनेन। परमकृत्वा। परमं कृत्वेति सुप्सुपेति समासः नतु नित्यः। तेन ल्यप् न। प्रसज्यप्रतिषेधाश्रयणे तु स्यादेवेति भावः।

२२२३। षत्वतुकोरसिद्धः॥ ६।१।८६॥

दी—। षत्वे तुकि च कर्तव्ये एकादेशशास्त्रमसिद्धं स्यात्। कोऽसिचत्। इह षत्वं न। अधीत्य। प्रेत्य। 'ह्रस्वस्य—' (२८५८) इति तुक्।

The conjuction of a single substitute (for what precedes

and what follows) is invalid or does not hold good when षत्व and तुक् have to undergo any operation. Thus—कोऽसिचत् (who watered)—Here there is no षत्व in असिचत् due to the invalidity of the, single substitute in को असिचत् where पूर्वरूप एकादेश effected by 'एङ: पदान्तादति' (86) has been also परादिवत् (having the beginning letter of the subsequent, by 'अन्तादिवच्च'—75). Thus एकादेश being असिद्ध the अकार being a carrier in the middle (व्यवधान) 'इण् कोः' (२११) fails to apply and consequently 'आदेशप्रत्यययोः' (२१२) also. अधीत्येति—अधि+इ+ ल्यप्) and प्रेत्य (प्र—इ+ल्यप्)—here in both these cases सवर्णदीर्घ दीर्घएकादेश (in अधीत्य) and गुणैकादेश (in प्रेत्य) being असिद्ध, the तुक् by 'ह्रस्वस्य—(2858) takes place although इ, the short vowel-ending root, ceases to be so (short) in connection with the combination as above.

मित—। षत्वतुकोरिति। षत्वं च तुक् चेति द्वन्द्वात् सप्तमीद्विवचनम्। षत्वे तुकि चेत्यर्थः। तत्र लक्ष्यानुरोधाद् भावे सप्तमीति मत्वा व्याचष्टे—षत्वे तुकि च कर्तव्ये इति। एकादेशशास्त्रमिति। 'एकः पूर्वपरयोः' (६।१।८४) इत्यत एकादेश इत्यनुवर्तते। तत्रैकादेशः असिद्ध इति वक्तव्ये एकादेशशास्त्रमित्युक्तिर्भाष्ये 'कार्यासिद्धत्वं' निराकृत्य शास्त्रासिद्धत्वस्यैव सिद्धान्तित्वादित्याहुः। कोऽसिचदिति। कः असिचदिति स्थिते 'अतो रोः—' (१६२) इति को असिचत् इति जाते 'एङः पदान्तादिति' (८६) इति पूर्वरूपैकादेशे 'अन्तादिवच्च' (७५) इति तस्य परादित्वे च पूर्वपरयोरेकादेशे सति कोऽसिचत् इति भवति। तस्य एकादेशस्य असिद्धत्वात् अकारेण व्यवधानात् इण्कोः' (२११) इति न प्रवर्तते। ततश्च 'आदेशप्रत्यययोः' इति षत्वमपि नेति भावः। न च 'सात् पदाद्यो'रित्येव षत्वनिषेधः शङ्क्यः। पदादित्वाभावेन तस्यात्र प्रवृत्तेरभावात्। प्रसङ्गादिदम् (षत्वोदाहरणम्)। प्रकृतमाह—अधीत्य प्रेत्य इति। अधि+इ+ल्यप्, प्र+इ+ल्यप् इति स्थितेऽपि स्थिते

पूर्वत्र 'अकः सवर्णे—' इति सवर्णदीर्घैकादेशः उत्तरत्र तु 'आद्गुणः' इति गुणैकादेशः। तयोरुभयोरेव असिद्धत्वात् 'ह्रस्वस्य—' इति तुक्। अन्यथा-(सवर्णदीर्घगुणादेशयोः सिद्धत्वे सति) तुगत्र न स्यात्। ताभ्यां धातोर्ह्रस्वत्वापगमात्। असिद्धत्वे तु ह्रस्वत्वमेव यथापूर्वमिति प्राप्नोति।

२२२४। वा ल्यपि ॥६।४।३८॥

दी—। अनुदात्तोपदेशानां वनतितनोत्यादीनामनुनासिकलोपो वा स्याल्ल्यपि। व्यवस्थितविभाषेयम्। तेन मान्तानिटां वा। नान्तानिटां वनादीनां च नित्यम्। आगत्य—आगम्य। प्रणत्य—प्रणम्य। प्रहत्य। प्रमत्य। प्रवत्य। वितत्य। 'अदो जग्धिः—' (२०८०)। 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब् बाधते' (परिभाषा)*। जग्धिविधौ ल्यब्ग्रहणात्। तेन द्वित्वदत्वात्वेत्वदीर्घेत्वशूठिटो ल्यपि न। विधाय। प्रदाय। प्रखन्य। प्रख्याय। प्रक्रम्य। आपृच्छ्य। प्रदीव्य। प्रपठ्य।

Elision of the nasal (म or न) of the roots गम, नम, वन्, तन् etc. which have been instructed as अनुदात्त is optionally effected when ल्यप् follows. This option is restrictive. Thus the elision of अनुनासिक (म्) is optionally in the cases of those roots ending in म् which are अनिट् and the elision of अनुनासिक (न) is obligatory (नित्य) in cases of those roots that end in न् and are अनिट्, and of roots वन् तन् etc. The are four मान्तअनिट् roots viz—गम्, नम्, यम् and रम्. Thus आगम्य आगत्य etc. म्eliding root gets तुक् by 'ह्रस्वस्य—' (2858). Similarly—प्रयम्य प्रयत्य and विरत्य विरम्य. प्रहत्य and

प्रमत्य—are instances of मान्त अनिट् roots where न् ( अनुनासिक ) is dropped always. The plural 'मान्तानिटान्' in the text is in view of multiplicity of instances of मन् and हन्. प्रवत्य and वितत्य are instances of वन् and तन्। 'अन्तरङ्गानिपि विधीन्—'This is a परिभाषा as it has been included in परिभाषेन्दुशेखर without any reference to its गणसूत्र although Tattvabodhini mentions it to be a गणसूत्र, This means—'A बहिरङ्ग ल्यप् bars even the अन्तरङ्ग injunctions. An affix or injunction is बहिरङ्ग when it requires many other operations for its application—बह्वपेक्ष: बहिरङ्ग:—( कैयट् ), whereas any affix or injunction is अन्तरङ्ग when its application is dependent not on many but on a very few ( स्वल्पापेक्षोऽन्तरङ्ग:—कैयट ), i.e., 'dependent on an internal or inherent immediate cause. The author (Dikshita) brings down the rule 'अदोजग्धिर्ल्यप्ति किति'—(3080) to show that this our परिभाषा is generalised ( ज्ञाप्यते ) from this rule on the strength of the acceptance of ल्यप् in it ; for had it (the rule) been enunciated as 'अदो जग्धिस्ति किति' in stead of '—ल्यप्ति किति' then also अद् would have been replacedby जग्धि or जग्ध् ( इकार being for the facility of pronunciation ) in ति किति or when क्त्वा followed. Consequently ल्यप् being a substitute for क्त्वा and जग्ध्यादेश an अन्तरङ्ग विधि, अद् would make room for जग्ध्. Thus ल्यप् being redundant here suggests the existence of this परिभाषा ( ज्ञापकसिद्धत्वम् ). Therefore, according to this परिभाषा, the अन्तरङ्गविधिs such as हित्व, दत्व, आत्व, ह्रस्व, दीर्घत्व, ग्र, ऊठ् and इट् will not operate when ल्यप् follows. Thus विधाय ( वि—धा+ल्यप् ) where हि by 'दधातेर्हि:' (3976) ceases to operate as ल्यप् follows ; प्रदाय ( प्र—दा+ल्यप् )

where ह्रस्व by 'दो ददघोः' (3077) does not take place in connection with ल्यप्; प्रखन्य—(प्र खन्+ल्यप्) where आत्त्व by 'जनखन—' (2504) does not take place due to the following of ल्यप्; प्रस्थाय—(प्र—स्था+ल्यप्) where इत्त्व by 'द्यतिस्यतिमास्थाम्—'(3074) does not take effect due to the subsequence of ल्यप् therein; प्रक्रम्य (प्र—क्रम्+ल्यप्) where दीर्घत्व by 'क्रमश्च क्त्वि' (3329) does not come in due to the coming of ल्यप्; आपृच्छ्य (आ+प्रच्छ्+ल्यप्) where श् ceases to operate by 'च्छ्वोः शूठ्—' (2561) when ल्यप् follows; प्रदीव्य (प्र+दिव्+ल्यप्)—where no ऊठ for व of दिव् as ल्यप् comes; here (in प्रदीव्य) also in प्रपठ्य again इट् also by 'आर्द्धधातुकस्येट्—'(2148) is forbidden to appear by this ल्यप्. and so on.

मित—। वा ल्यपीति। 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपः क्ङिति' (६।४।३७) इति पूर्वं सूत्रम्। ततोऽनुदात्तेत्यारभ्य अनुनासिकलोप इत्यन्तम् इहानुवर्तते। अतो व्याचष्टे—अनुदात्तोपदेशानामित्यादि। व्यवस्थित-विभाषेति। व्यवस्थाञ्च स्वयमेवाह—तेनेति। मान्तानिटामिति। मान्तेषु धातुषु येऽनिटः तेषां ल्यपि परेऽनुनासिकलोपो वेत्यर्थः। मान्तेष्वनिटश्च—गम्, नम्, यम्, रम इत्येते चत्वारः। मान्तानिटामिति। मान्तेषु मन्हनी अनिटौ। ततश्च मान्तानिटयो-रिति द्विवचने वक्तव्ये बहुवचनम् विभिन्नोपसर्गवशात् प्रयोगबाहुल्यापेक्षम्। नित्य-मिति। ल्यपि अनुनासिकलोप इति शेषः। आगत्य आगम्येति। एवं विरम्य विरत्य। प्रयम्य प्रयत्येत्युदाहरणीयम्। गमादीनामनुनासिक लोपादूर्ध्वम् 'ह्रस्वस्य—' (२८५८) इति तुगागमः। प्रहत्येति। नित्यमनुनासिकलोपः। एवं प्रमत्येत्यत्र मन्यतेरनुनासिक लोपः। प्रवत्येति प्रपूर्वस्य वनतेरनुनासिक लोपः। वितत्येति। अत्र तनोतेरनुनासिकलोपः। भाष्ये तु 'वा ल्यपि' इति सूत्रं न दृश्यते। तत्र 'अनुदात्तोपदेश—' इति सूत्रे 'अनुदात्तोपदेशेऽनुनासिकलोपो ल्यपि च' इति 'वासः' इति च वार्तिकं पठितम् इत्याहुः। यस्य 'ल्यपि च अनुदात्तोप-

देश इति मलोपो भवति। मकारान्तानां तु चेत्यर्थः' इति व्याख्यानञ्च दृश्यते। 'अन्तरङ्गानपि विधीन्—' इति—परिभाषेयम् इति परिभाषेन्दुशेखरे स्पष्टम्। तत्त्वबोधिन्यां गणसूत्रत्वेनास्य उल्लेखो दृश्यते। परिभाषायां अर्थः स्पष्टः। अन्तरङ्गत्वं स्वल्पापेक्षत्वम्। बहिरङ्गत्वन्तु बह्वपेक्षत्वमिति कैयट इति 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्येतत् परिभाषाव्याख्यानावसरे नागेशः। सा चेयं परिभाषा 'अदो जग्धिः—' इति सूत्रेण ज्ञाप्यत इति मत्वा सूत्रस्य अस्य प्रागेवोपन्यासः। कथं ज्ञाप्यत इत्यत आह—जग्धिविधौ ल्यब्ग्रहणादिति। तथाच 'अदो जग्धिर्ल्यप्ति किति' इत्यस्य सूत्रस्यायमर्थः—अदो जग्धिः स्यात् ल्यपि तादौ किति चेति। (ल्यबिति लुप्तसप्तमीकम्। जग्धेरिकार उच्चारणार्थः)। ल्यप् इति क्त्वादेशः। ततश्च क्त्वायां यो विधिरारभ्यते स ल्यपि अपि भवेत्। एवं स्थिते 'अदो जग्धिस्ति किति' इत्येव सूत्रेऽपि—इष्ट-सिद्धिः। अदो जग्ध्यादेशस्य अन्तरङ्गत्वेन ल्यपः प्रागेव प्रवृत्त्या ल्यपि अपि जग्धि-भावस्य सुलभत्वात्। एवञ्च 'अदो जग्धिर्ल्यप्—' इत्यत्र ल्यब्ग्रहणं व्यर्थं सत् ज्ञापयति—'अन्तरङ्गानपि विधीन्—' इति। ततः किमित्यत आह=तेनेति। हित्वम्, दत्वम्, इत्वम्, दीर्घत्वम्, श्, ऊठ्, इट् इत्येते अन्तरङ्गा विधयो ल्यपि परे न प्रवर्तन्त इत्यर्थः। इदमेव ल्यपोऽन्तरङ्गविधिबाधनं नाम। हित्वादीनां प्रत्येकं बाध प्रदर्शनार्थमुदाहरति—विधायेत्यादि। तथाच विधाय (वि—धा+ल्यप्) इत्यत्र 'दधातेर्हिः' (३०७६) इति अन्तरङ्गो हिः प्राप्नोति। स ल्यपि परे न भवति। प्रदाय (प्र—दा+ल्यप्) इत्यत्र 'दो दद्घोः' (३०७७) इत्यन्तरङ्गो 'दत्' प्राप्नोति। स ल्यपि परे न प्रवर्तते। प्रखन्य (प्र—खन्+ल्यप्) इत्यत्र 'जनसनखनाम्—' (२५०२) इत्यन्तरङ्गं 'आत्' प्राप्नोति। स ल्यपि परे न प्रसज्यते। एवं प्रस्थाय (प्र—स्था+ल्यप्) इत्यत्र 'द्यतिस्यतिमास्थाम्—' (३०७४) इति अन्तरङ्गः इत्' प्राप्तः। स ल्यपा बाध्यते। प्रक्रम्य (प्र—क्रम+ल्यप्) अत्र 'क्रमश्च क्त्वि' (३३२८) इत्यन्तरङ्गदीर्घत्वं प्राप्तं प्रतिषिध्यते। आपृच्छ्य (आ—प्रच्छ्+ल्यप्) अत्र 'च्छ्वोः शूठ्—' (२५६१) इत्यन्तरङ्गः शविधिः प्राप्तोऽनेन बाध्यते। तथा प्रदीव्येत्यत्र (प्र—दिव्+ल्यप्) अनेन वकारस्य ऊठ्, वलादिलक्षण इट् च प्राप्तः प्रतिषिध्यते। एवं 'प्रपठ्य' इत्यत्र केवलमिट् न भवति।

२३३५। न ल्यपि ॥ ६।४।६९ ॥

टी—। ल्यपि परे घुमास्थादेरीत्त्वं न। घेट्। प्रधाय। प्रमाय। प्रगाय। प्रपाय। प्रहाय। प्रसाय। 'मीनाति मिनोति—' (२५०८) इत्यात्त्वम्। प्रमाय। निमाय। उपदाय। 'विभाषा लीयतेः' (२५०८)। विलाय—विलीय। णिलोपः। उत्तार्य्यं। विचार्य्यं।

ईत्व (from 'ईद्यति'—2843 etc) is not substituted for the आकार of दा, धा, मा स्था etc (enumerated in 'घुमास्थागापाजहातिसाम्—' 2462) when ल्यप् follows. Thus प्रधाय (प्र—धे+ल्यप्=प्र—धा+य by 'आदेच:—' 2320)—having drunk. प्रमाय (प्र—मा or मेङ्) + ल्यप् having measured. प्रगाय (प्र—गै+ल्यप्—आत्व by 'आदेच:—') प्रपाय (प्र—पा+ल्यप्) but निपीय as in the biginning of नैषधचरित—'निपीय यस्य क्षितिरक्षिण: कथाम्' is derived as नि+पी (पीङ् पाने दिवादि)+ल्यप्। प्रसाय—प्र षो+ल्यप्—सत्व, and आत्व by 'आदेच:—') णिलोप: i.e in प्र तृ+णिच्+ल्यप् and in वि—चर+णिच्+ल्यप्—विचारिय—the णि (इकार of the roots after वृद्धि has been operated) elides and the resultant forms are उत्तार्य and विचार्य।

मित—। न ल्यपीति। 'घुमास्थागापाजहातिसांहलि' (६।४।६६) इत्यतो 'हलि' इतिवर्जं सर्वमप्यनुवर्तते। 'ईद्यति' (६।४।६५) इत्यत ईदिति च आह—घुमास्थादेरित्यादि। घेट् इति। घेट् पाने इत्यस्य ग्रहणमिदम्। प्रधायेति। अत्र 'आदेच:—' (२३७०) इत्यात्त्वम्। प्रमायेति—मा इत्यस्मात् मेङ् इत्यस्मात्वा 'आदेच:—' इति कृत्वात्त्वाद ल्यप्। प्रगायेति। गै इत्यस्मात् प्राग्वत् कृतात्त्वाल्ल्यप्। प्रगायेति। पा पाने। कथं तर्हि—'निपीय यस्य क्षितिरक्षिण: कथाम्' इति श्रीहर्ष:। पीङ् पाने इत्येवात्र धातुर्न तु पापाने इत्यदोष इत्याहु:। प्रसायेति। षोऽन्तकर्मणि इति दैवादिको धातु:। तस्मात् कृतसत्वात् कृतात्त्वात् क्त्वो ल्यप्। प्रमायेत्यादि

स्पष्टम्। णिलोप इति। तत्पूर्वात्तरतेर्णिचि वृद्धौ रपरत्वे चोत्तारि इति भवति। एवं विपूर्वाच्चरतेर्णिचि 'अत उपधायाः' (२२८२) इत्युपधावृद्धौ विचारि इति। एवञ्च ताभ्यां ताभ्यां क्त्वो ल्यपि णिलोपः णित्कार्य्याद्दूर्ध्वम् इलोपः इत्यर्थः।

२३३६। ल्यपि लघुपूर्वात् ॥ ६।४।५६ ॥

दो—। लघुपूर्वात् परस्य णेरयादेशः स्याल्ल्यपि। विगणय्य। प्रणमय्य। प्रवेभिदय्य। 'लघुपूर्वात्' किम्? संप्रधार्य्य।

अय replaces णि coming after the final letter of a root of which the preceding letter is a short wowel when ल्यप follows. Thus विगणय्य—वि+गण+ल्यप्—here the final अ of गण (which being included under चुरादि class is अकारान्त) is first dropped by 'अतो लोपः' (2308) and then णिच् is replaced by अय=having counted. Similarly प्रणमय्य—having caused to bow down—प्रवेभिदय्य—प्र+भिद+यङ्+णिच् ल्यप—here भिद+यङ् gives by 'सनयङोः' and 'गुणो यङ्लुकोः' etc 'वेभिद्य' the यङन्त form of भिद; then णिच् following यकार of वेभिद्य elides by 'यस्य हलः' and the final अ by 'अतो लोपः' and then ल्यप् replacing क्त्वा=having caused to penetrate again and again. संप्रधार्य्य—here the root is धृ which is not लघुपूर्व but लघ्वन्त।

मित—। ल्यपीति। लघुः (लघुस्वरः) पूर्वो यस्माद् (वर्णात्) इति विग्रहः। 'णेरनिटि' (६।४।५१) इत्यतो णेरित्यनुवर्तते। 'अयामन्ताल्वाय्य—' (६।४।५५) इत्यतोऽय इति च। तदाह—लघुपूर्वात् परस्य णेरित्यादि। 'णेरनिटि' (२३१२) इति णिलोपे प्राप्तेऽयमारम्भः। विगणय्य इति। विपूर्वाद् गणयतेर्ण्यन्तात्ल्यप्। गण संख्याने इति कथादित्वाददन्तः। 'अतो लोपः' (२३०८) इत्यल्लोपः। सतो णेरयादेशः। एवं प्रणमय्य। अमन्तत्वेन मित्त्वाद् मितां ह्रस्व इति ह्रस्वोऽत्रिमौ। प्रवेभिदय्य इति। भिदिर विदारणे। अस्माद् यङि 'सन्यङो'रिति द्वित्वे, गुणो लि

'गुणो यङ्लुको'रिति अभ्यासस्य गुणे च 'वेभिद्य' इति यङन्तो धातुः। तस्माण्णिच। 'यस्य हल' इति यकारलोपः। प्रागवदतो लोपः ततः क्त्वाल्यपादेशे णेरयादेशः। संप्रधार्य्येति। य इति धातुर्नतु लघुपूर्वः। तेन णेरयादेशाप्रसक्तौ उक्तौ यथोक्तं रूपम्।

२२२७। विभाषापः ॥ ६।४।५७ ॥

दी—। आप्नोतेर्णेरयादेशो वा स्याल्ल्यपि। प्रापय्य—प्राप्य।

णि after आप् is optionally replaced by अय when ल्यप् follows. प्र + आप् + णिच् + ल्यप् = प्रापय्य ( अय ) and प्राप्य ( without अय ).

मित—। विभाषेति। विभाषा + आप इत्यवयवः। प्रागुक्तनुवृत्तिसदाह— आप्नोतेर्णेरित्यादि। लघुपूर्वत्वाभावात् पूर्वेणाप्राप्ते विकल्पार्थमयमारम्भः।

२२२८। क्षियः ॥ ६।४।५९ ॥

दी—। क्षियो ल्यपि दीर्घः स्यात्। प्रक्षीय।

इ of क्षि is lengthened when ल्यप् follows.

मित—। क्षिय इति। 'ल्यपि लघुपूर्वात्' ( ६।४।५६ ) इत्यतो ल्यपीति। 'अकृत्सार्वधातुकयोर्दीर्घः'—इत्यतो दीर्घ इति चानुवर्तते। तदाह—क्षियो ल्यपि दीर्घ इति।

२२२९। ल्यपि च ॥ ६।१।४१ ॥

दी—। वेञो ल्यपि संप्रसारणं न स्यात्। प्रवाय।

The root वेञ् ( तन्तुसन्ताने to weave) does not get सम्प्रसारण when ल्यप् follows. Thus प्र + वे + ल्यप् = प्रवाय by आत्व by 'आदेचः—' (2370)—having woven. Here the सम्प्र. claimed by 'वचिस्वपियजादीनां—' (2422) is prohibited from taking effect as ल्यप् being a substitue for क्त्वा is a कित् affix and hence, without this prohibition, would necessitate संप्र—।

मित—। ल्यपि चेति। 'वेञः' (६।१।४०) इत्यव्यवहितं पूर्वं सूत्रम्। 'न संप्रसारणे संप्रसारणम्' (६।१।३७) इत्यतः 'संप्रसारणम्' इत्यनुवर्तते। तदाह—वेञ इत्यादि। प्रवाय इति—प्रपूर्वाद् वेञ् तन्तुसन्ताने इत्यस्मात् क्त्वो ल्यप्। 'आदेचः—' (२३७०) इत्यात्वम्। अनेन 'वहिज्या—' (२४१२) इति प्राप्तस्य संप्रसारणस्य निषेधान्न संप्रसारणम्। ल्यपः क्त्वादेशत्वेन तत्प्राप्तिः प्रतिषिध्यत इति बोध्यम्।

## २३४०। ज्यश्च ॥ ६।१।४२ ॥

## टी—। प्रज्याय।

The root ज्या (वयोहानौ to grow old) also does not get सम्प्र- in ल्यप्। Thus प्रज्याय—and not प्रजीय by 'वहिज्या—' (2412).

मित—। ज्यश्चेति। ज्यावयोहानौ क्र्यादिकः। तस्य ल्यपि परे 'वहिज्ये'ति (२४१२) संप्रसारणं नेत्यर्थः।

## २३४१। व्यश्च ॥ ६।१।४३ ॥

## टी—। उपव्याय।

No सम्प्रसारण of य of व्येञ् (संवरणे भ्वादि) takes place when ल्यप् follows (in place of क्त्वा). Thus उपव्याय—आत्व as before. The सम्प्र—prohibited here from taking place is what is directed by 'वहिज्यावयि—' (2412) where वयि is the common name for वेञ् तन्तुसन्ताने and व्येञ्संवरणे.

मित—। व्यश्चेति। व्येञ् संवरणे इति भौवादिको धातुः तस्य ल्यपि परे संप्रसारणं नेत्यर्थः। उपव्याय इति। 'आदेचः—' इत्यात्वम्। वहिज्येति (२४१४) संप्रसारणं प्राप्तमनेन प्रतिषिध्यते। वहिज्येत्यत्र 'वयि' इति वेञ्व्येञोः साधारणेन ग्रहणम्।

३३४२। विभाषा परेः ॥ ६।१।४४ ॥

दी—। परेर्व्येञो वा संप्रसारणं स्याल्ल्यपि। तुकं बधित्वा परत्वात् 'हलः' (२५५८) इति दीर्घः। परिवीय परिव्याय। कथं 'मुखं व्यादाय स्वपिति' 'नेत्रे निमील्य हसति' इति? व्यादाननिमीलनोत्तरकालेपि स्वापहासयोरनुवृत्तेस्तदंशविवक्षया भविष्यति।

संप्रसारण, when ल्यप् follows, is optionally ordered for व्येञ् when preceded by the उपसर्ग परि. Thus परि वेञ्+ल्यप् (in place of क्त्वा) परि वि+य=परिवीय here तुक् due by 'ह्रस्वस्य—' (6.1.71) being barred by हलः (6.4.2) which is subsequent to the former. परिव्याय by भाष्य as before. Well, how to derive व्यादाय in मुखं व्यादाय स्वपिति—he sleeps with his mouth open and निमील्य in नेत्रे निमील्य हसति—he shuts his eyes while he laughs, where there being no sense of पूर्वकाल the rule 'समानकर्तृकयोः—' (3330) cannot take effect and consequently ल्यप् the substitute for क्त्वा, cannot apply? Indeed the opening of the mouth and closing of the eyes are simultaneously performed with or a bit later of sleeping and laughing; but as their sleeping and laughing are continued after the opening of the mouth and the closing of the eyes, so that part of being intended here i.e. that sort of sense being present, opening and closing are (at least partly) prior to sleeping and laughing respectively, so the root दा and मील् may take ल्यप्. The use of क्त्वा or ल्यप् however in expressions like 'रथे तु वामनं दृष्ट्वा पुनर्जन्म न विद्यते' and 'क्षीरवद्वहिरपरा

प्रतिभाति सा मे भातुर्विंभुत्वमनुचिन्त्य वपुश्च तस्याः ( शकुन्तला ) etc where there being no coincidence of the subjects ( समानकर्तृकत्व ) in each case, the rule 'समानकर्तृकयोः—' fails to apply—is to be defended by inserting some such word as 'स्थितस्य' etc where necessary, so that the sense of such expressions are not altered thereby. Bhattoji has expressed this view in his Manorama.

मित—। विभाषेति। 'व्यश्च' ( ६।१।४३ ) इति सूत्रे व्य इति 'व्येञ् संवरणे' इत्यस्य कृतात्वस्य आकारवर्जं षष्ठ्या रूपम्। ततश्च व्येञ इति तदर्थः। लाघवादियमुक्तिः। तस्माद् व्येञ इत्यनुवर्तते। 'न संप्रसारणे—' ( ६।१।३७ ) इत्यतः संप्रसारणम् इति। 'ल्यपि च' ( ६।१।४१ ) इत्यतो ल्यपि इति च। तद् व्याचष्टे—परे व्येञ इत्यादि। परिपूर्वाद् व्येञ्धातोरित्यर्थः। एवं परि+व्येञ्+क्त्वा इति स्थिते क्त्वो ल्यबादेशे अनेन यकारस्य संप्रसारणे पूर्वरूपे च विहिते परि वि य इति जाते दीर्घार्थमाह—तुकं बाधित्वेति। 'ह्रस्वस्य पिति कृति—' ( ७।१।७१ ) इत्येतत् पूर्ववर्ति सूत्रस्थं तुकं बाधित्वा 'हलः' ( ६।४।२ ) इत्येतत् परवर्ति सूत्रस्थो दीर्घः प्रवर्तते इति भावः। पक्षे 'आदेचः—' ( २३७० ) इत्यात्वमित्याह:—परिव्याय इति। कथमिति ?—मुखं व्यादाय. विस्तार्य स्वपिति इत्यत्र नेत्रे निमील्य दर्शनव्यापाराद् विरम्य हसति इत्यत्र च न तावत् स्वापकालात् पूर्वं मुखव्यादानं नवा हासकालात् प्राक् नेत्रनिमीलनम्। किन्तु स्वापकालोत्तरमेव मुखव्यादनम्, हासकालोत्तरमेव नेत्रनिमीलनम्। एवं स्थिते मुखव्यादाननेत्रनिमीलनयोः पूर्वकालविशिष्टार्थकत्वाभावात् कथमनयोः 'समानकर्तृकयोः—' ( ३३२० ) इति क्त्वा प्रवर्तते। क्त्वाप्रवृत्तेरभावे च कथं तदादेशो ल्यप् इति प्रश्नः ? समाधानमाह—व्यादाननिमीलनोत्तरकालेऽपीति। सत्यम्—स्वापात् पश्चात् तत् समकालमेव वा मुखव्यादानं हासादुत्तरं तत् समकालमेव वा नेत्रनिमीलनञ्च। तथापि मुखव्यादनादुत्तरस्मिन् कालेऽपि स्वापो वर्तते। एवं नेत्रनिमीलनादुत्तरस्मिन् काले हासोऽपि च वर्तते। न हि स्वापादूर्ध्वं मुखव्यादाने जाते एवासौ जागर्ति न वा हासादूर्ध्वं नेत्रनिमीलने च भूते एवासौ हासाद् विरमति। किन्तु व्यादाननिमीलनोत्तरमपि

स्वापह्रासयोरनुवृत्तिर्वर्तत एव। एवं तदंशविवक्षया (तादृशस्वापह्रासयोरंशविवक्षया) भविष्यति क्त्वादेशो ल्यबिति शेषः। अर्थात् उत्तरस्मिन्नपि काले स्वापो ह्रासश्च वर्तते तत्तदपेक्षया (उत्तरकालिकस्वापह्रासापेक्षया) व्यादाननिमीलनयोः पूर्वकाले विद्यमानार्थत्वमादाय दाधातोर्मीलधातोश्चोत्तरं क्त्वो ल्यप् सिध्यतीत्यभिप्राय इति बोध्यम्। नन्वेवमपि 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते' (गीता) 'तां दृष्ट्वा द्युतिमायान्तीं ब्रह्माणमनुगामिनीम्। वाल्मीकेः पृष्ठतः सीतां दृष्ट्वा साधुवादो महानभूत्' (रामायणम्), 'स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे, धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः' (अभिज्ञानशकुन्तलम्) इत्यादिषु का गतिरिति चेदुच्यते। यद्यप्येतेषु विषयस्थलेषु समानकर्तृकत्वाभावात् 'समानकर्तृकयोः—' (३३२०) इति क्त्वो ल्यबादेशो दुर्लभस्तथापि तत्र तत्र 'स्थितस्य' 'स्थितानां' चेत्यादि यथायथमध्याहृत्य व्याख्येयमित्याह मनोरमायां ग्रन्थाकृत् स्वयमेव। अथप्रकृतप्रकरणसमाप्तिसूचकं णमुलमुदाहरिष्यन् तद्विषयकसूत्रमवतारयति—

३३४६। आभीक्ष्ण्ये णमुल् च ॥ ३।४।२२॥

**दी—।** पौनःपुन्ये द्योत्ये पूर्वविषये णमुल् स्यात् क्त्वा च। द्वित्वम्। स्मारं स्मारं नमति शिवम्। स्मृत्वा स्मृत्वा। पायं पायम्। भोजं भोजम्। श्रावं श्रावम्। 'चिण्णमुलोः—' (२७६२) इति णमुल्परे णौ वा दीर्घः। गामं गामम्—गमं गमम्। 'विभाषा चिण्णमुलोः' (२७६५) इति नुम् वा। लम्भं लम्भम्—लाभं लाभम्। व्यवस्थितविभाषयोपसृष्टस्य नित्यं नुम्। प्रलम्भं प्रलम्भम्। 'जाग्रोऽविचिण्णल्—' (२४८०) इति गुणः। जागरं जागरम्। ण्यन्तस्याप्येवम्।

[N. B.—This rule follows upon the rule 'समानकर्तृकयोः पूर्वकाले' (3320—3.4.21). The sense of the rule therefore is :—]

If frequency is implied then in the previous case णमुल् as well as क्त्वा may take place. When in the sense of frequency णमुल् or क्त्वा is employed then such forms as are derived with them are duplicated by the rule 'नित्यवीप्सयोः' (2140). Thus स्मारं स्मारं नमति शिवम्—he bows down to Shiva remembering him repeatedly—णमुल् retains अम् only and drops the indicatory (अनुबन्ध) ण, and therefore here the root स्मृ gets वृद्धि by 'अचो ञ्णिति' (254), the उकार in the affix being for the sake of facility in pronunciation and लकार at the end for accentuation (स्वरार्थम्). स्मृत्वा स्मृत्वा—case of क्त्वा which forms an alternative in the same sense (of frequency). Similarly अनुस्मारम् अनुस्मारम् and अनुस्मृत्य अनुस्मृत्य etc. पायं पायम्—पा+णमुल्—युक् comes in here by 'आतो युक्—।' Alternative=पीत्वा पीत्वा। भोजं भोजम्—भुज + णमुल्—गुण by 'पुगन्त लघूपधस्य च' (2189),—or—भुक्त्वा भुक्त्वा। श्रावं श्रावम् श्रु+णमुल् वृद्धि—'; alt—श्रुत्वा श्रुत्वा; although by 'वाऽसरूपः—' क्त्वा would come in as an alternative of णमुल् yet the चकार in the rule is to enjoin both णमुल् and क्त्वा in 'विभाषाग्रे—' (3.4.24), the next but one rule and to bring down लट् etc as optional-of क्त्वा and णमुल् by the term विभाषा there; for otherwise विभाषा would imply optionality between क्त्वा and णमुल्, and would not include लट् etc also. गामं गामम्—गमं गमम्—these both are in the cases of णिच्, hence optional वृद्धि of the उपधा of गम् by 'चिण्णमुलोः—'(2762) This means having caused to go over and over again. व्यवस्थितविभाषा—i.e. the option expressed by 'विभाषा—'(2765) is restrictive. Thus नुम् is optional when there is no उपसर्ग preceding the root

as in लम्भं लम्भम्—लाभं लाभम्; but it (नुम्) is नित्य or obligatory when the root has got an उपसर्ग (उपसृष्टस्य) preceding it—as in प्रलम्भं प्रलम्भम्—but not प्रलाभं प्रलाभम् without नुम्। नुम् forms the उपधा of लभ् in लम्भं लम्भम् whence there is no वृद्धि but it being wanting in the optional case we have लाभं लाभम् with वृद्धि by 'अत उपधायाः' (2282). ण्यन्तस्यायम्—i.e when जागृ takes णिच् then also the process is thus and the resultant terms are जागरं जागरम्—having set up the night.

मित—। आभीक्ष्ण्ये इति। आभीक्ष्ण्यं पौनःपुन्यम्। 'समानकर्तृकयोः पूर्वकाले' (३३२०—३।४।२१) इत्यव्यवहितं पूर्वं सूत्रम्। ततश्च करणे क्त्वा समुच्चीयते। तदाह—पौनःपुन्ये द्योत्ये इत्यादि। द्वित्वम् इति। णमुलन्तस्य क्त्वान्तस्य च पदस्य 'नित्यवीप्सयोः' (२१४०) इति द्वित्वमित्यर्थः। स्मारं स्मारमिति। णमुलिति णिद्भवति। तेन 'अचो ञ्णिति' (२५४) इति वृद्धिः। रपरत्वम्। णमुलो मत्वं स्वरार्थम्। उकार उच्चारणार्थ इति बोध्यम्। पक्षे क्त्वा-मुदाहरति—स्मृत्वा स्मृत्वेति। 'स्मारं स्मारं स्वगृहचरितं दारुभूतो मुरारिः (उद्भटश्लोकः)'। पायमिति—पाधातोर्णमुल्। 'आतो युक् चिण्कृतोः' (२७६१) इति युगागमः। भोजं भोजम् इति भुजेर्णमुल्। लघूपधत्वाद् गुणः। श्रावं श्रावम् इति शृणोतेर्णमुल्। प्राग्वद् वृद्धिरावादेशः। पक्षे पीत्वा पीत्वा। भुक्त्वा भुक्त्वा। श्रुत्वा श्रुत्वा। ननु सूत्रे चकाराग्रहणेऽपि वासरूपन्यायेन क्त्वोऽपि संग्रहस्तच्चकारो व्यर्थः। न च वासरूपन्यायोऽत्र न प्रवर्तते 'क्त्र्यधिकारादूर्ध्वं वासरूपो विधिर्नास्ती'ति वचनादिति वाच्यम्। क्तल्युट्तुमुन्-खलर्थेषु तस्याप्रवृत्तावपि क्त्वाविधौ तत्प्रवृत्तिस्वीकारस्य 'वाऽसरूप'सूत्रे भाष्ये स्पष्टत्वा-दिति चेन्न। 'विभाषाऽग्रे प्रथमपूर्वेषु' (३३४५—३।४।२४) इति वक्ष्यमाणसूत्रे क्त्वाणमुलोरेकत्र समावेशार्थं चकारग्रहणस्य आवश्यकत्वात्। तथा चैवं विभाषेत्यनेन पक्षे क्त्वाणमुलौ भवतः पक्षान्तरे तु ल्युडादयः। अन्यथा तत्र ('विभाषाग्रे—' इत्यत्र) णमुल् पक्षान्तरे तु क्त्वा स्यात्। न चेष्टापत्तिः। णमुलभावपक्षे क्त्वाविधौ ल्युडादयो न

स्तुः। न च वाऽसरूपन्यायेन भविष्यन्तीति चोद्यम्। तथाहि सति 'आभीक्ष्ण्ये—' (३३४३) इत्यत्रापि ते भवेयुः। इष्यते तु—तेऽत्र (लडादयः) आभीक्ष्ण्ये न प्राप्नुयुः। अतएव वक्ष्यति ('विभाषाऽग्रे—' इत्यत्र) 'आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यमेव विधिः' (क्त्वाणमुलोरिति शेषः) इति। तस्मादुक्तमत्र चकारस्य ग्रहणमिति प्रतिपत्तव्यम्। गामं गामम् नम् गमनमिति—गमयतेर्णमुल्। गमेरमन्तत्वेन 'जनी जृष्कसुरञ्जोऽमन्ताश्च' इति गणसूत्रे णमित्त्वे सिद्धे 'मितां ह्रस्वः' इति उपधाह्रस्वे जाते च 'चिण्णमुलोः—' (२७६२) इति दीर्घविकल्पः। पक्षे गमयित्वा गमयित्वा। व्यवस्थितविभाषयेति। तथाच उपसर्गाभावे एव नुम्विकल्पः। यथा—लम्भं लम्भम् लाभं लाभमिति। उपसर्गसत्त्वे तु नास्ति विकल्पः। तदाह—उपसृष्टस्येति। उपसर्गेण सहितस्येत्यर्थः। प्रलम्भं प्रलम्भमिति। न तु प्रलाभं प्रलाभमित्यपीति बोध्यम्। लम्भं लम्भमित्यत्र लभेः अकारोपधात्वाभावान्न वृद्धिः। लाभं लाभमित्यत्र तु 'अत उपधायाः' (२२८२) इति वृद्धिः। पक्षे लब्ध्वा लब्ध्वा। प्रलभ्य प्रलभ्य। स्वन्तस्यापीत्यमिति—जागृधातोरुत्तरं णिच्प्रत्यये सति वृद्धिं बाधित्वा 'जाग्रोऽविचिण्णल्—' (२४८०) इति गुणे 'णेरनिटि' (२३१३) इति णिलोपे च 'जागरं जागरम्' इति तुल्यमेव रूपमित्यभिप्रायः।

## ३३४४। न यद्यनाकाङ्क्षे॥ ३।४।२३॥

टी—। यच्छब्दे उपपदे पूर्वकाले यत्प्राप्तं तन्न—यत्र पूर्वोत्तरे क्रिये तद्वाक्यमपरं नाकाङ्क्षति चेत्। यदयं भुङ्क्ते ततः पठति। इह क्त्वाणमुलौ न। 'अनाकाङ्क्षे' किम्? यदयं भुक्त्वा व्रजति ततोऽधीते।

That which (i.e क्त्वा or णमुल) was got in the sense of पूर्वकाल does not apply when the indeclinable word यत् stands as an उपपद of a rule in a sentence which provided, having two verbs one implying priority and the other posterity does not

require any other sentence to as so make two predications complete. Thus 'यदयं भुङ्क्ते—' he reads the moment he takes his meal. Here although there are two finite verbs भुङ्क्ते and पठति yet it makes one sentence only and not two, and does not require any other sentence as a complement. It is easy to say that भुङ्क्ते implies पूर्वकालत्व and पठति उत्तरकालत्व. इह etc—That is notwithstanding the sense of पूर्वोत्तरकालत्व in the sentence, क्त्वा and णमुल् do not apply. 'यदयं भुक्त्वा—' Here there are two sentences viz (i) यदयं भुक्त्वा व्रजति and (ii) ततः अधीते—whenever he goes to walk after taking his meal, he reads. The first sentence being dependent on the second, the prohibition does not apply and consequently क्त्वा takes place.

मित—। न यदीति। यदि अनाकाङ्क्षे इतिच्छेदः। 'यत्' इत्यव्ययम्। तस्य सप्तम्यां 'यदि' इति। यदित्युपपदे चेदित्यर्थः। अनाकाङ्क्षे इत्यत्र आकाङ्क्ष इति पचाद्यचि निष्पन्नः। ततो नञ्समासः। आकाङ्क्षा चेन्न विद्यत इत्यर्थः। पूर्वकालार्थे प्राप्तयोः क्त्वाणमुलोरयं निषेधः। तद् व्याचष्टे—यच्छब्दे उपपदे इत्यादिना। यत् प्राप्तमिति—क्त्वाणमुल् चेत्यर्थः। यत्रेति यत्र वाक्ये—पूर्वोत्तरे पूर्वोत्तरकाल-वाचके क्रियाद्वयं स्यातामिति शेषः। तद्वाक्यम् (कर्तृपदमिदम्) यत्रेत्यनेन सम्बन्धः। यदयमिति स्पष्टम्। पूर्वोत्तरकालवाचकक्रियाद्वययुक्तं वाक्यं वाक्यान्तरं नाकाङ्क्षति चेदिति निष्कृष्टोऽर्थः। यदयं भुङ्क्ते इति। तात्कालिकं पठन-मिति यावत्। एकस्यास्य वाक्यस्य वाक्यान्तरनिराकाङ्क्षत्वपूर्वकार्थे विद्यमानाद् धातोर्लडिति बोध्यम्। क्त्वाणमुलौ नेति—वाक्यस्य निराकाङ्क्षत्वात्। यदयं भुङ्क्तेति। अत्र भुजिव्रजिक्रियाद्वय युक्तमेकं वाक्यम्। ततोऽधीते इति वाक्यान्तरम्। पूर्वं परमाकाङ्क्षतीति आकाङ्क्षत्वभावात् प्रागुक्तनिषेधाभावेन पूर्वत्र पूर्वकालार्थे विद्यमानाद् भुजेः क्त्वा एव भवति न तु लडिति भावः।

३३४५। विभाषाऽग्रेप्रथमपूर्वेषु ॥ ३।४।२४ ॥

दी—। आभीक्ष्ण्ये इति नानुवर्तते। एषूपपदेषु समानकर्तृकयोः पूर्वकाले क्त्वाणमुलौ वा स्तः। अग्रेभोजं व्रजति। 'अग्रे भुक्त्वा'। प्रथमंभोजम्। प्रथमं भुक्त्वा। पूर्वंभोजम्। पूर्वं भुक्त्वा। पक्षे लडादयः। अग्रे भुङ्क्ते ततो व्रजति। आभीक्ष्ण्ये तु पूर्वविप्रतिषेधेन नित्यमेव विधिः। अग्रे भोजं भोजं व्रजति। भुक्त्वा भुक्त्वा।

The term आभीक्ष्ण्ये occurring in 'आभीक्ष्ण्ये णमुल् च' (6.4.22) does not follow here. Hence the rule means—क्त्वा and णमुल् are optionally appointed after root in the sense of the rule 'समानकर्तृकयो.—(3320) provided the words अग्रे, प्रथम and पूर्व precede such roots as उपपद्s. Thus अग्रेभोजम् etc. There is no उपपदसमास of अग्रे etc with भोजम् as they (अग्रे etc) are अव्ययs and there is the restriction—'अमैवाव्ययेन' (783) where अम् stands for खमुञ् and णमुल (for elucidation see our मितभाषिणी therein). अग्रे भुङ्क्ते—first of all he take s his meal and then goes. आभीक्ष्ण्ये तु etc—But in the sense of frequency, however, णमुल and क्त्वा, by the maxim of पूर्वविप्रतिषेधः, are obligatory and not optional so that लट् etc cannot form the alternatives here, for the maxim of 'वाऽसरूप' being prohibuted from taking effect in 'आभीक्ष्ण्ये—'(3340—also see that very rule) णमुल् and क्त्वा only take place in connection with अग्रे etc. Thus अग्रे भोजं भोजम्—He walks ahead after he eats and eats repeatedly.

मित—। 'विभाषाऽग्रे—' इति। अग्रे, प्रथम, पूर्वं एषांत्रयाणां सप्तम्या निर्देशादत्रोपपदत्वम्। समानकर्तृकयोरित्यादि सर्वमप्यनुवर्तते एकं विना पूर्वसूत्रात् आभीक्ष्ण्ये इति नानुवर्तते इत्याह—आभीक्ष्ण्ये इति न लिङ्गति। अत्र व्याख्यानमेव शरणम्। क्त्वाणमुलौ वाक्ये इति। 'आभीक्ष्ण्ये—' इति सूत्रे णमुलच इति चकार ग्रहणस्यैदमेव तात्पर्यमित्युक्तं तत्रैव। पक्षे लडादय इति। क्त्वाणमुलोरभावपक्षे इत्यर्थः। अग्रे भुङ्क्ते इति। एवमग्रेभुक्त्वा ततोऽव्रजदित्याद्युदाहार्यम्। अग्रे इति एदन्तं निपातनादव्ययं वा। अन्ययोः क्रियाविशेषणत्वम्। 'अमैवाव्ययेन' (७८२) इति नियमात् अग्रे भोजं, अग्रे भोजं भोजं; अग्रे भुक्त्वा, अग्रे भुक्त्वा इत्यादौ न समासः। आभीक्ष्ण्ये इति। पूर्वेण विप्रतिषेधः पूर्वविप्रतिषेधः। यदा पूर्वेण केनचिद् विधिना सूत्रेण वा परस्य कस्यचिद् विधौ सूत्रस्य वा बाध इष्यते तद्दोच्यते पूर्वविप्रतिषेधेनेदं भवतीति। तथाचात्र आभीक्ष्ण्ये इति नानुवर्तते इति व्याख्यातम्। एवञ्च आभीक्ष्ण्ये यो विधिरुक्तः विभाषेत्यत्र प्राप्नोति। ततश्च आभीक्ष्ण्ये क्त्वाणमुलयोर्नित्यमेव विधिः। तदेवोदाहृत्य दर्शयति—अग्रे भोजं भोजमिति।

### ३३४६। कर्मण्याक्रोशे कृञः खमुञ्॥ ३।४।२५॥

### दी—। कर्मण्युपपदे आक्रोशे गम्ये कृञः खमुञ्स्यात्। चौरंकारमाक्रोशति। करोतिरुच्चारणे। चौरशब्दमुच्चार्येत्यर्थः।

When a word in the accusative is an उपपद and an exclamation or vehement sound (आक्रोश) is implied the root कृञ् takes the affix खमुञ् (अम्) [of which ख is for मुम् by 'अरुर्द्विषदजन्तस्य—'(2942) and ञ् for वृद्धि by 'अचो ञ्णिति' (254)]. Thus 'चौरंकारम्—'he makes a vehement sound uttering the word "a thief" ("a thief"). Hence the root कृ in चौरंकारम् (चोर+कृ+खमञ्) decleares utterance (उच्चारण) or—he censures a person uttering him a thief.

मित—। कर्मण्याक्रोशे इति। कर्मणीति उपपदार्थम्। न तु वाच्यार्थम्। 'अव्ययकृतो भावे' इति वचनाद् भावे एव खमुञोऽपि विधानात्। आक्रोशे इति प्रत्ययार्थविशेषणम्—आक्रोशश्चेद् गम्यते नान्यथेति। तदाह—कर्मण्युपपद इति 'आक्रोशशब्दश्चात्र उच्चैश्चारणमर्थः। यद्वा निन्दायामिवास्य वृत्तिः। खमुञः खित्करणम् 'अरुर्द्विषत्—' (२९४२) इति मुमर्थम्। ञित्करणम् 'अचो ञ्णिति' (२५८) इति वृद्ध्यर्थम्। उकार उच्चारणार्थः। चौरंकारमाक्रोशतीति। चौर-शब्दोच्चारणपूर्वकम् आक्रोशति निन्दति वा कमपीत्यर्थः।

## ३३४७। स्वादुमि णमुल् ॥ ३।४।२६ ॥

**दी—। स्वाद्वर्थेषु कृञो णमुल् स्यादेककर्तृकयोः पूर्वकाले। स्वादुशब्दस्य मान्तत्वं निपात्यते। अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुंकारं भुङ्क्ते। संपन्नंकारम्। लवणंकारम्। संपन्नलवण-शब्दौ स्वादुपर्यायौ। वाऽसरूपेण क्त्वापि। स्वादुं कृत्वा भुङ्क्ते।**

When the word स्वादु and its synonyms stand as उपपदs (in the accusative) the root कृ takes णमुल् in the sense of 'समानकर्तृकयोः—'(3320). There is no word as स्वादुम् ending in म् but there is स्वादु ending in उकार. Then स्वादुम् is by निपातन a मकारान्त अव्यय here standing in the sense of स्वादु and applying itself before the root ( कृ ) when णमुल् is appointed. Therefore खमुञ् cannot be enjoined instead of णमुल्; so one cannot suggest that the rule might be shortened by 'स्वादौ च'; for if खमुञ is employed then 'अस्वाद्वीं स्वाद्वीं कृत्वा—' would in connection with मुम् ( by 'अरुर्द्विषत्'—2942 ), give स्वाद्विंकारम्—ह्रस्व being due by 'खित्यनव्ययस्य' (2943). More over, a च्व्यन्त word being

an अव्यय the very मुम् would not have been employed as there runs the prohibition 'अनव्ययस्य'. Besides, च्वि following स्वादु would have given स्वादू (lengthened) by 'च्वौ च' (2120). Similarly in cases of सम्पन्न etc the forms would have been 'सम्पन्नीकारम्' etc by 'अस्य च्वौ' (2118). Thus to ward off so many obstacles it has been rightly enunciated 'स्वादुमि णमुल्' instead of 'स्वादौ च'. This therefore that Bhalloji illustrates स्वादूंकारम् in the sense of च्वि otherwise he could instance स्वादुंकारम् only, for च्वि is optional by 'कृभ्वस्तियोगे सम्पद्यकर्तरि—' (2117). Understand after अस्वाद्वीम् स्वाद्वीं some such feminine noun as यवागूम् etc. The words सम्पन्न and लवण are synonyms of स्वादु and so they are thus instanced here. वाऽसरूपेण—is that by वाऽसरूपविधि क्त्वा applies as an alternative in the case as has been indicated by us on the strength of the Bhashya under the rule 'आभीक्ष्ण्ये—'(3343) with the only exception that it does not apply in that very rule (3343).

मित—। स्वादुमीति। स्वादुम् इति मान्तं प्रातिपदिकम् तदर्थे वर्तते। तेन तस्मिन् तत्पर्याये चोपपदे प्रागुक्तेऽर्थे कृञो णमुल् स्यादित्यर्थः। अतो व्याचष्टे—स्वाद्वर्थेषु कृञ इत्यादि। कृञ इति पूर्वसूत्रादनुवर्तते। मान्तत्वं निपात्यत इति। अतएव सूत्रे इति शेषः। तथाच स्वाद्वर्थे च इत्येव सुवचमेवेति भावः। ननु 'स्वादौ च—' इत्येव सूत्रमस्तु। एवञ्च चकारेण पूर्वसूत्रात् खमुञोऽनुवृत्त्या मुमागमेन अभीष्टसिद्धौ लाघवं स्यादिति चेन्न। स्वादौ इत्युक्ते हि स्वादुशब्दस्य उकारान्त-गुणवचनत्वात् अस्वाद्वीं (यवागूं) स्वाद्वीं कृत्वा भुङ्क्ते इत्यत्र 'वोतो गुणवचनात्' इति ङीष् प्राप्नोति। ततश्च स्वाद्वीकारमित्येव स्यान्न तु स्वादुंकारमिति। तथा अस्वादुं स्वादुं कृत्वा भुङ्क्ते इत्यत्र 'च्वौ—' (२१२०) इति दीर्घप्रसक्त्या 'अरुर्द्विषत्—' (२९४२) इति स्यात्। तथा स्वाद्वीकारमित्यत्र मुमागमप्रसक्त्या

खित्यनव्ययस्येति ( २९४३ ) ह्रस्वेन च खाद्विंकारमिति स्यात्। किञ्च चान्तस्य अव्ययत्वात् 'अरुर्द्विषत्—' इति मुमपि दुर्लभः। अनव्ययस्येति निषेधात्। ततश्च अस्वादुं स्वादुं कृत्वा भुङ्क्ते स्वादुंकारं भुङ्क्ते इत्यत्र मुम् न स्यात्। खमुञ: खित्त्वस्य, चोरंकारमित्यत्रैव सावकाशत्वात्। अपरञ्च, सम्पन्नंकारं लवणंकारमित्युभयत्र 'अस्यच्वौ' इति ईत्त्वमापद्येत। एवं 'स्वादौ च' इति सूत्रिते बहवो दोषाः। तस्मात् स्वादुमि मान्तत्वनिपातनं कर्तव्यमिति स्थितमाकरे। नन्वेवमपि 'स्वादुमि' इत्येव सूत्रमस्तु। त्यज्यताम् णमुल इति चेत्। तदपि न। तथा सति प्रत्यासत्त्या खमुञेवानुकृष्येत न तु णमुल्। ततश्च सुमागमप्रसङ्गः। णमुलि तु स्पष्टमुच्चारिते खमुञो निवृत्त्या कन्यादर्शमित्यादिनिर्बाधमेवेत्यलम्। स्वादुपर्यायौ इति—स्वाद्वर्थकावित्यर्थः। 'कृभ्वस्ति योगे—' ( २११७ ) इति च्व्यर्थस्य वैकल्पिकत्वात् तदभावेऽपि स्वादुंकारमित्यादि स्यादिति बोध्यम्। वाऽसरूपेणेति—एतच्च 'आभीक्ष्ण्ये—' ( ३३२३ ) इत्यत्रैव न प्रवर्तते। अन्यत्र तु निर्बाधमिति तत्रैवोक्तमित्यास्तां।

३३४८। अन्यथैवं-कथमित्थंसुसिद्धाप्रयोगश्चेत् ॥ ३।४।२७ ॥

**टी—। एषु कृञो णमुल् स्यात् सिद्धोऽप्रयोगोऽस्य एवंभूतश्चेत् कृञ्। व्यर्थत्वात् प्रयोगानर्ह इत्यर्थः। अन्यथाकारम्। एवंकारम्। कथंकारम्। इत्थंकारम्। भुङ्क्ते। इत्थं भुङ्क्ते इत्यर्थः। 'सिद्ध—' इति किम्? शिरोऽन्यथा कृत्वा भुङ्क्ते।**

When these indeclinables viz अन्यथा, एवम् कथम् and इत्थम् are used as उपपद the root कृ takes णमुल् if the root ( कृ ) is such that its non-application is admitted or established i.e it is devoid of sense or it is unfit for application. Thus अन्यथाकारम् (in another way), एवंकारम् (thus), कथंकारम् (how or why) इत्थंकारम् (thus)—भुङ्क्ते (he eats). Note that here in each of these

instances the very sense of the original words अन्यथा etc has been repeated—whence it is easy to see that कार, or the root कृ underlying the word is meaningless. Why say 'सिद्धाप्रयोगश्चेत्' if the non-application of the same ( कृ ) is established ; witness—शिरोऽन्यथा कृत्वा भुङ्क्ते—he turns his head otherwise while eats. Here the root कृ ( in कृत्वा ) makes sense and therefore its application (instead of non application) being established or admitted it does not take णमुल् by this rule although the indeclinable अन्यथा precedes it.

मित—। अन्यथैवमिति। अन्यथा, एवम्, कथम्, इत्थम् एषां द्वन्द्वात् सप्तमी बहुवचनम्। ततश्चैषु उपपदेषु इत्यर्थः। 'तत्रोपपदं सप्तमीस्थमि'त्यनुसारात् एषु इति। उपपदेषु इति शेषः। कृञ इति—'कर्मण्याक्रोशे—' ( ३।४।२५ ) इत्यतस्तदनुवृत्तेरिति भावः। सिद्धाप्रयोगश्चेदित्यस्यार्थं विवृणोति—सिद्धोऽप्रयोगोऽस्य एवंभूतश्चेत् कृञ् इति। सिद्धः अप्रयोगो यस्य कृञः स सिद्धाप्रयोगः। पुनरप्येतदेव स्पष्टयति—व्यर्थत्वात् प्रयोगानर्ह इत्यर्थ इति। सिद्धशब्दस्य स्वीकृतः निष्पन्नो वेत्यर्थः। तथाच अर्थापगमाद् यस्य व्यवहारानर्हत्वं स्वीक्रियते निष्पद्यत वेत्यर्थः। अन्यथाकारमित्यादि। एषु चतुर्ष्वपि उदाहरणेषु अन्यथा, एवमित्यादीनामेव चतुर्णामर्थाः पुनरुक्ताः। न पुनः णमुलन्तस्य कृञः कश्चिदपार्थ उपलभ्यते। ततश्च कृञ् निरर्थकः। अतएव प्रयोगानर्हः। सार्थकस्यैव प्रयोगनियमादिति भावः। अत एवाह—इत्थं भुङ्क्ते इत्यर्थ इति। एवञ्च इत्थं कारं भुङ्क्ते इति इत्थं भुङ्क्ते इति चानयोर्विशेषो नास्तीति द्रष्टव्यम्। एवम् अन्यथाकारमित्यादिषु बोध्यम्। सिद्ध इति किमिति। सूत्रे सिद्धप्रयोगश्चेदिति किमर्थमनुप्रवेशितम् इति प्रश्नः। समाधत्ते—शिरोऽन्यथा कृत्वेति। शिरो विभिन्नायां दिशि प्रेरयित्वा इत्यर्थः। तथा चात्र कृञो विद्यत एवार्थः। अतः सार्थकत्वात् 'सिद्धाप्रयोगः—' इति नियमाभावात् अन्यथा इत्यव्यये सत्यप्यत्र उपपदे कृञो णमुल् नोत्पद्यते किन्तु 'समानकर्तृकयोः—' (३३२०) इति क्त्वाप्रत्यय एवेति भावः।

२२४९। यथातथयोरसूयाप्रतिवचने ॥ ३।४।२८ ॥

**दी—। कृञः सिद्धाप्रयोगे इत्येव। असूयया प्रतिवचने। यथाकारमहं भोक्ष्ये तथाकारं भोक्ष्ये किं तवानेन *।**

If यथा and तथा are used as उपपदs before the root कृञ् it takes the affix णमुल् provided it is सिद्धाप्रयोग or unnecessary due to its meaninglessness and a reply through malice is expressed therein. Thus 'यथाकारमहं भोक्ष्ये—'I shall take my head in whatever way I like—what is that to you? If there is no sense of सिद्धाप्रयोगत्व or व्यर्थत्व of कृञ् it may take क्त्वा as before.

मित—। यथातथयोरिति। यथा च तथा च इति द्वन्द्वात् सप्तमीद्विवचनम्। कृञ इति सिद्धाप्रयोगइति चानुवर्त्तते। असूयाप्रतिवचने इति तृतीयासमासः। तेनायमर्थः—असूयाप्रतिवचने सति यथा तथा इत्यनयोरुपपदयोः कृञो णमुल् स्यात् सिद्धोऽप्रयोगोऽस्य एवं भूतश्चेत् कृञ् इति। यथाकारमहं भोक्ष्ये इति। यथाहं भोक्ष्ये तथा भोक्ष्ये इत्यर्थः। तेनात्रापि कृञो व्यर्थत्वं द्रष्टव्यम्। किं तवानेनेति। असूयाविष्करणार्थमिदम्। सिद्धाप्रयोग इत्येव। यथा कृत्वा भुङ्क्ते तथा कृत्वा भुङ्क्ते—इत्यादौ माभूत्।

२२५०। कर्मणि दृशिविदोः साकल्ये ॥ ३।४।२९ ॥

**दी—। कर्मण्युपपदे णमुल् स्यात्। कन्यादर्शं वरयति। सर्वाः कन्या (? दृष्ट्वा) इत्यर्थः। ब्राह्मणवेदं भोजयति। यं ब्राह्मणं जानाति लभते विचारयति वा तं सर्वं भोजयतीत्यर्थः।**

---

[* 'यथाकारमहं भोक्ष्ये किं तवानेन' इति पाठान्तरम्]।

If a term in the accusative is an उपपद and entirety is implied (of the accusative), the roots दृश् and विद् take the affix णमुल्। Thus 'कन्यादर्शम्—'he selects a girl (for himself) after seeing all of them. 'ब्राह्मणवेदम्—'he feeds all he knows, gets or thinks as a Brahmin. Here by विद् in the rule, three sorts of विद् is intended to take णमुल् i.e विद् to know (अदादि), विद् to get (तुदादि) and विद् to consider (रुधादि) are included, and विद् to exist (दिवादि) is excluded as it is intransitive.

मित—। कर्मणि दृशीति। कर्मणीति न वाच्यार्थम्। भावे एव णमुल्प्रत्ययस्य विधानात्। किन्तु उपपदार्थम्। तदाह—कर्मण्युपपदे इति। णमुल् स्यादिति। धात्वर्थं प्रति कर्मभूतस्य साकल्ये गम्ये तादृशे कर्मण्युपपदे दृशः विदेश्च णमुलित्यर्थः। कन्यादर्शम् इति—सर्वाः कन्याः दृष्ट्वा कामपि दर्शनीयतमां वरयति स्वीकरोतीत्यर्थः। वरयतीत्यत्र 'वर ईप्सयाम्' इति कथादिरदन्तः धातुः। 'अतो लोपः' (२३०८) इत्यल्लोपस्य णिच् कार्य्यं प्रति 'अचः परस्मिन्—' (५०) इति स्थानिवत्त्वात् 'अत उपधायाः' (२२८२) इत्यस्याप्रवृत्तेर्नोपधावृद्धिः। कन्यादर्शमित्यत्र दृशेर्लघूपधत्वाद् गुणः। 'ब्राह्मणवेदमिति। अर्थमाह—यंयमिति। सूत्रे विदेस्त्रिविधस्य ग्रहणम्—विद ज्ञाने, विद्लृ लाभे विद विचारणे इति। न तु विद सत्तायामित्यस्य तस्याकर्मकत्वादप्राप्तेः। तदाह—जानाति लभते विचारयति वेति। सत्तार्थस्य विदेरनेकार्थकत्वान्नेह ग्रहणमिति तत्त्वबोधिनी वचनन्तु नादर्तव्यम्। प्रकृतानुपयोगित्वात्। "सत्तायां विद्यते, ज्ञाने वेत्ति, विन्ते विचारणे। विन्दतेविन्दती प्राप्तौ श्यन् लुक् श्नशेष्विदं क्रमात्" इति प्रागुक्तमव स्मर्तव्यम्।

## २३५१। यावति विन्दजीवोः ॥ ३।४।३० ॥

**दी—। यावद्वेदं भुङ्क्ते। यावल्लभते तावदित्यर्थः। यावज्जीवमधीते।**

When the word यावत् stands as an उपपद, the root विद् to get ( तुदादि ) and जीव् (to live) take the affix णमुल्। Thus 'यावद्वेदम्—' he eats what he gets. 'यावज्जीवम्—'he reads as long as he lives. Note that although जीव् is intransitive yet it has got the term यावत् in the accusative on the strength of the Varttika 'अकर्मकधातुभिर्योगे देश: कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञ: स्यादितिवाच्यम्'।

मित—। यावति विन्देति। यावत् इति यत् परिमाणमस्य इति परिमाणार्थे वतुपि निष्पन्नम्। तस्य सप्तम्यन्तं यावति इति। तत्रथोपपदत्वम्। यावच्छब्दे उपपदे तौदादिकस्य विदे: जीवतेश्च णमुल् स्यादित्यर्थ:। अत: विदे: तौदादिकस्यैव ग्रहणमिति ज्ञापयितुं विन्देति नुमा निर्देश:। यावद्वेदमिति। लघूपधगुण:। यावल्लभते। यत्परिमाणं लभते तत्परिमाणमित्यर्थ:। यावज्जीवमिति। जीवते-र्लघूपधत्वाभावाद् गुणो न। यावन्तं कालं जीवति तावन्तं कालं व्याप्य इत्यर्थ:। 'अकर्मकधातुभिर्योगे—' इति वचनाद् यावच्छब्दस्य कर्मसंज्ञा।

### २२५२। चर्मोदरयो: पूरे: ॥ ३।४।३१ ॥
### दी—। कर्मणीत्येव। चर्मपूरं स्तृणाति। उदरपूरं भुङ्क्ते।

When the words चर्म and उदर stand as उपपदs in the accusative, the causative root पूर ( आप्यायने चुरादि ) takes णमुल्. Thus 'चर्मपूरम्—'he covers himself with his entire skin. उदरपूरम्—he eats to the capacity of his stomach.

मित—। चर्मोदरयोरिति। पूरेरिति पूरी आप्यायने इति चौरादिकण्यन्तस्य ग्रहणम्। 'इकश्तिपौ—' इतीकानिर्देश:। 'कर्मणि—' ( ३।४।२९ ) इत्यत: कर्मणीति (साकल्ये इति च ? ) अनुवर्तते। तदाह—कर्मणीत्येव इति। तत:—चर्मणि उदरे च कर्मण्युपपदे पूरयतेर्णमुल् इत्यर्थ:। चर्मपूरमिति। सर्वं चर्म पूरयित्वेत्यर्थ:। स्तृणाति = आच्छादयतीत्यर्थ:। स्तृञ् आच्छादने इति क्र्यादिकोऽयम्। 'पूर्वाणां

ह्रस्वः' (२५५८) इति ह्रस्वः। उदरपूरमिति—यावता पूर्य्यते तावता पूरयित्वेत्यर्थः।

२२५२। वर्षप्रमाणे ऊलोपश्चास्यान्यतरस्याम् ॥ ३।४।३२ ॥

टी—। कर्मण्युपपदे पूरेर्णमुल् स्यादूकारलोपश्च वा समुदायेन वर्षप्रमाणे गम्ये। गोष्पदपूरं वृष्टो देवः। गोष्पदप्रं वृष्टो देवः। 'अस्य' किम्? उपपदस्य मा भूत्। मूषिकाबिलप्रम्।

When a word in the accusative is an उपपद, the root पूर takes णमुल् and the ऊकार of पूर disappears optionally provided measurement of rain is implied by the whole. Thus गोष्पदपूरम् or गोष्पदप्रम् वृष्टो देवः—The cloud (देवः) has rained to the capacity of a cow-hoof (printed on the pond) i.e it has rained very little. गोष्पदप्रम्—here ऊकार of पूर being dropped (by option) and णि eliding by 'णेरनिटि' (2313) we have गोष्पद पर्+अम्=गोष्पदप्रम्. Why अस्य—of the (very) root in the rule. Witness—मूषिकाबिलप्रम् (वृष्टोदेवः)—here ऊकार existing in the root only is dropped but not that which exists in the उपपद 'मूषिका—'. Thus the utterance of 'अस्य' in the rule is to indicate that the ऊकार in the very root only disappears. वृष्टो देवः—कर्तरि क्त by 'गत्यर्थाकर्मक—' इति।

मित—। वर्षप्रमाण इति। वर्षो वृष्टिः। पचाद्यच्। 'कर्मणि—' (३।४।२९) इत्यतः कर्मणि इति चानुवर्तते—तदाह—कर्मण्युपपद इत्यादि। गोष्पदपूरं गोष्पदप्रं वृष्टो देव इति। देवो पर्जन्यः। वृष्ट इत्यत्र कर्तरि क्तः 'गत्यर्थाकर्मक—' इत्यनुसारात्। ऊकारलोपपक्षे 'णेरनिटि' (२३१३) इति

णिलोपादूर्ध्वम् ऊकारलोपेन गोष्पदप्रमिति। सूत्रे अस्येति धातोरेव ऊकारस्य वा लोपः। न तु उपपदस्य कस्यचिदिति ज्ञापयितुम् अस्येति ग्रहणम्। तेनेदं व्यर्थमिति दर्शयितुं पृच्छति अस्येति किमिति। समाधत्ते—उपपदस्य मा भूदिति। मूषिकाबिलप्रमिति—मूषिकाबिलं पूरयित्वेत्यर्थः। अत्र मूषिकेत्युपपदस्थस्य ऊकारस्य लोपो न। यद्यप्यस्येत्यनुक्तावपि 'ऊलोपयान्यतरस्याम्' इत्यनेन धातोरेव णाचिकोकारलोप इष्यत इति विज्ञायेत 'व्याख्यानाद् विशेषप्रतिपत्तिः—' इति न्यायात्तथापि स्पष्टार्थं तदिति विज्ञेयम्।

२२५४। चेले क्नोपेः ॥ ३।४।३३ ॥

दी—। चेलार्थेषु कर्मसूपपदेषु क्नोपेर्णमुल् स्याद् वर्षप्रमाणे। चेलक्नोपं ( शब्दाययन् ? ) वृष्टो देवः। वस्त्रक्नोपम्। वसनक्नोपम्। यथा वर्षणे वस्त्रं शब्दायते तथाऽवर्षदित्यर्थः।

When the word चेल and its equivalents are used as उपपद the root क्नोपि (क्नूयी शब्दे भ्वादि + णिच् पुक्) takes णमुल् provided the measurement of rain is implied thereby. Thus 'चेलक्नोपं (शब्दाययन्)—'It has rained so much as to shape a cloth i.e it has rained considerably. Here शब्दाययन् seems to be an undue insertion. For although it represents the sense required, it mars the diction of the expression. It cannot therefore come from the hand of the author. It may be derived as शब्दाय (नाम धातु) + णिच् + शतृ. Similarly the reading यथा वर्षणे—' though expresses the sense intended here, is here likely an interpolation. Here शब्दायते is from शब्द + क्यङ्। Note that Tattvabodhini omits both शब्दाययन् and यथा वर्षणे etc—.

मित—। चेले इति। चेलं वस्त्रम्। चेलशब्दोऽत्र तत्पर्यायेऽपि वर्तते। तदाह—चेलार्थेषु इति। चेलशब्दे तदर्थकशब्दान्तरे चेत्यर्थः। 'कर्मणि—' (३।४।२९) इत्यतः कर्मणीति। 'वर्षप्रमाण—' (३।४।३१) इत्यतो वर्षप्रमाण इति चानुवर्तते। तदाह—कर्मसु उपपदेषु इत्यादि। क्नोपेरिति। क्नूयी शब्द इति धातुश्चौरादिकः। तस्य णिचि 'अर्तिह्री—' इत्यनेन पुकि क्नोपिरिति रूपम्। तस्माण्ण्यन्तादेव णमुल्। चेलक्नोपमिति। चेलं क्नोपयित्वेत्यर्थः। तथा चैवं नामतस्ती (मेघः) यथा चेलानि शब्दायन्तीति। एवं वस्त्रक्नोपमित्यादि। अत्र शब्दायतश्चिति प्रक्षिप्तमिवाभाति। यथा वर्षणीवस्त्रम्—' इत्यादि अपि। तत्त्वबोधिन्यामनुपलम्भात्।

३३५५। निमूलसमूलयोः कषः ॥ ३।४।३४ ॥

टी—। कर्मणीत्येव। कषादिष्वनुप्रयोगं वक्ष्यति। अत्र प्रकरणे पूर्वकाल इति न संबध्यते। निमूलकाषं कषति। समूलकाषं कषति। निमूलं समूलं कषतीत्यर्थः। एकस्यापि धात्वर्थस्य निमूलादिविशेषणसम्बन्धाद् भेदः। तेन सामान्यविशेषभावेन विशेषणविशेष्यभावः।

When the words निमूल and समूल as objects stand as उपपदs, the root कष् takes णमुल्. The very root, however, is again used afresh, as it was singly in लट् etc before, after the words taking णमुल्. This sort of repetition (अनुप्रयोग) will be spoken of under 'कषादिषु यथाविध्यनुप्रयोगः' (3367—3.4.61). There in these instances (of यथाविध्यनुप्रयोग) there is no reference to पूर्वकाल (dealt with before); for this sort of reference is absurd or impossible as the sense of पूर्वकालत्व does not appear from the illustrations. Thus निमूलकाषं कषति, समूलकाषं कषति—he destroys (his foe) to the very root (of the same) i.e, root and branch. Although the sense

of the root (कष्) is the same or unchanged whether it is used by itself or with the qualifying words निमूल and समूल for destruction generally denotes doing way with something to its basis—yet, it must be admitted, there is difference between simply कषति and समूलकाषं कषति or निमूलकाषं कषति due to the absence and existence respectively of the words निमूल, and समूल in one case and the other. And this difference is like that lying between the adjective and the noun it qualifies or between the general and particular one (सामान्यविशेषभाव)। Note that simply कषति is the general case and hence it is taken in the manner of a noun and that समूलकाषम् is a particular case and has been taken in the sense of an adjective [ This suggests such other instances as पीतम् and निःशेषं पीतम् etc ].

मित—। निमूलसमूलयोरिति। 'कर्मणि—' (३।४।२९) इत्यतः 'कर्मणीत्यनुवर्तते इत्याह—कर्मणोत्येवेति। नियतं मूलमस्य निमूलम्। मूलेन सह यथा स्यात्तथा समूलम्। यथा सह मूलेनेति विग्रहः। 'अव्ययं विभक्तिसमीप—' इत्यादिना यौगपद्यार्थे अव्ययीभावः। निमूलसमूलयोः तुल्योऽर्थः। सूत्रार्थस्तु—कर्मवाचके निमूलशब्दे चोपपदे कषेर्णमुल् स्यादिति। निमूलकाषं कषति। समूलकाषं कषतीत्युदाहरणे। तत्र निमूलकाषं हन्ति, मारयति, विनाशयति चेत्यादिकमस्तु। कषति इत्यस्यैव कथं पुनः प्रयोगः। पूर्वत्र तादृशानुप्रयोगविधेरनुक्तत्वादित्याशङ्क्य व्याचष्टे—कषादिष्विति। 'कषादिषु यथाविध्यनुप्रयोगः' (३२६७—३।४।४६) इत्यस्येत्यर्थः। अत्र यथाविध्यनुप्रयोगे पूर्वकाल इति न सम्बध्यत इति। असम्भवादप्रतीतेश्च तादृशसम्बन्धस्येत्यर्थः। न हि समूलकाषमित्यादौ पूर्वं समूलं कषित्वा ततः कषतीत्यर्थो युज्यते। तस्मात् 'समानकर्तृकयोः—' इत्यनेन नास्ति सम्बन्धः। उदाहरणे चामुलनांशयोरर्थमाह—निमूलं समूलमिति। ननु निमूलकाषम् समूलकाषमिति व्यर्थम्। कषति इति सामान्येनैवार्थावगतेर्विशेषोदाहरणे प्रयोजनाभावात्। तथाच

कषति कंसं कृष्ण इत्यस्य याहगर्थः 'समूलकषं कषति—' इत्यस्यापि प्रयोगे स धात्वर्थस्य उभयत्रैव अभिन्नत्वादिति चेन्नैवम्। अस्तोयाह विशेष इत्याह—एकस्यापि धात्वर्थस्येति। कष हिंसायां भ्वादिः। यद्यपि कषतीति केवलोदाहरणे समूलकाषं कषतीति विशेषोदाहरणे च एकस्य हिंसार्थस्यैव प्रतीतिस्तथापि निमूलेति समूलेति च क्रियाविशेषणवदेन कषतेरेकत्र सम्बन्धादन्यत्र तदभावाच्च परस्परं भेदः। ननु कथम्भूतः स भेदस्तत्राह—सामान्यविशेषभावेनेति। यथा सामान्याद् विशेषो भिद्यते तथाऽत्र विशेषणाविशेषणं भिद्यते। सामान्यं विशेष्यम्। विशेषो विशेषणम्। कषति इति सामान्यं विशेष्यं वा समूलकाषमित्यादि विशेषो विशेषणं चेति बोध्यम्। यथा 'आम्रो वृक्षः' इत्यादौ आम्रो विशेषणं वृक्षस्तु विशेष्यम्। तथा निमूलकषणादिकं विशेषणं केवलकषणं तु विशेष्यमिति निर्गलितार्थः।

## २३५६। शुष्कचूर्णरूक्षेषु पिषः ॥ ३।४।३५ ॥

दी—। एषु कर्मसु उपपदेषु पिषेर्णमुल्। शुष्कपेषं पिनष्टि। शुष्कं पिनष्टीत्यर्थः। चूर्णपेषम्। रूक्षपेषम्।

When the words शुष्क, चूर्ण and रूक्ष are used as उपपदs in the accusative, the root पिष् (to grind) takes णमुल्. Thus शुष्कपेषं पिनष्टि (grinds dry) etc. Note that the jurisdiction or scope of यथाविध्यनुप्रयोग: (or after-application) begins from the preceding rule 'निमूलसमूलयोः—' (3355) and extends as far as 'उपमाने कर्मणि च' (3366)।

मित—। शुष्कचूर्णेति। 'कर्मणि—' (३।४।२९) इत्यतः कर्मणीत्यस्यानुषङ्गः। तदाह—एषु कर्मसु इति। उपपदेषु इति शेषः। शुष्कपेषमित्यस्यार्थमाह—शुष्कमिति। षढोः क इति निष्ठातकारस्य कः। पिष्लृसंचूर्णने रौधादिकः। लघूपधगुणः। 'निमूल समूलयोः—' (२३५५) इत्यारभ्य 'उपमाने कर्मणि च' (२३६६) इति यावद् यथाविध्यनुप्रयोगाधिकारः। तेनात्र पिष्लृधातुमनुप्रयुज्य दर्शयति पिनष्टीति। एवमन्यत्राप्युदाहरणे बोध्यम्।

२२५७। समूलाकृतजीवेषु हन्कृञ्ग्रहः ॥ ३।४।३६ ॥

टी—। कर्मणीत्येव। समूलघातं हन्ति। अकृतकारं करोति। जीवग्राहं गृह्णाति। जीवतीति जीवः। इगुपधलक्षणः कः। जीवन्तं गृह्णातीत्यर्थः।

When the words समूल अकृत and जीव precede as उपपदs in the accusative, the roots हन्, कृञ् and ग्रह् take the affix णमुल्. Here respective order is intended so that हन takes णमुल् when समूल only is an उपपद and not any of the two and कृञ् takes णमुल् when अकृत only precedes and not any of the other and ग्रह takes णमुल् when जीव only leads. Thus 'समूलघातम्—' he destroys (his enemy) to the very root. समूल + हन् + णमुल् = समूलघातम् by वृद्धि in connection with ण by 'अत उपधायाः' (2282), घ for ह by कुत्व by 'हो हन्तेः—'and त by 'हनस्तोऽचिण्णलोः'। 'अकृतकारम्—' performs what was left unfinished. वृद्धि of कृ by 'अचो ञ्णिति' (254). 'जीवग्राहम्—'captures while living—here जीव is not derived in भावे with घञ् but in the कर्तृवाच्य with क by 'इगुपधज्ञाप्रीकिरः कः' (2899).

मित—। समूलाकृतेति। 'कर्मणि—' (३।४।२९) इत्यतः कर्मणीत्यनुवर्तत इति आरणार्थमाह—कर्मणीत्येवेति। समूल, अकृत, जीव इत्येतेषु कर्मणि द्वितीया, तेषु उपपदेषु हन्, कृञ, ग्रह् इत्येतस्य णमुल् स्यादित्यर्थः। अत्र यथासंख्यमन्वयः। तथाच समूलोपपदे एव हन्तेर्णमुल् नेतरस्मिन्नुपपदे। एवं अकृतोपपदे एव करोतेर्णमुल नेतरस्मिन्नुपपदे। एवं जीवशब्दोपपदे एव ग्रहेर्णमुल्। तदाह—समूलघात-मित्यादि। सर्वत्र यथाविध्यनुप्रयोगो हनादीनाम्। समूलं हन्तीति समूल + हन् + णमुल् इति स्थिते 'अत उपाधायाः' (२२८२) इति वृद्धिः। 'होहन्तेः—' इति

कुत्वम्। 'हनस्त—' इति नस्य तः। 'समूलघातं न्यवधीदरींश्च' (भट्टिः), अकृतकारमित्यत्र 'अचो ञ्णिति' (२५४) इति वृद्धिः। रपरत्वम्। जीवग्राहमित्यत्र तु 'अत उपधायाः' इत्यनेन वृद्धिः। जीवशब्दस्य इत्यादि—जीव इति भावे घञन्तत्वे जीवन् इति कर्तृत्वं नोपपद्यत इत्याह—जीवतीति जीवः इति 'इगुपधज्ञाप्रीकिरः कः' (२८९७) इति कर्तरि कप्रत्ययः। ततो जीवन्तं गृह्णाति जीवग्राहं गृह्णातीति सम्पद्यते।

३३५८। करणे हनः॥ ३।४।३७॥

**दी—। पादघातं हन्ति। पादेन हन्तीत्यर्थः यथाविध्यनुप्रयोगार्थः सन्नित्यसमासार्थोऽयंयोगः। भिन्नधातुसम्बन्धे तु 'हिंसार्थानां च—' (३३६८) इतिवक्ष्यते।**

[Note that the term 'कर्मणि' which was being so far carried down from 'कर्मणि—'(3.4.26) has ceased to follow hence].

When a word ending in the instrumental ( तृतीयान्त ) leads as an उपपद, the root हन् takes णमुल्. Thus 'पादघातम्—'he kills or strikes with the foot.

This rule is for 'usual after-application' ('यथाविधि अनुप्रयोगः) of हन् and for making a नित्यसमास or obligatory compound of the णमुल्ending word in connection with the तृतीयान्त word पादेन। Thus the Samasa being here obligatory (125) the arrangement of option by 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (784) will not apply here. For in that case the coming rule 'हिंसार्थानां च समानकर्मकाणाम्' (3366) would have been sufficient to meet the requirement. Where not only the Samasa is optional but also other roots save except हन् ( which takes णमुल् ) are advised

to be appointed. Thus this rule is intended for यथाविधि अनुप्रयोग ( of हन् ) and for नित्यसमास ( of the णमुलन्त हन् with the तृतीयान्त word पादेन ).

मित—। करणे इति। 'कर्मणि—' ( ३।४।२९ ) इत्यतः कर्मणीति निवृत्तम्। करणे इति स्पष्टमुक्तत्वात्। ततश्च करणार्थे शब्दे उपपदे हन्तेर्णमुल् इत्यर्थः। तदाह—पादघातं हन्तीति। पादेनेति। एवं हस्तघातं हन्ति, दन्तघातं हन्ति इत्यादयो बोध्याः। ननु 'हिंसार्थानां च समानकर्मकाणाम्' ( ३३६९ ) इत्यनुपदं वक्ष्यते। ततश्च तेनैव तृतीयान्ते उपपदे हन्तेर्णमुलि सिद्धे किमर्थमिदमित्यत आह—यथा विध्यनुप्रयोगार्थः सन् नित्यसमासार्थोऽयं योग इति। योग इतिसूत्रम्। एतत् सूत्रम् 'कषादिषु—' ( ३३६७ ) इत्यत्र अन्तर्भूतम्। तत्कषादिपदेन हन्तेरपि यथाविधि अनुप्रयोगार्थं सूत्रम्। किञ्च करणार्थेन पदेन णमुलन्तस्य हन्तेर्नित्यसमासार्थमपीति द्विविधमत्र प्रयोजनम्। एतत् सूत्राभावे हि 'हिंसार्थानां च समानकर्मकाणाम्' ( ३३६९ ) इति दण्डोपघातं मारयति इत्येव स्यान्नतु दण्डघातं हन्तीति। तथा 'उपदंशस्तृतीयायाम्' ( ३३६८ ) तृतीयामनुवर्त्य 'हिंसार्थानां च—' ( ३३७९ ) इत्यत्र तृतीयासमासस्य विहितत्वात् 'तृतीयाप्रभृतीन्यन्यतरस्याम्' ( ७८४ ) इति वैकल्पिक एव समासः स्यात्। न तु नित्यः। ततश्च दण्डोपघातम्—दण्डेनोपघातम् इत्येव न तु दण्डघातं पादघातमित्यादि। तस्माद् 'हिंसार्थानां च—' इति वक्ष्यमाणसूत्रं भिन्नसम्बन्धे इति। एतत् यथाविध्यनुप्रयोगार्थं नित्यसमासार्थंचेति नास्तास्य सूत्रस्य उत्तरवर्तिना सूत्रेण गतार्थतेति भावः। भाष्ये तु अहिंसार्थं नित्यसमासार्थं चैतत् सूत्रमिति स्थितमित्याहुः।

## ३३५० । स्नेहने पिषः ॥ ३।४।३८ ॥

**दी—। स्निह्यते येन तस्मिन् करणे पिषेर्णमुल्। उदपेषं पिनष्टि। उदकेन पिनष्टीत्यर्थः।**

• When that by which something is made soft or moistened

( क्लिश्नाति ) stands as an उपपद in the तृतीयान्त form, the root पिष takes णमुल्. Thus 'उदपेषम्—' he pounds (it) with water. उदक has been replaced by 'उद' by the rule 'पेषंवासवाहनधिषु च' ( 996 ) which follows upon 'उदकस्योदः संज्ञायाम्' ( 995 ).

मित—। स्नेहने इति। स्नेहनेत्यत्र करणे ल्युडित्याह क्लिश्नाति येनेति। क्लिश्नोक्रियते आर्द्रीक्रियत इत्यर्थः। 'करणान्ते स्नेहने उपपदे इत्यर्थः। उद-पेषमिति। उदकेनपिनष्टीति—उदक पिष णमुल् इति स्थिते धातोर्लघूपधगुणः। 'पेषं वासवाहनधिषु च' ( ९९६ ) इति णमुलन्ते 'पेषम्' शब्दे परे उदकस्य उदादेशः। 'अमैवाव्ययेन' ( ७८३ ) इति नित्यः समासः। 'पेषम्—' इति सूत्रे 'उदकस्योदः संज्ञायाम्' ( ९९५ ) इत्यत उदकस्योद इत्यनुवर्तत इति बोध्यम्।

## ३३६०। हस्ते वर्तिग्रहोः॥ ३।४।३९॥

**दी—। हस्तार्थे करणे। हस्तवर्तं वर्तयति। करवर्तम्। हस्तेन गुलिकां करतीत्यर्थः। हस्तग्राहं गृह्णाति। करग्राहम्। पाणिग्राहम्।**

The term हस्त in the rule stands for any word signifying a hand. Thus when हस्त and its synonyms stand as उपपदs in the instrumental case-ending the roots वर्ति ( वृत्+णिच् ) and ग्रह take णमुल्. Thus हस्तवर्तम्, करवर्तम् etc—moves something round by the hand (as in the process of making earthen pots—घटिका ). Note that the root वर्ति is causative hence he says वर्तयति। हस्तग्राहम् i.e., takes hold of by the hand.

मित—। हस्ते इति। 'करणे हनः' ( ३।४।३७ ) इत्यतः करणे इत्यनुवर्तते। सूत्रे हस्ते इति तदर्थे लाक्षणिकम्। तदाह—हस्तार्थे करणे इति। हस्तशब्दे तत्पर्य्याये च करणकारकीभूते उपपदे इत्यर्थः। वर्तिग्रहोरित्यत्र पञ्चम्यर्थे षष्ठी।

वर्तिं रिति च वृतु वर्तने इत्यस्य णमुलन्तस्य ग्रहणम्। तेन णमुलाद इत्युधातोर्य इधातोश्च णमुल् इति शेषः। हस्तवर्तमिति। हस्तेन वर्तयतीत्यर्थः। पर्यायशब्दे ऽप्युपपदे भवतीत्युदाहरति करवर्तं करयाहमित्यादि।

२२६१। स्वे पुषः॥ ३।४।४२॥

टी—। करणे इत्येव। स्व इत्यर्थग्रहणम्। तेन स्वरूपे-पर्याये विशेषे च णमुल्। स्वपोषं पुष्णाति। धनपोषम्। गोपोषम्।

The term करणे from 'करणे हनः' ( 3. 3. 37 ) come down up to this rule. Here the term स्व ( which means wealth ) stands for itself and for its synonyms (पर्याय) and any particular word of wealth. Thus the root पुष् takes णमुल् when the term स्व and its synomyms stand as उपपद in the instrumental. Thus 'स्वपोषम्—' he rears with wealth. In गोपोषं पुष्णाति the term गो, although does not directly mean property, has indirect reference to property. Hence पुष् after it takes णमुल्. The instance means he brings it up with ( the help of ) a cow or cows.

मित—। स्वे पुष इति। 'करणे हनः' ( ३।४।३७ ) इत्यतः करणे इत्यस्य ग्रहणात्। स्व इत्यर्थग्रहणमिति। करणान्ते स्वशब्दे एवोपपदे पुषेर्णमुलिति नार्थः। किं तर्हि इत्यत आह—तेनेति। ( करणान्ते ) स्वरूपे 'स्व' इति शब्दे, पर्याये धनादौ शब्दे विशेषे धननिमित्तकगवादिविशेषवाचके शब्दे चोपपदे पुषेर्णमुल इत्यर्थः। स्वपोषं पुष्णातीति। स्वेन ( धनेन ) पुष्णातीत्यर्थः। गोपोषमिति। गोशब्दस्य साक्षाद धनावाचित्वाभावेऽपि पारम्पर्य्येण धनत्वेति बोध्यम्। एवं महिषपोषमजपोषमित्यादि।

३३६२। अधिकरणे बन्धः ॥ ३।४।४१ ॥

दी—। चक्रबन्धं बध्नाति। चक्रे बध्नातीत्यर्थः।

When any word ending in the locative case stands as an उपपद, the root बन्ध् takes णमुल्. Thus 'चक्रबन्धम्—' i.e., he binds it up in the wheel. Similarly रथबन्धम्, शकटबन्धम् etc.

मित—। अधिकरणे इति। करणे इति निवृत्तम्। सप्तम्यन्ते शब्दे उपपदे बध्नातेर्णमुलित्यर्थः। चक्रबन्धम् इति। चक्रे बध्नातीति णमुल्। अकारोपधत्वाभावान्न वृद्धिः। एवं हस्तबन्धं शकटिकाबन्धं बध्नातीत्यादि। नागेशस्तु 'अत्र संज्ञायामित्यपकृष्यते। तेन ग्रामेबद्ध इत्यर्थे ग्रामबन्धं बद्ध इति नेत्याह।

३३६३। संज्ञायाम् ॥ ३।४।४२ ॥

दी—। बध्नातेर्णमुल् संज्ञायाम्। क्रौञ्चबन्धं बद्धः। मयूरिकाबन्धम्। अट्टालिकाबन्धम्। बन्धविशेषाणां संज्ञा एताः।

The root बन्ध takes णमुल् when a संज्ञा or technical word is meant thereby. Thus क्रौञ्चबन्धं बद्धः etc. क्रौञ्चबन्ध is a particular bandage technically known as such. क्रौञ्चबन्धं बद्धः means 'he is tied up by the kraunchabandha (herontie) bandage'. Similarly मयूरिकाबन्धम् etc.

मित—। संज्ञायमिति। अधिकरणे इति नानुवर्तते। तदाह—बध्नातेर्णमुल इति। क्रौञ्चः कङ्करः। क्रौञ्चबन्ध इति बन्धविशेषस्य संज्ञा। तदाह—बन्धविशेषाणां संज्ञा एता इति। क्रौञ्चो यथा बध्यते तथा बद्ध इत्यर्थः।

३३६४। कर्त्रोर्जीवपुरुषयोर्नशिवहोः ॥ ३।४।४३ ॥

दी—। जीवनाशं नश्यति। जीवो नश्यतीत्यर्थः। पुरुषवाहं वहति। पुरुषो वहतीत्यर्थः।

When the words जीव and पुरुष standing in the nominative case, precede as उपपद्s the roots नश् and वह् take णमुल्. Thus जीवनाशं नश्यति i.e. a being dies. पुरुषवाहं वहति i.e. a male. carries. Note that here there is respective order so that नश् takes णमुल् when जीव is an उपपद and वह् takes णमुल् when पुरुष is an उपपद.

मित—। कर्त्रोरिति। कर्त्रोरिति सप्तमीद्विवचनम्। जीवपुरुषयोरिति च। नशिवहोरित्यत्र पञ्चम्यर्थे षष्ठी। नशिरितीकानिर्देशः। तेन नश् धातोरणान्तस्यैव ग्रहणं न तु णान्तस्य। तेनायमर्थः—जीवे पुरुषे च कर्तरि उपपदे नशेर्वहेश्च णमुल् स्यादिति। अत्रापि यथासंख्यम् इष्यते। तेन जीवोपपदे नशेः पुरुषोपपदे च वहेर्णमुल्। तदाह—जीवनाशं नश्यतीत्यादि। कर्त्रुपपदे प्रत्यय इति द्योतयितुमाह—जीवो नश्यतीत्यर्थः। पुरुषो वहतीत्यर्थ इति च। अत्रापि 'सामान्यविशेषभावेन विशेषणविशेष्यभावः' इति वचनं स्मर्तव्यम्।

## २२६५। ऊर्ध्वे शुषिपूरोः ॥ ३।४।४४ ॥

**दी—। ऊर्ध्वे कर्तरि। ऊर्ध्वशोषं शुष्यति। वृक्षादिरूर्ध्व एव तिष्ठञ्छुष्यतीत्यर्थः। ऊर्ध्वपूरं पूर्यते। ऊर्ध्वमुख एव घटादिर्वर्षोदकादिना पूर्णो भवतीत्यर्थः।**

When the term ऊर्ध्व in the nominative stand as an उपपद, the roots शुष् and पूर् (non-causal) take णमुल्. The sense of nominative follows from 'कर्त्रोः—' the preceding rule. ऊर्ध्वशोषं शुष्यति—tree etc. dries standing up. ऊर्ध्वपूरं पूर्यते A pitcher etc is filled with its mouth upwards with write water etc. The root here is पूरी आप्यायने दिवादि (आत्मनेपदी). Comp. 'यदोर्ध्वशोषं तृणवद् विशुष्कः' (भट्टि).

मित—। ऊर्ध्वे इति। 'कर्त्रोः—' इति पूर्वसूत्रे कर्त्रोरिति पदं लक्ष्यानुरोधादेकवचने विपरिणतमत्र व्याचष्टे—ऊर्ध्वे कर्तरीति। शुषिपूरोरित्यत्र प्राग्वत् पञ्चम्यर्थे षष्ठी। तेन ऊर्ध्वे कर्तरि शुषिः पूरेश्च णमुल्। शुषिरितीका निर्देशः तेन श्यन्नन्तस्यैव ग्रहणमित्याह—ऊर्ध्वपूरं पूर्यत इति। पूरेर्गुरूपधत्वान्नगुणः। पूरी आप्यायने इति दिवादिरात्मनेपदी। 'वधोर्ध्वशोषं तृणवद् विशुष्क' इति भट्टिः।

३३६६। उपमाने कर्मणि च ॥ ३।४।४५ ॥

दी—। चात् कर्तरि। घृतनिधायं निहितं जलम्। घृतमिव सुरक्षितमित्यर्थः। अजकनाशं नष्टः। अजक इव नष्ट इत्यर्थः।

When a term in the accusative as well as a term in the nominative stands, as a standard of comparison, as उपपद to a root then such a root may take णमुल्. The word चकार in the rule, is to derive the sense of कर्तरि from 'कर्त्रोः—' (3364) 'घृतनिधायम्—' The water has been stored or preserved (as carefully) as clarified butter. घृत + नि + धा + णमुल्—युक् (य) by 'आतो युक् चिण्कृतोः—' (2361). अजकनाशं नष्टः—ruined as a kid; 'विद्युत्प्रणाशं स वरं प्रणष्टः' (भट्टि). Note that घृतनिधायम्—is the instance of कर्मणि णमुल् and that अजकनाशम्—is the instance of कर्तरि णमुल्।

मित—। उपमाने इति। 'कर्त्रोः—' (३।४।४३) इत्यतः कर्त्रोरिति लक्ष्यानुरोधेन 'कर्तरि' इति विपरिणतं चकारेण इहानुकृष्यते। तदाह—चात् कर्तरीति। कर्मणि कर्तरि चोपमाने उपपदे धातोर्णमुलित्यर्थः। कर्मणि उदाहरति—घृतनिधायम् इति। घृतमिव निहितमित्यर्थे घृत + नि + धा + णमुल् इति स्थिते 'आतो युक्—' (२३६१) इति युगागमः। निहितमित्यस्य विवरणं सुरक्षितमिति। कर्तरि उदाहरति अजकनाशम् इति। एवं 'विद्युत्प्रणाशं सवरं

प्रनष्टः' ( भट्टिः ) 'विच्छिन्नाभविलाय' वा विलीये नगमूर्ध्नि' ( भारविः—११।७९ ) इत्यादि द्रष्टव्यम्। 'कषादिषु—' इति उत्तरसूत्रवक्ष्यमाण यथाविध्यनुप्रयोग विधेर्यतोऽधिकारः।

## ३३६७। कषादिषु यथाविध्यनुप्रयोगः ॥ ३।४।४६ ॥

टी—। यस्माण्णमुलुक्तः स एवानुयोक्तव्य इत्यर्थः। तथैवोदाहृतम्।

The sense is that a root after which the affix णमुल् has been employed has to be made use of after agein णमुलन्त words. And we have illustrated in that way viz. निमूलकाषं कषति, समूलकाषं कषति etc. under 'निमूलसमूलयोः—' ( 3355 ) etc. whence the scope of यथाविध्यनुप्रयोग begins.

मित—। कषादिष्विति। विधिमनतिक्रम्य यथाविधि इति साहृश्यार्थे ( पदार्थानतिवृत्त्यर्थे ) अव्ययीभावः। यथाविधि अनुप्रयोग इति सुप्सुपा कषादिभ्यो यथापूर्वं कषादीनां विधिरुक्त तथा णमुलन्तेभ्योऽपि त एव कषादयो लडाद्यन्ताः पश्चात् प्रयोक्तव्या इत्यर्थः। कषादिरित्यादि अनेन पिषहनकआदीनां संग्रहः। तथैवोदाहृतमिति। अस्माभिरिति शेषः। 'निमूलसमूलयोः—' ( ३३५५ ) इत्यारभ्य यथा विध्यनुप्रयोगविधिः। उदाहृतश्च तत आरभ्य निमूलकाषं कषतीत्यादि। [ अनुप्रयोग इत्यस्य पश्चात् प्रयोग इति नास्ति नियमः। अनशब्दस्य समीपवाचित्वात् ( 'अनुर्यत् समास' इतिर्[?]यथा )। एवम् 'अपुषत् स्वपोषम्' इत्यपि वक्तुं शक्यते।

## ३३६८। उपदंशस्तृतीयायाम् ॥ ३।४।४७ ॥

टी—। इतः प्रभृति पूर्वकाल इति संवध्यते। 'तृतीयाप्रभृतीन्यन्यतरस्याम्' ( ७८४ ) इति वा समासः। मूलकोपदंशं

भुङ्क्ते। मूलकेनोपदंशम्। दश्यमानस्य मूलकस्य भुजिं प्रति करणत्वात्तृतीया। यद्यप्युपदंशिना सह न शाब्दसंबन्धस्तथाप्यार्थोऽस्त्येव। कर्मत्वात्। एतावतैव सामर्थ्येन प्रत्ययः समासश्च। तृतीयायामिति वचनसामर्थ्यात्। * ततश्चायमर्थः—मूलकेन भुङ्क्ते इति शाब्दान्वये किं कृत्वेत्याकाङ्क्षायाम् उपदश्येति। तदेव कर्मत्वेनान्वेति।

Henceforth the term पूर्वकाले connects itself with what follows i.e. the rule 'समानकर्तृकयोः पूर्वकाले' ( 3320 ) will operate in this and the following rules due to the maxim of a frog's leap or मण्डूकप्लुतिन्याय. Thus the rule (now) means—when a term ending in तृतीया stands as an उपपद the root दन्श् preceded by the उपसर्ग उप will take the affix णमुल् in the sense of the rule 'समानकर्तृकयोः—'. These तृतीयान्त उपपदs will be optionally compounded with the णमुलन्त ( णमुल—ending ) bases by the rule 'तृतीयाप्रभृतीन्यन्यतरस्याम' (184 ). Thus मूलकोपदंशं भुङ्क्ते ( compounded ) and मूलकेनोपदंशं भुङ्क्ते ( uncompounded )—he eats with a raddish ( bitten now and then ). Well the expounding here, before णमुल् takes effect, is—'मूलकेन उपदश्य' ( भुङ्क्ते ). How then मूलक ends in तृतीया when उप-दंश् is transitive and it should, therefore have taken द्वितीया by कर्मणि द्वितीया ? Again if it does not take तृतीया, how can the rule apply here ? To reply these two rejoinders the anthor says 'दश्यमानस्य मूलकस्य etc—'. The term मूलक takes तृतीया in connection with ( the final and main

[ * 'ततश्चायमर्थः' इत्यारभ्य 'कर्मत्वेनान्वेति' इति यावद्ग्रन्थोऽन्यत्र नोपलभ्यते ]।

verb ).भुजि or भुङ्क्ते ( भोजनक्रिया ) and not with उप-दन्श् (or उपदंश ). Thus the rule applies ( मूलक being in the instrumental ) and णमुल takes place after उप-दन्श्. Well, if मूलक is instrumental in connection with भुजि or eating and not with उपदंशि or biting then by 'समर्थ: पदविधि:' ( 647 ) it ( मूलक ) should be compounded with भुजि alone ( and not with उपदंशि or उप-दन्श्), for unconnected words cannot be compounded, otherwise it will be an असमर्थ or undue Samasa ? To answer this he says—' यद्यपि etc —Although मूलक has no syntactical connection ( शाब्द: सम्बन्ध: ) with उपदंशि ( उप-दन्श् ) yet it, indeed bears a relation of sense ( आर्थ: सम्बन्ध: ) to the same ( उपदंशि ) as it is a कर्म of the root उप-दन्श्. मूलक is thus both a कर्म and a करण. It is a कर्म to उपदन्श by आर्थसम्बन्ध and a करण to भुज् by शाब्दसम्बन्ध. On the strength of this much import or सामर्थ्य the affix ( णमुल् ) as well as the समास will take place as the expression 'तृतीयायाम्' in the rule उपदंश:—' is significant. For had, by तृतीयायाम्, the सूत्रकार intended the application of the affix only when there is a शाब्द सम्बन्ध present between the उपपद and the root taking the affix, then he could have enunciated उपदंश: करणे like 'करणे हन:' so that मूलक would have safely been a करण towards the very root taking णमुल्. But in that case the instance would have been 'मूलकोपदंशं दंशति and not मूलकोपदंशं' भुङ्क्ते etc. Thus it is clear that Panini intends the operation of the rule when there both शाब्द and आर्थ सम्बन्ध are present. Thus the meaning ( to conclude ) is this— we use, at first, at the instance of syntactical connexion,—

मूलकेन भुङ्क्ते he eats with a raddish. How ? By biting. By biting what ? That very thing raddish. Thus मूलक is both a करण ( to भुज् ) and a कर्म ( to उप-दन्श् ).

मित—। उपदंश इति। तृतीयायामिति तदन्तत्वं लाघविकम्। तेन तृतीयान्ते पदे उपपदे इत्यर्थः। अतः प्रभृति पूर्वकाल इति मण्डूकप्लुत्या 'समान-कर्तृकयोः—' ( ३३२० ) इत्यतोनुवर्तते इत्यर्थः। अत्र व्याख्यानमेव कारणम्। तत्त्वायमर्थः—तृतीयान्ते पदे उपपदे उपपूर्वाद् दंशेर्णमुल् स्यात् समानकर्तृकयोः पूर्वकाले इति। अत्र समासो नित्यस्तदितरो ( वैकल्पिको ) वेति सन्देहे मत्वाह— 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति वा समास इत्यनेन तृतीयान्तस्य णमुलन्तेन समास-विकल्प इत्यर्थः। तदेवम् मूलकेन ( मूलकम् उपदश्य ) भुङ्क्ते इति स्थिते समास-विकल्पात् 'मूलकोपदंशम्—मूलकेनोपदंशं' ( वा ) भुङ्क्ते इति भवति। तत्र मूलकस्य उपदंशनं प्रति कर्मत्वात् करणत्वं नोपपद्यते। एकस्य समकालमेव कर्मत्वकरणत्वविरोधात्। करणत्वाभावे पुनस्तृतीयान्तत्वाभावेन उपदंशेर्णमुल् नोत्पद्यते। तदेतद्विषमोपन्यासं वारयितुमाह—दश्यमानस्य मूलकस्येति। भुजेः प्रधानक्रियात्वात् परत्वाच्चेति भावः। भुजिरितीकानिर्देशः। नन्वेवं मूलकस्य भुजिं प्रति करणत्वे 'समर्थः पदविधिः' ( ६४७ ) इत्यनुशासनबलाद् भुजिनैवास्य समासो युज्यते न तु उपदंशिना—असामर्थ्यात्। तदेतदाशङ्क्य समाधत्ते—यद्यपीति। उपदंशिरित्यत्र उप पूर्वस्य दन्शधातोरिका निर्देशः। उपदंशनक्रियेत्यर्थः। यद्यपि मूलकस्य ( इत्यध्याहारः ) उपदंशिना ( उपदंशन-क्रियया ) न शाब्दः ( शब्दगतः ) सम्बन्धः ( अन्वयः ) विद्यत इति शेषः। तथापि आर्थः ( अर्थगतः ) सम्बन्धः अस्त्येव। कुतः—कर्मत्वात्। अयमभिप्रायः— मूलकेनेति तृतीयान्तकरणं शाब्दम्। तृतीयान्त शब्देनैव तादृशाकाङ्क्षा पूर्य-माणत्वात्। द्वितीयान्तभवनं तु आर्थम्। द्वितीयान्त शब्देन तादृशाकाङ्क्षायाः पूर्यमाणत्वाभावात्। अतः मूलकम् उपदश्य एव भुङ्क्ते इत्येवाब अर्थो भवति न तु विग्रहः। तस्य तृतीयान्तेनैव दृष्टत्वात्। तस्माद् द्वितीयान्तत्वं वा कर्मत्वं वा आर्थं भवति। तृतीयान्तत्वं वा करणत्वं वा पुनः शाब्दो भवति—शब्देन तस्योपलम्भात्

तदितरस्य चार्थेनोपलम्भादिति। एवमत्र द्विविधः सम्बन्धः—शाब्द: आर्थश्च। तथापि शाब्दसम्बन्धमादाय समासो भवति। आर्थसम्बन्धं आदाय प्रत्ययो भवति इति न भ्रमितव्यमित्याह—एतावतैव सामर्थ्येन इति। शाब्दसम्बन्धाभावेऽपि आर्थसम्बन्धमात्रेणेत्यर्थः। नन्वेवंभूतं सामर्थ्यमपि कुतः। तत्राह—तृतीयायामिति वचनसामर्थ्यादिति। यदि तृतीयान्तेन शाब्दान्वये सत्येव प्रत्यय इष्येत तदा 'करणे हनः' (२३५८) इतिवत् उपदंशः करणे' इत्येवोच्येत। ततश्च पादेन हन्तीत्यादौ इव मूलकोपदंशं दशतीत्याद्यम् अभविष्यन्न तु मूलकदंशं भुङ्क्ते इति। तस्मादर्थगतमेवान्वयमाश्रित्य अत्र प्रत्ययः समासश्चेति भावः। उक्तमपार्थं पुनरपि विशदीकरणाय उपसंहरति—तत्रायमर्थः इति। इति शाब्दान्वये सतीति शेषः। मूलकेन भुङ्क्ते इत्यन्वयः शाब्दः। भुजेः प्रधानक्रियात्वात् परत्वाच्च। किं कृत्वेति। कथंकारं मूलकेन भुङ्क्ते इत्याकाङ्क्षायाम्—'उपदश्य' इत्यन्वेतीत्यर्थः। तद्वेति। तृतीयान्तं मूलकमेवात्र (आर्थान्वय पक्षे द्वितीयान्तेन विपरिणतं सत् उपदश्य इत्यस्य) कर्मत्वेन अन्वेति सम्बद्धं भवति। ['तत्रायमर्थः' इत्यारभ्य यावदन्तं तत्त्वबोधिन्यां न दृश्यते]।

## २३६८। हिंसार्थानां च समानकर्मकाणाम् ॥ ३।४।५८ ॥

**टी—। तृतीयान्ते उपपदेऽनुप्रयोगधातुना समानकर्मकाद्धिंसार्थात् णमुल् स्यात्। दण्डोपघातं गाः कालयति। दण्डेनोपघातम्। दण्डताडम्। 'समानकर्मकाणाम्' इति किम्? दण्डेन चोरमाहत्य गाः कालयति।**

When a तृतीयान्त word is an उपपद of a root, signifying injury or molestation and taking the same object as is governed by the root (or verb) employed afterwards (अनुप्रयुक्त), it takes the affix णमुल्. Thus दण्डोपघातम् गाः कालयति—conducts the cows by (or after) beating these with a cudgel. Here उप हन् takes णमुल्

because the term गाः is the obj. of both of itself and of कालयति (which is the अनुप्रयुक्त धातु here). The samasa here in दण्डोपघातम् is optional by the rule 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (784) the dissolution being दण्डेन उपहत्य। Hence दण्डेनोपघातम् forms the alternative. For the formation of उपघातम् see ante समूलघातम्। दण्डताडम् or दण्डेन ताडम् (गाः कालयति)। Why say समानकर्मकाणाम्—roots having the equal obj. (with the अनुप्रयुक्त ones)? Witness—दण्डेन चोरमाहत्य—here हन् has a dif. obj; as चोरम् and not the same (गाः) as is governed by कालयति (the अनुप्रयुक्त root). Hence हन् does not take णमुल् but it takes ल्यप्.

भित—। हिंसार्थानां चेति। अत्र चकारेण 'उपदंशः—' इति पूर्वसूत्रात् तृतीयायामित्यनुकृष्यते। तदाह—तृतीयान्ते उपपदे इति। समानकर्मकाणामिति हिंसार्थानां (धातूनाम्) इत्यस्य विशेषणम्। केनापरेण समानकर्मकाणामित्यपेक्षायामाह—अनुप्रयोगधातुनेति। यद्यपि पूर्वसूत्रादनुप्रयोग इति निवृत्तम् तथापि अत्र 'समान—' इत्यनेन तदव्यवहितपूर्ववर्ति सूत्राद् 'यथाविधि—' इत्यस्मादनुप्रयुज्यमान धातुराक्षिप्यत इति द्रष्टव्यम्। 'कषादिषु—' इत्यस्य 'समूलनिमूल—' इत्यतः उत्तरम् उपस्थापनस्य इदमेव प्रयोजनम्। यद्यपि भिम् लसूत्रात् प्रागवस्थानेऽपि मण्डूकप्लुतिन्यायेनानुवर्तेत तथापि सति सम्भवे सन्निहिततरानुकर्षणे विप्रकृष्टानुकर्षणस्यानौचित्याद् मण्डूकप्लुतिन्यायस्य अगतिकगतिकत्वाच्च एवं कृतम्। दण्डोपघातं गाः कालयति दण्डेन उपहत्येति स्थिते उपहन्तेर्णमुल्। कालयतीत्यत्र—काल विक्षेपे इति धातुः। दण्डेन ताडयित्वा गाः प्रेरयतीत्यर्थः। 'तृतीया प्रभृतीन्यन्यतरस्याम्' (७८४) इति समासविकल्पात् पक्षे वाक्यमपीत्याह—दण्डेनोपघातयति। गाः कालयतीति शेषः। हिंसार्थकाद् धात्वन्तरात् णमुलं नियुज्याह—दण्डताडमिति। गाः कालयतीति शेषः। दण्डेन ताडयित्वेति विग्रहः। पक्षे दण्डेन ताडम् इति वाक्यमपि। एवं दण्डमारम् दण्डेनमारम्। हस्तमारम्—हस्तेन मारमित्यादि। अनुप्रयोगधातुना समानकर्मकत्वमिपूदाहरणेषु द्रष्टव्यम्। तथा च कालयतीति अनुप्रयुज्यमानो धातुः। तस्य

च यथा गाः इति कर्म तथा उपह्वरेरपि । ततश्च समानकर्मकादुपह्वरेर्णमुल् । विभिन्नकर्मकत्वे तु नायं प्रवर्तते इति—अत्र अनुप्रयोगधातोः कालयतीत्यस्य गा इति कर्म । आह्वयतेस्तु चोरम् इति परस्परकर्मभेदः । अतएव आह्वन्तेः ल्यप् एव प्रयुज्यते न तु णमुल् ।

२२७० । **सप्तम्यां चोपपीड़रुधकर्षः** ॥ ३।४।४९ ॥

टी—। उपपूर्वेभ्यः पीड़ादिभ्यः सप्तमान्ते चोपपदे णमुल् स्यात् । पार्श्वोपपीड़ं शेते । पार्श्वयोरुपपीड़म् । पार्श्वाभ्यामुपपीड़म् । व्रजोपरोधं गां स्थापयति । व्रजे व्रजेण वोपरोधम् । पाण्युपकर्षं धानाः संगृह्णाति । पाणावुपकर्षम् । पाणिनोपकर्षम् ।

When a word ending in locative or instrumental precede as an उपपद, the roots पीड़रुध् and कर्ष ( कृष् भ्वादि ) preceded by the उपसर्ग—उप take the affix णमुल । Thus पार्श्वोपपीड़ं शेते—he lies on the sides ( lies pressing the sides ). Similarly पार्श्वयोरुपपीड़म् ( शेते ) and पार्श्वाभ्यामुपपीड़ं ( शेते ). These two instances are optional cases (of uncompounded forms) respectively of णमुल् after a सप्तम्यन्त उपपद and after a तृतीयान्तउपपद. This option is affected by the rule 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (784) wherein by 'प्रभृति' सप्तमान्त words are taken in the option. For clear understanding see under the very rule व्रजोपरोधम् व्रजेउपरोधम् व्रजेन उपरोधम् गाः—he keeps the cows in the vicinity of the Vraja or the cowherd locality. पाण्युपकर्षम्—picking up or dragging out by the fingers. There the कृष belongs to the भ्वादि class and not to तुदादि class although तुदादि कृष also means the same thing ( कृषविलेखने ). See also मित—below.

मित—। सप्तम्यां चेति। अव्ययचकारेण 'तृतीयायाम्' इति—'उपदंशः—' (३।४।४७) इत्यतोऽनुकृष्यते। पीडश्च रुधश्च कर्षश्चेति समाहारद्वन्द्वैकवचनम्। पञ्चम्यर्थे प्रथमा। पुंलिङ्गनिर्देशस्त्वार्षः। पीडादीनां शपा निर्देशः। उपेत्यस्य उपपूर्वः पीडरुधकर्षं इति शाकपार्थिवादित्वात्समास इत्याह—उपपूर्वेभ्यः पीडादिभ्य इति। उपेत्युपसर्गस्य प्रत्येकं योगः—उपपूर्वः पीडः, उपपूर्वः रुधः, उपपूर्वः कृषश्चेति। [एवञ्च "मुष्टिपीडम्" इत्यत्र "मुष्टिशब्दे तृतीयान्ते उपपदे 'सप्तम्यां चोपपीड—' इति णमुल्" इति व्याचचाणाः जयमङ्गलो भ्रान्त एव]। तदाह—पार्श्वोपपीडम्—व्रजोपरोधम् पाण्युपकर्षमिति। पार्श्वो-पपीडमित्यत्र पार्श्वयोरुपपीड्य इति सप्तम्यन्तपक्षे विग्रहः। पार्श्वाभ्यामुपपीड्य इति तु तृतीयान्तपक्षे विग्रहीतव्यम्। तथाच 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (७८४) इति समासविकल्पात् पार्श्वयोरुपपीडमिति सप्तम्यन्तेन समासाभावपक्षे रूपम्। पार्श्वाभ्यामुपपीडमिति तु तृतीयान्तेन समासाभावपक्षे इति बोध्यम्। 'तृतीया प्रभृतीनि—' इत्यनेनोपपदसमासो विधीयते। तेनायं विकल्पः सङ्गच्छत इति तत्र (प्रकृत) सूत्रे एव स्पष्टम्। एवमिह समासविकल्पाच्चत्वारः पक्षाः। सप्तमीपक्षे समासविकल्पाद् द्वयम्। तृतीयापक्षे च समासविकल्पाद् द्वयमिति। एवं व्रजोपरोधमित्यादि बोध्यम्। व्रजे व्रजेन वोपरोध इति विग्रहः। व्रजो गोकुलम्। तदभ्यासदेशे गाः स्थापयतीत्यर्थः। पाण्युपकर्षमिति। पाणौ पाणिना वोपकृष्य इति विग्रहः। उपकृष्येति आकृष्य भूतलादुद्धृत्य इति यावत्। कर्षेति 'कृष विलेखने' इति भौवादिकस्य कृतलघूपधगुणस्य निर्देशः। ततश्च तौदादिकस्य कृषधातोर्न ग्रहणम्। यद्यपि तौदादिकोऽपि कृषधातुः 'कृष विलेखने' इत्येव पठ्यते तथापि क्षेत्रविषयक-विलेखने एवायं प्रयुज्यते। पञ्चभिः हलैः कृषतीति दर्शनात्। एवं च तौदादिक कृषेः क्वादिप्रत्यय एव भवति। क्षेत्रे उपकृष्य हलेनोपकृष्य इत्यादि। न त्विह णमुल् इति मनोरमादौ स्थितम्।

२३७१। समासत्तौ ॥ ३।४।५० ॥

दी—। तृतीयासप्तम्योर्धातोर्णमुल् स्यात् सन्निकर्षे गम्य-

मानि । केशग्राहं युध्यन्ते । (युद्धसंरम्भात् *) केशेषु गृहीत्वा । हस्तग्राहम्—हस्तेन गृहीत्वा ।

When a तृतीयान्त or a सप्तम्यन्त word stands as an उपपद or a term of contiguity, any root may take णमुल् provided proximity is implied thereby. Thus केशग्राहं युध्यन्ते—they fight taking hold of one another by the hairs. Here face to face fighting is meant by the term.

मित—। समासत्ताविति । समासत्तिः सन्निकर्षः अव्यवधानेन संयोग इति यावत् । 'उपदंशः—' इत्यत तृतीयायामिति पूर्वसूत्रात् सप्तम्यामिति चानुवर्तते । तदाह—तृतीयासप्तम्योरिति । तृतीयान्ते सप्तम्यन्ते चोपपदे इत्यर्थः । केशग्राहं युध्यन्ते इति । अर्थमाह—युद्धसंरम्भात् केशेषु गृहीत्वेति । युद्धसंरम्भो युद्धजन्यः कोपः । तस्मात्—कोपादित्यर्थः । केशेषु गृहीत्वेति केशैः गृहीत्वेति वा सन्निकर्षार्थ-प्रतिपादनपरमेतत् । तेन केशेषु ग्रहणं भवतु वा न वा युद्धातिशयवशाद् योद्धारः परस्परमत्यन्तं सन्निहिता इत्येवमर्थः । पक्षे केशेष ग्राहम्—केशैर्ग्राहमिति समास विकल्पाद् बोध्यम् । [ * एतदधिकमन्यत्रानुपलब्धेः ] ।

२२७२ । प्रमाणे च ॥ ३।४।५१ ॥

टी—। तृतीयासप्तम्योरित्येव । द्व्यङ्गुलोत्कर्षं खण्डिकां छिनत्ति । द्व्यङ्गुलेन द्व्यङ्गुले वोत्कर्षम् ।

When a तृतीयान्त or a सप्तम्यन्त word precedes as an उपपद, any root may take णमुल्—provided thereby, प्रमाण is implied. Thus द्व्यङ्गुलोत्कर्षम्—' he cuts a small part by measuring it with two fingers i.e cuts a two-finger measuring part. द्व्यङ्गुलेन उत्कर्षम् द्व्यङ्गुले उत्कर्षम् are uncompounded णमुल्ending forms of तृतीया and सप्तमी by 'तृतीया प्रभृतीन्यन्य—'(284). In द्व्यङ्गुलम् the breaking up

being द्वे अङ्गुली प्रमाणमस्य, the समासान्त affix अच् comes in by 'तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः' (786).

मित—। प्रमाणे चेति। प्रागवदनुवृत्तिसदाह—तृतीयासप्तम्योरित्येवेति। तृतीयान्ते सप्तम्यन्ते च शब्दे उपपदे धातोर्णमुल् स्यात् प्रमाणं चेद् गम्यत इत्यर्थः। द्व्यङ्गुलोत्कर्षमिति। द्व्यङ्गुलेन द्व्यङ्गुले वा उत्कृष्य इति विग्रहः। ततः कृषेर्णमुल्। लघूपधत्वाद् गुणः। उत्कर्षेऽत्यस्य परिच्छिद्य इत्यर्थः। खण्डः खण्डः खण्डिकेति मनोरमायां व्याख्यातम्। तेन तुद्रखण्डम् अङ्गुलीद्वयप्रमाणमात्रेण परिच्छिद्य (विभज्य) छिनत्ति इत्यर्थः। द्व्यङ्गुलमित्यत्र द्वे अङ्गुली प्रमाणमस्येति विग्रहः। 'तत्पुरुषस्याङ्गुलेः—' (७८३) इति समासान्तोऽच् प्रत्ययः। 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (७८४) इति समासविकल्पादाह—द्व्यङ्गुलेनेति। द्व्यङ्गुलेन उत्कर्षम् इति द्व्यङ्गुले उत्कर्षमिति चान्वयः।

## २३७१। अपादाने परीप्सायाम् ॥ ३।४।५२ ॥

**दी—। परीप्सा त्वरा। शय्योत्थायं धावति। * एवं नाम त्वरते यदवश्यकर्तव्यमपि नापेक्षते। शय्योत्थानमात्रमपेक्षते।**

If a word ending in the ablative case stands as an उपपद and the sense of परीप्सा or hurry (त्वरा) is implied, any root may take णमुल्। Thus 'शय्योत्थायम्—'he runs the moment he leaps up from bed i.e he hurries so much that he does not take notice of his binding duties even as washing the face etc; so that he waits for rising up only.

मित—। अपादाने इति। तृतीयासप्तम्योरिति निवृत्तम्। परीप्सात्वरेति। रूढिशब्दोऽयमिति भावः। तेन अपादाने उपपदे धातोर्णमुल् स्यात्त्वरायां गम्यमानायामिति सूत्रार्थः। शय्योत्थायं धावतीति। शय्याया उत्थाय इति विग्रहः। किमुताऽत्र

४० [* एवं नामेत्वरित्यारभ्य यावदन्तम् नान्त्रोपलभ्यते]।

त्वरेत्यत आह—एवं नामेति शब्दे न्दुशेखरकारा:। नापेक्षते न गणयतीत्यर्थः। शय्योत्थानमात्रमिति। शय्याया उत्थाय एव धावनात्।

## २२७४। द्वितीयायां च ॥ ३।४।५३ ॥

### टी—। परीप्सायामित्येव। यष्टिग्राहं युध्यते। लोष्टग्राहम्।

If a द्वितीयान्त word also stands as an उपपद a root may take णमुल्, but in the sense of hurry. 'यष्टिग्राहम्—'they fight taking anything handy say—sticks or pebbles. Also यष्टिं ग्राहम् by 'तृतीया प्रभृतीनि—'(784).

मित—। द्वितीयायां चेति। अत्र चकारेण पूर्वसूत्रात् परीप्सायामित्येवानुकृष्यते न तु अपादाने इत्यत आह—परीप्सायामित्येवेति। द्वितीयान्ते उपपदे परीप्सायाञ्च गम्यमानायां धातोर्णमुल् इत्यर्थ:। 'यष्टिग्राहम्—'इति। यष्टिं गृहीत्वेति विग्रह:। एवं नाम त्वरते यद् यष्टिं वा लोष्टं वा यदेव सन्निहितं पश्यन्ति तदेवादाय युध्यन्त इत्यर्थः। पक्षे यष्टिं ग्राहम्। लोष्टंग्राहम् इत्यादापि। समास विकल्पात्। अत्र "परीप्सायाम्" इति तु प्रायिकमिति हरदत्त:। "अनुदात्तंपदमेक-वर्जम्" इति सूत्रकारव्यवहारात्। एवञ्च गोतमीवर्जम्, वधीवर्जम्, रसवर्जम् इत्यादि सुसाध्यातं भवति।

## २२७५। अपगुरो णमुलि ॥ ६।१।५३ ॥

### टी—। 'गुरी उद्यमने' इत्यस्यैचो वा आत् स्याण्णमुलि। अस्यपगारं युध्यन्ते। अस्यपगोरम्।

आत् or आकार is optionally substituted for एच् or ओकार of the root गुर् ( to hold up—तुदादि ) when णमुल् follows. Thus 'अस्यपगोरम्'—they fight holding up swords. 'अस्यपगारम्—'this is due to option of आ of ओकार। Here the root receives गुण by

'पुगन्त—' (2189). Break up (विग्रह) in this case as असिम् अपगूर्य by 'द्वितीयायां च' the preceding rule.

मित—। अपगारो इति। अपपूर्वस्य गुरी इत्यस्य षष्ठ्या एकवचने रूपम्। तौदादिकोऽयं धातुस्तदाह—गुरी उद्यमने इति। 'आदेच:—' (६।१।४५) इत्यात एव आत् इत्यनुवर्तते। 'विभाषा लीयते:' (६।१।५१) इत्यतो विभाषेति च। तदाह—एच आत्त्वं वेति। अस्यपगारमिति। द्वितीयायां चेति असिम् अपगुर्य्येत्येव विग्रह:। असिमुद्यम्येत्यर्थ:। आत्त्वाभावपक्षे लघूपधगुण इत्याह—अस्यपगोरमिति। पक्षे असावपगारम्—असिमपगोरमिति द्रष्टव्यम्।

## २३७६। स्वाङ्गेऽध्रुवे ॥ ३।४।५४ ॥

**टी—। द्वितीयायामित्येव। अध्रुवे स्वाङ्गे द्वितीयान्ते धातोर्णमुल्। भ्रूविक्षेपं कथयति। भ्रुवं विक्षेपम्। अध्रुवे किम्? शिर उत्क्षिप्य। येनाङ्गेन विना न जीवनं तद्ध्रुवम्।**

When an अध्रुव (non-vital) limb (of the speaker) stands, taking द्वितीया, as an उपपद a root takes णमुल्. 'भ्रूविक्षेपम्—' speaks with a frowning, alt—भ्रुवं विक्षेपम्। अध्रुवे किम्=शिर उत्क्षिप्य—the term शिरस् (head) being one of the vital parts, without which one cannot live उत् क्षिप् takes ल्यप् only and not णमुल्, although शिर: is द्वितीयान्त.

मित—। स्वाङ्गे इति। 'द्वितीयायाम्—' (३।४।५३) इत्यतो द्वितीयायामिति मात्रमनुवर्तते न तु परीप्सायामित्यपि। तदाह—द्वितीयायामित्येवेति। अतो व्याचष्टे—अध्रुवे इत्यादि। भ्रूविक्षेपमिति। भ्रुवं विक्षिप्येति विग्रह:। 'तृतीया—' (७७४) इत्यनुसारादाह—भ्रुवं विक्षेपमिति। शिर उत्क्षिप्येति। शिरसोऽध्रुवत्वात् स्वाङ्गत्वेऽपि द्वितीयान्तेऽपि उत्क्षिपेर्णमुल् न। ननु अङ्गेषु किं ध्रुवं किमध्रुवमित्यनुपपत्ति:। तत्राह—येनाङ्गेन विनेति। तेन येनाङ्गेन विनापि जीवनं तद् अध्रुवमित्यर्थाल्लभ्यते। ततो भ्रुवोऽध्रुवत्वात् प्रत्यय:।

२३७७। परिक्लिश्यमाने च ॥ ३।४।५५ ॥

दी—। सर्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्ते णमुल् स्यात्। उरःप्रतिपेषं युध्यन्ते। कृत्स्नमुरः पीडयन्त इत्यर्थः। 'उरोविदारं प्रतिचस्करे नखैः'। ध्रुवार्थमिदम्।

When any vital limb of a person which undergoes trouble or affliction all over precede as a द्वितीयान्त उपपद, then also a root may take णमुल्. Thus उरःप्रतिपेषम्—i.e they fight troubling their breasts all over. 'उरोविदारम्' etc he threw down or pierced through another with his nails after penetrating the oppcnents breast all over—उरस्+वि द+णमुल्. प्रतिचस्करे=प्रति—कृ+कर्मणि लिट् ए—here सुट् comes in by the rule 'हिंसायां प्रतेश्च' (2540) where the Vartika 'अडभ्यासव्यवायेऽपि सुट् कात् पूर्व इति वक्तव्यम्' stated under 'किरतौ लवने' (2539)—takes effect and सुट् is prefixed to क although the अभ्यास चकार intervenes. This rule is to provide for णमुल् when a ध्रुव अङ्ग or vital limb such as उरः etc precede and, therefore it is not superfluous as the previous rule refers to अध्रुव limbs.

मित—। परिक्लिश्यमाने चेति। चकारेण 'द्वितीयायां च' इत्यतो द्वितीयाया-मित्यनुकृष्यते। परिक्लिश्यमानत्वं परितः समन्तात् क्लिश्यमानत्वं पीड्यमानत्वमतो व्याचष्टे—सर्वतो विबाध्यमाने स्वाङ्गे इति। विबाध्यमान इति। विशेषेण बाध्यमान इत्यर्थः। स्वाङ्ग इति पूर्वसूत्रादिति बोध्यम्। उरः प्रतिपेषमिति। परिक्लिश्यमानार्थ-त्वमाविष्करोति—कृत्स्नमुर इति। कृत्स्नमिति सर्वम्। पचे उरःप्रतिपेषम् इति विच्छिद्य पठनीयम्। उरोविदारम्—इति माघकाव्यात् गृहीतमेतत् कृत्स्नमुरो विदार्य्येत्यर्थः। 'अचो ञ्णिति' ( २५४ ) इति वृद्धिः। प्रतिचस्करे नखैरिति। नखैः प्रतिविचिक्षेप इत्यर्थः। प्रतिपक्षमिति शेषः। प्रतिचस्कर इत्यत्र

प्रतिपूर्वात् कृ विक्षेपे इत्यस्मात् कर्मणि लिडेकवचनम्। 'हिंसायां प्रतेश्च' (२५४०) इति सुडागमः। स च 'अडभ्यास व्यवायेऽपि सुट् कात् पूर्व इति वक्तव्यम्' इति वार्तिकात् अभ्यासचकारव्यवधाने सत्यपि ककारात् पूर्व एव प्रयुज्यते। ननु 'स्वाङ्गेऽध्रुवे' (२२७६) इति पूर्वेणैव सिद्धे किमर्थमिदमित्याशङ्का आह—ध्रुवार्थमिदमिति। नहि उरोऽध्रुवम्। किन्तु ध्रुवमेव। तेन विना जीवनासम्भवात्।

२२७८। विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः ॥ ३।४।५६ ॥

दी—। द्वितीयायामित्येव। द्वितीयान्ते उपपदे विशादिभ्यो णमुल् स्यात् व्याप्यमाने आसेव्यमाने चार्थेगम्ये। गेहादिद्रव्याणां विशादिक्रियाभिः साकल्येन संबन्धो व्याप्तिः। क्रियायाः पौनःपुन्यमासेवा। 'नित्यवीप्सयोः' (२१४०) इति द्वित्वं तु न भवति। समासेनैव स्वभावतस्तयोरुक्तत्वात्। यद्यप्याभीक्ष्ण्ये णमुलुक्त एव, तथापि * असति ह्यासेवार्थकणमुलि आभीक्ष्ण्येणमुलः 'तृतीयाप्रभृतीनि—' इत्यत्र संग्रहाभावात् * उपपदसंज्ञार्थमामेवायामिह पुनर्विधिः। गेहानुप्रवेशमास्ते। गेहं गेहमनुप्रवेशम्। गेहमनुप्रवेशमनुप्रवेशम्। एवं गेहानुप्रपातम्। गेहानुप्रपादम्। गेहानुस्कन्दम्। असमासे तु गेहस्य णमुलन्तस्य च पर्यायेण द्वित्वम्।

Here 'द्वितीयाम्' follows from 'द्वितीयायांच—'(3374). Thus when a द्वितीयान्त word stands as an उपपद, the roots विश् पत् पद and स्कन्द take णमुल. The णमुल् is allowed when the sense of व्याप्यमान—being pervaded—and that of आसेव्यमान—recurrence of the verb or action—are implied by such deri-

vatives. व्याप्ति or pervasion is comprehensive connexion of objects like गेह etc (see the illustrations below) with the verbs or actions expressed by विश् etc. आसेवा is frequency or repeated occurence of an action. Thus it is important here to note that व्याप्ति relates to things expressed as objects and that आसेवा relates to verbs e.g. in the example below—गेहानुप्रवेशम् आस्ते—here the breaking up (of विग्रह) of गेहानुप्रवेशम् may be effected in two ways according as णमुल् is to be appointed in the sense of व्याप्यमानत्व or in that of आसेव्यमानत्व; if the affix is sought to be employed in the former implication (व्याप्यमानता—व्याप्ति) the term which is the object here will be doubled—गेहम् गेहम् अनुप्रविश्य implying thereby that the person enter each and every house and not a single house only. If on the other hand, you want to appoint the affix णमुल् in the latter sense (आसेव्यमानता or आसेवा) then the verb अनुप्रविश्य only will be duplicated—गेहम् अनुप्रविश्य अनुप्रविश्य indicating here by that the person enters the house concerned again and again. This sense of pervasion (व्याप्ति) or recurance (आसेवा), present in the dissolution stage (विग्रहावस्था) is expressed, however, by the compound (उपपद Samasa) in गेहानुप्रवेशम्—for a Samasa naturally or rather generally (नित्यसमास etc being excluded) is made in just the same sense as is expressed by the component parts or members, otherwise known as the विग्रहवाक्य or विग्रह etc; the term (णमुल्ending form) गेहानुप्रवेशम्, again, cannot undergo further duplication (द्वित्व) like स्मारं स्मारम् etc by the rule 'नित्यवीप्सयोः' (2140). समासेन etc—. For वीप्सा etc is

said by विग्रहवाक्य। Here 'तयोः' refers to pervasion and frequency as we have explained : Here you may argue as follows—well णमुल् in the sense of pervasion or व्याप्ति not being spoken of before hand, the सूत्रकार may provide for it ( णमुल् ) here in this sense. But how can he deal with the affix in the sense frequency or आसेवा also for he has already done with it under the rule 'आभीक्ष्ण्ये णमुल् च' (3343) where आभीक्ष्ण्ये—is but another name of आसेवा (frequency) ? So replying to this rejoinder the author (Dikshita) taking the side with the सूत्रकार first accepts the rejoinder by saying 'यद्यपि etc.—and then ends the question with तथापि······—पुनर्विधिः'. His idea here when put into English stands thus—Indeed णमुल् has been already dealt with in the sense of आभीक्ष्ण्य (frequency). But yet णमुल् enjoined in the sense of आभीक्ष्ण्य does not fall under "तृतीयाप्रभृतीनि—' (784) which provides for उपपद Samasa ; as the rule आभीक्ष्ण्ये—takes णमुल् and क्त्वा jointly and therefore the prohibition or restriction 'अमैवाव्ययेन' (783) applying you cannot have उपपद Samasa in the sense of आभीक्ष्ण्य णमुल् (or णमुल् taking place in the sense of frequency)'—whereas there must be, at the instance of us a provision for such an उपपद समास ( उपपदसमासार्थम् ) in such a sense (frequency). Hence it is that णमुल् has been, for the second time, provided for in the sense of frequency ( आसेवा ). Thus गेहानुप्रवेशमास्ते etc—this is the instance of विग्रह। गेहं गेहम् अनुप्रवेशम्—here there is no Samasa by 'तृतीयाप्रभृतीनि—'(785) hence गेह has been doubled in the sensa of per vasion ( व्याप्ति ). गेहम् अनुप्रवेशम् अनुप्रवेशम् —

here also there is no Samasa by the same rule 'तृतीयाप्रभृतीनि—' in the sense of frequency ( आसेवा ) which applying to the verb only, the term (i.e. verbal form) अनुप्रवेशम् has been duplicated. Similarly गेहानुपातम् etc—the instances respectively of पत्, पद् and स्कन्द्. In these cases also understand गेहं गेहम् अनुप्रपातम्; गेहम् अनुप्रपातम् अनुप्रपातम् etc. For when there is no samasa ( असमासेतु ) then the term गेहं and the term taking गेहम ( e. g. अनुप्रपादम् etc ) will he doubled here i.e once गेह will be doubled and at other time the णमुल् ending form according as the sense is pervasion ( व्याप्ति ) or frequency ( आसेवा ). To help memory you may get by heart the verse (below) of Bhatti ( 2. 11 ):—

लतानुपातं कुसुमान्यगृह्णात् स नद्यवस्कन्दमुपास्पृशच्च ।
कुतूहलाच्चारुशिलोपवेशम् काकुत्स्थ ईषत् स्मयमान आस्त ॥

This is an exact reflection of the instances of the rule except of पद् only.

मित—। विशिपतिपदिस्कन्दामिति। व्याप्यमानस्य आसेव्यमानस्य इति द्वन्द्वात् सप्तमीद्विवचनम्। अर्थपरमेतन्न तूपपदपरमसम्भवात्। तदाह—व्याप्यमाने आसेव्यमाने चार्थे इति। 'द्वितीयायाम् च' (३।४।५३) इत्यतो द्वितीयायामित्यनुवर्तते। तदाह—द्वितीयायामित्येवेति। तथैव च व्याचष्टे—द्वितीयान्ते उपपदे इत्यादि। विशादयस्त्वत्र 'इक्श्तिपौ—' इतीका निर्दिष्टाः। तेन विश् पत् पदामन्तानामेव ग्रहणं न तु यङन्तानाम्। व्याप्यमानार्थत्वं तावद् व्याप्तिरासेव्यमानार्थत्वं च आसेवा। तेन व्याप्तेरासेवायाश्चार्थमाह—गेहादि द्रव्याणामिति। क्रियाया इति च। तथाच गेहानुप्रवेशम् आस्ते इत्यादौ व्याप्तिपक्षे—गेहं गेहमनुप्रविश्य इत्यर्थः। सर्वाणि गृहाणि अनुप्रविश्येति यावत्। अस्मिन् पक्षे द्रव्यस्य गेहस्य विशिक्रियया साकल्येन सम्बन्धः। अनुप्रवेशस्य सर्वगेहाश्रयत्वात्। अतएव गेहस्यैव द्वित्वमुपपद्यते।

आसेवापक्षे तु गेहम् अनुप्रविश्य अनुप्रविश्य इति गेहम् पुनः पुनरनुप्रविश्य इति वार्थः। अस्मिन् पक्षे क्रियाया अनुप्रवेशस्य पौनःपुन्यम् इति तस्यैव द्वित्वम्। अतएव सर्वं गेहम् अनुप्रविश्य इत्येवम्भूतार्थाभावादेव गेहस्य न द्वित्वम्। असमासदशायां (विग्रहावस्थायाम्) एव 'नित्यवीप्सयो'रिति (२१४०) द्वित्वं विधीयते। समासे विहिते तु न पुनर्नित्यवीप्सयोरिति द्वित्वम् इत्याह—नित्यवीप्सयोरिति। कुत इयं व्यवस्थेत्यत आह—समासेनैवेति। तथा च यदि समासेन विग्रहार्थो नोच्यते तदायमसमर्थसमासो भवेत्। साधारणतो विग्रहार्थे समासेन उक्ते एव हि समासो विधीयते 'समर्थः पदविधि'रित्यनुसारात्। अत्र च समर्थ एव समासः। ततश्चात्र समासेन विग्रहार्थस्य उक्तत्वाद् यस्मिन्नर्थविशेषे (व्याप्तौ आसेवायां वा) समासो विहितस्तदर्थस्य न पुनरुक्तिं सङ्गच्छते इति नित्यवीप्सयोरिति न द्वित्वमित्येति भावः। स्वभावत इति साधारणतः, प्रायेणेति वाऽर्थः। नित्यसमासादौ विग्रहार्थस्यादर्शनादित्यभिप्रायः। तयोरिति व्याप्तेरासेरायाश्चेत्यर्थः। नन्वेवं समासाद्द्वित्वं माऽस्तु अस्तु च विग्रह एव द्वित्वम्। तथापि अत्र 'विश्वि—व्याप्यमाने' त्येवं सूत्रितव्यम्। न तु 'विश्वि—व्याप्यमानासेव्यमानयो'रिति। आसेव्यमानार्थत्वं तावदासेवेत्युक्तम्। आसेवा च पौनःपुन्यमेव। पौनःपुन्यञ्च आभीक्ष्ण्यान्न भिद्यते। विहितश्च आभीक्ष्ण्यार्थे णमुल् 'आभीक्ष्ण्ये णमुल् च' (३३४३) इत्यत्र। न च तत्र चकारेण तत्र क्त्वा अपि सङ्ग्रहीत इति च तन्निवृत्तेरिष्टत्वादासेव्यमानार्थे पुनर्विधिरिति वाच्यम्। अत्रापि पक्षे क्त्वाप्रत्ययस्यापीष्टत्वात्। तस्मादासेव्यमानग्रहणं व्यर्थमिति प्राप्ते आह—यद्यपीति। समाधानमाह—तथापीति। आसेवार्थकणमुलि असति इत्यन्वयः। आसेव्यमानार्थे णमुलोऽर्थः। भावलक्षणासप्तमी। अयमभिप्रायः— सत्यमाभीक्ष्ण्ये णमुल् विहितः। न तु तत्र 'तृतीयाप्रभृतीन्यन्यतरस्याम्' (७८४) इत्युपपदसमासो भवति। अत्र तु 'द्वितीयायाम्' इत्यनुवृत्तेर्द्वितीयान्ते उपपदे इति तदर्थलाभः 'तृतीया प्रभृतीनि—' इति समासो भवत्येव। द्वितीयाद्यन्तमुपपदसंज्ञार्थत्वात्। तस्माद् विश्विपति सूत्रे आसेवार्थे द्वितीयान्तानामुपपदत्वमादाय 'तृतीया प्रभृतीनि—' इति समासो यथा स्यादित्येवमर्थम् आभीक्ष्ण्यार्थकायामासेवायां पुनर्णमुल विधीयते। न च 'आभीक्ष्ण्ये णमुल् च' इत्यत्रापि 'तत्रोपपदं सप्तमीस्थम्'

इत्यनुसारादुपपदसमासो भविष्यतीति वाच्यम्। तत्र सूत्रे द्वितीयान्तस्य सप्तम्या निर्देशाभावात्तदप्रवृत्तेः। तस्मात् 'तृतीयाप्रभृतीनि—' इत्येव समासो विधेयः। स चाभीक्ष्ण्ये णमुलि न प्राप्नोति। तत्र क्त्वाया अपि संग्रहात् 'अमैवाव्ययेन' (७८२) इति नियमस्याप्राप्तेः। तदेव सिद्धमासेवायामिह णमुल् ग्रहणं कर्तव्यमिति। गेहानुप्रवेशमास्ते इति। अर्थः प्रागेव विशदीकृतः। अत्र तृतीयेति समासविकल्पादाह—गेहं गेहमनुप्रवेशमिति। असमासत्वाद् व्याप्तिपक्षे इदमुदाहरणम्। तेन गेहपदस्यैव द्वित्वम्। आसेवायामुदाहरति—गेहमनुप्रविश्य अनुप्रविश्येति। आसेवा क्रियानिष्ठा पौनःपुन्यम्। तेन क्रियावाचकस्य अनुप्रवेशशब्दस्यैव द्वित्वम्। एवं गेहानुपातमित्यादि। एष्वपि उदाहरणेषु असमासपक्षे यथापूर्वं गेहं गेहमनुप्रपातम्। गेहमनुप्रपातम् अनुप्रपातम् इत्येव प्रतिस्विकं बोध्यम्। पूर्ववदेवाह—असमासे त्विति। व्याप्तिपक्षे गेहस्य आसेवापक्षे णमुलन्तस्येत्येवमत्र पर्यायः क्रमो विवक्षितः। गेहानुस्कन्दमित्यत्र 'स्कन्दिर् गतिशोषणयोः' इति भौवादिको धातुः परस्मैपदी। एतत् सूत्रस्य सुखेन मनसि धारणार्थं 'लतानुपातं कुसुमान्यगृह्णात्' इत्याद्याङ्ग्ल व्याख्यायामुदाहृतो भट्टिस्थः श्लोकः द्रष्टव्यः।

**२३७८। अस्यतितृषोः क्रियान्तरे कालेषु ॥ ३।४।५७ ॥**

**दी—। क्रियामन्तरयति व्यवधत्त इति क्रियान्तरः। तस्मिन् धात्वर्थे वर्तमानादस्यतेस्तृष्यतेश्च कालवाचिषु द्वितीयान्तेषूपपदेषु णमुल् स्यात्। द्व्यहात्यासं गाः पाययति। द्व्यहमत्यासम्। द्व्यहतर्षम्। द्व्यहं तर्षम्। अत्यसनेन तर्षणेन च गवां पानक्रिया व्यवधीयते। अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थः।**

The term क्रियान्तर in the rule means that which intervenes the action (and not another action by अन्याक्रिया = क्रियान्तरम्.) Thus (the rule means)—when this sort of sense is expressed

by अस्यति (the root अस् दिवादि) and तृष्यति (the root ञितृषा दिवादि), they may take णमुल् if a द्वितीयान्त उपपद expressing time precedes such roots. Thus 'द्व्यहात्यासम—'He causes the cows to drink (water) again after causing them to drink it today and ceasing to do so for two days i.e he causes the cows to drink water today, stops to do so for two days and then again lets them have water. Here by अत्यसन the act of drinking water on the part of the cows is being postponed (for द्व्यहम्—two days). Thus द्व्यहात्यसम—अति अस् takes णमुल् and the कालवाचक word द्व्यह preceding it. द्व्यह is formed with समासान्त टच attached by 'रजाहः सखिभ्यः—' (788) in the sense of द्वयोरह्नोः समाहारः (द्व्यहः) where अह्नादेश is barred by 'न संख्यादेः समाहारे' (793). The term is masculine by 'रात्राह्नाहाः पुंसि' (814). द्व्यहम् अत्यासम्—alt. by 'तृतीयाप्रभृतीनि—' (781). द्व्यहतर्षम—He causes them (the cows) have water this day, stops doing so for two days (in which he causes them to long for it) and then again causes them to drink it. Here by तर्षण or making to long for water (i.e without allowing it) the act of drinking is being barred or intervend. द्व्यहं तर्षम as before.

मित—। अस्यति तृष्योरिति। क्रियान्तर इत्यत्र अन्या क्रिया क्रियान्तरमिति नार्थः। तादृशक्रियाया अत्रानुपलब्धेः। न चानुप्रयोगधातुरनेन विवक्षितः। तस्यैतादृशवचनाभावेऽपि प्रयोगादतो व्याचष्टे—क्रियामन्तरयति व्यवधत्ते इति क्रियान्तर इति। क्रियाव्यवधायक इत्यर्थः। बाहुलकात् कर्मण्यच्। अत्र क्रियाया अन्तर क्रियान्तर इत्यपि न विग्रहीतव्यम्। क्रियाव्यवधायकार्थस्यैवात्र इष्टत्वात् क्रिया-व्यवधानार्थकनिमित्तषष्ठीसमासानामप्रयोजनात्। अत्र अस्यतितृषी दिवादी। तृष्

इति ञितृषा पिपासायाम् इति धातुः। तस्मिन् धात्वर्थे इति। क्रियान्तरे (क्रिया-व्यवधायके) धात्वर्थे क्रियाव्यवधायिकत्वं चेद् धातोरर्थों भवतीत्यर्थः। कालेषु इत्यस्य विवरणं कालवाचिषु इति। तच्चोपपदविशेषणम् इत्याह—कालवाचिषु द्वितीयान्तेषु उपपदेषु इति। अत्र 'द्वितीयायाम्—' (३।४।५३) इत्यतो द्वितीयायामित्यस्यानुवृत्तेरिदम्। द्व्यहात्यासम् इति। कालवाचिद्व्यहोपपदपूर्वात् अति पूर्वादस्यतेः द्व्यहम् अत्यस्य (अतिक्रम्य) इति विग्रहे णमुल्। 'अत उपधायाः' (२२८२) इति वृद्धिः। 'तृतीया प्रभृतीनि—' (७८४) इति समासाभावपक्षे आह—द्व्यहमत्यासमिति। द्व्यहोपपदात्तर्षतेराह—द्व्यहतर्षम्—द्व्यहं तर्षम् इति। द्व्यहं तर्षयित्वा इति विग्रहः। अत्रापि गाः पाययतीति शेषः। नन्वत्र अत्यसनस्य तर्षणस्य च कथं कृत्वा (सूत्रे) क्रियाव्यवधायकत्वमित्याशङ्का आह—अत्यसनेन तर्षणेन वेति। तदेव विवृणोति—अद्य पाययित्वेति। द्व्यहमतिक्रम्येति। द्व्यहं (व्याप्य) पानमकारयित्वेत्यर्थः। अन्यथा 'पुन'रित्यस्यानुपपत्तेः। तथाच प्रति तृतीयदिवसे पाययतीत्यर्थः। एवम् द्व्यहतर्षमित्यत्रापि अद्य पाययित्वा द्व्यहमतिक्रम्य पुनः पाययतीत्यर्थो बोध्यः। तत्रापि द्व्यहं तर्षयित्वा तृष्णावतीः कृत्वेति 'अतिक्रम्य' पदस्यार्थः। तेनात्राप्युदाहरणे प्रतितृतीयदिने एव गवां पानमिति बोध्यम्। अस्यतितृषोः किम्? द्व्यहमुपोष्य भुङ्क्ते। क्रियान्तरे किम्? अहरत्यस्य इषुणा गतम्। नात्र गतिर्व्यवधीयते। कालेषु किम्? योजनमत्यस्य गाः पाययति इति नागेशः।

३३८०। नाम्न्यादिशिग्रहोः ॥ ३।४।५८ ॥

टी—। द्वितीयायमित्येव। नामादेशमाचष्टे। नामग्राह-माह्वयति।

When the word नामन् stands taking द्वितीया, as an उपपद, the roots आ दिश् and ग्रह take णमुल्। Thus "नामादेशम्—' speaks calling the name and 'नामग्राहम्—'calls by the name.

मित—। नाम्नीत। नाम्नि + आदिश ग्रहोरित्यवग्रहः। 'द्वितीयायाम्—'

(३।४।५३) इत्यतो द्वितीयायामित्यस्यानुवृत्तेः—द्वितीयान्ते नामशब्दे उपपदे आङ्-पूर्वाद् दिशेः ग्रहेश्च णमुल्। नामादेशमिति। नाम आदिश्येति नाम गृहीत्वेति च यथाक्रमं विग्रहः। पचे नाम आदेशम् इति। नाम ग्राहमिति च।

३३८१। अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ ॥ ३।४।५९ ॥

टी—। अयथाभिप्रेताख्यानं नाम अप्रियस्योच्चैः प्रियस्य च नीचैः कथनम्। उच्चैःकृत्य—उच्चैःकृत्वा उच्चैःकारमप्रिय-माचष्टे। नीचैः कृत्य—नीचैःकृत्वा नीचैः कारम् प्रियंब्रूते।

The term अयथाभिप्रेताख्यानम् in the rule means loud utterance of what is not loved or unpleasing and low utterance of what is loved or pleasing i.e non-utterance of what is intended. Thus when this sense is implied and an indeclinable leads as an उपपद the root कृञ् may take क्त्वा as well as णमुल्. Thus उच्चैः कृत्य etc; when by 'तृतीयाप्रभृतीनि—'(784) Samasa is effected then ल्यप् comes in by 'समासेऽनञ्पूर्वे क्त्वो ल्यप' (3332) otherwise क्त्वा. णमुलending forms are the same though the samasa is effected or not the only difference being in accentuation ( स्वरे भेदः ).

मित—। अव्ययेऽयथेति। अभिप्रेतस्य इष्टस्य व्याख्यानं कथनम् अभि-प्रेताख्यानम्। अभिप्रेताख्यानमनतिक्रम्य—यथाभिप्रेताख्यानम्। न तथा अयथाभिप्रेताख्यानम्। यथा अभिप्रेयते तथैव कथनं नेत्यर्थः। तच्च अप्रियस्य उच्चैःकथने प्रियस्य च नीचैः कथने सम्भवति। ततो व्याचष्टे—अयथाभिप्रेताख्यानं नामेति। तेन एवम्भूतकथने गम्ये अव्यये चोपपदे करोतेः क्त्वा णमुल् च स इत्यर्थः। अत्र द्वितीयायामिति नानुवर्तनीयम्। अव्ययाधिकारे तस्य प्रयोजना-

भावात्। उच्चैः कृत्येत्यादि। 'तृतीयाप्रभृतीनि—' (७८४) इति समासे कृते 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' (३३३२) इति करोतेः क्त्वो ल्यबादेशः। समासेऽकृते च क्त्वा। णमुलपक्षे समासे कृतेऽकृते वा नास्ति विशेषः (केवलः स्वरभेदः)। तदाह—उच्चैः कारं नीचैः कारमित्येव।

३३८२। तिर्यच्यपवर्गे ॥३।४।६०॥

टी—। * तिर्यक्शब्दे (तिर्यच्छब्दे ?) उपपदे कृञः क्त्वा-णमुलौ स्तः समासो गम्यायाम्। तिर्यक्कृत्य गतः। तिर्यक्-कारम्। समाप्य गत इत्यर्थः। 'अपवर्गे' किम् ? तिर्यक्कृत्वा काष्ठं गतः।

When the indeclinable तिर्यच् stands as an उपपद the root कृञ takes क्त्वा aswell as णमुल् provided the derivative signifies completion. Thus तिर्यक्कृत्य and तिर्यक्कारम (completing); alt— तिर्यक्कृत्वा. तिर्यक्कृत्वा काष्ठं गतः—went throwing aside the wood; here क्त्वा only but no णमुल्; for there is no sense of completion.

मित—। तिर्यचीति। तिर्यच् इति शब्दस्य सप्तम्यां 'तिरश्चि' इत्येव पदम्। तेन तिर्यच् इत्यत्र अव्ययम्। अतएव 'तिरश्चि' इति भवितव्ये सौत्रो निर्देशः। अनव्ययत्वे तिरश्चीत्येव ब्रूयादिति तदर्थः। अपवर्गः फलप्राप्तिरिति 'अपवर्गे तृतीया' इत्यत्र व्याख्यातम्। इह तु तस्य समाप्तिरर्थः व्याख्यानात्। 'भवापवर्गो भ्रमतो यदा भवेद्—' (श्रीमद्भागवतम्) इत्यादौ दर्शनाच्चेति। तिर्यक्कृत्य तिर्यक्कारम् इति। समासपक्षे इदम्। तदभावे तिर्यक् कृत्वा तिर्यक् कारमिति। समाप्येति। तिर्यक्कृत्य तिर्यक्कारमिति समुदायस्यैव समाप्तिरर्थ इति नागेशः। तिर्यक् कृत्वा काष्ठमिति—अग्रतः स्थितं काष्ठं पार्श्वतः कृत्वा गत इति तत्त्वबोधिनी। अत्र क्त्वा एव न तदादेशो ल्यप् न वा णमुल्। समाप्त्यर्थाभावात्।

[* तिर्यक्शब्दे इति तत्त्वबोधिन्यां पाठः।]

३३८३। स्वाङ्गे तस्प्रत्यये कृभ्वोः ॥३।४।६१॥

टी—। मुखतःकृत्य गतः। मुखतः कृत्वा। मुखत कारम्। मुखतोभूय। मुखतो भूत्वा। मुखतो भावम्।

If a word signifying one's own limb precede as an उपपद after it has been affixed with तस् then the roots कृ and भू take क्त्वा as well as णमुल्. Thus मुखतः कृत्य मुखतः कृत्वा—मुखतः कारम् मुखतः कारम् (गतः)—went facing some thing. Similarly मुखतोभूय etc. Apply 'तृतीयाप्रभृतीनि—'(784).

मित—। स्वाङ्गे इति। तस् चासौ प्रत्ययश्चेति तस्प्रत्ययः। तस्मिन्नित्यर्थः। तदन्तविधिपरिभाषया ('येन विधिस्तदन्तस्य' इत्यनया) तस्प्रत्ययान्ते इत्यर्थः। स चैवं स्वाङ्गे इत्यस्य विशेषणम्। यद्वा तस्प्रत्ययो यस्मादिति विग्रहः। एवमपि तस्प्रत्ययान्ते स्वाङ्गे इत्यर्थः। तस्प्रत्यये परतो यत् स्वाङ्गं तस्मिन्नुपपदे इति प्राचां व्याख्यानं तु न सुष्ठु प्रतिपत्तिकरम्। तदयं सूत्रार्थः—तस्प्रत्ययान्ते स्वाङ्गे उपपदे करोतेर्भवतेश्च क्त्वाणमुलौ स्तः इति। कृभ्वोरिति पञ्चम्यर्थे षष्ठीद्विवचनम्। मुखतः कृत्येति। समासेऽनञ्पूर्वे—' इति क्त्वो ल्यप। पक्षे मुखतः कृत्वेति। 'तृतीयाप्रभृतीनि—' (७८४) इत्यसमासः। कमपि देशमभिमुखीकृत्य भवति इत्यर्थः। मुखतोभूय = ल्यप्। मुखतोभावम् = णमुल्।

३३८४। नाधार्थप्रत्यये च्व्यर्थे ॥३।४।६२॥

टी—। नाधार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे कृभ्वोः क्त्वाणमुलौ स्तः। अनाना नाना कृत्वा नानाकृत्य—नाना कृत्वा—नानाकारम्। विनाकृत्य—विना कृत्वा—विनाकारम्। नानाभूय—नानाभूत्वा—नानाभावम्। अनेकं द्रव्यमेकं भूत्वा एकधाभूय—एकधा भूत्वा—एकधाभावम्। एकधाकृत्य—

एकधा कृत्वा—एकधाकारम् । 'प्रत्ययग्रहणं' किम् ? हिरुक्-कृत्वा । पृथग्भूत्वा ।

When ना प्रत्ययान्त (word affixed with 'ना') and धार्थं प्रत्ययान्त (word affixed with धा प्रत्यय implying the sense of धा or धमुञ्) word stand as उपपद्s in the sense of च्वि or अभूततद्भाव, the roots कृ and भू take क्त्वा as well as णमुल्. Thus अनाना नाना कृत्वा नानाकृत्य etc. substituting something for nothing or separating that which was not separate (see below). Also ल्यप् for क्त्वा comes in by 'समासेऽनञ्पूर्वे—' (3332) as the समास is optionally effected by 'तृतीयाप्रभृतीनि—' (786). alt. नाना कृत्वा in the same sense (च्व्यर्थ). Similarly नानाकारम्—नाना कारम् takes णमुल् । विनाकृत्य etc—वि is affixed with ना and नाञ् or न (in the preceding instance) is affixed with नाञ् in the sense of separation (नसह) by the rule "विनञ्भ्यां नानाञौ नसह" (1828). नानाभूय etc., similarly विनाभूय etc., for here no respective order of the उपपद्s and the roots or affixes is intended. एकधाभूय etc.—एक takes धा by 'संख्याया विधार्थे धा' (1288). Similarly द्विधाकृत्य—द्विधाकृत्वा—द्विधाकारम् । त्रिधाकृत्य त्रिधाभूय, द्विधाभूय etc., हिरुक कृत्वा—पृथक् कृत्वा both mean the same thing viz. separating; cp.—'पृथग्विनान्तरेणर्ते हिरुङ् नाना च वर्जने'—Amara. Here (in the last two instances) there is sense of ना or धा but not such affixes. Hence ल्यप् etc., as before do not apply.

मित—। नाधार्थप्रत्यय इति । ना च धा च नाधौ प्रत्ययौ । तयोरर्थः नाधार्थः । नाधार्थः (नाधार्थकः) प्रत्यय इति कर्मधारयः । ततो 'येन विधिः—' इति तदन्तपरिभाषया नाधार्थप्रत्ययान्ते इत्यर्थस्तदाह—नाधार्थप्रत्ययान्ते इति। नार्थप्रत्ययान्ते धार्थप्रत्ययान्ते चेत्यर्थः । 'इन्द्वान्ते श्रूयमाणः शब्दः प्रत्येकमभिसम्बध्यते'

इत्यर्थीर्थशब्दस्य प्रत्येकं योगः। इह 'धार्थे' धाप्रत्ययस्य अर्थः इव अर्थो यस्य सः धार्थः। नाप्रत्ययो धार्थकश्च प्रत्ययो यस्मादिति बहुव्रीहिरिति केचित्। तन्न। बहुव्रीह्यर्थग्रहणे मूलोक्तार्थायग्रहणपुरःसरव्याख्यानायोगादिति नोपादेयमेतद् व्याख्यानमिति दिक्। सूत्रे च्व्यर्थे इति विषयसप्तमी। तदाह—च्व्यर्थविषये इति। अभूततद्भावे इत्यर्थः। च्व्यर्थं विषयत्वं प्रदर्श्य उदाहरति—अनाना नाना कृत्वेति। प्राग्वत् 'तृतीया प्रभृतीनि—' (७७४) इति समासपक्षे 'समासेऽनञ्पूर्वे—' (३३३१) इति क्त्वो ल्यबादेशः। तदभावे क्त्वा। क्त्वाभावपक्षे णमुल्। तथापि उदाहरणत्रय-सम्भवेऽपि केवलं स्वरे भेदान्नोभयमुदाहृतम्। किन्तु एकमेव। एवं विनाकृत्वाविना कृत्येत्यादावपि अनेन क्रमेण चत्वारि रूपाणि बोध्यानि। नानाकृत्य विनाकृत्य इत्यादौ वर्जयित्वेत्यर्थः। प्रत्ययस्य ना इत्यस्य 'वि' इत्यस्माद् 'नञ्' इत्यस्य असहार्थे पृथग्भावे विहितत्वात्। तथा च सूत्रम् 'विनञ्भ्यां नानाञौ नसह' (१८२८) इति। अत्र वि इत्यस्माद् ना, नञ् (न) इत्यस्माद् नाञ् (ञित्) प्रत्ययः। प्रत्ययस्य ञित्वाद् 'अचो ञ्णिति' (२५४) इति न इत्यस्य वृद्धिः। एवं नार्थप्रत्यये करोते रूपं प्रदर्श्य भवतेराह—नानाभूयेत्यादि (ल्यप्)। एवं विना भूयेत्याद्यपि उदाहार्यम्। एवञ्च यथासंख्यं नेष्यत इति विभावनीयम्। एवं नार्थप्रत्यये उभयोरुदाहरणानि प्रदर्श्य धार्थप्रत्यये आह—अनेकं द्रव्यमेकं भूत्वा एकधा भूयेत्यादि। एष्वपि सर्वेषु प्रागवत् चत्वारि उदाहरणानि इति बोध्यम्। धाप्रत्ययस्तावत् 'संख्याया विधार्थे धा' (१९८८) इत्यनेन विहितः। एवं द्विधाकृत्य—द्विधाभूय त्रिधाकृत्य—त्रिधाभूय इत्याद्युदाहरणीयम्। धार्थे इत्युक्तत्वाद् 'एकाद्धो ध्यमुञन्यतरस्याम्' इति (१९९०) ध्यमुञोऽपि संग्रहात् पक्षे ऐकध्यं कृत्य ऐकध्यं कृत्वा इत्यादयो बोध्याः। तथा 'द्वित्र्योश्च धमुञ्' (१९९१) इति धार्थके धमुञ् पक्षे द्वैधंकृत्य द्वैधं कृत्वा द्वैधं कारम् द्वैधं भूय द्वैधंभूत्वा इत्यादि ज्ञेयम्। सूत्रे प्रत्ययग्रहणप्रयोजनं दर्शयितुं पृच्छति—प्रत्ययग्रहणं किमिति। समाधानमाह—हिरुक् कृत्वा पृथग्भूत्वेति। प्रत्ययग्रहणादेवम्विध-स्थलेषु नार्थक धार्थक प्रत्ययाभावात् क्त्वा एव णमुल् तु नेति बोध्यम्। केवलम् अर्थ-साम्यादनयोः प्रत्युदाहरणत्वं द्रष्टव्यम्। तथा चामरः—'पृथग्विनाऽन्तरेणर्ते हिरुङ् नाना च वर्जने'।

२३८५ । तूष्णीमि भुवः ॥३।४।६३॥

दी—। तूष्णींशब्दे उपपदे भुवः क्त्वाणमुलौ स्तः । तूष्णींभूय तूष्णीं भूत्वा तूष्णींभावम् । भूग्रहणं कृञो निवृत्त्यर्थम् ।

When तूष्णीम् ( the indeclinable ) leads भू ( only and not कृ also ) takes णमुल् and क्त्वा । कृ is not to follow from the acceptance of भू here. तूष्णींभूय etc., keeping silent.

मित—। तूष्णीमीति । व्याख्यातम् । ननु सूत्रे 'भुवः' इति भूग्रहणं व्यर्थम् । तूष्णीमि इत्येव सूत्रितव्यम् । 'कृभ्वोः' ( २३८२ ) इत्यतोऽनुवृत्त्यैव सिद्धेरिति चेन्नैवम् । तथा सति कृभ्वोरुभयोरपि ग्रहणं विज्ञायेत । तस्माद् भुवएव प्रत्ययौ यथा स्यातामिति यथान्यासमेव रमणीयमित्याह—भूग्रहणं कृञो निवृत्त्यर्थमिति । उत्तरार्थं चैतदित्यपि द्रष्टव्यम् ।

२३८६ । अन्वच्यानुलोम्ये ॥३।४।६४॥

दी—। *अन्वक्शब्दे ( अन्वच्छब्दे ) उपपदे भुवः क्त्वाणमुलौ स्त आनुकूल्ये गम्यमाने । अन्वग्भूय आस्ते । अन्वग्भूत्वा—अन्वग्भावम् । अग्रतः पार्श्वतः पृष्ठतो वा अनुकूलो भूत्वा आस्त इत्यर्थः । 'आनुलोम्ये' किम् ? अन्वग्भूत्वा तिष्ठति । पृष्ठतो भूत्वेत्यर्थः ।

इति सिद्धान्तकौमुद्यामुत्तरकृदन्तप्रकरणम् ॥

इत्थं लौकिकशब्दानां दिङ्मात्रमिह दर्शितम् ।
विस्तरस्तु यथाशास्त्रं दर्शितः शब्दकौस्तुभे ॥
भट्टोजिदीक्षितकृतिः सैषा सिद्धान्तकौमुदी ।
प्रीत्यै भूयाद् भगवतोर्भवानीविश्वनाथयोः ॥

इति श्रीभट्टोजिदीक्षितविरचितायां सिद्धान्तकौमुद्यामुत्तरार्द्धं समाप्तम् ॥

When the word ( indeclinable ) अन्वच stands as an उपपद the root भू takes both क्त्वा and णमुल् provided favourableness is implied by the whole (or the derivative). Thus अन्वग्भूय आस्ते = remains favourable whether before, behind or by side. Here क्त्वा has been replaced by ल्यप्. अन्वग्भूत्वा—अन्वग्भावम् as before. अन्वग्भूत्वा तिष्ठति—Remains behind. Here there being no sense of favourableness ( आनुलोम्य ) क्त्वा only takes place and not णमुल्.

Here ends the subsequent ( latter half of ) कृदन्त section of the Siddhanta Kaummudi. Thus we have ( in this treatise ) shown the synopsis or compendium of words used in classical language ; a further comprehensive treatment, however, has been attempted, in conformity with the ( actual order and implication of the ) rules, in ( my work named ) Shabdakaustubha or the Kaustubha-like gem of words.

Let this Siddhantakaumudi or the moonlight of ( grammatical ) solutions, composed by Bhattoji Dikshita be ( dedicated ) to the delight of the venerable Bhavani and Viswanatha ( i.e. Shiva ).

मित—। अन्वचीति। 'अनूचि' इति वक्तव्ये अव्ययत्वद्योतनार्थं तथोक्तिः बोध्या, 'तिर्यच्यपवर्गे' ( ३३५२ ) इतिवत्। पूर्वसूत्राद् भुव इत्यनुवर्तते। तदाह—भुव इति। 'अव्यये—' ( ३३८१ ) इत्यतः क्त्वाणमुलौ। आनुलोम्ये इत्यस्य विवरणम्—आनुकूल्ये गम्यमाने इति। आनुकूल्यं परचित्तानुसरणमिति शब्देन्दुशेखरकाराः। अन्वग् भूयेत्यादि। प्राग्वत् क्त्वो ल्यप्, क्त्वा णमुल् च बोध्याः। अन्वग् भूयेत्यादेरर्थमाह—अग्रत इत्यादि। यथेच्छमासनं भवेत् किन्त्वानुकूलीकरणमेव प्रयोजनमिति बोध्यम्। अन्वग् भूत्वेति। अत्र आनुलोम्यार्थाभावाण्णमुल् न किन्तु क्त्वा एव। इत्युत्तरकृदन्तप्रकरणम्। अनेन प्रकरणेन लौकिकशब्दानाम्

अवैदिकानामिति यावत् दिङ्मात्रं संक्षेपमात्रमित्र अस्मिन् ग्रन्थे दर्शितम् अस्माभिरिति शेषः। शब्दकौस्तुभे तु तदाख्ये कौस्तुभमणिसमे मदीयपाणिनिशास्त्रव्याख्यानग्रन्थान्तरे [ बहुपरिश्रमसाध्यत्वाद् मूल्यवत्त्वाच्च कौस्तुभसादृश्यम् ] विस्तरः प्रपञ्चः यथाशास्त्रं, शास्त्रम् अष्टाध्यायीम् अनतिक्रम्येत्यर्थः ( तेन तत्क्रमतो निगूढार्थं तस्य व्याख्यानं गम्यते। एतेन स्वकपोलकल्पितव्याख्यानस्यापि विरामः ) दर्शितः अस्माभिरिति शेषः।

दर्शित इत्युक्तेः शब्दकौस्तुभः प्राङ् निबद्ध इति न प्रतिपत्तव्यम्। तस्य निबन्धस्य समाप्तेः प्रागेव ग्रन्थकर्तुस्तिरोधानात्। तेन दर्शयिष्यत इत्येवार्थे क्तो बोध्यः।

इति मितभाषिण्यां सिद्धान्तकौमुद्या उत्तरार्द्धम्।

---

# अथ वैदिकप्रकरणम्

## प्रथमोऽध्यायः

[ अथ शब्दोऽत्र आरम्भे मङ्गलार्थे वा प्रयुक्तः। तथाचोक्तं "ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकावुभौ" ॥

**३३८७। छन्दसि पुनर्वस्वोरेकवचनम् ॥१।२।६१॥**

**टी—। द्वयोरेकवचनं वा स्यात्। पुनर्वसु नक्षत्रं पुनर्वसू वा। लोके तु द्विवचनमेव ( स्यात् ? )॥**

In Vedic literature, the dual word पुनर्वसू ( denoting two constellations ) optionally takes the singular number, e.g., पुनर्वसु नक्षत्रम्। But in classical language ( लोके ), the word is always used in the dual.

मित—। अत्र सूत्रे 'अन्यतरस्याम्' इत्यनुवर्तते। अत आह—"द्वयोः एकवचनं वा स्यात्"। 'पुनर्वसु' इति द्वयोः नक्षत्रयोरेकत्वग्रहणात् द्विवचने प्राप्ते 'छन्दसि' विकल्पो विधीयते। "नक्षत्रे" इत्येव—पुनर्वसू माणवकौ। छन्दसि इति किम्? पुनर्वसू इति लोके।

२३८८। विशाखयोश्च ॥१।२।६२॥

दो। प्राग्वत्। विशाखा नक्षत्रम्। विशाखे (? वा)।

In the Vedas the word विशाखा too denoting two constellations optionally take the dual number.

मित—। 'छन्दसि' इत्यस्त्येव। विशाखा इति द्वयोर्नाम। अतः द्विवचने प्राप्ते छन्दसि विषये विकल्पेन एकवचनमपि विधीयते। अतः आहः—"विशाखे नक्षत्रम्। विशाखा वा नक्षत्रम्"।

२३८९। षष्ठीयुक्तश्छन्दसि वा ॥१।४।९॥

दो—। षष्ठ्यन्तेन युक्तः पतिशब्दः छन्दसि घिसंज्ञो वा स्यात्। क्षेत्रस्य पतिना वयम्॥ इह "वा" इति योगं विभज्य 'छन्दसि' इत्यनुवर्तते। तेन सर्वे विधयः छन्दसि वैकल्पिकाः। "बहुलं छन्दसि" इत्यादिरस्यैव प्रपञ्चः।

The base पति being united with a षष्ठ्यन्त word optionally becomes घिसंज्ञक in case of असमास as well (see the rules "शेषो घ्यसखि" and "पतिः समास एव") in the vedic literature, e.g., क्षेत्रस्य पतिना etc. Here the word "वा" is separated from the rule and is taken as a separate योग, and then 'छन्दसि' comes down here also from the original rule. Then we get "छन्दसिवा" i.e., all rules are optional in the case of the vedas; and injunctions like "बहुलं छन्दसि" are mere elaborations of this.

मित—। 'पतिः' इत्यनुवर्त्तते। पूर्वसूत्रेण असमासे पतिशब्दस्य घिसंज्ञा न प्राप्नोति इति अयमारभ्यते—"षष्ठ्यन्तयुक्तः पति शब्दः" इत्यादि। "वा" इत्यंशस्य योगविभागं कृत्वा, तत्तत्र सूत्रात् "छन्दसि" इत्यनुवर्त्त्य—"वा छन्दसि" इति सूत्र-शरीरं लभ्यते। तस्य अर्थो यथा—'सर्वेविधयः छन्दसि विकल्प्यन्ते'। एवञ्च "बहुलं छन्दसि" इत्यादीनि सूत्राणि अस्यैव प्रपञ्चः इति फलितार्थः॥

टी—। "यचिभम्"। नभोङ्गिरोमनुषां वेतुपसंख्यानम्" (वा)—नभसातुल्यं नभस्वत्। भत्वात् रुत्वाभावः। अङ्गिरस्व-दङ्गिरः। मनुष्वदग्ने। जनेरुसीति विहित उसिप्रत्ययो मनेरपि बाहुलकात्॥

"वृषण्वस्वश्वयोः" (वा)। वृषन् वर्षकं वसु यस्य स वृषण्वसुः। वृषा अश्वो यस्यासौ वृषणश्वः। इहान्तर्वर्त्तिनीं विभक्तिमाश्रित्य पदत्वे सति नलोपः प्राप्तः, भत्वाद्वार्य्यते। अतएव 'पदान्तस्य' इति णत्वनिषेधोऽपि न। "अल्लोपोऽनः" इति तु न, अनङ्गत्वात्।

Here follows भाधिकार (jurisdiction of "भ") by the rule "यचिभम्" (see ante). Then the words नभस् अङ्गिरस् and मनुस् are optionally treated as भ; thus we get नभस्वत् (without रुत्व in Sandhi by the rule "ससजुषोरुः", for नभस् is treated as a "भ" and not as पदान्त), अङ्गिरस्वत् and मनुष्वत्। मनुष् is got as मन+उसि—the affix उसि coming after the root irregularly on the analogy of उसि after जन established by the unadi rule "जनेरुसिः"।

The word वृषन् is also treatedas a "भ" when वसु and अश्व follow and so we get वृषण्वसु and वृषणश्व and not वृषवसु or वृषाश्व with नलोप। नलोप by the rule "नलोपः प्रातिपदिकान्तस्य" will apply if

वृषण् is a पद or mere word and not a "भ"। The elided विभक्ति after वृषण् also must not give it the character of a पद, for here it is distinctly said as "भ" when वसु and अश्व follow. Hence Bhattoji says—"नलोपः प्राप्तः भत्वात् वार्यते"। Hence also the णत्वनिषेध by the rule "पदान्तस्य" (ante) cannot apply to वृषण्, for it is a "भ" here. For this very reason also the rule "अल्लोपोऽनः" (ante) can not be applied here, for there is no अङ्गाधिकार here, but we have भाधिकार only.

मित—। सुगमा। अत्र "यचि भम्" "ससजुषो रुः" "नलोपः प्रातिपदिकान्तस्य" "पदान्तस्य" "अल्लोपोऽनः" इत्यादिसूत्राणि प्राग्व्याख्यातानि द्रष्टव्यानि ॥

२२६० । अयस्मयादीनि छन्दसि ॥१।४।२०॥

दी—। एतानि छन्दसि साधूनि। भपदसंज्ञाधिकारात् यथायोग्यं संज्ञाद्वयं बोध्यम्। तथाच वार्तिकम्—"उभयसंज्ञान्यपीति वक्तव्यम्"। स सुष्टुभा स ऋक्वता गणेन—पदत्वात् कुत्वम्। भत्वात् जश्त्वाभावः। जश्त्वविधानार्थाया: पदसंज्ञाया भत्वसामर्थ्येन बाधात्॥ नैनं हिन्वन्त्यपि वाजिनेषु—अत्र पदत्वात् जश्त्वम्। भत्वात् कुत्वाभावः।

The words अयस्मय etc., are irregularly formed in the Vedic literature (by taking अयस् as a "भ" and not a पद)। In this rule both "भ" and "पद" come down (i.e., there is both भाधिकार and पदाधिकार) and both or either take place according to requirements of the words listed under अयस्मय etc. So the varttika runs—उभयसंज्ञानि etc. Thus in ऋक्वता of the above instance, the base ऋच् first becomes ऋक् being a पद (पदत्वात् कुत्वम्) by the rule "चोः कुः"। Then ऋक् + वत् gives ऋक्वत् and

not ऋग्वत् by जश्त्व ( by the rule "झलां जशोन्ते" ) for now it is treated as a भ (भत्वात् जश्त्वाभाव:)। In fact direction of भ bars here पदसंज्ञा which only can enjoin जश्त्व। Similarly in वाजिनेषु ( वाच्+इन् ) we have जश्त्व—it being treated as a पद ( पदत्वात् जश्त्वम् )—and वाच् itself being regarded as a "भ" we do not get कुत्व in वाच् yelding वाक्। And अयस्+मय=अयस्मय by treating अयस् as "भ" only. But in classical literatue the form is अयोमय only.

मित—। अयस्मयादीनि शब्दस्वरूपाणि छन्दसि विषये एव साधूनि भवन्ति। भसंज्ञाविधानात् 'अयस्मय' इति। लोके तु 'अयोमय: स्यात्। अत्र सूत्रे क्वचित् भाधिकार:, क्वचित् पदाधिकार:, क्वचित् उभयमपि भवति। अत: दीक्षितो वदति "भपदसंज्ञाधिकारात् यथायोग्यं संज्ञाद्वयं बोध्यम्"। एवं "ऋक्वत्" "वाजिन" इत्यादयस्तु भपदाधिकारात् सिद्धा:। अन्यत् सुगमम् ॥

२३८१। छन्दसि परेऽपि ॥१।४।८१॥

दी—। "तेप्राग्धातो:" ( इति सूत्राधिकारे सति आह )

२३८२। व्यवहिताश्च ॥१।४।८२॥

दी—। हरिभ्यां याह्योक आ। आ मन्द्रैरिन्द्र हरिभिर्याहि।

The गति and उपसर्ग that are put before a verb in grammar by the rule "तेप्राग्धातो:" are made to be put after a verb ( परे ) or are placed at a long interval ( व्यवहित ) as will be clear from the instainces "याहि ओक आ" and "आ इन्द्रमन्द्र हरिभि: याहि:" etc here.

मित—। सुगमा।

२३८३। इन्धिभवतिभ्यां च ॥१।२।६॥

दी—। आभ्यां परोऽपिल्लिट् कित् स्यात्। समीधे दस्यु-

**इन्धांचक्रे** इत्यस्यापि पक्षे अग्निवृत्त्यभावे **समीधे**। पुत्र ईधे अथर्वणः। बभूव॥ इदं प्रत्याख्यातम्। इन्धेः छन्दोविषयत्वात् भुवो वुको नित्यत्वात् ताभ्यां लिटः किद्वचनानर्थक्यमिति॥ इति प्रथमाध्यायः समाप्तः॥

अपित् लिट् affix after the root इन्ध and भू are regarded as कित्। Thus in समीधे etc., the लिट् affix being कित् causes गुणनिषेध and also नलोप: of इन्ध by "अनिदितां हल उपधायाः क्ङिति।" Similarly बभूव without गुण। Now Bhattoji says that this rule is rejected; for इन्ध is restricted to the vedas only and can have its derived form without आम् in लिट्, and वुक् after भू is always obligatory and bars गुणवृद्धि (compare "नित्यत्वात् गुणवृद्धी बाधते"—ante), so further कित्वविधान after these for गुणनिषेध becomes unnecessary.

मित—। इन्धिभवतिभ्यां परः अपित् लिट् प्रत्ययः कित् भवति। वस्तुतस्तु इन्धः छन्दोमात्रविषयत्वात् छन्दसि लिटि आमोऽप्रयोगात् भुवो वुको नित्यत्वेन गुणवृद्धि-बाधनात् इदं सूत्रं न युक्तम् विनापि सूत्रेण इष्टसिद्धत्वात्। तदेतत् सूत्रं भाष्ये प्रत्याख्यातम्। वृत्तिकारस्तु—"इन्धेः संयोगार्थं ग्रहणम्। भवतः पिदर्थम्" इत्याह—लभ्यते अत्र पूर्वसूत्रात् ("असंयोगाल्लिट् कित्" इत्यतः) "अपित्" न अनुवर्तते॥ इति शब्दोऽत्र समाप्तिद्योतकमव्ययम्=प्रथमाध्यायः समाप्तः॥

---

# अथ द्वितीयोऽध्यायः

२३८४ । तृतीया च होश्छन्दसि ॥२।३।३॥

दी—। जुहोतेः कर्मणि तृतीया स्याद् द्वितीया च। यवाग्वाऽग्निहोत्रं जुहोति। अग्निहोत्रशब्दोऽत्र हविषि वर्तते। 'यस्याग्निहोत्रमधिश्रितममेध्यमापद्येत' इत्यादि प्रयोगदर्शनात्। अग्नये हूयते इति व्युत्पत्तेश्च। यवाग्वाख्यं हविर्देवतोद्देशेन त्यक्त्वा प्रक्षेपतीत्यर्थः।

The accusative of the root हु takes द्वितीया as well as तृतीया in the Vedic language. Thus यवाग्वा ( तृतीया ) and अग्निहोत्रम् ( द्वितीया ) in the instance यवाग्वा अग्निहोत्रं जुहोति—offers the offering ( of clarified butter ) called यवागू. The word अग्निहोत्र here stands in the sense of हविस् or clarified butter which is generally offered to fire ; for the ( mode of ) derivation is 'अग्नये हूयते इति अग्नि+हु+त्र. This sort of sense of the word is corroborated by instances like 'यस्याग्निहोत्रम्—' whose अग्निहोत्र ( हविः ) that has been resorted to ( for oblation ) becomes impure—etc. Thus the sense is यवाग्वाख्यम् etc :—देवतोद्देशेन means with a view to pleasing the gods.

मित—। तृतीया चेति। 'कर्मणि द्वितीया' ( २।३।२ ) इत्यव्यवहितं पूर्वसूत्रम्। ततः 'कर्मणि द्वितीया' इति सर्वमत्रानुवर्तते। तदाह—जुहोतेः कर्मणीत्यादि। यवाग्वेति। यत्किञ्चिद् देवतोद्देशेन अग्नौ प्रक्षिप्यते तद्धविः इत्युच्यते तेन प्रक्षेप्यमाणं हविः। अग्नये हूयत इत्यग्निहोत्रशब्दव्युत्पत्तिः। ततश्चाग्निहोत्रशब्दो हविर्वचनः। अत आह—अग्निहोत्रशब्दोऽत्रेति। तत्र प्रमाणमाह—यस्याग्निहोत्रमिति।

अधिश्रितम् आश्रितम् इति। अमेध्यम् अपवित्रम्। आपद्यते भवतीत्यर्थः। तदेवं प्रयोगदर्शनाद् व्युत्पत्त्यानुकूलत्वादग्निहोत्रशब्दस्य हविरर्थः। ततश्च यवाग्वा अग्निहोत्रेण यद्वा यवागूम् अग्निहोत्रम् जुहोतीत्युदाहरणार्थः सम्पद्यते। ततो यवागूश्चाग्निहोत्रश्चाभिन्नम्। यदेव यवागूस्तदेवाग्निहोत्रम्। अत आह—यवाग्वाख्यं हविरिति। अत्र यवागूशब्दात् तृतीया अग्निहोत्रशब्दाच्च द्वितीयेत्युदाहरणसङ्गतिः। यवाग्वा जुहोति, अग्निहोत्रं जुहोतीति भेदेनापि उदाहर्तुं शक्यते। भाष्ये सूत्रमेतत् प्रत्याख्यातमित्याहुः।

३३८५। द्वितीया ब्राह्मणे ॥२।३।६०॥

**दी—। ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया स्यात्। षष्ठ्यपवादः। गामस्य तदहः सभायां दीव्येयुः।**

In the matter of application or use in respect of the Brahmanas (a subdivision of the vedas), the कर्म of दिव् meaning 'to trade' or 'to gamble with dice' takes द्वितीया. This rule supersedes षष्ठी directed by 'दिवस्तदर्थस्य' (619). Thus 'गामस्य—' they might that day state his धर्म in the assembly.

मित—। द्वितीयेति। सूत्रे ब्राह्मण इति विषयसप्तमी। तदाह—ब्राह्मणविषये इति। ब्राह्मणो वेदविभागान्तरम्। 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इत्यभियुक्तोक्तेः। दिवस्तदर्थस्येति। 'दिवस्तदर्थस्य' (२।३।५८) इत्यत स्तदनुवृत्तेरिति भावः। स (पूर्वोक्तः) अर्थः अस्य तदर्थः। तस्य द्यूतव्यवहारार्थकस्य दीव्यतेरित्यर्थः। यत् कर्म तस्मिन् द्वितीया विधीयते। न तु 'दिवस्तदर्थस्य' (६१९) इति सूत्रेण षष्ठी। तदाह—षष्ठ्यपवादः। 'षष्ठी शेषे' (२।३।५३) इत्यतः षष्ठीत्यनुवृत्तेः तत् सूत्रप्राप्ता षष्ठ्यत्र प्रतिषिध्यत इत्यर्थः। गामस्येति—अत्र गामिति दीव्यतेः कर्म। 'सोपसर्गस्य दिवेर्विभाषोपसर्गे इति व्यवस्थितविभाषया सिद्धे निरुपसर्गार्थोऽयमारम्भः।'

३३८६। चतुर्थ्यर्थे बहुलं छन्दसि ॥२।३।६२॥

**दी—। षष्ठी स्यात्। पुरुषमृगश्चन्द्रमसः। गोधाकालका-**

दार्वाघाटस्ते वनस्पतीनाम्। वनस्पतिभ्य इत्यर्थः। 'षष्ठ्यर्थे चतुर्थीति वाच्यम्' ( वार्तिक )। या खर्वेण पिबति तस्यै खर्वः।

In Vedic literature genitive ( षष्ठी ) is variously used in the sense of dative ( चतुर्थी ). Thus 'पुरुषमृग:—' where चन्द्रमसे the dative was due. वनस्पति means a huge tree bearing friuts. 'षष्ठ्यर्थे—' varttika. It has to be said that चतुर्थी takes place in the sense of षष्ठी ; e.g. या खर्वेण—where 'तस्या:' was due for तस्यै.

मित—। चतुर्थ्यर्थे इति। 'षष्ठी शेषे' ( २।३।५० ) इत्यत: षष्ठीत्यनुवर्तते। तेन शेषं पूरयन्नाह—षष्ठी स्यादिति। छन्दसि विषये चतुर्थ्यर्थे बहुलं षष्ठीस्यादित्यर्थ:। पुरुषमृग इति। चन्द्रमसे इति। वनस्पतिभ्य इति। 'अपुष्पा: फलवन्तो ये ते वनस्पतय: स्मृता:' इति मनु:। षष्ठ्यर्थे चतुर्थीति वार्तिकमिदम्। या खर्वेणेति। तस्या इति प्राप्ते तस्यै इति।

२३८७। यजेश्च करणे ॥२।३।६३॥

दी—। इह छन्दसि बहुलं षष्ठी। घृतस्य घृतेन वा यजते।

Here i.e., in the function of करणकारक of यज, षष्ठी is variously used in the vedic literature.

मित—। यजेश्चेति। प्राग्वत् षष्ठी अनुवर्तते। पूर्वसूत्राद् 'बहुलं छन्दसि' इति च। तदाह—इह छन्दसीत्यादि।

२३८८। बहुलं छन्दसि ॥२।४।३९॥

दी—। अदो घस्लादेश: स्यात्। घस्तां नूनम्। लुङि 'मन्त्रे घस—' ( २४१२ ) इति च्लेर्लुक्। अडभाव:। सग्धिश्च मे।

The substitute घस्ल् variously replaces अद् ( the root ) in the vedic literature. Thus 'घस्ताम्—'. Indeed they two etc.—घस्ताम्

is the dual of लुङ् परस्मै where च्लि by 'च्लि लुङि' has disappeared due to 'मन्त्रे घस—' (3402) and the augment अट् although there is no माङ् preceding has been prohibited by 'छन्दस्यमाङ्योगेऽपि' (3346). But this घस्भाव of अद् might have been effected by 'लुङ्सनोः—' whether 'मन्त्रे घस—' exists or not; anticipating this rejoinder the author (Bhattoji) illustrates सग्धिश्च मे, my co-eating i.e. eating with you or another—'सग्धिः स्त्री सहभोजनम्'—Amara. सग्धि (eating) is derived as अद्+क्तिन्=घस् ति by this rule 'बहुलम्—' =घस् ति elision of penultimate (उपधा) by 'घसिभसोर्हलि च'=घ् स् ति—elision of स् by 'झलो झलि' (2281)=घ् थि—त् is changed into ध् by 'झषस्तथोः—' (2280)='ग्धि=ग्धि by जश्त्व. Here the elision of the penultimate अ is not to be apprehended as स्थानिवत् by 'अचः परस्मिन्—' (50) as there runs the prohibition 'न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्—' (51) with ref. to जश्विधि। Thus समाना ग्धिः=सग्धिः, समान being changed to स by 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' (1312).

मित—। बहुलमिति। 'अदो जग्धिः—' (२।४।३६) इत्यतोद इत्यनुवर्तते। 'लुङ्सनोः—' (२।४।३७) इत्यतो घस्लृ इति च। तदाह—अदो घस्लादेशः स्यादिति। बहुलं छन्दसि विषये इति शेषः। उदाहरति घस्तामिति। अदो लुङि तसस्तामादेशे रूपम्। अनेन घस्लादेशः। 'च्लि लुङि' इति प्राप्ते आह—मन्त्रे इति। अडभाव इति—बहुलं छन्दस्यमाङ्योगेऽपीत्यनेन (३५४६) इति भावः। नन्वेतद् 'लुङ्सनोः—' इत्यनेनैव सिद्धे 'बहुलं छन्दसी'ति व्यर्थमित्याशङ्क्य आह—नन्विति। अदनं ग्धिः। अदधातोः क्तिन्प्रत्यये परतोऽनेन घस्लादेशः। 'घसिभसोर्हलि च' इति घसेरुपधालोपः। ततो 'झलो झलि' (२२८१) इति सलोपः। पश्चाद् 'झषस्तथोर्धोऽधः' (२२८०) इति प्रत्ययतकारस्य धकारे घस्य जश्त्वेन गकारे च रूपम्। न च 'अचः परस्मिन् पूर्वविधौ' (५०) इत्यनेन अल्लोपस्य (उपधाभूतस्य अकारस्य

लोपस्य ) स्थानिवत्त्वमाशङ्कनीयम्। जश्त्वे कर्तव्ये तन्निषेधात्। तथाच सूत्रम्—'न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु' (५१) इति। ततः समानशब्देन ष्धि इत्यस्य समासः। 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' (१०१२) इति सः। 'सग्धिः स्त्री सहभोजनम्' इत्यमरः।

२३८८। हेमन्तशिशिरावहोरात्रे च छन्दसि ॥२।४।२८॥

दी—। द्वन्द्वः पूर्ववल्लिङ्गः। हेमन्तश्च शिशिरश्च हेमन्त-शिशिरौ। अहोरात्रे॥ 'अदिप्रभृतिभ्यः शपः' (२४२३)—

The preceding two rules here are 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (2.4.26) and 'पूर्ववदश्ववडवौ' (2.4.27). Hence this rule means that in vedic language the dvanda compounds in हेमन्तशिशिरौ and अहोरात्रे are to be guided by पूर्ववल्लिङ्गता or the gender of the preceding members in such compounds will determine the gender of the compound. Thus in हेमन्तशिशिरौ and अहोरात्रे of vedic use, we have हेमन्तशिशिरे (neuter) and अहोरात्रौ or अहोरात्रः in भाषा (if समाहार is intended). Although Amara has 'हेमन्तः शिशिरोऽस्त्रियाम्' yet authorities are of opinion that शिशिर is neuter generally. Hence by 'परवल्लिङ्गम्—'we have (in भाषा) हेमन्त शिशिरे the autumn and the winter season. In the case of अहोरात्र समासान्त अच् comes in the sense 'अहश्च रात्रिश्च' by—अहः सर्वैकदेशसंख्यात-पुण्याच्च रात्रेः। इकार of रात्रि eliding and पुंलिङ्गता of the compound being determined by 'रात्राह्नाहाः पुंसि'। अहोरात्राणि (plural) is also to be met with in the vedic language. Hence अहोरात्रे in the rule simply determines the gender and not the number also. 'अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनाम् इह। आयूंषि—' in Ramayana is thus an archaism in classical language.

—मित—। हेमन्तशिशिराविति। 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' (२।४।२६) इत्यतो द्वन्द्व इत्यनुवर्तते। 'पूर्ववदश्ववडवौ' (२।४।२७) इत्यतः पूर्ववदिति च। तदाह—द्वन्द्वः पूर्ववदिति। छन्दसि विषये हेमन्तशिशिरशब्दयोरहोरात्रशब्दयोश्च द्वन्द्वः पूर्ववल्लिङ्ग इत्यर्थः। हेमन्तशिशिरौ अहोरात्रे इत्यवग्रहः (छेदः)। हेमन्तश्च—शिशिरश्चेति तत्त्वबोधिनीस्थोऽयं सम्यक् पाठः। अत्र शिशिरञ्चेत्येव पठनीयम् न तु शिशिरश्च। अन्यथा पूर्ववल्लिङ्गतावचनवैयर्थ्यं प्रसङ्गात्। न च "हेमन्तः शिशिरोऽस्त्रियाम्" इत्यमरस्य अस्त्रियामित्युक्तेः शिशिरशब्दस्य उभयलिङ्गत्वात् पुंलिङ्गनिर्देशोऽपि सङ्गच्छत इति वाच्यम्। प्रमादोऽयममरस्येति शब्देन्दुशेखरे स्पष्टम्। एवं लोके परवल्लिङ्गतायाम् हेमन्तशिशिरे इति प्राप्ते छन्दसि हेमन्तशिशिराविति। एवम् अहश्चरात्रिश्चेति लोके अहोरात्र इति अहोरात्रौ इति वा प्राप्ते अहोरात्रे इति छन्दसि। पूर्वपदस्य अहः शब्दस्य नपुंसकलिङ्गत्वात् समस्तस्य नपुंसकलिङ्गशेषता। लोके अहोरात्र इत्यत्र 'अहः सर्वैकदेशसंख्यातपुण्याच्च रात्रेः' इति समासान्तोऽच्प्रत्ययः। 'यस्येति च' रात्रिशब्दस्य इकार लोपः। 'रात्राह्नाहाः पुंसि' इति (८१४) रात्रान्तस्य पुंलिङ्गता॥ 'अदिप्रभृतिभ्यः शपः' (२४२३—२।४।७२) इति छन्दस्यपि शपो लुकि प्राप्ते 'बहुलं छन्दसि' (२४००) इति वक्ष्यमाणसूत्रेण वेदे तस्य बहुलं लुक् विधीयत इति प्रदर्शनार्थम् 'अदि प्रभृतिभ्यः—' इति सूत्रमत्र स्मारयति—

२४००। बहुलं छन्दसि ॥२।४।७३॥

**दी—। वृत्रं हनति वृत्रहा। अहिः शयत उपपृक् पृथिव्याः। अत्र लुङ्न। अदादिभिन्नेऽपि क्वचिल्लुक्। त्राध्वं नो देवाः॥ 'जुहोत्यादिभ्यः श्लुः' (२४८९)—**

The elision (लुक्) of the विकरण शप् after अदादि roots is variously effected in vedic language. Thus हनति (without elision of शप्) in place of हन्ति in secular language in the instance वृत्रं हनति वृत्रहा—Indra killed वृत्र, So also शयते (शी + शप्ते) in place of शेते in 'अहिः शयते—' The demon (अहि which refers to

त्र) lay on the ground. लुङ् न (i.e. लुक्+न) i.e of शप्। अदादिभिन्नेऽपि i.e शप् after other (भ्वादि) roots also elides irregularly in vedic literature as in त्राध्वम् by 'आदेच:—' (2370) as there is no शित् affix whereas in classical language we have त्रायध्वम् with शप् attached to त्रै (भ्वादि) and आयादेश in connection with शप्। 'जुहोत्यादिभ्य:—' This is cited for the solution of the next rule—

मित—। बहुलमिति। 'अदिप्रभृतिभ्य:—' (२।४।७२) इति प्राप्तस्य शपश्छन्दसि विषये बहुलं लुगित्यर्थ:। तदुदाहरति—वृत्र' हनतीति। लोके तु शपलुक इन्ति इत्येव। उदाहरणान्तरमाह—अहिरिति। शयते इत्यत्र शीप्रकृति: शपो लुगभावे गुणायादेशौ। लोके तु शपलुकि शेते इत्येव। अहिरिति इत्यस्य निर्देश:। उपप्लुगित्युपरि इत्यर्थ:। बहुलग्रहणादन्यत्रापि (भ्वादावपि) शपोलुग् बहुलं भवतीत्याह—अदादिभिन्नेऽपि इति। त्राध्वमिति। त्रैङ् पालने भौवादिक:। तस्य ध्वमि शपो लुकि शित्प्रत्ययपरत्वाभावात्, 'आदेच:—' (२३७०) इति आत्वे रूपम्। लोके तु शपो लुगभावात् त्रायध्वमित्येव। अत्र शपि परे आयादेशे रूपम्। छन्दसि जुहोत्यादाकस्य श्लु विकरणस्य बहुलं विधिरिति दर्शनार्थं आरयति जुहोत्यादिभ्य इति।

**२४०१। बहुलं छन्दसि ॥२।४।७६॥**

**दी—। दाति प्रियाणि चिद्वसु। अन्यत्रापि—पूर्णां विवष्टि।**

The श्लु of शप् of the affix शप् after जुहोत्यादि root is variously effected. Thus 'दाति—' etc दा+लट्ति—here श्लु not having replaced शप्, duplication by श्लौ (2490) does not apply, consequently ददाति (as in भाषा) is not the resultant form. अन्यत्रापि i.e श्लु attaches itself after other roots where it was not expected to take place—Thus पूर्णां विवष्टि। Thus वश

लि = वश् + शु, लि = वश्, वश् लि by 'श्लौ' (2490)' = व + वश् by 'हलादिः—' = विवश् by 'बहुलं छन्दसि' (7.4.77). Then षत्व and ष्टुत्व and we get विवष्टि।

मित—। बहुलमिति। छन्दसि विषये जुहोत्यादि (२।४।७५) प्राप्तस्य शपः श्लु बहुलमित्यर्थः। दातीति—दाधातोः शपः श्लोरभावे शाविति द्वित्वाभावाद् ददाति (लौकिकं रूपम्) इति न। अन्यत्रापीति—जुहोत्यादिभिन्नेऽपि क्वचित् श्लुरिति भावः। विवष्टि इति। लोके तु वष्टि। वश कान्तौ अदादिः। तस्य 'श्लौ' द्वित्वे, 'भृञामित्' (७।४।७६) 'बहुलं छन्दसि' (७।४।७८) इति सति 'व्रश्च—' इत्यादिभिर्यथोक्तं रूपम्।

**२४०२। मन्त्रे घस-ह्वर-णश-वृ-दहाद्-वृज्-कृ-गमि-जनिभ्यो लेः ॥२।४।८०॥**

**टी—। लिरिति च्लेः प्राचां संज्ञा*। एभ्यो लेर्लुक् स्यान्मन्त्रे। अक्षन्नमीमदन्त हि। घस्लादेशस्य 'गमहन—' (२३६३) इत्युपधालोपे 'शासिवसि—' (२४१०) इति षः। माह्वर्मित्रस्य। धूर्तिः प्रणङ् मर्त्यस्य। 'नशेर्वा—' (४३१) इति कुत्वम्। सुरुचो वेन आवः। मान आ धक्। आदितश्चाकारान्तग्रहणम्। आ प्रा द्यावापृथिवी। परावर्ग् भारभृद् यथा। अक्रन्कर्माण। त्वे रयिं जागृवांसो अनुग्मन्। मन्त्रग्रहणं ब्राह्मणस्याप्युपलक्षणम्। अज्ञत वा अस्य दन्ताः। विभाषाऽनुवृत्तेर्नेह—न ता अगृभ्णन् अजनिष्ट हि षः।**

**इति द्वितीयोऽध्यायः।**

लि is the technical name for च्लि used by the old grammarians. In the matter of मन्त्र or vedic hymns, लि elides when coming after the roots घस् (the substitute for अद्), ह्वृ (i.e. ह्वृ

कौटिल्य आदि), णश् (नश्), ह (both हञ् करणे and हङ् संभक्ती) दह, आन् (i.e आकारान्त roots), वृज (or वृजीवर्जने ) कृ, गम् and जन्. Thus 'अघन् etc—' अद+लुङ्=अट् घस्=अघ स्+अन् by 'गमहन—' (2363)=अग्स्अन् by जशत्व=अक्स् अन् by चर्त्व=अक्ष् अन्=अक्षन्, षत्व by 'शासिवसिघसीनां च' (2410). It is important to note here that च्लि or च्लि having disappeared by this rule, अङ् in place due to ऌदित्व of घस् (घस्ऌ) by 'पुषादिद्युताद्यॢदितः—' does not take place. In classical language the form is अघसत्। 'माह्वः—' Instance of ह्वृ; मा prohibits the अट् here. ह्वृ+लुङ् तिप् (द) or स्, च्लि disappearing by this rule, सिच् by 'च्लेः सिच्' ceases to take place. गुण by 'सार्वधातुकार्ध—', रपरत्व+विसर्ग, स् or द is dropped by 'हल्ङ्याब्भ्यः—' (252). 'धूर्तिः प्रणङ्—' Instance of नश् in लुङ्, प्र preceding it लोप+तिलोप as before. णत्व by 'उपसर्गादसमासेऽपिणोपदेशस्य', कुत्व (क्) as in the text. सुरुचो वेन etc—here आवः=आ+वृ+लुङ् तिप्। मा न आधक् here आधक् is आ+दह्+लुङ्+द—ह् is first changed into घ by 'दादेर्धातोः—' then to ग् by जश्त्व then to क् by चर्त्व (खरिच) and द to ध by 'एकाचोबशो भष्—'। 'आप्रा—' etc Instance of an आकारान्त root प्रा with आ leading in लुङ्। 'परावर्क्—' from वृज् with परा preceding in लुङ् सिप्, गुण by 'पुगन्त—' (2189) रपरत्व कुत्व by चोः कुः etc. 'अक्रन्—' Instance of कृ (डुकृञ्करणे) in लुङ् झि (अन्), अकार्षुः in secular language by सिच् वृद्धि जुस् etc. 'जाग्ट—' etc—Here अनुग्मन् is the instance of गम् in लुङ् झि (अन्) with अनु preceding. No अङ् by पुषादि rule and च्लि elides. Elision of उपधा by 'गमहन—' (2363). The लौकिक from is अन्वगमन्। मन्त्रग्रहणम् etc—the term मन्त्र in the rule includes ब्राह्मण also. 'अज्ञत etc.—' His teeth grew indeed (वा अस्य)=वै अस्य, here

अज्ञत is the instance of जन् in लुङ् अन्—उपधा eliding by गमहन=अज् न् अत=अज्ञत। The clasical form for अज्ञत is अजनिष्ट. Note that the vedas are subdivided into two parts—मन्त्र also called संहिता and ब्राह्मण. The former deals with the Riks or hymns and the latter with the prose part explaining the implication of the Riks as well as the sacerdotal functions. मन्त्र includes both these. 'विभाषानुवृत्तेः—' Here the term विभाषा from the rule विभाषा घ्राधेट्शाच्छासः (2.4.78) being carried down we have अजनिष्ट also as the alternative of अज्ञत cp—'न ता अग्रभून्—'. Here (in अजनिष्ट) 'न' or च्लि not having disappeared optionally सिच् takes place वस and लुल। अग्रभून is the vedic form for अग्रहीष (ग्रह्+लङ् अन्) by' ह्रग्रहोर्भश्छन्दसि'.

मित—। मन्त्र इति। 'गयत्त्रियार्थैजितो यूनि लुगणिञोः' (२।४।५८) इत्यतो लुगित्यनुवर्तते। एभ्यो लेर्लुगिति। एभ्य इति घसादिभ्यः परस्येत्यर्थः। घस इति 'लुङ्सनोः—' इति प्राप्तस्यादेर्घसादेशस्य ग्रहणं न तु प्रकृत्यन्तरम्। ह्वर इति ह्वृ कौटिल्ये इत्यस्य भौवादिकस्य शपा निर्देशः। णश अदर्शने। वृ इति वृञ् वरणे, वृङ् संभक्तौ इत्युभयोरेव सामान्येन निर्देशः। दह भस्मीकरणे। आदिति आकारान्तानां धातूनां ग्रहणम्। वृज इति वृजी वर्जने। कृञ् करणे। गम्लृ गतौ। जनी प्रादुर्भावे इत्येभ्यः। लेरिति 'च्लि लुङि' इति लकारादेशस्य च्लेरित्यर्थः। प्राचामिति पूर्वाचार्य्याणाम्। मन्त्रे इति—संहितायां (विषये) इत्यर्थः। मन्त्र इति ब्राह्मणस्याप्युपलक्षणम् इति वक्ष्यति। तेन छन्दसि इत्येव वक्तुमुचितम्। घसादिभ्यो लेर्लुकं क्रमेणोदाहरति—अक्षन्नित्यादिना। अक्षन्नित्यत्र अघसेर्लुङि च्लेः (अन्)। 'लुङ्सनोः—' इति घस्लादेशे ऽडादेशे च कृतेऽपि 'पुषादि—' (२३४३) इत्यनेन च्लेरङ् प्राप्तः सोऽनेन च्लेर्लोपाद् वार्यते। तदेवम् अघस्‌ अन् इति स्थिते उपधालोपार्थमाह—घस्लादेशस्येति। तदेवम् अ घ्स् अन् इति जाते 'झलां जश्—' इति घस्य जश्त्वेन गः तस्य 'खरि च' इति चर्त्वेन कः। षत्वार्थम् आह—

शासिवसीति। लोके तु अघसत् इत्येव। ह्वरमुदाहरति—माह्वरिति। मा इति माङ्—'माङ्योगेऽपि' (३५४६) इति माङ्योगेपि वेदे क्वचित् अडागमः। तथा चोदाहरिष्यते 'मा वः क्षेत्रे परबीजान्यवाप्सु'रिति। ह्वृ+लुङ् तिप्। अनेन च्लेर्लुकि सिजभावः। 'सार्वधातुकार्ध—' (२१६८) इति गुणः। रपरत्वम्। 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' (२५२) इति अपृक्तस्य तकारस्य लोपः। अह्वार्षीत् इति लोके। 'धूर्तिः प्रणङ्—' इति नशेरुदाहरणम्। प्र+नश्+लुङ्+तिप् इति स्थितेऽनेन च्लेर्लुकि पुषादिलोपः। तत नशेर्वेति कुत्वम्। 'उपसर्गादसमासेऽपि—' इति णत्वम्। 'छन्दस्यमाङ्योगेऽपि' इति माङ्भावेऽपि अडागमप्रतिषेधः। लोके तु प्राणशत् इति। सुरुचो वेन आव इति। अत्र आव इति आङ्पूर्वाद् वृञो रूपम्। आ—वृ+लुङ् तिप् गुणरपरत्वापृक्तलोपसिज्लोपाः। अवारीदिति लोके। मान आधगिति। अत्र आधक् इति आङ्पूर्वाद् दहेर्लुङि तिपि अनेन च्लिलोपात् सिजभावे 'दादेर्धातोर्घः' इति हस्य घः। 'वाऽवसाने' इति तस्य चर्त्वविकल्पात् कः। दकारस्य तु चर्त्वविकल्पात् प्राक् 'एकाचो बशोभष्—' इति भषभावेन धः। अधाक्षीदित्येव। आकारान्तमुदाहरति—आप्रेति। प्रापूरणे इत्यस्माद् आङ्पूर्वाद् लुङ् रुत्वविसर्गौ। आप्रासीरित्येव लोके। परावर्क् इति—परापूर्वाद् वृजेर्लुङ् तिप्। लघूपधगुणः रपरत्वम्। चोः कुरिति कुत्वम्। चर्त्वम्। च्लिलोपात् सिज् न। अवर्जीत् इति लोके। अक्रन्निति। करोते र्लुङि झेरन्। ङित्वाद् गुणाभावे यण्। अकार्षुरिति लोके। अनुग्मन्निति। अनुपूर्वाद् गमेर्लुङ् अन्। 'गमहन—' (२३६३) इत्युपधालोपः। च्लिलोपादङभावः। अन्वगमन् इति लोके। मन्तयज्ञमिति। तेन ऐतरेयब्राह्मणस्थमुदाहरति—अज्ञत वेति। जनेर्लुङ् झि। 'आत्मनेपदेष्वनतः' इति झेरतादेशः। 'गमहन—' इत्युपधालोपे 'स्तोःश्चुना—' इतिश्चुत्वेन नस्य ञः। अस्य दन्ता अज्ञत वै इत्यन्वयः। अजनिषत इत्यर्थः। विभाषानुवृत्तेरिति—'विभाषा घ्राधेट्शाच्छासः' (२।४।७८) इति पूर्वं सूत्रम्। ततो विभाषानुवृत्तेरिति बोध्यम्। नेदिति—न ता इत्युदाहरणे अजनिषत इत्यत्र लेर्लोपो नेत्यर्थः। तथाच लेर्लोपाभावात् 'च्लेः सिच्' इति सिच्। तस्य

'आदेशप्रत्यययो'रिति षत्वम्। अग्रभूनिति। घसिभसोर्हलि बहुवचनम्। 'वहिज्या—' (२४१२) इति सम्प्रसारणम्। 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकार:। अजगृहन्निति लोके। इति द्वितीयोऽध्याय:।

# अथ तृतीयोऽध्याय:।

२४०२। अभ्युत्सादयां प्रजनयां चिकयां रमयामक: पावयांक्रियाद् विदामक्रन्निति छन्दसि ॥३।१।४२॥

दी—। आद्येषु चतुर्षु लुङि आम् अक इत्यनुप्रयोगश्च। अभ्युत्सादयामक:। अभ्युदसीषददिति लोके। प्रजनयामक:। प्राजीजनदित्यर्थ:। चिकयामक:। अचैषीदित्यर्थे चिनोतेराम् द्विवचनं कुत्वं च। रमयामक:। अरीरमत्। पावयांक्रियात्। पाव्यादिति लोके। विदामक्रन्। अवेदिषु:।

In vedic literature these six words are optionally formed by निपातन. In the first four examples the augment आम is affixed in लुङ् and the form अक: is added to each of them afterwards. अक; is the लुङ form of कृ in first person singular where च्लि eliding by the previous rule 'मन्त्रे घस—', सिच does not take place then इलोप गुण and रपरत्व. Thus अभ्युत्सादयामक: etc. अभि उत्सद+णिच्+आम +लुङ्, then अक:—कृ गुण अरादेश। Hence लुङ् disappears by 'आम:' (2238). The classical form corresponding to this is अभ्युदसीषदद्—अभि—उत्—सद+णिच्+लुङ् (चङ्) तिप्। अभ्युत् अ सादि+चङ्+द अभ्युत् अ सद अ द by णौ चङ्युपधाया ह्रस्व: and णेरनिटि, then द्वित्व of

सद् by चङि ; then apply 'हलादि शेषः' 'सन्वल्लघुनि—' 'सन्यतः' and 'दीर्घोलघोः'। षत्व by 'प्राक् सितादड्व्यवायेऽपि' (2276) and 'स्थादिष्वभ्यासेन चाभ्यासस्य' (2277). प्रजनयामकः—प्र जन्+णिच्+आम्+लुङ् then अकः, no वृद्धि due to मित् by 'जनिवध्योश्च' (2512), लुङ् disappears as before—गुण and अयादेश। प्राजीजनत्=प्र—जन्+णिच्—लुङ् तिप्—वृद्धिनिषेध, द्वित्व etc. चिकयामकः—चिञ् +आम् (No णिच्) चि चि आम् द्वित्व irregularly=चि कि आम्—कुत्व irregularly=चिकयाम् by गुण अय and आम्। अचैषीत्—चि+लङ् द् by सिचि वृद्धिः परस्मैपदेषु etc. रमयामकः—रम्+णिच+आम+लुङ्—No वृद्धि by 'मितां ह्रस्वः' as रम् is मित् by 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' (गणसूत्र) due to its अमन्तत्व। अरीरमत् =रम्+णिच् लुङ् द्। पावयांक्रियात्—पू+णिच्+आम् (in आशी र्लिङ्) then add क्रियात् (कृ+आशीलिङ् यात्)। पाव्यात्—पू+णिच् आशीलिङ्+यात्. विदामक्रन् विद्+आम् (in लुङ्) now the अक्रन्=कृ+लुङ् अन् by यण् due to want of गुण, as अन् of झि is ङित्. अवेदिषुः—विद्+लङ्+झि (झेर्जुस्). Note that the forms अभ्युदसीषदन् etc which are used in the classical language (भाषा) are the alt. forms of अभ्युत्सादयामकः etc in vedic language; for the term 'अन्यतरस्याम् from 'विदांकुर्वन्त्वित्यन्यतरस्याम्' (3.4.41) the preceding rule is carried down here.

मित—। अभ्युत्सादयामिति। 'विदाङ्कुर्वन्त्वित्यन्यतरस्याम्' (३।१।४१) इत्यतोऽन्यतरस्यामित्यनुवर्तते। तेन अभ्युत्सादयामक इत्यादयः षट् विभाषा निपात्यन्ते छन्दसि विषये इत्यर्थः। पक्षे यथा अभ्युदसीषददित्यादयो लोके तथा वेदेऽपि। एवं वेदविषये रूपद्वयम्। लोके तु एकमेवेति बोध्यम्। अक इत्यस्य न सर्वत्र योग इत्याह—आद्येषु चतुर्षु इति। चतुर्भिरस्य तु सर्वत्रैव योग इति ज्ञेयम्। अक इति करोतेर्लुङि प्रथमैकवचनम्। 'मन्त्रे घस—' (३४०२) इति च्लेर्लुक्। 'सार्वधातुकार्ध—' (२१६८) इति गुणः। रपरत्वम्। तिप इत्येतिङ्कारलोपे तकारस्य

'हल्ङ्याब्भ्यः—' (२५२) इति लोपः। असुरत्सादयामक इति अत्र असुरत्सादयामित्यत्र असुरत्पूर्वात् षद्लृ विशरणगत्यवसादनेषु इत्यस्माद् ण्यन्ताल्लुङ्। 'आमः' (२२३८) इति लुङो लुक्। ततो गुणायादेशयोः कृतयोराम्। ततोऽकः असुमलुकः। असुरदसीषददिति—असुरात् पूर्वात् सदेर्ण्यन्ताल्लुङ्। 'णिश्रि—' (२३१२) इति चङ्। 'णेरनिटि' (२३१३) इति णिलोपः। 'णौ चङ्युपधाया—' (२३१४) इति ह्रस्वः। 'चङि' (२३१५) इति द्वित्वम्। 'सन्वल्लघुनि चङ्परे—' (२३१६) इति सन्वद्भावे कृते 'सन्यतः' (२३१७) इति अभ्यासस्य इत्वम्। तस्य 'दीर्घो लघोः' (२३१८) इति दीर्घः। ततः 'प्राक् सितादड्व्यवायेऽपि' (२२७६) इत्यड्व्यवधाने 'स्थादिष्वभ्यासेन चाभ्यासस्य' (२२७७) इत्यभ्यासव्यवधाने च सत्यपि 'सदिरप्रतेः' (२२७१) इति षत्वम्। प्रजनयामक इति प्रपूर्वाद् जनयतेर्ण्यन्ताल्लुङ् आम्। प्राग्वल्लुङो लुक्। 'जनिवध्योश्च' (२५१२) इति उपधावृद्धिप्रतिषेधः। ततोऽकः। प्राजीजनदिति प्रपूर्वाज्जनयतेर्ण्यन्ताल्लुङ्। द्वित्वादि प्राग्वत्। चिकयामकः—चिञ् चयने स्वादिः। तस्माण्ण्यन्तात्लुङि आम्। अत्र धातोर्द्वित्वम्। ततोऽन्तिमांशस्य कुत्वं निपात्यते। गुणायादेशौ। अचैषीदिति—चिनोतेर्लुङि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्ध्यादि। रमयामक इति रमयतेर्ण्यन्ताल्लुङ् आम्। रमोऽमन्तत्वेन 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' (गणसूत्र) इति मित्त्वात् 'मितां ह्रस्वः' इत्युपधाह्रस्वः। शेषं प्राग्वत्। अरीरमत् इति लोके ण्यन्ताल्लुङ् इत्यादि। पावयांक्रियादिति। पवतेः पुनातेर्वा ण्यन्तादाशीर्लिङ्। आम्। गुणायादेशौ। क्रियादिति आशीर्लिङि प्रत्ययस्य कित्त्वाद् गुणाभावे 'रिङ् शयग्लिङ्क्षु' इति रिङ्। ततोऽस्यानुप्रयोगः। विदामक्रन्निति। विदेः प्राग्वल्लुङ् आम्। अक्रन्निति करोतेर्लुङि झि (अन्)। तस्य ङित्त्वाद् गुणाभावे यण्। तदर्थस्तु अवेदिषुरिति। विदेर्लुङ् झिः। सिजभ्यस्तविदिभ्यश्चेति झेर्जुस्। गुणः। इट्। षत्वम्।

२४०४। गुपेश्छन्दसि ॥३।१।५०॥

दी—। च्लेश्चङ् वा। गृहानजूगुपतं युवम्। अगौप्तमित्यर्थः।

चङ् in place of च्लि is optionally effected when it (च्लि)

comes after the root गुप् in vedic language. 'रुहान्—' You two guarded our houses. अजूगुपतम्—गुप् (गुपूरक्षणे भ्वादि) + लुङ् (चङ्) + थस् (तम्)—द्वित्व etc. दीर्घ of the अभ्यास by 'तुजादीनां दीर्घः—' (3302). अगौप्तम्—alt of अजूगुपतम्; here there is no चङ् but सिच् takes place in place of च्लि। वृद्धि by 'वदव्रज—' (2267) taking effect we have अगौप् स् तम्=अगौप्तम्—स of सिच् being dropped by 'झलो झलि' (2281); गुप् is ऊदित् and hence वेट् by 'स्वरतिसूति—' (2279). Therefore the form with इट् is अगोपिष्टम् here गुण takes place by 'पुगन्त—' (2189) वृद्धि being barred by 'नेटि' (2268). Here आय after गुप् being optional by 'गुपूधूप—' (3303) we have another alt.—अगोपायिष्टम्. Thus in vedic language there are four forms and in secular we have three forms only—चङ् being wanting there.

मित—। गुपेरिति। 'च्लेः सिच्' (३।१।४४) इत्यतश्च्लेरित्यनुवर्तते। 'णिश्रिद्रुस्रुभ्यः—' (३।१।४८) इत्यतश्चङ् इति। 'विभाषा धेट्श्व्योः' (३।१।४९) इत्यतो विभाषा इति च। तदाह—च्लेश्चङ् वेति। छन्दसि इति शेषः। अजूगुपतम् इति अरक्षतम् इत्यर्थः गुवमिति शेषः। गुपूरक्षणे—ऊदित्। तस्माल्लुङि च्लेश्चङ् पक्षे द्वित्वेऽभ्यासकार्यादुत्तरम् 'तुजादीनां दीर्घोऽभ्यासस्य' (३५०९) इति दीर्घः। थसस्तमादेशः। चङभावे च्लेः सिच्—अगौप्तम् इति च रूपम्। ऊदित्वात् 'स्वरतिसूति—' (२२७९) इति इड्विकल्पादिडभावपक्षे इदम्। 'वदव्रज—' (२२६७) इति वृद्धिः। 'झलो झलि' (२२८१) इति सिचः सलोपः। इट्पक्षे—अगोपिष्टम् इति। अत्र 'नेटि' (२२६८) इति वृद्धिनिषेधात् पुगन्तेति (२१८९) इति गुणः। 'गुपूधूप—' (३३०३) इत्यायविकल्पादायपक्षे अगोपायिष्टम् इति। तदेवं वैदिकपक्षे चत्वारि रूपाणि। लौकिकपक्षे तु चङभावात्त्रीण्येवेति बोध्यम्।

२४०५। नोनयतिध्वनयत्येलयत्यर्दयतिभ्यः ॥३।१।५१॥

टी—। चेल् खङ् न। मा त्वायतो जरितुः काममूनयीः। मा त्वाग्निर्ध्वनयीत्।

चङ् is not to replace च्लि when coming after the causative roots ऊनि, ध्वनि, इलि and अर्दि in vedic language. Note that the affix चङ् which is barred before was due by णिश्रि—(2312). 'मा त्वायत:—' Be grasiously pleased (oh fire) not to lessen or dispense with the desire of (myself) the panegyrist of thyself. There in ऊनयीः there is no चङ्. ऊनि + णिच् + सिप् = ऊनेइट् स् ईट् (by 'अस्ति सिच:—' 2225) स् = ऊनयीः, स् of सिच् eliding by 'इट ईटि' (2266). Here the augment आट् by 'आडजादीनाम्' does not take place due to precedence of माङ् by 'न माङ्योगे'। 'औननत्' is the form with चङ् in भाषा। मा त्वा etc—let not fire scare you away (with sound). ध्वनयीत्—as before. The form corresponding to this in भाषा is अदिध्वनत् (if ध्वन is घटादि) or अदध्वनत् (if ध्वन is चुरादि). Similarly ऐलयीत् is in Vedas but ऐलिलत् in भाषा and अर्दयीत् in वेद but आर्दिदत् in भाषा.

मित—। नोनयतीति। 'न + ऊनयति—' इतिच्छेदः। प्राग्वदनुवृत्ति-लभ्यमाह—चङ् नेति। ऊनयतीत्यादयश्चत्वारो ण्यन्ताः। तेन 'णिश्रि—' (२३१२) प्राप्तश्चङ् निषिध्यते। ऊन परिहाणे। ध्वन शब्दे। इल प्रेरणे। अर्द गतौ याचने च। तत्रोनयत्येलयती चुरादिण्यन्तौ। ध्वनयतिस्तु चुरादिरदन्तः घटादिश्च। अर्दयति-र्हेतुमण्ण्यन्तः। मा त्वायत इति। हे अग्ने त्वायतस्त्वामिच्छतः जरितुः स्तोतुर्मम कामम् अभिलाषम् मा ऊनयीः ऊनं लघु मा कार्षीः किन्तु कामं मे बहुलं नित्यं पूरयेत्यर्थः। आर्षमेतत्। ऊनयीरित्यत्र ऊनेर्ण्यन्ताल्लुङ् सिप् च्लि सिच्। वलादि-लक्षण इट्। 'अस्तिसिच:—' (२२२५) इति ईट् च। तत 'इट ईटि' (२२६६)

इति सिज्लोपः । 'न माङ्योगे' इत्याडजादीनामिति प्राप्तस्याटः प्रतिषेधः । लोके तु चङि—औननदित्येव । मालेति । अग्निः त्वा त्वाम् मा ध्वनयीत् ध्वननेन भीतं मा कार्षीत् । न माङिति अट् प्रतिषेधः । प्रागवत् णिचिरूपम् । लोके तु अदिध्वनत् इति घटादिपक्षे, अदध्वनदिति तु चुरादिपक्षे चङि रूपम् । एवं ऐलयीदिति वेदे ऐलिलदिति लोके । अर्दयीत् इति वेदे आर्दिददिति लोके इति बोध्यम् ।

## २४०६ । कृमृदृरुहिभ्यश्छन्दसि ॥३।१।५८॥

**टी—। च्लेरङ् वा । इदं तेभ्योऽकरं नमः । अमरत् । अदरत् । यत् सानोः सानुमारुहत् ।**

अङ् in place of च्लि is optional when च्लि takes place in vedic language after the roots कृ मृ दृ and रुह्. Thus 'इदम्—' etc. अकरम् = कृ + लुङ् (अङ्) अम्—गुण etc. अकार्षम्—corresponding form without अङ् but with सिच् in classical language. अमरत्—मृङ् प्राणत्यागे—अङ्—परस्मै by 'व्यत्ययो बहुलम्'. अमृत—in भाषा सिच् here elides by 'ह्रस्वादङ्गात्'। अदरत्—but in भाषा अदारीत्। यत्सानोः—That he got up one valley after another. The corresponding form in भाषा is अरुक्षत्.

मित—। कृमृ इति । 'च्लेः सिच्' इत्यतश्च्लेरिति । 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यतोऽङिति । 'इरितो वा' इत्यतो वेति चानुवर्तते । तदाह—च्लेरङ् वेति । इदमिति । अकरम्—करोतेर्लुङ् अम् । अङिरूपम् । 'ऋदृशोऽङि—' इति गुणः । अमरदिति । मृङ् प्राणत्यागे अङ् व्यत्ययेन परस्मैपदम् । अमृत इति लोके । ह्रस्वादङ्गादिति सिज्लोपः । अदरत्—दॄ विदारणे । अङ् । अदारीदिति लोके । अरुहदिति । अङ् । अरुक्षदिति लोके ।

२४०७। छन्दसि निष्टर्क्यदेवहूयप्रणीयोन्नीयोच्छिष्यमर्यस्तर्याध्वर्यखन्यखान्यदेवयज्यापृच्छ्यप्रतिषीव्यब्रह्मवाद्यभाव्यस्ताव्योपचाय्यपृडानि ॥३।१।१२३॥

दी—। कृन्ततेर्निःपूर्वात् क्यपि प्राप्ते ण्यत्। आद्यन्तयोर्विपर्यासो निसः षत्वं च। निष्टर्क्यं चिन्वीत पशुकामः। देवशब्दे उपपदे ह्वयतेर्जुहोतेर्वा क्यप् दीर्घश्च। स्पर्धन्ते वा उ देवहूये। प्र उत्—आभ्यां नयतेः क्यप्। प्रणीयः। उन्नीयः। उत्पूर्वाच्छिषेः क्यप्—उच्छिष्यः। मृङ् स्तृङ् ध्वृञ्भ्यो यत्। मर्यः। स्तर्या—स्त्रियामेवायम्। ध्वर्यः। खनेर्यण्यतौ—खन्यः। खान्यः। यजेर्यः। शुन्धध्वं दैव्याय कर्मणे देवयज्यायै। आङ् पूर्वात् पृच्छेः क्यप्। आपृच्छ्यं धरुणं वाज्यर्षति। सीव्यतेः क्यप् षत्वं च। प्रतिषीव्यः। ब्रह्मणि वदेर्ण्यत्। ब्रह्मवाद्यम्। लोके तु 'वदः सुपि क्यप् च' (२८५४) इति क्यप्यतौ। भवतेः स्तौतेश्च ण्यत्। भाव्यः। स्ताव्यः। उपपूर्वाच्चिनोतेर्ण्यत् आयादेशश्च पृडे उत्तरपदे—उपचाय्यपृडम्। 'हिरण्य इति वक्तव्यम्' (वार्तिकः)। उपचेयपृडमन्यत्। 'मृड सुखने पृडच' इत्यस्मादिगुपध-लक्षणः कः।

These words viz निष्टर्क्य, देवहूय, प्रणीय, उन्नीय, उच्छिष्य, मर्य, स्तर्या, ध्वर्य, खन्य, खान्य, देवयज्या, आपृच्छ्य, प्रतिषीव्य, ब्रह्मवाद्य, भाव्य, स्ताव्य, and उपचाय्यपृड are irregularly formed in vedic literature with ण्यत् or यत् or क्यप् as shown below: कृन्ततेः etc—निस् + कृत् (तुदादि to cut) + ण्यत् irregularly in place of क्यप् which was due here by 'ऋदुपधाच्चाकॢपिचृतेः' (2859). Now by निपातन the root being

reversed we have निस्—ठक्+य=निष् तक् य—षत्व by निपातन, गुण by 'पुगन्त—'(2189)=निष्टर्क्य by 'ष्टुना—'। देवहूय—देव+हे्व or ह्+क्यप्, here दीर्घ of उकार is by निपातन and therefore no तुगागम: by 'ह्रस्वस्य पिति कृति—'(2841). In the case of ह्वे्व the root gets सम्प्र. due to कित्व of the affix. मर्य:—मृ+यत्—a mortal person. मर्या=मृ+यत्, धर्य—ध्वृ+यत्। खन्य—यत्। खान्य—ण्यत्। देवयज्या—देव+यज+य+आप्। आपृच्छ्य—आ+प्रच्छ्+क्यप्—सम्प्र. by 'ग्रहिज्या—'(2412). लोके तु etc—and the form is आपृच्छ्य by सम्प्र.of वद. प्रतिषीव्य—दीर्घ by 'हलिच्' (354). उपचाय्यपृडम्—उप+चि+ण्यत् वृद्धि by 'अचोञ्णिति' (254)—आयादेश=उपचाय्यम् then उपचाय्यं तत् पृडं—कर्मधारय:। 'हिरण्य—' Varttika. It must bestated that उपचाय्यपृडम् is allowed to take ण्यत् provided the derivative (उपचाय्यपृडम्) means gold. Otherwise उपचेयपृडम्—with यत्। The word पृड is derived with क added by the rule 'इगुपधज्ञाप्रीकिर: क:' to the root पृड् meaning to give pleasure.

मित—। छन्दसीति। निष्टर्क्यादय: सप्तदश शब्दा: ण्यदादिप्रत्ययान्ता निपात्यन्ते छन्दसि विषये इति सूत्रार्थ:। अथ क्रमतो निपातनप्रकारं दर्शयिष्यन्नाह—कृन्ततेरिति। एवं च कृती छेदने इति तौदादिकस्य निर्देश:। न तु कृती वेष्टने इति रौधादिकस्य। क्यपि प्राप्ते ऋदुपधत्वेन ण्यत् विधीयते अनेन सूत्र एवेति भाव:। आद्यन्तयो: विपर्यास इति। विपर्यासो वैपरीत्येनावस्थानम्। नन्वेवं कृत् इति वर्णवैपरीत्येन तृक इति भवति। ततो निस: षत्वे धातोर्लघूपधगुणे च तस्य ष्टुत्वेन टकार:। 'निष्टर्क्यं व्यत्ययं विद्यान्निस: षत्वं निपात्यते' इत्यभियुक्तोक्तिं प्रमाणीकृत्येदमिति बोध्यम्। देवहूयशब्दं व्याकरोति देवशब्द इति। ह्वयते: क्यपि सम्प्रसारणम्। तदेवम् उभयत्र देव+हु+क्यप् इति स्थिते 'ह्रस्वस्यपिति—' (२८४१) इति तुकि प्राप्ते आह—दीर्घश्चेति। निपातनादिति भाव:। तस्य तुक् न। देवहूय इति देवहवनम्। उत्तपूर्वाच्चिवेरिति। शब्दं न्दुशेखरे तु आश्वेरेव क्यपि एतत् साधितम्। मर्यो मनुष्य:

स्रियत इति मृङ् प्राणत्यागे+यत्। सर्य्यं मृञ् आच्छादने+यत्। ध्वर्य:—ध्वृ कौटिल्ये ने+यत्। खन्य—यत्। खान्य—ण्यत्। देवयज्यापदं व्याचष्टे—यजेर्थ इति। देवशब्दे उपपदे इति शेष:। स्त्रीलिङ्ग एवेदं निपातनम्। आङ् पूर्वाद् पृच्छेरिति। प्रच्छ ज्ञीप्सायाम्। 'ग्रहिज्या—' (२४१२) इति सम्प्रसारणम्। सिव्यतेरिति। प्रतिपूर्वादिति शेष:। प्रतिषीव्य इति। 'हलि च' (३५४) इति दीर्घ:। ब्रह्मणि इति—उपपदे इति शेष:। छन्दसि यदेव निपात्यते। लोके काय् यत्र ल्याह—लोकेत्विति। अपि सम्प्रसारणेन ब्रह्मोद्यमिति। यति ब्रह्मवद्य-मित्येव। भवद्यपक्षस्ती इत्यपपाठ:। "वदे: सपि" इत्यत्र यत् विधानात्। उपचाय्यपृडमित्येतन्नाचयति उपपूर्वाच्चिनोतेरिति। उप+चि+ण्यत् इति स्थिते 'अचो ञ्णिति' (२५४) इति वृद्धौ सत्यामायादेश इत्यर्थ:। तत उपचाय्य' चतत् पृड' चेत्युपचाय्यपृडम् कर्मधारय:। 'हिरण्ये इति—' वार्तिकमिदम्। हिरण्ये (सुवर्णे) एवार्थे उपचाय्यपृडमिति निपात्यते इति वाक्यमित्यर्थ:। अन्यत्रार्थे तु यदित्याह—उपचेयपृडमिति। ननु पृडेति किमित्यत आह—मृड सुखने पृडचेति। सुखने पवैत्यर्थ:। इगुपधेति। 'इगुपधज्ञाप्रीकिर: क:' इत्यनेनेत्यर्थ:।

३४०८। छन्दसि वनसनरक्षिमथाम् ॥ ३।२।२७॥

**टी—। एभ्य: कर्मण्युपपदे इन् स्यात्। ब्रह्मवनिं त्वा क्षत्रवनिम्। उत नो गोषणिं धियम्। ये पथां पथिरक्षय:। चतुरक्षौ पथिरक्षी। हविर्मथीनामभि।**

When any word in the accusative stands as an उपपद these roots viz—वन्, सन्, रक्ष् and मथ take the affix इन् in the matter of vedic language. 'ब्रह्मवनिम्—etc—'(I pray to) you who are devotedly attached to the Brahmans and the Kshatriyrs. ब्रह्म वनति इति ब्रह्म वन्+इन्. गोषणिम्—गो+सन्+इन्—here षत्व, according to commentators of the vedas, is, says Nagesha, in the संहिता पाठ only and not to be found in पदपाठ. Hence it is wrong

to say 'सुषामादित्वात् षत्वम्'। पथिरक्षः—पन्थानम् रक्षति इति+पथिन् रक्ष+इन। हविर्मथति इति हविर्मथी।

मित—। छन्दसि वनसनेति। 'सप्तम्यां जनेर्डः' (३।२।२४) इत्यत इन् इत्यनुवर्तते ('कर्मण्यण्' इत्यतः कर्मणि—उपपदे सप्तमीनिर्देशात्) इति च। तदाह—एभ्य इति। वन सन संभक्तौ इति सहनिर्दिष्टयो भ्वादिकयोरेव ग्रहणं न तु वनु याचने, षणु दाने इति तनादिकयोः। 'निरनुबन्धकग्रहणेन सानुबन्धकस्य' इति निषेधात्। ब्रह्मवनिमिति। ब्रह्म (ब्राह्मणं) वनति (संभजति) इति विग्रहः। एवम् क्षत्रवनिमित्यादौ। इन इकारः श्रियते। नित्वमाद्युदात्तार्थम्। ब्राह्मणंवा चविधं संभक्तारं मत्वा (त्वाम) हवामहे इति शेषः। यद्वा ब्रह्म-क्षत्रशब्दौ मानसशारीरशक्तिवाचिनौ। गोषणिमिति। गां सनतीति विग्रहः। अत दन्त्यस्येव (सकारस्य) मूर्धन्यवत् पाठो वैदिकसम्प्रदायसङ्कृतः। अतएव पदपाठकाल दन्त्यमेव पठति। यत्तु सुषामादित्वात् षत्वमिति सुबोधिनी तन्न। 'सनोरन्' इति सूत्रतद्भाष्यविरोधादिति शब्देन्दुशेखरे स्पष्टम्। थे पथमिति। पन्थानं रक्षतीति विग्रहः। हविर्मथीनामिति। हविर्मथतीति विग्रहः।

## २४०८। छन्दसि सहः ॥ ३।२।६३ ॥

### टी—। सुप्युपपदे सहेर्ण्विः स्यात्। पृतनाषाट्।

सुबन्त उपपद preceding, सह takes ण्वि in vedic language. पृतना सह ण्वि=पृतनाषाट्, वृद्धि—due to णित्व by 'अत उपधायाः' (2282) then षत्व by 'सहेः साडः सः' (335). ह being first changed into ढ् by 'हो ढः', then ड or ट् by 'वाऽवसाने'. Decline—पृतनाषाट् (ड्), पृतनाषाहौ पृतनाषाहः इत्यादि—षत्व being due where षाट् वा साड् is present. 'तुरासाहं पुरोधाय धाम स्वायम्भुवं ययुः' here this application of Kalidasa (in Kumar—2nd) is objectionable—so says Haradatta, as ण्वि is restricted to सह in vedic language (छन्दसि) only. See also our notes under "सहेः साडः स"।

मित—। छन्दसीति। वह प्रापणे। 'भजो ण्विः' इत्यतो ण्विरित्यनुवर्तते। 'सुपि स्थः' ( ३।२।२ ) इत्यतः सुपीत्यनुवर्तते। तदाह—सुबुपपदे इति। पृतनां सहत इति विग्रहः—'सहेः साडः सः' इति षत्वम्। 'अत उपधायाः' ( २२८२ ) इत्युपधावृद्धिः। 'ढोढः', 'वावसाने' इति जश्त्वचर्त्वे। पृतनाषाट् ( ड् ) पृतनाषाहौ पृतनाषाहः इत्यादि। साट् ( ड् ) रूपस्यैव षत्वमिति बोध्यम्। कथं तर्हि 'तुराषाहम् पुरोधाय' ( कुमार २य ) इति लोके। चिन्त्योऽयं प्रयोग इति हरदत्तः। 'विच् प्रत्ययान्तोऽयमित्येके। भट्टोजिदीक्षितस्तु 'सहेः साडः सः' ( २३४५ ) इत्यत्र लोके तु साहयतेः ( सह + णिच् इत्यस्मात् ) क्विप्। 'अन्येषाम्—' ( ४२२८ ) इति पूर्वपदस्य दीर्घ इत्याह इति तत्त्वाभिरुक्तम्।

३४१० । वहश्च ॥ ३।२।६४ ॥

टी—। प्राग्वत्। दित्यवाट्। योगविभाग उत्तरार्थः।

When a सुबन्त उपपद precedes, वह in the vedas takes ण्वि—दित्यवाट्—as before-वृद्धि etc. The separation of वह from सहः is for the next two rules where वह् only will follow and not सह also.

मित—। वह इति। अनुवृत्तिः प्राग्वत्। प्राग्वदिति। सुबुपपदे वहेर्ण्विः स्याच्छन्दसि विषये इत्यर्थः। 'दित्य' वहतीति विग्रहः। वृद्ध्यादयः प्राग्वत्। ननु 'छन्दसि सहिवहो' रित्येक एव क्रियतां योगः। उभयोरेव ण्विविधानात्। तत्राह—योगविभाग उत्तरार्थ इति। उत्तरसूत्रार्थ इत्यर्थः। तथा च 'कव्यपुरीष—' इत्यत्र 'हव्ये—' इत्यत्र च वहेरेव यथानुवृत्तिः स्यान्न तु सहेरपीति भावः।

३४११ । कव्यपुरीषपुरीष्येषु ञ्युट् ॥ ३।२।६५ ॥

टी—। एषु वहेर्ञ्युट् स्याच्छन्दसि। कव्यवाहनः। पुरीषवाहनः। पुरीष्यवाहनः।

When the words कव्य पुरीष and पुरीष्य lead as उपपदs वह् takes in the vedic language, the affix ञ्युट् ( = अन by 'युवोरनाकौ' ).

ञ् for वृद्धि and ट् for ङीप् and स्वर। कव्यवाहन etc वृद्धि by 'अत उपधायाः'।

मित—। कव्येति। 'छन्दसि सहः' इत्यतश्छन्दसीति। वहश्चेत्यतो वह इति चानुवर्तते। तदाह—एभ्यित्यादि। कव्यवाहन इत्यादि। युवोरनाकौ। ञित्त्वं 'अत उपधायाः' (२२८९) इति वृद्ध्यर्थम्। टित्त्वं स्वरार्थं ङीवर्थंच।

## ३४१२। हव्येऽनन्तःपादम् ॥ ३।२।६६ ॥

**टी—। अग्निश्च हव्यवाहनः। पादमध्ये तु 'वहश्च' (३४२०) इति ण्विरेव। हव्यवालग्निरजरः पिता नः।**

When the word हव्य (an offering of ghee) leads as an उपपद, the root वह् takes ञ्युट् in the vedic language provided the derivative is not used in the middle (अन्तः) of a foot (पाद). Thus अग्निश्च—where हव्यवाहन is at the end of the foot. But हव्यवाट्—' here हव्यवाह् being in the middle of the foot we have ण्वि after वह् by 'वहश्च' (3410). वाड् = वाल्, ड is equivalent to ल in प्रातिशाख्य (Vedic grammar).

मित—। हव्येऽनन्तरिति। अत्र अन्तःशब्दो मध्यवाची। हव्यशब्दे उपपदे वहेर्ञ्युट् स्याच्छन्दसि पादमध्ये चेदयं प्रयुज्यते शब्दः इत्यर्थः। तदाह—अग्निश्चेति। अनन्तरिति किम्? तत्राह—पादमध्येत्विति। हव्यं वहतीति विग्रहः। हव्यवाड् इति जश्त्वविकल्पात् प्राप्ते डलयोरेकत्वात् डस्य लः। एतत् प्रातिशाख्ये लोके च प्रसिद्धम्। तथा चोक्तं 'डलयो र्बवयो रभेद' इति।

## ३४१३। जनसनखनक्रमगमो विट् ॥ ३।२।६७ ॥

**टी—। 'विड्वनोः—' (२९८२) इत्यात्त्वम्। अब्जाः। गोजाः। गोषा इन्द्रो नृषा असि। 'सनोतेरनः' (३६४५) इति**

सत्वम्। इयं शुष्मेभिर्बिसखा इवारुजत्। आ दधिक्राः शवसा पञ्च कृष्टीः। अग्रेगाः।

When any उपसर्ग or a सुबन्त word leads as उपपद, the root,—जन्, सन्, खन्, क्रम् and गम् take the affix विट् in vedic language. The affix विट् retains nothing (सर्वलोपी) and when it follows the nasal of the root becomes आ by 'विड्वनो:—'(2982). अब्जा: born in water—lotus etc. Similarly गोजा:। 'गोषा इन्द्र:—'O Indra you are the giver of cows and men. Here सन् is षणु दाने—तनादि. बिसखा—That which digs out the lotus bulbs (बिसानिखनति). दधिक्रा = दधि + क्रम् + विट्। अग्रेगा:—अग्रे + गम + विट्—सप्तमी in अग्रे is not dropped by 'हलदन्तात्—'.

मित—। जनसनेति। उपसर्गे सुपि चोपपदे एभ्यो धातुभ्यश्छन्दसि विट् इत्यर्थः। विट् इत्यस्य वेरपृक्तलोपाल्लोपः। टकारः विशेषणार्थः। तेनायं सर्वलोपः। अयं विटि धातोरनुनासिकस्य आत्त्वं स्यादिति स्मारयति—विड्वनोरिति। अब्जा इति। अप्सु जायत इति विग्रहः। प्रत्ययस्वरेणान्तोदात्तता। एवं गोजा इति। गोषा इति। गाः सनति इति विग्रहः। नॄः सनति इति च। अत्र सनः 'षणु दाने' इति तानादिकस्यैव ग्रहणं न तु सन संभक्तावित्यस्येति ध्वनयन्नाह—सनोरन इति। हे इन्द्र त्वं गोषाः गवां दाता नृषा अपत्यलक्षणनृणां च दातेति मन्त्रार्थः। सप्तम्यु लुकोपाभावश्छान्दसः। बिसखा इति। बिसानि खनतीति विग्रहः। शुष्मैभिर्बलैः। दधिक्रा इति। दधि क्रामतीति विग्रहः। अग्रेगा—अग्रे गच्छतीति। 'हलदन्तात्—' इति सप्तम्या अलुक्। सर्वत्रात्त्वम्—प्रत्ययस्वरेणान्तोदात्तता च।

२४१४। मन्त्रे श्वेतवहोक्थशस्पुरोडाशो ण्विन् ॥३।२।७१॥

दी—। 'श्वेतवहादीनां डस्पदस्येति वक्तव्यम्' (वार्तिक) यत्र पदत्वं भावि तत्र ण्विनोऽपवादोडस् वक्तव्य इत्यर्थः। श्वेतवाः

श्वेतवाहौ। श्वेतवाहः। उक्थानि उक्थैर्वा शंसति उक्थशाः यजमानः। उक्थशासौ। उक्थशासः। पुरोदाश्यते दीयते पुरोडाः।

In vedic literature ण्विन् is affixed to वह preceded by the word श्वेत as an उपपद in the nominative case, to शस् preceded by the term उक्थ as an उपपद in the accusative or instrumental and to दाश् (दाशृदाने) preceded by पुरस् as an उपपद. 'श्वेतवहादीनाम्—' (Varttika). It has to be stated that the affix डस् supersedes ण्विन् whenever there is chance of पदत्व of such derivatives of श्वेतवह् etc. Thus श्वेतवाः—श्वेत वह्+डस्= श्वेतव् अस by 'डित्त्वसामर्थ्यादभस्यापिटेर्लोपः'=श्वेतवस्=श्वेतवाः (The Sun) by 'अत्वसन्तस्य चाधातोः' (425). Similarly उक्थशाः and पुरोडाः (wherein द of दाश is changed into ड by निपातन). The importance of ण्विन् is in the case of address of the forms arrived at with डस् here. This is clear in 'अवयाः—'(3416).

सित—। मन्त्रे श्वेतेति। संहितायां विषये श्वेतादिपूर्वेभ्यो वहादिभ्यो ण्विन् स्यादित्यर्थः। अत्र अलाक्षणिककार्य्यार्थं निपातनम्। तथाच श्वेतशब्दकर्तृ-वाचिन्युपपदे वहेः कर्मणि ण्विन्। उक्थशब्दे कर्मणि करणे वोपपदे शंसतेः ण्विन्। पुरस उपपदाद् दाशृ दाने इत्यस्मात् कर्मणि प्रत्ययः। 'श्वेतवहादीनाम्—' वार्तिक-मिदम्। श्वेतवहादीनां मध्ये यत्र पदत्वं भावितत्र ण्विनपवादो डस् वक्तव्य इत्यर्थः। श्वेतवा इति। श्वेताः (अश्वाः) यं वहन्ति स इत्युपपदसमासः डित्त्व-सामर्थ्यादभस्यापि टेर्लोपात् श्वेतव् अस्, श्वेतवस् इति स्थिते 'अत्वसन्तस्य—' (४२५) इति दीर्घः। एवमुक्थशाः पुरोडा इति। पुरोडा इत्यत्र दस्य डत्वं निपातनात्। ण्विन्प्रत्ययस्य प्रयोजनन्तु सम्बुद्धावेव तत्र 'अत्वसन्तस्य—' (४२५) इत्यस्याप्रवृत्तेरिति अवया (३४१६) इत्यत्र वक्ष्यति।

३४१५। अवे यजः ॥ ३।२।७२ ॥

टी—। अवयाः। अवयाजौ। अवयाजः।

यज् takes ण्विन् when preceded by अव. The separate mention ( योगविभाग ) of यज् is to the effect that यज् only may have a part in the next rule 'विजुपे—'(3417) and not श्वेतवह etc.

मित—। अव इति। अवोपपदे यजेर्णिवन् स्याच्छन्दसि। योगविभाग उत्तरार्थः ( 'विजुपे—' इत्येतदर्थः )। श्वेतवहादीनां मा भूदत्रानुवृत्तिरिति।

३४१६। अवयाः श्वेतवाः पुरोडाश्च ॥ ८।२।६७ ॥

टी—। एते संबुद्धौ कृतदीर्घा निपात्यन्ते। चादुक्थशाः।

These are irregularly framed, in the vocative case, with उपधा lengthened after ण्विन् has been attached for here 'अत्वसन्तस्य—'(425) does not apply.

मित—। अवया इति। कृतदीर्घा इति। निपातनादिति भावः। तथाचैषु डस् प्रत्यये सति 'अत्वसन्तस्य—' ( ४२५ ) इत्यस्याप्राप्तेः दीर्घो न स्यात्। असम्बुद्धौ इति तत्र निषेधात्।

३४१७। विजुपे छन्दसि ॥ ३।२।७३ ॥

टी—। उपे उपपदे यजेर्विच्। उपयट्।

उप preceding, यज् takes विच् in the Vedas. उपयट्—उप यज्+विच्—विच् retains nothing ( सर्वलोपी like क्विप् ) for इकार is for facility in pronunciation, व् dropped by 'वेरपृक्तस्य' and ज becomes ष by 'व्रश्च—'(294) and ड and ट by ष 'झलां जशः—' and 'वाऽवसाने'.

मत—। विजुपे। विच+उपे इतिच्छेदः। 'अवे—' ( ३४१५ ) इत्यतो

यज इत्यनुवर्तते। तदाह—उपे इत्यादि। उपयडिति। विच् सर्वलोपी क्विवादिवत्। इकार उच्चारणार्थः। चकारस्तु स्वरार्थः। अवेति (२९५) पक्षे 'भव्यां—' 'वावसाने' इति—जश्त्वचर्त्वे। मन्त्र इत्यनुवर्तमानेऽपि छन्दोग्रहणं ब्राह्मणादिसंग्रहार्थम्। मन्त्रब्राह्मणयोः वेदनामधेयमित्युक्तम्।

## ३४१८। आतो मनिन्क्वनिब्वनिपश्च ॥ ३।२।७४ ॥

टी—। सुप्युपसर्गे चोपपदे आदन्तेभ्योधातुभ्यश्छन्दसि विषये मनिनादयस्त्रयः प्रत्ययाः स्युः। चाद्विच्। सुदामा। सुधीवा। सुपीवा। भूरिदावा। घृतपावा। विच्। कीलालपाः॥ 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (२८९८)—।

When a सुप् or an उपसर्ग precedes any आकारending root in the Vedas these may take any of the affixes मनिन्, क्वनिप् and वनिप् as well as विच्. सुदामा = सु दा मनिन् (मन्) highly charitable. सुधीवा = सु धा क्वनिप् (वन्) = सुधीवन् by 'घुमास्था—' (2462) etc. Similarly—सुपीवा = सुपाक्वनिप्—a good preserver and a good drinker. भूरिदावा—भूरि + दा + वनिप् (वन्) = भूरिदावन् (the base)—वनिप् not being कित् 'घुमास्था—' does not apply—a giver of abundance (of wealth). Similarly घृतपावा—घृत + पा + वनिप्—a giver of cearified butter. कीलालपाः—कीलाल + पा + विच्—drinker of water (कीलाल)। 'ब्रह्मभ्रूणवृत्रेषु—' This is for the next rule which follows upon it (3.1.41.)

मित—। आतो मनिन्निति। 'सुपिस्थः' (३।२।४) इत्यतः सुपीति उपपदार्थकं सप्तम्यन्तमनुवर्तते। 'सत्सूद्विष—' (३।२।६१) इत्यत 'उपसर्गेऽपी'ति। 'विजुपे—' इति पूर्वसूत्रात्विजिति छन्दसीति च। तदाह—सुप्युपसर्ग चेत्यादि। सुदामेति। सुष्ठु ददातीति विग्रहः। सु + दा + मनिन् (मन्)—सुदामन् इति प्रातिपदिकम्।

सुधीवा सुपीवेति—सुष्ठु दधातीति सुष्ठु पीवतीति च विग्रहे उभयत्र व क्वनिप्। तस्य (प्रत्ययस्य) कित्त्वाद् 'घुमास्थागापा' (२४६३) इत्यात ईत्त्वम्। वनिपि एव सिद्धे क्वनिपग्रहणं कित्त्वार्थम्। तथाच भूरिददतीति घृतं पिवतीति च विग्रहे वनिपि परे भूरिदावन्, घृतपावन् इत्यत्र आतईत्वं न। कीलालपेति। कीलालं जलम्। तत् पिवतीति विग्रहः। विच्। कीलालममृतं जीवनं भुवनं वनम्—इत्यमरः॥ ब्रह्मभ्रूणेति उत्तरत्र क्विपोऽनुवृत्त्यर्थमेतत्।

२४१८। बहुलं छन्दसि॥ ३।२।८८॥

टी—। उपपदान्तरेऽपि हन्तेर्बहुलं क्विप् स्यात्। मातृहा। पितृहा॥ 'छन्दसि लिट्' (२०८३)—भूतसामान्ये। अहं द्यावापृथिवी आ ततान॥ 'लिटः कानज्वा' (२०८४)। 'क्वसुश्च' (२०८५)। छन्दसि लिटः कानच्क्वसू वा स्तः। चक्राणा वृष्णिम्। यो नो अग्ने अररिवाँ अघायुः। 'णेश्छन्दसि' (२११७) ण्यन्ताद्-धातोश्छन्दसि इष्णुच् स्यात्तच्छीलादौ। वीरुधः पारयिष्णवः॥ 'भुवश्च' (२११८)—अस्मात् केवलात् प्राग्वत्। भविष्णुः। 'छन्दसि परेच्छायां क्यच उपसंख्यानम्' (वार्तिकः)। 'क्याच्छन्दसि' (२१५०)—उप्रत्ययः स्यात्। अघायुः। 'एरजधिकारे जवसवौ छन्दसि वाच्यौ' (वार्तिक)। जवेयाभियूनः। ऊर्वोर्मे जवः। देवस्य सवितुः सवे।

क्विप् is attached irragularly after हन् etc if other उपपद्s than ब्रह्म, भ्रूण and वृत्र precede. Thus मातृहा, पितृहा etc. भूतसामान्ये—i.e लिट् in the vedas is used in the past sense in general. 'अहम्—' etc Here आततान—in लिट्। चक्राणा—कृ + कानच् (आन) optionally in place of लिट्—hence द्वित्व etc. वृष् due to

want of गुणवृद्धि as the affix is कित्. यो नो—Here अररिवा (or अररिवान्)=रा (to give)+क्वसु (वस्) in place of लिट्, hence द्वित्व etc, इट् comes in by 'वस्वेकाजाद्घसाम्' (3096). Then न ररिवान्—नञ्तत. पारयिष्णवः—पृ+णिच्+इष्णुच in the sense of तच्छील तद्धर्म etc, 'णेश्छन्दसि' (3117). भुवश्च—' भू also, when stands by itself, takes इष्णुच in the sense of तच्छील etc in vedas—भविष्णु. 'छन्दसि—'(Varttika) This Vartika is in connection with 'सुप आत्मनः क्यच्' (2659) and means that क्यच् has to be enlisted as having taken place after a base even in tne sense of 'other's wish' (and not only) of one's. Thus अघायुः—wishing sin on the past of others. अघ क्यच् अघाय by 'अश्वाघस्यात्' (3590) then add उ by 'क्याच्छन्दसि' (3150). 'एरजधिकारे—'(Varttika) under the scope of (the rule) 'एरच्' (3231) words जव and सव has to be included as having taken अच् (जु+अच, सु+अच) in the matter of vedic language. जव and सव could have been formed with अप् by 'ऋदोरप्' (3232) but their inclusion under अच् is for अन्तोदात्तता by 'चितः' (3710) which is clear from the instance herein.

मित्र—। बहुलमिति। लोके 'ब्रह्मादिष्वेव क्विबेव इति द्विविधो नियम इति भाष्यम्' इति 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति सूत्रे उक्तम्। तेन तादृश नियमादप्राप्तः क्विप् छन्दसि विषये प्रतिप्रसूयते। तदाह—उपपदान्तरेपीति। ब्रह्मभ्रूणवृत्रभिन्ने-ऽप्युपपदे इत्यर्थः। मातरं हन्ति, हतवान् हनिष्यति इति वा मातृहा एवं पितृहा। 'बहुलग्रहणात् क्वचिन्न पितृघातः' इति नागेशः। आततान—आङ्पूर्वात्तनोतेर्लिट्। 'णलुत्तमो वा' इति पाक्षिकवृद्धिः। पक्षे ततन इति। चकाणेति। करोतेर्लिटः कानच्। लिडादेशत्वाद् द्वित्वादि। कित्त्वाद् गुणवृद्ध्योरभावे यण्। अररिवा इति—न ररिवान् इति नञ् समासः। तत्र ररिवान् इति रा दाने इत्यस्माल्लिटः क्वसौ द्वित्वादिरूपम्—'आतो लोपः—' इत्याल्लोपात् 'वस्वेकाजाद्—'

( ३२६ ) इतीडागमेन निष्पन्नम् । 'दीर्घादटि—' इति नस्य रुत्वे आतोऽटि नित्यम् । इति रो: पूर्वस्यातो नित्यमनुनासिक: । 'छेऽछन्दसि' इति एतत् पूर्ववन्न व्याख्यातमिति आह—यत्नाभ्यामित्यादि । 'अलङ्कृञ् निराकृञ्—' ( ३।२।१२६ ) इत्यत्र इष्णुचोऽनुवृत्ति: । 'आक्वेस्तच्छीलतद्धर्म—' (३।२।१३४) इति तच्छीलाद्यनुवृत्तिश्च । प्रागवदिति । छन्दसीष्णुच तच्छीलादाविति शेष: । पृ+णिच्+इष्णुच, भु+इष्णुच् । 'छन्दसि परेच्छायाम्—' इति वार्तिकमिदम् । 'सुप आत्मन: क्यच्' ( २६५७ ) इति सूत्रस्थमिदम् वार्तिकम् । अघायुरिति । परस्य अघं ( पापम् ) इच्छतीति विग्रह: । अघ+क्यच्—इति स्थिते 'अश्वाघस्यात्' ( ३५९० ) इति वक्ष्यमाणेनाकारादेशे अघाय इति । तत: 'क्यात् छन्दसि' इति उ: । 'एरजधिकारे—' इति वार्तिकमिदम् । छन्दसि विषये जव इति सव इति च शब्दौ अचप्रत्ययेन निपात्येते इति 'एरच्' ( ३२३१ ) इति सूत्राधिकारे वाच्यमित्यर्थ: । 'ऋदोरप्' ( ३२३२ ) इति प्राप्ते वचनम् । जु इति सौत्रो धातु: । षूङ् प्राणिगर्भविमोचने । षु प्रसवैश्वर्ययो: । आभ्यामपि कृते अन्तोदात्तत्वान स्यात् । अचि तु कृते 'चित:' (३७१२) इत्यन्तोदात्तं भवति । तदुदाहरति—जवे याभिरिति । सवितु: सवे इति च ।

## ३४२० । मन्त्रे वृषेषपचमनविदभूवीरा:उदात्त: ॥ ३।३।९६ ॥

दी—वृषादिभ्य: क्तिन् स्यात् स चोदात्त: । वृष्टिं दिव: । सुम्नमिष्टये । पचात् पक्तीरुत । इयं ते नव्यसी मति: । वित्ति: । भूति: । अग्न आयाहि वीतये । राती स्यामोभयास: ।

In respect of मन्त्र or vedic hymns क्तिन् after वृष्, इष्, पच मन्, विद्, भू, वी and रा come and the affix is उदात्त ।

मित—। मन्त्रे वृषेषेति । वृषु वचने । इष इच्छायाम् । पचपाकि, मन ज्ञाने मनु बोधने इत्युभयोरपि ग्रहणम् । विद ज्ञानादिषु । भू सत्तायाम् । वी गतिव्याप्तिप्रजन-कान्त्यासनखादनेषु । रा दाने । सूत्रे पञ्चम्यर्थे प्रथमा । तदाह—वृषादिभ्य इति । वृष्टिं दिव इत्यादि । वृषादिभ्य: क्रमेण क्तिनुदाहृत: । एषूदाहरणेषु क्तिन उदात्तत्व स्पष्टम् । क्तिन् इति 'स्त्रियां क्तिन्' इत्यतोऽनुवर्तते इति बोध्यम् । नव्यसी नवतरा ।

मतिरिति। 'अनुदात्तोपदेश—' इत्यनुनासिकलोपः। अन्यत्र यथायथं क्तिन्यत्र गुणः। 'वीतये' भक्षणार्थम्। 'गृणानो हव्यदातये निहोता सत्सि बर्हिषि' इति मन्त्रशेषः। सामवेदस्यायं मन्त्रः।

## २४२१। छन्दसि गत्यर्थेभ्यः ॥ ३।३।१२९ ॥

**टी—। ईषदादिषूपपदेषु गत्यर्थेभ्यो धातुभ्यश्छन्दसि युच् स्यात्। खलोऽपवादः। सूपसदनोऽग्निः।**

ईषद्-etc i.e ईषत्, दुर् and सु preceding the roots implying motion take युच् in vedic literature this (युच्) supersedes खल् due by 'ईषद्दुःसुषु—'। सूपसदन—fire who is easy of access—सु + उप + सद + युच्।

मित—। छन्दसि गतीति। 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' (३।३।१२६) इत्यत्र 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु' इत्यनुवर्तते। 'आतो युच्' (३।३।१२८) इत्यतो युजिति च। तदाह—ईषदादिषु इति, कृच्छ्राकृच्छ्रार्थेषु योजनीयम। सूपसदन इति। सुखेन उपसद्यते इति विग्रहः। अकृच्छ्रार्थे युच। एवं दुरुपसदन ईषदुपसदनः। खलितु सूपसद इत्यादि स्यात्।

## २४२२। अन्येभ्योऽपि दृश्यते ॥ ३।३।१३० ॥

**टी—। गत्यर्थेभ्यो येऽन्ये धातवस्तेभ्योऽपि छन्दसि युच् स्यात्। सुवेदनामकृणोर्ब्रह्मणे गाम्।**

Roots other than those of motion take युच् in the vedas in the senses as above. 'सुवेदनाम्—'You made a speech or praise of Brahman that is easily understood or highly lucid. सु + विद + युच् + आप् स्त्रियाम्।

मित—। अन्येभ्योऽपीति। भागवदनुवृत्तिस्तदाह—गत्यर्थेभ्य इत्यादि। ईष-

दादिषु उपपदेषु क्तच्, क्तिच्, र्थेषु इति योजनीयम्। सुवेदनाम् इति। सुखं विद्यते ( ज्ञायते अर्थो यस्याः ) इति विग्रहः। सूपपदाद् विदेर्युच। लघूपधगुणः। एवमीष-दादिषूदाहर्त्तव्यम्। अकृषीत् = कृतवान् त्वमिति शेषः—गणकार्य्यमनित्यमिति कृत्याच्यत्ययो बहुलमिति वा शपः लुक्।

३४२२। छन्दसि लुङ्लङ्लिटः ॥ ३।४।६ ॥

दी—। धात्वर्थानां सम्बन्धे सर्वकालेष्वेते वा स्युः। पक्षे यथास्वं प्रत्ययाः। देवो देवेभिरागमत्। अत्र लोडर्थे लुङ्। इदं तेभ्योऽकरं नमः। लङ्—अग्निमद्य होतारमवृणीतायं यजमानः। लिट्—अद्य ममार, अद्य म्रियत इत्यर्थः।

These affixes viz लुङ्, लङ् and लिट् are employed optionally after roots as far as their senses are concerned under all times. In the alternative cases they are used in their own particular ways i.e लुङ् is used in the past sense in general, लङ् in अनद्यतन past sense and लिट् in परोक्ष past sense. 'देवो देवेभिः—'Let the deity (fire) come with the gods'—here in आगमत् लुङ् has been used in the sense of लोट्. देवेभिः = देवैः by 'बहुलं छन्दसि' (7.1.10) under 'अतो भिस ऐस्' (7.1.9). 'इदं तेभ्यः—'Let this be my obeisance to them'—here लुङ् has been used in the sense of लोट्. अकरम्—कृ + लुङ् see under 'कृमृदृरुहिभ्यश्छन्दसि' (3406). अग्निमद्य—'This sacrificer ( यजमान ) chooses fire to-day as the priest (for him); here लङ् has been used in the sense of लट्. अद्य ममार—लिट् in the sense of लट्. अद्या is the संहितापाठ is accounted for by 'अन्येषामपि दृश्यते' (3539)

मित—। छन्दसि लङ् इति। 'धातुसम्बन्धे प्रत्ययाः' ( ३।४।१ ) इत्येतत्

सर्वमप्यनुवर्तते। 'समुच्चये सामान्यवचनस्य' (३।४।४) इत्यतः सामान्यवचनस्येति च। तद् व्याचष्टे—धात्वर्थानां सम्बन्धे इत्यादि। धात्वर्थसम्बन्धश्च प्रागेव तत्रैव सूत्रे (धातुसम्बन्धे—इत्यत्र) विशदीकृत इति तत्रैव द्रष्टव्यः। एते इति। लुङ् लङ् लिट् इति प्रत्ययाः वा स्युरिति। 'समुच्चयेऽन्यतरस्याम्' (३।४।५) इत्यतोऽन्यतरस्यामित्यस्यानुवृत्तेरिदम्। पक्षे यथास्वमिति। तथाच यथा लोके (सर्वकाले) 'लुङ्' 'अनद्यतने लङ्', 'परोक्षे लिट्' च तथा छन्दस्यपि प्राप्नोतीति भावः। देवो देवेभिरिति। अत्र आगमदिति आगच्छतु इत्यर्थे। तदाह—लोडर्थे लुङ् इति। ऋग्वेदस्यादिमाग्निसूक्तस्थमिदम्। देवोऽदेवेभिरन्यैर्देवैः सार्द्धमागच्छत्विति मन्त्रार्थः। 'बहुलं छन्दसि' इति अतो भिस ऐसभावः। इदं तेभ्य इति—अत्रापि अकरमित्यत्र लोडर्थे लुङ्। अकरमिति 'कृमृदृरुहिभ्यः छन्दसि' (२००६) इत्यत्र साधितम्। 'अग्निमद्य—' अत्र अवृणीत इति लङर्थे। अवृणोतीत्यर्थः। ब्रवरणे क्र्यादिः। तस्माल्लङ्। 'क्र्यादिभ्यः श्ना' 'ई हल्यघोः' इतीत्वम्। लिटमुदाहरति अधेति ममारेति। 'म्रियतेर्लुङ् लिङोश्च' इति लिटि तङभावः। 'अचो ञ्णिति' (२५४) इति वृद्धिः। अधा इत्यत्र 'अन्येषामपि दृश्यते' (३४३९) इति संहितायां दीर्घः।

## ३४२४। लिङर्थे लेट् ॥ ३।४।६ ॥

## टी—। विध्यादौ हेतुहेतुमद्भावादौ च धातोर्लेट् स्याच्छन्दसि।

In vedic literature the affix लेट् (the fifth लकार) is employed after a root in the senses of injunction (विधि) etc 'cp—विधिनिमन्त्रण—'(2208) and in the sense of cause and effect (cp—'हेतु हेतुमतोर्लिङ' 2813).

मित—। लिङर्थे इति। 'विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु', 'हेतुहेतुमतोर्लिङ्' इत्यत्र च स्पष्टम्। तदाह—विध्यादावित्यादि। पूर्वसूत्रात् छन्दसीति। लेडिति पञ्चमो लकारः।

२४२५। सिब्बहुलं लेटि ॥ ३।१।३४ ॥

The विकरण सिप् is variously used after roots in लेट i.e it is somewhere used and somewhere not. Note that सिप् retains स् only and is followed by शप् and then by तिप्, तस् etc.

मित—। सिब बहुलमिति। सिप इति विकरणः। स च लेडविषये बहुलं प्रयुज्यते। सिपः सकारमात्रं शिष्यते। सिपः परं शप् ततस्तिबादय इति बोध्यम्। सिबभावे तु यथापूर्वं शप्तिबादयः।

२४२६। इतश्च लोपः परस्मैपदेषु ॥ ३।४।९७ ॥

टी—। लेटस्तिङामितो लोपो वा स्यात् परस्मैपदेषु।

In the cases of परस्मैपद, इकार of the तिङ affixes optionally disappear when लेट follows.

मित—। इतश्चेति। 'तिप तस् झि—' (३।४।७८) इत्यतस्तिङामित्यस्यानुवृत्तिः। 'वैतोऽन्यत्र' (३।४।९६) इत्यतो वेति चानुवर्तते। 'लेटोऽडाटौ' (३।४।९४) इत्यतो लेट इति च। तदाह—लेटस्तिङामिति। इत इति इकारस्येत्यर्थः।

२४२७। लेटोऽडाटौ ॥ ३।४।९४ ॥

टी—। लेटः अट् आट् एतावागमौ स्तस्तौ च पितौ। 'सिब्बहुलं णिद्वक्तव्यः' (वार्तिक)। वृद्धिः। प्र ण आयूंषि तारिषत्। सुपेशसस्करति जोषिषद्धि। आ साविषदर्शसानाय। सिप इल्लोपस्यचाभावे—पताति दिद्युत्। प्रियः सूर्ये प्रियो अग्ना भवाति।

अट् and आट् are the augments of लेट i.e of its substitutes तिप् etc and they are पित्। 'सिब्बहुलम्—' Varttika.—It has to be said that सिप् is variously णित् (this is for वृद्धि). 'प्रण—तारिषत्—

तृ + सिप् + अट् + तिप् = तार्इट् स् अत्—वृद्धि due to णित्त्व of सिप् and इट् by 'आर्धधातुकस्य—' + इलोप by former rule = तारिषत्—षत्व by 'आदेशप्रत्ययोः' (213). करति—कृ + शप् ( instead of उ ) + तिप्। जोषिषत्—जुष् सिप् + अट् + तिप् = जोष् + इस् अत्—इट् as before गुण by 'पुगन्त—' (2189). Break up as आसाविषत् + अर्धमानाय। आसाविषत्—आ —सु सिप् + अट् तिप् वृद्धि and इट् as before. When सिप् aswell as elision of इ is wanting we have the augment आट् e.g. पताति = पत् + शप् + आट् तिप् and भवाति—भू + शप् + आट् तिप्,

सित—। लेट इति। लेडादेशस्य अट आडित्यागमौ क्रमेण भवतः। क्वचिदट न तु युगपत्। तथा च सिपि इलोपे च सति प्रायेण अडागमः। तदुभयाभावे तु प्रायेण आडागम इत्युदाहरणेन विशदीकरिष्यते। तौ च पिताविति। 'आद्यन्तमस्य पित्व' ( ३।४।९२ ) इत्यतस्तदनुवृत्तेरिति बोध्यम्। 'सिब्बहुलम्—' वार्तिकमिदम्। सिपि सति धातोर्यत् कार्यं बहुलं स्यादिति वक्तव्यमित्यर्थः। वृद्धिरिति। तारिषदित्यत्र 'अचो ञ्णिति' ( २५४ ) इति वृद्ध्यर्थमिदम्। तृ प्लवनतरणयोः इत्यस्मात् सिप् अट् तिप इति स्थिते अनेन वृद्धिः। सिप इट आर्धधातुकत्वात्। आदेशप्रत्यययोरिति षत्वम्। करति शप 'बहुलं छन्दसि' इति बहुलवचनादत्र शब् न। इतश्चेतीकारलोपः। करतीति। 'तनादिकृञ्भ्यः—' इत्युप्रत्ययस्य व्यत्ययेन शप। गुणः। जोषिषत्—जुषी प्रीतिसेवनयोः। अनुदात्तेत्। व्यत्ययेन परस्मैपदम्। प्राग्वत् सिपि अटि कृते गुणः। इट। इतश्चेति प्रत्ययस्येकारलोपश्च। आसेति। आसाविषत् + अर्धमानाय इतिच्छेदः। आङ्पूर्वात् सु प्रसवैश्वर्ययोरित्यस्मात् सिपि ( इटि ) अटि तिपि च कृते वृद्ध्यावादेशे प्रत्ययेकारलोपे च आसाविषदिति। सिप इति। सिपः अभावे इलोपस्य चाभावे इत्यन्वयः। आडिति भावः। तथैवोदाहरति—पताति इति। पत्लृ पतने अस्मात्सिप्। धातोरुत्तरं शप। प्रत्ययस्याडागमः। एवं भवति इत्यत्र प्रक्रिया बोध्या। सिप् इति वचनं प्रायिकाभिप्रायम्। इलोपे सत्यपि आडागमस्य दर्शनात्। तथाच मन्त्रः—विभः पतात् ( १।१।११ ) इति।

३४२८। स उत्तमस्य ॥ ३।४।९८ ॥

**टी—। लेडुत्तमसकारस्य वा लोपः स्यात्। करवाव—करवावः। टेरेत्वम्।**

Elision of the सकार of the first person ( वस् or मस् ) of लेट् is optionally effected. Thus करवाव करवावः ( कृ+वस्=कृ+उ ( by तनादिकृञ्भ्यः ) वस्=करु ( by गुण )+आटवस=करो आवस—गुण of उ आट being पित्=करव आवस् then the forms as above. कृ+आताम् ( लेट ), here आताम् being आते by—टित आत्मनेपदानां टेरे we look ahead—

मित—। स इति। 'इतश्च लोपः—' ( ३।४।९७ ) इत्यतो लोप इति। 'वैतोऽन्यत्र' ( ३।४।९६ ) इत्यतो वेति चानुवर्तते। तदाह—लेडुत्तमसकारस्येत्यादि। करवाव—करवावः इति। कृञो लेटो वस्। 'तनादिकृञ्भ्यः—' इति उः। तस्य सार्वधातुको गुणः। रपरत्वम्। 'लेटोऽडाटौ' इत्याट्। तस्य पित्त्वेन ङित्त्वाभावाद् उविकरणस्य गुणः। अवादेशः। 'बहुलं छन्दसि' इति 'अत उत् सार्वधातुके' इत्यस्याप्रवृत्तिः। कृ+लेट् आताम् इति स्थिते'टितः—' इति एत्वमित्याह—टेरेत्वमिति। एवं कृ+आते इति जाते—

३४२९। आत ऐ ॥ ३।४।९५ ॥

**टी—। लेट आकारस्य ऐ स्यात्। सुतेभिः सुप्रयसा मादयैते। आतामित्याकारस्य ऐकारः। विधिसामर्थ्यादाट ऐत्वं न। अन्यथा हि ऐटमेव विदध्यात्। यो यजाति यजात इत्।**

ऐ is the substitute for the आकार of लेट. There are two आकारs in लेट one of आताम् and the other of आट. This rule refers to आकार of the affix आताम् and not of the augment आट

for otherwise the सूत्रकार could say ऐट in stead of आट. Thus this result is arrived at on the force of the injunction of आट् (आड्विधिसामर्थ्यात्—). For example यजाते in 'यो यजाति—' यज+आट ते. यजाति is with आट and तिप। 'सुतेभिः—'Let them two enjoy delight with sons as well as enjoyables (प्रयः=अन्न). Here मादयैते—मद+णिच (स्वार्थे)+आट आताम्=मादि+आ ऐते (by 'टित:—' and the present rule, then गुण, अयादेश etc).

मित—। आत इति। 'लेटोऽडाटौ' (३।४।९४) इत्यतो लेट इत्यनुवर्तते। तदाह—लेट आकारस्येति। सुतेभिः शोभनान्नेन च मादयैते मादयताम् सुखातिशय-मनुभवतामिति मन्त्रार्थः। अत्र मद+णिच् (स्वार्थे)+आट् आताम् (आते) इति अनेन सूत्रेण मादि आ ऐते इति भवति (आतामाकारस्यैव ऐत्वविधानात्)। ततो गुणादिना रूपम्। ननु कुत आतामेवाकारस्य ऐत्वं न तु आट इति प्रश्नः। तत्राह—विधिसामर्थ्यादिति। आड् विधि सामर्थ्यादित्यर्थः। आट एव विधित्सितत्वे तु लाघवात् 'लेटो ऐटौ' इत्येव ब्रूयादित्याह—अन्यथा हीति। आटकरणफलमाह—यो यजाति—इति। अत्र यजात इत्यत्र यजेरात्मनेपदे आटते। ऐटि सति यजैत इति स्यात्।

३४३० । वैतोऽन्यत्र ॥ ३।४।९६ ॥

**दी—। लेट एकारस्य ऐ स्याद्वा। 'आतऐ' (३४२८) इत्यस्य विषयं विना। पशूनामीशै। ग्रहा गृह्यान्तै। 'अन्यत्र' किम्? सुप्रयसा मादयैते।**

ऐ is the optional substitute for the affix ए of लेट excepting the perview of that of the एकार to be met with in the rule 'आत ऐ' (3429). 'पशूनाम्—' Let me be the lord of animals. ईश+इट=ईश+ए by 'टित:—'। Then ऐकार by this. ग्रहाः—Let the planets be accepted. गृह्यान्तै—ग्रह+यक+आट अन्ते (कर्मणि)

सम्प्र. by प्रसिज्या—' (2412), then ऐकार ; optional forms—ईशै, ईशाते।

मित—। वैत इति। वा+एत:+अन्यत्र इतिच्छेद:। 'लिटोऌलटौ' इति पूर्वसूत्राल्लेट इति। एत इत्यस्यार्थं एकारस्येति। अन्यत्रेत्यस्य विवरणम्—भात ऐ इत्यस्य विषयं विनेति। तथाच तत्सूत्रविषये ये एकारान्ता: प्रत्यया: (टेरत्वविधिना) उपलभ्यन्ते तेषाम् एकारस्य लेडन्तमुत्तर्त्वेऽपि नानेन ऐ विकल्प:।

## २४२१। उपसंवादाशङ्कयोश्च ॥ ३।४।८ ॥

**दी—। पणबन्धे आशङ्कायां च लेट् स्यात्। अहमेव पशूनामीशै। नेज्जिह्मायन्तो नरकं पताम। 'हल: श्न शानज्झौ' (२५५७)।**

लेट is appointed when any conditional contract ( पणबन्ध ) or possibility ( of something wrong ) implied. 'अहमेव—' Ican dothis for you on the condition—that I alone shall lord it over the animal world. 'नेज्जिह्मायन्त:—'We wish that we should not possibly fall into hell for our wishing sin or sinful conduct towards others. जिह्मायन्त:—जिह्म (sin or vicious act )+क्यच by 'छन्दसिपरेच्छायामपि', दीर्घ by योगविभाग of 'अश्वाघस्यात्' (3546). Then शतृ। न+इत्+जिह्मायन्त:=इत् implies possibility. 'हल: श्न:—'This is for the next rule—

मित—। उपसंवादेति। उपसंवाद पणबन्ध:। स च भवानिदंमदर्थं कुर्याच्चेत्तदा करिष्याम्यहमेतद् भवदर्थं इत्येवंरूप: समय:। अहमेवेति। अहमेव पशूनामीशै इति चेद् भवति तदा त्रिपुरं विजेष्येऽहमिति त्रिपुरविजये देवै: प्रार्थितस्य रुद्रस्येदं वचनम्। पशवो जीवा:। संसारिण इत्यर्थ:। उपसंवादे उदाहरणमिदम्। अथ आशङ्कायामुदाहरति—नेज्जिह्मायन्त इति। न+इत्+जिह्मायन्त इतिच्छेद:। तत्र इदिति आशङ्कायोतनार्थम्। जिह्मं पापम्। 'तत् परस्य इच्छति

इति विग्रहे 'छन्दसि परेच्छायाम् क्यच उपसंख्यानम्'। 'अश्वाघस्यात्' (२५४६) इति योगविभागादात्वम्। ततः शतृ। अन्यस्य पापेच्छा मास्तु इत्यर्थः। यद्वा जिघ्रांसि जिघ्रांसाचरणम्। अचेतु उपमानादन्यत्रापि छान्दसत्वादाचारे क्यचमाहुः। 'हलःश्नः' इति उत्तरार्थमिदम्—

२४२२। छन्दसि शायजपि ॥ ३।१।८४ ॥

टी—। अपि शब्दात् शानच्। 'हृग्रहोर्भश्छन्दसि' (वार्तिक) इति हस्य भः। गृभाय जिह्वया मधु। वधान देव सवितः। 'अनिदिताम्—' (४१५) इति वध्नाते र्नलोपः। गृभ्णामि ते। मध्वा जभार।

शायच as well as शानच, in vedic literature is employed in place of श्ना। 'हृग्रहोः—' Varttika—ह of हृ and ग्रह is replaced by 'भ' in the vedas. Thus 'गृभाय—etc—Take honey with the tongue. गृभाय—ग्रह + श्ना + हि = गृह + शायच by 'ग्रहिज्या—' = गृभाय and—गृहाण (with शानच)। 'वधान—' alt. बधाय। The instances of हृ and ग्रह with ref: to the Varttika are—गृभ्णामि ते and मध्वा जभार (हृ + लिट् अ) in places of गृह्णामि and जहार।

मित—। छन्दसीति। छन्दसि विषये हलन्ताद्धातोः परस्य श्नाविकरणस्य शायच शानच् च स्यात् हौ परे इत्यर्थः। 'हृग्रहोभ—' इति वार्तिकमिदम्। हरतेर्ग्रहेश्च हस्य भः स्याच्छन्दसि विषये इति तदर्थः। गृभाय इति गृहाण इत्यर्थः। ग्रह + श्ना + हि इति स्थिते 'ग्रहिज्या—' (२४१२) इति श्नाप्रत्ययस्य ङित्वात् सम्प्रसारणे कृते तस्य शायचि सती हेरिति हेर्लोपे हृग्रहोरिति भः। पक्षे गृभाण इति। बधान इति। श्ना प्रत्ययस्य ङित्वान्नलोपार्थमाह—अनिन्दितामिति पक्षे शायचि बधाय इति। प्रसङ्गाद् वार्तिकमुदाहरति—गृभ्णामि ते इति। अत्र ग्रहेर्हस्य भः। गृह्णामि इति लोके। श्नाप्रत्ययस्य ङित्वात् सम्प्रसारणम्। नत्वम्। जभार=

जह्रारेति लोके। हरतेर्लिट् णल्। 'अचो ञ्णिति' (२५४) इति वृद्धौ रपरत्वम्। मूलेऽपि शब्दाद् द्विप्रत्ययाभावेऽपि शायच्।

२४२२। व्यत्ययो बहुलम् ॥ ३।१।८५ ॥

टी—। विकरणानां बहुलं व्यत्ययः स्याच्छन्दसि। आण्डा शुष्णस्य भेदति। भिनत्ति इति प्राप्ते। जरसा मरते पतिः। म्रियत इति प्राप्ते। इन्द्रो वस्तेन नेषतु। नयतेः लोट्। शप्सिपौ द्वौ विकरणौ। इन्द्रेण युजा तरुषेम वृत्रम्। तरेमेत्यर्थः। तरतेः विध्यादौ लिङ्। उः शप् सिप् चेति त्रयो विकरणाः।

"सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङां च।
व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपिच सिध्यति बाहुलकेन॥
(इति भाष्यम्)।

धुरि दक्षिणायाः। दक्षिणस्यामिति प्राप्ते। चषालं ये अश्वयूपाय तक्षति। तक्षन्तीति प्राप्ते। उपग्रहः परस्मैपदात्मनेपदे। ब्रह्मचारिणमिच्छते। इच्छतीति प्राप्ते। प्रतीपमन्य ऊर्मिर्युध्यति। युध्यत इति प्राप्ते। मधोस्तृप्ता इवासते। मधुन इति प्राप्ते। नरः=पुरुषः। अधा स वीरैर्दशभिः वियूयाः। वियूयादिति प्राप्ते। कालः=कालवाची प्रत्ययः। श्वोऽग्नीनाधास्यमानेन। लुटो विषये लृट्। तमसो गा अदुक्षत्। अधुक्षदिति प्राप्ते। मित्र वयं च सूरयः। मित्रा वयमिति प्राप्ते। स्वरव्यत्ययस्तु वक्ष्यते। कर्तृशब्दः कारकमात्रपरः। तथाच तद्वाचिनां कृत्तद्धितानां व्यत्ययः। अन्नादाय। अण्विषयेऽच्।

**अवग्रहे विशेषः । यङो यश्चब्दादारभ्य 'लिङ्याशिष्यङ्' ( २४३४ ) इति ङकारेण प्रत्याहारः । तेषां व्यत्ययो भेदतोल्यादिरुक्त एव ।**

Additions and alterations ( व्यत्यय ) of affix as (of विकरण ) are variously effected in the vedic literature. Thus 'आण्डा—' the root भिद् being रुधादि, the विकरण 'श्नम्' which was due by 'रुधादिभ्यः—'has been replaced by the विकरण शप and consequently शप being पित् the root gets गुण by 'पुगन्त—'(2189). मरते here मृङ् प्राणत्यागे being तुदादि, विकरण श was due by तुदादिभ्यःशः but it has been replaced by शप् and consequently the root gets गुण by 'सार्वधातुकार्ध—' (2164). नेषतु—this in place of the लौकिक form नयतु. Here (in नेषतु ) there are two विकरणs शप and सिप. सिप is followed by शप—नी + सिप तु. ( लोट ) 'एङ'— सिप being पित् the root gets गुण, षत्व by आदेशप्रत्यययोः (213). तरुषेम—of this again the लौकिक form isतरेम. Here ( in तरुषेम ) there is लिङ् in the sense of विधि etc which (लिङ् ) is followed by the विकरणs—उ, शप and सिप whereas शप् only was due ; as तृ is भ्वादि । That the term बहुल in the rule is to indicate violation of each and every injnnction is clear from the verse below which has been quoted from the Bhashya—सुप्तिङ् etc—

The author of the treatise of अष्टाध्यायी intends change or replacement ( व्यत्यय ), in multifarious ways ( बाहुलकेन ) ; of this—viz सुप् ( सु, औ, जस etc.), तिङ् ( तिप्, तस झि etc ) उपग्रह ( technical name for परस्मैपद and आत्मनेपद ), लिङ्ग gender, person (नर=पुरुष—1st, 2nd and 3rd ), काल=tense, consonants and vowels, accent ( स्वर ), कर्तृ ( i.e कारकवाची affixes such as क्त and

तद्धित ), and यङ् ( this is not the frequentative affix but it is the प्रत्याहार beginning with the य herein and ending in ङ in the next rule 'सिङ्गाशिष्यङ्' (3.1.86) and thus includes all—?). The व्यत्यय of the affixes सुप् etc eunmerated in the verse are respectively dealt with in the instances as will follow :—

धुरि—सुप् व्यत्यय—षष्ठी in place of सप्तमी। तचति—तिङ् व्यत्यय—sing. for pl. इच्छति—युध्यते—change of पद. मधो:—लिङ्गव्यत्यय—masculine in place neuter. वियूयाः ( वि+यु+आशीर्लिङ् यास )—change of person—and instead of 3rd. आधास्यमानेन ( आ+धा+लृट शान+मुगागम ) here लृट् has been appointed in place लुट्। अदुघत्—change of हल् ( हलव्यत्यय ) here घ in place of ह was due by 'एकाचोबशोभष—'। मित्र वयम—change of अच् ( अजव्यत्यय ), here मित्रा with दीर्घ was due by 'अन्येषामपि दृश्यते' (3539). स्वरव्यत्यय or change of accent will be considered under स्वर प्रकरणम्. The word कर्तृ in the verse is for कारक which again implies the affixes such as कृत् and तद्धित employed in the senses of कर्ता, कर्म etc ( वाच्य ). Thus अन्नादाय—the dative ( चतुर्थी ) of अन्नाद ( अन्न अद+अच् ) which is irregularly derived with अच् where अण् was due by 'कर्मण्यण्'. The distinction between the form ( अन्नादाय ) derived with अण् and with अच् is evident in अवग्रह or पदपाठ i.e if अन्नादाय is derived with अण् then its breaking up in पदपाठ is अन्न आदाय whereas if it is the dative of अन्नाद ( derived with अच् ) the dissolution in पदपाठ is अन्न अदाय. The व्यत्यय of तद्धित affix is clear from illustrations like 'त्वं बोध यति ते जातवेदः'। Where the base यत् takes the affix अत which is restricted to the base किम् only. Similarly

'विश्वे देवासोमरुतो यतिष्ठान' etc. : यज्ञो यशन्दात् etc—explained in connection with the explanation of the verse from the भाष्य above.

मित—। व्यत्यय इति। व्यतिक्रम्य एति गच्छतीति व्यत्ययः। व्यतिपूर्वादिणो भावे अजिति शब्देन्दुशेखरः। व्यतिक्रम्य गमनञ्च क्वचित् विषयान्तावगाहनम्। क्वचिद् विषयद्वये प्रवृत्तिः क्वचिच्च विषयत्रये इति अधस्तनोदाहरणेषु स्फुटीभविष्यति। भेदतीति। भिदि रुधादित्वात् 'रुधादिभ्यःश्नम्' इति श्नमि प्राप्ते शप्। म्रते इति। मङ् प्राणत्यागे तुदादिः। तस्मात् 'तुदादिभ्यः शः' इति शे प्राप्ते शप्। नेषतिति। णीञ् प्रापणेभ्वादिः। द्वौ विकरणाविति। तत्र शपः प्राक् सिपः प्रयोग इति विवेकः। शिपः पित्त्वेन सार्वधातुकेति धातोर्गुणः। 'श्रादेश—'इति षत्वम्। नयतु इति लोके। तरुषेम इति तु प्रवनतरनयोः भ्वादिः। तयो विकरणा इति। एषु विवरणेषु उविकरणस्य प्राक् प्रवृत्तिः ततः सिपः ततः शप इति ज्ञेयम्। यत्रम् तृ+उ+सिप+शप+मस विधिलिङ्। व्यत्यय इत्येव सिद्धेबहुल- ग्रहणं सर्वोपाधिव्यभिचारार्थमिति भाष्यसंवादं पुरस्कृत्याह—सुप्तिङ् इति। शास्त्रकृत अष्टाध्यायीप्रणेता पाणिनिरिव सुपां (सु औजसादीनाम्), तिङां (तिप् तसादीनाम्), उपग्रहस्य (परस्मैपदात्मनेपदयोः) लिङ्गस्य (पुंस्त्रीलादेः) नरस्य पुरुषस्य (प्रथममध्यमोत्तमलक्षणस्य) कालस्य कालवाचिनो लकार- जातस्येत्यर्थः, हलो व्यञ्जनस्य, अचः स्वरस्य (उदात्तादेः), कर्तुः (तदुपलक्षित कारकवाचिनः कृतः तद्धितस्य च प्रत्ययस्येत्यर्थः)। यङश्च यङ् इति प्रत्याहारः। स चाद्यादेव यशब्दादारभ्य 'लिङ्याशिष्यङ्' इत्युत्तर सूत्रस्थङकारेण निर्मेय इति वक्ष्यति। ततश्च सर्वविधविकरणस्य व्यत्ययं व्यतिक्रमम् इच्छति। सः च व्यत्ययः बाहुलकेन बहूनानर्थान् लाति आदत्त इति बहुलः। तस्य भावो बाहुलकम्। मनोज्ञा- दित्वाद् वुञ्। तेन तादृशेन बहुलभावेन सिध्यतीत्यर्थः। सुबादिव्यत्ययं केषांचोदाहृत्य दर्शयति—धुरि दक्षिणाया इत्यारभ्य। अत्र सप्तम्यां प्राप्तायाम् व्यत्ययेन षष्ठी। तष्मतीति। भौ प्राप्ते व्यत्ययेन तिप। युध्यति इति। युध दिवादिरात्मनेपदी। मधुन इति। अमृत चौरयो वाचकौ मधुशब्दौ नित्यं क्लीवम् इति नागेशः। व्यत्ययेन

पुंस्त्वम्। विधूया इति। सुमिश्रयो विपूर्वः। आशिषि लिङ्। प्रथमपुरुषे प्राप्ते व्यत्ययेन मध्यमः। आधास्यमानेनेति अत्र कालव्यत्ययः। कालश्च तद्वाची लकार इत्युक्तम्। आङ्पूर्वाद् दधातेर्लृट्। 'लृटः सद्वा' इति तस्य शानच्। शाने सुपिति लुक्। आधाता इति लुटि प्राप्ते इदम्। अदुघदिति। अत्र हलव्यत्ययः। 'एकाचो बशो भष्—' भषभावेन धकारे प्राप्ते दकारः। मित्र वयमिति। अत्र स्वरव्यत्ययः। 'अन्येषामपि दृश्यते' (२४२९) इति दीर्घे प्राप्ते ह्रस्वः। स्वरव्यत्ययस्तु वक्ष्यत इति। उदात्तादिव्यत्ययः स्वरप्रकरणे दर्शयिष्यते। कर्तृशब्द इति। तेन 'दीव्यति—' इत्यादौ विधीयमानानां ठगादीनां देवनादिकर्तृत्ता-देवसुक्तम्। न तिङ्कारकवाचित्वेऽभ्याग्रहः। कृत्तद्धितमिति तात्पर्य्यात्। तथाच किमो विहितोऽतिप्रत्ययः व्यत्ययेन यच्छब्दादपि भवति। 'त्वं बोधयति ते जातवेदः' इति 'विश्वे देवासो मरुतो यतिष्ठन' इति च। एवमत्र तद्धितव्यत्ययो द्रष्टव्यः। कृदव्यत्ययमाह—अन्नादायेति। अन्नमदति इति अन्नादः। तस्मै = अन्नादाय। [अपितु ('कर्मण्यण्' इति सूत्रे ण) चतुर्थ्यन्तत्वाभावेऽपि आदाधातोः आतो युक्ति अन्नादाय इत्येव।] तत्र को विशेष इत्यत आह—अवग्रहे विशेषः। अवग्रहः = पदपाठः। तथाच यदात्र अण् विधीयते तदा अन्न आदाय इत्यवग्रहः। यदि तु अच तदा अन्न अदाय इति। अन्न आदाय इत्येव चावग्रहो दृष्टाऽन्नमादाय कृत्प्रत्ययव्यत्ययः। यङ् इति प्रागेवोक्तम्।

३४३४। लिङ्याशिष्यङ्॥ ३।१।८६॥

टी—। आशीर्लिङि परे धातोरङ् स्याच्छन्दसि 'वचउम्' (३४५४)—मन्त्रं वोचेमाग्नये। 'दृशेरग्वक्तव्य' (वार्तिक)। पितरं च दृशेयं मातरं च। अङि तु 'ऋदृशोऽङि' (२४०६) इति गुणः स्यात्।

In vedic literature अङ् after roots in आशीर्लिङ् is employed. Thus 'मन्त्रम्—' I should utter a hymn (मन्त्र = स्तुति) for अग्नि। 'दृशेः—' Varttika. It has to be said दृश् takes अक् in आशीर्लिङ्

( and not अङ् ). Thus पितरं च etc—may I have a sight of my parents. दृश् is not allowed गुण due to कित्त्व of अङ् but incase of अङ it would come by 'ऋदृ—'(2406).

मित—। लिङ्कीति। लिङि+आशिषि अङ इति च्छेदः। छन्दसि इत्यनुवर्तते। तत्र लिङि इत्यस्य विशेषणम्। तदाह—आशीर्लिङि पर इति। दृशेरिति वार्तिकमिदम्। आशीर्लिङि परे दृशेर्धातोरक् स्यात्र तु अङिति वाच्यमित्यर्थः। गुणाभावार्थमिदम् इत्याह—पितरं दृशेयमिति। अङित् गुणः स्यादित्याह—अङित्विति।

२४२५। छन्दस्युभयथा ॥ ३।४।११७ ॥

टी—। धात्वधिकारे उक्तः प्रत्ययः सार्वधातुकार्धधातुकोभयसंज्ञःस्यात्। वर्धन्तु त्वा सुष्टुतयः। वर्धयन्त्वित्यर्थः। आर्धधातुकत्वाणिलोपः। विशृण्विरे। सार्वधातुकत्वात्श्नुः शृभावश्च। 'हुश्नुवोः—(२३८७) इति यण्। 'आदृगमहनजनः किकिनौ लिट् च' (२१५१)। आदन्तादृवर्णान्ताद् गमादेश्च किकिनौ स्तस्तौ च लिड्वत्। बभ्रिर्वज्रम्। पपिः सोमम्। ददिर्गाः। जग्मिर्युवा। जघ्निर्वृत्रममित्रियम्। जज्ञिः। लिड्वद्भावादेव सिद्धे 'ऋच्छत्यॄताम् (२३८३) इति गुणबाधनार्थं कित्वम्। 'बहुलं छन्दसि' (२५७८) इत्युत्वम्। ततुरिः। जगुरिः।

In vedic literature affixes which have been dealt with under the jurisdiction of roots ( धात्वधिकार ) are to be considered as both सार्वधातुकs and आर्धधातुकs. Thus—वृध्+णिच् लोट अन्तु where णिच् elides due to its being regarded as आर्धधातुक। विशृण्विरे—वि शु+लिट ( इरे ), शु is भ्वादि। Hence लिट here being considered as a सार्वधातुक, 'स्वादिभ्यः श्नु' takes place

and श्न being ङित् by 'सार्वधातुकमपित्' the root is replaced by श्र by 'श्रुवः शृ च'. Thus वि+श्र+नु+इरे=विशृण्विरे by यण् by 'हुश्नुवोः सार्वधातुके'। 'आदृगमहनजनः—'Although this rule has been explained in the कृदन्त section yet its vedic character has caused its being laid down and explained here also. आकारान्त rules, ऋकारान्त roots and गम, हन and जन take both कि and किन् (the affixes) in vedic language and these affixes are to be treated as लिट. Thus बभ्रिः=भृ+कि or किन्, द्वित्व etc The distinction between कि and किन् with reference to account the former is अन्तोदात्त by प्रत्ययस्वर and the latter आद्युदात्त by नित्स्वर। Similarly—पपिः—पा+कि, ददिः—दा+कि, जग्मिः—गम्+कि उपधालोप by 'गमहन—' (२३६३). जज्ञिः—जन+कि। जघ्निः—हन कि, उपधालोपादि, and कुत्व by 'हो—'. Although the analogy 'लिड्वत्' would suffice, for लिट also is कित् by 'असंयोगाल्लिट् कित्'—yet the कित्करण of the affixes is to bar the गुण due by 'ऋच्छत्यृताम्' (2383)। ततुरिः etc—तॄ+कि—द्वित्व etc. उत्त्व of the root (ऋ) by 'बहुलं छन्दसि' after गुण has taken place.

मित—। छन्दसीति। 'तिङ्शित् सार्वधातुकम्' (३।४।११३) इत्यतः सार्वधातुकसंज्ञा इति 'आर्धधातुकं शेषः' (३।४।११४) इत्यत आर्धधातुकसंज्ञा इति च प्राप्तम्। 'धातुसम्बन्धे प्रत्ययाः' (३।४।१) इति चाधिकृतं वर्तते। ततो व्याचष्टे—धात्वधिकारे उक्तः प्रत्यय इत्यादि। वर्धन्त इति स्पष्टं पूर्वे। सुष्टु उच्चारिताः स्तुतयः प्रशस्तिवाचः त्वा त्वां स्तुतिविषयदेवतां वर्धयन्तु इद्धिमन्तं कुर्वन्त्विति मन्त्रार्थः। 'स्तुतस्तोमयोश्छन्दसि' (८।३।१०५) इति षत्वम्। विशृण्विरे इति। विपूर्वात् श्रृणोतेर्लिड् बहुवचनम् (इरे)। सार्वधातुकत्वादिति। अत्र लिड्भक्तेरिति यावत्। श्नुरिति। श्रुधातोः स्वादित्वात् 'स्वादिभ्यः श्नु'रिति श्नुः। शृभावश्चेति। 'श्रुवः शृ च' इत्यनेन शृभावः। तदेवं विशृणु इरे इति स्थिते आह—हुश्नुवोरिति। 'आदृगमहनजनः—'

( ३।२।१७१ ) यद्यप्येतत् सूत्रं पूर्वत्र ( उत्तरकृदन्तप्रकरणे ) व्याख्यातं तथाप्यस्य छन्दोविषयत्वात् अत्रोपन्यासो व्याख्यानञ्च। किकिनाविति। द्वयोरपि कित्त्वेन साम्येऽपि विशेषः स्वरे। तथाच कप्रत्ययान्तस्य प्रत्ययस्वरेणान्तोदात्तत्वम्। किन्नन्तस्य तु नित्स्वरेण आद्युदात्तत्वमिति बोध्यम्। बभ्रिरिति। लिड्वद्भावाद् द्वित्वादि। भृञः किः। 'न लोकाव्यय—' इति निषेधाद् वज्रमित्यत्र न षष्ठी। लिड्वदिति कार्यातिदेशार्थमेव न तु स्वरूपार्थमपि। तेन लिटि परे यथा णलादयः स्युः तथा किनि परे न। सूत्रे आत्+ऋ इतिच्छेदः। अत ऋदन्तमुदाहृत्य आदन्त मुदाहरति। पपिः सोमं ददिर्गा इति। उभयत्रापि किप्रत्ययः। पा+किः। दा+किः। जग्मिरिति जघ्निरिति च। गमेर्हन्तेश्च किः। 'गमहन—' इत्युपधालोपः। द्वित्वादि। 'हो हन्तेः—' कुत्वम्। जघ्निरिति। जनेः किः। धातोरुपधालोपः। ननु लिड्वद्भावे सति 'असंयोगाल्लिट् कित्' इत्येव लिटः कित्त्वमादाय 'स्थानिवदादेशः—' इति न्यायात् लिडादेशस्यापि कित्त्वे सिद्धे उक्तप्रत्यययोः ककारानुबन्धकरणं व्यर्थमित्याशङ्का समाधत्ते—लिड्वद्भावेनैव सिद्धे इत्यादिना। इति गुणबाधनार्थम् इति। किकिनोर्लिडादेशत्वेन अनेन प्राप्तस्य गुणस्य बाधनार्थमिति भावः। सूत्रे आद् इत्यत्र उच्चारणसौकर्यार्थः दकारो न तु तकारः। तेन तात्परत्वाभावाद् दीर्घस्यापि ऋकारस्य ग्रहणम्। अत एवोदाहरति—ततुरिः इति जगुरिरितिश्चाहुः। तॄ गॄ अनयोः किः किन्वा। लिड्वद्भावेन द्वित्वे प्राप्ते द्वित्वात् परत्वात् 'बहुलं छन्दसि' इत्युत्त्वं प्राप्तम्। 'द्विर्वचनेऽचि' इति निषेधात्तु द्वित्वात् प्राग् गुणो न भवति किन्तु द्वित्वात् परमेव द्वितीयस्यैव ( अङ्गस्यैव ) उत्त्वम्। रपरत्वम्। पूर्ववत् अभ्यासकार्यम्। तूर्णवनतरणयोः गृनिगरणे।

३४३६। तुमर्थे सेसेनसेअसेन्क्सेकसेनध्यैअध्यैन् कध्यै कध्यैन् शध्यै शध्यैन्तवैतवेङ्तवेनः॥ ३।४।९॥

दौ—। से। वक्षे रायः। सेन्। ता वामेषे। असे। शरदो जीवसे धाः। असेन्—नित्त्वादाद्युदात्तः। क्से। प्रेषे। कसेन्। गवामिव श्रियसे। अध्यै। अध्यैन्। जठरं पृणध्यै।

पचध्यै आद्युदात्तः। कर्धे कर्धेन्। आहुवध्यै। पचध्यै नित्स्वरः। शध्यै। राधसः सह मादयध्यै। शध्यैन्। वायवे पिबध्यै। तवै। दातवा उ। तवेङ्। सूतवे। तवेन्। कर्तवे।

In vedic literature, these fiften affixes, से, सेन्, असे, असेन, क्से, कसेन, अध्यै, अध्यैन्, कध्यै, कध्यैन्, शध्यै, शध्यैन्, तवै, तवेङ् and तवेन् are employed after roots in the sense of तुम् ( or तुमुन् ) i.e in the sense of भाव ; cp the dictum (of भाष्य) 'अव्ययकृतो भावे'. वक्षे ( to speak ) वच्+से=वक् से by 'चोः कुः' (378)=वक् षे by 'आदेश—'(210) then च। वह् (to carry) ; वह्+से=वढ से by 'होढः' (324)=वक से by 'षढोः कः सि'. Then as before. एषे—इ (to go) +सेन =गुण 'सार्वधातुकार्ध—' (2164) and षत्व. The distinction between से, सेन ; असे, असेन् etc is that the former affix in each case makes the derivative अन्तोदात्त by प्रत्ययस्वर whereas the latter makes the same आद्युदात्त by 'ञ्नित्यादिर्नित्यम्'. जीवसे ( to live ) जीव=असे or असेन्. प्रेषे (to proceed) प्र+इ+केस— कित्. श्रियसे ( to have recourse to ) श्रि+कसेन्—गुण barred due to कित्व of कसेन्। पृणध्यै—(to fill up)—पृ+अध्यै or अध्यैन्—here गुण being barred by बहुलं छन्दसि। श्ना by 'क्र्यादिभ्यः—'takes place. ह्रस्व of the root by 'प्वादीनां ह्रस्वः' and आकार of श्ना ( ना ) disappears by 'श्नाभ्यस्तयोरातः—'then add अध्यै. आहुवध्यै to offer आ+हु+कध्यै or कध्यैन् each of them (the affixes) being कित्, गुण by 'सार्वधातुकार्ध—'is forbidden and consequenly उवङ् by 'अचि श्नु—'(272) takes place. Or (to call up) आ+ह्वे+कध्यै or कध्यैन् सम्प्र—by 'वचिस्वपि—'(2409) as ह्वेञ् belongs to यजादि class then as before. Nagesha holds that as आहुवध्यै and such other forms might be arrived at

with the help of अध्यै or अध्यैन् only as बाहुलक rules supreme in respect of rejecting गुण etc, there was no need of adding कध्यै, कध्यैन् and शध्यै शध्यैन् to the rest of the affixes से, सेन etc, and that this is also perhaps the opinion of the author (Bhattoji) himself. मादयध्यै—मद + णिच + कध्यै = मादि + कध्यै now कध्यै being (भाववाचि) सार्वधातुक यक by 'सार्वधातुके—'becomes due but व्यत्ययोबहुलम् takes effect and यक being rejected शप takes place causing गुण and अयादेश। मादि + शप + अध्यै मादय—अध्यै = मादयध्यै by 'अतो गुणे' (191). पिबध्यै—पा + कध्यैन् here also कध्यैन being a भाववाचि सार्वधातुक, यक though due, is forbidden to take effect as above and शप intervening पा is replaced by पिब by 'पाघ्रा—'(2360). Then 'अतो गुणे'। दातवै + उ = दातवाउ or दातवायु by 'लोप: शाकल्यस्य' (67). दातवै = दा + तवै (to give for दातुम् the secular from) सू + तवेङ—no गुण due to ङित्व—for लौकिक सोतुम्। कर्तवे to reform, कृ + तवेन्—गुण by 'सार्व—'; in place of कर्तुम्।

मित—। तुमुन इति। तुम: (तुमुन:) अर्थ: तुमर्थ:। तस्मिन् एते पञ्चदश प्रत्यया धातोर्भवन्तीत्यर्थ:। तुमर्थश्च भाव एव। 'अव्ययकृतो भावे' इति भाष्यनिर्देशात्। न चैवं तर्हि लाघवात् 'भावे'—इति कथं न सूत्रितमिति शङ्कितव्यम्। भावो द्विविध: सिद्धावस्थापन्न: साध्यावस्थापन्नश्च। तत्र सिद्धावस्थापन्नो भाव: 'भावे' इत्युत्सर्गो विहित:। साध्यावस्थापन्नाख्य: भाव: यत्प्रत्ययनिमित्तं भवति तमेव प्रत्ययमुत्सार्य विधीयते इति विवेक:। तस्मात्तुमर्थे इत्येवोक्तं न तु भावे इति। पञ्चदश क्रमेणोदाहरति—वचे इत्यादिना। अत्र वच् + से इति वह् + से इति व्युत्पत्तिप्रकार:। आद्ये 'चो: कु:' (३०८) इति कुत्वे 'आदेशप्रत्यययो:' (२१२) इति षत्वेन रूपम्। द्वितीये 'हो ढ:' (३२४) इति ढत्वे तस्य 'षढो: क:—' इति कत्वे प्रागवत् षत्वे च रूपम्। वक्तुं वोढुं चेति लोके। प्रेषे इति प्र + इण् गतौ तस्मात् से इत्यस्मिन् परे षत्वे रूपम्। यद्यपि से सेन् असे असेन् इत्यादि प्रतिप्रत्ययगतव्युत्पत्तिं प्रति न

किञ्चिद् विशेषप्रतिपत्तिकरं तथापि स्वरे विशेषादनयोः (प्रत्येकं) विशेषः 'तथाच से असे इत्यादीनां प्रत्ययस्वरेणान्तोदात्तत्वं' विधीयते सेन्, असेन् इत्यादीनां तु 'ञ्नित्यादिर्नित्यमि'ति आद्युदात्तत्वमेव विधीयत इति विभावनीयम्। जीवसे इति। जीव्+असे—जीवितुम् इति शेषः। असेन्निति। अत्रापि जीवसे इत्येव रूपम्। केवलं स्वरे विशेष इत्याह—नित्दिति। श्रियसे इति। श्रि+कसेन् इति स्थिते कित्त्वाद् गुणाभावे 'अचि श्नु—' (२७२) इतीयङ्। प्रध्यै—पॄ पालनपूरणयोरस्मात् अध्यै प्रत्ययः। बाहुलकाद् गुणाभावे त्रा। 'पॄादीनां ह्रस्वः' इति धातोः ह्रस्वादेशः। आलोपः। पूरितुमिति लोके। पचे अध्यैन्पचे इत्यर्थः। आहुवध्यै इति आ—ह्वे+कध्यै इति स्थिते कित्त्वाद् गुणाभावे 'वचिस्वपि—' (२४०९) इति सम्प्रसारणम्। 'अचि श्नु—' इत्युवङ्। यद्वा—आहु+कध्यै इति स्थिते प्राग्वदुवङ् बोध्यः। अत्र बाहुलकेनैव कित्त्वकार्ये सिद्धे (पिबध्यै इत्यादौ) कध्यै, कध्यैन्; शध्यै, शध्यैन् इति तुमर्थकप्रत्ययचतुष्टयं न कर्तव्यम्। उक्तरीत्या अध्यैअध्यैनभ्यामेव सिद्धेरिति शब्देन्दुशेखरकाराणामाशयः। तत्र दीक्षितपादाना-मपि मतमिति आहुवध्यै इत्युदाहरणादेव सूच्यत इति। आह्वातुम् इति आह्वातुमिति वा लोके। पचे नित्स्वर इति। कध्यैन पचे इत्यर्थः। मादयध्यै इति। मदी हर्षे। तस्माण्ण्यन्तात् शध्यैप्रत्ययः। तस्य तुमर्थे प्रत्ययत्वेन भाववाचित्वात् शित्त्वाच्च 'तिङ् शित्—' इति सार्वधातुकत्वात् 'सार्वधातुके यक्' इति यक् प्राप्तः। स 'व्यत्ययो बहुलम्' इति न भवति। किन्तु शबेव प्राप्नोति। तस्य पित्त्वात् 'सार्वधातु-कार्ध—' इति गुणेऽयादेशे च मादयअध्यै इति जाते 'अतो गुणे' (१९१) इति पररूपे रूपम्। मादयितुम् इति तु लोके। पिबध्यै इति। पा पाने शध्यैन इति शध्यैनप्रत्ययस्यापि भाववाचित्वात् सार्वधातुकत्वात् यकि प्राप्ते व्यत्ययेन शप्। 'पाघ्रा—' (२३६०) इति पिबादेशः। ततोऽतो गुणे यथोक्तं रूपम्। नित्त्वादाद्युदात्तः। पातुमिति लोके। दातवा उ इति। दातवै उ इति स्थिते 'लोपः शाकल्यस्य' (६७) इति पाक्षिको लोपः। पचे दातवाउ इति। दातुमिति लोके। न म्लेच्छितवै इति भाष्यम्। सूतवै इति। प्रत्ययस्य कित्त्वान्न गुणः। सोतुमिति इति लोके। कर्तवै इति। तस्यो गुणः। कर्तुमिति लोके।

२४२७। प्रयै रोहिष्यै अव्यथिष्यै ॥ ३।४।१० ॥

दी—। एते तुमर्थे निपात्यन्ते। प्रयातुं रोढुमव्यथितु-मित्यर्थः।

These three are irregularly arrived at with the affixes कै and इष्यै in the sense of तुम् in the Vedas. प्रयै—प्र या+कै—आलोप by 'आतो लोपः—'to go (प्रयातुम्). रोहिष्यै—रुह इष्यै to ascend (रोढुम्). अव्यथिष्यै नञ् व्यथ्+इष्यै not to feel pain (अव्यथितुम्).

मित—। प्रयै इति निपात्यन्ते इति। छन्दसीति। प्रयातुमित्याद्यर्थे इति शेषः।

२४२८। दृशे विख्ये च ॥ ३।४।११ ॥

दी—। द्रष्टुं विख्यातुमित्यर्थः।

These two also are irregularly found with the affix कै in the vedas against the classical forms द्रष्टुम् and विख्यातुम्। दृशे=दृश्+कै—no गुण due to कित्त्व of कै। विख्ये—वि+ख्या (प्रकथने) +कै 'आतो लोपः—'applying आ of ख्या disappears.

मित—। दृशे इति। एतौ तमर्थे निपात्येते छन्दसि। अथ लोकपरिगतं रूपमाह—द्रष्टुमित्यादि। दृश् के इति स्थिते कित्वाद् गुणाभावे रूपम्। अत्र योगविभागःअस्तिइत्याहुः। बाहुलकनैव गुणाभावे आलोपे च 'तुमर्थे से—' इति धप्रत्ययेनैव यथोक्त—रूपसिद्धिरिति तेषामाशयः।

२४२९। शकि णमुल्कमुलौ ॥ ३।४।१२ ॥

दी—। शक्नोतावुपपदे तुमर्थे एतौ स्तः। विभाजं नाशकत्। अपलुपं नाशकत्। विभक्तुमपलोप्तुमित्यर्थः।

If the root शक् is a contiguous word then these two are affixed to roots in the sense of तुम् in the Vedas. Thus

विभाजम् etc—was unable to divide ; वि+भज+णमुल्—वृद्धि due to णित्व by 'अत उपधायाः' (2282). 'अपलुपम्—'was unable to remove or deface—अप+लुप्+कमुल् ( अम् ) no गुण or वृद्धि due to कित्त्व of कमुल्।

मित—। शकि इति। शक् इति धातावुपपदे इत्यर्थः। तुमर्थे इत्यनुवर्तते। तदाह—शक्नोतावित्यादि। विभाजमिति—विपूर्वाद् भजेर्णमुल्। 'अत उपधायाः' ( २२८२ ) इत्युपधावृद्धिः। विभक्तुमिति लोके। अपलुपमिति। अपपूर्वात् लुप्लृ छेदने इत्यस्मात् कमुल्। तस्य कित्त्वाद् गुणवृद्ध्योरभावः। अपलोप्तमिति लोके। अशकदित्यत्र बहुलं छन्दसीति श्नो प्राप्ते शः। लङि् रूपम्।

## २४४०। ईश्वरे तोसुन्कसुनौ॥ ३।४।१३॥

## टी—। ईश्वरो विचरितोः। ईश्वरो विलिखः। विचरितुं विलेखितुमित्यर्थः।

When the term ईश्वर precedes as an उपपद any root in Vedic language may take (तोसुन्) and कसुन् ( अस् ) in the sense of तुमुन्। Thus ईश्वरः etc.—Able to move and to dig out (विलिखः) ( वि+चर तोसुन=तोस् ) वि+लिख+कसुन् no गुण due to कित्त्व of कसुन्।

मित—। ईश्वरे इति। अत्रापि तुमर्थे इत्यनुवर्तते। तेन ईश्वरशब्दे उपपदे तुमर्थे धातोस्तोसुन् कसुन्प्रत्ययौ स्तश्छन्दसि विषये। ईश्वरो विचरितोरिति। विचरितुं समर्थ इत्यर्थः। तोसुन उकार उच्चारणार्थः। ओकारः स्वरार्थम्। तोस् इति शिष्यते। चरेरिट् तोसुनि। ["विचारितोः" इति पाठे तु बाहुलकाद् वृद्धिः]। विलिख इति। विपूर्वाल्लिखेः कसुन् ( अस् )। कित्त्वान्न लघूपधगुणः।

## २४४१। कृत्यार्थे तवैकेनकेन्यत्वनः॥ ३।४।१४॥

## टी—। न म्लेच्छितवै। अवगाहे। दिदृक्षेण्यः। भूर्यस्य कर्त्वम्।

These four affixes तवै, केन, केन्य and त्वन् are appointed after roots in the sense of कृत्य i.e. also in the sense of भाववाच्य and कर्मवाच्य as there runs the rule 'तयोरेव कृत्यक्तखलर्थाः'. Thus म्लेच्छितवै ; add अस्माभिः as the अनुक्तकर्ता। That is—we should not act like Mlechhas. म्लेच्छ ( भ्वादि ) + तवै = इट् ; this is from the Bhashya. The remaining portion is 'इत्यध्येयम् व्याकरणम्' ( cp. Introduction to महाभाष्य ). Although this form could have been arrived at with तवै under 'तुमर्थे सेसेन्—'yet the importance of applying here is to have such a form in the भाव or कर्मवाच्य. अवगाहे— अवगाह्—केन् ( ए ) should bathe. दिदृक्षेण्यः—दृश् + सन् + केन्य = दिदृक्षेण्य etc. कर्त्वम् कृ + त्वन्—गुण by 'सार्व—' (2168), should be done ( कर्तव्यम् is the classical form ).

मित—। कृत्यार्थे इति। कृत्यानामर्थः कृत्यार्थः। स च भावकर्मणोः। 'तयोरेव कृत्यक्त—' इति भावकर्मणोरेव कृत्यविधानात्। तेन भावे कर्मणि च वाच्ये छन्दसि धातोरिते चत्वारः—तवै, केन्, केन्य, त्वन्—प्रत्ययाः स्युरित्यर्थः। यद्यपि 'भव्यगेय—' इत्यादौ कर्तरि 'स्नानीयम् चूर्णम्' इति करणादौ च कृत्य-प्रत्यया विधीयन्ते तथापि स्वरूपेणैव तत्र कर्त्रादिविधानं न तु कृत्यत्वेनेति नात्र तेषां संग्रह इत्याहुः। न म्लेच्छितवै इति—भाष्यादिदम् इत्यधेयं व्याकरणमिति भाष्यपस्पशस्थायं शेषः। म्लेच्छ भ्वादिः तस्मात् तवै'। 'तुमर्थे सेसेन्—' इत्येव सिद्धे कृत्यार्थे इदम्। अस्माभिर्न म्लेच्छितव्यमित्यर्थः। अवगाहे इति। अवगाहमिति लोके। अवपूर्वादगाहेः केनप्रत्ययः। दिदृक्षेण्य इति—दृशेः सन्नन्तात् केन्यः। दिदृक्षणीय इत्यर्थः। कर्त्वमिति। कृञः त्वन्प्रत्ययः। कार्य्यं कर्तव्यं चेत्यर्थः। गुणेरूपम्।

२४४२। अवचक्षे च ॥ ३।४।१५ ॥

टी—। रिपुणा नावचक्षे। अवख्यातव्यमित्यर्थः।

One form अवचक्षे in वेद is irregularly formed in sense of भाव or कर्मवाच्य। रिपुणा etc—I should not be stated by a foe. अव+चक्षिङ्+एश्=अवचक्षए—एश् being शित् and सार्वधातुक 'चक्षिङः ख्याञ्' does not apply.

मित—। अवचक्षे इति। कृत्यार्थेयम् एश्प्रत्ययान्तो निपात्यते छन्दसि। अवचक्षे इति। अवपूर्वात् चक्षिङ् व्यक्तायां वाचीत्यस्मात् एश्प्रत्ययः। एशः शित्त्वेन सार्वधातुकत्वात् 'चक्षिङः ख्याञ्' इत्यस्याप्रसक्तेः रूपम्। लोके तु अवख्यातव्यमित्येव। तत्र ख्याञ आर्धधातुकत्वात्।

२४४२। भावलक्षणे स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् ॥ ३।४।१६ ॥

दी—। आसंस्थातोः सीदन्ति। आसमाप्तेः सीदन्तीत्यर्थः। उदेतोः। अपकर्तोः। प्रवदितोः। प्रचरितोः। होतोः। 'आतमितोः। काममाविजनितोः संभवामः' इति श्रुतिः।

When any characteristic of भाव is implied by the derivative, the roots स्था, इण्, कृ, वद, चर्, हु, तम् and जन take तोसुन् in the vedic literature. आसंस्थातोः—आ+सम्—स्था+तोसुन् until completion. Thus here भावलक्षण implies limit ( सीमा ); उदेतोः उत्—इ+तोसुन् गुण by 'सार्व—'. अपकर्तोः—अप कृ+तोसुन्. होतोः—हु+तोसुन् by गुण ( सार्वधातुकार्ध ). आतमितोः आ+तम् ( तमुग्लानौ )+तोसुन् इट्। 'कामम्—'आ+वि जन्+तोसुन् इट्। Indeed are we born before delivery ? ( आविजनितोः आप्रसवात्=Nagesha ).

मित—। भावलक्षण इति। भावो भावना क्रिया सिद्धावस्थापन्नो धात्वर्थः। स लक्ष्यते येन तस्मिन्नर्थे वर्तमानेभ्यः स्थादिभ्यो धातुभ्यस्तोसुन् स्याच्छन्दसि। अत्र कृत्यार्थे इति निवृत्तमिति मन्तव्यम्। अर्थे तुमर्थे इत्यनुवर्त्य तुमर्थे एभ्यः तोसुन्निति केचित्। तन्न। भावग्रहणसामर्थ्यात् विधानात् सिद्धावस्थापन्नस्यैव धात्वर्थस्य प्रतिपत्तेः

साध्यावस्थापन्नधात्वर्थे विधीयमानतोसुनोऽत्र प्रसक्तिः दोर्लभ्यादितत्र 'तुमर्थे सेसेन्—' इति शब्देन्दुशेखरे समुद्धरितं विशदीकृतव्याख्याभिरपि तत्रैवेत्यासां विस्तरः। भावलक्षणताव अवधिभूतार्थे वर्तते इत्याह—आसमाप्तेरिति। यावत् समाप्तिमित्यर्थः। आ+सम्—आप्+तोसुन्। उत्+इ+तोसुन्। अप—कृ+तोसुन्। कीतोः—कृ+तोसुन् 'सार्वधातुकार्ध—' इति विश्वब्रुदाहरणेषु गुणः। आतमितोः—आ—तमु+तोसुन्—सट्यादिडागमः। एवमाविजनितोरित्यत्र—आविजन्+इट तोसुन्। आप्रसवादिति तदर्थ इति बोध्यम्।

२४४४। सृपितृदोः कसुन् ॥ ३।४।१७ ॥

टी—। भावलक्षणे इत्येव। पुरा क्रूरस्य विसृपो विरप्शिन्। पुरा जर्तृभ्य आतृदः॥ इति तृतीयोऽध्यायः।

When भावलक्षण or completion of an action is implied the roots सृप् and तृद् take the affix कसुन् in the vedic literature. 'पुरा—etc.'—Thou soundest till the disappearance (विसृपः) of the rogue. वि+सृप्—कसुन् (अस्) no गुण due to कित्त्व। आतृदः=आ+तृद्+कसुन्=molestation.

मित—। सृपतृदोरिति। सृपेः तृदेः कसुन् प्रत्ययः स्याच्छन्दसि भावस्य लक्षणत्वे सतीत्यर्थः। क्रूरस्य गमनात् प्राक् भवान् विरप्शी शब्दकर्मा भवतीति तस्य सम्बुद्धिः। आतृद इति। आङ्पूर्वात् उतृदिर् हिंसानादरयोरित्यस्मात् कसुन्। यावद्धिंसनमित्यर्थः। कित्त्वाल्लघूपध गुणाभाव इति शम्।

इति मितभाषिण्यां तृतीयोऽध्यायः

———

# अथ चतुर्थोऽध्यायः।

२४४५। रात्रेश्चाजसौ ॥ ४।१।३१ ॥

दी—। रात्रिशब्दाद् ङीप् स्यात् अजस्विषये छन्दसि। रात्रीं व्यख्यदायती। लोके तु 'कृदिकारात्—' (गणसूत्र) इति ङीषन्तोदात्तः।

The affix ङीप्, in vedic literature, is appointed after the base रात्रि but not in connection with जस्. Thus 'रात्रीं व्यख्यत्—' The night when coming revealed etc. But रात्रयः (रात्रि+जस्) where ङीप् does not take place. The लौकिक form by 'कृदिकारात्—'(गणसूत्र under 'बह्वादिभ्यश्च' 503) with ङीष् is always रात्री which is thus अन्तोदात्त by प्रत्ययस्वरः।

मित—। रात्रेश्चेति। रात्रेः+च+अजसौ इतिच्छेदः। न जसिः अजसिः नञ् समासः। तस्मिन्निति विषयसप्तमी। सु, औ, जस् इत्यस्य जस इकारान्तेनोच्चारणम्। अजसि इत्येव वक्तव्ये तथाविधोच्चारणं वैचित्र्यार्थम्। 'संख्याव्ययादेर्ङीप्' (४।१।२६) इत्यतो ङीबनुवर्तते। तदाह—रात्रिशब्दादित्यादि। छन्दसीत्यनुवृत्त्य-भावेऽपि अर्थादापतति लोके 'बह्वादिभ्यश्च' (५०३) इत्यत्र 'कृदिकारात्—' इति सूत्रादेव सिद्धेरित्याह—लोके त्विति। तथासंज्ञाविषयेइति बोध्यम्। संज्ञायां तु लोकेऽपि अनेन ङीबन्त एव। उक्तौ संज्ञाछन्दसोरित्यनुवर्तनात्। 'राशदिभ्यां त्रिप्' (उणादि) इति त्रिबन्त आद्युदात्तो रात्रिशब्दः।

२४४६। नित्यं छन्दसि ॥ ४।१।४६ ॥

दी—। बह्वादिभ्यश्छन्दसि विषये नित्यं ङीष्। बह्वीषु हित्वा। नित्यग्रहणमुत्तरार्थम्।

ङीष् is persistently affixed to बह्व etc in the Vedas. The accepance of नित्य in the rule is for the next rule ; for the injunction instructed by 3446 is persistent from the very fact of its being enunciated ( आरम्भसामर्थ्यान्नित्यत्वम् ).

मित—। नित्यमिति। 'बह्वादिभ्यश्च' (४।१।४५) इत्यव्यवहितं पूर्वसूत्रम्। तदाह—बह्वादिभ्यः इत्यादि। ननु आरम्भसामर्थ्यादेव नित्यत्वे सिद्धेऽत्र सूत्रे नित्यग्रहणं निरर्थकमित्याशङ्क्य आह—नित्यग्रहणमुत्तरार्थमिति। 'भुवश्चे'त्येतदर्थमित्यर्थः।

३४४७। भुवश्च ॥ ४।१।४७ ॥

टी—। ङीष् स्याच्छन्दसि। विभ्वी। प्रभ्वी। 'विप्रसंभ्यः—' (३१६०) इति डुप्रत्ययान्तं सूत्रेऽनुक्रियते। उत इत्यनुवृत्तेः। उवङादेशस्तु सौत्रः॥ 'मुद्गलाच्छन्दसि लिच्च' (वार्तिक)। ङीषो लित्त्वमानुक् चागमः। लित्स्वरः। रथीरभून्मुद्गलानी।

ङीष्, in vedic literature, is affixed to bases formed with डु added to भू by the rule 'विप्रसंभ्यः—' (3160). Thus विभ्वी etc. The from भुवः in the rule is an imitation i.e utterance of भू formed with by डु by 'विप्रसंभ्यः—'. This is inferred from the following here ( अनुवृत्ति ) of उतः from the rule 'वोतो गुणवचनात्'. Thus there is no doubt that 'भुवः' in the rule is the fifth caseending of 'भु' an imitation of the finals of विभु, प्रभु etc. And that it ( भुवः ) has not been replaced by 'भोः' by 'घेर्ङिति' (245) is due to irregular appearence of उवङ् with reference to this very form in this rule only ( सौत्रः )। 'मुद्गलाच्छन्दसि—' ( Varttika ). ङीष् in छन्दस्, is affixed the base मुद्गल ( a sage or seer ) and it ( ङीष् ) is then considered to be as लित् ( ल— dropping for the purpose of accentuation) and to the

base must आनुक् ( आन् ) has to be joined when ङीष् follows. Thus 'रथी:—'The wife of मुद्गल became a charioteer. [ This Vartika is read under the rule 'इन्द्रवरुण' in अष्टाध्यायी or भाष्य ].

मित—। भुवश्चेति। 'विप्रसंभ्यो ड्वसंज्ञायाम्' ( ३१६० ) इति डुप्रत्ययान्तस्यानुकरणं भुरिति। तस्य पञ्चम्या निर्देशोऽत्र। तेन डुप्रत्ययान्ताद् भुवो ङीष् स्याच्छन्दसीत्यर्थः। तदाह—विभ्वीत्यादि। न च भू इति दीर्घस्यैव पञ्चम्यां निर्देशोऽयम् इति वाच्यम्। स्वयम्भूरित्यादावपि ङीष् प्रसङ्गादिति व्याचष्टे—विप्रसंभ्व इत्यादि। ननु कुत एतज्ज्ञायते डुप्रत्ययान्तमेवानुक्रियते न तु भू इति पाचिक पञ्चम्या निर्दिश्यते तत्राह—उत इत्यनुवृत्तेः। 'वोतो गुणवचनात्' ( ४।१।४४ ) इति वर्तते। तस्मादुत इत्यनुवर्तते भू इति दीर्घपक्षे तु नैतत् सम्भवति। तस्माद् डुप्रत्ययान्तमेवानुक्रियत इति निर्णयः। नन्वेवमपि डुप्रत्ययान्तस्य 'घेर्ङिति' ( २४५ ) इति गुणेन 'भोः' इत्येव स्यान्न तु भुव इति। अत उवङादेशस्य दौर्लभ्यात् तत्राह—उवङादेशस्त्विति। अस्मिन्नेव निपातनादुवङ् आश्रीयत इति भावः। मुद्गलाच्छन्दसीति। 'इन्द्रवरुण—' इति सूत्रस्थमिदं वार्तिकम्। ततो व्याचष्टे—ङीषो विषयमानुकर्षेति। मुद्गलाद् ङीष् तस्य ( प्रत्ययस्य ) षित्स्वरः। मुद्गलशब्दादानुगिति विवेकः। मुद्गलो नाम कश्चिदृषिः। तस्य पत्नी मुद्गलानी। षित्स्वरेण आनुक आकार उदात्तः।

### २४४८। दीर्घजिह्वी च छन्दसि ॥ ४।१।५९ ॥

दी—। संयोगोपधत्वादप्राप्तो ङीष् विधीयते। आसुरी वै दीर्घजिह्वो देवानां यज्ञवाट्।

In छन्दस् the term दीर्घजिह्वी is irregularly found with ङीष् which would, otherwise, not have come as the term ( दीर्घजिह्व ) is संयोगोपध ( having the conjunct letter 'ह्व' for its उपधा ) and consequently ङीष् by 'स्वाङ्गाच्चोपसर्जनात्—'(610) can not

take place after it due to the prohibition 'असंयोगोपधात्' running in the said rule (510). यज्ञवाट—यज्ञ+वह्+ण्विः by 'वहश्च'.

मित—। दीर्घजिह्वीचेति। छन्दसि दीर्घजिह्वशब्दो ङीषन्तो निपात्यत इत्यर्थः। कुतो निपातनमित्यत आह—संयोगोपधत्वादप्राप्त इति। 'स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्' (५१०) इति हि ङीष् विधायकं सूत्रम्। तत्र दीर्घजिह्वशब्दस्य संयोगोपधत्वान्न प्रसज्यत इति निपातनाश्रयणम्। यज्ञवाडिति। यज्ञं वहतीति 'वहश्च' (३४१२) इति ण्विप्रत्ययः।

३४४९। कद्रुकमण्डल्वोश्छन्दसि ॥ ४।१।७१ ॥

दी—। ऊङ् स्यात्। कद्रूश्च वै कमण्डलूः। 'गुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम्' (वार्तिक)। गुग्गुलूः। मधूः। पतयालूः॥ 'अव्ययात्त्यप्' (१३२४)। 'आविष्ट्यस्योपसंख्यानं छन्दसि' (वार्तिक)। आविष्ट्यो वर्धते।

ऊङ् as a feminine affix (स्त्रीप्रत्ययः) is used after the bases कद्रु and कमण्डलु in छन्दस्. Thus कद्रूः+कमण्डलूः। 'गुग्गुलु—' Varttika—It has to be said that the feminine affix extends to these bases also. Thus गुग्गुलूः etc. 'आविष्ट्यस्य—' This is the second Varttika here. In respect of छन्दस the word आविष्ट्य has to be enlisted as having त्यप् under 'अव्ययात्त्यप्' (1324). Thus आविस्+त्यप्, षत्व by 'इण्कोः—' (1325) then apply 'ष्टुनाष्टुः' (113). आविष्ट्य—that which has appeared (आविर्भूतः).

मित—। कद्रु इति। 'ऊङुतः' (४।१।६६) इत्यत ऊङ् इत्यनुवर्तते। तेन शेषं पूरयन्नाह—ऊङ् स्यादिति। छन्दसि कद्रुशब्दात् कमण्डलुशब्दाच्च ऊङ् स्यात् स्त्रियामित्यर्थः। 'गुग्गुलु—' वार्तिकमिदम्। एषां व्यत्ययेन स्त्रीत्वं छन्दसि इत्याहुः। पतयालुरिति विशेषणलिङ्गम्। अत्र 'स्पृहिगृहि—' इत्यादिना आलुच्प्रत्ययः। गुणायादेशौ॥ अव्ययात्त्यबिति। एतदर्थत व्याख्यातमपि आविष्ट्या-

वार्तिकानुरोधादिह पुनरुपन्यासम्। आविष्टर शब्दोऽपि त्यप् प्रत्ययनिष्पन्न इति परिगणनं कर्तव्यमिति वार्तिकार्थः। आविष्टोवर्धत इति। आविर्भूतो वर्धत इत्यर्थः। आविस् + त्यप् इति स्थिते 'इणादादौ तद्धिते' (१२२५) इति सकारस्य षत्वं तस्य ष्टुत्वे च रूपम्।

२४५०। छन्दसि ठञ् ॥ ४।३।१९ ॥

दी—। वर्षाभ्यष्ठकोऽपवादः। स्वरे भेदः। वार्षिकम्।

In vedic language ठञ् is affixed to the base वर्षा. Although the result with regard to the form (वार्षिक) is the same in each case (ठक् or ठञ्) yet this supersedes 'वर्षाभ्यष्ठक्' (4.4.18) as there is distinction between the two affixes with reference to accent (स्वर); for ठञ् is आद्युदात्त by 'ञ्नित्यादिर्नित्यम्' whereas ठक् is अन्तोदात्त by 'कितः'. ठ=इक by 'ठस्येकः'।

मित—। छन्दसीति। 'वर्षाभ्यष्टक्' (४।३।१८) इत्यव्यवहितं पूर्वसूत्रम्। ततो व्याचष्टे—वर्षाभ्यष्ठकोऽपवाद इति। ननु ठक्ठञोः को विशेषः। 'ठस्येकः' इत्यनुसाराद्भयोरपि परतो रूपस्य तुल्यत्वादिति चेत्। समाधत्ते—ठञो ञित्वाद् 'ञ्नित्यादिर्नित्यम्' इत्यनुशासनबलाद् ठञ् प्रत्ययान्तस्य आद्युदात्तत्वम्। ठकः कित्वात् 'कितः' इति ठक् प्रत्ययान्तस्य अन्तोदात्तत्वमिति विशेषः।

२४५१। वसन्ताच्च ॥ ४।३।२० ॥

दी—। ठञ् स्याच्छन्दसि। वासन्तिकम्।

After वसन्त (the base) also ठञ् is used.

२४५२। हेमन्ताच्च ॥ ४।३।२१ ॥

दी—। छन्दसि ठञ्। हैमन्तिकम्। योगविभाग उत्तरार्थः। 'शौनकादिभ्यश्छन्दसि' (१४८६) णिनिः प्रोक्तेऽर्थे। छाणोरपवादः। शौनकेन प्रोक्तमधीयते शौनकिनः। वाजसनेयिनः। छन्दसि किम्? शौनकीया शिक्षा।

In vedic literature ठञ् is used after हेमन्त ( the base ); so हैमन्तिकम्। 'योग—' i.e instead of enunciating as 'वसन्तहेमन्ताभ्याम्' the separate handling of the term is to the effect that हेमन्त only may be carried down to the उत्तरसूत्र 'सर्वत्राण् च तलोपश्च' (4.3.22). 'शौनकादिभ्य:—'explained before. This णिनि ( इन् ) supersedes छ and अण् due by 'तेन प्रोक्तम्'. शौनकिन:—The base is शौनकिन् ( शौनिक + णिनि ). वाजसनेयिन: —break as वाजसानयेनप्रोक्तमधीयते. शौनकीया—शौनक + छ by 'वृद्धाच्छ:'। This is the classical form, hence णिनि does not take place.

मित—। हेमन्तादिति। 'छन्दसि ठञ्' (४।३।१२) इत्यधिकृतं वर्तते। हैमन्तिकमिति। 'तद्धितेष्वचामादे'रिति ठञ् ञित्त्वादादिवृद्धि:। ननु 'वसन्तहेमन्ताभ्याम्' इत्येक एवास्तु योग: मास्तु योगद्वयम्। लाघवात्। उभयोरेव ठञ् विधानार्थत्वाशङ्क्य आह—योगविभाग उत्तरार्थ इति। 'सर्वत्राण् च तलोपश्च' (४।३।२२) इत्येदर्थ इत्यर्थ:। तथा तत्र हेमन्तस्यैव अनुवृत्ति: स्यान्न तु वसन्तस्यापि। 'शौनकादिभ्य:—' (४।३।१०६) इति एतत् तद्धितप्रकरणे व्याख्यातम्। इह तु क्रमप्राप्तत्वात् अस्य पुनरुपन्यास:। 'काश्यपकौशिकाभ्यामृषिभ्यां णिनि:' (४।३।१०३) इत्यतो णिनिरित्यनुवर्तते। 'तेन प्रोक्तम्' (४।३।१०१) इत्यत: प्रोक्तेऽर्थे इति लभ्यते। छाणोरपवाद इति। 'तेन प्रोक्तम्' इत्यर्थे प्राप्तयोरिति भाव:। शौनकिन इति। शौनकिन इति णिन्नन्तस्य प्रथमाबहुवचनम्। छन्दोमात्रगोचरोऽयमपवाद:। तेन लोके शौनकीया इति वृद्धाच्छ: प्रत्ययेन निष्पन्न एवेत्याह—छन्दसि किमिति।

## २४५३। द्वयचश्छन्दसि ॥ ४।३।१५० ॥

**दी—। विकारे मयट् स्यात्। शरमयं बर्हि:। यस्यपर्णमयी जुहू:।**

The affix मयट् in the sense of विकार is employed after

bases having two vowels only (द्व्यच्)। 'शरमयम्—'the fire is full of reeds. पर्णमयी जुहू the vessel is made of leaves—ङीप by 'टिड्ढाणञ्—'(420).

मित—। द्व्यच इति। द्वौ अचौ यस्येति विग्रहः। 'शेषे विभाषा' इति समासान्तकबभावः। तादृशात् प्रातिपदिकात् छन्दसि विषये मयट्। 'मयड्वैतयो-र्भाषायामभक्ष्याच्छादनयोः' (४।३।१४३) इति छन्दसि मयटोऽभावादयमारम्भः। पर्णमयीति। 'टिड्ढाणञ्' (४७०) इति टित्त्वाद् ङीप्। जुहूः स्रुक् स्त्रियाम्।

३४५४। नोत्वद्वर्ध्रबिल्वात् ॥ ४।३।१५१ ॥

टी—। उत्वान् उकारवान्। मौञ्जं शिक्यम्। वर्ध्रं चर्म। तस्य विकारो वार्ध्री रज्जुः। बैल्वो यूपः॥ 'सभाया यः' (१६५२)—

The affix मयट् due by the preceding rule 'द्व्यचः—'(3453) is not employed after a base having a उकार within and after वर्ध्र and बिल्व in Vedic language. Thus 'मौञ्जम्—'a शिक्य (i. e. शिका) a rope-work generally suspended from a pole to receive burden (within) made of मुञ्ज grass. Here मुञ्ज, through contain'ng उकार takes अण् and not मयट्। वार्ध्री made of leather. वध्र+अण्+ङीप् by 'टिड्ढाणञ्—'(470). बैल्वः—बिल्व+अण् a staff made of बिल्व wood. 'सभायायः' and we look ahead—

मित—। नोत्वदिति। न=उत्वत्+वर्ध्र बिल्वात् इतिच्छेदः। पूर्वसूत्रेण द्व्यचो मयटि प्राप्ते प्रतिषेधोऽयम्। उकारवतः प्रातिपदिकात् वध्रशब्दाद् बिल्वशब्दाच्च मयट् न स्यादित्यर्थः। मौञ्जमिति। घासविशेषः। तस्मादौत्सर्गिकोऽण्। वर्धातेऽनेनेति वर्ध्रं रज्जुविशेषः। वर्ध्रेरौणादिकः ष्ट्रन् प्रत्ययः। इह तु चर्मार्थक इत्याह—वर्ध्रं चर्म इति। वार्ध्रीति। वर्ध्रशब्दादणि कृते 'टिड्ढाणञ्—' (४७०) इति ङीप। एवं बैल्वः बिल्वशब्दादपि सिद्धः॥ सभाया य इति प्राप्ते आह—

२४५५। ढश्छन्दसि ॥ ४।४।१०६ ॥

दी—। सभेयो युवा।

मित—। ढश्चेति। सभाशब्दाद् ढः स्याच्छन्दसि।

२४५६। भवे छन्दसि ॥ ४।४।११० ॥

दी—। सप्तम्यन्ताद् भवार्थे यत्। मेघ्याय च विद्युत्याय च। यथायथं शैषिकाणामणादीनां घादीनां चापवादोऽयं यत्। पक्षे तेऽपि भवन्ति। सर्वविधीनां छन्दसि वैकल्पिकत्वात्। तद्यथा। मुञ्जवान् नाम पर्वतः। तत्र भवो मौञ्जवतः। सोमस्येव मौञ्जवतस्य भक्षः। आचतुर्थसमाप्तेश्छन्दोधिकारः।

In vedic literature यत् after a locative base is used in the sense of तत्र भवः or existing there. Thus मेघ्य and विद्युत्य etc = विद्युत् + यत् etc। This यत् supersedes शैषिक अण् etc and घ etc, But as all injunctions with respect to vedic literature are optional these affixes ( अण् etc ) also will take place as alternatives. As for example मौञ्जवतः—मुञ्जवत् (a mountain) + अण् here यत् was due by 'भवे—' i.e. this rule. The term छन्दसि used herein extends as far as the end of this fourth chapter.

मित—। भवे इति। भवे सप्तम्यर्थद्योतनार्थम्। तदाह—सप्तम्यन्तादिति। मेघशब्दाद् विद्युत्शब्दाच्च यत्। यथायथमिति। येभ्यः प्रातिपदिकेभ्योऽणादयः प्राप्तास्तेभ्य एव छन्दसि तदपवादो यदिति। तेऽपि इति। अणादयोऽपि। भवे छन्दसीति यति प्राप्ते ऽण्। तत्र प्रमाणमाह—सोमस्येवेति।

२४५७। पाथोनदीभ्यां ड्यण् ॥ ४।४।१११ ॥

दी—। तमु त्वा पाथ्यो वृषा। चनो दधीत नाद्यो गिरो मे। पाथसि भवः पाथ्यः। नद्यां भवो नाद्यः।

The affix ड्यण् (य) is employed, in Vedic language after the bases पाथस् (water) and नदी in the sense of भव. पाथ्य—पाथस् + ड्यण् elision of अस् (टि) of पाथस् due to डित्व of ड्यण्। चन: means once. वृषा—Indra.

मित—। पाथो इति। आभ्यां सप्तम्यन्ताभ्यां छन्दसि ड्यण्प्रत्ययः स्याद् तदर्थे। डित्वात्टिलोपः। पाथसि भवः पाथ्यः—पाथो जलम्। 'कबन्धमुदकं पाथ' इत्यमरः। 'पाथोऽन्तरिक्षम्' इति काशिका।

२४५८। वेशन्तहिमवद्भ्यामण् ॥ ४।४।११२ ॥

दी—। भवे। वैशन्तीभ्यः स्वाहा। हैमवतीभ्यः स्वाहा।

अण् after वेशन्त (a small pond) and हिमवत् in the sense of 'भव' is employed in the Vedas. वैशन्तीभ्यः—dative with स्वाहा। वैशन्ती—वेशन्त + अण् + ङीप् the water of a वेशन्त. हिमवत् + अण् + ङीप—वृद्धि by 'तद्धितेष्वचामादेः'।

मित—। वेशन्तेति। 'विशेर्झच्' (उणादि) विशन्त्यस्मिन् जलमिति वेशन्तः क्षुद्रजलाशयः। 'वेशन्तः पल्वलं अल्पसरः' इत्यमरः। तस्माद् हिमवतश्च शब्दादण् स्याद् भवार्थे छन्दसि विषये। वैशन्तीभ्य इति। वेशन्ते भवा आपः वैशन्त्यः ताभ्यः। एवं हैमवतीभ्य इति। अण्। 'टिड्ढाणञ्—' इति ङीप्।

२४५९। स्रोतसो विभाषा ड्यड्ड्यौ ॥ ४।४।११३ ॥

दी—। पक्षे यत्। ड्यड्ड्योस्तु स्वरे भेदः। स्रोतसि भवः स्रोत्यः। स्रोतस्यः।

The affixes ड्यट् and ड्य are optionally ordered to base स्रोतस् (water current) in the sense of भव. Thus स्रोत्यः—स्रोतस् + ड्यट् or ड्य and स्रोतस्यः = स्रोतस् + यत्. In former case टिलोप due to डित्व. The distinction bet. ड्यट् and ड्य is only in respect of accent.

मित—। स्रोतस इति। स्रोतो जलप्रवाहः। तस्मात् प्रातिपदिकाद् डाट् ड्यच प्रत्ययौ स्तः भवार्थे छन्दसि। ननु उभयोरेव प्रत्यययोः डित्त्वाद् को विशेषस्तत्राह—स्वरे भेद इति। डित्वात्टिलोपः। स्रोतस्य इति यत्।

२४६० । सगर्भसयूथसनुताद् यन् ॥ ४।४।११४ ॥

टी—। अनुभ्राता सगर्भ्यः। अनुसखा सयूथ्यः। यो नः सनुत्य उत वा जिघत्नुः। नुतिर्नुतम्। 'नपुंसके भावे क्तः' (३०९०) सगर्भादयस्त्रयोऽपि कर्मधारयाः। 'समानस्य छन्दसि—' (१०१२) इति सः। ततो भवार्थे यन् यतोऽपवादः।

यन् in the sense of भव is affixed after सगर्भ, सयूथ and सनुत in the Vedas. सगर्भ्यः—a younger brother. समानश्चासौ गर्भश्च—कर्मधारयः, समान becoming स by 'समानस्य छन्दसि—' (1012). Then यन्. (जिघत्नु=a foe). यन् supersedes यत् directed by 'भवे छन्दसि' (3466).

मित—। सगर्भेति। गिरतीति गर्भः। 'अर्त्तिगृभ्यां भन्' इत्यौणादिको भन् प्रत्ययः। समानश्चासौ गर्भश्चेति कर्मधारयः। 'समानस्य छन्दसि—' (१०१२) इति समानस्य सभावः। युतो भवन्त्यस्मिन्निति यूथं सङ्घः। औणादिक थक्प्रत्ययान्तः निपात्यते। विग्रहः प्राग्वत्। एवं सनुत इति। सगर्भश्च सयूथश्च सनुतश्चेति समाहारद्वन्द्वात् पञ्चम्येकवचनम्। एभ्यो भवार्थे यन् स्याच्छन्दसि। 'भवे छन्दसि' (३४५६) इति यतोऽपवादः। सनुत्यशब्दस्य अनुमन्ता इत्यर्थः अत्र पर्य्यायजिघत्नु शब्दसान्निध्यादिति विभावनीयम्। जिघत्नुरिति हनेरौणादिकः क्नु प्रत्ययः। द्वित्वादि।

२४६१ । तुग्राद्घन् ॥ ४।४।११५ ॥

टी—। भवेऽर्थे। पक्षे यदपि। आवः शमं वृषभं तुग्र्यासु इति बह्वृचाः। तुग्रियास्विति शाखान्तरे। धनाकाशयज्ञवरिष्ठेषु तुग्रशब्दः इति वृत्तिः।

घन् in वेद is affixed to तुग्र in the sense of existence. यत् forms alt. of घन्. Thus तुग्र्य according to the बह्वृच school, but तुग्रिय (तुग्र+घ=इय) according to a different school or branch of the Rigveda. Kashika says तुग्र means wealth, sky, sacrifice or supreme.

मित—। तुग्रादिति। तुग्रशब्दाद् घन् (इय) स्याच्छन्दसि भवार्थे। पक्षे यदिति। सर्वविधीनां छन्दसि वैकल्पिकत्वादिति भावः। तुग्रे भवाः तुग्र्याः—तुग्रियाः। बह्वृचा इति ऋग्वेदीयशाखाभेदो बह्वृचः। धनाकाश इति। अति-शयेन उक्तः प्रशस्तो यज्ञो बलमित्यादि काशिका।

३४६२। अग्राद्यत् ॥ ४।४।११६ ॥

३४६३। घच्छौ च ॥ ४।४।११७ ॥

दी—। चाद्यत्। अग्रे भवोऽग्र्यः। अग्रियः। अग्रीयः।

यत् as well as घ and छ are affixed to अग्र in वेद in the sense of भव। अग्र्य—अग्रिय अग्रीय—the second is derived with घ (इय) and the third with छ or ईय।

मित—। अग्रादिति। भवे छन्दसि अग्रशब्दाद् यत्, घः, छश्च प्रत्ययो भवति। 'भवे छन्दसि' (३४५९) इत्येव यति सिद्धे घच्छौ यस्यापवादौ मा भूतामिति पुनर्यतो-विधिः। अग्रीय इति। अत्र छप्रत्ययः। तस्य ईयादेशः। पूर्वत्र घः। 'अग्रस्य भाष्य-कारस्य कुशाग्रीयधियाग्रभौ' इति श्लोकेऽपि क्वचित् दृश्यते।

३४६४। समुद्राभ्राद् घः ॥ ४।४।११८ ॥

दी—। समुद्रिया अप्सरसो मनीषिणम्। नानदतो अभ्रियस्येव घोषाः।

समुद्र and अभ्र (cloud) take घ in (वेद in the sense of भव). समुद्रिया belonging to the Sea. अभ्रियस्य of water coming down from the cloud.

मित—। समुद्राभ्रादिति। भवार्थे घश्छन्दसि। समुनत्तीति समुद्रः। स्फायि तञ्चीतिरक्। अपो बिभर्तीत्यभ्रम् मेघः। मूलविभुजादित्वात्कः। समुद्राभ्रादिति 'अल्पाच्तरम्' (९०५) इति पूर्वनिपातशास्त्रस्यानित्यत्वे लिङ्गम् इतिव्याख्यातारः।

## २४९५। बर्हिषि दत्तम्॥ ४।४।११९॥

**टी—। 'प्रागघिताद् यत्' (१६२६) इत्येव। बर्हिष्येषु निधिषु प्रियेषु।**

यत् due by 'प्राग्घितात्—'(1626) is affixed to बर्हिष in the sense of तस्मिन् (or यस्मै) दत्तम् (it has been offered unto him). Note that the sense of भव (भवार्थ) ceases hence. 'बर्हिष्येषु—' etc.—admirable gems being offered unto fire (बर्हिस).

मित—। बर्हिषि इति। बर्हिस् शब्दे उपपदे दत्तार्थे यत् स्याच्छन्दसि। तत्र भव इति निवृत्तम्। बर्हिस् शब्दः कुशकुलायग्योरन्यतरवाची। बर्हिषि दत्तमिति विग्रहे बर्हिष्यमिति।

## २४९६। दूतस्य भागकर्मणी॥ ४।४।१२०॥

**टी—। भागोऽंशः। दूत्यम्।**

यत् is affixed after the word दूत (messenger) in the sense of—it is his share (भाग) or action (कर्म) in the vedic literature. Thus—दूत्य: the share or part of a messenger and दूत्यम् the action of a messenger. Note that here यत् in the sense of भाग was due by 'तस्येदम्' and यत् in the sense of कर्म only (and not that of भाग also) by the Varttika 'दूतवणिग्भ्याञ्च' under 'सख्युर्यः' (1139—5.1.126).

मित—। दूतस्येति। दूतस्य भागः (अंशः) कर्म (क्रिया) चेत्यर्थे दूतशब्दाद् यत्प्रत्ययः स्याच्छन्दसि विषये इत्यर्थः। दूतस्य भागः दूत्यः। दूतस्य कर्म दूत्यम्।

तत्र भागार्थे 'तस्येदम्' इत्यणि प्राप्ते, कर्मार्थे 'दूतवणिग्भ्याञ्च' इति 'सख्युर्यः' (१२९१—५।१।१२९ ) इति सूत्रस्थवार्तिकाद् ये प्राप्ते वचनम्।

३४६७। रक्षोयातूनां हननी ॥ ४।४।१२१ ॥

दी—। या ते अग्ने रक्षस्या तनूः।

यत् after the words रक्षस् (demon) and यातु (demon) is affixed in the Vedas in the sense of—it is the hitter or destroyer of it ( हननी ). Thus रक्षस्या तनूः—a body or image that keeps away demons. Similarly यातव्या तनूः— यातु + यत् + टाप्. Although एकशेष might have been applied on रक्षोयातूनां by विरूपाणामपि समानार्थानाम् so as to have 'रक्षसाम्' yet for clearance sake it has been so enunciated.

मित—। रक्षोयातूनामिति। हन्यतेऽनयेति हननी करणे ल्युट् ङीप् च। घातिकेत्यर्थः। तस्य घातिका इत्यर्थे रक्षःशब्दाद् यातुशब्दाच्च यत्प्रत्ययः स्याच्छन्दसि विषये। उभावपि समानार्थकौ। एवञ्च यद्यपि 'विरूपाणामपि समानार्थानाम्' इत्येकशेषे 'रक्षस्याम्—' इत्येव सूत्रितव्यत्वेन प्रतिभाति तथापि स्पष्टार्थमुभयोरपि ग्रहणमिति बोध्यम्। रक्षस्येति। 'रक्षस्' इत्यस्माद् यत्। तनूशब्दापेक्षया टाप। एवं यातव्या ( यातु + यत्—गुणावादेशौ )। रक्षोयात्वोरित्येव वक्तव्ये बहुवचनं वैचित्र्यार्थम्।

३४६८। रेवतीजगतीहविष्याभ्यः प्रशस्ये ॥ ४।४। १२२ ॥

दी—। प्रशंसने यद् स्यात्। रेवत्यादीनां प्रशंसनम् रेवत्यम्। जगत्यम्। हविष्यम्।

यत् in the sense of admiration or praise ( प्रशस्य ) is affixed to रेवती ( a wealthy person ) जगती (world) and हविष्या (suitable for हविस् i.e. ghee or offering) in vedic literature. Thus रेवत्यम् = praise of रेवती etc.

मित—। रेवतीति। यदित्यनुवर्त्तते—यत् स्यादिति—प्रशस्यशब्दार्थमाह—प्रशंसने इति। प्रशंसनं प्रशस्यम्। प्रपूर्वाद् शंसेर्बाहुलकाद् वाक्यप्। रयिरस्यास्ति इति रेवती। रयिशब्दान्मतुप्। वत्वम्। 'रयेर्मतौ बहुलम्' इति संप्रसारणम्। 'उगितश्चे'ति ङीप्। मत्वर्थे पक्षे तु गौरादित्वाद् ङीष। जगतीति। जगच्छब्दात् प्रत्ययस्य उगित्वात् ङीप्। हविष्येति। हविषे हिता हविष्या। उगवादित्वाद् यत्। प्रशंसार्थे आभ्यो यत्। हविष्यामिति। हविषाया: प्रशंसनमिति विग्रह:। अतएव 'हविष्यान्नम्' इति लोके प्रशस्तान्नत्वेन प्रसिद्धमिति द्रष्टव्यम्।

२४६९। असुरस्य स्वम् ॥ ४।४।१२३ ॥

टी—। असुर्यं देवेभिर्धायि विश्वम्।

यत् in the Vedas in affixed to the term असुर (a demon) in the sense of—it is his wealth ( स्वम् ). 'असुर्यम् etc—Gods spent over the world the riches of demons.

मित—। असुरस्येति। स्वमिति धनवाचि। तस्येदं धनमित्यर्थे असुरशब्दाद् यत् स्याच्छन्दसि। असेरुरचि असुर:। यद्वा सुरप्रतिद्वन्द्वो असुर:। विरोधार्थे नञ्।

२४७०। मायायामण् ॥ ४।४।१२४ ॥

टी—। आसुरी माया।

When माया or delusion, is implied i.e in the sense of 'it is his deluding power', अण् takes place after the word असुर (demon). आसुरी—असुर + अण् + ङीप् by 'टिड्ढाणञ्—'(440).

मित—। मायायामिति। मायतेऽनयेति माया। माङो य: ( औणादिक: )। अघटनघटनसामर्थ्यमिति तदर्थ:। अस्येयं माया इत्यर्थे असुरशब्दादण् स्याच्छन्दसीत्यर्थ:। आसुरीति—अणि सति 'टिड्ढाणञ्—' ( ४७० )-इति ङीप्। लोके तु तस्येदमित्यण् बोध्य:। "मिमन्थिपुरिवासुरी: पुरी:"। वेदे मायार्थ एवेति विशेष:।

२४७१। तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ॥ ४।४।१२५ ॥

टी—। वर्चस्वानुपधानो मन्त्र आसामिष्टकानां वर्चस्याः। ऋतव्याः।

यत् is affixed in छन्दः after a base ending in मतुप् provided the मन्त्र meant for arrangement of the bricks (उपधान मन्त्र) which is referred to by the derivative, contains the root base (or original base) taking मतुप्; and मतुप् disappears when यत् operates. Thus वर्चस्याः—वर्चस्वान् + यत् = वर्चस् + यत् (मतुप् disappears) = वर्चस्या (with टाप् added) meaning such bricks as have a मन्त्र, which contains the very word वर्चस् or its synonym, to be uttered at the time of the arrangement (उपाधान = विन्यास or पातन) of themselves (bricks). Similarly ऋतव्या—ऋतुमान् + यत् = ऋतु + यत्—गुण अवादेश टाप् = ऋतव्या referring as in the previous example to bricks.

मित—। तद्वानिति। आसामित्यस्य इष्टकाभिः सम्बन्धः। इतिशब्दः प्रकारे। इष्टाकास्विति। इष्टकाश्चेत् प्रत्ययनिष्पन्नशब्दस्याभिधेयो भवति। इष्टकासु समुदायार्थत्वेन वाच्यास्विति यावत्। अयं सूत्रार्थः—'मत्वन्तात् प्रथमासमर्थात् आसामिति षष्ठ्यर्थे यत् स्यात् यत्प्रथमासमर्थमुपाधने मन्त्रश्चेत् स भवति—आसामिति निर्दिष्टम् इष्टकास्ताः चेत् भवन्ति। मतोश्च लुक्' इत्याहुः। सरलार्थश्च —यस्माद् मतुवन्ताद् शब्दाद् यत्प्रत्ययो विधीयते तस्मिन् मतुबन्ते शब्दे मतुप् प्रकृतिभूतो यः शब्दो वर्तते स एव चेदिष्टकोपधानकालिकमन्त्रेऽपि वर्तते तदैव ताहृशाद् मतुबन्तशब्दाद् ताहृशीष्टकासु वाच्यासु यत्प्रत्ययो विधीयते इति बोद्धव्यम्। किञ्च यति परे मतुबन्तशब्दस्य मतुप प्रत्ययस्य लुक् च भवतीति। अत एव उदाहर्तव्यं विग्रहञ्चाति—वर्चस्वानुपाधानोमन्त्र आसामिष्टाकानामिति। वचःशब्दो यस्मिन् मन्त्रेऽस्ति

स मन्त्रो वर्चस्वान्। तथाच कृष्णे इष्टकोपधानमन्त्रः—'भूर्भुवः स्वः देवस्य त्वा सवितुः प्रसवे' इत्यादिकः। अत्र वर्च आर्थिकम्। उपधीयते चिरस्थितेऽनेनेत्युपधानम्। करणे ल्युट्। चिरचयनं पातनं चेति तदर्थः। वर्चस्वा इति वर्चस्वान् इत्यस्मात् यत्। ततो मतोर्लुकि वर्चस् यत् इति स्थिते इष्टकार्थकत्वमादाय टाप्। ऋतव्या इति। ऋतुशब्दोऽस्मिन् मन्त्रेऽस्ति स ऋतुमान् मन्त्रः। स च मधुश्च माधवश्चेत्याभिधः। ततश्च ऋतुमानुपधानो मन्त्र आसामिष्टकानामिति ऋतुमान् शब्दाद् यत्। ततो मतोर्लुकि 'ओर्गुणः' इति गुणेऽवादेशे टापि च ऋतव्याः (इष्टकाः) इति। तद्वानिति किम्? मन्त्रादेव समुदायान्मा भूदिति काशिका। उपधान इति किम्? वर्चस्वदभिमन्त्रणमासामित्यत्र मा भूत्। मन्त्र इति किम्? अङ्गुलिमान् उपधानो हस्त आसामित्यत्र मा भूत्। इष्टकास्विति किम्? वर्चस्वानुपधानः आसां शर्कराणामित्यत्र मा भूत्। इतिकरणं नियमार्थम्। अनेकपदसम्भवेऽपि केनचित् पदेन तद्वान् मन्त्रो गृह्यते न सर्वेण। मतुब्ग्रहणमुत्तरार्थम्। अश्विमानित्यत्र मतुप एव लुग्यथा स्यादणो माभूत्। इह तु मत्वन्तात् प्रत्ययविधानात्तस्यैव लुग् भविष्यतीति दिक्। विस्तरस्तु पदमञ्जर्यां द्रष्टव्यः।

३४७२। अश्विमानण् ॥ ४।४।१२६ ॥
दी—। आश्विनीरुपदधाति।

अण् after the base अश्विमान् (अश्विन्+मतुप्) is employed in the sense as above. Thus अश्विमान्+अण्=अश्विन्+अण्। मतुप् elides by the previous rule=आश्विन with वृद्धि। Then add ङीप् by 'टिड्ढाणञ्—'(690) the reference being, here also, to bricks which are arranged with the utterance of a मन्त्र containing the word अश्विन्—अश्व+इनि by the rule 'अत इनिठनौ'.

मित—। अश्विमानिति। अश्वोऽस्त्यस्येत्यश्विन्। 'अत इनिठनौ' इति इनि प्रत्ययः। अश्विशब्दो यस्मिन् मन्त्रेऽस्ति स मन्त्रोऽश्विमान् इत्युच्यते। तादृशः मन्त्रोऽस्त्यत्र आकरेषु। 'प्रथमान्तादश्विमच्छब्दादासामिति षष्ठ्यर्थे अण् स्यात्—यत् प्रथमानिर्दिष्ट-

सुपधान:, सन्नश्चेत् स भवति। यत्तदासामिति निर्दिष्टम् इष्टाकश्चेत्ता भवन्ति। मतोश्च लुक्' इति काशिकादावत्र पूर्वसूत्रे अण् स्थले यतं निक्षिप्य व्याख्यातम्। सरलार्थस्तु प्रागवद्बोध्य:। आश्विनीरिति। अश्विमानुपाधानोमन्त्र आसामिष्टकानामिति अश्विमान् अण् इति स्थिते मतोर्लुकि 'इनण्यनपत्ये' (१२४५) इति इन: प्रकृतिभावात्—अश्विन्+अण् इति जाते इत्यादि वृद्धौ 'टिड्ढाणञ्—' (४७०) इति ङीप। शस्प्रत्यये—आश्विनीरिति। उपदधातीत्यस्य कर्मणि द्वितीया।

## ३४७२। वयस्यासु मूर्ध्नो मतुप् ॥ ४।४।१२७ ॥

**दी—। 'तद्वानासाम्—' (३४७१) इति सूत्रं सर्वमनुवर्तते। मतोरितिपदमावर्तत्र पञ्चम्यन्तं बोध्यम्। मतुवन्तो यो मूर्धशब्दस्ततो मतुप् स्यात् प्रथमस्य मतोर्लुक् च वय:शब्दवन्मन्त्रोपाधेयास्विष्टकासु। यस्मिन् मन्त्रे मूर्धवय:शब्दौ स्तस्तेनोपधेयासु-मूर्धन्वतीरुपदधातीति प्रयोग:।**

The rule 'तद्वानासाम्—'(3671) follows here in full and the and the term 'मतो:' therein has to be brought down here and to be understood as taking the fifth case—ending. The rule now, therefore, means——

मतुप् is affixed to the मत्वन्त (ending in मतुप्) base मूर्धन and the first मतुप् e.g. मतुप् which was originally after मूर्धन् disappears provided the derivative has reference to such इष्टकाs or bricks as are to be arranged with the utterance of the मन्त्र (or charm) which contains the term वयस्. It is important in this connection to note that the मन्त्र must contain not only वयस् but also मूर्धन् for otherwise मतुप् cannot take effect as the previous rule 'तद्वान्—'(3471) acts upon it. It is for this

reason that Bhattoji next says—यस्मिन् मन्त्रे etc. The practical application, however, is this—मूर्धन्वती: उपदधाति—holds up a pack of such bricks as deserve arrangement with the utterance of a मन्त्र which contains both the words मूर्धन् and वयस् (वयस्यासु in the rule is adj to 'इष्टकासु—' understood; and मूर्धन् is elliptical for मूर्धन्वत:') । Hence the meaning, in short is—"मतुबन्त मूर्धन् takes मतुप् if the 'वयस्या इष्टकाs' are referred to by the derivation" मूर्धन्वती: = मूर्धन्वान् मतुप् = मूर्धन् मतुप् first मतुप् elides = मूर्धन् वत् by मादुपधायाश्च (1898) = मूर्धन्वत् (मूर्धन्वान् etc) Then add ङीप् by उगितश्च = मूर्धन्वती ।

मित—। वयस्यास्विति। वय:शब्दो यस्मिन् मन्त्रेऽस्ति समन्त्रो वयस्वान्। वयस्वान् उपधानो मन्त्र आसामिष्टकानामिति वयस्या इष्टका:। 'तद्वान्—' (१४७१) इति मतोर्लुकि यत्। ततो वयस्यासु इष्टकासु अभिधेयासु प्रथमासमर्थात् मतुबन्तमूर्धशब्दात् आसामिति षष्ठ्यर्थे मतुप् स्यात्। यत् प्रथमानिर्दिष्टम्, उपधानो मन्त्रश्चेत् स भवति। यत्तदासामिति निर्दिष्टम् इष्टकाश्चेत्ता भवन्ति इति सूत्रार्थ:। सरलार्थस्तु—यथा 'तद्वान्—' (१४७१) इति सूत्रे प्रोक्तस्तथा अत्रापि यत् स्थले मतुपमादाय बोध्य:। आवर्त्य इति अनुवर्त्य इत्यर्थ:। तत्र मतोरिति मत्वन्ते लाक्षणिकम्। तद् व्याचष्टे—मतुबन्तो यो मूर्धशब्द इत्यादि। प्रथमस्य मतोरिति। मूर्धशब्दाद् द्वौ मतुपौ। मूर्धन्+मतुप्—मूर्धन्वत्। ततो मूर्धन्वत्+मतुप् एतेन सूत्रेण। अनयो: परस्मिन् आसज्यमाने पूर्वस्य लोप इत्यभिप्राय:। वय:शब्दादिति। वय:शब्दवता मन्त्रेण चेदिष्टकोपधानं विधीयते इति सरलार्थ:। नन्वेवं किं वय:शब्दमन्त्रवता मन्त्रेण इष्टकोपाधानमिष्यते नपुन: मूर्धशब्दवतापि—तत्र मूर्धशब्दवतापि मन्त्रेणेत्याह—यस्मिन् मन्त्रे मूर्धवय:शब्दौ स्त इति। तेनेति। तादृशेन मन्त्रेणेत्यर्थ:। मूर्धन्वान् वयस्वान् च यो मन्त्रस्तेनेति यावत्। मन्त्रश्च यथा—'मूर्धा वय: प्रजापतिश्छन्द' इति। मूर्धन्वतीरुपदधातीत्येतत् उदाहरणमित्यभिप्राय:। मूर्धन्वान्+मतुप् इति स्थिते पूर्वमतुप् लोपे पुन: मूर्धन्

मतुप् इति स्थिते 'मादुपधायाश्च—' (१८९८) इति मस्य वत्वे मूर्धन्शब्दस्य मूर्धन्वत् इत्येव भवति। ततो ङीप् उगितश्चेत्यनुसारादिति बोध्यम्। वयस्यास्विति किम्? केवल मूर्धशब्दवता मत्वे णीपाधेयासु माभूदिति नागेशः।

२४७४। मत्वर्थे मासतन्वोः ॥ ४।४।१२८ ॥

दी—। नभोऽभ्रम्। तदस्मिन्नस्तीति नभस्यो मासः। ओजस्या तनूः।

यत् is affixed to a base in the sense of मतुप् i.e., in that sense in which मतुप् has been dealt with provided the derivative refers to month or body. Thus नभस्य—नभस्+यत्—नभस् means cloud ; hence the derivative नभस्य refers to a month of the rains wherein the clouds gather. ओजस्+यत्—ओजस्य (strength)—refers to body having strength.

मित—। मत्वर्थे इति। मतोः अर्थः। तस्मिन्। यस्मिन्नर्थविशेषे (अस्त्यर्थे इति यावत्) मतुप् प्रत्ययो विहितस्तस्मिन्नर्थे प्रातिपदिकाद् यत्प्रत्ययः स्याद् मासशब्दे तनुशब्दे च वाच्ये इति।

२४७५। मधोर्ञ च ॥ ४।४।१२९ ॥

दी—। माधवः। मधव्यः।

The affix ञ as well as यत् is affixed to the base मधु in the sense of मतुप् ; both refer to the months of the spring season.

मित—। मधोरिति। मधुशब्दाद् मत्वर्थे ञः स्यात् चकारात् यच्च। ञ इति सुत्रेऽविभक्तिको निर्देशः प्रथमार्थे।

२४७६। ओजसोऽहनि यत्खौ ॥ ४।४।१३० ॥

दी—। ओजस्यमहः। ओजसीनं वा।

यत् and ख are affixed after घोजस् in the sense of मतुप् provided the derivative refers to day. Thus घोजस्यम् (यत्) or घोजसीनम् (ख or ईन) a scorching day.

मित—। सुगमा।

२४७७। वेशोयशआदेर्भगाद्यल् ॥ ४।४।१३१ ॥

दी—। यथासंख्य नेष्यते। वेशो बलं तदेव भगः इति कर्मधारयः। वेशोभग्यः। वेशोभगीनः। यशोभग्यः। यशोभगीनः।

२४७८। ख च ॥ ४।४।१३२ ॥

दी—। योगविभाग उत्तरार्थः। क्रमनिरासार्थश्च।

The affix यल् (य) and ख are appointed after the base भग preceded by वेशस् or यशस् in the sense of मतुप् in vedic literature. Here the separate mention of ख is for the next rule where ख only may become present and not यल् also and for removing respectivity (क्रमनिरासार्थंच). Thus वेशस् as well as यशस् leading भग may take either of the affixes. वेशस् means strength and भग means माहात्म्य (magnanimity) or कीर्ति (praise) here. Cp.—'भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु'। ल in the affix is for accent.

मित—। वेशोयश इति। वेशश्च यशश्च वेशयशे आदिरादौ वा यस्य तस्मादिति विग्रहः। वेशःशब्दपूर्वात् यशःशब्दपूर्वाच्च भगशब्दात् यल् (उत्तरसूत्रस्य) ख च स्यातां मत्वर्थे छन्दसि विषये। यथासंख्यं नेष्यते इति। एतच्च योगविभागादेव ज्ञाप्यते इति भाषितदाह—क्रमनिरासार्थश्च। योगविभागस्तु उत्तरे सूत्रे खस्यैवानु-वृत्तिर्यथा स्यात् यलो माभूत्। इत्थं योगविभागो न क्रियते। किन्तु यल्खौ

चेत्येकमेव सूत्रं विधाय व्याख्यातम् इति मनोरमायां स्थितम्। तद् यथासंख्य सूत्र-भाष्यविरुद्धमिति शब्दरत्नम्।

२४७९। पूर्वैः कृतमिनयौ च ॥ ४।४।१३३ ॥

दी—। गम्भीरेभिः पथिभिः पूर्विणेभिः। ये ते पन्थाः सवितः पूर्व्यासः।

इन and य (as well as ख) are affixed to पूर्व ending in instrumental plural in the sense of कृतम्—done (by the old). Thus पूर्विण and पूर्व्य (also पूर्वीण with ख)—पूर्व्यास is due to असुक् in vedic literatue by 'आज्जसेरसुक्' in the plural number.

मित—। पूर्वैरिति। कृतमित्यर्थनिर्देशः। तृतीयाबहुवचनान्तात् पूर्वशब्दात् "कृतम्" इत्यर्थे इन इति य इति। चात् खः। पूर्विण इति। पूर्वैः कृत इति इनः। तैः 'बहुलं छन्दसी'ति भिस ऐसभावः ऐकारस्यैकारः इत्यादि। एवं पूर्व्यासः। पूर्व्य इति यत्प्रत्ययान्तं पदम्। तस्य बहुवचनान्तस्य छन्दसि 'आज्ज-सेरसुक्' इत्यागमः। खपूर्वीणः।

२४८०। अद्भिः संस्कृतम् ॥ ४।४।१३४ ॥

दी—। यस्येदमप्यं हविः।

यत् after अप् ending in instrumental plural (अद्भिः) is affixed in the sense of 'reformed' by (or purified with it). Thus अप्यम् हविः—the offering (हविः) purified with water.

मित—। अद्भिरिति। तृतीयाबहुवचनान्ताद् अपशब्दात् "संस्कृतम्" इत्यर्थे यत् स्याच्छन्दसि। अपां हविरिति। हविरिति यत् किञ्चिद् यज्ञियद्रव्यम्।

२४८१। सहस्रेण* संमितौ घः ॥ ४।४।१३५ ॥

दी—। सहस्रियासो अपां नोर्मयः। सहस्रेण तुल्या इत्यर्थः।

घ after सहस्र is attached in the sense of likeness or similarity ( तुल्यार्थे ). Thus सहस्त्रियासः—सहस्र + घ—( इय )—

मित—। सहस्रेणेति। तृतीयान्तैकवचनात् सहस्रशब्दात् सम्मिताविल्यर्थे घप्रत्ययः स्याच्छन्दसि। संमितिः साहश्यमित्याह—सहस्रेण तुल्यमित्यर्थः। [ अत्र समिताविल्यपि पाठो दृश्यते। तस्य नेयार्थत्वात् परित्यक्तम् ]। सहस्रियास इति। सहस्रिय इत्येव प्रातिपदिकम्। असुगागमः प्रागवत्।

३४८२। मतौ च ॥ ४।४।१३६ ॥

दी—। सहस्रशब्दात मत्वर्थे घः स्यात्। सहस्रमस्यास्तीति सहस्रियः।

In the sense of मतुप् घ takes place after सहस्र.

मित—। मतौचेति। स्पष्टम्। 'तपः सहस्राभ्यां विनीनी' (१९०० ) इति सहस्री इत्येव तु लोके।

३४८३। सोममर्हति यः ॥ ४।४।१३७ ॥

दी—। सोम्यो ब्राह्मणः। यज्ञार्ह इत्यर्थः।

य is affixed after सोम ending in accusative singular in the sense of—he deserves it, Thus सोम्य—deserving सोम or the soma sacrifice.

मित—। सोममिति। सोमशब्दात् तदर्हतीत्यर्थे यत् स्याच्छन्दसि। सोमस्तदाख्योयागः।

३४८४। मये च ॥ ४।४।१३८ ॥

दी—। सोमशब्दाद् यः स्यान्मयडर्थे। सोम्यं मधु। सोममयमित्यर्थः।

मित—। मयेड़िति। मयडर्थे इति। मयडर्थाश्च चत्वारः आगतविकारावयव-प्रकृता इति। तत्रागतार्थे पञ्चमी समर्थविभक्तिः। विकारावयवयोः षष्ठी। प्रकृतार्थे तु प्रथमा।

३४८५। मधोः ॥ ४।४।१३८ ॥

टी—। मधुशब्दान्मयडर्थे यत् स्यात्। मधव्यः। मधुमय इत्यर्थः।

यत् after the word मधु comes in the sense of मयट्।

३४८६। वसोः समूहे च ॥ ४।४।१४० ॥

टी—। चान्मयडर्थे यत्। वसव्यः। 'अक्षरसमूहे छन्दस उपसंख्यानम्' (वार्तिक)। छन्दःशब्दादक्षरसमूहे वर्तमानात् स्वार्थे यदित्यर्थः। * आश्रावयेति चतुरक्षर"मस्तु श्रौष"डिति चतुरक्षरं "यजे"ति द्व्यक्षरं "ये यजामहे" इति पञ्चाक्षरम् द्व्यक्षरो वषट्कार एष वै सप्तदशाक्षरश्छन्दस्यः।

यत् after वसु is attached both in the sense of मयट् and in that of समूह (or plural sense). Thus वसव्यः (derivation as before) —meaning वसुमय or वसूनि (riches). 'अक्षरसमूहे—' (Varttika) —i.e., यत् after the word छन्दस् which conveys the sense of 'all alphabets' is appointed in its own sense (छन्दस् एव छन्दस्यः). Thus आश्रावय (or आश्रवय as बालमनोरमा reads) etc.; 4+4+2+5+2=17 alphabets in all.

[* तत्त्वबोधिनीस्थोऽयं पाठः। बालमनोरमायां तु आश्रवय इति पठ्यते। तथा यजेति व्यक्षरम् ये 'यजामहे' इत्यनयोः स्थानविपर्यासः कृतः। अन्यत् समानम्]।

मित—। वसोरिति। समूहे कृत्यर्थद्योतनार्थम्। चकारोऽनुक्तसमुच्चयार्थः। तदाह—मयडर्थे इति। तेन समूहार्थे मयडर्थे च वर्तमानात् वसोर्यदिति सूत्रार्थः। वसव्य इति। वसुमयः वसवो वेत्यर्थः। वसुरस्त्रियां धनादिवाची। 'देवभेदेऽनलेरश्मौ वसुरत्ने धने वसु' इत्यमरः। अक्षरसमूहे— इति वार्तिकमिदम्। तदर्थमाह —छन्दःशब्दात्तदिति। स्वार्थे इति छन्दोऽर्थं इत्यर्थः। "आश्रावये"ति। एषु अक्षर गणना—आ, श्रा, व, य इत्यादिक्रमेण बोध्या। सप्तदशाक्षर इति। सप्तदशानामक्षराणां समाहारः सप्तदशाक्षरम्। तत्र अर्थे आद्यचि सप्तदशाक्षर इति। छन्दस्य इति।

२४८७। नक्षत्राद् घः ॥ ४।४।१४१ ॥

टी—। स्वार्थे। नक्षत्रियेभ्यः स्वाहा।

मित—। नक्षत्रादिति। समूहे इति निवृत्तम्। अर्थविशेषनिर्देशाभावात् स्वार्थे प्रत्यय इति मत्वा व्याचष्टे—स्वार्थे इति। नक्षत्रियेभ्य इति। नक्षत्रेभ्य इत्यर्थः।

२४८८। सर्वदेवात्तातिल् ॥ ४।४।१४२ ॥

टी—। स्वार्थे। सविता नः सुवतु सर्वतातिम्। प्रदक्षिणिद्देवतातिमुराणः *।

The affix तातिल् ( ताति ) after the words सर्व and देव is attached in theirown senses. Thus सर्वतातिम् means सर्वान् नः and देवतातिः means देव। Cp.—also आ देवताता हविषा विधेमहति ऋग्वेद।

मित—। सर्वेति। सर्वशब्दाद् देवशब्दाच्च तातिल् स्याच्छन्दसि। लित्त्व स्वरार्थम्। अर्थविशेषनिर्देशाभावात् स्वार्थेऽयमपि प्रत्ययः। सर्वतातिम् इति। सर्वान् ( नः ) इत्यर्थः। देव एव देवतातिः।

---

* प्रदक्षिणिद्देवतातिमुराणः इति सम्पूर्णम् पाठोऽस्ति गृहस्पतिस्मृतौ । [illegible]

३४८९ । शिवशमरिष्टस्य करे ॥ ४।४।१४३ ॥

टी—। करोतीति करः। पचाद्यच्। शिवं करोतीति शिवतातिः। याभिः शन्ताती भवथो ददाशुषे। अथो अरिष्टतातये।

In शिवशमरिष्टस्य there is षष्ठी by 'उभयप्राप्तौ कर्मणि' as कर is derived as कृ + अच् by 'नन्दिग्रहि पचादिभ्यो ल्युणिन्यचः'; the form being शिवशमरिष्टं करोति = शिवशमरिष्टस्य करः. Thus the rule means the affix तातिल् is employed after the words शिव शम् meaning well-being and अरिष्ट ( meaning good or evil ) in the sense of तत् करोति—he does that. शिवतातिः—a doer of good. शन्ताती ( dual of शन्ताति ) the doers of well being; ददाशुषे—dative of ददाश्वान्—a giver. अरिष्टतातये—to the doer of good or evil.

मित—। शिवशमिति। तातिल् इति वर्तते। शिवं च शम् च, अरिष्टम् चेति द्वन्द्वात् षष्ठ्येकवचनम्। शिवशमरिष्टं करोति = शिवशमरिष्टस्य करः। 'उभयप्राप्तौ कर्मणी'ति कृद्योगलक्षणा कर्मणि षष्ठी। तदाह—करोतीति करः इति। 'नन्दिग्रहि—' इत्यादिना पचाद्यच्। शिवशब्दात् शमशब्दात् अरिष्टशब्दाच्च तत् करोतीत्यर्थे तातिल्प्रत्ययः स्यादित्यर्थः। शिवं करोतीति। शिवं भद्रं मङ्गलं वा। शन्तातीति। शन्तातिशब्दस्य प्रथमाद्विवचनम्। शमित्यव्ययं मङ्गलार्थे। अरिष्टतातये इति। प्राग्वद् विग्रहः। अरिष्टं मङ्गलं तद्विरुद्धं वा। 'अरिष्टेतु शुभाशुभे' इत्यमरः। यद्यपि 'गर्भागारं वासगृहम् अरिष्टं सूतिकागृहम्' इति स एव तथापि शिवशमसाहचर्यादत्रास्य ( अरिष्टशब्दस्य ) मङ्गलामङ्गलार्थे वृत्तिरिति विभावनीयम्।

३४९० । भावे च ॥ ४।४।१४४ ॥

टी—। शिवादिभ्यो भावे तातिः स्याच्छन्दसि। शिवस्य भावः शिवतातिः। शन्तातिः। अरिष्टतातिः॥ इति चतुर्थोऽध्यायः॥

तातिल् after शिव, शम and अरिष्ट is employed in the sense of भाववाच्य also in the vedic literature. Thus शिवतातिः etc., in the sense of शिवता or the state of doer of good etc.

Here ends the fourth Chapter.

मित—। भावे चेति। तातिल् अनुवर्तते। शिवशमरिष्टस्येति च। तदाह—शिवादिभ्य इत्यादि। शिवता ( मङ्गलमयता ) शन्ता ( शुभावहता ) अरिष्टता ( मङ्गलामङ्गलापरता ) इति क्रमेणार्थः॥ इति मितभाषिण्यां चतुर्थोऽध्यायः।

---

# अथ पञ्चमोऽध्यायः

२४८१। सप्तनोऽञ्छन्दसि॥ ५।१।६१॥

दी—। 'तदस्य परिमाणम्' (१६२३) इति 'वर्गे' इति च। सप्त साम्नानि असृजत्। सप्तवर्गानित्यर्थः*। 'शन्शतोर्डिनिश्छन्दसि तदस्य परिमाणमित्यर्थे वाच्यः' ( वार्तिक )—पञ्चदशिनोऽर्धमासाः। त्रिंशिनो मासाः। 'विंशतेश्चेति वाच्यम्' (वार्तिक)। विंशिनोऽङ्गिरसः। 'युष्मदस्मदोः साट्टश्ये वतुब्वाच्यः' ( वार्तिक )। त्वावतः पुरूवसो। न त्वावाँ अन्यः। यज्ञं विप्रस्य मावतः।

[ * एतत्तत्त्वबोधिनीग्रन्थेन दृश्यते। अर्थप्रकटनपरत्वादयं पाठस्तु सौहृद्यएव ]।

In Vedic literature the affix अञ् is attached after the word सप्तन् in the sense of 'तदस्य परिमाणम्' ( 1723 )—this is its measure—provided the derivative thus formed, denotes the sense of

वर्ग or group. Thus 'सप्त साप्तानि—' where वर्ग is the sense of साप्त —सप्तन् + अञ—the टि portion ( अन् of सप्तन् ) eliding by 'नस्तद्धिते' and वृद्धि of the beginning vowel (आद्यच्) by 'तद्धितेष्वचामादेः' (1075). 'शन्शतोर्डिनिः—' ( Varttika ). It has to be said that in Vedic literature the affix डिनि ( इन् ) is attached after bases ( संख्याशब्द ) ending in शन् and शत् (as पञ्चदशन्, विंशत् etc.,) in the sense of 'तदस्य परिमाणम्'. Thus पञ्चदशिनः—( पञ्चदशन् + डिनि—टिलोप ) in the sense of पञ्चदश अहानि परिमाणमेषाम्—fifteen days form this measure—etc. 'विंशतेः—'. This is the second Varttika here—विंशति also takes डिनि = विंशिनः—(विंशति + डिनि—ति elides by 'तिविंशतिर्डिति' and then 'अ' of विंश is dropped by 'यस्येतिच' ( 311 )—The Angirasas or the descendants of the Sage Angiras are twenty गोत्रs in number. 'युष्मदस्मदोः—' this is the third and last Varttika here. It has to be said that the affix वतुप ( वत् ) takes place after युष्मद् and अस्मद् in the sense of similarity. Thus—त्वावान्, मावान् etc.—'like you' ( त्वम् इव ) and like me ( अहमिव )—युष्मद् + वतुप् = अस्मद् + वतुप्—युष्म and अस्म being replacedby त्व and म by 'प्रत्ययोत्तरपदयोश्च' ( 1373 ) whereupon 'मपर्य्यन्तस्य' operates = we have त्वद् + वत् and मद् + वत् = त्वावत् and मावत् by 'आ सर्वनाम्नः' ( 430 ).

मित—। सप्तन इति। 'तदस्य परिमाणम्' ( ५।१।५२ ) इत्यधिकृतं वर्तते। 'पञ्चद्दशतौ वर्गे वा' ( ५।१।६० ) इत्यतो वर्गे इति चानुवर्तते। तदाह—तदस्येत्यादि। तदस्य परिमाणमित्यर्थे छन्दसि सप्तन् शब्दादञ् प्रत्ययः स्याद्. वर्गश्चेत् प्रत्ययान्तस्यार्थो भवेदित्यर्थः। सप्त साप्तानीनि। अत्र क्लीवमार्षम्। साप्तान् इत्येवार्थः। सप्तसंख्याकान् सप्तवर्गान् ( ऊनपञ्चाशत् परिमितान् पवनान् ) असृजदिति मन्त्रार्थः। सप्त परिमाणमेषामिति सप्तन् अञ् इति स्थिते 'नस्तद्धिते' इति टिलोपे 'तद्धितेष्वचामादेः' ( १०७५ ) इत्यादिवृद्धौ साप्त इति प्रातिपदिकं विशेष्यनिघ्नम्। उदाहरणे 'जश्-

शसोः शिः' इति शसः शि। तस्य 'नपुंसकस्य—' इति नुमागमः। 'शन्शतोर्डिनि—' इति वार्तिकमिदम्। 'शन्' इत्यन्तात् शतदित्यन्ताच्च प्रातिपदिकात् छन्दसि विषये डिनिप्रत्ययः स्यात्तदस्य परिमाणमित्यर्थे इति वक्तव्यमित्यर्थः। पञ्चदशिन इति। पञ्चदश अहानि परिमाणमेषामिति विग्रहः। पञ्चदशन्+डिनि इति स्थिते प्राग्वट्टिलोपे पञ्चदशिन् इति प्रातिपदिकम्। ये पञ्चदशभिर्दिनैर्यज्ञं समापयन्ति तेषामियं संज्ञा। एवं विंशिन इत्यत्र 'नस्तद्धिते' इत्यनेन न टिलोपप्रसङ्गः तिंशदित्यत्र तदप्रसक्तेः प्रत्ययस्य डित्करणमिति विज्ञेयम्। 'विंशतेश्चेति—' इति वार्तिकम्। 'छन्दसि तदस्य परिमाणमित्यर्थे' डिनिरिति शेषः। विंशिन इति। विंशतिः (गोत्राणि) परिमाणमेषामिति विग्रहे विंशति डिनि इति स्थिते 'तिविंशतेर्डिति' (८४४) इति तिलोपे 'यस्येति च' (३११) इति विंशशब्दस्य अकारलोपे च इन् इत्यस्य योगे विंशिन् इति प्रातिपदिकम्। अङ्गिरस इति। अङ्गिरस अयास्यो गार्ग्यौगौतम इत्यादि प्रवरभिन्नानि विंशतिरवान्तरगोत्राणि एषामित्यर्थे इति शब्देन्दुशेखरः। 'युष्मदस्मदोः—' इति इदमपि तृतीयवार्तिकम्। साद्दश्ये (औपम्ये) वाच्ये युष्मदशब्दात् अस्मदशब्दाच्च वतुप् स्यादिति वक्तव्यमित्यर्थः। त्वमिव, अहमिव इति विग्रहे युष्मद् वतुप् अस्मद् वतुप् इति स्थिते 'प्रत्ययोत्तरपदयोश्च' (१३७२) इति मपर्यन्तस्य "त्व" "म" इत्यादेशे 'आ सर्वनाम्नः' इत्याकारः। त्वावतः त्वत्सदृशस्येत्यर्थः। त्वावां अन्य इत्यत्र 'दीर्घादटि—' (३७३१) इति रुत्वे 'अतोऽटि नित्यम्' (३६३२) इति अनुनासिकः।

## ३४८२। छन्दसि च ॥ ५।१।६७॥

दी—। प्रातिपादिकमात्रात्तदर्हतीति यत्। सादन्यं विदथ्यम्।

यत् (from 'दण्डादिभ्यो यत्'—5.1.66) is attached after any word in the Vedas in the sense of 'deserves it'. सादन्यम्—deserves a house (सदन+यत्—दीर्घ by 'अन्येषामपि दृश्यते'—3537) विदथ्यम्—deserves a sacrifice—विदथ+यत्—

मित—। छन्दसीति। 'छन्दसि घस्' (५।१।१०६) इति वर्तते। 'तदर्हति' (५।१।६३) इति च तदाह—प्रातिपदिकमात्रादित्यादि। सादन्यमिति। सदनं गृहम्। तदर्हतीति विग्रहः। 'अन्येषामपि दृश्यते' (३५३७) इत्युपधादीर्घः। एवं विदथो यज्ञः। तमर्हतीति विग्रहे विदथ्यम्। यस्येति चेत्यकारलोपः।

३४८३। वत्सरान्ताच्छश्छन्दसि ॥ ५।१।९१ ॥

टी—। निर्वृत्तादिष्वर्थेषु। इद्वत्सरीयः।

In Vedic literature, bases ending in वत्सर take छ (ईय) in the sense of ('तेन निर्वृत्तम्') or it is complete by that. Thus इद्वत्सरीय—इद्वत्सर+छ—a time indicated or completed by इद्वत्सर—which means an era of five years (पञ्चवर्षीय युग); similarly इदावत्सरीय, परिवत्सरीय and संवत्सरीय as these three इदावत्सर etc., are synonyms of इद्वत्सर।

मित—। वत्सरान्तादिति। 'तेन निर्वृत्तम्' (५।१।७९) इति वर्तते। तेन शेषं पूरयन्नाह—निर्वृत्तादिष्वर्थेषु इति। छन्दसि विषये वत्सरान्तात् प्रातिपदिकात् छप्रत्ययः स्यादिति शेषः। इद्वत्सरीय इति। इद्वत्सरेण निर्वृत्त इति विग्रहे छः। तस्य ईयादेशः। एवम् इदावत्सरीय इत्यादि। इद्वत्सरेदावत्सरसंवत्सरपरिवत्सरशब्दाः पञ्चवर्षपरिमितयुगस्य प्रत्येकं संज्ञा इति व्याख्यातारः।

३४८४। संपरिपूर्वात् ख च ॥ ५।१।९२ ॥

टी—। चाच्छः। संवत्सरीणः संवत्सरीयः। परिवत्सरीणः परिवत्सरीयः।

ख (ईन) as well as छ (ईय) takes place in the above sense after the bases ending in वत्सर being preceded by सम् and परि।

मित—। संपरिपूर्वादिति। सम्पूर्वात् परिपूर्वाच्च वत्सरान्तात् प्रातिपदिकात् खः स्यात्। चकारात् छश्च।

३४८५। छन्दसि घस् ॥ ५।१।१०६ ॥

दी—। ऋतुशब्दात्तदस्य प्राप्तमित्यर्थे। भाग ऋत्वियः।

घस् ( affix ) in छन्दस् is appointed after the word ऋतु in the sense of 'तदस्य प्राप्तम्'—time has come to it. Thus ऋत्वियः— a share that has reached its proper time, ऋतु + घस् ( इय )—here भत्व of ऋतु being barred by 'सिति च' ( 1252 ) which thus makes the base ( ऋतु ) a पद and consequently 'ओर्गुणः' ( 847 ) does not apply and we have यण् by 'इको यण्—' ( 47 ).

मित—। छन्दसीति। 'ऋतोरण्' ( ५।१।१०५ ) इत्यत ऋतोरित्यनुवर्तते। 'समयस्तदस्य प्राप्तम्' ( ५।१।१०४ ) इति सर्वमपि। शेषं पूरयन्नाह = ऋतु शब्दादिति। ऋतोर्घस् स्याच्छन्दसि तदस्य प्राप्त समय इत्यर्थे इत्यर्थः। भाग ऋत्विय इति = ऋतुप्राप्तो भाग इत्यर्थः। ऋतुः प्राप्तोऽस्य इति विग्रहे ऋतु + घस् ( इय ) इति स्थिते घसः सित्त्वात् ( सित्करणस्य इदमेव प्रयोजनम् ) 'सितिच' ( १२५२ ) इति पदत्वाद् भत्वस्य निवृत्तिः 'ओर्गुणः' ( ८४७ ) इति गुणोऽपि निवृत्तः। ततश्च 'इको यण्—' ( ४७ ) इति यण्।

३४८६। उपसर्गाच्छन्दसि धात्वर्थे ॥ ५।१।११८ ॥

दी—। धात्वर्थविशिष्टे साधने वर्तमानात् स्वार्थे वतिः स्यात्। यदुद्वतो निवतः। उद्गतान्निर्गतादित्यर्थः।

An उपसर्ग which stands for such a साधन or verbal procedure as is marked or impregnated with the sense of a root, takes the affix वति in its own sense. Thus उद्वत् and निवत्; Cp.—the instance 'यदुद्वतः'—उत् + वति and नि + वति etc। इकार in the affix is for pronunciation. Here उपसर्गs उद् and नि signify उद्गत and निर्गत respectively as in उद्वेल निष्कौशाम्ब etc., where उद् stands for उद्गत and नि for निर्गत. So also is the case here and उद्

and नि thus stand for उद् + गम् + क्त and निर् + गम् + क्त ( धात्वर्थविशिष्टे साधने वर्तमान ).।

मित—। उपसर्गादिति। 'तेन तुल्यं क्रिया चेद्वतिः' (५।१।११५) इत्यतो वतिरित्यनुवर्तते। तेन 'छन्दसि विषये उपसर्गाद् वतिः स्यात् स चेत् स्वार्थपदं व्याचष्टे'—धात्वर्थविशिष्टे साधने वर्तते इति। इह धात्वर्थ इत्यत्र धातुशब्दो धात्वर्थक्रियायां लाक्षणिकः। सा क्रिया अर्थः प्रयोजनं यस्य तद् धात्वर्थम्। धात्वर्थं च साधनमेव। अतएवोक्तं धात्वर्थविशिष्टे साधने वर्तमानादिति। उपसर्गादिति शेषः। उपसर्गास्तावद् बह्वर्थद्योतकाः। तथा चोक्तम्—'उपसर्गेण धात्वर्थो बलादन्यत्र नीयते। प्रहाराहारसंहारविहारपरिहारवत्।' इति। तत्र क्रियायामनुवर्तमानायां सत्याम् एते तामन्यत्रार्थे वर्तयन्ति। यत्र पुनः कापि क्रिया नैव श्रूयते तत्रैते उपसर्गाः क्रियाविशिष्टं साधनमेवाहुः। यथा 'उत्सूत्रम् ( भवानाह—' इति भाष्यम् )। निष्कौशाम्बिरित्यादौ। तत्रैतद्विज्ञातं यद् 'यत्र क्रिया कापि न विद्यते तत्रैव यथा उपसर्गमात्राद् वतिः स्यादित्येवमर्थं सूत्रम्' इति। 'धात्वर्थ' पदस्यैव चैवम्विधार्थद्योतने शक्तिरिति प्रतिपत्तव्यम् इत्यास्तां तावत्। उद्वतो निवत इति। पञ्चम्यन्तमुदाहरणमिति ज्ञेयम्। अतएवाह—उद्गतात् निर्गतादित्यर्थः। उद्वत्, निवत् इत्येव वतिप्रत्ययान्तं पदम्। उद्वान् निवान् वाऽयं देश इत्यादिविशेषणपदान्यपि प्रयोगः।

२४८७। षट् च छन्दसि॥ ५।२।५०॥

दी—। नान्तादसंख्यादेः परस्य डटस्थट् स्यात्मट् च। पञ्चथम्—पञ्चमम्। 'छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि' (१८८८)। पर्यवस्थाता शत्रुः। अपत्यं परिपन्थिनम्। मा त्वा परिपरिणो विदन्।

The (पूरणार्थक) affix डट् is replaced or followed in the Vedas by थट् as well as मट्, when coming after a base ending in a नकार but at the same time having no numerical word at the outset. Thus पञ्चन् + डट् = पञ्च + थट् or पञ्चन् + मट्. But एकादशन् +

डट्—एकादश:—here एक preceeding दशन् a नान्त base, डट् is not replaced by थट् or मट्. ट् for attaching ङीप् in feminine—पञ्चमी। 'छन्दसि—' In vedic literature, the words परिपन्थिन् and परिपरिन् are irregularly formed with इनि in the sense of an opponent (पर्यवस्थाता). It is important to note in this connection that the term परिपन्थिन् though copiously used in classical language is really vedic.

मित—। थट् चेति। 'नान्तादसंख्यादेर्मट्' (५।२।४९) इत्यव्यवहितं पूर्वं सूत्रम्। 'तस्य पूरणे डट्' (५।२।४८) इचि च तत्पूर्ववर्ति। तदाह—नान्तादसंख्यादेरित्यादि। एवञ्च पञ्चममिति। पञ्चानां पूरणमिति विग्रहे पञ्चन् शब्दाद् डटि कृते थट्मठौ। असंख्यादि: किम्? एकादश:। अत्र 'तस्य पूरणे—' इति डट्। न तु तस्य थट्मटौ। 'छन्दसि—' इति। छन्दो विषयत्वादेतत् सूत्रं यद्यपि पूर्वत्र (तद्धितप्रकरणे) उद्धृतं तथापि अत्र उपन्यस्तम्। छन्दसि विषये परिपन्थिन् परिपरिन् इत्येतौ शब्दौ इन्प्रत्ययान्तौ निपात्येते इति तदर्थ:। पर्य्यवस्थाता शत्रुरिति। पतिपच्च इत्यर्थ:। एतेन 'लोके परिपन्थिशब्दो बहुश: प्रयुक्तोऽपि न न्याय्य' इति व्याख्यातम्।

३४९८। बहुलं छन्दसि ॥ ५।१।१२२ ॥

**दी—। मत्वर्थे विनि: स्यात्। अग्निस्ते ओजस्वी ॐ। 'छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्चेति वक्तव्यम्' (वार्तिक)—इति दीर्घ:। मंहिष्टमुभयाविनम्। शुनमष्ट्राव्यचरत्। 'छन्दसीवनिपौ च वक्तव्यौ' (वार्तिक)। ई—रथीरभूत्। सुमङ्गलीरियं वधू:। मघवानमीमहे।**

विनि in the sense of मतुप् is variously used in vedic literature. Thus अग्निस्ते etc। 'छन्दोविन्प्रकरणे—' (Varttika). It has to be said that under the section of विन् (विनि) pertaining to the vedic

language, the final vowel and the bases अष्ट्रा, मेखला, द्वय, उभय रुजा and हृदय are lengthened also when they take विनि by the rule बहुलं छन्दसि। Thus अष्ट्राव्यचरत्—अष्ट्रावी + अचरत्—अष्ट्रा ( = अश् + ष्ट्रन् करणे ) + विनि = अष्ट्राविन्—having teeth. Similarly मेखलावी, द्वयावी etc. The instance 'अग्निर्स्ते—' found in Balamanorama, seems to be wrongly inserted into the text. 'छन्दसी—' etc (Varttika 2nd.)—Break up as छन्दसि + ईवनिपौ. (It has to be said that) in छन्दस् ई and वनिप् (affixes) are attached to bases in the sense of मतुप्. Thus रथी:—one having a car or chariot रथ ई—अ (final) of रथ eliding by 'यस्येति' (311). मघवा (मघवन्—the base) = मघ (wealth) + वनिप्. Decline as मघवा मघवानौ मघवानः। मघवानम् मघवानौ मघोनः etc. In classical language, however, we have मघवत् also declined as मघवान् मघवन्तौ मघवन्तः। मघवन्तम् मघवन्तौ मघवतः etc., ईमहे—we pray (for riches). सुमङ्गली: (सुमङ्गल ई) = highly accomplished.

[ * 'अग्निर्स्ते—' इयं तत्त्वबोधिनीग्रन्थे नोपलभ्यते। ]

मित—। बहुलमिति। 'तदस्यास्त्यस्मिन्निति मतुप्' (५।२।९४) इत्यतो मतुबर्थोऽधिक्रियते। 'अस्मायामेधास्रजो विनिः' (५।२।१२१) इत्यतो विनिरिति चानुवर्तते। तदाह—मत्वर्थे, विनिरिति। तस्य विन् इति शिष्यते। 'छन्दोविन् प्रकरणे—' इति वार्तिकमिदम्। छन्दसि विषये यो विन् (विनि) प्रत्ययः प्रकृतः (तस्मिन् विनिप्रत्यये परतः) अष्ट्रा, मेखला, द्वय, उभय, रुजा, हृदय इत्येषां शब्दानामन्त्यस्य दीर्घः स्यादित्यपि वाच्यमित्यर्थः। इति दीर्घ इति। एतेन उभयाविनम् इत्याद्यं ग्रन्थकर्तुं (दीक्षितस्य) उदाहरणविषय इत्यनुमीयते इति अग्निर्स्ते इत्युदाहरणं प्रक्षिप्तमिवाभाति। अष्ट्राव्यचरदिति = अष्ट्रावी + अचरत् इतिच्छेदः। अष्ट्रावीयुग्म मचरदित्यर्थः। अश्नुतेऽन्नयेत्यष्ट्रा दंष्ट्रापर्यायः। करणे ष्ट्रन्। उभयाविनम् इति। उभये (ऊर्ध्वमधश्च विद्यमाना लोकाः) अस्य सन्तीति उभयाविन्। अनेन सूत्रेण विन-

प्रत्यये वार्तिकेन दीर्घः। एवं मेखलावी। रुजावी। हृदयावी। लोके तु मेखलावान्। रुजावान्। हृदयवान् इति मतुपि बोध्यम्। छन्दसीति वार्तिकमिदमपि। छन्दसि ईवनिपौ इतिच्छेदः। मत्वर्थे प्रातिपदिकात् ईश्च वनिप् च प्रत्ययौ स्त इत्यर्थः। रथीरिति। रथोऽस्यास्तीति विग्रहे 'यस्येति च' (३१२) इत्यकारलोपः। एवं सुमङ्गलीति। सु सुष्ठु मङ्गलम् सुमङ्गलम् 'सुः पूजायामि'ति ततः समासः। तत सुमङ्गलम् अस्यास्या इति ईः। ईमहे वयं याचामहे इत्यर्थः—धनमिति शेषः। वनिपि मघवन् इति वेदे। मतुपि मघवत् इति लोके।

## ३४९९। तयोर्दार्हिलौ च छन्दसि॥ ५।३।२०॥

**टी—। इदन्तदोर्यथासंख्यं स्तः। इदा हि व उपस्तुतिम्। तर्हि।**

दा and र्हिल are respectively affixed to इदम् and तद् in the Vedas. Thus इदा—इदम्+दा and इदम् is changed into इ by 'इदम् इश्' (1949). इदा=Now. तर्हि=then. तद्+र्हिल।

मित—। तयोरिति। 'इदमोर्हिल्' (५।३।१८) 'तदो दा च' (५।३।१९) इति पूर्वसूत्रे। तेनात्र तच्छब्देन इदन्तदोः परामर्शः। तदाह—इदन्तदोरिति। इदमो दा, तदोर्हिल् इत्यर्थः। 'इदम इश्' (१९४९) इति दाप्रत्यये परे इशादेशः।

## ३६००। था हेतौ च छन्दसि॥ ५।३।२६॥

**टी—। किमस्था स्याद्धेतौ प्रकारे च। कथा ग्रामं पृच्छसि। कथा दाशेम।**

था (affix) is attached to किम् in the Vedas in the senses of cause or manner. 'कथा—' etc What is reason for your going about the village. किम् था, किम् is replaced by क by 'किमः कः'. कथा दाशेम how should we give? दाश् दाने भ्वादिः।

मित—। था हेताविति। 'प्रकारवचने थाल्' (५।३।२३) इत्यतः प्रकारवचने इति। 'किमश्च' (५।३।२५) इत्यतः किम् इति चानुवर्तते। तदाह—किमस्था

स्यादित्यादि। कथा ग्राममिति। अत्र हेतौ था। कथमित्यर्थः। कथा दाशेमिति। अत्र प्रकारे प्रत्ययः। केन प्रकारेण दद्यात इत्यर्थः। दाश्र दाने इति भौवादिकाल्लिङ्। 'किमः कः' इति विभक्ति प्रत्यये परतः कादेशः। थाल इत्यनुवर्तमाने पुनः थाग्रहणं स्वरार्थम्।

३५०१। पश्च पश्चा च छन्दसि॥ ५।३।३३॥

दी—। अवरस्य अस्तात्यर्थे निपातौ। पश्च हि सः। नो ते पश्चा॥ 'तुश्छन्दसि' (२००७)। तृजन्तात्तृन्नन्ताच्च इष्ठन्नीयसुनौ स्तः। आसुतिं करिष्ठः। दोह्णीयसी धेनुः।

These two viz पश्च and पश्चा are irregularly found in the sense of अवर taking अस्ताति (affix) i.e अवर+अस्तात् irregularly results in पश्च or पश्चा. पश्च हि सः he is behind or inferior. 'तु—' This is a rule enjoying इष्ठन् and ईयसुन् respectively after bases ending in तृच् and तृन् (स्वरभेदः). Thus करिष्ठः—कर्तृ+इष्ठन् where तृ disappears by 'तुरिष्ठेमेयःसु' (2008). करिष्ठः = अतिशयेन कर्ता। दोह्णीयसी—दोग्ध्री+ईयसुन्, दोग्ध्री though feminine takes the affix (ईयसुन्) by the परिभाषा 'प्रत्ययग्रहणे लिङ्गविशिष्टस्यापिग्रहणम्—'। Then दोग्धृ+ईयस् by पुंवद्भाव (or masculineness) by 'भस्याढे—' (Varttika); then तृ eliding as before we have दोघ्+ईयस्—घ (ग) disappearing in connection with the disappearence of तृ cp. the परिभाषा 'निमित्तापाये नैमित्तिकस्याप्यपायः' the cause disappearing the consequence also disappears. We have दोह्णीयसी with ङीप्—a superior milch cow (अतिशयेन दोग्ध्री).

सित—। पश्च पश्चेति। 'दिक्शब्देभ्यः सप्तमीपञ्चमी प्रथमाभ्यो दिग्देशकालेष्वस्तातिः' (५।३।२७) इत्यतोऽस्तातिरिति। 'विभाषा परावराभ्याम्' (५।३।२९) इत्यतोऽवरेति चानुवर्त्य व्याचष्टे—अवरस्य अस्तात्यर्थे इत्यादि। निपातावित्ति। पश्च

पश्चा चेति द्वावित्यर्थः। लोके तु पश्चात् इत्येव। पश्च इत्यादि॥ तुश्छन्दसीति। एतत् सूत्रं पूर्वत्र (तद्धितप्रकरणे) व्याख्यातमपि पुनरपि व्यख्यायते। तृ इति तृन्तृचोः सामान्येन ग्रहणम्। करिष्ठइति। अयमेषु अतिशयेन कर्ता इति विग्रहे कर्तृ इष्ठन् इति स्थिते 'तुरिष्ठेमेयः सु' (२००८) इति तृलोपे रूपम्। दोहीयसीति। इयमनयोरतिशयेन दोग्ध्री इति विग्रहे—दोग्धृ ी ईयसुन इति स्थिते 'भस्याढेतद्धिते' इति वार्तिकात् तद्धितस्य कर्तव्ये प्रागेव पुंवद्भाव इति ङीप् निवर्तते। ततो दोग्धृ (दुह् + तृन्) इति तृन्नन्तात् शब्दात् इयसुनि, 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति परिभाषाबलवात् तृण् निवृत्तौ सत्याम् तन्निमित्तकघत्व ('दादेधातोर्घः' इति प्राप्त) जश्त्वयोरपि निवृत्तिः। गुणस्तु प्रवर्तत एव। लुप्तेऽपि तृनि प्रत्ययलक्षणपरिभाषया तत्प्रवृत्ते निर्बाधत्वात्। तदेवं दोह् ईयस् इति जाते पुनः ङीपि दोहीयसीति। अत्र तृजन्तादिष्ठन् तृन्नन्तात्तु ईयसुन् इति यथासंख्यं प्रत्ययौ इति बोध्यम्।

## ३५०२। प्रत्नपूर्वविश्वेमात्थाल् छन्दसि॥ ५।३।१११॥

## टी—। इवार्थे। तं प्रत्नथा पूर्वथा विश्वथेमथा।

थाल् (affix) in the sense of इव or Similarity is atached in vedas after the words प्रत्न (antiquity), पूर्व, विश्व and इम meaning इदम्. Thus प्रत्नथा etc.

मित—। प्रत्नपूर्वेति। 'इवे प्रतिकृतौ' (५।३।९६) इति वर्तते। तदाह—इवार्थे इति। प्रत्न, पूर्व, विश्व, तथा इम इति इदंशब्दार्थकः।

## ३५०३। अमु च छन्दसि॥ ५।४।१२॥

## टी—। किमेत्तिङव्ययघादित्येव। प्र तं नय प्रतरम्।

अमु (अम) as well as आमु (from the rule 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे'—2005—5.4.11) is added after किम्, an एकारान्त word तिङन्त words (पठति, पचति etc) and an अव्यय, joined with घ ('तरप्तमपौ घः'); प्रतरम्—प्र + तर (अव्यय + घ) then add अम्।

मित—। अमुचेति। 'किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे' इत्यव्ययहितं पूर्वं

सूत्रम्। तदो व्याचष्टे—किमत्तिङ् इत्यादि। किमः, एदन्तात्, तिङः, अव्ययाच्च यो घस्तदन्तात् अमु चकारादाम् च स्यात् छन्दसि इति सूत्रार्थः। यद्यपि अद्रव्य-प्रकर्षे एव भाषायां लौकिके विहितस्तथापि छन्दसि द्रव्यप्रकर्षेऽपि उभयमपि (अमुः आमुश्च) विधीयते। सर्वविधीनां वैकल्पिकत्वादिति मनसिकृत्य उदाहरति—प्रतरमिति। प्रकर्षार्थकात् प्रशब्दात्तरपि प्रतर इति तस्मादनेन अम्। आमि प्रतराम् इति। एवं किंतरम्—किंतराम् इत्यादि बोध्यम्।

## २५०४। वृकज्येष्ठाभ्यां तिल्तातिलौ च छन्दसि ॥ ५।४।४१ ॥

दी—। स्वार्थे। यो नो दुरेवो वृकतिः। ज्येष्ठतातिं वर्हिषदम्।

The words वृक and ज्येष्ठ in their own senses take respectively तिल् and तातिल् in the Vedas. Thus वृकति means a वृक and ज्येष्ठताति means ज्येष्ठ.

मित—। वृकज्येष्ठाभ्यामिति। अर्थं विशेषानुक्तेराह—स्वार्थ इति। वृकति। वृक एवेत्यर्थः। एवं ज्येष्ठतातिः। यथासंख्यं प्रत्यय इति बोध्यम्।

## २५०५। अनसन्तान्नपुंसकाच्छन्दसि ॥ ५।४।१०३ ॥

दी—। तत्पुरुषाट्टच स्यात् समासान्तः। ब्रह्मसामं भवति। देवछन्दसानि।

In vedic language a neuter base ending in अन् or in अस् takes the समासान्त affix टच् when a तत्पुरुष compound is effected with any of them. Thus ब्रह्मन् + सामन् = ब्रह्मसामन् + टच = ब्रह्मसामम्। देवानां छन्दस्—देवछन्दस् + टच्—देवछन्दसानि—

मित—। अनसन्तादिति। अन्तशब्दस्य प्रत्येकं योगः। अन्नन्तादसन्ताच्च नपुंसकात् तत्पुरुषात् समासान्तः टजिति बोध्यम्। 'समासान्ताः' (५।४।६८) इत्यधिकारसूत्रम्। 'तत्पुरुषस्य—' (५।४।८६) इत्यतस्तत्पुरुषादिति विभक्ति विपरिणामेन। अन्नन्तादाह—ब्रह्मसाममिति। ब्रह्मणः साम इति विग्रहे ब्रह्मसामन्

इति स्थिते टच्। टिलोपः। एवं देवस्य छन्दांसि इति विग्रहे देवच्छदस् इति प्रातिपदिकात् टच्।

२५०६। बहुप्रजाश्छन्दसि ॥ ५।४।१२३ ॥

दी—। बहुप्रजा निर्ऋतिमाविवेश।

The term बहुप्रज takes the समासान्त affix असिच् in vedic language. Thus बहवः प्रजा अस्य इति बहुव्रीहौ बहु+प्रजा+असिच्=बहुप्रजाः by 'यस्येति च' then दीर्घ by 'अत्वसन्तस्य—' as in वेधस्।

मित—। बहुप्रजा इति। 'नित्यमसिच् प्रजामेधयोः' (५।४।१२२) इत्यतो-ऽसिजनुवर्तते। तेन बहुव्रीहौ 'बहुप्रज' इति प्रातिपदिकान्नित्यमसिच समासान्तश्छन्दसि इत्यर्थः। बहवः प्रजा अस्येति विग्रहे बहुप्रजा इति जाते असिच। 'यस्येति च' (२११) इत्यकारलोपे बहुप्रजस् इति। ततः 'अत्वसन्तस्य—' इति दीर्घः।

२५०७। छन्दसि च ॥ ५।४।१४२ ॥

दी—। दन्तस्य दतृशब्दः स्याद्बहुव्रीहौ। उभयतोदतः प्रतिगृह्णाति।

When a बहुव्रीहि compound is effected the word दन्त is replaced by the word दत् in the Vedas. Thus उभयतोदतः—having teeth both ways.

मित—। छन्दसीति। 'बहुव्रीहौ सक्थ्यक्ष्णोः—' (५।४।११३) इत्यतो बहुव्रीहौ इत्यनुवर्तते। 'वयसि दन्तस्य दतृ' (५।४।१४१) इत्यतो 'दन्तस्य दतृ' इति च। ततो व्याचष्टे—दन्तस्येत्यादि। उभयतोदत इति। उभयतोः (पार्श्वयोः) दन्ता यस्येति विग्रहे उभयतोदत् इति प्रातिपदिकम्। तादृशाद् यजमानात् प्रतिगृह्णाति स्वीकुरुते इत्यर्थः।

२५०८। ऋतश्छन्दसि ॥ ५।४।१५८ ॥

दी—। ऋदन्ताद् बहुव्रीहेर्न कप्। हता माता यस्य हतमाता। इति पञ्चमोऽध्यायः।

In vedic literature, a बहुव्रीहि compound ending in ऋकार does not take the समासान्त affix कप्. Thus हतमाता one whose mother has been killed and not हतमातृकः. which we have in classical language with कप् by 'नद्यृतश्च' (3.4.153)

मित—। ऋत इति। ऋदिति ऋकारमात्रस्य ग्राहकम्। न तु दीर्घस्यापि। 'तपरस्तत् कालस्य' इति नियमात्। ऋत इति तदन्तत्वे लाक्षणिकम्। एतच्च पञ्चम्यन्तम्। तेन तदन्तपरिभाषया (येन विधिस्तदन्तस्येत्यनया) ऋदन्तादिति लभ्यते। 'उरः प्रभृतिभ्यः कप्' इत्यतः समासान्तः कबनुवर्तते। 'न संज्ञायाम्' इत्यतो नेति च। बहुव्रीहिरिति प्रकृतम्। तदाह—ऋदन्ताद बहुव्रीहेरित्यादि। हतमातेति। 'नद्यृतश्च' इति प्राप्तस्य निषेधोऽयं छन्दसि विषये। लोके तु हतमातृक इति युक्तम्। [क्वचित् छान्दसोपि प्रयुज्यते—यथा कापिलीमातः इत्यादि]। इति मितभाषिण्यां पञ्चमोऽध्यायः।

**३५३८। 'एकाचो द्वे प्रथमस्य' (२१७५)। 'छन्दसि वेति वक्तव्यम्' (वार्तिक)। यो जागार। दाति प्रियाणि।**

It is to be said that with reference to vedic literature, द्वित्व due by 'एकाचः—' is only optionally effected. Thus जागार—जागृ+लिट् णल्, here there is no duplication of जागृ, but its final ऋकार has been replaced by आर् (वृद्धि) due to णित्व by 'अचो ञ्णिति' (254). The alt. form is जजागार. दाति—दा+लट् तिप् दा being जुहोत्यादि, should have given ददाति by 'जुहोत्यादिभ्यः श्लुः' and श्लौ।

मित—। पूर्वं सुबध्यायेषु छन्दोगत सुबादितद्धितान्तान् प्रत्ययान् प्रदर्श्य तिङन्त-प्रत्ययप्रयोगप्रकारं प्रदर्शयिष्यन्नाह—एकाच इति। इति प्राप्ते इति शेषः। 'छन्दसि वेति—' वार्तिकमिदम्। एकाच इति प्राप्तं द्वित्वं छन्दसि विषये वा स्यादिति वाच्यम् इत्यर्थः। यो जागार इति—जागृणल् इति स्थिते द्वित्वाभावाद णित्वाद 'अचो

मिषति इति रूपम्। पूर्वे द्वित्वादिना जजागार इति। दाति—दा दाने जुहोत्यादिः। तस्य 'जुहोत्यादिभ्यः श्लुः' 'श्लौ' इति द्वित्वाभावे रूपम्। पक्षे ददातीति। 'दाति प्रियाणि चिद्वसु' इति पूर्णो मन्त्रांशः। चिदित्यनर्थकः। वसु धनम्। व्यत्ययेनैकवचनम्।

३५०९। तुजादीनां दीर्घोऽभ्यासस्य ॥ ६।१।७ ॥

दी—। तुजादिराकृतिगणः। प्रभरा तूतुजानः। सूर्यं मामहानम्। दाधारच यः पृथिवीम्। स तूताव।

The reduplicate ( अभ्यास ) of तुजादि classroots is lengthened whenever the root is duplicated. (N. B.—तुजादि class roots are not met with in the गणपाठ appended to तत्त्वबोधिनी etc ). 'प्रभरा—'Strike surely. तूतुजान—तुज्+कानच् in place of लिट्. प्रभरा=प्र+हृ+लोट् हि—'हृग्रहोर्भः (Vartika), आकार by ( 'द्व्यचोऽतस्तिङः' (3537). मामहानम्—मह्+कानच् in place of लिट्; मह means to worship. दाधार—धृ+लिट् ण against दधार the classical form. तूताव—तु ( सौत्रधातु )+लिट् ण।

मित—। तुजादीनामिति। तुज्प्रभृतीनां तुजादिगणोक्तानां धातुनामभ्यासस्य दीर्घः स्यात्। आकृतिगण इति। तत्त्वबोधिन्यादिगणपाठे तुजादीनामुल्लेखो नास्तीति नात्रोपस्थाप्यते। प्रभरेति। अत्र तुजेर्लिटः कानच्। किच्वाद् गुणाभावः। लिडादेशत्वाद् द्वित्वादि। प्रभरेति प्रपूर्वाद् हरतेर्लोड्मध्यमैकवचनम्। 'हृग्रहोर्भः—' इति वार्तिकाद् हस्य भः। 'द्व्यचोऽतः—' ( ३५३७ ) इति दीर्घः। मामहानमिति। मह पूजायाम अस्माल्लिटः कानच्। दाधारेति—धरते र्लिट्। दधार इति लोके। तूताव इति। तुः सौत्रो धातुः। तस्माल्लिट्। वृद्ध्यावादेशौ।

३५१०। बहुलं छन्दसि ॥ ६।१।३४ ॥

दी—। ह्वः संप्रसारणं स्यात्। इन्द्रमाहुव ऊतये। 'क्वचि त्वेकत्तरपदादिलोपश्च छन्दसि' ( वार्तिक ) चक्षुःशब्दे परे त्वेः

संप्रसारणमुत्तरपदादेर्लोपश्चेति वक्तव्यम्। तृचं सूक्तम्। छन्दसि किम्? त्र्यृचानि। 'रयेर्मतौ बहुलम्' (वार्तिक)—रेवान्। रयिमान् पुष्टिवर्द्धनः।

सम्प्रसारण of the root ह्वे is irregularly effected in vedic literature. Thus 'इन्द्रम्—' etc I invoke Indra for help or protection. आहुवे=आ ह्वे+लट्ए by 'बहुलं छन्दसि', सम्प्रसारण has been effected by this rule then उवङ् by 'अचि श्नुधातुभ्रु—' (271). The instance being vedic where nearly everything is irregular, there is no sense of challenge although आत्मनेपद takes effect by 'स्पर्द्धायमाङः' or आत्मनेपद due to its उभयपदित्व। It has to be said that when the word ऋच् follows, the word त्रि (three) gets सम्प्रसारण and the disappearance of the beginning letter (ऋ) of the subsequent member (ऋच्) is effected. Thus तृचं सूक्तम्—a hymn containing there ऋक्s or verses of the ऋग्वेद। Expain as—तिस्रः ऋचः यस्मिन् (सूक्ते तत्—the समासान्त affix अ comes in by 'ऋक्पूरब्धूःपथामानक्षे') It is neuter in connection with सूक्तम् which is neuter. त्र्यृचानि—the exposition is as before but सम्प्र. being wanting there is यण् due to combination by 'इकोयण्—'(47). 'रयेर्मतौ—' (Varttika). सम्प्रसारण in the case of the word रै (wealth) is optional when मतुप् follows. Thus रेवान् wealthy also रयिमान्।

मित—। बहुलमिति। 'ष्यङः संप्रसारणम्' (६।१।१३) इत्येतत् सर्वमप्यत्रानुवर्तते। तदाह—ह्वः सम्प्रसारणमिति। आहुवे इति। आङ्पूर्वाद् ह्वेञो लडुत्तमैकवचनम्। 'बहुलम्—' इति शपो लुकि अनेन सम्प्रसारणे, पूर्वरूपेण 'अचि श्नु—' (२७१) इत्युवङादेशः। 'त्रेस्त्रयः—' वार्तिकमिदम्। अर्थमाह—ऋच्शब्दे

परे इति। उत्तरपदादेरिति। उत्तरपादस्यादेरिति विग्रहः। ऋच ऋकारस्य लोप इत्यर्थः। ऋचं सूक्तम्। त्रिस्रः ऋचो यस्येति बहुव्रीहिः। अनेन सम्प्रसारणे त्रि इत्यस्य ऋ इति। ततः 'सुपो धातुप्रातिपदिकयो'रिति ऋ ऋच् इति स्थिते ऋच ऋकारस्य लोपः 'ऋक् पूरव् धूः—' इति समासान्तः अप्रत्ययः। सूक्तापेक्षया क्लीबत्वम्। तृचानि इति। प्रागवत् समासान्तः अप्रत्ययश्च। अत्र सम्प्रसारणोत्तरपदादिलोपौ न। 'रयेःमतौ—' इति इदमत्र द्वितीयं वार्तिकम्। रयिशब्दस्य विकल्पेन (बहुलम्) सम्प्रसारणं स्यान्मतुप् प्रत्यये परे इत्यर्थः। सम्प्रसारणे रेवानिति। तदभावे रयिमानिति विवेकः।

२५११। चायः की ॥ ६।१।३५ ॥

**टी—। न्यन्यं चिक्युर्न निचिक्युरन्यम्। लिटि उसि रूपम्। बहुलग्रहणानुवृत्तेर्नेह—अग्निं ज्योतिर्निचाय्य।**

The root चाय (चायृ पूजानिशामनयोः भ्वादि) is variously replaced by की in vedic language. Thus चिक्युः—चाय + लिट् उस्—की + उस् then duplication and अभ्यासकार्य' and 'कुहोश्चु' etc. No guna due to कित्व of उस्। निचाय्य—नि + चायृ + ल्यप् here की does not replace चायृ because of the following of the term 'बहुलम्' from the preceding rule of this.

मित—। चाय इति। 'बहुलं छन्दसी'त्यनुवर्त्तते (६।१।६४)। ततोऽयमर्थः—चाय इति धातोर्बहुलं कीभाव स्याच्छन्दसीति। चिक्युरिति। प्रक्रियामाह—लिटि उसिरूपमिति। चाय उस् इति स्थिते कीभावे तस्य द्वित्वे 'कुहोश्चु'रिति च रूपम्। एवं निचिक्युरिति। चायृ पूजादौ इति भौवादिको धातुः। निचाय्य इति लापि क्यादेशो न बहुलग्रहणस्य सर्वविधिव्यभिचारद्योतनार्थत्वात्।

**२५१२। अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशिराशीर्तांः ॥ ६।१।३६ ॥**

**टी—। एते छन्दसि निपात्यन्ते। इन्द्रश्च विष्णो यदपस्पृ-**

र्धेयाम् । स्पर्धेर्लङि आथाम् । अर्कमानृचुः । वसून्यानृहुः । अर्चेरर्हेश्च लिट् उसि । चिचुषे । चुरङो लिटि थासि । यस्तित्याज । त्यजेर्णलि । श्रातास्त इन्द्रसोमाः । श्रिता नो ग्रहाः । श्रीञ् पाके निष्ठायाम् ।* आश्रिरंदुह्रे । मध्यत आश्रीर्तः । श्रीञ एव क्विपि निष्ठायां च ।

[ * तत्त्वबोधिनी reads आशीर others illustrate आशिरम् ( आशिरम् according to Balamanorama ) ].

These nine words viz अपस्पृधेयाम्, आनृचुः, आनृहुः, चिचुषे, तित्याज, श्राता, श्रितम्, आशिर् and आशीर्त are irregularly formed with the affixes shown below, in vedic literature. इन्द्रश्च विष्णुः—That which Indra and Vishnu challenged. There are two schools of opinion regarding the formation of the word अपस्पृधेयाम—(1) According to the author ( Bhattoji ) it is derived as स्पृध+लङ् आथाम्. In his view the root is duplicated, then अट् before आथाम् takes place. Then—सम्प्रसारण of रेफ ; these operations take place on the strength of irregularity or निपातन, (2) According to Nagesha, however, it is derived as अप+स्पर्ध+लङ् आथाम्. In this method, सम्प्रसारण and अकारलोप only are irregularly effected. अट् is absent by the rule 'बहुलं छन्दस्यमाङ्योगेऽपि'. In the former case the secular form is अपस्पर्धेथाम् and in the latter अपास्पर्धेथाम् । अर्कमानृचुः—worshipped the sun, अर्च+लिट् उस—After application of सम्प्रसारण and अकारलोप by निपातन as before ; so आनृहुः in लिट् उस । The secular forms are respectively —आनर्चुः and आनर्हुः । चिचुषे—चुर+लिट् से, सम्प्रसारण of अभ्यास and want of इट् before से by निपातन । तित्याज—त्यज+लिट् णल्, सम्प्रसारण

of अभ्यास by निपातन ; तत्याज is the classical form. श्राता:—श्री + क्त—श्री is replaced by श्रा by निपातन। श्रिता:—श्री + क्त plural here, श्री is placed irregularly by श्रि. आशिरम्—आ + श्री + क्विप, here श्री has been replaced by शिर् by निपातन. आशीर्ता:=आ + श्री + क्त—शिर् in place of श्री as also absence of नत्व of निष्ठा by निपातन।

मित—। अपस्पृधेथामिति। अपस्पृधेथाम्, आनृचुः, आनृहुः, चिच्युषे, तित्याज, श्राताः, श्रितम्, आशिर्, आशीर्तं इत्येते नव निपात्यन्ते। स्पर्धेर्लङि आथामिति। ततो निपातनात् धातोर्द्विर्वचनम् अडागमस्य अभ्यासात् प्राक् प्रवृत्तिः, रेफस्य सम्प्रसारणम्, धातोरकारस्य लोपश्चेति प्रक्रिया। मनोरमास्थितम्। अत्र पक्षे अस्पर्धेथाम् इति भाषायाम् प्रत्युदाहरणम्। शब्देन्दुशेखरमते तु अपपूर्वात् स्पर्धेर्लङि इति विशेषः। 'छन्दस्यमाङ्योगेऽपि' इत्यडागमप्रतिषेधः। निपातनाद् रेफस्य सम्प्रसारणम् अकारलोपश्च धातोः प्राग्वत्। अस्मिन् पक्षे अपास्पर्धेथाम् इति प्रत्युदाहरणं भाषायाम्। अपस्पृधेथाम् इत्यस्य इन्द्रो विष्णुश्च समुदितकर्तारौ इति बोध्यम्। 'विष्णोर्वेद' इति सम्भिन्नछान्दसः। अर्चेरर्हेश्च लिटि उसि इति। आनृचुरिति अर्च् धातोर्लिटि रूपम्। अत्र रेफस्य निपातनात् प्राग्वत् सम्प्रसारणेन ऋकारः। अकारस्य लोपश्च। तत ऋच् इत्यस्य द्वित्वम्। उरदत्वादि। 'अत आदेः' इति अभ्यासस्य दीर्घत्वम्। 'तस्मान्नुड् द्विहलः' इति नुडागमश्च। आनर्चुरिति प्रत्युदाहरणं भाषायाम्। आनृहुरिति अर्हेर्लिटि उसि रूपम्। प्राग्वद् रेफस्य सम्प्रसारणम्, अकारस्य लोपश्च। ततो द्वित्वादि। आनर्हु-रिति भाषायां प्रत्युदाहरणम्। चिच्युषे इति। प्रक्रियाम् आह—च्युङो लिटि थासीति। अभ्यासस्य संप्रसारणम्, प्रत्ययस्य वलादित्वेऽपि इडभावश्च निपातनादिति भावः। प्रत्युदा-हरणम्—चुच्युविषे इति लोके। तत्येजेति रूपम्। अभ्यासस्य निपातनात् संप्रसारणम्। तत्याजेति प्रत्युदाहरणम्। श्राता— श्रित इति। श्रीञ् पाके इत्यस्मात् क्त इति स्थिते— श्रीञः क्रमात् श्राभावः श्रिभावश्च। आशिरम् इति। आङ् पूर्वात् श्रीञः क्विपि धातोः शिरादेशः। आशीर्तं इति—अत्रापि तस्यैव धातोः शिरादेशः। 'रदाभ्याम्—' इति निष्ठातकारस्य निपातनाद् नकाराभावः। 'हलि चेति' (३५४) दीर्घश्च भवति।

३५१३। खिदेश्छन्दसि ॥ ६।१।५२ ॥

टी—। खिद दैन्ये। अस्यैच आ वा स्यात्। चिखाद। चिखेदेत्यर्थः।

The root खिद signifying improverishment gets the substitute आ for its एच् or एकार optionally in vedic literature. Thus चिखाद (खिद+लिट् अ) in place of चिखेद the corresponding vedic form by 'व्यत्ययो बहुलम्'. For खिद दैन्ये being read (in the दिवादि class) as आत्मनेपदी should have given चिखिदे only in लिट्. आत्व of एकार as above is by 'आदेचः—' (2370) and when आत्व is absent गुण takes place.

भिन—। खिदेरिति। 'आदेचः—' (३।१।४५) इत्यत 'आत् एच' इति। 'विभाषा लीयतेः' (६।१।५१) इत्यतो विभाषेति चानुवर्तते। धातुश्च दिवादिर्व्याख्यानात्तदाह—खिद दैन्ये इत्यादि। चिखाद इति। पक्षे चिखेद इति। अत्र लघूपधगुणः। उभयमपि वैदिकं मन्तव्यम्। अत्र हि व्यत्ययो बहुलम् इति परस्मैपदम्। लोके तु चिखिदे इत्येव इति विभावनीयम्।

३५१४। शीर्षंश्छन्दसि ॥ ६।१।६० ॥

टी—। शिरःशब्दस्य शीर्षन् स्यात्। शीर्ष्णः शीर्ष्णो जगतः।

शीर्षन् is the substitute for शिरस् in the vedas. Thus शीर्ष्णः of the head of the universe. Both the terms are in the genitive. Apply the rules 'अल्लोपोऽनः' (234) and 'रषाभ्याम्—' (255). Nagesha says that all injunctions in the vedic literature being optional or rather various in character, शिरस् sometimes is not substituted by शीर्षन्।

मिय—। शीर्षन्निति। स्पष्टोर्थः। शीर्षं इति। शिरस् इत्यस्य शीर्षन् भावे जाते षष्ठी। 'अल्लोपोऽनः' (२३४) इति अल्लोपः। 'रषाभ्याम्—' (२३५) इति णत्वम्। 'पूर्वत्रासिद्धादपि विधौ स्थानिवद्भावः' इति पक्षे तु 'अट्कुप्वाङ्—' इत्यनेन णत्वमित्याहुः।

२५१५। वा छन्दसि ॥ ६।१।१०६ ॥

दी—। दीर्घाज्जसि इचि च पूर्वसवर्णदीर्घो वा स्यात्। वाराही वाराह्यौ। मानुषीरीलते विशः। उत्तरसूत्रद्वयेऽपीदं वाक्यभेदेन संबध्यते। तेनामि पूर्वत्वं वा स्यात्। शमीं च शम्यं च। सूर्म्यं सुषिरामिव। 'संप्रसारणाच्च' (२२०) इति पूर्वरूपमपि वा। इज्यमानः—यज्यमानः।

पूर्वसवर्णदीर्घ or lengthening of the vowel homogeneous with the preceding is optionally effected in vedic literature when the सुबन्त affix जस् or affixes beginning with an इच् vowel i.e vowels, save and except अ + आ, follow a दीर्घ base ( दीर्घात् ) : Thus वाराही वाराह्यौ. Note that both वाराह्यौ and वाराही are the optional dual forms of the base वाराही which is derived as वराहस्य विकारः—वराह + अण् by 'प्राणिरजतादिभ्यः' (1532) or वराह + अण् in the same sense by 'अवयवे च प्राण्योषधिवृक्षेभ्यः' (1515). Then add ङीप् by 'टिड्ढाणञ—' 1470. In the former case therefore there is पूर्वसवर्णदीर्घ and in the latter there is यण् ( वाराही + औ ) when पूर्वसवर्णदीर्घ is wanting. This is the illustration when an इच् letter follows. Now the illustration in जस्, मानुषीः ईलते विशः = subjects born of मनु i.e men in general, worship (Him). ईलते = ईड्ते—ईल् लट् अन्ते. मानुषीः—मनु + अञ् ( जातार्थे ) + ङीप् + षुक् 'मनोर्जातावञ्यतौ षुक् च'. Alternative मानुष्यः when पूर्वसवर्णदीर्घ is

wanting. This rule 'वा छन्दसि' as a separate connective adds itself to the two subsequent rules also. These two rules are 'अमिपूर्वः' (6.1.107) and 'सम्प्रसारणाच्च' (6.1.8). Thus 'अमि पूर्वः'= now पूर्वरूप is optional, in vedic language, when अम् follows e.g शमीम् (by पूर्वरूप) and शम्यम् (without it). And 'सम्प्रसारणाच्च' means पूर्वरूप after सम्प्र. is optional in vedic language; e.g इज्यमानः by पूर्वरूप, when सम्प्र. of य (of यज्+यक+शानच् कर्मणि) has been effected. But यज्यमान without पूर्वरूप।

भिस—। चेति। 'नादिचि' (६।१।१०४) इत्यत इचि इत्यनुवर्तते। 'दीर्घाज्जसि च' इत्यत्र दीर्घादिति जसि इति च। ततो व्याचष्टे—दीर्घाज्जसि इचि चेति। दीर्घात् जसि, दीर्घात् इचि चेत्यन्वयः। पूर्वसवर्णदीर्घ इति। एतच्च 'अकः सवर्णे दीर्घः' (६।१।१०२) इत्यतस्तदनुवृत्तिलभ्यम्। दीर्घाद् इचि उदाहरति—वाराही वाराह्यौ इति। वराहस्य विकार इति वराहशब्दाद् 'अवयवे च प्राण्योषधिवृक्षेभ्यः' (१०१५) इत्यण् प्रत्यये वाराह इति लब्धे तस्माद् 'टिड्ढाणञ्—' इति ङीपि वाराही इति प्रातिपदिकम्। यद्वा तस्मिन्नेवार्थे 'प्राणिरजतादिभ्योऽञ्' (१५२२) इत्यञि विहिते पूर्ववद् ङीपि वाराहीति। ततो वाराही+औ इति स्थिते पूर्वसवर्णदीर्घे वाराही इत्येव तिष्ठति औ विभक्तिर्लुप्यते। पूर्वसवर्णस्य दीर्घाभावे तु यथापूर्वं यण्—वाराह्यौ इति। औ इति इच् प्रत्याहारीयमिति ज्ञेयम्। जसि उदाहरति—मानुषीरिति 'मनोर्जातावञ्यतौ षुक् च' इति मनुशब्दाद् जात्यर्थे अञ् प्रत्ययः षुगागमश्च। ततो 'टिड्ढाणञ्—' (५७४) इति ङीप्। एवं मानुषीशब्दात् प्रातिपदिकाद् जसि तु पूर्वसवर्णदीर्घपक्षे इदम्। मानुषीः मानवीयाः विशः प्रजाः मनुष्या इत्यर्थः ईळते ईडते पूजयन्ति तां देवतामिति शेषः। ईडस्तुतौ इति धातुः। तस्य लटि बहुवचनम्। डकारस्य ळकारः। अग्निमीळे इत्यादौ यथा। पक्षे यथापूर्वं मनुष्य इत्येव। एतत् सूत्रव्याख्यानमवैव परिनिष्ठितम्। एतस्यानुवृत्त्या उत्तरसूत्रद्वयमपि व्याख्यातमिति मत्वाह—उत्तरसूत्रद्वयेऽपीति। उत्तरसूत्रद्वयं तावत्—'अमि पूर्वः' (६।१।१०७) इति 'सम्प्रसारणाच्च' (६।१।१०८) इति च। तयोः पूर्वं व्याचष्टे

स्वयमेव—तेनेति। पूर्वत्वमिति पूर्वरूपत्वमित्यभिप्राय:। वा छादिति। छन्दसि इति शेष:। लोके तु यथा छात्तथा पूर्वत्वे वोक्तम्। शमीं च शम्यं चेति। पूर्वरूपपक्षे शमी अम् इति स्थिते शमीम् इति। पूर्वरूपाभावे तु यथापूर्वं यणि शम्यम् इत्येव। न चात्र पक्षे पूर्वरूपत्वाभावाद् पूर्वसवर्णदीर्घ आशङ्कनीय:। विकल्पविधानसामर्थ्यात् पूर्वसवर्णदीर्घस्यापि निवृत्तिसिद्धे:। नहि विद्यतेऽनयो: कश्चिद् विशेष:। तस्माद् यणेव प्रवर्तते। सम्प्रसारणाच्चेति द्वितीयं सूत्रं व्याचष्टे—इति पूर्वरूपमपीति। सम्प्रसारणादचि परे पूर्वरूपेकादेशश्छन्दसि विषये वेत्यर्थ:। इज्यमान इति। यज् कर्मणि शानच् इति स्थिते यकि सुगागमे च यज् यक् मान इति जाते यकारस्य सम्प्रसारणं पूर्वरूपत्वं च। यज्यमान इत्यत्र पूर्वरूपाभावे इ+अ ज्यमान इति स्थिते यणि यज्यमान इति विवेक्तव्यम्।

३५१६। शेश्छन्दसि बहुलम् ॥ ६।१।७० ॥

टी—। लोप: स्यात्। याते गात्राणाम्। ता ता पिण्डानाम्। 'एमन्नादिषु छन्दसि पररूपं वक्तव्यम्' (वार्तिक)। अपां त्वेमन्। अपां त्वोद्मन्।

Elision of शि is in various ways effected in the Vedas. शि is the technical name for 'जस्' and 'शस्' the सुप् विभक्ति after a neuter base, cp. 'जस् शसो: शि' (312). This is in gram. taken or known as सर्वनामस्थानम्—'शि सर्वनामस्थानम्' (313). 'या ते—'Here या is elliptical for यानि the nominative plural of the pronominal base यद्. यत्+जस् = यत्+शि = यत् elision of शि। य by 'त्यदादीनाम:' which applies on the injunction 'प्रत्ययलोपे प्रत्ययलक्षणम्' = य+नुम् by 'नपुंसकस्य झलच:' (314) = या न् by 'सर्वनामस्थाने च—' (250), then elision of नकार by 'हलङ्याब्भ्यो दीर्घात्—'(252). Similarly 'ताता—' = 'तानि तानि—'. एमन्नादिषु—This is a Varttika. It has to be said that in vedic language एमन् etc following,

that vowel, in the matter of combinatin predominates which is subsequent i.e the एकार of एमन् etc only is retained when any sandhi is sought. Thus त्वेमन्—त्वा + एमन् and त्वोग्मन्—त्वा + ओग्मन्. Note that without this Varttika the forms would have been त्वैमन् etc by 'वृद्धिरेचि' (72).

मित—। शेरिति। 'लोपो व्योर्वलि' (६।१।६६) इत्यतो लोप इत्यनुवर्तते। ततो व्याचष्टे लोपः स्यादिति। छन्दसि विषये शेः बहुलं (विभाषा) लोपः स्यादित्यर्थः। शिरिति नपुंसकात् प्रातिपदिकात् परवर्तिनोर्जस्शसोः संज्ञा। 'जश्शसोः शिः' (३१२) इत्युक्तेः। तच्च सर्वनामस्थानमिति कथ्यते 'शि सर्वनाम स्थानम्' इति सूत्रानुसारात्। या ते इति—यानि ते इति प्राप्ते। यत् जस् इति स्थिते तस्य यत् शि इति जाते अनेन शेः लोपः। ततो 'यत्' इति मात्र स्थिते 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति शिलोपेऽपि तल्लक्षणमादाय प्रत्ययकार्यं 'त्यदादीनामः' इत्यस्य प्रवृत्तेः 'य' इति भवति। ततो 'नपुंसकस्य झलचः' (३१४) इति नुम्। 'सर्वनामस्थाने चासंबुद्धौ' (२०) इति दीर्घे कृते 'हल्ङ्याब्भ्यो दीर्घात्—' इति न् लोपः। ततो या इति। एवं ताता इत्यत्र। तानि तानि इति लोके। वेदेऽप्यन्यत्र बहुलमित्युक्तेः। 'एमन्नादिषु छन्दसि—' इति वार्तिकमिदम्। एमन् प्रभृतिषु शब्देषु परेषु छन्दसि विषये पररूपं वक्तव्यमित्यर्थः। त्वेमन्निति। त्वा + एमन्, त्वा + ओग्मन् इतिच्छेदः। एतद् वार्तिकाभावे अत्र 'वृद्धिरेचि' (७२) इति वृद्ध्या त्वैमन् त्वौग्मन् इति स्यात्।

२५१७। भय्यप्रवय्ये च छन्दसि ॥ ६।१।८३ ॥

दी—। बिभेत्यस्मादिति भय्यः। वेतेः प्रवय्या इति स्त्रियामेव निपातनम्। प्रवेयमित्यन्यत्र। छन्दसि किम्? भेयम्। प्रवेयम्। 'ह्रदय्या उपसंख्यानम्' * (वार्तिक)। ह्रदे भवा ह्रदय्या आपः। भवे छन्दसि यत्।

[* 'ह्रदय्य आप उपसंख्यानम्' इत्यन्यत्र वार्तिकपाठभेदः। ]

The words भय्य and प्रवय्य are irregularly formed (with यत्) in vedic literature (in the अपादानवाच्य). Thus भय्या:—भी+यत् by 'कृत्यल्युटोबहुलम्' with गुण and अयादेश. प्रवय्या—प्र+वी+यत् as before. This is fem. by निपातन. The classical forms of the two are भेयम् and प्रवेयम्। 'ऋदय्या:—'This is a Varttika. The term ऋदय्या also has to be enlisted under this निपातन (as this also is found with यत् by 'भवे छन्दसि' 3456). The final अकार of ऋद, it must be noted, is replaced by अय by निपातन, fem. due to आप: following. So Another reading is—'ऋदय्य आप उपसंख्यानम्' means ऋदय्य is irregularly formed with यत् when it refers to water (आप्).

मित—। भय्य ति। एतौ यत्प्रत्ययान्तौ छन्दसि निपात्येते। ञिभी भये। वी गतिप्रजनकान्त्यसनखादनेषु। भय्य इति। गुणे कृते निपातनादयादेश:। ततो यत्। प्रवय्या इति। प्रपूर्वाद् वी इत्यस्माद् यत्। गुणेकृतेऽयादेश:। प्रवेय-मित्यन्यत्रे ति। लोके इत्यर्थ:। एवं भेयमिति लोके। तत्र गुणेनेष्टसिद्धि:। ऋदय्य इति वार्तिकमिदम्। ऋदय्यशब्दोऽपि यत्प्रत्ययान्तो निपात्यते इति परिगणनं कर्तव्यमित्यर्थ:। स्वयं विगृह्णाति—ऋदे भवा इति। यति परे ऋदशब्दस्य द्वितीयाकारस्य अयादेशे निपातनात्। [ ऋदय्य आप उपसंख्यानमिति पाठे यत्प्रत्ययान्तो ऋदय्यशब्दो निपात्यते आपश्चेद् गम्यन्ते इत्यर्थ: ]।

३६१८। प्रकृत्यान्त:पादमव्यपरे ॥ ६।१।११५ ॥

टी—। ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यादति परे न तु वकारयकारपरेऽति। उपप्रयन्तो अध्वरम्। सुजाते अश्वसूनृते। अन्त:पादं किम्? एतास एतेऽर्चन्ति। अव्यपरे किम्? तेऽवदन्। तेऽयजन् *।

[ * तेऽयजन् इति तत्त्वबोधिन्यां नोपलभ्यते ]।

एङ् letters i.e ए and ओ occuring within thefoot of a ऋक् ( Vedic verse ) stand singularly or remain as they are by nature ( i.e are not joined by rules of combination with what follows) when अत् or अकार exists after it ; but this प्रकृतिभाव (or standing unconnected ) does not apply when अत् or अकार is followed by वकार or यकार. Thus 'उपप्रयन्तो—' and सुजाते where the ओकार and the एकार stand unconnected. But 'एतेऽर्चन्ति' here there is no प्रकृतिभाव or standing unconnected for the term 'एते—' forms the last part of the ऋक्—'कया मती कुत एतास एतेऽर्चन्ति' and not the interior portion of the same. तेऽवदन्, तेऽसयन् here in both the cases there is no प्रकृतिभाव of एकार as अकार in each case has been followed either by वकार or by यकार। Note carefully the meaning of the expressions 'अन्तःपादम्' and 'अव्यपरे'—अन्तर् here means inside or middle hence (occuring) in the middle or inside of a (vedic) foot ; whereas अव्यपर means not followed by व or य ( व्+य्=व्य्=व्य—अकार being added for the sake of facility in pronunciation ).

मित—। प्रकृत्येति। प्रकृत्या+अन्तःपादम्+अव्यपरे इतिच्छेदः। पादं=पदस्य मध्ये इत्यन्तःपादम्। अव्ययीभावसमासः। अन्तरित्यव्ययं मध्यार्थकम्। वा-पादस्य अन्तः इति अन्तःपादम् राजदन्तादित्वात् सिद्धम्। 'वा छन्दसि' (६।१।१०६) इत्यतो मण्डूकप्लुत्या छन्दसीत्यस्य इहानुवृत्तेश्छन्दोविषयकमिदं सूत्रम्। तेनात्र पादशब्दो छन्दोगतपादमात्रपाति न तु लौकिकम्। तदाह—ऋक्पादमध्यस्थ इति। एङ् इति। एतत्तु 'एङः पदान्तादति' (६।१।१०९) इत्यत एङ इति पञ्चम्यन्तस्य प्रथमाविभक्तौ विपरिणामाल्लभ्यते। प्रत्यासत्त्या तस्यैवात्र कार्यित्वा-वगमात्। अति परे इति। एतदपि तत एवानुवर्तते। अव्यपरे इत्यस्यायमर्थः। व् च य् च व्य्। ततो व्य इति अकार उच्चारणार्थः। वौ वकारयकारौ परौ

यस्मात् स व्यपरः। न तथा अव्यपरः। तस्मिन्। एतदनुवर्तमानस्य 'अति' इत्यस्य विशेषणम्। ततो व्याकरोति—न तु वकारयकारपरे अति इति। प्रकृत्या स्वादित्यस्य स्वभावेन तिष्ठेदित्यर्थः। सन्धिरूपविकारं न भजेदिति यावत्। एङ् इति एकार ओकारश्च। उपप्रयन्तो अध्वरमिति। 'सुजाते अश्व—' इति च। उभयत्र 'एङः पदान्तादति' इति प्राप्तं संहिताकार्य्यं न प्रवर्तते। एतास इति। अत्र एतेऽर्चन्ति इत्यंशस्य ऋक्पादत्वेऽपि तन्मध्यपतितत्वाभावान्नात्र प्रकृतिभावः। तथाच पूर्णो मन्त्रः—'कया मती कुत एतास एतेऽर्चन्ति शुष्मं वृषणो वसूया' इति। अत एवात्र 'एङः पदान्तात्—' इति प्रवर्तते। अव्यपरे किमिति ? वकारयकार परे अति किमित्यर्थः ? [ तेऽयज्ञत्रिति तत्त्वबोधिन्यामनुक्तमपि प्रकृतोपयोगित्वेन मूलान्तरादाहृत्यसंनिवेशितम् ]।

२५१८। अव्यादवद्यादवक्रमुरव्रतायमवन्त्ववस्युषु च ॥ ६।१।११६ ॥

दी—। एषु व्यपरेऽप्यति एङ प्रकृत्या। वसुभिर्नो अव्यात्। मित्रमहो अवद्यात्। मा शिवासो अवक्रमुः। ते नो अव्रत। शतधारो अयं मणिः। ते नो अवन्तु। कुशिकासो अवस्यवः। यद्यपि बह्वृचैः—ते नोऽवन्तु रथतूः सोऽयमगात्, तेऽरुणेभिरित्यादौ प्रकृतिभावो न क्रियते तथापि बाहुलकात् समाधेयम्। प्रातिशाख्ये तु वाचनिक एवायमर्थः।

एङ् letters or एकार and ओकार stand unconnected ( प्रकृत्या ) when these words अव्यात्, अवद्यात्, अवक्रमुः, अव्रत, अयम्, अवन्तु and अवस्यु follow—even if अत् or अकार is followed by वकार or यकार. Thus वसुभिर्नो अव्यात् ( let him save us with wealth and cattle) etc. Although the बह्वृच school do not allow प्रकृतिभाव i.e effect सन्धि in such cases as ते नोऽवन्तु etc, yet they may be defended by having recourse to बाहुलकविधि or 'सर्वे विधयश्छन्दसि विकल्पन्ते'. The vedic Grammar (प्रातिशाख्य), however, expressly pronounces

this thing ( अव्यात्—अव + आशीर्लिङ् यात् )। अवद्यात्—अवद्य + ५मी। अवद्य defective. अवक्रमुः—अव + क्रम + लिट् उस्; अव्रत = ह लुङ् त )।

मित—। अव्यादिति। 'अव्यपरे' इति नियन्तृणाऽरहितेऽपि प्रकृतिभावार्थं सूत्रमिति व्याचष्टे—एषु व्यपरेऽपाति इति। एषु इति अव्यादादिषु सप्तसु शब्देषु परतो वर्तमानेषु इत्यर्थः। वसुभिर्नो अव्यादित्यादि स्पष्टम्। क्रमेणोदाहृतम्। अव्यादिति। अव रक्षणे इत्यस्याशीर्लिङि प्रथमैकवचनम्। अवद्यादिति। अवद्य-शब्दस्य पञ्चम्यन्तं पदम्। अवद्यं गर्ह्यम्। निन्दितमिति यावत्। 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' (२८४९) इति सूत्रेण वदेर्नञि उपपदे 'वदःसुपि—' इति यत्क्यपोः प्राप्तयोर्यति एव विहिते गर्हायां निपात्यते। क्वापि तु अनुद्यमिति, अवक्तव्यमिति तदर्थः। अवक्रमुरिति। अव पूर्वात् क्रमेर्लिटि प्रथमबहुवचने (उसि) रूपम्। 'छन्दसि बहुवचनम्' इति द्वित्वप्रकरणस्थवार्तिकनियमादत्र द्वित्वाभावः। अत्रैवचक्रमुरिति पाठान्तरम्। तत्र निगमोऽन्वेषणीयः। रूपसिद्धिस्तु पचे भवत्येव। अव्रत इति। हृञो ह्वो वा लुङि प्रथमैकवचनम्। 'मन्त्रे घसह्वर—' इति च्लेर्लुक्। 'आत्मनेपदेष्वनतः' इति अदादेशे यण्। कृतवन्त इत्यर्थः। अयमिति। इदमो नपुंसकलिङ्गरूपम्। 'इदोऽय् पुंसि' इति अयादेशः। अवन्त्विति। अवरक्षणे इत्यस्य लोटि अन्तुविभक्तौ रूपम्। अवस्य इति। अवेरौणादिके असुन् प्रत्यये अवस् इति प्रातिपदिकम्। ततोऽवस्यति रक्षणमिच्छतीत्यर्थे क्यचि—अवस्य इति नामधातुः। तस्मात् 'क्याच्छन्दसि' इति उप्रत्ययः। मतान्तरसिद्धोऽयं प्रकृतिभावः। वहृचास्तु नेमं प्रकृतिभावमनुमन्यन्ते इत्याह—यद्यपि बह्वृचैरित्यादिना। नन्वेवमत्र कतमः पक्षः श्रेयानित्यत्र उभयमपि सङ्गच्छत इत्याशयेनाह—बाहुलकात् समाधेय-मिति। 'सर्वे विधयश्छन्दसि विकल्पन्ते' इति न्यायादिति शेषः। उभयमपि साध्वित्यनेन दर्शितम्। प्रातिशाख्येत्विति। प्रातिशाख्यं वैदिकव्याकरणमित्युक्तं प्राक्।

३५२०। यजुष्युरः ॥ ६।१।११७ ॥

दी—। उरःशब्द एङन्तोऽति प्रकृत्या यजुषि। उरो अन्तरिक्षम्। यजुषि पादाभावादनन्तःपादार्थं वचनम्।

In the matter of यजुष् ( यजुर्वेद ) the एङन्त or ओकारन्त word उरस् (breast) stands by itself and not joined in सन्धि by 'एङ: पदान्तादति'. Thus 'उरो—' It is breast is the sky or air. This rule is to effect प्रकृतिभाव of the एङन्त from of उरस् even when the word falls at the beginning or at the end of a sentence, for यजुस् forms no foot. यजुस् is prosaic ( गद्य ) in character and not metrical like Rik.

मित—। यजुषीति। प्राग्वदनुवृत्ति:। ननु 'प्रकृत्यान्त: पादम्—' ( २२१८ ) इत्येव सिद्धे किमर्थमिदमित्यत आह—यजुषि पादाभावादिति। तस्य गद्यमयप्रबन्धत्वादित्यर्थ:। ऋचश्छन्दोनिबद्धा यजूंषि तु गद्यानि इति बोध्यम्।

३५२१। आपो जुषाणो वृष्णो वर्षिष्ठेऽम्बेऽम्बालेऽम्बिके पूर्वे ॥ ६।१।११८ ॥

टी—। यजुषि अति प्रकृत्या। आपो अस्मान्मातर: * शुन्धयन्तु। जुषाणो अग्निराज्यस्य। वृष्णो अंशुभ्याम्। वर्षिष्ठे अधि नाके। अम्बे अम्बाले अम्बिके। अस्मादेव वचनात् 'अम्बार्थ—' (२६७) इति ह्रस्वो न।

When these words viz आप:, जुषाण:, वृष्ण:, वर्षिष्ठे, अम्बे, अम्बाले and अम्बिके precede the अत् or अकार following remains as such in यजुस्. This 'आपो अस्मान्—' (let waters the mothers of ours purify) etc. जुषाण:—जुष् + शानच्। वृष्ण:—वृषन् + शस् ( २या बहुवचन )। वर्षिष्ठे—वृद्ध + इष्ट loc-sing. अम्बे अम्बाले and अम्बिके are the voc. singulars of अम्बा, अम्बाला and अम्बिका—all meaning woman of those names etc. On the strength or authority of this utterance the word अम्बे etc is not short ( ह्रस्व ) by the

rule 'अम्बार्थनद्योर्ह्रस्वः' (267) which applying we would have got अम्ब etc as the voctive singular and not अम्बे as we have here.

मित—। आपो इति। आपो इत्यादिशब्दा यथैव वेदे प्रयुक्तास्तथैव इह अनुकरणपूर्वकम् पृथक् पृथक् उच्चार्य निबद्धाः। आप इति अप् शब्दस्य जसि रूपम्। जुषाण इति जुष प्रीतिसेवनयोरित्यस्मात्कानचि प्रथमैकवचने सुविभक्तौ निष्पन्नम्। वृषण इति वृषन् शब्दस्य द्वितीया बहुवचनान्तम्। वर्षिष्ठे इति वृद्ध शब्दादिष्ठनि निष्पन्नस्य सप्तम्यन्तम्। इतरे (अम्बे इति त्रयः) अम्ब् धातो निष्पन्नाः। जुषाणो वृष्णो वर्षिष्ट इत्येते शब्दाः अम्बिके शब्दात् पूर्वौ यौ अम्बे अम्बालिशब्दौ तौ च अति परतः प्रकृत्या स्युरिति साम्प्रदायिकाः। तत्र 'अम्बिके पूर्वे इत्यत्र अस्मादेव निपातनात् पञ्चमी समास इति शब्देन्दुशेखरः। अम्बिकेति। अम्बा एव अम्बिका। स्वार्थे कन्। 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः' इति इकारः। नन्वत्र अम्बे इति कथं निष्पन्नम्। 'अम्बार्थनद्योर्ह्रस्वः' (२६७) इत्यनुशासनबलात्हि अम्ब इत्येव स्यात्। तदाह—अस्मादेव वचनादिति। सूत्रकारवचनप्रामाण्यादिति मद्धाणेति भावः।

३५२२। अङ्ग इत्यादौ च ॥ ६।१।११८ ॥

टी—। अङ्गशब्दे य एङ् तदादौ च अकारे य एङ् पूर्वः सोति प्रकृत्या यजुषि। प्राणो अङ्गे अङ्गे अदीध्यत्। अङ्गे अङ्गे आशोचिषम्।

In the matter of यजुस् प्रकृतिभाव is enjoined for both the एङ् letters that which exists in the term अङ्ग (अङ्गे) and that which precedes the beginning letter अकार of the same (अङ्गे) when अत् or अकार follows. This is clear from the illustration "प्राणो अङ्गे अङ्गे—" etc.

[* अङ्गे अङ्गे आशोचिषम् इत्याधिकम् अन्यत्र दृश्यते]।

मित—। अङ्ग इति। अङ्गे इत्यादौ चेतिच्छेदः। इति शब्दस्य च्छन्द समानार्थः। तदाह—अङ्गशब्दे य एङ् तदादौ च अकारे य इति। तस्य अङ्ग शब्दस्य आदि-

तदादिः। अर्थादकारः। तस्मिन् अकारे परे पूर्वो य एङ् स इत्यर्थः। एतेन अङ्गशब्दस्य द्वित्वं विवक्षितमित्यर्थादायाति। सूत्रेऽस्मिन् वाक्यद्वयं वर्तते। 'अङ्ग' इत्येकम्। 'इत्यादौ च' इत्यपरम्। 'अङ्गशब्दे य एङ् सोऽति परे प्रकृत्या यजुषि विषये' इति पूर्ववाक्यार्थः। 'अङ्गशब्दस्यादिभूते अकारे च परे य एङ् पूर्वः सोऽपि अति परे प्रकृत्या स्याद यजुषि विषये' इत्यपरवाक्यार्थः। अत्र (सूत्रे) असति चकारे 'अङ्गशब्दस्य एव एङ् तदादावति परतः प्रकृत्या भवतीत्यर्थः स्यात्'। ततश्च 'अङ्गे अङ्गे' इत्यत्रैव स्यात्। 'अङ्गे अदीव्यत्' इत्यत्र न स्यात्। सति तु अस्मिन् (चकारे) अङ्गशब्दस्य य एङ् स यत्र कुत्रचिदति परे प्रकृत्या भवति तदादौ चाति परतो यः कश्चिदेङ् स प्रकृत्या भवतीत्ययमर्थो भवति। तेन 'अङ्गे अङ्गे अदीव्यत्'। 'प्राणो अङ्गे' इत्युभयत्रापि भवतीत्याहुः। एवमङ्गे अङ्गे आशोचिषम् इत्यत्र।

### ३५२३। अनुदात्ते च कुधपरे ॥ ६।१।१२० ॥

**दी—। कवर्गधकारपरे अनुदात्तेऽति परे एङ् प्रकृत्या यजुषि। अयं सो अग्निः। अयं सो अध्वरः। अनुदात्ते किम्? अधोऽग्ने रुद्रे। अग्रशब्द आद्युदात्तः। कुधपरे किम? सोयमग्निमतः *।**

एङ् letters in the matter of यजुस् remains as such when अत् or अकार follows an अनुदात्त sound having कवर्ग letters or धकार after it.

Thus अयं सो अग्निः here एङ् in सो is in प्रकृतिभाव (original) as अ of अग्नि is low-pitched (अनुदात्त which is usually indicated by this (—) undersign) and is followed by ग् a letter of कवर्ग। Similarly 'सो अध्वरः' where ध् follows the अनुदात्त sound, in अ of अध्वरः.

[ * 'अधो—' इति बालमनोरमास्थः पाठः। * 'अग्निमतः' इति तत्त्वबोधिनीस्थः पाठः ]।

मित—। अनुदात्ते चेति। कु इति कवर्गः। ध इति धकारः। अकार उच्चारणार्थः। कुधौ कवगधकारौ परौ यस्मात् स कुधपरः। अनुदात्त इत्यस्य विशेषणमिदम्। तदाह—कवर्गधकारपरे अनुदात्ते इति। शेषमनुवृत्तिलभ्यम् प्राग्वत्। अयं सो अग्निरिति। अग्नेरकारोऽनुदात्तम्। तत्र (—) इत्याकारोऽधःस्थचिह्नेन ज्ञाप्यते। तस्मादनुदात्तात् परो गकारः कवर्गोऽयः। एवं सो अध्वरः इत्यत्र अनुदात्तात् परो धकारः तेन सो इत्यत्र एङ् प्रकृत्या तिष्ठति। अग्निशब्दस्तावत् 'अङ्गेर्नलोपश्च' इति निप्रत्ययान्तोऽन्तोदात्तः। अध्वरशब्दस्तु प्रातिपदिकस्वरेण अन्तोदात्तः। आद्युदात्त इति—'सञ्जेन्द्र—' इत्यादिना अयग्रब्दस्य आद्युदात्तत्वं निपातितम्। कुधपरे किमिति स्पष्टम्।

३५२४। अवपथासि च॥ ६।१।१२१

दी—। अनुदात्ते अकारादौ अवपथाःशब्दे परे यजुषि एङ् प्रकृत्या। त्री रुद्रेभ्यो अवपथाः। वपेस्थासि लङि 'तिङ्ङतिङः' (३८३५) इत्यनुदात्तत्वम्। अनुदात्ते किम्? यद्रुद्रेभ्योऽवपथाः। 'निपातैर्यद्यदि—' (३८३७) इति निघातो न।

When the term 'अवपथाः' with its beginning letter अकार declaredas अनुदात्त follows in a sentence of यजुस् the एङ् letters preceding it remains unconnected or attains प्रकृतिभाव. Thus 'त्री रुद्रेभ्यो—' scatter it three for the Rudras. Here अवपथाः is derived as वप्+लङ् थास् and this being तिङन्त is declared to be अनुदात्त by 'तिङ्ङतिङः' (3238). त्रिः+रुद्रेभ्यो=त्रीरुद्रेभ्यो by 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' (174). Why bring down the term 'अनुदात्ते' from the preceding rule? Witness 'यद्रुद्रेभ्यो—' where 'अवपथ' not being declared अनुदात्त as before, due to existence of यद् cp 'निपातैर्यद्यदि' (3937), the एङ् letter preceding it is not in प्रकृतिभाव। निघात means अनुदात्त।

मित—। अवपथासीति। अनुदात्ते इति पूर्वसूत्रादनुवृत्तिलभ्यम्। अकारादाविति 'एङः पदान्ताद्'—इत्यतोऽनुवृत्तिलभ्यस्य 'अति' इत्यस्य विशेषणमिदम्। अवपथाः— वपेर्लङि थासि अडागमेरूपम्। तस्य सप्तम्याम् 'अवपथासि' इति। तदाह— अवपथःशब्दे इति। यजुषीति। 'यजुष्युरः' (६।१।११७) इत्यत इदम्। अन्यत् प्रागवत्। वीरुद्रेभ्यो इति। 'ढ्रलोपे—' (१७४) इति दीर्घः। अवपथाः शब्दस्य तिङन्तत्वेन 'तिङ्ङतिङः' इति अनुदात्तत्वम्। इति निघाता नेति। अनुदात्तं नेत्यर्थः। निहन्यतेऽधः क्रियत इति निघात=नि पूर्वाद्धन्तेः सैणिक घञ्। निघात इति अनुदात्तस्वरस्य प्राचां संज्ञा।

## २५२५। आङोऽनुनासिकश्छन्दसि ॥ ६।१।१२६ ॥

**टी—। आङोऽचि परेऽनुनासिकः स्यात् स च प्रकृत्या। अभ्र आँ अपः। गभीर आँ उग्रपुत्रे। 'ईषाअक्षादीनां छन्दसि प्रकृतिभावो वक्तव्य' (वार्तिक)। ईष अक्षो हिरण्ययः। ज्या इयम्। पूषा आविष्टु।**

In vedic literature the particle आङ् or आ (which is ङित्) gets nasal sound (अनुनासिक) and stands unconnected (प्रकृत्या) when an अच or vowel follows. Thus अभ्रआ अपः (waters are in the cloud. अभ्र आ=अभ्रे locative) etc.—Note that the ङित् sound of आङ् is expressed by the uasal (ँ). 'ईषा अक्षादीनाम्—' This is a Varttika. प्रकृतिभाव of words like ईषा अक्ष etc has to be stated. Thus 'ईषा अक्षो—' etc. Here there is no combination as ईषाक्ष by 'अकः सवर्णे—'. Similarly ज्या इयम् etc.

मित—। आङोऽनु इति। 'प्रकृत्या—' (६।१।११५) इत्यतः प्रकृत्या इत्यनुवर्तते। 'प्लुत प्रगृह्या अचि नित्यम्' (६।१।१२५) इत्यतोऽचि इति च। तदाह— आङोऽचि परे इति। "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतामातं ङितं विद्याद् वाक्यस्मरणयोरङित्॥" इति भाष्यात् वाक्यस्मरणयोर्ङित्त्वं नास्ति इति

अत आं अप इत्यादौ आङो वाक्यस्मरणार्थत्वं नापादनीयम्। सप्तम्यर्थस्यैव द्योतकोऽत्र आङ् इति प्रतिपत्तव्यम्। अप्सु मेघे अपः इत्यर्थः। अतएव 'विभक्त्यर्थे द्योतकोऽत्र यश्चमिति' हरदत्त तथा शब्देन्दुशेखरः। एवं गभीर इत्यत्र। आङो ङित्वम् अनुनासिकस्वरेण ज्ञायते इति बोध्यम्। 'ईषा अक्षादीनाम्—' इति। वार्त्तिकमिदम्। प्रकृतिभावत्वं सन्धःभावेनावस्थानम्। एषां प्रकृतिभावाभावे तु 'अकः सवर्णे—' इत्यनेन 'ईषाक्षो' इति 'पूषाविष्टु' इति च स्यात्। तथा आद्गुणेन 'ज्येयम्' इति च स्यादिति बोध्यम्।

२५२६। स्यश्छन्दसि बहुलम् ॥ ६।१।१३३ ॥

दी—। स्य इत्यस्य सोर्लोपः स्याद्धलि। एष स्य भानुः।

When a हल् or consonant follows the सुविभक्ति after the स्यः (स्यत्+सु=स्यः; like तद्+सु=सः) disappears. Thus 'एष स्य—' This is the same sun and not 'एष स्यो भानुः'.

मित—। स्य इति। 'एतत्तदोः सुलोपोऽकोरनञ् समासे हलि' (६।१।१३२) इत्यतः 'सुलोप' इति 'हलि' इति चानुवर्तते। तदाह—स्य इत्यस्येत्यादि। स्य इति स्यत् इति सर्वनामशब्दस्य सुविभक्त्यन्तस्य अनुकरणम्। सुवं'स्य' इति 'सुपां सुलुक्—' इति षष्ठ्या विभक्त्यर्थे प्रथमा। अत स्य इत्यस्यैत्याह। एष स्य भानुरिति। स एवायं सूर्य इत्यर्थः। 'एतत्तदोः सुलोपः—' इत्येव इत्यस्य सुलोपः।

२५२७। ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे ॥ ६।१।१५१ ॥

दी—। ह्रस्वात् परस्य चन्द्रशब्दस्योत्तरपदस्य सुडागमः स्यान्मन्त्रे। हरिश्चन्द्रो मरुद्गणः। सुश्चन्द्र दस्म।

In मन्त्र or in the matter of vedic hymns, the augment सुट् is prefixed to the subsequent member चन्द्र coming after a short vowel (in the preceding member पूर्वपद). Thus हरिश्चन्द्र and सुश्चन्द्रः—स changed श by sandhi.

मित—। ऋखश्चन्द्रे ति। 'सुट् कात्पूर्वः' (६।१।१३५) इत्यतः सुडित्यनुवर्तते। तदाह—सुडागमः स्यादिति। स च सुट् किं ऋखस्यैव भवेदुत उत्तरपदस्य चन्द्रशब्दस्येति सन्देहे व्याचष्टे—ऋस्वात् परस्य चन्द्रशब्दस्येति। तेन चन्द्रशब्दस्यैव सुडागम इति लभ्यते। एतच्च 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति परिभाषाबलादवगम्यते। हरिश्चन्द्र इति। हरिश्चासौ चन्द्रश्चेति विग्रहे हरिचन्द्र इति जाते इकारात् परं चन्द्रशब्दस्य सुट्। 'आद्यन्तौ टकितौ'। एवं शोभनश्चन्द्रः। ततसम्बुद्धौ सुश्चन्द्र इति। दस्म इति। दर्शनीय इति उपक्षयितरिति वार्थः। दसु उपक्षये। तस्मान्मक् प्रत्ययः (औणादिकः)।

## ३५२८। पितरामातरा च छन्दसि ॥ ६।१।३३ ॥

**टी—। द्वन्द्वे निपातः। आ मा गन्तां पितरा-मातरा च। चाद्विपरीतमपि। न मातरा-पितरा नू चिदिष्टौ॥ समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु' (१०१२)। समानस्य सः स्यान्मूर्धादिभिन्ने उत्तरपदे। सगर्भ्यः। छन्दसि स्त्रियां बहुलम्' (वार्तिक)। विष्वग्देवयोरद्र्यादेशः। विश्वाची च घृताची च। देवद्रीचीं नयत देवयन्तः। सा कद्रीची *।**

This द्वन्द्व compound is irregularly formed in vedic literature. Thus 'आ मा—' Let my parents come to me (connect आ with गन्ताम्). The चकार in the rule is to suggest the reverse order of the terms मातरापितरा in the same sense against the classical form 'मातरपितरौ', cp 'मातरपितरावुदीचाम्' (6.3.32). 'समानस्य छन्दसि—'(6.3.84) this rule is purely vedic. Hence though explained before it is again set here and explained. समान in the Vedas is replaced by स when the subsequent member is other than मूर्धन्, प्रभृति and उदर्क. Thus सगर्भ्यः—born in the same womb as a younger brother. Break-up as

समान: गर्भ:—सगर्भ:. Then add यत् by 'सगर्भसयूथसनुताद् यत्' in the sense of तत्र भव (born there). Similarly सयूथ्य and सनुत्य but समानसूर्धा, समानप्रभृतय: and समानोदर्का:। 'छन्दसि—' This is a Varttika has been misplaced here. For it should have been read under the rule 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' (5.3.92), for it means—The substitute 'अद्रि' for the टि portion of विष्वक् and देव and of a सर्वनाम is seen variously to take effect in the matter of feminine form in the vedic literature, when अञ्च with क्विप् or क्विन् follow. Thus in विश्वाची there is no substitution of 'अद्रि' for the 'टि' of विश्व which being a सर्वनाम necessitated the same. This is so by the force of the word 'बहुलम्' in the Varttika. The formation of the word विश्वाची is then विश्वम् अञ्चतीति क्विन् then add ङीप् by the rule 'उगितश्च'—अकार eliding by 'अच:' and दीर्घ effected by 'चौ'. Similarly घृताची. देवद्रीची—Here 'अद्रि' replace the 'टि' or अकार of देव. The method of exposition etc the same here also. कद्रीची—expound as कुत्सितमञ्चतीति as before—The 'टि' i.e. इम् of किम् is replaced by 'अद्रि' when अञ्च is followed by क्विन् then add ङीप्, drop the अकार of अञ्च and effect दीर्घ as before. नकार of अञ्च everywhereis dropped by 'अनिदिताम्—' (417). In these bases 'अद्रि'भाव is effected on the strength of the term 'बहुल' in the Varttika.

मित—। पितरामातराचेति। द्वन्द्वसमासनिपन्न: 'पितरामातर'शब्दो निपात्यते छन्दसि विभाषे इत्यर्थ:। पिता च माता चेति स्थिते उभयोरपि पूर्वोत्तरपदयोर्द्विवचनम्। पूर्वपदस्याकारादेश:। उत्तरपदस्य तु 'सुपां सुलुक्—' इति विभक्तेराकारादेश:। 'ऋतो ङि सर्वनामस्थानयो:' इत्युभयत्र गुण:। पा मा गन्तामिति।

पिता माता च मा मां प्रति आगच्छताम् आगच्छतामित्यर्थः। यूपे बद्धस्य शुनःशेपस्योक्तिरियम्। सूत्रे चकारफलमाह—चाद् विपरीतमपीति। पूर्वोत्तरपदविपर्ययेणापि समास इत्यर्थः। मातरापितरेति। प्राग्वद् विग्रहोऽर्थश्च। समानस्य च्छन्दसीति। एतत् सूत्रं प्राक् समासाश्रयविधिप्रकरणे व्याख्यातमपि अस्य छन्दोविषयत्वादिहोपन्यासः। तदर्थस्मारणार्थं पुनर्व्याख्यानञ्च क्रियते। समानस्य सः स्यादिति। 'सहस्य सः संज्ञायाम्' (६।३।७८) इत्यतस्सदनुवृत्तेरिति भावः। मूर्धादि इति। आदिपदेन प्रभृत्युदर्कयोः संग्रहः। सगर्भ्यः इति। समानः गर्भः कर्मधारयः। तत्र भवः सगर्भ्यः। एवं समानः यूथः सयूथः। तत्र भवः सयूथ्यः। अनुसखेत्यर्थः। तथा समानः तुतः (तुतिः) सतुतः। तत्र भवः सतुत्यः। यो नः सनुत्य इति निगमश्च भवति। अत्र सर्वत्र 'सगर्भसयूथसनुताद् यत्' (३४०१) इति भवार्थे यत्। अमूर्धप्रभृत्युदर्केषु इति किम्? समानमूर्धा। समानप्रभृतयः। समानोदर्काः। 'समानस्येति योगो विभज्यते। तेन सपक्षः साधर्म्यं सजातीयमित्यादि सिद्धमिति काशिकायां स्थितम्"। भट्टोजिस्तु तत्र प्रकारान्तरेण (नित्यसमासाश्रयणेन) समाहितमिति स्पष्टमस्याकरे। छन्दसि स्त्रियामिति। वार्तिकमिदम्। एतच्च 'विष्वग्देवयोश्च टेरद्र्यञ्चतावप्रत्यये' (६।३।९२) इति सूत्रात् एव समुपन्यस्तं युज्यत इति मन्महे। अतएव 'विष्वग्देवयोरद्र्यादेशः' इति शेषमात्रं पूरयन् व्याख्येयम्। अयं वार्तिकार्थः—विष्वग् देवशब्दयोः सर्वनाम्नश्च टेः हलम् अद्र्यादेशः स्यात् स्त्रियां वाच्यायां छन्दसि विषये इति वक्तव्यमिति। विश्वाचीति। विश्वमञ्चतीति विग्रहः। एवं विश्व अञ्च् क्विन् इति स्थिते क्विन् प्रत्ययस्य सर्वलोपित्वात् विश्व अञ्च् इति जाते 'अनिदिताम्—' (४१५) इति नलोपे विश्व अच् इति भवति। ततो विश्वशब्दस्य सर्वनामत्वाद् वार्तिकेनानेन प्राप्तः 'अद्रि' इत्यादेशो बहुलवचनान्न भवति। तत 'उगितश्च' इति ङीप्। 'अचः' इत्यचतेरकारलोपः। चाविति दीर्घः। एवं घृतमञ्चतीति घृताचीत्यत्र प्रक्रिया। देवद्रीचीति। देवानञ्चतीति विग्रहः। बहुलवचनादत्र देवशब्दस्य टेरद्र्यादेशः। एवम् देवद्रि अच् इति स्थिते ङीबकारलोपदीर्घाः प्राग्वत्। कद्रीचीति। कुत्सितमञ्चतीति विग्रहः। किंशब्दस्य टेरद्र्यादेशे कद्रि अच् इति क्विन्प्रत्ययनलोपाभ्यां भवति। ततो ङीबलोपदीर्घाः।

३५२८। सध मादस्थयोश्छन्दसि ॥६।३।९६॥

दी—। सहस्य सधादेशः स्यात् मादस्थयोः परतः। इन्द्रत्वास्मिन् सधमादे। सोमः सधस्थम्।

In vedic literature सह is replaced by सध when 'माद' and 'स्थ' follow. Thus in the मन्त्र 'इन्द्र त्वास्मिन्—' O Indra we invoke thee in this sacrifice ( सधमाद ); सहमाद्यन्ति अस्मिन्—they rejoice here jointly. सह + मद + घञ्—अधिकरणे by 'हलश्च' (3300). सधस्थम् सध + स्था + क by 'आतोऽनुपसर्गे कः' (2915).

मित—। सधेति। 'सहस्य सध्रिः' (६।३।९५) इत्यतः सहस्य इत्यनुवर्तते। तदाह—सहस्य सधादेशः स्यादिति। सधेति सुप्तविभक्तिको निर्देशः। मादशब्दे स्थशब्दे चोत्तरपदे सहस्य सधादेश इत्यर्थः। इन्द्र त्वास्मिन् इति। हे इन्द्र अस्मिन् पुरोवर्तिनि सह माद्यन्ति देवा अस्मिन्निति सधमादे यज्ञे त्वा त्वाम् हवामहे इति शेषः मन्त्रार्थः। सहमाद इति स्थिते 'मदोऽनुपसर्गे' इत्यप्प्रत्ययप्राप्तौ 'अजपाभ्यां खोखलना: विप्रतिषेधेन' इति तस्य बाधितत्वाद् 'हलश्च' ( ३३०० ) इति घञ्। सूत्रे च मादित्यकार उच्चारणार्थः। तेन मादयतेः क्विबन्तस्य मादिति यद्रूपं तत्रापि भवति। 'आ त्वा वहन्तो हरयो युज्यमाना अर्वागिन्द्र सधमादो वहन्तु' इत्याहुः। सधस्थमिति। सह तिष्ठतीति विग्रहे 'आतोऽनुपसर्गे कः' इति कप्रत्ययः।

३५३०। पथि च छन्दसि ॥ ६।३।१०८ ॥

दी—। पथिशब्दे उत्तरपदे कोः कवं कादेशश्च। कवपथः—कापथः—कुपथः।

When the term पथिन् in the Vedas, is the subsequent member, the preceding member कु is replaced optionally by कव and का. Thus कवपथः (evil path) etc.

मित—। पथि चेति। 'कोः कत्तत्पुरुषेऽचि' ( ६।३।१०१ ) इत्यतः कोरित्यनुवर्तते। 'का पथ्यक्षयोः ( ६।३।१०४ ) इत्यतः का इति। 'विभाषा पुरुषे' ( ६।३।१०६ )

इष्यतो विभाषेति। 'कवं चोष्णे' (६।३।१०७) इष्यते: कवमिति च। तेषो व्याचष्टे—पथिशब्दे उत्तरपदे कोरित्यादि। विभाषेति शेष:। छन्दसि इति च। पथ्वे यथाप्राप्त कुरिति। तदुदाहरति—कवपथ इत्यादि। कुत्सित: पन्था इति विग्रह:। 'ऋक् पूरब्धू: पथामानक्षे' (९४०) इति समासान्त: अप्रत्यय:।

३५३१। साढ्यै साढा साढेति निगमे ॥ ६।३।११३ ॥

टी—। सहे: क्त्वाप्रत्यये आदंत्र इयम् तृनि तृतीयं निपात्यते। मरुद्भिरुग्र: पृतनासु साळ्हा। अचोर्मध्यस्थस्य डस्य ळ: ढस्य ळ्ह प्रातिशाख्ये विहित:। आह हि—

द्वयोश्चास्य स्वरयोर्मध्यमेत्य संपद्यते स डकारो ळकार:।

ळ्हकारतामिति स एवं चास्य ढकार: सनूष्मणा संप्रयुक्त: ॥इति।

In the vedic literature these terms साढ्यै, साढ्वा and साढा are irregularly formed. Of these the first two साढ्यै and साढ्वा are formed with the affix क्त्वा added to the root सह and the last or third साढा is formed with the affix तृन् added to the same root. Thus the vedic hymn runs—'मरुद्भिरुग्र:—'Here साढ्वा is equivalent to साह्वा। साढा(तृन्)=सढ् त by 'हो ढ:'=सढ् ध=झषस्तथो:—'=सढ् ढ by 'ष्टुनाष्टु:'=साढ् by 'ढो ढे लोप:' and 'ढ्रलोपेपूर्वस्य दीर्घोण:' (174) meaning able, enduring. Similarly get साढ्वा—सह+क्त्वा having subded; and साढ्यै—सह+क्त्वा=सह+ध्यै here क्त्वा being replaced by ध्यै by निपातन. The vedic grammar प्रातिशाख्य instructs that ड falling between two vowels is replaced by ळ and that under the same condition ढ is replaced by ळ्ह also written as ह् ळ. For it has been said (in the प्रातिशाख्य)—

The author (or the Acharyya of the प्रातिशाख्य) holds that डकार intervening two vowels becomes ळकार and that the same डकार

when joined with the ऊष्मन् letter ह and thus figures as a new letter 'ढ' is replaced by ळ ( or ळ्ह ).

मित—। साढ्यै साढ्वेति। एते त्रयः शब्दा निपात्यन्ते छन्दसि विषये इत्यर्थः। निगमो वेदः। सूत्रे इतिशब्दः प्रकारवचनः। तेन निपातनप्रकारमेवाह—सहेः क्त्वाप्रत्यये इत्यादिना। साढ्यै साढ्वा इति द्वयम् सहेः क्त्वाप्रत्यये परतो निपात्यते। तथाच—सह् क्त्वा इति स्थिते निपातनात् क्त्वाप्रत्ययस्य 'ध्यै' इत्यादेशः। ततः सह् ध्यै इति स्थिते 'हो ढः' इति ढः। 'ष्टुना ष्टुः' इति ध्यै इत्यस्य 'ढ्यै' इत्याकारः। ततो 'ढो ढे लोपः' इति पूर्वढस्य लोपे 'ढ्रलोपे पूर्वस्य दीर्घोऽणः' ( १७४ ) इति दीर्घः। ततः साढ्यै इति। अभिभूयेत्यर्थः। सह् क्त्वा इति स्थिते 'ध्यै' इत्यादेशाभावे ढत्वादि प्राग्वत्। केवलं 'झषस्तथोर्धोऽधः' ( २२८० ) इति तकारस्य धकारः। तस्य ष्टुत्वेन ढकारः। ढलोपदीर्घौ प्राग्वत्। तस्यापि शब्दस्य स एवार्थः। साढा इति तु तृन् प्रत्यये। प्राग्वत् प्रक्रिया—अभिभवितेति तदर्थः। अथ नियमं दर्शयति—मरुद्भिरिति। तत्र साढा इति वक्तव्ये 'साळ्हा' इति कथमुदाहृतं तत्राह—अचोर्मध्यस्थस्येति। प्रातिशाख्ये वैदिकव्याकरणे। तस्य विनियामकमाह—आहेति। प्रातिशाख्यप्रवर्तकआचार्य इति शेषः। द्वयोश्चेति। अस्य आचार्यस्य ( प्रातिशाख्यस्य ) मतेनेति अध्याहारः। द्वयोः स्वरयोः अचोः मध्यम् एत्य ( स्थित इति शेषः ) स प्रसिद्धः ( यथा उपक्रान्तः ) डकारः ळकारतां सम्पद्यते ळभावो भवतीत्यर्थः। तथा द्वयोः स्वरयोर्मध्यमेत्य स्थितः ( इत्यध्याहारः ) स एव ढकार ऊष्मणा हकारेण संप्रयुक्तः युक्तः सन् अर्थाद ढकाररूपेण परिणतः सन् ळ्हकारताम् एति संपद्यते ळ्हकारो भवतीत्यर्थः। 'ळ्ह' इति 'ळ्ह' इत्यपि लिख्यते इति क्वचित्तु भेदको द्रष्टव्यः।

सूत्रे इतिशब्दस्य प्रकारवचनत्वात् क्तिन्नायामपि निपातनात् साळ्ह ( साढ ) इति भवति। 'अषाळ्ही अर्धे शमन' इति निगमादित्याहुः।

२५२२। छन्दसि च॥६।३।१२६॥

दी—। अष्टन आत्वं स्यादुत्तरपदे। अष्टापदी।

When an उत्तरपद or subsequent word follows आ is the final substitute of अष्टन् in the Vedas. Thus अष्टापदी—it has to be dissolved as अष्टौ पादा यस्य—it has eight feet—then apply 'संख्यासुपूर्वस्य' (379) and 'पादोऽन्यतरस्याम्' (457). दीर्घ by this rule.

मित—। छन्दसि चेति। 'ढ्रलोपे पूर्वस्य दीर्घः—' (६।३।१११) इत्यतो दीर्घ इत्यनुवर्त्तते। 'अष्टनः संज्ञायाम्' (६।३।१२५) इत्यतोऽष्टन् इति च। तदाह—अष्टन आत्वमित्यादि। नलोपे कृते टकाराकारस्य दीर्घ इत्यर्थः। अष्टापदीति। अष्टौ पादा अस्य इति बहुव्रीहौ 'संख्यासु पूर्वस्य' (८७९) इति पाद शब्दस्य लोपे कृते 'पादोऽन्यतरस्याम्' (४५७) इति ङीप्।

### ३५२३। मन्त्रे सोमाश्वेन्द्रियविश्वदेव्यस्य मतौ ॥६।३।१३१॥

दी—। दीर्घः स्यान्मन्त्रे। अश्वावतीं सोमावतीम्। इन्द्रियावान्मदिन्तमः। विश्वकर्मणा विश्वदेव्यावता।

In the matter of vedic hymns the final of the terms सोम, अश्व, इन्द्रिय, विश्व and देव्य is lengthend when मतुप् follows. Thus अश्वावती सोमावती etc (having a horse, having soma) etc with म of मतुप् changed into व by मादुपधायाः—and दीर्घ by this, so we have अश्वावत्,सोमावत् etc ; then ङीप् by 'उगितश्च'.

मित—। मन्त्रे सोमेति। मन्त्रविषये सोम, अश्व, इन्द्रिय, विश्व, देव्य इत्येषां पञ्चानां शब्दानाम् अन्त्याक्षरस्य दीर्घः स्यान्मतुपप्रत्यये परत इत्यर्थः। दीर्घ इति 'ढ्रलोपे—' इत्यतः प्रागवदनुवर्तते। अश्वावतीमिति। अश्वोऽस्यास्तीति मतुप्। 'मादुपधायाश्च—' इति मतुपोमस्य वः। तेन 'उगितश्च' इति ङीप्। अनेन दीर्घः। एवमन्यत्र।

### ३५२४। ओषधेश्च विभक्तावप्रथमायाम् ॥६।३।१३२॥

दी—। दीर्घः स्यान्मन्त्रे। यदोषधीभ्यः। अदधात्योषधीषु।

The final of the term ओषधि also is lengthend when a सुबन्त affix other than those of the first case-ending follows in the matter of vedic hymn ; thus ओषधीभ्य: etc.

मित—। ओषधेश्चेति। 'मन्त्रे—' इत्यस्मादनुवर्तितं परत्वात् सूत्रमिदम्। आगमवदनुवृत्तिः। ततो व्याचष्टे—दीर्घः स्यान्मन्त्रे इति। ओषधि शब्दस्येकारस्येत्यर्थः। प्रथमाभिन्नायां सुब्विभक्तौ परत इति वाक्यशेषः। विभक्ती + अप्रथमायामितिच्छेदः। ओषधीभ्य इति। न च 'ह्रदिकारादक्तिनः' इति वार्तिकेनैव सिद्धं सूत्रं व्यर्थमिति वाच्यम्। तथाहि सति अन्तोदात्तत्वमेव स्यात्तु आद्युदात्तत्वम्। इष्यते तु 'लघावन्ते—' इति फिट्सूत्रेणाद्युदात्तत्वं यथा तथा स्यादिति।

## २५२५। ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्॥ ६।३।१३३॥

दी—। दीर्घः स्यात्। आ तू न इन्द्र। नू मर्त्यः। उतवा घा स्यालात्। मक्षू गोमन्तमीमहे। भरता जातवेदसम्। तङिति थादेशस्य ङित्त्वपक्षे ग्रहणम्। तेनेह न—शृणोत ग्रावाणः। कूमनाः। अत्रा ते भद्राः। यत्रा नश्चक्रा। उरुष्याणः।

In the matter of vedic hymns ( ऋच ) the final of the eight words तु, नु, घ, मक्षु, तङ्, कु, त्र and उरुष्य becomes दीर्घ। Thus 'आतून:—' etc. घ is here explained to be the निपात and not the techininal one for तरप् and तमप् ( तरप्तमपौघः ) ; स्यालात्—from the brother-in-law. तु, नु and मक्षु mean—swiftly. भरता—भृ + लोट् त. दीर्घ by this rule as it includes तङ् which here stands for थ the लोट् second person plural. थ is replaced by त by 'तस्थस्थमिपां तांतंतामः' as थ is ङित् by 'लोट् लङ्वत्'। Thus in 'शृणोत—'Let the stones hear—there is no दीर्घ giving शृणोता. For although तप् which is affixed after the root श्रु ( श्रु + लोट् थ (तप्) is the plural substitute for the लोट् second person by the rule 'तप्तनप्तनथनाश्च'

(3567) yet it ( तप् ) is not ङित् but पित्. Hence the rule does not hold good here. कूमनाः—कु कुत्सितं मनो यस्य—of impure heart. अत्रा यत्रा instance of त्र. उरुष्याणः—This is a combination of the two terms उरुष्य + नः meaning 'save us'. उरुष्य—is a कण्ड्वादि root. उरुष्य + लोट् हि = उरुष्य, हि being dropped by 'अतो हेः' न being changed into ण by 'नश्च धातुस्थोरुषुभ्यः' (3649).

नित—। ऋचि तुन्विति। वेदमन्त्रविषये तु, नु, घ, मक्षु, तङ्, कु, त्र, उरुष्य इत्येषामष्टानां दीर्घः स्यादित्यर्थः। दीर्घ इति प्राग्वद् 'ढ्रलोपे—' ( ६।३।१११ ) इत्यतः प्रागवदनुवृत्तिलभ्यः। यथासंख्यमुदाहरणम्—आतून इत्यादि। तु, नु, मक्षु इत्येते चिप्रवचनाः। उत वा घेति। सूत्रे घ इति निपातस्य ग्रहणम्। न तु 'तरप् तमपौ घः' इति इति कृत्रिमस्य 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसंप्रत्ययः' इति। ख्यालादिति ख्यालकादित्यर्थः। ईमहे याचामहे। भरता जातवेदसमिति। विभक्तेर्लो मध्यमपुरुषबहुवचने शौः शपि गुणे च रूपम्। सूत्रे 'तङ्' इति न सर्वेषां तङादेशानां ग्राहकम्। किन्तु ङितस्तेषामेव। तथाच भृ लोट् थ इति स्थिते 'लोटो लङ्वत्' इति लोटो लङ इव कार्य्याभ्युपगमात् थादेशस्य ङित्त्वात् 'तस्थस्थमिपां तांतंतामः' इति थस्य तः। ततोऽनेन सूत्रेण दीर्घः। एतेन ये तङादेशाः पितस्तेषां दीर्घो नेति फलितम्। अत आह—तेनेहनेति। शृणोतेति। लोण्मध्यमबहुवचने थस्य तबादेशे रूपम्। तथाच—श्रु लोट् थ इति स्थिते 'श्रुवः शृ च' इति श्नुप्रत्यये शृ इति आदेशः 'तप्तनप्तनथनाश्च' ( २५७६ ) इति थस्य तबादेशः। तस्य पित्त्वात् 'सार्व-धातुकार्ध—' ( २६८२ ) इति गुणः। ततो रूपम्। शृणुतेत्यर्थः। ग्रावाणः प्रस्तराः। अतएव तपः पित्त्वेन ङित्त्वाभावान्नानेन दीर्घ इत्यभिप्रायः। कूमना इति। कुत्सितं मनोऽस्येति बहुव्रीहिः। अत्रा यत्रा इति। त्र इत्यस्य दीर्घः। उरुष्याण इति। उरुष्य इति कण्ड्वादिको धातुः रक्षणार्थः। तस्य लोण्मध्यमैकवचने 'अतो हेः' इति हेर्लुक्। उरुष्य इति रूपम्। रक्ष रक्षेत्यर्थः। उरुष्य + नः इतिच्छेदः। अत्र न इत्यस्य नकारस्य 'नश्च धातुस्थोरुषुभ्यः' ( ३६४९ ) इति णत्वम्।

३५२६। इकः सुञि ॥ ६।३।१३४ ॥

दी—। ऋचि दीर्घ इत्येव। अभीषुणः सखीनाम्। 'सुञः' (३६४४) इति षः। 'नश्च धातुस्थोरुषुभ्यः' (३६४९) इति णः।

In the matter of ऋक्, the इक् letters of a term is lengthened when सुञ् or सु follows; सु is an अव्यय। Thus 'अभीषुणः—' Dissolve as अभि + सु + नः, इक of अभि is lengthened by this, स of सु is changed to ष by 'सुञः' (3644) and नः to णः by 'नश्च—'(3649).

मित—। इक इति। प्राग्वद् दीर्घानुवृत्तिः। पूर्वसूत्रादचि इति चानुवर्तते। तदाह—ऋचि दीर्घ इति। सुञि परत इति शेषः। अत्र मन्त्रानुवर्तनपरं हरदत्त-मतमेव न्याय्य इति नागेशः। प्रत्यासत्त्या ऋचीत्यस्यानुवर्तनमेव साधीयः प्रतिभाति। अभीषुण इति। अभि + सु + नः इतिच्छेदः। अभीत्यस्य इको दीर्घः। सु इति सुञ्। तच्चाव्ययम्। तस्य षत्वार्थमाह—'सुञः' (३६४४) इति। न इत्यस्य णत्वं दर्शयति नश्चेति।

३५२७। द्व्यचोऽतस्तिङः ॥ ६।३।१३५ ॥

दी—मन्त्रे दीर्घः। विद्मा हि चक्रा जरसम्।

In a मन्त्र or ऋक् (संहिता reading) the अकार of a तिङन्त verb containing two vowels only is lengthened; thus—'विद्मा हि' The word here is विद्म—विद् + लट् मस्—where मस् has been replaced by म by the rule 'विदो लटो वा' (2464). Similarly in 'चक्रा जरसम्'—here the word is चक्र—कृ + लिट् थ—the second person plural.

मित—। अच इति। 'ढ्रलोपे—' (६।३।१११) इत्यतः प्राग्वद् दीर्घानुवृत्तिः। 'मन्त्रे सोमाश्व—' इत्यतो मन्त्रानुवृत्तिः। एतच्च हरदत्तानुसारेणेति प्रागेवोक्तम्। प्रत्यासत्त्या तु 'ऋचि—' (३५२६) इत्यतः ऋचीत्यस्यानुवर्तनमेव युक्तं प्रतिभाति।

द्व्यच्कस्य तिङन्तस्य अकारस्य दीर्घः मन्त्रविषयसंहितायाम् इत्यर्थः। विद्मा हि चक्रेति। संहितापाठविषय एवायं दीर्घः। पदपाठे तु विद्महि। चक्र जरसम् इत्येव। विद्म इति। विदेर्ज्ञानार्थात् लटि मसि रूपम्। 'विदो लटो वा' (२४६४) इति मादेशः। चक्र इति। करोतेः लिटि मध्यमपुरुषबहुवचने रूपम्। द्वित्वाभ्यासकार्यम्। द्व्यच इति किम्? अवाभरत वाजिनः इति नागेशः।

२५३८। निपातस्य च ॥ ६।३।१३६ ॥

टी—। एवा हि ते।

The अकार at the end of a निपात or अव्यय also (which contains two vowels only) is lengthened in a मन्त्र, Thus 'एवा हि—'.

मित—। निपातस्येति। प्रागवदनुवृत्तिः। द्व्यचकस्य निपातस्य च अतो दीर्घः स्यान्मन्त्रे। संहितायाम् इत्येव। एवाहि इति। पदपाठे तु एव हि इति एव शब्दश्चादिषु पठितत्वान्निपातसंज्ञो भवति।

२५३९। अन्येषामपि दृश्यते ॥ ६।३।१३७ ॥

टी—। अन्येषामपि पूर्वपदस्थानां दीर्घः स्यात्। पूरुषः। दण्डादण्डि।

In a मन्त्र otherwords also have the final vowel of the preceding members lengthened in the संहितापाठ। Thus पूरुषः etc.

मित—। अन्येषामपीति। अनुवृत्तिः प्राग्वत्। दृशिग्रहणं सर्वोपाधि-व्यभिचारार्थम्। तेन द्व्यज्भिन्नस्यापि दीर्घः इत्याशयेन व्याचष्टे—पूर्वपदस्थानामिति। पूरुष इति। 'स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः' इत्यमरः। दण्डादण्डीति। 'तत्र तेनेदम् इति सरूपे' (८४६) इति समासः (बहुव्रीहिः)। दण्डैश्च दण्डैश्च प्रहृत्य इदं युद्धं प्रवृत्तमिति विग्रहः। 'इच् कर्मव्यतिहारे' (८६६) इति समासान्त इच्प्रत्ययः। एवं केशाकेशि। मुष्टीमुष्टि इत्यादि द्रष्टव्यम्।

२५४० । छन्दस्युभयथा ॥ ६।४।५ ॥

दी—। नामि दीर्घो वा । धाता—धातॄणामिति बह्वृचाः । तैत्तिरीयास्तु ह्रस्वमेव पठन्ति।

In vedic literature, the final of a base, when the सुप् विभक्ति नाम् (genitive pl.) follows, may or may not be lengthened. Thus धातॄणाम् according to the बह्वृच school but also धातृणाम् according the तैत्तिरीय school.

मित—। छन्दसीति। 'ढ्रलोपे—' (६।३।१११) इत्यतो दीर्घ इत्यनुवर्तते। 'नामि' (६।४।३) इत्यतो नामि इति च। तदाह—नामि दीर्घो वेति। वेति उभयथा इत्यस्य विवरणम्। दीर्घो ह्रस्वश्चेत्युभयथापि नामि भवतीत्यर्थः। धातृनामिति। 'इत्ति क्रतस्त्रि स्वचतस्रोरत्वानुवृत्तिस्तूयुक्ते ति भाव' इति शब्देन्दुशेखरः।

२५४१ । वा षपूर्वस्य निगमे ॥ ६।४।९ ॥

दी—। षपूर्वस्याच उपधाया वा दीर्घोऽसम्बुद्धौ सर्वनामस्थाने परे। ऋभुक्षाणम्। ऋभुक्षणम्। निगमे किम्? तक्षा। तक्षाणौ।

The penultimate of an अच् (vowel), having a षकार preceding, is optionally lengthened when a सर्वनामस्थान, other than सम्बुद्धि or vocative singular follows. By सर्वनामस्थान is meant the five सुप् विभक्तिs beginning form सु and ending in औ (सुऔ, जस्, अम्, औट्) which are added to masc. and fem. bases only, cp—'सुडनपुंसकस्य' (229). By सम्बुद्धि is meant the vocative singular cp 'एकवचनं सम्बुद्धिः' (102). ऋभुक्षाणम्—The base is ऋभुक्षिन् irregularly formed with इन् under उणादि class. The इकारः of ऋभुक्षिन्, when a सर्वनामस्थान affix follows is re-

placed by अकार by the rule 'इतोत्सर्वनामस्थाने' (366). Thus ऋभुक्षिन् + अम् = ऋभुक्षाणम्—ऋभुक्षणम्। Why say निगमे in the Vedas? Witness तक्षा etc which are classical forms and therefore there is no chance of दीर्घ विकल्प।

मित—। वा षपूर्वस्येति। 'ढ्रलोपे—' (६।३।१११) इत्यतो दीर्घ इत्यनुवर्तते। तस्य दीर्घो इत्यपेक्षायाम्—अच इत्येवोपतिष्ठते। दीर्घश्रुत्या अच उपस्थिति-नियमादिति 'अचश्च' इति सूत्रं स्पष्टम्। 'नोपधायाः' (६।४।७) इत्यत उपाधाया इत्यनुवर्तते। 'सर्वनामस्थाने चासंबुद्धौ' (६।४।८) इत्येतत् सर्वमपि सूत्रम् च। ततो व्याचष्टे—षपूर्वस्याच उपधाया इत्यादि। षः षकारः पूर्वो यस्मादिति विग्रहः। ऋभुक्षाणम्—ऋभुक्षणमिति। ऋभुक्षिन् अम इति स्थिते 'इतोऽत् सर्वनामस्थाने' (३६६) इति ऋभुक्षन् अम् इति जाते 'सर्वनामस्थाने चासंबुद्धौ' (६।४।८) इत्यनेन नित्यं दीर्घे प्राप्ते सूत्रेण तद्विकल्पो विधीयते। ऋभुक्षिन्निति इन् प्रत्ययान्तो निपातित इति उणादिषु द्रष्टव्यम्। अमिति 'सुडनपुंसकस्य' (२२८) इत्यनेन सर्वनामस्थानसंज्ञं भवति। ऋभुक्षा इन्द्रः। 'आखण्डलः सहस्राक्षः ऋभुक्षा—' इतीन्द्रपर्य्यायेमरः। असम्बुद्धौ किम्? ऋभुक्षन्। 'एकवचनं सम्बुद्धिः' (१८२) निगमे किमिति। निगमो वेदः। तक्षा तक्षाणाविति। लौकिकावेतौ शब्दौ।

## ३५४२। जनिता मन्त्रे ॥ ६।४।५३॥

**इडादौ तृचि णिलोपो निपात्यते। यो नः पिता जनिता।**

In the matter of मन्त्र the term जनिता is irregularly formed with the disappearence of णि or the affix णिच् when तृच् beginning with इट् follows. Thus जनिता—जन्+णिच्+तृच् the progenitor. The classical form of this is जनयिता. For

in that case the णिलोप directing rule 'णेरनिटि' (2313) does not apply as तृच् is सेट्.

मित—। जनितेति। निपात्यतेऽयं शब्दस्तृजन्तो मन्त्रविषये। निपातनप्रकारमेवाह—इडादौ तृचि इति। णिलोप इति तु 'णेरनिटि' (६।४।५१) इत्यतोऽनुवृत्ते। इडादाविति 'निष्ठायां सेटि' (६।४।५२) इत्यतोऽनुवृत्तिलभ्यस्य विवरणम्। जनितेति। जनयितेत्यर्थः। लौकिकमेतत्। अत्र 'णेरनिटि' (२३१३) इत्यस्याप्रवृत्तेर्णु णयादेशौ। 'जनिवध्योश्च' इति उपधावृद्ध्यभावः।

२५४३। शमिता यज्ञे ॥ ६।४।५४ ॥

टी—। शमयितेत्यर्थः।

The term शमिता with reference to a sacrifice is irregularly found with तृच् beginning with इट्. It means a consolator शमयिता. Here in शमयिता the rule 'णेरनिटि' (2313) does not hold good; hence णि does not elide; the penultimate of शम् however is not lengthened due to the prohibition 'मितां ह्रस्वः'।

मित—। शमितेति। शमितेति शब्दो यज्ञविषये इडादौ तृचि परे णिलोपेन निपात्यते। अत्र लौकिकमाह—शमयितेत्यर्थ इति।

२५४४। युप्लुवोर्दीर्घश्छन्दसि ॥ ६।४।५८ ॥

टी—। ल्यपीत्यनुवर्तते। वियूय। विप्लूय॥ आडजादी—नाम् (२२५४)—

The vowels of यु and प्लु are lengthened in the Vedas when ल्यप् follows. Thus वियूय etc. 'आट्'—This is for the next rule—

मित—। युप्लुवोरिति। 'ल्यपि लघुपूर्वात्' (६।४।५६) इत्यतो ल्यपीत्यनुवर्तते। तदाह—ल्यपीति। ल्यपि परे युधातोः प्लुधातोश्चापि दीर्घः स्याच्छन्दसि

विषये इत्यर्थः। विधूयेत्यादि। लोके तु 'क्त्वस्य— पिपिक्षति—' इति तुकि विधुत्य विधृत्य इत्येव। आजजादीनामिति उत्तरार्थमिदम्—

२५४५। छन्दस्यपि दृश्यते॥ ६।४।७३॥

दो—। अनजादीनामित्यर्थः। आनट्। आवः॥ न माङ्योगे।

In vedic literature, however, it is seen that roots not beginning with an अच् also take the augment आट्. Thus आनट्—नश्+लुङ्+द = आट् नश् द—here the substitute च्लि for लुङ् being dropped by 'मन्त्रे घसह्वर—'(3402) and 'नशेर्वा' (431) not having applied 'व्रश्चभ्रस्ज—'(294) applies giving आनष्द=आनष्+द (or त्) being dropped by 'हल्ङ्याब्भ्यः—' (254)=आनड्—आनट् by 'झलां जशोऽन्ते' and 'वावसाने'. आवः—आट्+वृ+लुङ् द or स elision of च्लि as before and that of द or स. गुण and विसर्ग of रेफ॥ न माङ्योगे—This is for the next rule—

मित—। छन्दस्यपीति। आडजादीनामिति पूर्वं सूत्रम्। तत्र आडिति अजादीनामिति चानुवर्तते। तत्र आह—अनजादीनामित्यर्थः। अजादीनामनजादीनां च धातूनां छन्दसि विषये लुङ्लङ्लृङ्क्षु आडागमः स्यादित्यर्थः। तत्र उदाहरति—आनडिति। नशेर्लुङि प्रथमैकवचने 'मन्त्रे घसह्वर—' (३४०२) इति च्लेर्लुकि 'हल्ङ्याब्भ्यो दीर्घात्—' (२५४) इतितलोपे 'नशेर्वा' (४३१) इति कवर्गादेशाप्रवृत्तौ 'व्रश्च—' (२९४) इति शस्य षः। तस्य 'झलां जशोऽन्ते' 'वावसाने' इति जश्त्वचर्त्वे रूपम्। विनश्यतिस्मेत्यर्थः। आवरिति—वृञो लुङि प्रथमैकवचने मध्यमैकवचने च रूपम्। च्लेरपृक्तस्य च लोपः प्राग्वत्। सार्वधातुकेति गुणः रेफस्य विसर्गः। अनजादिकयोरुदाहरणे। अजादेस्तु—'सुरुचो वेन आवः' इति मन्त्रः। तत्र आवः इति अवतेर्लुङि सिपिरूपम्। आवः रक्षितवानसीति तत्रत्य सायनाचार्यभाष्यम्। 'न माङ्योगे' इति उत्तरार्थमिदम्—

३५४६ । बहुलं छन्दस्यमाङ्योगेऽपि ॥ ६।४।७५ ॥

टी—। अडाटौ न स्तो माङ्योगेऽपि स्तः । जनिष्ठा उग्रः सहसे * तुराय: । मा वः क्षेत्रे परबीजान्यवाप्सुः ।

The addition and the elision of the augments अट् and आट् are variously effected in the vedic literature i.e they are added to roots when there exists the particle माङ् and again they are made to elide when there exists no माङ्. Thus the vedic injunction in this case is diametrically opposite to the classical one. Thus the मन्त्र runs 'जनिष्ठाः—'where there is no माङ् present and yet जनिष्ठाः—which is the लुङ् second person singular form of जन् ( to be born )—has got no अट् prefixed to it by 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' ( 6.4.73 ). जनिष्ठाः means—you were born. 'मावः—'. The मन्त्र infull is—'अप्रमत्ता रक्षत तन्तुमेतं मावः क्षेत्रे—'Scrupulously preserve this (seminal) tendril i.e sex energy and let not (thus) others' seminal fluid be injected into the wives of yours i.e observe ब्रह्मचर्य and enjoy home-life. Here there exists माङ् and yet in अवाप्सुः which is the लुङ् plural of वप् ( to sow ) there is अट् prefixed. The classical forms against the two are अजनिष्ठाः and वाप्सुः respectively. The second मन्त्र 'मावः—' is also read as 'मा वः क्षेत्रे परबीजानि वाप्सुः—in that case another instance of अट् even when there is माङ् present is to be searched out from the Vedas. The reading of अवाप्सुः is from काशिका.

[ * 'तुराय' इति निर्विसर्गोऽपि क्वचित् पठ्यते । ]

मित—। बहुलं छन्दसीति। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (६।४।७१) इत्यतोऽडिति अनुवर्तते। 'आडजादीनाम्' (६।४।७२) इत्यत आडिति। 'न माङ्योगे' (६।४।७४) इत्यतो नेति माङ्योगे इति चानुवर्तते। ततो व्याचष्टे—अडाटौ नस्त इति छन्दसि विषयेऽमाङ्योगेऽपि बहुलमिति शेषः। माङ्योगेऽपीति। अडाटौ इति शेषः। अयमर्थः—माङ्योगे सत्यपि छन्दसि विषये बाहुलकादडाटौस्तः। पुनर्माङ्योगेऽसत्यपि उक्तविषये बाहुलकादडाटौ न स्त इति। एतदुक्तं भवति यल्लौकिककार्यविपर्य्यासेनात्र माङि असत्यपि अडाटौ नस्तः—सत्यपि तस्मिंस्तौ स्त इति। असत्यपि माङि अडभावमुदाहरति—'जनिष्ठाः—' इति। जनेर्लुङि रूपम्। जातवानित्यर्थः। अत्र माङ् नास्ति। तथापि 'लुङ् लङ्—' इति प्राप्तः अडपि नास्ति। अथ माङि सत्यपि अडागममुदाहरति। मावः इति। 'अप्रमत्ता रक्षत तन्तुम् एतम्' इति मन्त्रस्यास्य पूर्वार्द्धम्। अयमर्थः—अप्रमत्ताः सावहिताः सन्तः एतम् वक्ष्यमाणमालोच्यमानं तन्तुं शुक्रं रेत इति यावद्रक्षत अवत असदाचरणेन मा च्योष्टेरित्यर्थः। वीर्य्यधारणलक्षणं ब्रह्मचर्य्यं चरतेति निर्गलितार्थः। कुतस्तत्राह—मावः इति। वो युष्माकं क्षेत्रे दारासु परबीजानि परेषां रेतांसि मा अवाप्सुः उप्ता मा भुवन्नित्यर्थः। वीर्य्ये हि ब्रह्मचर्य्यव्रते भवन्तो रक्षणसमर्था भवेयुरिति भवद्द्वारा नान्यान् कामयिष्यन्त इति तात्पर्य्यम्। अत्र माङि सत्यपि अवाप्सुरित्यत्र 'न माङ्योगे' इति निषेधं बाधित्वा वपतेर्लुङि भौ अडागमः। 'वदव्रजहलन्तस्याचः' (१२६७) इति वृद्धिः। झेर्जुस्। अवाप्सुरिति काशिकाक्रमानुरोधेन। मावः क्षेत्रे परबीजानि वाप्सुरित्यपि पाठ उपलभ्यते। तथात्वे माङि उदाहरणान्तरं वेदेषु द्रष्टव्यम्।

३५४७। इरयो रे ॥ ६।४।७६ ॥

टी—। प्रथमं गर्भं * दध्र आपः। रेभावस्याभीयत्वेनासिद्धत्वादालोपः *। अत्र रेशब्दस्येरादेशे कृते पुनरपि रेभावस्तदर्थं च सूत्रे द्विवचनान्तं निर्दिष्टमिरयोरिति।

[* 'अतो लोपः' इति पाठान्तरम्। * 'गर्भ'मिति क्वचिन्नास्ति]।

The लिट् third person plural affix इरे (or इरेच् by 'लिटस्तझयोरेशिरेच्'), in vedic literature, is replaced by the word रे. Thus 'प्रथमं गर्भम्—'The water first conceived ; the classical form against it is दधिरे. दध्रे—धा+लिट् इरे=द धा+इरे by duplication (द्वित्व) etc. Now here two rules apply simultaneously viz (1) 'आतो लोप इटि च' (2372—6.4.64) and 'इरयो रे' (this rule). By 'विप्रतिषेधे परम्—'the latter supersedes the former; whence we get दधा+रे without the elision of आ of the root धा. But if आ is not dropped we cannot have दध्रे. To effect the elision of आ therefore Bhattoji says 'रेभावस्य आभीयत्वेन—' etc. That is —both the rules 'आतो लोपः—' (6.4.64) and 'इरयोः—' (6.4.72) fall under the purview of 'भस्य' (6.4.129) or भाधिकार and consequently by 'असिद्धवदत्राभात्' (6.4.29) the injunction of रे becomes invaild (for reason see the elaborate expl. of the rule 'असिद्धवत्—'6.4.29 under our भ्वादि section). Thus the substitute रे being invalid or असिद्ध, इरे although dropped is regarded present and as if (इरे) is an अजादि आर्द्धधातुक so 'आतो लोपः—'takes effect and finally we have the form दध्रे (दध्+रे). Now there exists another rejoinder viz the substitute रे can have by the restriction, referred to under 'क्रसभृ—' (2293), the augment इट् prefixed to it, for the substitute रे although invalid here was valid elsewhere namely under 'क्रसभृ—'and in that case it can demand the augment इट. This he (the author) agrees to and therefore says—अत रेशब्दस्य इटि कृते'. But if इट् is prefixed to रे then we have दधिरे and not दध्रे. To solve this he says—पुनरपि रेभावः i.e रे after it has been prefixed with इट

would again be replaced by 'रे' and consequently we will have the form दध्रे. But how do you know that रे after having been prefixed with the augment इट् would again be set aside by 'रे'? To answer this he says 'तदर्थम् च सूत्रे— etc. That रे with इट् prefixed to it is again replaced by रे is inferred from the dual number 'इरयो:—'in the rule. For इरयो रे is not to be broken up as इरय: but it is to be dissolved as इरयो: + रे with इ and रे combined (where इ stands for इट्) = इरयो रे by 'रोरि' (173).

मित—। इरयोरिति। इरे इति लिट् प्रथमबहुवचनस्य 'रे' इत्यादेश: स्याच्छन्दसि इत्यक्षरार्थ:। विवक्षितार्थस्तु इट् सहितस्य रे इत्यस्य यद्वा इटश्च रे इत्यस्य च स्थाने रे इत्यादेश: स्यादिति। 'इ' इति इटो ग्राहकम्। एतद् द्वितीयं व्याख्यानमनुपदमेव विशदीकरिष्यति मूले। अत्र सूत्रस्य व्याख्यानद्वयमङ्गत्व' संहिताफलमेवेति विभावनीयम्। इरे इत्यस्य षष्ठ्येकवचने इरय: + रे इतिच्छेदे कृते यथा 'हशि च'ति 'इरयो रे' इति भवति तथा इरे = इरयौ, तयो: 'इरयो: + रे' इतिच्छेदेऽपि 'रो रि' (१७३) इति रेफलोपे इरयोरे इत्येव। एतत् सर्वमनुपदं स्वयमेव वक्ष्यति 'तदर्थं सूत्रे द्विवचनान्तं निर्दिष्टम् इरयोरिति'। प्रथमं गर्भमिति। ओष: प्रथमं गर्भं दध्रे दधिरे धृतवन्त इति मन्त्रार्थ:। अत्र दध्रे इति धा इत्येतस्य लिटि प्रथम बहुवचने रूपम्। तथाच धा इरे ('लिटस्तझयोरेशिरेच्') इति स्थिते, 'आतो लोप इटि च' (२३७२) इति 'इरयोरे' (३५४७) इति चेति सूत्रद्वयं प्राप्नोति। तत्र 'विप्रतिषेधे परं कार्यम्' इति परिभाषया 'आतो लोप:—' (६।४।६४) इति बाधित्वा परत्वाद् 'इरयो:—' (६।४।७२) इत्येव प्राप्नोति। तदेवम् द्वित्वाभ्यासकार्यपूर्वकम् दधा रे इति लब्धे धा इत्यवयवस्य आकारस्य लोपाभावाद् दध्रे इति न सिध्यति,। अतस्तत्सिद्ध्यर्थमाह—रेभावस्याभीयत्वेनेति। 'असिद्धवदत्राभात्' (६।४।२२) इत्याभीयम् सूत्रम्। तस्य 'भस्य' (६।४।१२९) इत्येव सूत्राधिकारोऽवधि:। तदेवमत्र 'समानाश्रयत्वात् तस्मिन्कर्तव्ये तदसिद्धम्' इति व्याख्यानबलात् 'असिद्धवत्—' इति सूत्रदृष्ट्या 'इरयो:' इति विहितो रेभावोऽसिद्धो भवति। तत: किमित्यत

आह—असिद्धत्वादाल्लोप इति। रेभावस्य असिद्धत्वात् इरे इत्यस्यैव तत्र सत्त्वात् अजाद्यार्धधातुकपरकत्वात् 'आतो लोपः' इति प्रवर्तताम्। दधातेराल्लोपश्च भवति। ततो दध्रे इति रूपं सिध्यति। नन्वेवमपि रेभावस्यैव क्रादिनियमादिडागमः प्राप्नोति। न चेट्पक्षेऽपि रेभावोऽव्यर्थ इति वाच्यम्। 'कसृभृ—' (२२९३) इत्यत्र लिटि क्रादिष्वनिट्सु तस्य चरितार्थत्वात्। तदेवं 'रे' इत्येतस्य इडागमप्रसङ्गात् पुनः इरे-भावे जाते दध्+इरे=दधिरे इत्येव भवति। न त्विष्टम् दध्रे इति तदेतदिडागमं स्वीकृत्य समाधत्ते—अत्र रेभावस्य इटि कृते पुनरपि रेभाव इति। इट् सहितस्यैव रेभावस्य 'इरे' इत्येतस्य पुनरपि रेभाव इति भावः। कुत एतल्लभ्यते। तत्राह—तदर्थं च सूत्रे द्विवचना ' निर्दिष्टम् इति। तदेतत् वचनं प्रागेव व्याख्यातमस्माभिः। ननु तथापि 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इत्येतया परिभाषया 'इरे' इति लिट् प्रथमबहुवचनस्यैव प्रतिपदोक्तस्यैव अत्र 'रे' इत्यादेशः क्रियते। न तु लक्षणेन च कृतस्य 'इट सहितस्य रेभावस्य' रे इत्यादेश इति चेन्न। अत्र सूत्रकृद्वचनेनैवास्याः परिभाषाया अनित्यत्वज्ञापनादिति भावः।

२५४८। छन्दस्युभयथा ॥ ६।८।८६ ॥

**दी—। भूसुधियोर्यण् स्यादियङुवङौ च। वनेषु चित्रं विभ्वम्। विभुवं वा। सुध्यो नव्यमग्ने। सुधियो वा। 'तन्वादीनां छन्दसि बहुलम्' (वार्तिक)। तन्वं पुषेम। तनुवं वा। त्र्यम्बकम्। त्रियम्बकं वा।**

In vedic literature it is seen to act bothways i.e. भू and सुधी have there ऊकार and ईकार replaced both by यण् and by इयङ्—उवङ् also (when any अच् follows). Thus विभ्वम् with यण् (विभु+अम्) or विभुवम् with उवङ्. The classical form against this is 'विभुम्' by 'अमि पूर्वः' (194). सुध्यः with यण् (सुधी+ङस् genitive singular) or सुधियः with इयङ्. सुध्यः and सुधियः

both qualify अप्र:। सुधिय: is also the classical form of सुधी in genitive sing. 'तन्वादीनाम्—'This is a Varttika. यण्, इयङ् and उवङ् are variously effected in the cases of तनु etc. Thus तन्वम् with यण् and तनुवम् with उवङ्—the classical form being तनुम् by 'अमिपूर्वः'। त्र्यम्बकम् with यण् and त्रियम्बकम् with इयङ्. Dissolve as त्रीणि अम्बकानि (नेत्राणि) यस्यासौ त्र्यम्बक: or त्रियम्बक:—तम्, having three eyes. Hence the use of the term त्रियम्बक in classical language as in 'त्रियम्बकं संयमिनं ददर्श' (कुमार—3044) is indefensible. Kalidasa uses vedic forms and make other evident violatious also as 'प्रभ्रंशयां यो नहुषं चकार' etc—which go a great way to indicate that he flourished in an age when non-adherence to the rules of gram. was not necessarily considered a blemish on the part of at least celebrated writers.

मित—। छन्दसीति। 'अचि श्नुधातुभ्रुवां य्वोरियङुवङौ' (६।४।७७) इत्यत 'इयङुवङौ' इत्यनुवर्तते। 'इको यण्' (६।४।८१) इत्यतो यणिति। 'न भूसुधियो:' (७।४।८५) इत्यतो भूसुधियोरिति च। तदाह—भूसुधियोर्यण् इत्यादि। विभ्वं विभवं चेति। विभु+अम् इति स्थिते यणि विभ्वमिति। उवङि तु विभुवमिति। लोके तु 'अमि पूर्वः' (१९४) इति पूर्वरूपैकादेशे विभुम् इत्येव। सुध्य: सुधियो वेति। सुधीशब्दस्य षष्ठ्यां सुधी+ङस् इति स्थिते यणि सुधी+अस्=सुध्य इति। इयङि तु सुधिय इति। लोके 'अचि श्नु—' (२७२) इतीयङि सुधिय इत्येव। 'तन्वादीनाम्—' इति वार्तिकमिदम्। तनुप्रभृतीनां शब्दानां छन्दसि विषये बहुलं यणि इयङुवङादेशा: स्युरित्यर्थ:। तन्वं तनुवं वेति। प्राग्वत् 'अमि पूर्व:' इति प्राप्ते 'वा छन्दसि' इति यण्। वार्तिकादुवङ् च। त्र्यम्बकं त्रियम्बकं चेति। त्रीणि अम्बकानि लोचनान्यस्येति बहुव्रीहौ त्र्यम्बक: (त्रिलोचन:) इति लोके। वेदे तु क्रमाद् यण्, इयङ् च। [ एतेन 'त्रियम्बकं संयमिनं ददर्श' (कुमार—३।४४) इति प्रयोगस्य लोके असाधुत्वमेव ज्ञाप्यते। न चात्र त्रिलोचनमित्येव पाठ:।

ताङ्ग्यपाठकल्पनस्य साहसमात्रत्वमेवेति साम्प्रदायिकाः। अत्र 'तं त्र्यम्बकम्' इति बह्वृचाः पठन्ति ]।

३५४८। तनिपत्योश्छन्दसि ॥ ६।४।९९ ॥

दी—। एतयोरुपधालोपः क्ङिति प्रत्यये। वितत्निरे कवयः। शकुना इव पप्तिम। भाषायां वितेनिरे। पेतिम।

The penultimate of these two roots viz तन् and पत् disappears in vedic literature when a क्ङित् ( क्—eliding, ग्—eliding or ङ eliding ) affix follows. Thus 'वितत्निरे—'the poets spread. Here वितत्निरे is derived as वि तन्+लिट् with duplication of तन् and then the elision of the penultimate of the second stem. Although the elision of the penultimate (अकार) of तन् is invalid by 'असिद्धवदत्राभात्' (6.4.26) yet the injunction of एत्व by 'अत एकहल्मध्येऽनादेशादेर्लिटि' does not take effect because of the strength of the arrangement of the elision of the penultimate by this rule. The classical form, therefore, against this is 'वितेनिरे' by अभ्यासलोप and एत्व by 'अत एकहल्मध्ये—' (which see ante). 'शकुना इव—'we fall or fell like birds. पप्तिम्—पत्+लिट् म with इट् added to it. Proceed as before; the classical form is पेतिम against this.

मित—। तनिपत्योरिति। 'ऊदुपधाया गोहः' (६।४।८९) इत्यत उपधाया इत्यनुवर्तते। 'गमहनजनखनघसां लोपः क्ङित्यनङि' (६।४।९८) इत्यतो 'लोपः क्ङिति' इति च। तदाह—एतयोरुपधालोप इत्यादि। वितत्निरे इति। विस्तरं प्रविस्तारमापुरित्यर्थः। विपूर्वस्य तनेर्लिटि इरे प्रत्यये रूपम्। तत्र इरे इत्यस्य पित्त्वाभावात् ङित्वात् द्वित्वात् परभक्तस्य उपधा लोपः। न च अल्लोपस्य 'असिद्धवत्—' इत्याभीयत्वेनासिद्धत्वात् 'अत एकहल्मध्ये—' इत्येत्त्वाभ्यासलोपौ

इति शङ्कनीयम्। लोपविधिसामर्थ्यादेव तस्याप्रवृत्तेः। लोके तु 'अत एकहल्मध्ये—' इत्येत्वाभ्यासलोपौ=वितेनिरे इति। अकृन्त इवेति। पचिथ इव पताम इत्यर्थः। अपप्तम इति वा। 'छन्दसि लुङ् लङ् लिटः' वर्तमानवत् प्रयोगात्। पतॢ इतिलिटि मसत्यये पूर्ववदेत्वाभ्यासलोपाभावे इडागमे च रूपम्। पेतिम इति लेत्वाभ्यासलोपात् लोके रूपम्।

२५५०। घसिभसोर्हलि च॥ ६।४।१००॥

टी—। सग्धिश्च मे। बब्धां ते हरी धानाः। 'झुझल्भ्यो हेर्धिः' (२४२५)—

The penultimate of the roots घस् ( the substitute of अद to eat ) and भस् ( भर्त्सनदीप्तोः जुहोत्यादि ) disappears when a हलादि or अजादि किङत् affix follows. Thus सग्धिः—अद+क्ति=घस+ति by 'बहुलं छन्दसि'=घ्स्ति—elision of अकार or उपधा by this rule=घ्ति—disappearance of सकार by 'झलो झलि'=घ् धि by 'झषस्तथो-र्धोऽधः'=ग् धि by 'झलांजश झशि'=ग्धि. Then समाना ग्धिः=सग्धिः ( eating together )—कर्मधारय compound ; समान being replaced by 'स' by the rule 'समानस्य छन्दस्यमूर्धप्रभृत्युदर्केषु' (1072). Note that ग्धि may also be arrived at as a classical form with the disappearance of the penultimate in that case by the rule 'जनखनघसां लोपः क्ङित्यनङि' and then सग्धि as before. It is therefore that Amara says—'सग्धिःस्त्री सहभोजनम्'. बब्धाम्—भस+लोट् ताम् the root being of जुहोत्यादि class, श्लु ( which is नित्य ) takes place first effecting duplication भस् भस् ताम्=बभस् ताम् by अभ्यास operation=बभ्स ताम् by the disappearance of उपधा by this rule=बभ् धाम् elision of स् by 'झलोझलि' and replacement of त by ध by 'झषस्तथोः—'=बब्धाम् by 'झलां जश् झशि'. 'हुझल्भ्यः—'

This is brought down as it is necessary with respect to the explanation of 'श्रुशृणु—' the next rule.

मित—। घसिभसोरिति। 'अचि श्नुधातुभ्रुवाम्—' (६।४।७७) इत्यतोऽचीत्यनुवर्तते। 'ऊदुपधायाः—' (६।४।८९) इत्यत उपधाया इति। 'गमहनजनखनघसां लोपः क्ङित्यनङि—' (६।४।९८) इत्यतो 'लोपः क्ङिति' इति च। तदादिविधिः। तेनायमर्थः—घसेर्भसेश्च धातोरुपधाया लोपः स्याद्धलादौ अजादौ च प्रत्यये परत इति। सग्धिश्चेति। अद् क्तिन् इति स्थिते 'बहुलं छन्दसि' इति अदो घसादेशे घस् ति इति जाते अनेन उपधालोपः—घ् स् ति इति। ततो 'झलो झलि' इति सलोपः। 'झषस्तथोर्धोऽधः' (२२८२) इति तकारस्य धकारः। 'झलां जश् झशि' इति घस्य जश्त्वेन गः। ततोऽग्धिः—भोजनमिति तदर्थः। ततः समाना ग्धिः सग्धिरिति कर्मधारयः। 'समानस्य छन्दसि—' (१०१२) इति समानस्य सभावः। ग्धिरिति लोकेऽपि 'जनखन—' इत्युपधलोपात् साधयितुं शक्यते। ततः सामाना ग्धिरिति पूर्ववत् सग्धिरिति च। अतएवाह अमरः—'सग्धिः स्त्री सहभोजनम्' इति। बब्धामिति—'भस भर्त्सनदीप्त्योः' इति जौहोत्यादिको धातुः। तस्य लोटि तसस्तामादेशे रूपम्। तदेवं भस् ताम् इति स्थिते धातोर्जौहोत्यादिकत्वात् 'जुहोत्यादिभ्यः श्लुः' इति श्लुः। 'श्लौ' इति द्वित्वमभ्यासकार्यं च। एवं बभस् ताम् इति जाते अनेनोपधालोपे बभ् स् ताम् इति। ततो 'झलो झलि' इति सलोपः। भस्य प्राग्वद् जश्त्वेन बः। प्रत्ययतकारस्य च धकारः। ततो यथोक्तं रूपम्। हुझल्भ्यः इति उत्तरार्थमिदम्।

## २५५१। श्रुशृणुपॄकृवृभ्यश्छन्दसि ॥ ६।४।१०२ ॥

**दी—। श्रुधी हवम्। शृणुधी गिरः। रायस्पूर्धि। उरुणस्कृधि। अपावृधि *।**

In vedic literature, the Substitute हि coming after श्रु, शृणु, पॄ, कृ and वृ is replaced by धि. Thus श्रुधी हवम्—

[* 'अपावृधि' इति सर्वत्र न दृश्यते। ]

Deign to listen to our call (हवम्—ह्वे + अप्). श्रुधी—श्रु + हि (लोट्) here शप् elides by 'बहुलं छन्दसि' and शप् being dropped श्नु by 'स्वादिभ्यः—' does not take place and consequently श्र for श्रु fails to apply, as 'श्रुवः श्र च' does not now hold good. Then हि is replaced by धि. The lengthenation (दीर्घ) of इकार is effected by 'अन्येषामपि दृश्यते' (3539). श्रृणुधीगिरः—hear words please—Here 'श्रृणु' is arrived at as in the classical forms. Then हि after it is replaced by धि for, on the strength of the injunction of धि for हि the rule 'उतश्चप्रत्ययादसंयोगपूर्वात्' (2334) fails to take effect here and hence the substitute हि does not disappear. Then दीर्घ here also is as before. 'रायः—etc' Fill up (the deficit of) our riches. पूर्धि—पृ (to fill etc) + हि—पृ belongs to जुहोत्यादि class. Hence शप् was to make room for श्नु but this does not occur as शप् disappears by 'बहुलं छन्दसि' as before. ऋकार of पृ gets उत् or उकार by 'उदोष्ठ्यपूर्वस्य' then apply 'उरण्रपरः', दीर्घ ऊकार by 'हलि च' (364) and हि is replaced by धि by this. 'उरुण:—' make profuse (wealth) of ours. Break-up as उरु + नः (= उरुणः); न being changed ण by the rule 'नश्चधातुस्थोरुषुभ्यः' (3449). Then उरुणः कृधि = उरुणस्कृधि by 'कः करत्करतिकृधि—'(3635). कृधि—कृ + लोट् हि here also शप् elides and 'उतश्च प्रत्ययात्—'etc does not apply as before. Consequently हि is not dropped but replaced by धि. The classical form is कुरु against this. अपावृधि—अप + वृ + हि (लोट्) शप् eliding as before, श्नु fails to operate and therefore 'उतश्च—'not applying हि is replaced by धि. Lengthenation of अत् by 'अन्येषामपि—'. The classical form against it is अपवृणु.

मित—। शुश्रुधि इति। 'हुझल्भ्यः—' (६।४।१०१) इति वर्तते। तेन श्रु, शृणु, पॄ, कृ, वृ इत्येतेभ्यः परस्य हेर्धिः स्यादित्यर्थः। शुधी श्रवमिति। श्रवइति श्रुवङः अपि प्रत्यये सिद्धम्। तेन आह्वान् शृणिवित्यर्थः। शुधी इति स्थिते 'बहुलं छन्दसि' इति श्नो लुकि 'स्वादिभ्यः—' इति श्नोरभावः। सेरपित्वाद् गुणाभावः—ततो हेर्धिः। 'अन्येषामपि दृश्यते' (३५३९) इति दीर्घः। शृणुधीति। शृणिवित्यर्थः। अत्रापि श्रु+हि इति स्थिते लोकवत् शृणु इतिजाते अत्र सूत्रे विधिसामर्थ्यात् 'उतश्च प्रत्ययात्—' (२३३४) इत्यस्याप्रवृत्तेर्हिविभक्तेः लोपो न। ततो धिः। दीर्घः प्रागवत्। 'रायः'—इति—धनानि पूरय—धनाभावमपगमयेत्यर्थः। पॄ पालन पूरणयोर्जौहोत्यादि। बाहुलकाच्छब लुकि श्लोरभावे द्वित्वादिना। 'उदोष्ठ्यपूर्वस्य' इत्युत्वम्। रपरत्वम्। 'हलि च' (३५४) इति दीर्घश्च। उरुणः—इति। नः अस्माकम् उरु प्रचुर धनमिति शेषः कृधि कुर्विति मन्त्रार्थः। उरु नः इति स्थिते 'नश्च धातुस्थोरुषुभ्यः' (३६४९) इति णत्वम्। तत उरु णः+कृधि इति स्थिते 'कः करत्करति कृधि—' (३६३५) इति विसर्जनीयस्य सः। कृ हि इति स्थिते बाहुलकाच्छपलुकि श्नोरभावे 'उतश्च—' इत्यस्याप्रवृत्तौ हिलोपाभावे च धिरित्यादेशः। अपावृधि इति। अपवृणु इति लोके। अपपूर्वाद् वृधातोर्हेः। तस्यापित्वाद् गुणाभावः। श्नः, 'उतश्च—' इत्यादेः प्रागवदप्रवृत्तौ हेर्धिरादेशः। 'अन्येषामपि—' इति दीर्घोऽपि प्रागवत्।

३५५२। वा छन्दसि ॥ ३।४।८८ ॥

दी—। हिरपिद्वा ॥

The substitute हि (for सिप् in लोट्) is optionally पित् or प—eliding in vedic literature, i.e हि following, the root is optionally gunnated.

मित—। वेति। 'सेर्ह्यपिच्च' (३।४।८७) इत्यव्यवहितात् पूर्वसूत्रात् 'सेः हि अपित्' इत्यनुवर्तते। 'लोटो लङ्वत्' (३।४।८५) इत्यतो लोट इति च। तेन छन्दसि लोटः सेर्हिः अपिद् वा स्यादिति पूर्णार्थः। एवं स्थिते उदाहरणमाह—

३५५३। अङितश्च ॥ ६।४।१०३ ॥

टी—। हेर्धिः स्यात् । रारन्धि । रमेर्व्यत्ययेन परस्मैपदम् । शपः श्लुरभ्यासदीर्घश्च । अस्मे प्रयन्धि । युयोधि जातवेदः । यमेः शपो लुक् । यौतेः शपः श्लुः । 'अङितः' किम् ? प्रणीहि * ।

When again the substitute हि is not ङित् (and therefore पित् by 'सार्वधातुकमपित्') then also it is replaced by धि in the Vedas. Thus रारन्धि—Let you enjoy—रम्+लोट् हि. The root रम् to hold sports (क्रीडायाम् भ्वादि) being अनुदात्तेत् is आत्मनेपदी but here it is परस्मैपदी by 'व्यत्ययो बहुलम्' (3423). Being भ्वादि, शप् after it was due by 'कर्त्तरि शप्', but this also by 'व्यत्ययो बहुलम्' is replaced by 'श्लु' which causes the duplication of the root—the duplicate or अभ्यास, being lengthened by the rule 'तुजादीनां दीर्घोऽभ्यासस्य' (3509). Thus we now have रारम् हि=रारम् धि by the present rule=रारन्धि by 'मोऽनुस्वारः' and 'अनुस्वारस्ययि—' the substitute हि being अङित् or पित् the elision of the अनुनासिक (म्) is not effected as the rule 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपः झलि क्ङिति', in that case, does not hold good here. प्रयन्धि—प्र+यम्+लोट् हि. The विकरण (शप्) after यम् is dropped by the rule 'बहुलं छन्दसि' then हि being अङित् पित्, the rule 'अनुदात्तोपदेश—'does not effect अनुनासिकलोप and consequently by अनुस्वार and परसवर्ण we have प्रयन्धि. युयोधि—यु+लोट् हि—यु is अदादि, yet शप् by 'बहुलं छन्दसि' has been replaced by श्लु, consequently द्वित्व etc takes place. The root (अङ्ग) is allowed

[ * 'अङितः—' इत्यंशो न सार्वत्रिकः पाठः ]।

गुण due to पित्त्व of हि here. The classical forms against these are रमस्व, प्रयच्छ and युङ्ग्धि respectively.

मित—। अङितश्च इति। 'हुझल्भ्यो हेर्धिः' (६।४।१०१) इत्यतो हेर्धिरित्यनुवर्तते। तेन शेषं पूरयन्नाह—हेर्धिः स्यादिति। अङित इति हेर्विशेषणम्। तेन अङिद्यो हिर्भवति तस्यापि धिरादेश इत्यर्थः। अनेन ङितश्च हेर्धिरादेश उक्त एवेति द्रष्टव्यम्। रारन्धि इति। रमु क्रीडायां भ्वादिः। अनुदात्तेत्। ततः 'अनुदात्तङितः—' (२१५७) इत्यात्मनेपदनियमादाह—व्यत्ययेनेति। व्यत्ययो बहुलमित्यनेनेति भावः। यद्वा अनुदात्तेत्त्वलक्षणस्यात्मनेपदस्यानित्यत्वात् परस्मैपदमिति मन्तव्यम्। शपः श्लुरिति व्यत्ययेन। अभ्यासदीर्घ चेति। 'तुजादीनां दीर्घोऽभ्यासस्य' (३५०९) इत्ययेन। अत्र हेरङित्त्वेन पित्त्वात्'अनुदात्तोपदेश—' इत्यस्याप्रवृत्तेरनुनासिकलोपाभावाद-नुस्वारपरसवर्णौ। रमस्व इति लोके। प्रयन्धि इति। प्र+यम—हि इति। 'बहुलं छन्दसि' इति शब्विकरणस्य लुक्। 'अनुदात्तोपदेश—' इत्यस्याप्रवृत्तौ प्राग्वदनुस्वारपरसवर्णौ। प्रयच्छ इति भाषायाम्। अस्मे इत्यत्र सम्प्रदानाच्चतुर्थी। युयोधि इति। पृथक् कुर्वित्यर्थः। अत्र धातोर्विपरीतार्थे वृत्तिः ( युमिश्रणे इत्यादा-दिकोऽयम्। यु+हि इति स्थिते 'बहुलं छन्दसि' इति शपः श्लु। 'श्लौ' इति द्वित्वम्। 'पित्सुगुणः' इत्युक्तेः हेर्विकल्पेन पित्वादङ्गस्य गुणः। धिरादेशः। लोके तु 'युङ्ग्धि' इत्येव।

## २५५४। मन्त्रेष्वाङ्यादेरात्मनः॥ ६।४।१४१॥

## टी—। आत्मन्शब्दस्यादेर्लोपः स्यादाङि। त्मना देवेषु।

In the matter of मन्त्रs or vedic hymns the beginning letter of the word आत्मन् disappears when आङ् (or the सुबन्त affix टा) follows. Thus त्मना in place of आत्मना = by himself.

मित—। मन्त्रेष्विति। आत्मन्शब्दस्येति। मन्त्रेषु-विषये इति शेषः। मन्त्रेषु+आङि +आदेः+आत्मन इत्यन्वयः (छेदः)। आङ् इति 'टा' इति सुबिभक्तेः प्राचां संज्ञा। त्मना इति। आत्मना इति प्राप्ते आलोपः। आङोऽन्यत्रापि ( विभक्तौ ) लोपदर्शनादिह

ऋतिङि इति वचनं व्यर्थम्। तथा 'आतो धातोः' (६।४।१४०) इत्यत आत इत्यस्यानुवृत्त्या एवेष्टसिद्धौ पुन'रातेः'रिति वचनमपि व्यर्थम् इति शब्देन्दुशेखरे स्थितम्।

२५५५। विभाषर्जोश्छन्दसि ॥ ६।४।१६२ ॥

दी—। ऋजुशब्दस्य ऋतः स्थाने रः स्याद्वा इष्टेमेयस्सु। त्वं रजिष्ठमनुनेषि। ऋजिष्ठं वा।

The letter 'र्' in place of ऋ of the word ऋजु is optionally substituted when इष्ठ (इष्ठन्), इम i.e इमनिच् and ईयसुन् follow in the Vedas. Thus ऋजु+इष्ठ=रजिष्ठ or ऋजिष्ठ (plainest or straightly, उ of ऋजु being dropped by 'टेः' (1786). Similarly रजिमा—ऋजिमा and रजीयान्—ऋजीयान् when इमनिच् and ईयसुन् in order follow.

मित—। विभाषर्जोरिति। विभाषा+ऋजोः+छन्दसि इति छेदः। 'र ऋतो हलादेर्लघोः' (६।४।१६१) इत्यतो 'र ऋतः' इत्यनुवर्तते। 'तुरिष्ठेमेयस्सु (६।४।१५४) इत्यत 'इष्टेमेयस्सु' इति च। ततो व्याचष्टे—ऋजुशब्दस्य ऋतः स्थाने र इत्यादि इष्टेमेयस्सु इति। इष्टनि, इमनिचि, ईयसुनि च प्रत्यये परत इत्यर्थः। रजिष्ठम् ऋजिष्ठम् इति। ऋजु इष्ठ इति स्थिते 'टेः'-(१७८६) इत्युकारलोपे रादेशविकल्पः। एवम् इमनिजीयसुनोः क्रमेण=रजिमा—ऋजिमा, रजीयान्—ऋजीयान् इति बोध्यम्।

२५५६। ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि ॥ ६।४।१७५ ॥

दी—। ऋतौ भवमृत्व्यम्। वास्तुनि भवं वास्त्व्यम्। वास्त्वं च। मधुशब्दस्याणि स्त्रियां यणादेशो निपात्यते। माध्वीर्नः सन्त्वोषधीः। हिरण्यशब्दाद् विहितस्य मयटो मशब्दस्य

लोपो निपात्यते । हिरण्ययेन सविता रथेन ॥ इति षष्ठोऽध्यायः ।

These five words viz ऋत्व्य, वास्त्व्य, वास्त्व, माध्वी and हिरण्यय are irregularly formed ( as shown below ), in vedic literature. Thus ऋतु + यत् ( भवार्थे ) = ऋत्व्यम् here no guna takes place due to निपातन। The combination ( सन्धि ) also is by निपातन. The classical form is ऋतव्य. Similarly वास्तु + यत् = वास्त्व्य pertaining to to 'the site of a paternal dwelling'. But वास्त्व = वास्तु + अण्. माध्वी—मधु + अण् = माध्व by यण् (in connection with सन्धि) by निपातन । Then ङीप् by 'टिड्ढाणञ्—' (470). The classical form against it being माधवी । 'माध्वीर्नः—'Let the liquor made of honey be our medicine. हिरण्यय—हिरण्य + मयट्—Here elision of 'म' of मयट् is by निपातन effected. The classical form is हिरण्मयः । हिरण्ययेन etc—The Rik in full is—

"आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् ॥"

ऋत्व्यवास्त्व्येति । एते पञ्चशब्दाश्छन्दसि निपात्यन्ते । निपातनप्रकारं दर्शयति । ऋतौ भवमित्यादिना । ऋत्व्यमिति । अत्र यणादेशो निपात्यते । ऋतव्यमिति भाषायाम् । वास्त्व्यमिति । यति यणादेशः प्रागवन्निपात्यते । वास्तव्यमिति प्राप्ते वास्त्वमिति च । अत्रभाषायामण् वास्तवमिति प्राप्ते निपातनाद् यण् । मधुशब्दादिति । अणि निपातनाद् यण् । ततो 'टिड्ढाणञ्—' इति ङीप् । माधवीति भाषायाम् । हिरण्यशब्दादिति । हिरण्यं सुवर्णम् । मशब्दस्य लोपो निपात्यत इति । ततो हिरण्यय इति ।

# अथ सप्तमोऽध्यायः

दौ—। 'शीङो रुट्' (२४४२)

३५५७ ॥ बहुलं छन्दसि ॥ ७।१।८ ॥

दौ—। रुडागमः स्यात्। 'लोपस्त आत्मनेपदेषु' (३५६३) इति पक्षे तलोपः। धेनवो दुह्रे। लोपाभावे—घृतं दुह्रते। अदृश्रमस्य ॥ 'अतो भिस ऐस्' (२०३)—

In vedic literature, the augment रुट् ( which is prefixed to अत् the substitute of झि of शी only ) takes place variously i.e the substitute अत् is prefixed with this augment also when it follows other roots. Thus दुह्रे—दुह+झि ( अते )=दुह्+रुट् अते=दुह र् अते=दुह् र ए, त here being dropped by 'लोपस्त—' ( 3563 )=दुह्रे by 'अतो गुणे' ( 211 ). But 'लोपस्त—' being optional we get दुह्रते as the alt. form. अदृश्रम्—दृश्+लुङ् अम ( irregularly in place of झि or अन् )=अदृश अङ् रम्—अङ् replaces लुङ् as दृश् is इरित् (and the rule runs 'इरितो वा'), then रुट्=अदृश्रम् by निपातन। Here 'ऋदृशोऽङि गुणः' which gives the form अदर्शम् in classical language, does not take place बाहुलकात्. 'अतो भिसः—' This is of service in the next rule.

मित—। बहुलमिति। 'शीङः—' ( ७।१।६ ) इत्यतो रुडित्यनुवर्तते। तेन शेषमात्मनाह—रुडागमः इति। छन्दसि विषये न केवलं शीङः अपि त्वन्येभ्योऽपि धातुभ्यो झादेशस्यातो अन्यस्य च प्रत्ययस्यातो बहुलं रुडागम इत्यर्थः। यथा दुहेर्झा-देशस्यातो रुडागमे दुह्रे दुह्रते इति। दुह्+रुट् अते इति स्थिते 'लोपस्त—'

( ३५६२ ) इति तलोपविकल्पात् तलोपपक्षे 'अतोगुणे' ( ५२१ ) इति दुह्रे। तलोपाभावे तु दुह्रते इति। अथ इशःकृटि उदाहरति श्रहश्रमिति 'दृशिर प्रेक्षणे' तस्मात्लुङ्। व्यत्ययेन भोरम्। 'इरितो वा' इति लुङोऽङ्। बाहुलकात् 'ऋदृशोऽङि गुणः' इत्यस्याप्रवृत्तेर्गुणाभावे निपातनात् संहितायाम्—श्रहश्रमिति। श्रदर्शमिति भाषायाम्। 'अतो भिस:—' इति उत्तरार्थमिदम्—:

## २५५८। बहुलं छन्दसि ॥ ७।१।१० ॥

## दी—। अग्निर्देवेभिः।

The substitute ऐस् in place of भिस् after an अकारान्त base is variously effected in vedic literature i.e somewhere it is substituted for भिस् and, somewhere not etc ; thus देवेभिः ( for the classical देवैः ) देव + भिस् = देवैभिः by 'बहुवचने झल्येत्' (205).

मित—। बहुलमिति। छन्दसि विषये अतो भिसो बहुलम् ऐस् भाव इत्यर्थः। देवभिरिति। देवैरिति प्राप्ते। बहुलग्रहणात् क्वचिदन्यत्रोऽपि भवति। नद्यैः। नदीभिरिति प्राप्ते।

## २५५९। नेतराच्छन्दसि ॥ ७।१।२६ ॥

## दी—। वार्त्रघ्नमितरम्। छन्दसि किम्? इतरत् काष्ठम्। 'समासेऽनञ्पूर्वे क्त्वो ल्यप् (३३३२)—

In vedic literature, the substitute अद्ड् is not enjoined for सु and अम् ( सुप् affixes ) being after the base इतर when it is neuter. Thus इतर + अम् = इतरम् and not इतरत्, as we have in classical language. 'समासेऽनञ्पूर्वे—' is for the next rule—

मित—। नेतरादिति। 'स्वमोर्नपुंसकात्' ( ७।१।२३ ) इत्यतः स्वमग्रनुवर्तते। 'अद्ड्डतरादिभ्यः पञ्चभ्यः' ( ७।१।२५ ) इत्यतोऽद्ड इति च। उदाह—स्वमोः

तिव्यादि। नपुंसकादितरशब्दात् परयोश्छन्दसि इति शेषः। अमि उदाहरति—इतरमिति। इतरदिति तु लोके। 'समासेऽनञ्—' इति उत्तरार्थमिदम्।

२५६० । क्त्वापि छन्दसि ॥ ७।१।३८ ॥

टी—। यजमानं परिधापयित्वा।

When an other than नञ् समास is effected with a root and ल्यप् for क्त्वा is substituted in classical language then both क्त्वा and ल्यप् may replace क्त्वा in vedic language. Thus परिधापयित्वा—परि + धा + णिच् + क्त्वा for परिधाप्य. Also उद्धृत्य where ल्यप् replaces क्त्वा (Nagesha).

मित—। क्त्वापीति। अनञ्पूर्वे समासे क्त्वो ल्यप् क्त्वा च स्याच्छन्दसि विषये। परिधापयित्वेति। परिपूर्वाद्धातेर्ण्यन्तात्क्त्वापि प्राप्ते क्त्वा। अपिना ल्यबपि। 'उद्धृत्य तान् जुहोतीति' नागेशः।

२५६१ । सुपां सुलुक् पूर्वसवर्णाच्छेयाडाड्यायाजालः ॥ ७।१।३९ ॥

टी—। ऋजवः सन्तु पन्थाः। पन्थान इति प्राप्ते सुः। परमे व्योमन्। व्योमनि इति प्राप्ते ङेर्लुक्। धीती। मती। सुष्टुती। धीत्या मत्या सुष्टुत्येति प्राप्ते पूर्वसवर्णदीर्घः। या सुरथा रथीतमोभा देवा दिविस्पृशा अश्विना। यौ सुरथौ रथीतमौ दिविस्पृशावित्यादौ प्राप्ते आ। नताद्ब्राह्मणम्। न तमिति प्राप्ते आत्। या देव विद्म ता त्वा। यमिति प्राप्ते। न युष्मे वाजबन्धवः। अस्मे इन्द्राबृहस्पती। युष्मासु अस्मभ्यमिति प्राप्ते शे। उरुया धृष्णुया। उरुणा धृष्णुनेति प्राप्ते या। नाभा पृथिव्याः। नाभाविति प्राप्ते डा। ता

अनुष्ठ्योच्यावयतात्। अनुष्ठानमनुष्ठा। व्यवस्थावदङ्। आङो ऽ्या। साधुया। साध्विति प्राप्ते याच्। वसन्ता यजेत। वसन्ते इति प्राप्ते आल्॥ 'इयाडियाजीकाराणामुपसंख्यानम्' (वार्तिक)। उर्विया। दार्विया। उरुणा दारुणेति प्राप्ते इया। सुक्षेत्रिया। सुक्षेत्रिणेति प्राप्ते डियाच्। दृतिं न शुष्कं सरसी शयानम्। ङेरीकार इत्याहुः। तत्रादुदात्ते पदे प्राप्ते व्यत्ययेनान्तोदात्तता। वस्तुतस्तु ङीषन्ताद् ङेर्लुक्। ईकारादेशस्य तूदाहरणान्तरं मृग्यम्। 'आङ्याजयारामुपसंख्यानम् (वार्तिक)। प्र बाहवा सिसृतेति बाहुनेति प्राप्ते आङादेशः। 'घेर्ङिति' (२४५) इति गुणः। स्वप्नया। स्वप्नेनेति प्राप्ते अयाच्। स: न: सिन्धुमिव नावया। नावेति प्राप्ते अयार्। रित् स्वर:।

In the vedic literature, in place of सुप् affixes the substitutes viz सु, लुक् (elision of सुप् affixes), पूर्वसवर्ण (or पूर्वसवर्णदीर्घ lengthenation of the preceding vowel) आ, आत्, शे (आ + आत् + शे = आच्छे), या, डा, ड्या, याच् and आल् are employed. Thus ऋजवः सन्तु पन्थाः—Let the routes be straight—Here पन्थानः for पन्थाः was due, the process being पथिन् + जस्. Thus the सुप् affix जस् here is replaced by the सुप् affix सु. परमे व्योमन्—In the great aerial region—Here व्योम्नि व्योमनि from व्योमन् + ङि was due but ङि eliding by this, व्योमन् only is retained. धीती, मती and सुष्टुती—the procedere being धीति + टा, मति + टा and सुष्टुति + टा (instrumental sing) they are effected by पूर्वसवर्णदीर्घ (lengthenation of the preceding vowel) against the classical forms

धीत्या, मत्या and सुष्टुत्या ( =by a fine prayer ). या सुरथा etc the process being यद्+औ ( first or second case-ending dual ) here औ has been replaced by आ and the classical form against these are यौ सुरथौ देवौ दिविस्पृशौ अश्विनौ। Note that this change of आ for औ is very frequent in vedic language. नतात्—नत+अम् (Second case ending sing.)=नतात् in place of नतान् (the classical form), अम् being replaced by आत्. या—ता the cases being यद्+अम् and तद्+अम्, यम् and तम् were due but अम् in each case has been replaced by आत्. युष्मे and अस्मे here in the first instance the dissolution being युष्मद्+सुप् (the locative plural), सुप् has been replaced by शे or ए and in the second instance the breaking up being अस्मद्+भ्यस्, भ्यस् has been replaced by शे. The classical forms againsts these are युष्मासु and अस्मभ्यम् ( by 'भ्यसो भ्यम्' 395 ). उरुया and धृष्णुया from उरु+टा and धृष्णु+टा, उरुणा and धृष्णुना were due by 'आङोनाऽस्त्रियाम्' (244) ; but टा in each case has been replaced by या. नाभा—from नाभि+ङि, नाभौ was legitimate by the rule 'औत्' (256) ; but ङि has been replaced by the substitute डा which taking place, the टि portion or इकार of नाभि disappears due to डित्त्व of the substitute. ता अनुष्ठ्योच्यावयतात्—Break up as ताः+अनुष्ठ्या+उच्यावयतात्. Let yourself make them (ताः) separate ( उच्यावयतात् ) by counting inproper order ( अनुष्ठ्या ) which is equivalent to अनुष्ठानेन meaning अनुष्ठानपूर्वकगणनेन। Thus अनुष्ठ्या is equivalent to अनुष्ठा+टा ( which is the procedure here) अनुष्ठया was due by 'आङि चापः' (289), but टा or आङ् (as it is so designated ) has made room for the substitute ड्या. Derive अनुष्ठा as अनु+स्था+

अङ् like the term 'व्यवस्था' which Panini himself has used in the rule 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् असंज्ञायाम्' (218—1.1.34) on the testimony of which अङ् by 'आतश्चोपसर्गे—' will bar even the particular injunction 'स्थागापापचोभावे' (which directs क्ति in place of अङ्) and not itself be barred or superseded by the same although this indeed is the legitimate process in the cases of others roots as in the rule viz पा, गा and पच्. साधुया—साधु+सु vocative singular, here by 'एङ्ह्रस्वात् सम्बुद्धेः' (193) which directs the elision of affix सु, the form साधु was due, but सु has to make room for the substitute याच्. वसन्ता—वसन्त+ङि locative singular, by 'आद्गुणः' वसन्ते was due, but ङि has been substituted by आल्.

N. B.—Note that the injunction 'सुपां सुलुक' is but an elaboration of the general rule 'व्यत्ययो बहुलम्'; for each and every division that has been or may be effected by it could have been accounted for by 'व्यत्ययो बहुलम्', but प्रपञ्चार्थं पृथगुक्तिः।

'इयाडियाजीकाराणाम्—'This is a Varttika. It must the noted down that the elision or replacement of सुप् affixes is effected in connection with the substitutes इया, डियाच् ईकार. Thus उर्विया and दार्विया; the mode of action being उरु+टा and दारु+टा, उरुणा and दारुणा by 'आङो नाऽस्त्रियाम्' were due; but टा being replaced by इया by यथादेश we have उर्विया and दार्विया। सुचेतिया—The mode of treatment here being सुचेतिस्+टा, सुचेतिसा was expected but टा being set aside by the substitute डियाच् (इया) we have the form सुचेतिया with the elision of टि (i.e, इस् of सुचेतिस्) due to ङित्त्व of the substitute.

ङियाच्। 'हृतिं न शुष्कम्—'lying in the lake like a dry piece of wood ( हृतिं न शुष्कम्, न is equivalent to इव in the Vedas ). Here सरसि from सरस्+ङि ( locative Singular ) was expected but the commentators of vedic literature hold, then ङि has, by this Varttika, been replaced by the sustitute ईकार. In that case the beginning letter of सरसी was expected to be उदात्त or of high pitch but the final claims the same sound by 'व्यत्ययो बहुलम्'. Strictly speaking, however, this is not the instance of the substitute of ईकार ( of the Varttika ). On the other hand the mode here is सरसी+ङि for सरसी is asynonym of सरस् as Amara has 'कासार: सरसी सर:' whence by the rule 'सुपां सुलुक्—'the elision of ङि is carried out and we have सरसी in the sense of सरसि; we therefore, are hereby advised to search out a different word illustrating the use of the substitute ईकार of this Varttika (from the Vedas). 'आङ्याजयारास—'This is a second varttika here. The substitute आङ्, अयाच् and अयार् have to be included in the list of affixes causing disappearance or replacement of the सुप् affixes. Thus प्र बाहवा—Here (in बाहु+टा) the substitute ना in place of टा is to effect बाहुना ( the classical form ) as was expected by the rule 'आङो नाऽस्त्रियाम्'. But आङ् instead replacing टा we have बाहु+आङ्=बाहो आ गुण by 'घेर्ङिति' (245)=बाहवा by अवादेश by 'एचोऽयवायाव:' (61). बाहुनेति प्राप्ते etc—But Kashika explains as 'प्रबाहुनेति प्राप्ते'—But this is evidently objectionable for प्र being an उपसर्ग must needs be connected with verb and not with a noun, although the intervention of a noun is by

'छन्दसि व्यवहिताश्च'. स्वप्नया—Here ( स्वप्न+टा ) टा has been replaced by अयाच्. Thus स्वप्न+अयाच्=स्वप्नया by 'अतो गुणे' (191). But with टा the form ( as in classical language ) would have been स्वप्नेन by 'टाङसिङसाम् इनात्स्याः' (201). Here it is important to take notice of the fact that the substitute याच् ( included in the rule 'सुपां सुलुक्—') could not carry out the purpose served by अयाच्. For स्वप्न+याच् would give स्वप्नाया ( and not स्वप्नया ) by the rule 'सुपि च'. Hence it is that अकार had been added to याच् ( to make it अयाच् ). नावया—Here ( in नौ+टा ) टा has been replaced by अयार् and by 'एचोऽयवायावः' we have नावया, with टा retained however the form is नावा ( the classical form). Note that अयार् could not serve the purpose of अयाच् which being चित् woud make the term अन्तोदात्त ( high-sounding at the end ) whereas अयार् being रित् makes it उदात्त in last but one letter ( मध्योदात्त ).

मित—। सुपां सुलुगिति। 'क्वापि छन्दसि' (७।१।३८) इत्यतश्छन्दसीत्यनुवर्तते। तेन 'छन्दसि विषये सुपां स्थाने सु, लुक्, पूर्वसवर्णः ( पूर्वसवर्णदीर्घः ), आ, आत्, शे ( आच्छे =आ+आत्+शे इतिच्छेदः ) या, डा, ड्या, याच्, आल् इत्येते आदेशाः स्युरित्यर्थः। सुपां स्थाने सु लुगादय आदेशाः क्रमेण प्रदर्शयितुमाह= ऋजवः सन्तु पन्था इत्यादि। पन्थान इति प्राप्ते इति। जसः स्थाने सुरादेश इत्यर्थः। यद्यपि सुरित्यत्र उकारस्य उच्चारणार्थत्वेन आदेशस्य एकाल्मात्रत्वेन 'अलोऽन्त्यस्य' इति अन्त्यस्यैव सकारादेशः प्राप्नोति तथापि छान्दसत्वात् सोरनेकाल्त्वमाश्रित्य सर्वादेश इत्याहुः। व्योमन्निति। व्योमन् ङि इति लुगिति ङेर्लोपः। तदाह—व्योमनि इति प्राप्ते इति। यद्यपि 'व्यत्ययो बहुलम्' इत्यनेनैव सुपां सुलुक् सिध्यति तथापि सुपां सुलुगिति वचनं प्रपञ्चार्थमिति शब्देन्दुशेखरादौ स्पष्टम्। धीती, मती, सुष्टुतीति। अत्र क्रमेण धीति टा, मति टा, सुष्टुति टा इति स्थिते टकारापगमात्

धीति, आ, मति आ, सुष्टुति आ इति जाते सर्वत्र पूर्वसवर्णदीर्घः। लोके तु धीत्या मत्या सुष्टुत्या। या सुरथेति। यद् औ, सुरथ औ इत्येवं स्थिते सर्वत्र औकारस्थाने आकारादेशः। तदाह—यौ सुरथौ दिविस्पृशौ इत्यादौ प्राप्ते इति। आदिपदात् रथीतमौ उभौ देवौ अश्विनौ इत्येषां संग्रहः। पक्षे यथाप्राप्तमपि। तथाच मन्त्रः—'ऋतेन मित्रावरुणावृतावृधावृतस्पृशा—' इति ( ऋग्वेदः—१।४।२ )। नताद्इति। नत + अम् इति स्थिते अमः स्थाने आदादेशः। तदाह—नतमिति प्राप्ते इति। याद्वेति। अत्र क्रमेण यद् + अम्, तद् + अम् इति स्थिते अम आकारादेशः। तदाह—यमिति प्राप्ते इति। युष्मे इति अस्मे इति च—युष्मद् + सुप् ( सप्तमी बहुवचनम् ) इति अस्मद् + भ्यस् इति च स्थिते यथाक्रमं सुपो भ्यसश्च स्थाने शे आदेशः। तदेवं युष्मद् + शे, अस्मद् + शे इति स्थिते 'शेषे लोपः' ( ३८५ ) इत्यनेन उभयत्र दकारलोपे 'अतो गुणे' ( १९१ ) इति पररूपे च यथोक्ते रूपे। सुपि तु परे 'शेषे लोप' इति लोपे 'सुपि च' इति दीर्घे च युष्मासु इति स्यात्। तथा भ्यसि 'भ्यसो भ्यम्' ( ३९५ ) इति अस्मभ्यमिति स्यात्। उरुया धृष्णुया इति। उरुटा इति धृष्णु टा इति च स्थिते। 'आङो नाऽस्त्रियाम्' इत्याकारस्य नादेशे प्राप्तेऽनेन या। तदाह—उरुणा धृष्णुनेति प्राप्ते इति। नाभा इति—नाभि + ङि इति स्थितम्। तत्र 'औत्' इति ङेरौदादेशे प्राप्ते 'यस्येति च' इति इकारलोपे च नाभौ इति स्यात्। अनेन तु ङेर्डादेशः। तस्य च डित्त्वान्नाभि शब्दस्य टेर्लोपात् नाभा इति। ता अनुष्ठ्येति। 'षड्विंशतिरस्य वङ्क्रय' इति प्रक्रम्य इदमध्वर्युः प्रैषे इति पठितम्—ताः ( वङ्क्रीरित्यनेन सम्बन्धः ) अनुष्ठ्या अनुक्रमेण गणनया अच्यावयतात् विशसनं करोतु भवानिति शेषः। विशसनं नाम पृथक्करणमिति मन्त्रार्थं इत्याहुः। अत्र अनुष्ठा इति स्थिते 'आङि चापः' ( ३८८ ) इत्यनुष्ठाशब्दस्याकारस्य एकारादेशे गुणेन अनुष्ठया इति प्राप्ते आह—आङो ड्या इति। ततश्च अनुष्ठ्या इति सिद्धम्। आङिति टासंज्ञा प्राचाम्। ननु अनुष्ठेति कथं निष्पन्नम्। अनुपूर्वात् तिष्ठतेः 'स्थागापापचोभावे' इति क्तिन् प्रत्यये अनुष्ठितिरित्येव स्यात्। न च 'आतश्चोपसर्गे—' इत्यङ् प्रत्ययोऽवशङ्क्यः। तस्य विशेषविहितेन क्तिना बाधितत्वादप्राप्तेः। वासरूपन्यायात् अस्त्रियामिति निषेधान्नात्र प्रवर्तिष्यते

इति मत्वा व्याचष्टे—व्यवस्थावदङ् इति। यथा, व्यवस्थाशब्दोऽङि निष्पन्नस्तथा अत्रापि अङ् बोध्य इति भावः। व्यवस्थाशब्दश्च आचार्येण स्वयमेव 'पूर्वपरावर दक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्' (२१८—१।१।१४) इत्यत्र व्यवहृतः। तस्मादाचार्यव्यवहारात् ज्ञापकादत्र अङ् इति तात्पर्यम्। साधुया इति। साधु+सु (सम्बुद्धिः) इति स्थिते 'एङ्ह्रस्वात् सम्बुद्धेः' इति सुलोपे साधु इति स्यात्। अत्र सुपामिति लोपाभावात्तु तस्य याच् इत्यादेशः। चित्त्वं स्वरार्थम्। वसन्ता इति—वसन्त+ङि इति स्थिते अलादेशः। लित्त्वं स्वरार्थम्। यथाप्राप्तं तु आद्गुणेन वसन्ते इत्येव स्यात्। 'इयाडियाजीकाराणाम्—' इति वार्तिकमिदम्। 'सुपां सुलुक्—' इति सूत्रे इया, डियाच्, ईकार इत्येषाम् आदेशानामपि परिगणनं कर्तव्यमित्यर्थः। उर्विया दार्विया इति। अनेन इयादेशः। सुक्षेत्रिया इति—शोभनः क्षेत्री इति विग्रहे सुक्षेत्रिन् इति प्रातिपदिकम्। तस्मात् प्राग्वत् टाप्रत्यये परतः 'डियाच्' इत्यादेशः। प्रत्ययस्य डित्त्वाट्टिलोपे सुक्षेत्रिया इति। याच्प्रत्यये तु कृतेऽस्य डित्त्वाभावादिदं न स्यादिति डियाच उपसंख्यानम्। दृतिं शुष्कमिति। देवेभ्यो निलीय अप्सु निमग्नमग्निं प्रतीदं वचनम्। शुष्कं दृतिं काष्ठखण्डम् न (इव) सरसी ह्रदे शयानम् निलीनमित्यर्थः इति मन्त्रार्थः। तत्र सरसीति ईकारादेशस्योदाहरणमिति वेदभाष्यकाराः। तदाह—ङेरीकार इत्याहुरिति। सरस्+ङि इति स्थिते इति शेषः। अद्युदात्ते पदे प्राप्ते इति। ङिप्रत्ययादेशत्वेनेति शेषः। व्यत्ययेनेति। 'व्यत्ययो बहुलम्' इत्यनेन। स्वमतमाह—वस्तुतस्त्विति। सरसी इति ङीषन्तं प्रातिपदिकम्। तथाचामरः— 'कासारः सरसीसरः' इति 'तामनुसर सरसीरुहलोचन या तव हरति विषादम्' इति जयदेवश्च। नन्वेवमीकारादेशस्योदाहरणं कीदृशम्। तत्राह—ईकारादेशस्येति। मृग्यमिति। वेदेषु अन्वेषणीयमित्यर्थः। शाखान्तरे आद्युदात्त पदमिदमेवेति भाष्यस्वरस इति शब्देन्दुशेखरः। 'आङ्याजयारम्—' इति वार्तिकमिदम्। 'सुपां सुलुक्—' इति सूत्रे आङ्, अयाच्, अयार् इत्येषामपि सुबादेशानां परिगणनं कर्तव्यमित्यर्थः। प्रबाहवा इति। बाहुना इति प्राप्ते प्रत्ययस्य आङादेशः। ततो 'घेर्ङिति' (२४५) इति गुणे अवादेशे च बाहवा इति। तदाह—बाहुनेति।

काशिकाकृतो तु 'प्रबाहुना' इति प्राप्तं दत्तृजाम। तदभसात्। पदपाठे 'प्र' इत्यस्य विच्छिद्य पाठात्। समस्तत्वेन पाठाभावाच्च। तदयाच 'छन्दसि व्यवहिताः' इति धातुनैव योग इति भावः। स्वप्नया इति—अयाजादेशः। ततः स्वप्न+अया इति जाते 'अतो गुणे' (१९१) इति पररूपेण सिद्धम् स्वप्नया इति। न च याच् प्रत्ययेनैवैतद् भवति इति वार्तिकेऽयाजादेशग्रहणं व्यर्थमिति वाच्यम्। स्वप्न+याच इति स्थिते हि 'सुपि च' इति प्राप्नोति। ततश्च दीर्घप्रवृत्त्या स्वप्नाया इत्येव स्यान्न तु स्वप्नया इति। तदेवं 'सुपि च' इति दीर्घप्रसक्तिं वारयितुम् एव 'अयाच्' इत्यकारपूर्वो 'याच्' इत्यादेशः स्वीकृतः। नावया इति—नो+टा इति स्थिते आवादेशे आवा इति प्राप्ते आयार आदेशः। आयार् इति रित्करणं स्वरार्थम्। तदाह—रित्स्वरः। 'उपोत्तमं रिति' (३७३२) इत्यनेन रित्प्रत्ययान्तस्य उपान्त्यमुदात्तमित्यर्थः।

२५६२। अमो मश् ॥ ७।१।४० ॥

टी—। मिबादेशस्यामो मश् स्यात्। अकार उच्चारणार्थः। शित्त्वात् सर्वादेशः। 'अस्तिसिचः—' (२२२५) ईट्। वधीं वृत्रम्। अवधिषम् इति प्राप्ते।

In vedic literature ( the final substitute ) मश् ( म ) replaces अम् the substitute for मिप्. The अकार in मश् is for the sake of facility in pronunciation. And it ( मश् ) being शित् or श्-dropping, by 'अनेकाल्शित्सर्वस्य' it replaces अम् entirely (and not the final portion of it only which would have been the case had it been mentioned as 'म' only, by 'अलोऽन्त्यस्य' ). Thus वधीम्—हन्+लुङ् अम्=वध सिच् by 'हनो वध लिङि, लुङि च'=वध इस् ईम्—सिच् takes इट् by 'आर्धधातुकस्येट्—' (2184) म् ( the substitute of अम् ) being अपृक्त or a single consonant as also having सिच् ( अस्तिसिच् ) the augment ईट् is prefixed to it by 'अस्तिसिचोऽपृक्ते' (2225)=वधीम

for सिच् or स् elides by 'इट ईटि' (2266). Here the augment अट् by 'लुङ्लङ्—' does not apply due to 'बहुलं छन्दसि' after it. वधीम् वृत्रम्—I killed वृत्र or he killed—by interchange of person (पुरुषव्यत्यय). The classical form against वधीम् is अवधिषम्.

मित—। अम इति। 'क्त्वापि—' (७।१।३८) इत्यतश्छन्दसीत्यनुवर्तते। यद्यपि 'सुपां सुलुक्—' इति सुब्विभक्तिविषयकं पूर्वसूत्रं वर्तते तथापि अम् इति द्वितीयैकवचनस्य सुब्विभक्तेर्न ग्रहणम्। छन्दसि दृष्टानुविधानात्तदाह—मिबादेशस्याम इति। लुङि लङि वा उत्तमपुरुषैकवचनस्येत्यर्थः। अकार उच्चारणार्थ इति। मशो मकारादकार उच्चारणार्थ इत्यर्थः। शित्त्वात् सर्वादेश इति। 'अनेकाल्शित्सर्वस्य' इत्यनेनेत्यर्थः। इह शित्करणाभावे तु 'अलोऽन्त्यस्य' इति अमो मस्यैव मकारादेशः स्यादिति शित्त्वं प्रयोजनम्। न च मकारस्य मकारवचने प्रयोजनाभावात् तात्पर्य्य-पर्यालोचनया सर्वादेशो भविष्यतीति वाच्यम्। 'मो राजि समः क्वौ' इत्यत्रेव अत्रापि अनुस्वारनिवृत्त्यर्थमेव मकारस्य मकारवचनं स्यादित्यपि ध्येयम्। वधीमिति। हन्तेर्लुङि अमि प्रत्यये 'हनो वध लिङि' 'लुङि च' इति हन्तेर्वधादेशे, च्लेः सिचि, अमो मशि चादेशे वध् सिच् मश् इति स्थिते 'आर्धधातुकस्येट्—' (२२८४) इति इट्। मशः अकारशकारनिवृत्त्या 'म्' इत्येकाल्त्वेन अपृक्तत्वात् धातोः 'अस्तिसिचः' इत्यस्य 'अस्तिसिचोऽपृक्ते' (२२२५) इति ईडागमः। तदेवं 'वध इस् ईम्' इति जाते 'इट ईटि' (२२६६) इति सलोपः। ततः सवर्णदीर्घे वधीम् इति रूपम्। 'बहुलं छन्दसि' इति 'लुङ् लङ्—' इत्यडागमो न। लौकिकरूपं स्मारयति अवधिषम् इति। हतम् अवधिषम् इति तु मन्त्रार्थः। 'व्यत्ययो बहुलम्' इति पुरुषव्यत्ययो वा।

३५६२। लोपस्त आत्मनेपदेषु ॥ ७।१।४१ ॥

दी—। छन्दसि। देवा अदुह्र। अदुहतेति प्राप्ते। दक्षिणतः शये। शेते इति प्राप्ते। 'आत्मने—' इति किम्? वत्सं दुहन्ति।

In vedic literature, the तकार that which is to be met with under आत्मनेपद affixes, disappears when following a root under operation. Thus 'देवा:—' The gods milked. This is the लङ् plural form of the root दुह् against अदुहत—अ दुह्+लङ् झ= अ+दुह्+लङ् अत by 'आत्मनेपदेष्वनत:' (2258) and then by 'बहुलं छन्दसि" and अतो गुणे = अदुह after the elision of तकार by this rule. Lastly रुडागम। शये—शी+लट् ते=शी+ते by 'शीङ: सार्वधातुकेगुण:' (2441)=शे+ए—तकार being dropped=शये by 'एचोऽयवायाव:' (63). This rule does not hold good when तकार existing in परस्मैपद affixes follows—Thus वत्सं दुहन्ति।

मित—। लोपस्त इति। 'ह्रापि छन्दसि' (७।१।३८) इत्यतश्छन्दसीत्यनुवर्तते। तेन शेषं पूरयन्नाह—छन्दसीति। अयमर्थ:—आत्मनेपदेषु प्रत्ययेषु मध्ये यस्तकारस्तस्य लोप: स्याच्छन्दसि विषये इति। अदुह्र इति। अदुह् लङ् झ इति स्थिते 'आत्मनेपदेष्वनत:' (२२५८) इति झस्य अदादेशे अदुह् अत इति स्थिते 'शीङो रुट्' बहुलं छन्दसि' (२५५७) इत्यकारस्य (प्रत्ययाकारस्य) रुडागमे अदुह् रत इति जाते अनेन तकारलोपे अदुह् र अ इति। ततश्च 'अतोगुणे' (११९१) इति पररूपे अदुह्र=अदुह्र इति। शये इति—शी+लट् ते इति स्थिते 'शीङ: सार्वधातुक—' (२४४१) इति गुणे शेते इति जाते अनेन तकारलोप:। शे ए इति च स्थितम्। तत 'एचोऽयवायाव:' (६३) इत्ययादेशे शये इति। दुहन्ति इति। अत्र तकारस्य परस्मैपदविषयकत्वाल्लोपाभाव:।

२५६४। ध्वमो ध्वात् ॥ ७।१।४२ ॥

**दी—। ध्वमो ध्वादित्यादेश: स्याच्छन्दसि *। अन्तरेवोषाणं वारयध्वात्। वारयध्वमिति प्राप्ते।**

[* एतत् सर्वत्रापि नास्ति।]

In vedic literature ध्वम् (the affix) in replaced by the substitute ध्वात्.

मित—। ध्वम इति। प्रागवच्छन्दसीत्यनुवर्तते।

२५६५। यजध्वैनमिति च ॥ ७।१।४३ ॥

दी—। एनमित्यस्मिन् परे ध्वमोऽन्त्यलोपो निपात्यते। यजध्वैनं प्रियमेधाः। 'वकारस्य यकारो निपात्यत' इति वृत्तिकारोक्तिः प्रामादिकी।

When the term 'एन' follows, the final (न्) of the affix 'ध्वम्' disappears irregularly in the vedas. Thus 'यजध्वैनम्—' Oh you the lovers of sacrifice, perform sacrifice for him i.e. to worship him by holding a sarifice). यजध्वम् + एनम् = यजध्व + एनम् यजध्वैनम्। The author of वृत्ति or Kahsika has wrongly said that यकार in place of वकार (of ध्वम्) also takes place irregularly, the reading here of वृत्तिकार being यजध्यैनम्.

मित—। यजध्वैनमिति। यजध्व + एनम् + इति इतिच्छेदः। तत्र यजध्व इति कृतान्त्यलोपो विधीयते। इतिशब्दः परवर्तित्वद्योतनार्थम्। तदाह—एनमित्यस्मिन् परे इति। अन्त्यलोपो मलोपः। प्रियमेधा इति—प्रियः मेधः यज्ञः येषामिति विग्रहः। वृत्तिकारोक्तिः प्रामादिकीति—यजध्यैनमिति वकारस्थाने यकार-पाठ प्रमादकारणमिति बोध्यम् (२८)—छन्दसि 'यजध्वैनम्' इति वकारयुक्तः एव पाठः। अनेन सूत्रेण मलोपमात्रं निपात्यते न तु यकारः।

२५६६। तस्य तात् ॥ ७।१।४४ ॥

दी—। लोटो मध्यमपुरुषबहुवचनस्य स्थाने तात् स्यात्। गात्रमस्यानूनं कृणुतात्। कृणुतेति प्राप्ते। सूर्यं चक्षुर्गमयतात्। गमयतेति प्राप्ते।

The substitute तात्, in vedic language, is allowed to take place in place of the second person plural affix (त) of लोट्. Thus कृवि+लोट् त (the root is भ्वादि which being इदित् takes नुम् by 'इदितो नुम्—' and figures as कृण्व्—=कृण+उ+त—व disappearing and making room for अ as well as the affix उ in place शप् taking place, by the rule 'धिन्विकृण्व्योरच' (2332)=कृन्+उ+त—अकार disappears by 'अतो लोपः' (2308) as it is an आर्द्धधातुक by 'आर्द्धधातुकं शेषः'. Now although कृन् is of short penultimate (लघूपध) yet will not have guna by 'पुगन्त' (2180) as the elision of अकार is be treated as not having taken place (अल्लोपस्य स्थानिवत्त्वात्) by 'स्थानिवदादेशः—' for the prohibition 'अनल्विधौ' does not apply here as the अकार was not originally added to the root. Thus we now have कृणु+त=कृणुतात्—त being replaced by तात्, उकार of कृणु cannot have गुण by 'सार्वधातुकार्द्ध—' (2168) as त being ङित् तात् also is so. The classical form is कृणुत. गमयतात्—गम्+णिच्+त (लोट्) —गम् being 'मित्' due to its ending in अम् and thus falling under 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' (गणसूत्र) the penultimate of the same cannot have वृद्धि in connection with णिच् by 'अत उपधायाः' (2282) as the rule runs 'मितां ह्रस्वः'. Now शप् coming in we have गमि+शप् त=गमय अत=गुण in connection with शप्=गमयतात् तात् for त being substituted. The sense of the मन्त्र is—'fix your eyes to the sun.'

मित—। तस्येति। सूत्रे 'तस्य' इत्यस्य स्थानेभाव—लोटो मध्यमपुरुषबहुवचनस्येति। अत्र तस्य इत्यनेन 'तुह्योस्तातङ्—' इत्यनेन प्रथम मध्यमपुरुषयोरेकवचनस्य तात् (तातङ्) इतिवत् प्रथमपुरुषैकवचनस्य मध्यमपुरुषैकवचनस्य वा

स्थाने 'तात्' इत्यादेशो न विधीयते। छन्दसि दृष्टानुविधानात्। पूर्वोत्तराभ्यां लोण्मध्यमबहुवचनाभ्यां साहचर्यादिति नागेशादौ स्पष्टम्। क्षणुतादिति। क्षणि हिंसाकरणयोरिति भौवादिको धातुः। तस्य इदित्वात् नुमिकृते क्षण् इत्याकारो भवति। ततश्च क्षण्+लोट् त इति स्थिते भौवादिकत्वाच्छपि प्राप्ते 'धिन्विकृण्व्योर च' (२३३२) इति क्षणोतेर्वकारस्य स्थाने अकारोऽन्त्यादेशः उप्रत्ययश्च शब्विषये। ततश्चैवं क्षण उत इति स्थिते 'आर्द्धधातुकं शेषः' इत्यकार इत्यस्य आर्द्धधातुकत्वात् 'अतो लोपः' (२३०८) इति लोपः। ततः क्षन् उत इति स्थिते उप्रत्ययस्य शबादेशत्वेन 'पुगन्त—' (२१८९) इति लघूपधगुणः प्राप्नोति। स तु न भवति 'स्थानिवदादेशः—' (५०) इत्यल्लोपस्य स्थानिवत्त्वादकारस्य उपधात्वापगमात्। न च 'अनल्विधौ' इति तत्र निषेधादल्लोपस्य स्थानिवद्भावाभावोऽत्र शङ्कनीयः। न ह्ययम् अकारान्तोपदेशो धातुर्येनोक्तनिषेधोऽत्र प्रवर्तेत तस्मादनल्विधाविति निषेधाप्रवृत्तेःअल्लोपस्य स्थानिवत्त्वेन लघूपधगुणाभावेन उकारप्रत्यययोगेन च क्षणु त इति जाते तस्य तात्। क्षणुतात् इति च प्राप्तम्। त प्रत्ययस्यापित्त्वेन 'सार्वधातुकमपित्' इति ङित्त्वात् 'तात्' इत्यादेशस्यापि तथात्वात् 'सार्वधातुकार्द्ध—' (२१६८) इत्युकारस्यापि न गुणः। लोके तु क्षणुतेति। गात्रमस्य अनूनम् अहीन पूर्णमित्यर्थः क्षणुतात् कुरुतेति मन्त्रार्थः। सूर्यं चर्चरिति। अर्थः स्पष्टः। अत्र लौकिकं रूपं स्मारयति —गमयतेति।

३५६७। तप्तनप्तनथनाश्च ॥ ७।१।४५ ॥

टी—। तस्येत्येव। शृणोत ग्रावाणः। शृणुतेति प्राप्ते तप्। सुनोतन पचत ब्रह्मवाहसे। दधातन द्रविणं चित्रमस्मे। तनप्। मरुतस्तज्जुजुष्टन। जुषध्वमिति प्राप्ते व्यत्ययेन परस्मैपदं शश्च। विश्वे देवासो मरुतो यतिष्ठन। यत्संख्याकाः स्थेत्यर्थः। यच्छब्दाच्छान्दसो डतिः। अस्तेस्तस्य थनादेशः।

The term तस्य follows from the preceding rule. The rule therefore means—The substitutes तप्, तनप्, तन and थन are

thereby introduced to take place in the room of second person plural affix ( त ) of लोट् after any root. Thus शृणोत—शु + लोट् त = शृणु तप् by 'श्रुवः शृच' and तप् for त by this rule = शृणोत by गुण of the उकार of शु by 'सार्वधातुकार्ध—' (2168) as तप् is पित् ( and not ङित् ). शृणुत is the classical form. The mantra means—Let the stones listen to (our speech). सुनोतन—सु + लोट् त = सु + नु + तनप् by 'स्वादिभ्यः श्नुः' and this rule = सुनोतन by 'सार्व—' (2168) due to पित्त्व of तनप—squeeze and cook (it) for the god so called. दधातन—धा + तन in place of लोट त = दधातन—the root धा being of जुहोत्यादि class, duplication and the operation there of अभ्यासकार्य take place; आकार of धा does not disappear as 'श्नाभ्यस्तयोरातः' (2483) ceases to operate here due to पित्त्व of तनप्. But the classical form againt it is धत्त। जुजुष्टन—जुष + लोट् त = जुजुष तन् = जुजुष्टन—by ष्टुनाष्टुः (113). The root जुष् being आत्मनेपदी जुषध्वम् was due and not जुषत. But it has been made into परस्मैपद by 'व्यत्ययो बहुलम्' । यतिष्ठन—यति + स्थन. Derive यति as यद् + डति = य् + अति by elision of टि (अद्) due to ङित्त्व of डति which takes place after यद् in vedic language and hence irregularly derive स्थन as अस + त लोट = अस् + थन = स् + थ—न—disappearnce of अ of अस् by 'श्नसोरल्लोपः' (2469) as थन is ङित् (for it is अपित्) = स्थन. Then यति + स्थन = यतिष्ठन due to षत्व by 'सुषामादिषु च' (1022). यतिष्ठन means 'as many as you are in number'—यति implies the number and स्थन the verb to be. The classical form against स्थन is स्त ।

मित—। तप्तनविति। तप् + तनप् + तनथनाः + थ इतिच्छेदः। एते चत्वार आदेशाः लोटो मध्यमपुरुषबहुवचनस्य स्थाने स्युरित्यर्थः। पूर्वसूत्रात्सेत्यस्यानु-

इचित्सदाह—तस्येत्येवेति। प्रणोति इति। हे प्रस्तरा: ग्रणुतेति मन्त्रार्थ: (अस्माकं वच इति शेष:)। सुनोतन इति। षुञ् अभिषवे इति स्वादिको धातु:। तत: पूर्ववद् लोटस्तप्रत्यये स्थिते तस्य तनबादेशो. प्रागवद् गुणेन रूपसिद्धि:। सुनुतेति लोके। अस्मभ्यमिति इति तादर्थ्ये चतुर्थी। तदाख्याय देवाय इत्यर्थ:। दधातन इति—दधाति जौहोत्यादिक:। धा+त इति स्थिते तस्य तनपि धातो: श्लौ द्वित्वादौ च कृते दधातन इति। अत्र तनादेशस्य पित्त्वेन ङित्त्वा-भावात् 'श्नाभ्यस्तयोरात:' (२४८२) इत्यस्याप्रवृत्त्या आल्लोपो न। धत्त इति भाषायाम्। अत्र 'दधस्तथोश्च' (२५०१) इति भषभाव:। श्नाभ्यस्तयोरिति आल्लोपश्च तप्रत्ययस्यापित्त्वेन ङित्त्वात्। जुजुष्टन इति। जुष प्रीतिसेवनयो:। तप्रत्ययस्य तनादेश:। ष्टुना ष्टुरिति षत्वम्। अन्यत् सर्वं सूत्रे स्पष्टम्। यतिष्टन इति। यति+तन इतिच्छेद:। 'सुषामादिषु च' (१०२२) इति षत्वम्। यतिशब्दं व्युत्पादयति—यच्छब्दादिति। डित्त्वात्टेर्लोप:। यति शब्दस्यार्थमाह—यत्संख्याका इति। यावन्त इत्यर्थ:। स्तन इत्यस्यार्थमाह—अस्+लोट् त इति स्थिते तस्य तनादेश:। तस्यापित्त्वेन ङित्त्वात् 'श्नसोरल्लोप:' (२४६९) इत्यल्लोपे स्तन इति। स्त इति तु भाषायाम्।

२५६८। इदन्तो मसि ॥ ७।१।४६ ॥

दी—। मसीत्यविभक्तिको निर्देश:। इकार उच्चारणार्थ:। 'मस्' इत्ययमिकाररूपचरमावयवविशिष्ट: स्यात्। मस इमागम: स्यादिति यावत्। नमो भरन्त एमसि। त्वमस्माकं तवस्मसि। 'इम:' 'स्म:' इति प्राप्ते।

The term 'मसि' in the rule has been mentioned without any case-ending added to it. The इकार in it is for the sake of facility in pronunciation. The rule (thus) means—the affix मस् (first person plural of लट्) figures in vedic literature,

with इकार as the final part or letter of it i.e the augment इम् is added after it i.e. मस्। Thus 'नमो भरन्तः—' we have come to you respectfully (lit. performing salutation). इमसि (इ+लट्, मस् whence 'इमः' is the form in classical language). 'त्वमस्माकम्—' You are ours and we are yours. स्मसि—अस्+लट्, मस्=स्+मसि by 'श्नसोरल्लोपः' (2469) अ of अस् is dropped as मस is ङित् by 'सार्वधातुकमपित्'=स्मसि against 'स्मः', the classical form.

मित—। इदन्त इति। इदिति तपरकरणमसन्देहार्थम्। अन्तशब्देन अन्तावयवो गृह्यते। इत् इकारः अन्तः अन्तावयवो यस्य तथाभूतो लट उत्तमपुरुष बहुवचनः मस् इति प्रत्ययः स्याच्छन्दसि विषये इत्यर्थः। मस् इति कुत इति चेदाह—मसीत्यविभक्तिको निर्देश इत्यादि। इमागम इति। तेन 'मिदचोऽन्त्यात् परः' इति सकारादेव मकारो भवति। नमो भरन्त इति। 'उप त्वाग्ने दिवेदिवे दोषावस्तर्धिया वयम्। नमो भरन्त एमसि' ॥ (ऋग्वेद—१।१।७) इति पूर्णो मन्त्रः। नमोभरन्तः नमस्कारं सम्पादयन्तः (वयमनुष्ठातारः ऋत्विजः) दिवे दिवे प्रतिदिनम् दोषावस्तः रात्रौ अहनि च त्वा त्वाम् (उपसमीपे) एमसि आगच्छाम इति मन्त्रार्थः। एमसि इति—आङ्पूर्वादिण्गतावित्यस्माल्लटो मस्। तस्य मसि आदेशः। इम इति भाषायाम्। स्मसि इति—अस्+मस् इति स्थितेऽनेन मसो मसि। तस्य अपित्त्वेन ङित्त्वात् 'श्नसोरल्लोपः' (२४६९) इत्यल्लोपः।

## २५६८। क्त्वो यक् ॥७।१।४७॥

### दी—। दिवं सुपर्णो गत्वाय।

क्त्वा in the Vedas is affixed with the augment यक् or य (य+क् and not य् only). गत्वाय—गम्+क्त्वा+यक्।

मित—। क्त्व इति। 'क्त्वा' इत्यस्य लुप्ताकारलोपस्य षष्ठ्या निर्देशः। 'क्त्वापि छन्दसि' (७।१।३८) इत्यस्मिन्छन्दसीत्यनुवर्तते। तेन छन्दसि विषये क्त्वाप्रत्ययस्य यगागमः स्यादित्यर्थः।

२५७० । इष्ट्वीनमिति च ॥ ७।१।४८ ॥

टी—। क्त्वाप्रत्ययस्य ईनमन्तादेशो निपात्यते। इष्ट्वीनं देवान्। इष्ट्वा इति प्राप्ते ।

The term इष्ट्वीनम् also in vedic language is irregularly formed with the augment 'ईनम्' as the final substitute of the affix क्त्वा i.e आकार of क्त्वा is replaced by ईनम्. Thus 'इष्ट्वीनम्—'after having worshipped the gods with a sacrifice—यज् + क्त्वा = इज् + क्त्वा—सम्प्रसारण of य being effected by 'वचिस्वपि—'(2406) due to कित्व of क्त्वा = इष + क्त्वा—ज being replaced by ष by 'व्रश्चभ्रस्जयज—' (264) = इष्ट्वा by 'ष्टुनाष्टुः' (113) = इष्ट्वीनम् with आकार replaced by ईनम् by this rule.

मित—। इष्ट्वीनमिति चेति। निपात्यत इति शेषः। तत्र इति शब्दस्य प्रकारवाचित्वादेः निपातनप्रकारमाह—क्त्वाप्रत्ययस्येति। यजेः क्त्वायाम् प्रत्ययस्य कित्त्वात् 'वचिस्वपि—' (२४०६) इति धातोरादेः सम्प्रसारणे [ एवम् इज्यमान इत्यादौ "वचिस्वपि—" इत्यनेनैव यजेः सम्प्रसारणम् ], 'व्रश्च—' ( २६४ ) इति जस्य षत्वे, 'ष्टुना—' ( ११३ ) इति प्रत्ययतकारस्य ष्टुत्वे च इष्ट्वा इति क्त्वान्तम्। तस्य आकारस्य ईनमित्यादेशे यथोक्तरूपसिद्धिः।

२५७१ । स्नात्व्यादयश्च ॥ ७।१।४९ ॥

टी—। आदिशब्दः प्रकारार्थः। आकारस्य ईकारो निपात्यते। स्निग्धः स्नात्वी मालादिव। पीत्वी सोमस्य वावृधे। स्नात्वा पीत्वेति प्राप्ते ।

The terms स्नात्वी etc. in vedic language are irregularly formed with ईकार in place of आकार of स्नात्वा etc. Thus स्नात्वी

(having bathed) etc. पीत्वी—पा + क्त्वी ( in place of क्त्वा ) the आ of पा is replaced by ई by 'घुमास्थागापा—'(2462).

मित—। स्नात्वीति। स्नात्वी आदिर्येषाम् इति बहुव्रीहिः। प्रकारार्थे इति। स्नात्वी इत्येवमादय इत्यर्थः।

२५७२। आज्जसेरसुक् ॥ ७।१।५० ॥

टी—। अवर्णान्तादङ्गात् परस्य जसोऽसुक् स्यात्। देवासः। ब्राह्मणासः।

The augment असुक् ( अस् ) in vedic literature, is affixed to the सुप् affix जस् coming after a nominal base ( अङ्ग ) which ends in an अवर्ण. Thus ( देवासः ) the gods देव + जस् = देव + असस् with the elision of ज and the addition of असुक् ( अस् ) after it. Similarly ब्राह्मणासः.

मित—। आदिति। आत् + जसेः + असुक् इतिच्छेदः। आदित्यवर्णात्। तेन च अकारान्तमङ्गमप्याक्षिप्यते। जसेरिति प्रथमबहुवचनस्य विभक्तेर्जस इकारान्तेन पूर्वेषां निर्देशः। तदाह—अवर्णादङ्गादिति। असुकि उकारस्य उच्चारणार्थत्वम्। ककारस्य इत्त्वम्। देवास इति। देव जस् इति स्थिते 'चुटू' ( १८९ ) इति प्रत्ययादेर्जस्य लोपे असुगागमे कृते देव असस् इति जाते यथोक्तरूपसिद्धिः। उभयास इत्यादौ तु परत्वादसुकि कृते 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायेन पुनः शी न।

२५७३। श्रीग्रामण्योश्छन्दसि ॥ ७।१।५६ ॥

टी—। आमो नुट्। श्रीणामुदारो धरुणो रयीणाम्। सूतग्रामणीनाम्।

In vedic literature the augment नुट् ( न् ) is prefixed to the सुप् affix आम् when following the bases श्री and ग्रामणी. Thus

श्रीणाम् and ग्रामणीणाम्—णत्व by 'रषाभ्याम्—'(841). Nagesha holds that this rule fails as श्रीणाम् could have been effected by the rule 'वामि' (304). Others, however, opine that this (श्रीणाम्) being the instance when श्री does not come to the category of नदी then the rule is not superfluous.

मित—। श्रीग्रामण्योरिति। 'आमि सर्वनाम्नः सुट्' (७।१।५२) इत्यत 'आमि' इत्यनुवर्तमानं प्रयोजनानुरोधात् षष्ठ्या विपरिणम्यते। तदाह—आम इति। 'ह्रस्वनद्यापो नुट्' (७।१।५४) इत्यतो नुडनुवर्तत इत्याह—नुडिति। श्रीग्रामण्योः परस्य आमो नुट् छन्दसीत्यर्थः। श्रीणाम् इति अनेनामो नुटि नामिति जाते तस्य णत्वे रूपम्। 'वाऽमि' (३०४) इत्येव सिद्धे इदं व्यर्थमिति शब्देन्दुशेखरः। अन्ये तु अत्र 'वामि' इति नदीत्वविकल्पनात् नदीत्वाभावे उदाहरणं बोध्यम्। नदीत्वपक्षे तु 'ह्रस्वनद्यापो नुट्' (२०८) इत्यनेनैव सिद्धम्' इत्याहुस्तदुपेक्ष्यम्। नदीत्वाभावपक्षकल्पने प्रयोजनाभावात्॥ सुताश्च ग्रामण्यश्च इति इतरेतरद्वन्द्वः।

३५७४। गोः पादान्ते॥ ७।१।५७॥

**टी—। विद्मा हि त्वा गोपतिं शूरगोनाम्। पादान्ते किम्? गवां शता पृच्छयमानेषु। पादान्तेऽपि क्वचिन्न। छन्दसि सर्वेषां वैकल्पिकत्वात्। विराजं गोपतिं गवाम्।**

The augment नुट् in vedic literature is prefixed to the सुप् affix आम् following the base गो provided the end of a foot (vedic foot) is concerned. Thus गोनाम् at the end of the foot; 'विद्माहित्वा—' विद्म is lengthened by 'द्व्यचोऽतस्तिङः'. गवां शता—no नुट् due to गवाम् existing at the beginning of a foot. But as everything in vedic literature is optional so नुट् ceases to take place in a few cases even when the end of a foot is concerned.

मित—। गोरिति। प्राग्वदनुवृत्तिः। तेनायमर्थः—गोशब्दात् परस्य आमो नुडागमः स्यात् पादान्ते छन्दसि इति। विद्माहि त्वेति। अत्र पादान्तवर्तित्वाद् गोनामित्यत्र नुट्। विद्मा इत्यत्र 'द्व्यचोऽतः—' इति दीर्घः। गवामिति। पादादित्वान्नुडभावः। पादान्तेऽपीति। स्पष्टम्।

२५७५। छन्दस्यपि दृश्यते ॥ ७।१।७६ ॥

दी—। अस्थ्यादीनामनङ्। इन्द्रो दधीचो अस्थभिः।

The preceding rule is 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' (322—7.1.75). Thus the present rule means—अनङ् is the final substitute of अस्थि etc in vedic language also. The term दृश्यते in the rule is to indicate violation of all other injunctions (सर्वोपाधिव्यभिचारार्थम्). Thus अनङ् takes place after the final vowels of अस्थि etc by 'अस्थिदधि—'(322) only when अजादि affix follows (as अस्थ्ना दध्ना etc) but not when a हलादि one follows (as अस्थिभिः अस्थिभ्यः etc), But here in violation to this we have अस्थभिः—अस्थि + भिस् = अस्थन् भिस् by अनङ् = अस्थ भिस् by elision of न by 'नलोपः—' and by 'न लोपः सुप्स्वरसंज्ञातुग्विधिषु कृति' (353) this elision of न being invaild (असिद्ध) the rule 'अतो भिस ऐस्' (262) does not apply and consequently we have अस्थभिः.

मित—। छन्दस्यपीति। 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' (३२२—७।१।७५) इत्यव्यवहितं पूर्वं सूत्रम्। तत्र सर्वमिहानुवर्तते। तदाह—अस्थ्यादीनामिति। अत्र 'छन्दस्यपि' इत्येव सिद्धे दृशिग्रहणं सर्वोपाधिव्यभिचारार्थम्। तेन 'अस्थिदधि—' (३२२) इत्यनेन टादावचि एव परतेऽस्थ्यादेरनङ् इति विहितम्। इह तु हलादावपि परतो भवति। तेनोदाहरति—अस्थभिरिति। अस्थिभिस् इति स्थितेऽनेन अस्थिशब्दस्य इकारस्य स्थाने अनङि कृते अस्थन् भिस् इति भवति। ततो नलोपः ततश्च अस्थभिस् इति जाते भिसोऽकारात् परत्वात् 'अतो भिस ऐस् (२६२) इति भिस

ऐसादेशे प्राप्ते सुब्विधौ नलोपस्यासिद्धात् स न भवति। एतच्च 'नलोपः सुप्स्वर—' (३४८) इत्यत्र स्पष्टम्। एवम् अस्थभिरिति सिद्धम्। एवं दधभिः सक्थभिरित्यादि छन्दसि। लोके तु दधिभिरित्यादि।

२५७६। ई च द्विवचने ॥ ७।१।७७ ॥

टी—। अस्थ्यादीनामित्येव। अक्षीभ्यां ते नासिकाभ्याम्।

In vedic literature the final vowel of अस्थि etc is replaced by the substitute 'ई' when the dual number is concerned. Thus अक्षीभ्याम् against अक्षिभ्याम् in classical language. Note that here अक्षभ्याम् is not the result as the present rule supersedes others concerning duality.

मित—। ई चेति। 'अस्थिदधि—' इति वर्तते। तदाह—अस्थ्यादिनामित्येवेति। छन्दसि विषये अस्थिदधिसक्थ्यक्ष्णाम् ईकारोऽन्तादेशः स्याद् द्विवचनविभक्तौ परत इत्यर्थः। अक्षीभ्यामिति। अनङोऽपवादः। तेन अक्षभ्यामिति न। एवमन्यत्र।

२५७७। दृक्-स्ववस्-स्वतवसां छन्दसि ॥ ७।१।८३ ॥

टी—। एषां नुम् स्यात्सौ। कीदृङिन्द्रः। स्ववान्। स्वतवान् ॥ उदोष्ठ्यपूर्वस्य (२४९४)—

In vedic literature, the augment नुम् is affixed to the first case-ending sing affix सु coming after the base ending in दृश् and after स्ववस् and स्वतवस्. Thus कीदृङ्—किम्+दृश्+क्विन् by 'त्यदादिषु दृशोऽनालोचने कञ्च' (429)—कीदृश् as क्विन् drops everything for the नकार herein is for the sake of pitch (स्वरार्थ), इकार for the sake of facility in pronunciation, क for कित्व (अनुबन्धार्थ)

is dropped by 'वेरपृक्तस्य' (375); किम् has been replaced by 'की' by 'इदंकिमोरीश्की' (1078). Now the form standing कीदृनृश्+सु=कीदृनश्स्=कीदृनृश् by 'हल्ङ्याब्भ्यः—'(354)=कीदृन्—श् eliding by 'संयोगान्तस्य लोपः' (54)=कीदृङ् by 'क्विन् प्रत्ययस्य कुः' (377). Then कीदृङ्+इन्द्रः=कीदृङ्ङिन्द्रः duplication by 'ङमो ह्रस्वादचि ङमुण्नित्यम्'. स्ववान्—The base is स्ववस् (सु अवस् रक्षणम् यस्य). Thus स्ववस्+स=स्ववन् स् सु in connection with नुम्=स्ववनस् with the elision of सु as before=स्ववान with the lengthenation of the penultimate by 'सान्तमहतः संयोगस्य' (371) There the संयोग letter नस् must be considered as one letter. स्ववान with the elision of स् as before (संयोगान्तस्य लोप). स्वतवान्—The base is स्वतवस् hence the procedure is just the same as in the case of स्ववस्. 'उदोष्ठ्य—' This is for the next rule.

मित—। दृकस्ववसिति। 'आच्छीनद्योर्नुम्' (७।१।८०) इत्यतो नुम् इत्यनुवर्तते। 'सावनडुहः' (७।१।८२) इत्यतः सौ इति च। तदाह—एषां सौनुमित्यादि। छन्दसि विषये इति शेषः। कीदृङ् इति। किम् शब्दोपपदाद् दृशेः 'त्यदादिषु दृशोऽनालोचने कञ्च' (४२९) इति चाद् क्विन् प्रत्ययः। तस्य कनाविती। इकार उच्चारणार्थः। वकारस्य 'वेरपृक्तस्य' (३०५) इति लोपः। एवं प्रत्ययस्य सर्वलोपित्वात् किम् दृश् इत्येव स्थिते 'इदं किमोरीश्की' (१०१८) इति किमः 'की' इत्यादेशः। ततः सौ विहिते कीदृश् सु इति स्थिते नुम्। तदेवम् कीदृन्श् सु इति जाते 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' (३५४) इति सुलोपः। शकारस्य 'संयोगान्तस्य लोपः' (५४) इति लोपः। ततः कीदृन् इति स्थिते 'क्विन्प्रत्ययस्य कुः' (३७७) इति नकारस्याऽनुनासिको ङः। ततः कीदृङ्+इन्द्रः= कीदृङ्ङिन्द्रः 'ङमोह्रस्वादचि—' इत्यनेन। स्ववान् इति—सु (शोभनम्) अवः रक्षणमस्येति बहुव्रीहौ स्ववस् इति प्रातिपदिकम्। (अवतेरौणादिकोऽसुनि

त्वस् इति )। ततः सौ स्ववस् सु इति स्थिते नुम्। एवं स्ववन्स् सु इति जाते प्राग्वत् सुलोपः। ततः 'सान्तमहतः—' (३१७) इत्युपधादीर्घः। ततः प्राग्वत् सुलोपसंयोगान्तलोपाः। तस्यासिद्धत्वान्नलोपो न। एवं स्ववान् इति सिद्धम्। स्वतवान् इति। स्वं स्वानुकूलं तवः वृद्धिर्यस्येति विग्रहे स्वतवस् इति प्रातिपदिकम्। तवस् इति तुधातोर्वृद्ध्यर्थात् सौत्रात् असुनप्रत्यये सिद्धम्। एवं स्वतवस्+सु इति स्थिते प्राग्वत्। 'उदोष्ठ्य—' इति उत्तरार्थमिदम्॥

## २५७८। बहुलं छन्दसि ॥ ७।१।१०३ ॥

## दी—। ततुरिः। जगुरिः पराचैः *।

The substitute 'उत्' directed in place of ऋ by 'उदोष्ठ्यपूर्वस्य' (2494) takes place irregularly (i.e may or may not take place) in connection with vedic language (and again may take place when such ऋकार is not औष्ठ्यपूर्व or preceded by labial). Thus ततुरि—तॄ+किन् by the rule 'आदृगमहन—जन: किकिनौ लिट् च' (3151). Duplication etc (due to लिड्वत्त्व) taking effect we have ततॄ+इ then उत् or उकार in place of ऋ=ततुर् इ (by उरण् रपरः)=ततुरिः here ऋकार is दन्त्यपूर्व and not औष्ठ्यपूर्व and yet उत् operates. The term means—(he) crossed (तीर्णवान् or ततार). Similarly जगुरिः—गॄ+किन् (he) uttered sounds (जगार) किन् makes the words आद्युदात्त.

मित—। बहुलमिति। 'उदोष्ठ्यपूर्वस्य—' (२४९४—७।१।१०२) इति यदोष्ठ्यपूर्वस्य ऋकारस्य उद्विधीयते स (उत्) तस्य ऋकारस्य स्थाने बहुलं भवति छन्दसि विषये। ऋकारस्य (उष्ठ्यपूर्वत्वाभावेऽपि) भवति इति यावत्। तेन औष्ठ्य पूर्वत्वाभावेऽपि ऋकारस्य उदादेशं दर्शयति—ततुरिरिति। तॄप्लवनतरणयोर्भ्वादिः।

[* जगुरि रित्ययमंशः सर्वत्र नोपलभ्यते]।

तस्माद् (त्वकारान्तलात्) 'आदृगमहनजनः किकिनौ लिट् च' (२१५१) इति किन् प्रत्ययः। लिट् चेत्युक्तेः लिड्वद्भावाद् दित्वादि। तदेवं ततुर इति स्थिते उदादेशः। 'उरण्—' इत्युकारस्य रपरत्वम्। तीर्णवान् तत्तार इत्यर्थः। किन्प्रत्ययस्य नित्त्वादाद्युदात्तत्वम्। किप्रत्यये तु कृते यद्यपि रूपं तुल्यं तथापि प्रत्ययस्वरेणान्तोदात्तत्वं स्यादिति न विहितम्। अत्र त्वकारस्य 'त' इति दन्त्यपूर्वत्वेन ओष्ठ्यपूर्वत्वाभावेऽपि उदादेशः। जगुरिरिति। ग शब्दे ऋ यादिकः। तस्मात् प्रागवत् किनि दित्वादिना रूपम्। जगार (शब्दं कृतवान्) इति तदर्थः।

२५७९। ह्रु ह्वरेश्छन्दसि ॥ ७।२।३१ ॥

**टी—। ह्वरेर्निष्ठायां 'ह्रु' आदेशः स्यात्। अह्रुतमसि हविर्धानम्।**

In vedic literature, substitute 'ह्रु' is ordered in place of the root ह्वृ (कौटिल्ये भ्वादि) when the affix निष्ठा (क्त and क्तवतु) follows. Thus अह्रुतम् in place of अह्वृतम्.

मित—। ह्रु इति। ह्रु इत्यविभक्तिको निर्देशः। 'श्वीदितो निष्ठायाम्' (७।२।१४) इत्यतो निष्ठायामित्यनुवर्तते। तदाह—ह्वरेर्निष्ठायामिति। ह्वरिति 'ह्वृ कौटिल्ये' इति भौवादिकस्यैका निर्देशः। अह्रुतमिति। अह्वृतमिति लोके।

२५८०। अपरिह्वृताश्च ॥ ७।२।३२ ॥

**टी—। पूर्वेण प्राप्तस्यादेशस्याभावो निपात्यते। अपरिह्वृताः सनुयाम वाजम्।**

The term अपरिह्वृता (नञ्+परि+ह्वृ+क्त—टाप् बहुव) in vedic language is irregularly formed with the absence of the substitute ह्रु in place of ह्वृ due by the previous rule.

मित—। अपरिह्वृता इति। निपात्यतेऽयमिति निपातनप्रकारं दर्शयति—

पूर्वेण प्राप्तस्येति। 'ह्रु' इत्यस्यादेशस्याभावः। छन्दसि बहुवचनान्न एवायं शब्दः प्रयुज्यत इत्याहुः।

२५८१। सोमे ह्वरितः॥ ७।२।३३॥

टी—। इड्गुणौ निपात्येते। मा नः सोमो ह्वरितः।

The term ह्वरितः (ह्वृ+क्तः) with reference to सोम is irregularly formed with गुण of the root and इट् prefixed to the affix and also absence of the substitute 'ह्रु' for ह्वृ।

सि—। सोम इति। सोमविषये ह्वरित इति निष्ठायां निपात्यते। इड्गुणाविति। धातोर्गुणः प्रत्ययस्येडिति बोध्यम्। अत्र ह्वरेः 'ह्रु' इत्यादेशाभावश्च निपात्यते।

२५८२। ग्रसितस्कभितस्तभितोत्तभितचत्तविकस्ताविशस्तृ-शंस्तृ-शास्तृ-तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरूत्रीरुज्ज्वलिति-क्षरितिव-मित्यमितीति च॥ ७।२।३४॥

टी—। अष्टादश निपात्यन्ते। तत्र 'ग्रसु' 'स्कभु' 'स्तम्भु' एषामुदित्त्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इट् निपात्यते। युवं शचीभिर्ग्रसितामसुञ्चतम्। विष्कभिते अजरे। येन स्वः स्तभितम्। सत्येनोत्तभिता भूमिः। स्तभितेत्येव सिद्धे उत्पूर्वस्य पुनर्निपातनमन्योपसर्गपूर्वस्य मा भूदिति। 'चते याचने'। 'कस गतौ'। आभ्यां क्तस्येडभावः। चत्तो इतश्चत्तामुतः। त्रिधा ह श्यावमश्विना विकस्तम्। उत्तानाया हृदयं यद्विकस्तम्। निपातनबहुत्वापेक्षं सूत्रे बहुवचनम् 'विकस्ता' इति। तेनैकवचनान्तोऽपि प्रयोगः साधुरेव। 'शसु' 'शंसु' 'शासु' एभ्यस्तृच

इडभावः। एकस्तुष्टरश्वस्याविशस्ता। ग्रावग्राभ उत शंस्ता। प्रशास्ता पोता। तरतेर्वृङ्वृञोश्च तृच 'उट्' 'ऊट्' एतावागमौ निपात्येते। तरुतारं रथानाम्। तरूतारम्। वरुतारम्—वरूतारम्। वरुत्रीभिः सुशरणो नो अस्तु। अत्र ङीबन्तनिपातनं प्रपञ्चार्थम्। वरुतृशब्दो हि निपातितः। ततो ङीपा गतार्थत्वात्। उज्ज्वलादिभ्यश्चतुर्भ्यः अप इकारादेशो निपात्यते। 'ज्वल दीप्तौ' 'चर सञ्चलने' 'टुवम् उद्गिरणे'। 'क्षम गत्यादिषु'—इह चरितीत्यस्यानन्तरं चमितीत्यपि केचित् पठन्ति। तत्र 'चमूष सहने' इति धातुर्बोध्यः। भाषायां तु ग्रस्त-स्कब्ध-स्तब्धोत्तब्ध—चतित विकसिताः। विशसिता। शंसिता शासिता। तरीता—तरिता। वरीता—वरिता। उज्ज्वलति। चरति। पाठान्तरे—चमति (? चमते) *। वमति। क्षमति॥

'बभूथाऽततन्थ जगृभ्म-ववर्थेति निगमे' (२५२७)। विद्मा तमुत्सं यत आबभूथ। येनान्तरिक्षमुर्वाततन्थ। जगृभ्मा ते दक्षिण-मिन्द्र हस्तम्। त्वं ज्योतिषा वितमोववर्थ। भाषायां तु बभूविथ। आतेनिथ। जगृहिम—ववरिथेति।

These eighteen words (but nineteen, with 'चमिति' added by others after the term चरिति in the rule) viz ग्रसित, स्कभित, स्तभित, उत्तभित, चत्त and विकस्त ; as well as विशस्तृ, शंस्तृ,शास्तृ, तरुतृ, तरूतृ, वरुतृ, वरूतृ, उज्ज्वलिति, चरिति (also चमिति), वमिति and क्षमिति

---

[* The printed editions of Si-kau-kasika have all चमति here through copyist's slip. Make it चमते, for चमूष सहने is भ्वादि आत्मनेपदी ]।

are irregularly formed in vedic literature. Of these first six are formed with the affix क्त. Of them, again, the roots of the first four being उदित् or उeliding viz यसु स्तम्भु, स्तम्भु and उत्+स्तम्भु, arrangement of इट् before निष्ठा (क्त) is irregularly effected for इट् was prohibited to the affix by 'यस्य विभाषा' (3325) as the roots are allowed इट् only optionally by 'उदितो वा' (3328). Thus according to this restriction we have in classical language यस्त, स्तब्ध, स्तब्ध and उत्तब्ध without इट. In the cases of स्कभित, स्तभित and उत्तभित the elision of नकार existing in the roots स्तनभ् and स्तम्भ is effected by 'अनिदितां हल उपधायाः क्ङिति' (415) as क्त after them is क्ति or कeliding. षत्व in the case of विष्कभित is accounted for by 'वेः स्कभ्नातेर्नित्यम्'. In the case of उत्तभित—उद्+स्तनभ्+क्त=उत् स्त् भ इत here सकार of स्तम्भ् is changed into थ् by 'उदः स्थास्तम्भोः पूर्वस्य' (118) and 'आदेः परस्य' (44). Then this थकार also disappearing (optionally) by 'झरो झरि' (71) नकार elding by 'अनिदिताम्' and इट् taking place, we now have उत्तभित (see 'उदः स्था—' in Vol. I of our edition); here (in the rule) the utterance of 'स्तभित' for 'उत्तभित' sufficing, the addition of the उपसर्ग उत्' before it is to the effect that स्तभित will not result from स्तम्भ्+क्त in case of any other उपसर्ग (save and expect उत्' preceding the root)। चत्त—चत+क्त without इट् against चतित the classical form with इट by 'आर्धधातुकस्य—'। विकस्ताः—विकस्+क्त without इट् against विकसित the classical form with इट् as before. By the mention of 'विकस्ता' the plural of विकस्त it is not to be understood and that the term has got to be used in the plural number only; on the other hand, the plural form

is in view of the many निपातनs ( beginning from शसित and ending in विकस ) so that the application of the term in the singular number also is grammatical. The terms शस्तृ, शंस्तृ and शास्तृ are derived with the affix तृच् ( कर्तरि ) added to the roots शसु, शंसु and शासु. Here the absence of इट् being prefixed to the affix तृच् is irregularly effected. Thus the vedic forms are शस्ता, शंस्ता and शास्ता whereas with इट् in classical language we have शसिता, शंसिता and शासिता respectively—एकस्त्वष्टुः etc—Dissolve as एकः + त्वष्टुः + अश्वस्य + विशस्ता. The final has been lengthened by the rule 'अन्येषामपि दृश्यते' ( 2539 ). The terms तरुतृ, तरूतृ, वरुतृ and वरूतृ are derived with the affix तृच् added to the roots तॄ and वृङ or वृञ्. When the affix तृच् follows the roots take irregularly the augments उट् and ऊट् by term गुण of the roots being effected by 'सार्वधातुकार्ध—' (2168) in connection with the affix तृच् which is an आर्धधातुक. Thus तरुता ( तरुतृ + सु ) with उट् and तरूता ( तरूतृ + सु ) in connection with ऊट्. Similarly वरुता वरूता। In classical language we have with इट् in places of उट् and ऊट् तरिता तरीता and वरिता वरीता the augment ( इट् ) being lengthened optionally by the rule 'वॄतो वा' (2391—7.7.38). The term वरूत्री in the rule is derived with the affix ङीप् added after the base वरूतृ ( वरूतृ + ङीप् ) and is illustrated in the मन्त्र 'वरूत्रीभिः सुशरणः'—But this mention of the term वरूत्री under the list of of these irregularly formed words so as to direct ङीप् by निपातन is only for an elaborate utterance. For when by निपातन we get the word वरूतृ we could have already

got बहवी also by adding ङीप after it ( बह्वी ) by the rule 'ऋन्नेभ्योङीप्' (306). The classical form against the term ( बह्वी ) is either बरित्री or बरीती. The four terms ( but five, if the reading of the term 'चमिति' is included in the list ) उज्ज्वलिति, चरिति, ( चमिति ) वमिति and अमिति are derived with the irregular substitute of इकार in place of the विकरण शप् following the roots (उत् + ज्वल, चर, ( चम् ) वम् and अम). The meaning of the roots is expressed in the text. The procedure is thus—उत् ज्वल + शप् + तिप् = उज्ज्वल इति = उज्ज्वलिति। In the Similar way चरिति, चमिति etc. The classical forms against them are, however, उज्ज्वलति चरति, 'चमति' (चमते)* वमति and अमति respectively. इह चरितीत्यस्थानन्तरम् etc explained before. 'बभूथाततन्थ—' (2527). This rule belongs to the vedic section. Hence, though explained it has been brought down here (in the vedic section) for the sake of illustion. 'विद्मा—' Lengthenation of the final vowel ( अकार ) of विद्म is by 'द्व्यचोऽतस्तिङः'. आबभूथ—आ + भू + लिट् थल् against the classical form आबभूविथ (with इट्). येनान्तरिक्ष—Break up as येन + अन्तरिक्षम् + उरु + आततन्थ, the prose-order being येन उरु अन्तरिक्षम आततन्थ—आ + तन् + लिट् थल् against आतेनिथ the secular form. 'जगृभ्माते—' We get hold of, Oh Indra, your right hand. जगृभ्मा = दीर्घ by 'अन्येषामपि दृश्यते' the form being जगृभ्म—ग्रह + लिट म ( first person plural ) after duplication etc the root gets सम्प्रसारण by the rule 'ग्रहिज्या—'(2412) as the affix म is कित्, ह् of ग्रह् is replaced by भ् by the Vartika 'ह्रग्रहोर्भश्छन्दसि' and interchange of places of भ् and म due to the absence of the augment ( इट् ) by 'बभूथाततन्थ—'The classical form with इट् is जगृहिम। बवर्थ—इ

+लिट् थल्—गुण by 'सार्वधातुकार्ध—' (2168) then duplication and and absence of इट्. The from, against this in भाषा being ववरिथ with इट्.

मित—। ग्रसितस्कभितेति। ग्रसित, स्कभित, स्तभित, उत्तभित, चत्त, विकस्ता, [विकस्त इत्येव (बहुवचनमविवक्षितमिति वक्ष्यत्यनुपदमेव)], विशस्त, शंस्तृ, शास्तृ, तरुतृ, तरूतृ, वरुतृ, वरूतृ, वरूत्री, उज्वलिति, क्षरिति, (क्षमिति इत्यधिकः पाठोऽत्र। स च भट्टोजिनापि स्वीकृत एवेति मूले स्पष्टम्), क्षमिति, वमिति (इति अर्थाद् एवमादयोऽन्ये च शब्दाः) छन्दसि निपात्यन्त इत्यर्थः। एषु क्रमेण ग्रसु अदने, स्कम्भु, स्तम्भु—रोधनार्थौ सौत्रौ—('स्तम्भु स्तुम्भु स्कम्भु—' (२५५५—३।१।८२) इति सूत्र एव तयोरुल्लेखदर्शनात्। गणपाठेऽदर्शनाच्चेति बोध्यम्), चत्, कस गतौ, शसु हिंसायाम्, शंसुस्तुतौ, शासु अनुशिष्टौ, तॄ प्लवनतरणयोः, वृञ् संभक्तौ (वृञ् वरणे वा), ज्वल दीप्तौ, क्षर सञ्चलने (पाठान्तरे क्षमूष् सहने) टुवम् उद्गिरणे अम गत्यादिषु इति धातवः। अष्टादश इति। क्षमितेरपि संग्रहात्तु ऊनविंशतिरिति विवेकः। उदित्त्वान्निष्ठायामिट्निषेधे प्राप्ते सोऽत्र निपातनाद् भवतीत्याह—इट् निपात्यत इति। ततो ग्रसित इति। लोके तु 'ग्रस्य विभाषा' इति निषेधादिडभावे ग्रस्त इति ['पौपदैवमहायाक्रयणी वामनादिग्गजः। कौलेयैव प्रसङ्गेन माधवेन विमोचितः। इत्यभियुक्तोक्तिः] लोके स्तभित इति। स्तभित उत्तभित इति। ततः पुनरुत्त-भितेत्यस्य ग्रहणं व्यर्थम् इत्यत आह—स्तभितेत्येव सिद्धे इति। अन्योपसर्गपूर्वस्यापि। गतार्थेरिति शेषः। माभूदिति—निष्ठाया इडिति शेषः। चत्त इति—चते (चत्)+क्त इति स्थिते निपातनादिडभावे जाते रूपम्। लोके तु चतित इत्येव। विकस्तमिति। विपूर्वात् कसेर्निष्ठा। निपातनादिट्। लोके तु विकसितमित्येव। त्रिधा-श्रीत्येव ग्रावमिति कर्तृपदम्। अश्विनेति कर्म। तस्य च अश्विनी इत्यर्थः। सुपां सुलुक्—(३५६१) इति विभक्तेरात् आदेशः। ननु सूत्रे विकस्ता इति बहुवचनान्तं पदम्। तत् कथमिह विकस्तमित्येकवचनान्तमुदाह्रियते। अत्राह—निपातन-बहुत्वापेक्षमिति। ग्रसितेत्यारभ्य बहवो ह्यत्र निपातिताः शब्दाः संगृह्यन्ते। तेषां बहुत्वान्निपातनस्यापि बहुत्वे विकस्ता इत्यत्र बहुवचनम्। न तु बहुवचनान्त

एतार्थं सप्तादिकवचनान्तोऽसाधुरित्यर्थो विवक्षित इति भावः। यस्कादिभ्यः विभ्यः कर्तरि विहितस्य 'तृच' इति प्रत्ययस्य इत्यर्थः। इडभाव इति। निपातनादिति भावः। एकस्त्वष्टुरिति। एकः + त्वष्टुः + अश्वस्य + विशस्ता इति पदच्छेदः। त्वष्टुरिति। विश्वकर्मवाचक—त्वष्टृ इति ऋकारान्तस्य शब्दस्य षष्ठ्येकवचने रूपम्। अश्वस्या इति। 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः। लोके तु इडागमेन विशसिता। शंसिता। ननु बह्व्यः इति निपातनात् सिद्धम्। तथा च तस्मादेव 'ऋन्नेभ्यः—' इति ङीपि बह्वीति लभ्यत एव। ततश्च 'बह्वी'ति वचनं व्यर्थं तत्राह—प्रपञ्चार्थमिति। बाहुल्येन प्रदर्शनार्थम् निपातनद्वयमपि स्वीकृतमिति भावः। बह्वी + उज्ज्वलिति इत्यत्र सन्धिरार्षः। उज्ज्वलादिभ्यश्चतुर्भ्य इति। अत्र चतुर्थः संग्रहः। लोके तु क्रमेण उज्ज्वलति, चलति, जलति, टलति इति। भाषायां चिति। [अत्र सर्वत्र ग्रन्थे मूले चमति इति प्राप्तः पाठः लिपिकरप्रमादात्। चमते इति युक्तम्। आत्मने-पदत्वात्]। बभूथा ततन्थेति। निगमो वेदः। तत्र बभूथ, आततन्थ, जगृभ्म, ववर्थ इत्येतानि पदानि प्रत्ययस्य इडभावेन निपातितानीत्यर्थः। लोके तु आबभूविथ इति। येनेति। येन + अन्तरिक्षम् + उरु + आततन्थ इतिच्छेदः। येन उरु विस्तीर्णम् अन्तरिक्षम् अवकाशम् आततन्थ आतनोतीत्यर्थः। वर्तमाने लिट् प्राग्वत्। आङ्पूर्वात् तनोतेर्लिटि थलि इडभावे रूपम्। अत्र एत्वाभ्यासलोपयोरभावोऽपि इति बोध्यम्। लोके तु 'अत एकहल्मध्ये—' इत्येत्वाभ्यासलोपयोः कृतयोरिटि च आतेनिथ इति। जगृभ्मेति। हे इन्द्र ते तव दक्षिणं हस्तं जगृभ्म वयं गृह्णीम जगृहिम इति वेत्यर्थः। छान्दसत्वात् तत्त्वकथनेऽपि उत्तमपुरुषे लिट्प्रयोगः। 'अन्येषामपि दृश्यते' इति जगृभ्म इत्यत्र दीर्घः। ग्रह + लिट् + म इति स्थिते लिटि 'ग्रहिज्या—' (२४१२) इति सम्प्रसारणे 'हृग्रहोर्भश्छन्दसि' इति (वार्तिकात्) हस्य भकारादेशे, निपातनादिडभावे भकारमकारयोः स्थानेऽभ्यादेशे च जगृभ्म इति। जगृहिम इति तु भाषायाम्। ववर्थ इति। वृणोतेर्लिटि थलि प्रत्ययस्य पित्त्वाद् 'सार्वधातुकार्ध—' इति गुणे, रपरत्वे द्वित्वे, हलादिशेषे, इडभावे च रूपम्। भाषायां लिटि ववरिथेति।

३५८२। सनिं ससनिवांसम्। ७।२।६९॥

दी—। सनिमित्येतत् पूर्वात् सनतेः सनोतेर्वा क्वसोरिट्,

एत्वाभ्यासलोपाभावश्च निपात्यते ॥ ( अग्निताग्ने सनिंससनिवांसम् )॥ 'पावकादीनां छन्दसि प्रत्ययस्थात् कादित्वं नेति वाच्यम्' ( वार्तिक )। हिरण्यवर्णाः शुचयः पावकाः ।

The augment इट् in vedic literature is irregularly prefixed to the affix क्वसु following the root सनति or सनोति i.e either षण or षणसंभक्तौ ( भ्वादि ) or षणु ( सन ) दाने तनादि as also the absense of एत्व and अभ्यासलोप are effected when the root is preceded by the term सनिम्. As for example the मन्त्र runs 'अग्निताग्ने—'where सनिंससनिवांसम् is the accusative singular of the term ( प्रातिपादिक ) सनिंससनिवस् declined as सनिंससनिवान् सनिंससनिवांसौ सनिंससनिवांसः। The term सनिंससनिवस् is derived with क्वसु ( वस् ) thus सनिम् + सन् ( भ्वादि वा तनादि ) + वस् = सनिम्—ससन्—इवस् by duplication by 'लिटः कानज्वा' (3994—3.2.108) 'क्वसुश्च' (5.5.107) and the augment इट् prefixed to वस् by निपातन in this rule. Here एत्व and अभ्यासलोप were due by 'अतएकहल्मध्ये—' ( 2260 ). पावकादीनाम्—This is a Varttika here. It has to be said that in vedic literature the state to qualify or the state of having the substitute इकार in place of the अकार preceding a क which remains in an affix in respect of the terms पावक etc does not apply. In other words the terms पावक etc, when the feminine affix टाप् follows' will not have अकारs, existing before their ककारs, replaced by इकारs by the rule 'प्रत्ययस्थात् कात्पूर्वस्यात इदाप्यसुपः' (463) Thus पावकाः and not पाविकाः according to 'प्रत्ययस्थात्—'as पावक is derived as पू or पावि ( पू + णिच् ) + ण्वुल् ।

सनिमित्येतत् सनिं ससनिवांसमिति। सनिम् + ससनिवांसम् इति च्छेदः। सनिम् इत्येतदव्ययम्। तच्च विरामार्थकम् छान्दसञ्च। सनिं ससनिवांसम् इति सूत्रं छन्दोमात्रगोचरमिति व्याचष्टे—सनिमित्येतत् पूर्वादित्यादि। अत एवैतदिह वैदिकप्रकरण एवोपन्यस्तम्। यद्वा 'बभूथाततन्थजगृभ्मववर्थेति निगमे' (७।२।६४) इत्यतो 'निगमे' इति मण्डूकप्लुत्या इहानुवर्तते इति द्रष्टव्यम्। ससनिवांसम् इति क्वसुप्रत्ययान्तस्य ससनिवस् इति प्रातिपदिकस्य पुंसि द्वितीयैकवचनम्। सनिम् ससनिवांसम् इत्यत्र कौ मूलीभूतौ धातू इत्यत आह—सनतेः सनोतेर्वेति। षण संभक्तौ इति भौवादिकः। षणु दाने इति तानादिको वाऽयं धातुरिति समाधानम्। उभयोरेव 'सन' इत्याकृतिसाधारण्यात्। तदेवम् सनिम्—सन्+क्वसु (वस्) इति स्थिते 'लिटः कानज्वा' (३०९४) 'क्वसुश्च' (३०९५) इति क्वसोर्लिडादेशत्वेन लिटकार्य्यद्वित्वादिना 'नेड् वशि कृति' (२९८६) इति वसः (क्वसोः) इडागमाभावे प्राप्ते तथा 'अत एकहल्मध्येऽनादेशादेर्लिटि' (२२६०—६।४।१२०) इति एत्वाभ्यासलोपयोश्च प्राप्तयोराह—क्वसोरिट् एत्वाभ्यासलोपाभावश्च निपात्यत इति। क्वसोरिट् निपात्यते एत्वाभ्यासलोपाभावश्च निपात्यते इत्यन्वयः। ततश्चैवमिटि सनि ससन् इवस् इति स्थिते सनिं ससनिवस् इति रूपं सिद्धम्। एत्वाभ्यासलोपयोस्तु कृतयोः सनिं सेनिवस् इति स्यादिति विवेचनीयम्। अत्रोदाहरति—अविवासं इति। 'पावकादीनाम्—' इति वार्तिकमिदम्। छन्दसि विषये ण्वुल्प्रत्ययनिष्पन्नानां पदानां टापि परे ककारात् पूर्वस्य अकारस्य 'प्रत्ययस्थात् कात् पूर्वस्यात इदाप्यसुपः' (४५२) इति सूत्रेण विहित इकारादेशो नेति वक्तव्यमित्यर्थः। पावका इति। पुनन्ति पावयन्ति वेत्यर्थं इति शब्देन्दुशेखरकाराः। पुनातेः पावयतेर्वा ण्यन्ताद् ण्वुल् (अक) प्रत्यय इति तदाशयः। प्रत्ययस्य णित्त्वाद् 'अचो ञ्णिति' (२५४) इति पूर्वत्र वृद्धिः। उत्तरत्रापि णित्त्वात् सर्वातिनैव वृद्धिः।

३५८४। घोर्लोपो लेटि वा ॥ ७।३।७० ॥

दौ—। दधद्रत्नानि दाशुषे। सोमो ददद्गन्धर्वाय। यदग्निरग्नये ददात्।

The final i.e आकार ( after duplication ) of the roots designated as घु (i.e दा and धा ; cp 'दा धा घ्वदाप्') disappears optionally when the vedic affix लेट् takes place. Thus 'दधद् रत्नानि—' holding gems in hand for the sacrificers ( यजमान is दाश्वान् ). Here in the case of दधत् the आकार of the root धा disappears after duplication—धा + लेट् तिप् = दधाति by duplication etc by 'श्लौ' as धा ( and दा ) are of जुहोत्यादि class. Then आकार eliding by this we have दध्ति. Now the 'अट्' by 'लेटो ऽडाटौ' takes effect giving दधति whence we have दधत् with the इकार of तिप् dropped by 'इतश्च लोपः परस्मैपदेषु'। दाशुषे is the dative singular of the term दाश्वान् ( दाश् + क्वसु ) derived irregularly with क्वसु or वसु by 'दाश्वान् साह्वान्मीढ्वांश्च'. Similarly the term ददत् in 'सोमो ददत्—' Soma gave her ( i.e. an unmarried girl ) to Gandharva. When आकार of the roots ( after duplication ) is not dropped we have the forms ( दधात् and ) ददात् as in 'यदग्निः—' But these ( दधात् and ददात् ) could have been formed with आट् ( the augment ) also by 'लेटोऽडाटौ'.

मित—। घोर्लोप इति। छन्दसि विषये घुसंज्ञकानां ( कृतद्वित्वानां ) धातूनाम् अन्तस्य ( आकारस्य इत्यर्थः ) लोपो वा स्याल्लेटि परत इत्यर्थः। 'दधद्रत्नानि—' इति। अत्र दधत् इति दधातेर्लेटि तिपि रूपम्। 'श्लौ' द्वित्वे अभ्यासकार्ये च कृते दधाति इति जाते अनेन सूत्रेण ( 'घोर्लोपः—' इत्यनेन ) धातोराल्लोपः। ततो दध्ति इति स्थिते 'लेटोऽडाटौ' इति अटिविहिते दध् अ ति दधति इति जाते 'इतश्च लोपः परस्मैपदेषु' इति तिप इकारलोपपूर्वं 'दधत्' इति रूपं सिध्यति। 'घोर्लोपः—' इति लोपस्य वैकल्पिकत्वाद् लोपाभाव पक्षे तु 'दधात्' इति रूपम् इति विवेचनीयम्। दाशुषेहविर्दत्तवते यजमानाय रत्नानि रमणीयानि धनानि मत्प्रादोन्येव वा दधत् दानार्थं धारयन् स्थितः ( अग्निरिति शेषः ) इति

मन्त्रार्थः। दाश्वे इति दाश्वान् इत्यस्य चतुर्थ्येकवचने रूपम्। दाश्वान् शब्दस्तु—"दाश्वान् साह्वान् मीढ्वांश्चे"ति क्वसुप्रत्ययान्तो निपातितः। सोमो ददद्दिति। दाधातोर्लेटि रूपम्। दधद्दितिवदत्र प्रक्रिया बोध्या। सोमो ददद्दिति अजातसम्भोगेच्छाकन्याविषयायाः कन्याविवाहमेर्मन्त्रः। तथाच श्रूयते 'सोमो दददगन्धर्वाय गन्धर्वो ददद्ग्नये अग्निश्च त्वामाददात्—' इति। अस्य च शान्तरम् ऋग्वेदे मार्गणीयम्। अथ ददत् इत्यस्य पक्षे (लोपाभावपक्षे) रूपं दर्शयति—ददादिति।

## २५८५। मीनातेर्निगमे ॥ ७।३।८१ ॥

दी—। शिति ह्रस्वः। प्रमिणन्ति व्रतानि। लोके प्रमीणन्ति ॥

'अस्तिसिचोऽपृक्ते—' (२२२५)—

In vedic language, the दीर्घ ईकार of the root मीञ् (मीञ् हिंसायांक्र्यादिः) becomes ह्रस्व when a शित् or अकारeliding affix follows. As for example प्रमिणन्ति—प्र+मी+लट् अन्ति=प्रमि श्ना (by क्र्यादिभ्यः श्ना) अन्ति=प्रमिन् अन्ति, आकार of ना or श्ना disappearing by 'श्नाभ्यस्तयोरातः' (2486)=प्रमिणन्ति—णत्व by 'हिनुमीना' (2530). The classical form against this is प्रमीणन्ति. 'अस्तिसिचः—'(2253) This is for the next rule which follows upon it—

मित—मीनातेरिति। 'ष्ठिवुक्लमुचमां शिति' (७।३।७५) इत्यतः 'शिति' इत्यनुवर्तते। 'प्वादीनां ह्रस्वः' (७।३।८०) इत्यतो 'ह्रस्वः' इति च। तेन शेष' पूरयन्नाह—शिति ह्रस्व इति। मीनातेरीकारस्य ह्रस्वः स्यात् शितिप्रत्यये परतश्छन्दसि इति समुदायार्थः। मीनातेरिति श्तिपा निर्देशः (क्र्यादिकस्य) मीञ् हिंसाया मित्यस्य ग्रहणम्। प्रमिणन्ति इति। हिंसन्तीत्यर्थः। प्र+मी श्ना अन्ति इति स्थिते अनेन प्रमिना अन्ति इति जाते 'श्नाभ्यस्तयोरातः' (२४८६) इत्यालोपे प्रमिनन्ति इति। ततो 'हिनुमीना' इति णत्वम्। लोके शिति नैव ह्रस्वाभावादिति भावः। 'अस्तिसिचः—' (२२२५) इति उत्तरार्थमिदम्।

३५८६। बहुलं छन्दसि ॥ ७।३।८३ ॥

टी—। सर्वमा इदम्। आसीदिति प्राप्ते ॥ [ अस्तेर्लङ्तिप् ईडभावः। अपृक्तत्वाद्धल्ङ्यादिलोपः। रुत्वविसर्गौ। संहितायां तु—'भोभगो—' (१६०) इति यत्वम्। लोपः शाकल्यस्य (६७) इति यलोपः। गोभिरक्षाः। सिच् इडभावश्छान्दसः। अट्। शेषं पूर्ववत् ]॥ 'ह्रस्वस्य गुणः' (२४२)। 'जसिच' (२४१) 'जसादिषु छन्दसि वावचनं प्राङ् णौ चङ्युपधायाः' (वर्तिक)॥ अधा शतक्रत्वो यूयम्। शतक्रतवः। पश्वे नृभ्यो यथा गवे। पशवे॥ "नाभ्यस्तस्याचि'—(२५०३) इति निषेधे बहुलं छन्दसीति वक्तव्यम्" (वार्तिक)॥ आनुषग् जुजोषत्।

The augment ईट् directed by the rule 'अस्तिसिचः—'(2225) takes place variously i.e may or may not take place in vedic literature. Thus 'सर्वमाः—'All this was present (आः being equivalent to आसीत्). The procedure is thus—अस्+लङ् तिप्= आ अस् ति by 'आडजादीनाम्'—शप् being dropped as अस् belongs to the अदादि class. Then by 'अकः सवर्णे—'we have आस ति. Now the augment ईट् is to be added before ति by 'अस्तिसिचः—' is barred by 'बहुलम्—'this rule. Then 'इतश्च' taking effect we have आस् त् of which the तकार being 'अपृक्त' disappears by 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' (254). The resulttant form then is आस् which again is transformed into 'आर्' by 'ससजुषोरुः' (162) and then into 'आः'—र making room for a विसर्ग. But in the संहितापाठ (as in the text) this र or रु is changed into य by 'भोभगो—'(167) which (the यकार) again is dro-

pped by 'लोपः शाकल्यस्य' (67). गोभिरक्षाः—Break up as गोभिः + अक्षाः ( you live or lived with i.e possessed with cows ). अक्षाः is the second person singular in लुङ् of the root क्षि निवासगत्योः ( भ्वादि ). Thus अट् + क्षि + सिच् + सिप् = अक्षैस्स्—वृद्धि of क्षि being due by 'सिचि वृद्धिः परस्मैपदेषु'. Now the augment ईट् due before सिप् by 'अस्ति सिचः—'(2225) being barred by 'बहुलम्—'(the present rule) the (last) सकार disappears by 'हल्ङ्याब्भ्यः—'(252) whence we now have अक्षैस्. The augment इट् due before सिच् by 'आर्द्धधातुकस्येड्वलादेः' (2243) does not operate due to vedic character of the form ( छान्दसत्वात् ). Then अक्षाः by 'लोपः शाकल्यस्य' etc as before ; for इट् disappears after having its own place and thus अक्षाः is done irregularly (?). 'ह्रस्वस्य गुणः' (242) and 'जसि च' (241) these two rules were expected to operate on the base शतक्रतु (dealt with herein)—But this operation is barred by the Varttika 'जसादिषु छन्दसि वावचनम्—'which means 'the operation intended by the rule 'वा छन्दसि' (3515—6.1.106) when जस् ( सु, औ, जस् ) etc follow extends as far as the rule i.e before the rule 'णौ चङ्युपधाया ह्रस्वः' (7.4.1) Thus in अधा शतक्रत्वो यूयम् ( शतक्रत्वः + यूयम् ) the term शतक्रत्वः is first case ending plural of शतक्रतु. The form thus standing शतक्रतु + जस् the only result expected was शतक्रतवः by गुण by 'जसि च' (241). But by this Varttika we have शतक्रत्वः ( by यणादेश—शतक्रतु + अस् = शतक्रत्वस् = शतक्रत्वः ) also as an optional one against शतक्रतवः. पश्वे—पशु + ङे = पश्व् + ए = पश्वे ( by यणादेश ) and पशवे by गुण by 'घेर्ङिति' (245). Now, in the case of the root जुष् which is here of जुहोत्यादि class ( for जुषी प्रीतिसेवनयोः=तुदादि ), the Varttika

runs 'बहुलं छन्दसीति वक्तव्यम्' directing thereby that the गुण as above may or may not operate with reference to vedic language. Thus—जुजोषत् = जुष् + श्लु (छान्दस) + लेट्, तिप् = जुजुष् ति + जुजोष् ति by गुण by this Varttika जुजोष् त् by 'इतश्च लोपः—' = जुजोषत् with अट् prefixed before त् by 'लेटोऽडाटौ'.

मित—। बहुलमिति। 'अस्तिसिचः—' (७।३।९६) इति वर्तते। तस्य चायमर्थः—विद्यमानात् सिचः अस्तेश्च परस्य अपृक्तस्य हल ईडागमः स्यादिति। एवम् अस + लङ् तिप् इति स्थिते। 'इतश्च—' इति तिप इकारलोपात् 'आडजादीनाम्' इति धातोराडागमे च आ अस त् इति जातेऽनेन अपृक्तस्य (तकारस्य) ईडागमे प्राप्ते 'बहुलं छन्दसि' (७।३।९७) इति प्रवर्तते। तेनापृक्तस्य ईडागमो न। ततश्च 'हलङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' (२५२) इत्यपृक्तलोपात् 'अकः सवर्णे—' इति सवर्णदीर्घे च आस इति स्थिते रुत्वविसर्गौ। तत्र 'आः' इति पदम्। अथ 'सर्वमाः—' इति संहितापाठे विशेषमाह—संहितायां त्विति। यलोप इति। पक्षे इदम्। पक्षान्तरे तु यलोपाभावात् 'सर्वमायिदम्' इति विभाव्यम्। इदं सर्वम् आः आसीदिति मन्त्रार्थः। गोभिरक्षा इति—गोभिः + अक्षाः इतिच्छेदः। क्षि निवासे भ्वादिः। तस्य लुङि सिपि 'सिचि वृद्धिः—' इति वृद्धौ आयादेशे ततः सिच इडभावे अडागमे च छान्दसम् रूपम्। शेषं पूर्ववदिति। रुत्वविसर्गादि आ इत्यत्र यथा तथात्रापीति भावः॥ 'जसस्य गुणः' (२४२) इति 'जसि च' (२५१) इति च। उभयमपि गुणविषयकं शास्त्रम्। तदेतदुभयमपि वैदिक विभागे वैकल्पिकतया प्रवर्तत इत्याह—'जसादिषु छन्दसि वावचनम्—' इति वार्तिकमिदम्। 'वा जसि' (२५१५—६।१।१०६) इति यच्छास्त्रं विहितं तत् 'णौ चङ्युपधाया ह्रस्वः' (७।४।१) इत्यस्मात् प्रागेव प्रवर्तते नान्यत्रेति वाच्यमिति शेषः छन्दसि विषये इत्यर्थः। शतक्रत्वो यूयमिति। शतक्रत्वः + यूयम् इतिच्छेदः। शतक्रतु + जस् इति स्थिते 'जसि च' (२४१) इति प्राप्तस्य गुणस्याभावे 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः प्राप्तः। सोऽपि 'वा छन्दसि' इति वचनादत्र न प्रवर्तत इति यणादेशः। पक्षे गुणेन शतक्रतव इति। जसादिष्वित्यादि शब्दादन्यताह—पक्षे इति पश्च के

इति स्थिते 'पुगन्तलघूपधस्य च' (२४५) इति गुणे नित्ये प्राप्ते विकल्पः। एवं यथादेशे (पश्य+ए) पश्ये इति॥ तदभावे तु गुणे सति पश्यवे इति। अथ जुजोषत् इत्यत्र गुणे: 'नाभ्यस्तस्याचि पिति सार्वधातुके' (२५०२) इति गुणाभावे गुणविध्यर्थमाह— 'बहुलं छन्दसि—' इति वार्तिकमिदम्—न तु सूत्रम्। जुषी प्रीतिसेवनयोः इति तौदादिको धातुः अत्रच्छान्दसः श्लु व्यत्ययः। ततः जुष्+श्लु लेट् तिप् इति स्थिते श्लावादिना जुजुष् तिप इति स्थिते 'इतश्च लोपः—' इति तिप इकारलोपात् अनेन (वार्तिकेन) गुणे च जुजोष्त् इति जाते 'लेटोऽडाटौ' इति तिपोऽडागमः। ततोऽरूपम्।

## २५८७। नित्यं छन्दसि॥ ७।४।८॥

**टी—। छन्दसि विषये णौ * चङ्युपधाया ऋवर्णस्य ऋन्नित्यम्। अवीवृधत्।**

[* णौ इत्यस्यावश्यकत्वेऽपि न सार्वत्रिकः पाठः।]

In the matter of vedic literature the substitute ऋत् or ऋकार is persisting in the place of a ऋकार remaining in the penultimate of a root followed by चङ् in णिच् i.e after the root has undergone the operation of णिच्. Thus अवीवृधत्—वृध्+णिच् लुङ् तिप्=अट्+वृध+णिच्+चङ्+तिप्=अ वृध् वृध् चङ् तिप—द्वित्व due to चङ् by 'चङि'. Here गुण in connection with णिच् was expected, but 'नित्यंछन्दसि' intervening that, does not operate; णिच् elides by 'णेरनिटि' (2313). Now by 'उरत्' (2244) and 'हलादि—' (20) we have अवरवृध. Then by हलादिशेष, सन्वद्भाव by 'सन्वल्लघुनि—' (2216), 'सन्यतः' (2217) and 'दीर्घोलघोः' (2218) as also 'हलङ्याब्भ्यो—' we finally have अवीवृधत् against अवीवृधत्—अववर्धत् the classical forms arrived at by the rule 'उर्ऋत्' (2567) where the term 'वा' from 'जिघ्रतेर्वा' (7.4.6) follows.

मित—। नित्यमिति। 'उर्ऋत्' (७।४।७) इत्येतत् सर्वमपि सूत्रमिहानुवर्तते।

'णौ चङ्युपधायाः—' (७।४।१) इत्यतो णौ चङ्युपधाया इति च तदाह—छन्दसि विषये णावित्यादि। अवीवृधदिति। वृध्+णिच् इति स्थिते 'णिश्रि—' इति कर्तरि चङ्। तस्मिन् इति द्वित्वं प्राप्नोति। एवमिह कार्यद्वयं प्रसज्यते। णिचि परतो लघूपधस्य वृधेः गुणः इत्येकम्। 'नित्यं छन्दसि' इति चङ्परे णौ ऋदुपधस्य ऋदुपधत्वमेवेति द्वितीयम्। तत्र 'पुगन्तलघूपधस्य च' (७।३।८६) इत्यस्य प्राप्तौ 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इति परिभाषया 'नित्यं छन्दसि' (७।४।८) इत्यस्य परत्वाच्छन्दसि विषये नित्यत्वाच्च ऋदादेशः। ततो वृध् इत्यस्य द्वित्वम्। अडागमः। 'णेरनिटि' (२३१३) इति णिलोपः। 'उरत्' (२२४४) इत्यभ्यासस्य गुणे 'उरण्—' (७०) इति रपरत्वं हलादिशेषे, चङ्परतया सन्वद्भावात् 'सन्यतः' (२३१७) इत्यभ्यासस्य इत्त्वे तस्य 'दीर्घो लघोः' (२३१८) इति दीर्घे इत्येवेति प्रत्ययेकारलोपे च अवीवृधत् इति सिद्धम्। लोके तु 'उर्ऋत्' (७।४।७) इत्यत्र 'जिघ्रतेर्वा' (७।४।६) इत्यतो वेत्यस्यानुवर्तनात् अवीवृधत् अववर्धत् इति रूपद्वयम् इति विवेचनीयम्।

३५८८। न छन्दस्यपुत्रस्य ॥ ७।४।३५ ॥

टी—। पुत्रभिन्नस्यादन्तस्य क्यचि ईत्वदीर्घौ न। मित्रयुः। 'क्याच्छन्दसि' (३१५०) इति उः। अपुत्रस्य किम्? पुत्रीयन्तः सुदानवः॥ 'अपुत्रादीनामिति वाच्यम्' (वार्तिक)॥ जनीयन्तोऽन्वग्रवः'—जनमिच्छन्त इत्यर्थः।

ईत्व i.e ईकार (दीर्घ) and दीर्घ do not replace the अकार final in a base other than 'पुत्र' when the affix क्यच् is appointed after the same in vedic literature. Thus मित्रयुः (wishing a friend). The procedure is this—मित्रम् आत्मनः इच्छति इति मित्र+क्यच् gives मित्रय (and not मित्रीय the classical one by 'क्यचि च' 2650), as the vedic कामना form; then मित्रय+उ by 'क्याच्छन्दसि' (3150). पुत्रीयन्तः—पुत्र+क्यच्+अत plural. Here अ (final) of पुत्र has been replaced

by ई by 'क्यचि च' (2658). 'अपुत्रादीनाम्—' (Varttika). It has to be said that the term अपुत्रस्य in the rule presents a narrow scale and therefore should be replaced by the more comprehensive term अपुत्रादीनाम्। Thus 'जनीयन्तः' etc.

मित्र—। न छन्दसि इति। 'अकृत्सार्वधातुकयोः दीर्घः' (७।४।२५) इत्यतो दीर्घ इत्यनुवर्तते। 'ईघ्राध्मोः' (७।४।३१) इत्यतो ई इति। 'अस्य च्वौ' इत्यतोऽस्येत्यनुवर्तमानम् अदन्तस्येत्यर्थकम् 'येन विधिः' इति न्यायात्तथा 'क्यचि च' (७।४।३३) इत्यतः क्यचि इति चानुवर्तते। तदेतत्सर्वं परिभाव्य विवृणोति— पुत्रभिन्नस्य अदन्तस्येत्यादि। छन्दसि विषये इति शेषः। अपुत्रस्येत्ययं पर्युदास-विधिरिति 'पुत्रभिन्नस्ये'त्यनेन दर्शितम्। 'इह यदि आनन्तर्यादीत्वमात्रं प्रतिषिध्येत तदा 'अकृत्सार्व—' इति दीर्घः स्यात्। अपवादे पुनरुत्सर्गस्थितेः। अत ईत्वदीर्घौ उभावपि नेत्युक्तम्' इत्याहुः। मित्रयुरिति। मित्रमात्मन इति मित्र क्यच् इति स्थिते 'कचावितौ' इत्युक्ते 'क्यचि च' इत्यस्याप्रवृत्त्या अकारस्य ईत्वाभावात् मित्रय इति नामधातुः। तस्मात् 'क्याच्छन्दसि' इति उप्रत्ययः। पुत्रीयन्त इति। पुत्रमात्मन इच्छन्तीति लटः झादेशे पुत्र क्यच् झ इति स्थिते क्यचिचेति ईत्वे 'उगिदचाम्—' इति नुम्। 'अपुत्रादीनाम्—' इति वार्तिकमिदम्। सूत्रे अपुत्रस्येत्यपनीय अपुत्रादीनामिति वक्तव्यम् इत्यर्थः। तदेवास्य सूत्रस्य अव्याप्तिदोषापहार परमेतद् वार्तिकमिति द्रष्टव्यम् आदिपदेनान्येषामपि संग्रहात्। हरदत्तादयस्तु 'आदिपदस्य प्रयोजनान्तरं मृग्यमित्याहुः। जनीयन्त 'इत्येवदस्य' वार्तिकोक्तस्य उदाहरणान्तरदर्शनादिदमुक्तम् हरदत्तादिभिरिति द्रष्टव्यम्। जनीयन्त इति। पुत्रीयन्त इतिवत्।

**२५८८। दुरस्युर्द्रविणस्युर्वृषण्यतिरिषण्यति ॥ ७।४।३६ ॥**

**दौ—। एते क्यचि निपात्यन्ते। भाषायां तु उप्रत्ययाभावात् दुष्टीयति। द्रविणीयति। वृषीयति। रिष्टीयति।**

These words viz दुरस्युः, द्रविणस्युः, वृषण्यति and रिषण्यति are irre-

-gularly formed in vedic literature in conjunction with the affix क्यच्. The method of treatment in each is as follows—

The base दुष्ट in 'दुष्टम् आत्मन इच्छति' is replaced by the term दुरस्. Hence दुरस्+क्यच्=दुरस्य is the nominal root ( नामधातु ). Then by 'क्याच्छन्दसि' (3150) we have दुरस्य+उ=दुरस्युः wishing an evil ( person ) for himself. In the same sense as above द्रविण +क्यच्=द्रविणस्+यु—द्रविण being replaced by द्रविणस्. Then द्रविणस्य ( नामधातु )+उ as before=द्रविणस्युः wishing wealth for himself. वृषम् आत्मन इच्छति इति वृष+क्यच्=वृषण+य्—वृष being replaced by वृषण। Then वृषण्य नामधातु+लट् तिप्। Similarly रिषण्यति where the original base रिष्ट ( meaning good ) hasbeen replaced by रिषण् in connection with क्यच्. Then लट् तिप् ( =wishes good for himself). As in भाषा language, the affix उ after a base taking क्यच् is wanting which is clear from 'क्याच्छन्दसि', we have then दुष्टीयति, द्रविणीयति etc in order ( as in the text ), ईकार in each case being accounted for by 'क्यचि च' (2658). The sense of the vedic दुरस्युः and द्रविणस्युः however may be attained by adding तृच् or तृन् to the nominal bases दुष्टीय and द्रविणीय ( दुष्टीयिता and द्रविणीयिता ).

मित—। दुरस्युरिति। एते इति। 'क्यचि—' (७।४।३६) इत्यधिकृतं वर्तते। तेनैवमुक्तं क्यचीति। दुरस्युरिति। दुष्टमात्मन इच्छति इति विग्रहे दुष्ट+क्यच् इति स्थिते दुष्टशब्दस्य दुरस् इत्यादेशः। ततो दुरस् य इति जाते 'क्याच्छन्दसि' (३१५२) इत्यु प्रत्ययः। एवम् द्रविणशब्दस्य द्रविणस् इत्यादेशे द्रविणस्युरिति। तथा वृषमात्मन इच्छति इति विग्रहे वृषशब्दस्य वृषण् इत्यादेशः। ततो वृषण्य इति जाते लट् तिप्॥ रिष्टशब्दो मङ्गलवाची। तस्य प्रागवदर्थे क्यचि परे रिषणादेशो निपात्यते। भाषायां त्विति। एतच्च 'क्याच्छन्दसि' इति

शप्श्यन्नचो—' इति शबादेशः। प्रथमाबहुवचनम्। अघायव इति। अघशब्दः पापवाची। [ अस्त्री पङ्कं पुमान् पाप्मा पापं किल्बिषकल्मषम्। कलुषं वृजिनैनो-ऽघमंहो दुरितदुष्कृतम्॥ इत्यमरः ]। अघं परेषाम् इच्छति इति विग्रहे अघ+क्यच् इति क्यचिविहितेऽनेनाघशब्दस्यादादेशे अघाय इति नामधातुः। 'छन्दसि परेच्छायां उपसंख्यानम्' इति 'बहुलं छन्दसि' (३४१९—३।२।८८) इति वार्तिकात् अघशब्दात् परेच्छायां क्यच्। ततः क्यजन्तात् अघाय इत्यस्मात् 'क्याच्छन्दसि' (२१५०) इत्युप्रत्ययः।

न छन्दसीति। अयं भावः। ननु 'अश्वाघस्यात्' इत्येतत् सूत्रं व्यर्थम्। अत्र हि अश्व क्यच, अघ क्यच इति स्थिते क्यचः सार्वधातुकत्वाभावेनार्द्धधातुकत्वात् 'अकृत् सार्वधातुकयोः' (२२९८) इति दीर्घप्राप्त्या अश्वाय अघाय इति नामधातुद्वयस्यापि उपलम्भात् इति चेदत्राह—इति निषेधो नेत्त्वमात्रस्य किन्तु दीर्घस्यापि इति। ततश्च 'अकृत्सार्व—' इत्यस्याप्राप्त्या 'अश्वाघस्यात्' इति सूत्रं सार्थकमेव। ननु चैवमपि विनिगमनाभावादेतत् चिन्त्यफलम्। किञ्च 'न छन्दसि—' इत्यत्र ईत्वमात्रस्यैव निषेध उत 'अकृत् सार्व—' (२२९८) इति प्राप्तस्य दीर्घस्यापीति सन्देहः। तत्राह—अत इदमेव सूत्रं ज्ञापकमिति। यदि तत्र ('न छन्दसि—' इत्यत्र) ईत्त्व-मात्रस्यैव निषेधो विवक्षितः स्यात् न पुन'रकृत्—' इति प्राप्तस्य दीर्घस्यापि तदा 'अश्वाघस्यात्' इति व्यर्थः स्यात्। तेनैवात्त्वस्य सिद्धेः। यदेवं सिद्धे सति पुनरिह आत्त्वं विदधाति तज् ज्ञापयत्याचार्यः 'न छन्दसि—' इत्यत्र 'ईत्त्वदीर्घयो'रुभयोरपि निषेध इति भावः।

३५८१। देवसुम्नयोर्यजुषि काठके॥ ७।४।३८॥

दी—। अनयोः क्यचि आत् स्याद् यजुषि कठशाखायाम्। देवायन्तो यजमानाः। सुम्नायन्तो हवामहे। इह यजुःशब्दो न मन्त्रमात्रपरः किन्तु वेदोपलक्षकः। तेन ऋगात्मकेऽपि मन्त्रे यजुर्वेदस्थे भवति। किं च ऋग्वेदेऽपि भवति। स चेन्मन्त्रो यजुषि कठशाखायां दृष्टः। यजुषीति किम्? देवान् जिगाति

सुम्नयुः। बह्वृचानामप्यस्ति कठशाखा। ततो भवति प्रत्युदाहरणम् इति हरदत्तः।

The term काठके ( कठ+वुञ् ) in the rule denotes the Katha school ( or कठशाखा ) of the Yajurveda. The Yajurveda has four main Subdivisions or schools viz (1) Katha ( कठ or काठक ) (2) Kalapa or Maitrayaniya ( कलाप ( कालापक ) or मैत्रायणीय ) (3) Taittiriya ( तैत्तिरीय ) and ( Vajasaneyinas ( वाजसनेयी ). Of these four schools the Katha school is here spoken of ; the rule means—

In the Katha school of the Yajurveda, 'आत्' is the final substitute of the terms देव and सुम्न (wealth) when the affix क्यच् follows. Thus 'देवायन्तः—' (Sacrificers wishing gods by themselves) and 'सुम्नायन्तः—' (We invoke the gods with a view to having wealth). Proceed, for the method as before.

देव etc—here (in the rule) the term यजुस् does not signify मन्त्र only i.e such मन्त्रs as are to be met with in the Yajurveda only, but it comprehensively means the whole of the Vedas. Thus if a मन्त्र, or a ऋक् as it is usually called when occuring in the ऋग्वेद is to be found in the यजुर्वेद (as also in the ऋग्वेद which is the origin of all मन्त्रs or ऋकs) then the substitute आत् provided for by this rule will hold good in the cases of the words ( देव and सुम्न.) । Moreover, the rule will also apply in the cases of such words appearing in the ऋग्वेद provided the मन्त्र ( or ऋक् ) containing such terms are to be met with in the Katha school (also) of the yajurveda. Why 'यजुषि' in the rule? Witness—सुम्नयुः without 'आत्' as the final substitute of सुम्न,

although taking the affix क्यच् (and then उ by—क्याच्छन्दसि ). The term सुम्न here does not take 'आत्' because although the मन्त्र 'देवान् जिगाति—' ( one disirous of wealth goes to gods i.e prays to them ) occurs in the Katha school yet the latter (Katha school) not belonging to the Yajurveda but to the school of the बह्वृच ( followers of the ऋग्वेद ), according to Haradatta, with a subdivision called the Katha school. Hence the term सुम्नयुः forms the counter-example here.

मित—। देवसुम्नयोरिति। क्यचि वेत्यतोऽनुवृत्तिः प्रागवत्। पूर्वसूत्रात् 'आत्' इति चानुवर्तते। तदाह—अनयोः क्यचि आदिति। सूत्रे काठके इत्यस्य विवरणम्। कठशाखायामिति। कठानाम् एव धर्मः समूहो वा इत्यादर्थे काठकम्। सूत्र [ "चरणेभ्यो धर्मवत्" ]। यजुर्वेदस्तावच्चतुर्धा प्रधानतो विभिन्नः—काठक-कालापक मैत्रायणीय वाजिसनेयीभेदात्। तत्र यजुर्वेदस्य काठकशाखायां दृष्टश्चेन्मन्त्रो भवति तदा तस्मिन् मन्त्रे प्रयुक्तयोर्देवसुम्नयोः शब्दयोः क्यचि परत आदित्यन्तादेशः विधीयते नान्यत्रेति स्पष्टार्थः। देवायन्त इति। देवान् आत्मन इच्छन्तीति विग्रहे प्रागवत्। एवं सुम्नायन्त इति। सुम्नमिति धननाम। तेन धनम् इच्छन्तः इवामहे याचामहे इत्यर्थः।

इहेति। इह अस्मिन् सूत्रे इति शेषः। न मन्त्रमात्रपर इति। यजुःशब्दस्य मन्त्रमात्रं नार्थः किन्तु सामान्येन वेदार्थोऽपि इत्यर्थः। ततः किमित्यत आह—तेनेति। ऋगात्मकोऽपि मन्त्र इति। मन्त्रो द्वेधा भिद्यते। तत्र एक ऋगाख्यः। द्वितीयो यजुराख्यः। अवेदमवधेयम्—प्रायेण सर्व एवमन्त्रा ऋग्वेदस्थाः। यजुर्वेदादिष्वपि तु ततः संगृह्य पठिताः। तस्माद्, यो मन्त्रः ( ऋगाख्यः ) ऋग्वेदे पठ्यते स चेद् यजुर्वेदे दृश्यते तदा तादृशमन्त्रस्थदेवसुम्नयोः क्यचि आत् स्यादिति वाक्यशेषः। नन्वेवं यदि ऋग्वेदस्य एव मन्त्रो यजुर्वेदस्थ सन् सूत्रकार्यभाक् भवति तर्हि ऋग्वेदस्थोऽपि किं तथाभूतफलभाक् न स्यादित्यत आह—किं चेति। किमविशेषेण ? नेत्याह—स चेन्मन्त्र इति। ऋग्वेदस्थो मन्त्रो यजुर्वेदीयः कठशाखास्थश्चेत् तदायं मन्त्रो न केवलं काठके अपि तु ऋग्वेदेऽपि सूत्रफलभाक् भवति। किन्तु यो मन्त्र ऋग्वेदे

एव दृश्यते न पुनर्यजुर्वेदस्थकठशाखायामपि तादृशे मन्त्रे वर्त्तमानौ देवसुम्नशब्दौ क्यचि आत्वं न प्राप्नुत इति सरलार्थः। अतएव उदाहरति देवान् जिगाति— इति। सुम्नयुर्धनमात्मन: इच्छन् देवान जिगाति गच्छतीति मन्त्रार्थः। 'बहुलं छन्दसि' इति गमेः शुरभ्यासकार्यम्। अनुनासिकलोपः। 'लिटोऽजाटौ' इत्याट्। अत्र सुम्नयुरित्यत्र क्यजन्तादुप्रत्ययः। तत्र क्यचि परे 'देवसुम्नयोः—' इत्यनेन आत्वं प्राप्तम्। तत् कथं नेत्यत्राह—बह्वृचानामप्यस्ति कठशाखेति। बह्वृच इति ऋग्वेदीय शाखाभेदः। ततश्च मन्त्रस्य यजुर्वेदीय कठशाखायामदर्शनात् आत्वाप्राप्त्या सुम्नायुरिति न। एवञ्च 'यजुषि' इति सूत्रं सार्थकमेवेति दर्शितम्। प्रत्युदाहरणमिति। विरुद्धोदाहरणमित्यर्थः।

२५८२। कव्यध्वरपृतनस्यर्चि लोपः ॥ ७।४।३९ ॥

टी—। 'कवि' 'अध्वर' 'पृतना' * एषामन्त्यस्य लोपः स्यात् क्यचि ऋग्विषये। सपूर्वया निविदा कव्यतायोः। अध्वर्युं वा मधुपाणिम्। दमयन्तं पृतन्युम्॥ 'दधातेर्हिः' (३०७६)। 'जहातेश्च क्त्वि' (३३३१)—।

In the matter of ऋक् or vedic hymn, the final (vowel) of the words कवि, अध्वर and पृतना disappears when the affix क्यच follows. Thus कव्यतायोः—Break up as कव्यत+आयोः and derive कव्यत as कव्य+लोट्त (second person plural)—कव्य being the nominal root after the elision of the इकार of कवि and the addition of य of क्यच्. अध्वर्यु—The term अध्वर means यज्ञ ( a sacrifice). Then अध्वरमात्मन इच्छति gives अध्वर+क्यच = अध्वर+य = अध्वर्य the nominal root after the elision of the final अकार. Then अध्वर्य+उ = अध्वर्यु ( one desirous of a sacrifice) with the affix उ

[* 'कवि' इत्यादिशब्दोऽत्र सपूर्वक व्याख्यानं न सर्वत्र दृश्यते।]

by 'क्याच्छन्दसि' (3150). But the term अध्वर्यु meaning the priest of the यजुर्वेद is rather derived irregularly with the affix कु under 'मृगय्वादयश्च'. पृतन्युम् (one (obj. case) desirous of पृतना or an army) पृतनाम् आत्मन इच्छति gives पृतना + क्यच् = पृतन्य with the elision of आ. Then पृतन्य + उ as before. दधातेर्हिः etc—Both these rules are to act upon the next rule—

मित—। कव्यध्वरेति। कवि + अध्वर पृतनस्य + ऋचि इतिच्छेदः। पृतनाशब्दः सेनावाची। तस्य सूत्रे 'पृतन' इत्यकारान्तेन निर्देशः। अनुवृत्त्या प्राग्वत् क्यचि इति लभ्यते। तदाह—कवि, अध्वर, पृतना एषामित्यादि। कव्यतायोरिति। कव्यत + आयोरितिच्छेदः। तत्र कव्यतेति कविमात्मन इच्छतीति विग्रहे क्यचि कविशब्दस्यान्त्यलोपात् कव्य इति नामधातोर्लोटि मध्यमपुरुषबहुवचने रूपम्। अध्वर्युं वेति। अत्र अध्वर्युं इति अध्वरमात्मन इच्छतीति क्यचि अन्त्यलोपात् (अध्वर्य) इति नामधातोः क्याच्छन्दसीति उप्रत्यये सिद्धम्। 'यज्ञेच्छुम्' इति तदर्थः। यजुर्वेदीय पुरोहितवाची तु अध्वर्युशब्दः मृगय्वादिगणपाठात् कुप्रत्ययसिद्ध इति मनोरमा। पृतन्युमिति। प्राग्वत् पृतन्य इति नामधातोरुप्रत्यये सिद्धमेतदिति द्रष्टव्यम्। 'सेनाभिलाषिणम्' इति च तदर्थः।

दधातेर्हिरिति। अस्मात् सूत्रादिहिरित्यनुवर्त्य 'जहातेश्च—' इति तदव्यवहितपरवर्तिसूत्रे तदुपस्थितेः क्त्वायां हिभावस्य नित्यत्वे प्राप्ते छन्दसि विकल्पार्थमाह—

## ३५८३। विभाषा छन्दसि ॥ ७।४।४४ ॥

## टी—। हित्वा शरीरम्। हात्वा वा *।

In vedic language the substitute हि only optionally replaces the root हा when the affix क्त्वा follows. Thus हित्वा or हात्वा (leaving). Here some reads 'हीत्वा' in place हात्वा. It

[ * 'हीत्वा' इति अपि पाठः ]

(this reading) however is more grammatical as it is accounted for by the rule 'घुमास्थागापाजहातिसां हलि' (2462) directing the substitute ई in place of हा as क्त्वा is कित्। The from हात्वा therefore is formed by vedic irregularity (छान्दस)।

मित—। विभाषेति। 'दधातेर्हिः' (७।४।४२) 'जहातेश्च क्त्वि' (७।४।४३) इत्यतो हिः, जहातेः, क्त्वि इत्यस्य चानुवृत्तिः—जहातेर्हिरादेशो वा स्यात् क्त्वाप्रत्यये परतश्छन्दसि विषये इति सूत्रार्थः। हात्वा इति आदेशाभावपक्षे इदम्। तत्र 'घुमास्था—' (२४६२) इति ईत्वं प्राप्तम्। प्रत्ययस्य कित्त्वात्। छान्दसत्वात्तु तन्न क्रियते। 'हीत्वा' इति अपि पाठः। स एव च ज्यायान्। व्यवस्था-सिद्धाव्यवस्थासिद्धयोः पूर्वतरस्यैव युक्तत्वाद् स्वीकाराच्च। तत्र घुमास्थेतीत्वम्।

२५८४। सुधितवसुधितनेमधित धिष्व धिषीय च ॥७।४।४५॥

टी—। 'सु' 'वसु' 'नेम' एतत्पूर्वस्य दधातेः क्तप्रत्यये इत्त्वं निपात्यते। गर्भं माता सुधितं वक्षणासु। वसुधितमग्नौ। नेमधिता न पौंस्या। क्तिन्यपि दृश्यते। उत श्वेतं वसुधितिं निरेके। धिष्व वज्रं दक्षिण इन्द्र हस्ते। धत्स्वेति प्राप्ते। सुरेता रेतो धिषीय। आशीर्लिङि इट्। 'इटोऽत्' (२२५७)। धासीयेति प्राप्ते॥ 'अपो भि' (४४२)। 'मासश्छन्दसीति वक्तव्यम्' (वार्तिक)। माद्भिः शरद्भिः॥ 'स्ववःस्वतवसो-रुषसश्चेष्यते' (वार्तिक)। स्ववद्भिः। अवतेरसुन्। शोभनमवो येषां ते। तु इति सौत्रोधातुः। तस्मादसुन्। स्वं तवो येषां तैः स्वतवद्भिः। समुषद्भिरजायथाः। 'मिथुनेऽसिः'। 'वसेः किच्चे'त्यसिप्रत्यय इति हरदत्तः। पद्मपादीरीत्या तु 'उषः कित्' इति प्राग्व्याख्यातम्। 'न कवतेर्यङि' (२६४१)—

Of the five words enumerated in the rule the first three ( सुधित, वसुधित and नेमधित ) are irregularly formed with इकार substituted for the आकार of धा when followed by the affix क्त and preceded by the terms सु, वसु and नेम respectively ; and the last two धिष्व and धिषीय, however, are formed with इकार substituted for आ of धा when the root is followed by स्व of लोट् (second person sing), and by सीय of आशीर्लिङ् (first personsing ). 'गर्भं माता—' The mother (preserves) foetus held well ( सुधित ) within her womb ( वक्षणा ). सुधित=सु धा+क्त against सुहित the classical form ; धा being changed into हि by 'दधातेः हिः' (3076). वसुधितम् a कर्मधारय compound वसु ( धनंच ) तद्धितं ( हितञ्च ) = वसु + धा + क्त । Similarly नेमधित half-held ; नेम ( अर्द्धं च ) तद्धितंच कर्मधा. Both these words make a कर्मधा comp—according to Haradatta which ( method ) has been accepted by all including Nagesha. But the vedic commentator ( Sayana who is otherwise known as Madhava) explains the term वसुधित as वसूनां धातारं प्रदातारम् ( the giver of wealth )—Whence it is not clear that he takes it in the way of a षष्ठी compound which is otherwise known as 'शेषषष्ठी समास' (according to Kaiyata and others), for this is an explanation only and not the expounding.

आ of धा, however, is replaced by इ when क्तिन् also follows. Thus वसुधिति—वसु + धा + क्ति ( भावे ). 'धिष्व—etc' hold up, oh Indra, the thunder bolt in your right hand । धा + लोट् स्व—षत्व by 'इण्कोः' and 'आदेशप्रत्ययोः' (213—13). This form is against धत्स्व the classical one of धा + स्व । 'सुरेता रेतः—'one of pure sex-energy should preserve the seed (from being contaminated) ;—धिषीय =

आ + आशीर्लिङ् इट् then 'अत्' by 'अटोऽत्' (2257) whence we now have ध्वि + अ (अल by this rule) = ध्वि + सीयुट् by 'लिङः सीयुट्' (2255) = ध्वि सीय = ध्विषीय by सत्व directed by 'इण्कोः' and 'आदेश—'. The classical form against this, however, is आसीय ॥ 'अपो भि' (442) The sense of this rule is to act upon 'मासश्छन्दसि—' (Varttika). It has to be said (under the rule 'अपोभि') that the final of the substitute मास् (for मास) is replaced by त् when भि follows. Thus मास + भिः = मास् + भिस् by 'पद्दन्नोमास्—' (228) = मात् भिः = माद्भिः by जश्त्व। 'स्वः स्वतवसोः—' This is the second Varttika here. This result viz तकार replacing सकार when the affix भि follows is intended to take affect in connection with the terms स्ववस, स्वतवस् and उषस् also. Thus स्ववद्भिः = स्ववस् + भिस् who have excellent protection i.e protect well. Similarly स्वतवद्भिः—स्वतवस् + भिस् where तवस् is formed with the (उणादि) affix असुन् added to the root तु (a root seen in the rule तुरुस्तुशम्यमः सार्वधातुके' and hence सौत्र or belonging to roots mentioned in the सूत्र only). 'समुषद्भिः—'you were born with your companious Haradatta (the author of पदमञ्जरी) derives the term उषस् prefixed with सम् from the root वस् taking the affix असि by the उणादि rule 'वसेः किच'—which means that the root वस् takes the affix असि following from the rule (उणादि) 'मिथुनेसिः पूर्ववच्च सर्वेम्' (उणादि ६७२) and that the affix (असि) is here to be regarded as कित्. From the fact of this procedure we get सम्प्रसारण for वस् by 'वचिस्वपि—'as वस् belongs to the यजादि class. Then by सत्व as before सम् + उषस् = समुषस्; Then समुषस् + भिस् = समुषद्भिः by the second Varttika. But the fact is that the present उणादि

rules do not read the rule 'वसेः किच' under the rule 'मिथुनेऽसिः पूर्ववच्च सर्वम्' (4.672). Thus the illustration of Haradatta is obscure if not objectionable. It is therefore that Bhattoji says पञ्चपादीरीत्या तु etc—. That is, the unadi rules as they are presented to us contain five chapters. (And in the full text of these five chapters the rule वसेः किच is nowhere to be met with. On the other hand), it contains the rule 'उषः कित्' (4.683) after a few intermediate rules under 'मिथुनेऽसिः—'(4.672). And we have explained it accordingly. According to the vedic commentary (वेदभाष्य), however, the sentence 'समुषद्भिः—etc' means—you (fire) were born with you blazing rays सम्—उष्दाहे ( भ्वादि ) + शतृ, where शप् being irregularly (व्यत्ययेन) replaced by श we have समुषत् without गुण ( लघूपध ) as श is ङित्. But this explanation does not, tally with the reading of the Varttika 'उषसः' in 'स्ववःस्वतवसः—'। Thus reluctantly we are to return to Haradatta. 'नकवतेः—'This is to supply 'न' and 'यङ्' for the next rule—

मिद—। सुधित वसुधितेति। एते पञ्च शब्दाश्छन्दसि निपात्यन्ते। तत्र त्रयाणां निपातनप्रकारमाह—सु, वसु, नेम इति। गर्भमिति। माता वक्षणासु कुक्षिप्रदेशेषु सुधितं सुष्ठु धितम् धृतमित्यर्थः गर्भम् रक्षति कालं नीचयति इति शेषः। सु + धा + क्त इति स्थिते दधातेराकारस्य इकारादेशः। लोके तु 'दधातेर्हिः' ( २०७६ ) इति सुहितमिति स्यात्। वसुधितमिति। वसुशब्दपूर्वाद्दधातेः प्राग्वत्। वसु ( धनं ) च तदा धितं चेति कर्मधारयः। वसूनां धातारं प्रदातारमित्यर्थ इति वेदभाष्यमिति मनोरमायां स्थितम्। एतेन वेदभाष्यमते वसुधितमिति शेषषष्ठीसमासनिष्पन्न इति न भ्रमितव्यम्। वसूनामित्यादिरर्थमात्रप्रकाशनपरकत्वेन विग्रहवाक्यत्वायोगादिति विभावनीयम्। नेमधितेति। नेमशब्दपूर्वाद

दधातेः क्तप्रत्ययः। ततष्टाप्। पौंस्या इति। पुंसि भवा इति तत्र भव इति यत्। अत्र इत्विय छान्दसी। नेमशब्दस्तु अर्धवाची। किम्यपि दृश्यत इति। सुधस्वादिपूर्वात् दधातेराकारस्य स्थाने इकार इत्यर्थः। अत एवोदाहरति—वसुधितिमिति। धिष्व वज्रमिति। मन्त्रार्थः स्पष्टः। धिष्वेति दधातेर्लोटि स्वप्रत्यये रूपम्। व्यत्ययेन अत्रैव वा निपातनाद् द्वित्वाद्यभावः। ततो षत्वम्। लौकिकमत्रोदाहरति—धत्स्वेति। धारयेति तदर्थः। सुरेता इति। शोभनं पवित्रमिति यावत् रेतोवीर्य्यं यस्य स रेतः शुक्रं धिषीय धारयेदिति मन्त्रार्थः। तत्र धिषीयेति पदं साधयति। आशीर्लिङि इट् इति। इट् इति प्रत्ययः। आत्मनेपदीय इट् महि मदिङ् इति उत्तमपुरुषत्रिकस्य प्रथमः। तदेवं धा + लिङ् इट् इति स्थिते उत्तरमाह—'इटोत्' इति। धा + अ इति जाते 'लिङः सीयुट्' इति अकारप्रत्ययस्य सीयुटि (सीय् इत्यस्मिन्) कृते सीय इति प्राप्ते आकारस्य निपातनाद् इकारे धिषीय इति। प्राग्वत् षत्वम्॥ 'अपो भि' (४४२) इति सूत्रमिदम्। एतत्सूत्रस्य वार्तिकमुपन्यस्यति—'मासः छन्दसि—' इति। यथा भकारादौ प्रत्यये परतः 'अपोभि' इत्यपः अन्त्यस्य (पकारस्य) तकारोऽन्तादेशः क्रियते तथा मास इत्यस्यापि भवतीति वाच्यमित्यर्थः। तदेवं मास भिस् इति स्थिते पचे 'पद्न्नोमास' इति मास् भिस् इति जाते अनेन वार्तिकेन सकारस्य तकारः। ततो 'झलां जश्—' इति जश्त्वे रूपम्। स्ववः स्वतवसोः—' इति इदमत्र द्वितीयं वार्तिकम्। इदमपि 'अपोभि' इति सूत्रस्थम्। तेन भादौ सुप् प्रत्यये परतः स्ववस्शब्दस्य स्वतवस्शब्दस्य उषस्शब्दस्य चान्त्यस्य तकार इष्यत इत्यर्थः। स्ववद्भिरिति। स्ववस् + भिस् इति स्थिते तकारो जश्त्वं च। स्ववस् इत्यत्र सु शोभनं अवः रक्षणम् अस्येति विग्रहः। तत्र अवस् शब्दं व्युत्पादयति अवतेरसुन्निति। एवं स्वतवस् इति व्युत्पिपादयिषुराह—तु इति सौत्रो धातुरिति। 'तुरुस्तु शम्यमः सार्वधातुके' इति सूत्र एवास्योपलम्भादिति भावः। विग्रहं दर्शयति। स्वमिति। स्वकीयमित्यर्थः। स्वनिष्ठम् इति यावत्। ततो बलमित्यर्थः। सम्सुषद्भिरिति। सम्सुषस् भिस् इति स्थिते प्राग्वत्। अथ 'उषस्' इति पदस्य व्युत्पादने हरदत्तं प्रमाणयति—मिथुनेऽसिरित्युपक्रम्य इति हरदत्त इत्यनेन ग्रन्थेन। 'मिथुनेऽसि पूर्ववच्च सर्वम्' इत्यादि (४।६७२) सूत्रम्। तत्र 'उपसर्गविशिष्टो धातुर्मैथुनं तत्रासुनी-

ऽप्यवादीऽसि स्वरार्थः। शेषं धातोर्यत् कार्यमसुन् प्रत्यये उक्तम् अत्रापि तद्भवतीत्यर्थः इति व्याख्यातम्। वसीः किच्चेति। अस्मिन् सूत्रे पूर्वसूत्रादसि प्रत्ययस्तन्निष्ठकार्यं च उपतिष्ठते इति हरदत्तमतम्। किञ्च वसेर्यजादित्वात् प्रत्ययस्य च कित्त्ववचनाद् 'वचिस्वपि—' (२४०९) इति सम्प्रसारणे उषस् इति सिध्यति। परं 'वसीः किच्च' इत्येतत् सूत्रं 'मिथुनेऽसिः—' इत्यत्रान्यत्र वा पञ्चपादपरिमितेषूणादिसूत्रेषु नोपलभ्यते। तत्र 'उषः कित्' इत्येव सूत्रम्। न तु 'वसीः किच्च' इति। अत आह—पञ्चपादीरीत्या त्विति। उणादयः पञ्चभिः पादैर्विभज्य विवेचिता इति पञ्चपादीत्युक्तम्। अत्र (सधुषद्भिरित्यत्र) हरदत्तमतेन वसन्तीति उषसः। सधुषसः सहवासिनः। तैः संभूय अजायथा इत्यर्थः। वेदभाष्ये तु उषद्भिर्ज्वलद्भिः रश्मिभिः। उषदाहे लटः शत्रादेशे शपि प्राप्ते व्यत्ययेन श इत्युक्तम्। तद् व्याख्यानमन्यत् न तु व्युत्पादनपरमिति हरदत्त एवात्र आश्रयणीय इति सर्वं॥ नकवतेरिति। उत्तरानुवृत्त्यर्थमस्य इहोपन्यासः।

२५८५। कृषेश्छन्दसि ॥ ७।४।६४॥

टी—। यङि अभ्यासस्य चुत्वं न। करीकृष्यते।

In the vedic language चुत्व i.e चकार does not replace the ककार of the अभ्यास of कृष् when the affix यङ् follows. Thus करीकृष्यते (ploughs frequently)—कृष+यङ्+लट्. ते (apply duplication etc, then गुण of the अभ्यास by 'गुणो यङ्लुकोः' and the augment रीक् (री) prefixed to the same (अभ्यास)—'कुहोश्चुः' being barred; करीकृष्यते against चरीकृष्यते the भाषा form.

मित—। कृषेरिति। 'कुहोश्चुः' (७।४।६२) इत्यतश्चुरित्यनुवर्तते। 'नकवतेः—' (७।४।६३) इत्यतो नेति यङ् इति च। अत्र 'लोपोऽभ्यासस्य' (७।४।५८) इत्यतोऽभ्यासस्य इति च। ततः शेषं पुरयन्नाह—यङि अभ्यासस्येत्यादि। करीकृष्यत इति। पुनः पुनः कर्षति इति। लोके तु चरीकृष्यते कृषीवलः इति।

२५८६। दाधर्ति-दर्धर्ति-दर्धर्षि-बोभूतु-तेतिक्तेऽलर्ष्यापनी-फणत्-संसनिष्यदत्-करिक्रत्-कनिक्रदद्भरिभ्रद्-दविध्वतोदविद्युत-त्तरित्रतः-सरीसृपतं-वरीवृजन्मर्मृज्याऽऽगनीगन्तीति च॥७।४।६५॥

दी—। एतेऽष्टादश निपात्यन्ते। आद्यास्त्रयो धृञो धारयतेर्वा। भवतेर्यङ्लुगन्तस्य गुणाभावः। तेन भाषायां गुणो लभ्यते। तिजेर्यङ्लुगन्तात्तङ्। इयर्तेर्लेटि हलादिःशेषापवादो रिफस्य लत्वमित्वाभावश्च निपात्यते। अलर्षि युध्म खजकृत् पुरन्दर। सिपा निर्देशोन तन्त्रम्। अलर्ति दक्ष उत्। फणतेराङ्पूर्वस्य यङ्लुगन्तस्य कर्तरि अभ्यासस्य नीगागमो निपात्यते। अन्वापनीफणत्। स्यन्देः संपूर्वस्य यङ्लुकि शतरि अभ्यासस्य निक्। धातुसकारस्य षत्वम्। करोतेर्यङ्लुगन्तस्याभ्यासस्य चुत्वाभावः—करिक्रत्। क्रन्देर्लुङि च्लेरङ् द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च। कनिक्रदज्जनुषम्। अक्रन्दीदित्यर्थः। बिभर्तेरभ्यासस्य जश्त्वाभावः—बि यो भरिभ्रदोषधीषु। ध्वरतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य विगागमो धातोर्ऋकारलोपश्च। दविध्वतो रश्मयः सूर्यस्य। द्युतेरभ्यासस्य संप्रसारणाभावोऽत्वं विगागमश्च। दविद्युतदीद्यच्छोशुचानः। तरतेः शतरि श्लौ अभ्यासस्य रिगागमः। सहोर्जा तरित्रतः। सृपेः शतरिश्लौ द्वितीयैकवचने रीगागमोऽभ्यासस्य। वृजेः शतरि श्लावभ्यासस्य रीक्। मृजेर्लिटि णल् अभ्यासस्य रुक् धातो युक्। गमेराङ्पूर्वस्य लटि श्लावभ्यासस्य चुत्वाभावो नीगागमश्च। वक्ष्यन्तो वेदागनीगन्ति कर्णम्।

These eighteen words viz दाधर्ति, दर्धर्ति, दर्धर्षि, बोभुतु, तेतिक्ते, अलर्षि, आपनीफणत्, संसनिष्यदत्, करिक्रत्, कनिक्रदत्, भरिभ्रत्, दविध्वतः, दविद्युतत्, तरित्रतः, सरीसृपतम्, वरीवृजत्, मर्मृज्य and आगनीगन्ति etc. are irregularly formed in vedic literature. The irregularity in the treatment of each term is being dealt with in order in the text. In the first three instances ( दाधर्ति, दर्धर्ति and दर्धर्षि ) the underlying root is either धृ ( धृङ् अवस्थाने तुदादि or धृञ् धारणे भ्वादि ) or धृ+णिच. Thus if in the case of दाधर्ति the root is धृञ् भ्वादि then the procedure is thus—धृ+शप्+तिप् ( लट ) =धृ+श्लु+तिप् by 'बहुलं छन्दसि' (3433). Here the परस्मै. affix तिप् irregularly for ते, for धृङ् being ङित्, आत्मनेपद affixes by 'अनुदात्तङित:—' were due after it. Then after द्वित्व by 'श्लौ' the अभ्यास retains 'द' only by 'उरत्' 'उरण्—' and 'हलादि: शेष:'. Thus we now have दधृति=दधर्ति by गुण due to तिप् by 'सार्वधातुकार्द्ध—'2168 =दाधर्ति, the अभ्यास being lengthened irregularly. If the root धृङ् ( अवस्थाने तुदादि ) then श only is replaced by श्लु and the rest is alike. If on other hand the root is धारि ( धृ+णिच् ) then also शप् is replaced by श्लु and णि disappears by 'णेरनिटि' (2313). Then as before. दर्धर्ति—धृ, धृ or धारि+श्लु ( in place शप् or श )+तिप् ( लट ) the precess is as before excepting the irregular lengthenation of the अभ्यास and the addition of the augment रुक्=र् after the अभ्यास (द). दर्धर्षि—धृ धृ or धारि+सिप् proceed as in the second case above. Note that all these forms might be arrived at according to the procedure in यङ्लुक् also. For in यङ्लुक् also the root receives duplication ( द्वित्व ) and गुण etc. by 'सन्यङो:' and 'गुणो यङ्लुको:' etc. The अभ्यास in the first

case ( दाधर्ति ) is irregularly lengthened as before without the persisting ( नित्य ) augment रुक् due by the rules 'रुग्रिकौ च लुकि' (2652) and 'ऋतश्च' (2653). But the next two cases are regular instances of यङ् लुक् excepting the want of चाभ्यासनिपातन as in the case of the first ( दाधर्ति ) of these cases. बोभूतु is an instance of यङ् लुक् ( भू+यङ्लुक्+तु लोट् ) without गुण of the root भू through irregularity ; ( proced in accordance with 'सन्यङो:' गुणोयङ् लुको: etc.)

तेन भाषायाम् etc—The drift is this—The prohibition of गुण here ( in the case of यङ् लुक् etc) could have been effected by the rule 'भूसुवोस्तिङि' (2241) and consequently there was no need of effecting the form बोभूतु through the introduction of irregularity. But this rule ( 'भूसुवोस्तिङि' ) is not brought down here to the effect that the introduction of this irregularity as regards want of गुण may serve as an indication ( ज्ञापक ) which would not otherwise be had, had the want of गुण been accounted for by 'भूसुवो:—' ; for it would apply alike in both cases vedic and classical, and accordingly would effect ( without गुण ) the vedic forms बोभूतु etc and would be alike in the cases of the classical forms = बोभवीति—बोभोति etc (यङ् लुक् forms of भू in लट् तिप् with optional ईट् by 'यङो वा' (2651) which also see in this connection. Hence it is that the rule 'भूसुवो:' is not laid down here and that बोभूतु is effected with the introduction of irregularity as regards want of गुण of भू. Now what is formed by निपातन in the case of vedic forms cannot be expected to be so formed in classical language also. Thus the ushering

of the irregularity suggests that in such cases there will be गुण when classical forms are concerned.

In the instance नेनिक्ते proceed as निज्+यङ्लुक्+ते (लट्) addition of आत्मनेपद affix is by निपातन. द्वित्व and गुण of the अभ्यास; ज of निज=ग by 'चो: कु:' (378), क by the rule 'खरि च' (121). निज receives no guna as the affix 'ते' is ङित् by 'सार्वधातुकमपित्'.

अलर्षि—ऋ (to go)+श्नु+सिप् (लट्)—by द्वित्व due to 'श्लौ' and गुण of अभ्यास as also गुण of the verbal stem (ऋ) by 'सार्वधातुकार्द्ध—' we have अर् अर् सि. Now by 'हलादि: शेष:' we would have अ अर्सि or अ अर्षि (षत्व) but निपातन superseding the rule 'हलादि: शेष:', we have the letter 'ल्' in the room of र्। Thus we how have अल् अर्षि. Then again by 'अर्तिपिपर्त्योश्च' (2423) the अकार in the अभ्यास was to be replaced by इकार but this (इकार) also being set aside by this निपातन (here spoken) we have अलर्षि. From the use of अलर्षि in the rule is not to be understood that the root 'ऋ' meets with so many निपातनs in respect of the form अलर्षि only and this (अलर्षि) is the only instance of the root in the vedic language; on the other hand there are other resultants also such as अलर्ति (ऋ+लट् ति) etc.

कन्यापनीफणद्—Break up as अनु+आपनीफणत्. The term आपनीफणत् is derived as आ फण् (भ्वादि)+यङ्लुक्+शतृ. See text for irregularity here.

संनिष्यदत्—सम्+स्यन्द (स्यन्द प्रस्रवणे भ्वादि)+यङ्लुक्+शतृ. Note the नकार of the root (स्यन्द्) disappears by 'अनिदितां हल उपधाया: क्ङिति' (415) as the affix (शतृ) following is ङित्, for शतृ being शित् or श eliding is to be considered a सार्वधातुक by the rule

'तिङ् शित् सार्वधातुकम्' and consequently it is to fall under the rule 'सार्वधातुकमपित्' and receives the designation of ङित्.

करिक्रत्—कृ + यङ्लुक् + शतृ = कर् + कृ + अत् by 'उरत्' and 'उरद्' after duplication = करि कृ अत् with augment रिक् or रि added after the अभ्यास by the rules 'रुग्रिकौ च लुकि' (2652) and 'ऋतश्च' (2653). Then करिक्रत् by 'इको यणचि' (49).

कनिक्रदत्—क्रन्द् (to weep) + लुङ् तिप् = क्रन्द क्रन्द लुङ् तिप् by duplication effected through निपातन = See Text.

The classical form against the vedic कनिक्रदत् is अक्रन्दीत् with सिच् for च्लि and इट् and ईट् prefixed to सिच respectively, then causing the elision of सिच by the rule 'इट ईटि' (2266).

भरिभ्रत्—भृ + यङ्लुक् + शतृ as in the text. By the force of निपातन the rule 'अभ्यासे चर्च' (2182) does not operate, although the rule is presistent and therefore obligatory, and consequently the अभ्यास (भ) is not replaced by ब and is not गुण. The classical forms against this are बर्भृत्—बरिभृत् and बरीभृद respectively with रुक् (र्), रिक् and रीक् by 'रुग्रिकौ' etc. 'वि यो भरिभ्रत्—' Render it into prose form as—यो विभरिभ्रत्—who nourished or is nourisher of the medicinal plants repeatedly; ओषधीषु being equivalent to ओषधीः (accusative pl.) by व्यत्ययो बहुलम्.

दविध्वतः—The form is first case-ending plural of the प्रातिपदिक दविध्वत् and derived as दविध्वद् + जस् where the augment नुम् (न्) has been prohibited from taking effect by the rule 'नाभ्यस्ताच्छतुः' (427) as the affix शतृ comes after द (वि) ध्व् ध्व् which receives the designation of 'अभ्यस्त' by 'उभे अभ्यस्तम्'—426. Derive दविध्वत् as (ध्वृ कम्पने भ्वादि) + यङ्लुक् + शतृ in place of लट् तिप्)

by श्लु, हलादिशेषः, अभ्यासगुण and जशत्व etc the form is द ध्वृ अत्. Then add the augment विक or वि after द the अभ्यास and drop by force of निपातन the अकार of the root ध्वृ and then add अत्. The classical forms, however, against this are दर्ध्वृत्, दरिध्वृत् and दरीध्वृत् with the augment रुक, रिक and रीक respectively as before. 'दविध्वतो रश्मयः—'The rays of the sum fall (or are) frequently crooked or unstraight outwardly (ह्वर्छ्य = कौटिल्य crookedness).

दविद्युतत्—द्युत् + (दीप्तौ भ्वादि आत्मनेपदी) + यङ् लुक् + शतृ ; after duplication etc the form standing as द्युत् द्युत् अत् the अभ्यास गुण due by 'गुणो यङ्लुकोः' is superseded by the special rule ('अपवाद सूत्र) 'द्युतिस्वाप्योः संप्रसारणम्' (2344) which again is superseded or set aside by निपातन (here) consequently the अभ्यासयकार is left whence दु द्युत् अत् results. Then again by निपातन the उकार of दु (in the अभ्यास portion) is replaced by अ and the form is द द्युत् अत्. Then add the augment (irregular) विक् to form दवि द्युतत्—'लघूपधगुण' due by 'पुगन्त—' (2189) not having taken place as शतृ is ङित्. 'दविद्युतत्···etc' break up as दविद्युतत् + ईदात् + शोशुचानः.

तरित्रतः—तृ + श्लु in place शप् by '—बहुलम्' + शतृ = श्लि, उरत् etc त तृ अत् = तरित्रतः with the augment रिक् added after त (the अभ्यास) and यणादेश। Then तरित्रत् + जस् (first case-ending plural) = तरित्रतः the augment नुम being prohibited by 'नाभ्यस्ताच्छतुः' (427) as before.

सरीसृपतम्—सृप् + श्लु (in place of शप्) + शतृ + श्या sing. After duplication etc, as before, the augment रीक has been added

to the अभ्यास ( व ), गुण of सृप् being prohibited. The augment नुम् due by 'शपश्यनोर्नित्यम्' has been prohibited by निपातन. वरीवृजत्—वृज ( वृजी वर्जने रुधादि ) + श्लु ( in place of श्नम् by 'व्यत्ययो बहुलम्' + शतृ with addition of रीक् to अभ्यास etc as before.

मर्मृज्य—मृज ( मृज् शुद्धौ अदादि ) + लिट णल्, after duplication गुण of अभ्यास मृ ( by उरत् ) etc it stands as म मृज अ—No वृद्धि due to निपातन. Then add the augment रुक or र् after म the अभ्यास and the augment युक्=य after the root itself. The classical form is ममार्ज.

आगनीगन्ति—आ गम + श्लु ( in place शप् by 'बहुलंछन्दसि' ) + लट् तिप् =आग गम्ति—आग ( नीक् ) गन्ति, after duplication etc नीक् ( augment ) has been added after the अभ्यास (ग) which does not turn to ज by 'कुहोश्चु' on the strength of निपातन or thus आ+गम्+श्लु+लट् अन्ति in this case the मकार वा अनुनासिक of गम eliding by 'अनुदात्तोपदेश—' due to ङित्व of अन्ति, 'अतोगुणे' (191) takes effect giving the same आगनीगन्ति. The classical form is आगच्छत वा आगच्छन्ति.

The word इति in the rule indicates that there are other words of vedic origin as these and are irregularly formed in their particular ways. This reflection of Panini on the vedas is enough to show that vedic words are so multifarious in character that they cannot be fully systematised like the classical ones and therefore the rules he sets forth herein explain only a very few of the larger part of the same remaining unexplained before the reader.

मित—। दाधर्ति दर्धर्ति इत्यादि। दाधर्ति, दर्धर्ति, दर्धर्षि, बोभुतु, तेतिक्ते

चलर्षि चापनीफणत्, संसनिष्यदत्, करिक्रत्, भरिभ्रत्, दविध्वतः, दविद्युतत्, तरित्रतः, सरीसृपतम्, वरीवृजत्, मर्मृज्य, आगनीगन्ति इत्यष्टादश शब्दाश्छन्दसि निपात्यन्ते। सूत्रे इतिशब्दोऽनुक्तसमुच्चयार्थः। तेनैवमादयोऽन्येऽपि शब्दा यथायथं निपात्यन्त इति बोध्यम्। एतेन वैदिकशब्दानां नियमतत्त्वं बहुलत्वं चोपदर्शितम्। एतेषु सूत्रोल्लिखितेषु पुनरष्टादशसु शब्देषु केचित् बाहुलकात्तद्गणीय विकरणवर्जं केचित् पुनर्यङ्लुग् युक्तं निपात्यते। अतएवैषु प्रत्येकं निपातनप्रकारं दर्शयितुमाह—चाय्यास्त्वय इति। सर्वं सूक्ष्मं स्पष्टम्। आङ्गलभाषायां विशदीकृतञ्च तत्र न द्रष्टव्यम्।

२५८७। ससूवेति निगमे ॥ ७।४।७४ ॥

दी—। सूतेर्लिटि परस्मैपदं वुगागमोऽभ्यासस्य चात्वं निपात्यते। गृष्टिः ससूव स्थविरम्। सुषुवे इति भाषायाम्।

The term ससूव is irregulary formed in the निगम. That is सू+लिट् णल् of which सू is आत्मनेपदी gets by निपातन the injunction of परस्मै, the augment वुक् and the reading of the substitute अ in place of उ of the अभ्यास 'सु'। गृष्टिः—An once-calved cow gives birth to an old. The classical reading against ससूव is सुषुवे for which see.

मित+। ससूवेति। निगमे (छन्दसि) विषये एतन्निपात्यत इत्यर्थः। अथ निपातनप्रकारं विशिनष्टि—सूतेर्लिटि इत्यादिना। 'लिटि धातोरनभ्यासस्य' इति द्वित्वम्। षूङ् प्राणिगर्भविमोचने इति लुग्विकरणाख्यो धातुः। परस्मैपदमित्यादि। त्रयोऽपि निपातनात्। ससूव+इति इतिच्छेदः। गृष्टिरिति। गृष्टिः सकृत्प्रसूता गौः। सा स्थविरम् स्थूलं सुपुष्टमिति यावत् (वत्सं) ससूवे सूते इत्यर्थः। छन्दसि 'लुङ् लङ् लिट' इति वर्तमाने लिट्। सुषुवेइति भाषायाम् इति। 'आदिश्चभ्यासेन चाभ्यासस्य' इति षत्वम्। सूत्रमिदम् 'दाधर्ति दर्धर्ति—' इत्यत्रैव पठितुं युक्तमिति शब्देन्दुशेखर-कारादयः। 'योगविभागस्य इष्टसिद्ध्यर्था'त्वेनात्र इष्टस्य कस्यचिदप्यदर्शनाद् योगविभागो-न कर्तव्य इति तेषामाशयः।

३५८८। बहुलं छन्दसि ॥ ७।४।७८॥

टी—। अभ्यासस्य इकार स्याच्छन्दसि। पूर्णां विवष्टि। वशेरेतद्रूपम्॥ इति सप्तमोऽध्यायः।

In vedic literature इ is irregularly the substitute for अकार occuring in a reduplicate (अभ्यास) when the affix श्लु follows. The term श्लु as a carrying word we get from the rule 'निजां त्रयाणां गुणः श्लौ' (7·4·75). Thus विवष्टि—वश्+श्लु+तिप् whence by द्वित्व etc ववष्टि was due. The root वश् means to wish (कान्तौ) and is read is अदादि section (वष्टि, उष्टः उशन्ति). The classical form against this is वष्टि (वश्+तिप्).

मित—। बहुलमिति। 'निजां त्रयाणां गुणः श्लौ' (७।४।७५) इत्यतः श्लौ इत्यनुवर्तते। 'भृञामित्' (७।४।७६) इत्यत इत् (इकार) इति च। ततो व्याचष्टे—अभ्यासस्य इकार इति। श्लौ परत इति योजनीयम्। विवष्टि इति। वश कान्तौ (कान्तिरिच्छा) इत्यादादिको धातुः। वश्+श्लु+तिप् इति। वष्टि इति भाषायाम्। पूर्णामिति। अद्रीणां काङ्क्षतीत्यर्थः। सूत्रे बहुलग्रहणादत्वमपि भवति। तेन 'ददाति' इत्यादि वेदेऽपि सिद्धमित्याहुः। इति मितभाषिण्यां सप्तमोऽध्यायः।

# अथ अष्टमोऽध्यायः

**३५९८। प्रसमुपोदः पादपूरणे ॥ ८।१।६ ॥**

**टी—। एषां द्वे स्तः पादपूरणे। प्रप्रायमग्निः। संसमिद्युवसे। उपोप मे परामृश। किं नोदुदु हर्षसे।**

The particles or उपसर्ग प्र, सम, उप and उद् are reduplicated with a view to filling up the foot (of the veda). Although no rule among the preceding five rule of the eighth chapter containing the term 'छन्दसि' yet that the rule is for vedic application is inferred form the fact that classical literature has no such applications as प्र प्र, सम् सम्, उपोप etc although there are such applications as उपर्युपरि, अधोऽधः etc, cp—'नवानधोऽधो बृहतः पयोधरान्' (शिशुपाल 1st.) and 'अधोऽधः पश्यतः कस्य महिमा नोपचीयते' and 'उपर्युपरि पश्यन्तः सर्व एव' etc. Hence Bhatoji has placed the rule in this (vedic) section of the grammar.

मित—। प्रसमुपोद इति। प्रश्च, सम् च, उपश्च, उद् च इत्येषां कृतसमाहारद्वन्द्वानां षष्ठ्यामेकवचने प्रसमुपोदः इति। तत्र 'द्वन्द्वाच्चुदषहान्तात् समाहारे' (९९४) इति समासान्तष्टच प्रत्ययोऽत्र न क्रियते। समासान्तशास्त्राणामनित्यत्वज्ञापनात्। 'सर्वस्य द्वे' (८।१।१) इत्यतो द्वे इत्यनुवर्तते। तदाह—एषां द्वे स्त इति। छन्दसि विषये इति शेषः। न च 'सर्वस्य द्वे (८।१।१) इत्यादि पञ्चसूत्र्यां 'छन्दसि' इति पदादर्शनादिह—'छन्दसि' इति योजनं चिन्त्यमिति वाच्यम्। प्रप्र उपोप इत्यादीनां कृतद्वित्वानां पदानां भाषायां क्वाप्यदर्शनाद् वेदे चोपलब्धेः।

३६०० । छन्दसीरः ॥ ८।२।१५ ॥

टी—। इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः स्यात्। हरिवते हर्यश्वाय। गीर्वान्।

In vedic literature, म of मतुप् is replaced by व when the (मतुप्) comes after a base containing an इकार or रेफ (रकार). Thus 'हरिवते—etc' (Dedicated to Indra who have हरिs or horses of that name). हरि+मतुप्+4थी sing. गीर्वान् having speech; गिर्+मतुप्=गीर्वत्=गीर्वान्, दीर्घ of इकार of गिर् being accounted for by 'र्वोरुपधाया दीर्घ इकः' (433).

मित—। छन्दसीति। छन्दसि+इरः इतिच्छेदः। इश्च रश्च इरम् इति समाहारद्वन्द्वः। ततः पञ्चम्या एकवचनम्। तस्य च सुबपेक्षया विशेषणत्वात् 'येन विधि—' इति तदन्तस्य ग्रहणमित्याह—इवर्णान्ताद् रेफान्ताच्चेति। मतोर्मस्य व इति। एतच्च 'मादुपधायाश्च मतोर्वः—' (८।२।९) इत्यतोऽनुवर्तत इति बोध्यम्। हरिवत इति। हरयः सन्ति अस्येति हरिशब्दान्मतुपि मस्य वः—हरिवान्। तस्मै। हर्यश्वाय इन्द्राय इत्यर्थः इत्यादि स्पष्टम्।

३६०१ । अनो नुट् ॥ ८।२।१६ ॥

टी—। अन्नन्तान्मतोर्नुट् स्यात्। अक्षण्वन्तः कर्णवन्तः। अस्थन्वन्तं यदनस्था।

The augment नुट् (न), in vedic literature, is prefixed to मतुप् when coming after a base ending in अन्. Thus अक्षण्वन्तः those having eyes. अक्षि+मतुप्=अक्षन्+मतुप्, the substitute अनङ् having replaced the इकार of the term अक्षि by the rule 'छन्दस्यपि दृश्यते' under 'अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः' (322—7.1.75). Then in connection with नुट् by this rule we have

अचन्+त्वत् (न+मत्), म of मतुप् being changed into व. Now by the rule 'पूर्वत्रासिद्धम्' (8.2.1) the augment नुट् is invalid or असिद्ध towards नलोप, the नकार of अचन् is dropped. But despite this change the base अच has to be considered as अचन् towards the matter of prefixing नुट् to मतुप् on the force of the dictum भूतपूर्वगत्या सिद्धम् or 'It is allright on assumption of the very form which it had previously'. Thus अच+न्वत्=अचण्वत् णत्व by 'रषाभ्याम्—' (8.4.1). Then अचण्वत्+जस् (Nom. pl.)=अचण्वन्तः in connection with नुम् by 'उगिदचां—The term कर्षवन्तः is evidently a concomitant here; अक्षण्वत् is derived as अक्षि+मतुप् as before. The classical forms against the two are अचिमन्तः and अक्षिमन्तम् respectively.

मित—। अन इति। 'मादुपधायाश्च मतोः—' (८।२।९) इत्यतो मतोरित्यनुवर्तते। सूत्रे 'अन' इत्यस्य पञ्चम्येकवचनम्। तेन च तदन्तपरिभाषया तदन्तत्वं लभ्यते। तदाह—अन्नन्तादिति। अचण्वन्त इति अचण्वत् इति प्रातिपदिकम्। तस्य जसि 'उगिदचाम्—' (२९१) इति नुम्। एवम् अचन् वत् इति इति जाते 'पूर्वत्रासिद्धम्' (८।२।१) इति 'अनः—' (८।२।१६) इति विहितस्य नुटः असिद्धत्वात् 'अचन्' इत्यस्य नकारस्य लोपः। एवं नकारे लुप्तेऽपि भूतपूर्वगत्या 'अचन्' इत्यन्नन्तम् एवेति विभावनीयम्। अतएव मतोर्नुट् च भवति। अन्यथात्र अन्नन्तत्वाभावेन नुड्विधेर्व्यर्थत्वप्रसङ्गात्। ततो अचण्वत् इति सिद्धम्। 'रषाभ्याम्—' (८।४।१) इति णत्वम्। चाचिमान् इति तु भाषायाम्। कर्षवन्त इति प्रासङ्गिकमिदम्। तेन नायं नुटो दृष्टान्तान्तरम्। अक्षण्वन्तम् इति—एतदत्र विहितस्य नुटो द्वितीयमुदाहरणम्। अत्र नुटा व्यवहितस्यापि मतुपोमस्य 'मादुपधायाश्च—' इति वः कथमिति चैत्यथैव स्थितमाकर इत्यलम्।

३६०२। नादुघस्य ॥ ८।२।१७॥

टी—। नान्तात् परस्य घस्य नुट्। सुपथिन्तरः॥

'भूरिदाव्नस्तुड्वाच्यः' (वार्त्तिकः)। भूरिदावत्तरो जनः॥
'ईद्रथिनः' (वार्तिक)। रथीतरः। रथीतमं रथीनाम्।

The augment नुट् in vedic language is prefixed to 'घ' when, coming after a base ending in नकार. घ is the technical name of the suffixes तरप and तमप् cp. 'तरप्तमपौ घः' (2003). Thus सुपथिन्तरः = सुपथिन् + तर, तर is added to the word by 'द्विवचनविभज्योपपदे तरबीयसुनौ' (2005). Then सुपथिन् + तर। Now the नकार of सुपथिन् is dropped as before and सुपथि + न्तर is formed. It means 'a better way'. 'भूरिदाव्न:—' (Varttika) It has to be said that the augment तुट् (त्) (and not नुट्) takes place after तर and तम coming after भूरिदावन् (a giver of plenty). Thus भूरिदावत्तरः। भूरिदावन् (भूरि + दा + वनिप्) + तर = भूरिदाव + त्तर elision of न् by 'नलोपः प्रातिपदिकान्तस्य' and addition of तुट्। 'ईद्रथिनः' (Varttika)—It has to be said that the aug. ईत् (ई) is prefixed to घ (तर or तम्) when coming after the base रथिन्.

मित—नादिति। पूर्वसूत्राश्नुडनुवर्तते। नादित्यनेन तदन्तं लक्ष्यम्। तदाह—नान्तादिति। घ इत्यनेन 'तरप्तमपौ घः' (२००३) इति तरतमौ गृह्येते। तदुदाहरति—सुपथिन्तर इति। शोभनः पन्था इति विग्रहे 'ऋक्पूरब्धूःपथाम् अनक्षे' (९४०) इति समासान्ते प्राप्ते "न पूजनात्" इति निषेधात्, सुपथिन् इति प्रातिपदिकम्। ततस्तरप्। तस्य नुट्। सुपथिन्नित्यस्य नकारस्य 'नलोपः प्रातिपदिकान्तस्य' इति लोपः। ततो रूपम्। द्वयोरतिशयेन सुपन्थाः इति 'द्विवचनविभज्योपपदे तरबीयसुनौ' (२००५) इति तरप् प्रत्ययो विधीयते। अथ सूत्रस्य भविष्यत्प्रदोषवारणायाव वार्तिकमवतारयति भूरिदावन् इति। (नान्तादपि) भूरिदावन्शब्दात् घस्य तुडागमो (न तु नुडागमो) वाच्य इति शेषः। भूरि बहु ददातीति (भूरि—दा + वनिप्) 'आतोमनिन्क्वनिप

वनिपश्च' इति वनिप्। अयोरतिशयेन भूरिदावा इति भूरिदावन्+तरप् इति स्थिते तरपसुट्। नकारलोपश्च प्राग्वत्। ईद्रथिन इति इदमत्र द्वितीयं वार्तिकम्। (नान्तादपि) रथिन्शब्दाद् ईत् (ईकार) इत्यागमो वाच्य इति शेषः। न तु नुट्। रथीतरः—रथीतम इति।

२६०२। नसत्तनिषत्तानुत्तप्रतूर्तसूर्तगूर्तानि छन्दसि ॥ ८।२।६१ ॥

**टी—। सदेर्नञ्पूर्वान्निपूर्वाच्च निष्ठायां नत्वाभावो निपात्यते। नसत्तमञ्जसा। निषत्तमस्य चरतः। असन्नं निषण्णमिति प्राप्ते। उन्देर्नञ्पूर्वस्यानुत्तम्। प्रतूर्तमिति—त्वरतेः 'तुर्वी' इत्यस्य वा। सूर्तमिति 'सृ' इत्यस्य। गूर्तमिति 'गुरी' इत्यस्य।**

These six words viz नसत्त, निषत्त, अनुत्त, प्रतूर्त, सूर्त, गूर्त in vedic literature, are irregularly formed in connection with the affix क्त in each case. Thus नसत्त as in नसत्तमञ्जसा ( not settled to speak the truth) ; नञ् सद्+क्त here the replacement of the निष्ठातकार by नकार by the rule 'रदाभ्यां निष्ठातोनः पूर्वस्य च दः' (3016) is not effected through निपातन. Consequently दकार also is not changed into नकार by the same 'रदाभ्याम—' but to तकार by चर्त्व by 'खरि च' (122). Thus the vedic form is नसत्त against the classical असन्न. The form निषत्त differs from the former in that it is preceded by the उपसर्ग 'नि' and the स of सद is changed into ष in connection with नि by 'सदिरप्रतेः'. The classical form against this is निषण्ण. The term अनुत्त derived as नञ्+उन्द् (उन्दी क्लेदने)+क्त with the elision of न् of the

root उन्द which not being इदित the rule 'अनिदितां हल उपधायाः क्ङिति' (415) takes place due to कित्त्व of the affix (क्त). Then absence of नत्व of निष्ठा etc being effected the resultant form without इट् due by 'श्वीदितोनिष्ठायाम्' (2039) is अनुत्त with the augment नुट् added to the subsequent term and the elision of न of नञ् by 'नलोपो नञः' (956) and 'तस्मान्नुडचि' (757). The classical form against this is अनुन्नम् but not अनत्तम् also by the rule 'नदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' (3036) which, the commentators confirm, will not take place when नञ् will precede the root—(निपातनारम्भसामर्थ्यात् विकल्पेन)। प्रतूर्तम्—Derive as प्र+त्वर्+क्त or as प्र तुर्वी (हिंसायाम्)+क्त. In the first case त्वर is changed into तूर् due to the replacing of व् of त्वर् by 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (2664—4.6.4.20) whereas in the latter case the वकार of the root तुर्वी या तुर्व is dropped by 'राल्लोपः' (2695) whence the form now standing as प्र—तुर्+क्त and गुण being prohibited due to कित्त्व the affix also prohibiting इट् being effected, the form resulting is प्रतूर्त without निष्ठातकार being changed by 'रदाभ्याम्—'and the दीर्घ ऊकार of the penultimate of the root (तुर्) being effected by 'हलि च' (354). सूर्त—सृ+क्त=सुर्+त where ऋकार by निपातन is changed into उ or उर् by 'उरण् रपरः' (70). Then सूर्त by 'हलि च' as before. गूर्तम्=गुर् (गुरी उद्यमने)+क्त. The classical form against the last three are प्रतूर्णम्—प्रत्वरितम् (but प्रतूर्तम् only in case तुर्वी), सृत and गूर्ण respectively.

मित—। नसत्तनिषत्तेति। एते षट् शब्दाः क्तप्रत्ययान्ताश्छन्दसि विषये निपात्यन्त इत्यर्थः। तत्र प्रत्येकं निपातनं प्रदर्शितं मूले—सदेर्नञ् पूर्वादित्यादि।

३६०४। अम्नरूधरवरित्युभयथा छन्दसि ॥ ८।२।७० ॥

दी—। रुर्वा रेफो वा। अम्न एव—अम्नरेव। ऊध एव—ऊधरेव। अवएव—अवरेव।

In vedic literature स् after the terms अमूस्, ऊधस् and अवस् is treated both ways i.e is either replaced by रु or by रेफ when the terms अवस् etc are followed by words beginning with a vowel. Thus अमुस्+एव=अमु एव or अमुरेव. In the former case स् is replaced by रु which again is replaced by य् by 'भोभगो अघो अपूर्वस्य योऽशि' (167). Then this यकार is dropped (optionally) by 'लोपः शाकल्यस्य' (67) whence the resultant form is अमु एव (also अमयेव optionally). In the latter, the सकार of अमुस् has been replaced by रेफ—अमुर् एव=अमुरेव', the term अमुस् is anindeclinable and means 'a little'. Similarly ऊधस्+एव and अवस् (अव+असुम्)+एव give ऊध एव also ऊधरेव etc.

मित—। अम्नरूधरिति। 'ससजुषोरुः' (८।२।६६) इत्यतो रुरित्यनुवर्तते। 'रोऽसुपि' (८।२।६९) इत्यतो रः (रेफः) इति च। ततो अपेक्षितमाव पूरयन् व्याचष्टे—रुर्वा रेफोवेति। एतच्च सूत्रे उभयथेत्यस्य विवरणम्। अम्नः+ऊधः+ अवः+इति उभयथा इति सूत्रगतपदच्छेदः। तत्र उदाहरति अम्नएवेत्यादि। अम्नस् इत्यव्ययम् ईषदर्थे इति व्याख्यातारः। ततः अमूस्+एव इति स्थिते रुत्वपक्षे अम्नरु एव इति जाते 'भोभगो अघो अपूर्वस्य'—(१६७) इति रोर्यकारादेशे अम्नय एव इति 'लोपः शाकल्यस्य' (६७) इति यलोपात् अम्न एव इति भवति। तत्र 'लोपः—' इति यलोपस्य पाक्षिकत्वात् पक्षे अम्नयेव इत्यपीति विभाव्यम्। अत्र 'ससजुषोः रुः' (१६१) इति नित्यं रुत्वे प्राप्ते वेदे विकल्पार्थोऽयमारम्भः। अथ रेफपक्षे आह— अम्नरेवेति। मात्रवद अम्नस्+एव इति स्थिते सकारस्य रेफत्वे रूपम्। एवम् ऊधस्+एव, अवस्+एव इति स्थिते ऊध एवेत्यादि बोध्यम्। तत्र ऊधस् शब्दो

नपुंसकश्चापीलवाची च। ...भुवस् शब्दोऽपि नपुंसकमनुष्यलोकवाची च।

२६०५। भुवश्च महाव्याहृतेः ॥ ८।२।७१॥

दी—। भुव इति। भुवरिति।

N. B. There are three महाव्याहृतिs viz भूः (earth) भुवस् (Air or aerial region) and स्वर् (Heaven). The second महाव्याहृतिः is meant here. Thus the rule being :—The सकार of the term भुवस् signifying a महाव्याहृति is to be treated bothwise i.e it is replaced by रु or रेफ where an अच् or vowel follows. Thus भुवस् + इति=भुव इति (also भुवयिति see ante) and भुवरिति। But it is important to note in this connection that if 'भुवः' is a verbal from of भू+सिप (लङ्), as shown below, and not a महाव्याहृति this will not hold good and consequently रु or रेफ will not follow. भू+सिप (लङ्) give भुवस् or भुवः and not 'अभवः' as the root in connection with शप is not irregularly allowed गुण by 'सार्वधातुकार्ध—' (2108) and अट् has been prohibited by 'बहुलं छन्दस्यमाङ्योगेऽपि'. Then by 'छन्दसि लुङ्लङ्लिटः' भुवः means भवसि or bring out the sense of present tense as in 'भुवो विश्वेषु सवनेषु' (see शब्देन्दुशेखर) where 'ससजुषो रुः' (166) applies and not this 'भुवश्च—'.

मित—। भुवश्चेति। तिस्रो महाव्याहृतयः। भूरिति, भुवरिति स्वरिति च। तत्र भुवरित्येवात्र विवक्षितम्। येनायमर्थः—अन्तरिक्षवाचिनो महाव्याहृतेर्भुवस् इत्येतस्य सकारस्य छन्दस्युभयथा अर्थात् रुर्वा रेफो वा स्यात्। तत्र रुपक्षे रेफपक्षे च अस्येयोदाहरणे प्राग्वत्। 'लोपः शाकल्यस्य' इति रुत्वपक्षे लोपस्य पाक्षिकत्वाद् भुवयिति इत्यपि इति विभाव्यम्। ननु भुवस् इत्येतस्य केवलं महाव्याहृतिवाचकत्वेन

अन्यत्वानुपलम्भात् सूत्रे महाव्याहृतिग्रहणं व्यर्थमिति चेदुच्यते। भुवशिछन्दसि विषये भू + शप् सिप् इति स्थिते 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यडभावे 'बहुलं छन्दसि' इति शप्प्रयुक्तगुणाभावे च 'भुवः' इति भवति। तत्र 'भवसि' इत्येतदर्थकम्। 'छन्दसि लुङ्लङ्लिटः' इत्युक्तेः तथाह्यत्र 'भुवो विश्वेषु सवनेषु' (भुवनेषु इति पाठान्तरमप्यत्र दृश्यते) इत्यत्र महाव्याहृतित्वाभावेन रुत्वविकल्पो न भवति। किन्तु 'हशि च' (१६६) इति नित्यमेव रोरुत्वम्। अतः सूत्रे 'महाव्याहृते'रिति विशेषणम्। नन्वेवमपि क्रियावाचकस्य 'भुवः' इत्येतस्य लाक्षणिकत्वात् 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' (परिभाषा) इति महाव्याहृतिभेदस्य 'भुवः' इत्येतस्यैव ग्रहणं स्यान्न तु लाक्षणिकस्य तस्येति चेत्। सत्यम्। परमत्र महाव्याहृतिग्रहणादेव तस्याः परिभाषाया अनित्यत्वं ज्ञाप्यत इत्याहुरित्यलमत्र विस्तरः।

## ३२०६। ओमभ्यादाने ॥ ८।२।८७ ॥

**टी—। ओंशब्दस्य प्लुतः स्यादारम्भे ॥ ओ३म् अग्निमीळे पुरोहितम्। अभ्यादाने किम्? ओमित्येकाक्षरम्।**

In vedic literature the word ओम् receives the प्लुतस्वर or high accentuation (prolated sound) where it occurs at the outset of rik or vedic hymn. Thus 'ओ३म् अग्निम्—' (I pray to fire with the utterance of the word ओम्). Why say at the outset (अभ्यादाने)? witness 'ओमिति—'This is not a rik; cp—'ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्। यः प्रयाति त्यजन् देहं स याति परमां गतिम्' (गीता)।

मित—। ओमभ्यादाने इति। अभ्यादानशब्दस्य आरम्भार्थ इति काशिका। 'वाक्यस्य टेः प्लुत उदात्तः' (८।२।८२) इत्यतः प्लुत इति (उदात्त इति चेत्यन्ये) अनुवर्तते। ततो व्याचष्टे—ओम् शब्दस्य प्लुत इत्यादि। अभ्यादाने किमिति। आरम्भादन्यत्रार्थे नेति दर्शयति—ओमित्येकाक्षरम् इति। नेयं ऋक्। ऋ वा आद्याक्षरमिति नात्र प्लुतोदात्तकृतिरिति द्रष्टव्यम्। विस्तरस्तु कैयटनागेशभट्टयोः द्रष्टव्य इति दिक्।

३६०७। ये यज्ञकर्मणि ॥ ८।२।८८ ॥

दी—। ये३ यजामहे। यज्ञेति किम्? ये यजामहे।

The term ये ( यद् masc. plural ) in vedic language is प्लुत with reference to a sacrifical performance.

मित—। य इति। प्लुत इत्यनुवर्तते। तेन 'ये' इत्येतस्य यच्छब्द पुं बहुवचनान्तस्य प्लुतोदात्तश्रुतिः स्याद् यज्ञकर्मणि गम्ये इत्यर्थः। ये इति। पूर्वंत्र यज्ञसम्बन्धोऽन्यत्र तदभावः।

३६०८। प्रणवष्टेः ॥ ८।२।८९ ॥

दी—। यज्ञकर्मणि टेरोमित्यादेशः स्यात्। अपां रेतांसि जिन्वतोम्। टेः किम्? हलन्ते अन्त्यस्य माभूत्।

In a sacrificial performance, dealt with in the Vedas, ओम् ( the meaning of प्रणव ) is the substitute for the टि-portion of a word ( verbal form ) of a sentence of a rik. Thus 'अपां रेतांसि—'। Here जिन्वतोम् is the illustration. The root is जिवि or जिन्व ( to please भ्वादि ) by 'इदितो नुम् धातोः' taking the augment नुम् = जिन्व + लट् तिप would give जिन्वति. But इकार being replaced by ओम् we have जिन्वतोम (irregular Sandhi). Why say टेः of the final vowel along with a consonant if any ( अचोऽन्त्यादि टि)—witness that the final letter of a word ending in a consonant may not be allowed to undergo the operation.

मित—। प्रणव इति। 'ये यज्ञकर्मणि' ( ८।२।८८ ) इत्यतो यज्ञकर्मणि इत्यनुवर्तते। प्रणवशब्दश्च ओम्शब्दपर्यायः। तदाह—यज्ञकर्मणि टेरोमिति। उदाहरति—अपां रेतांसि इति। अत्र 'जिन्वतोम् इत्युदाहरणम्'—जिवि प्रीणने इति

भौवादिको धातुः। तस्य लटि सिपि जिन्वसि ( इदितो नुम् इति नुम् ) इति प्राप्तम्। तस्य टेरिकारस्य ओम् इति प्रणवादेशे रूपम्। सन्धिरार्षः। ननु 'वाक्यस्य टेः प्लुत उदात्तः' ( ८।२।८२ ) इत्यतोऽनुवृत्त्या टेरित्यस्य लाभात् 'प्रणवः' इत्येव सूत्र्यताम्। टेरित्यस्य व्यर्थत्वादिति चेदत्र समाधानमाह प्रश्नपूर्वकम्—टेः किमिति। हलन्ते अन्त्यस्य माभूदिति समाधानम्। अयमाशयः—यदि तावदत्र टेरित्यस्य विशिष्टग्रहणं न क्रियेत तदा यद्यपि 'वाक्यस्य टेः—' इत्यतोऽनुवृत्तिबलात्लभ्येत तथापि 'अलोऽन्त्यस्य' इति हलन्तस्य अजन्तस्य चेत्युभयोरप्यविशेषादन्त्यस्य प्रणवादेशः आपद्येत। इष्यते तु अजन्तस्यैव यथा स्यादिति न तु हलन्तस्यापीति। तदेतज् ज्ञापयितुं सूत्रे पुनष्टेः ग्रहणं कृतमिति शब्देन्दुशेखरादौ विस्तरः।

३६०८। याज्यान्तः ॥ ८।२।९० ॥

टी—। ये याज्या मन्त्रास्तेषामन्त्यस्य टेः प्लुतो यज्ञकर्मणि। जिह्वामग्ने चकृषे हव्यवाहाम्। अन्तः किम्? याज्यानामृचां वाक्यसमुदायरूपाणां प्रतिवाक्यं टेः सगात्। सर्वान्त्यस्य चेष्यते।

In the matter of sacrifice spoken of in the Vedas the टि portion is regarded as प्लुत of a word that is final in the मन्त्रs which are technically known as याज्यमन्त्रs or मन्त्रs a sum total of which are to be uttered in the course of a sacrificial performance. Thus 'जिह्वामग्ने—' This is one of the sacrificial incantations ( याज्यमन्त्रs ). The last word 'हव्यवाहा' of the sentence is the sphere of operation of the rule ; well why add the term 'अन्त' here into the rule? For had it been enunciated as 'याज्याः' then also the term 'टि' would in that case, apply only where the final letters is a vowel of the word, also the याज्यमन्त्रs being an aggregation of terms or words the

final of every term or word would have been identified to have the pluta-operation (प्लुतकार्य). Whereas it is intended that, that word only which is the last of the याज्यमन्त्र sentence may receive the प्लुत accent as directed.

मित—। याज्यान्त इति। याज्यानुवाक्यान्तमित्यर्थे समाख्याता मन्त्रा याज्यमन्त्रा इत्युच्यन्ते। इज्यन्ते एभिरिति यात्। 'वाक्यस्य टेः प्लुत उदात्तः' (८।२।८२) इत्यतष्टेरिति प्लुत इति चानुवर्तते। 'ये यज्ञकर्मणि' (८।२।८८) इत्यतो यज्ञकर्मणि इति च। ततो व्याचष्टे—ये याज्या मन्त्रा इत्यादि। 'जिह्वामग्ने—' इति याज्यमन्त्रस्येयम्। हव्यवाहाम् इति जिह्वामित्यस्य विशेषणम्। तदेव च तत्र अन्त्यम् इति अत्रैव सूत्रप्रवृत्तिर्नान्यत्र इति द्रष्टव्यम्। ननु कथमयमर्थः? ये तावद् याज्यामन्त्रास्तेषां प्रतिवाक्यं मन्त्रत्वात् तेषां प्रत्येकमन्त्यस्यापि स्यात् अन्त्यत्वाविशेषात्। तस्माद् 'ये याज्या मन्त्रास्तेषामन्त्यस्य (अन्त्यशब्दस्य) इत्येवं व्याख्यानमप्रत्याख्यानम्। किञ्च सूत्रेऽपि अन्तग्रहणं व्यर्थम्। 'वाक्यस्य टेः—' इत्यत्र टेरनुवृत्त्यैव टेः सिद्धेः। तदेतत् सकलं समाधित्सुः पृच्छति—अन्त्यः किम्? इति। टिस्तावदनुवर्तमानोऽन्त्यस्यैव मन्त्रस्य व्यभिचाराभावात्। तथापि सूत्रे अन्तग्रहणं कथमिति प्रश्नः। याज्यमन्त्रगतशब्दानां प्रत्येकं याज्यमन्त्रत्वात् प्रतिशब्दान्ते प्लुतश्रुतिः स्यात्। अन्तग्रहणात्तु तन्निवर्तते। किञ्चैवमन्त्यग्रहणात् अन्त्यस्यैव प्लुतश्रुतिरित्यर्थः न भवति। तस्मादन्तग्रहणं सार्थकमेव। ततश्च 'ये याज्यामन्त्राः—' इति व्याख्यानमपि सम्यगहीनम्। यत्र शब्दात्मको याज्यमन्त्रः सर्वान्तिवर्ती भवति तस्मिन्नेव सूत्रप्रवृत्त्या तस्यैव टेः प्लुतश्रुतिरित्यन्यत्र विस्तरः।

२६१०। ब्रूहिप्रेष्यश्रौषड्वौषडावहानामादेः॥ ८।२।९१॥

दी—। एषामादेः प्लुतो यज्ञकर्मणि। अग्नयेऽनुब्रूहि। अग्नये गोमयानि प्रेष्य। अस्तु श्रौषट्। सोमस्याग्ने वीहो३ वौषट्। अग्निमावह।

In the matter of sacrifice in the Vedas the beginning letter (*vowel*) is accounted as प्लुत in pitch of the words: ब्रूहि, प्रेष्य, श्रौषट्, वौषट् and आवह. But 'आवह देवान् यजमान—here the beginning letters आकार does not receive प्लुत pitch as all injunctions are optional in the matter of the Vedas—says Nagesha.

मितः। ब्रूहि प्रेष्येत्यादि। 'वाक्यस्य टेः—' (८।२।८२) इत्यतः प्लुत इत्येवानुवर्तते। न तु टेरित्यपि अतः आदेरित्यस्य ग्रहणात्तदभावादाह—एषामादेः प्लुत इति। एषामिति ब्रूहि, प्रेष्य (प्रेष्य इत्यर्थः), श्रौषट्, वौषट्, आवह एषां पदानामित्यर्थः। 'ये यज्ञकर्मणि' (८।२।८८) इत्यतो यज्ञकर्मणीति। वौषडिति। अत्र वौषडिति वौषट्, वौषडित्येवंविधानां सर्वेषां वषट्काराणामुपलक्षणमिति हरदत्तोपलम्भः शब्देन्दुशेखरः। आवहेति। आवह देवान् यजमान इत्यादौ तु न प्लुतः। छन्दसि सर्वविधीनां वैकल्पिकत्वादिति च स एव।

३६११। अग्नीत्-प्रेषणे परस्य च॥ ८।२।९२॥

दीक्षा। अग्नीध्रः प्रेषणे आदेः प्लुतस्तस्मात् परस्य च। ओ३श्रा३वय। नेह। अग्नीत् अग्नीन्विहर। बर्हिस्तृणीहि।

In vedic usage the beginning vowel in a word as well as that which follows upon it receive the प्लुत provided the sense of despatching the lighter of fire is present. ओश्रावय (oh, you cause (them) attend to hear)—ओ is an indeclinable and it is, in accordance with, the manner of vedic expression (छान्दस प्रयोग) along with the term श्रावय (श्रु+णिच्+लोट् हि). If however, the despatch of an अग्नीत् or lighter of fire is meant along with the utterance of the term (अग्नीत्) then the rule will not hold good. 'अग्नीत्—etc' O lighter of fire, walk up to i.e serve fire'; or, the non-application of the rule in

this illustration as well as in the latter—बर्हिस्तृणीहि spread Kusha grass—may be defended by the परिभाषा 'सर्वविधयश्छन्दसि विकल्प्यन्ते' अग्नीध्=अग्नि+इन्ध+क्विप्—न् of the root disappearing due to कित्त्व of the affix by 'अनिदिताम् हलउपधायाः क्ङिति' (415).

मित—। अग्नीत्प्रेषण इति। अग्निम् इन्धे प्रज्वालयति इति अग्नीध्। क्विप् चेति क्विप्। कित्त्वात् 'अनिदिताम्—' (४१५) इति धातोरुपधाभूतनकारस्य लोपः। ततः अग्नीधः प्रेषणमिति षष्ठीसमासः। 'प्रत्यभि—' (८।२।९१) इति पूर्वसूत्रात् आदेरित्यनुवर्तते। तदाह—अग्नीधः प्रेषणे आदेरित्यादि। ओ श्रावय इति। ओ इति अव्ययार्थको निपातः। तस्य संहिता पाठे तिङन्तेन समाविष्टश्छान्दसः। श्रावय इति प्रयोगलिङ्ग्नात्रोऽनम्यमेकवचनम्। 'सर्वे विधयः छन्दसि विकल्प्यन्ते' अतएव बर्हिस्तृणीहि (विस्तारय कुशमित्यर्थः) इत्यत्रापि अग्नीत्प्रेषणार्थे विद्यमाने सत्यपि आदेस्तत्परस्य वा प्लुतश्रुतिर्नास्ति।

## २६१२। विभाषा पृष्टप्रतिवचने हेः॥८।२।९३॥

हेः—। प्लुतः। अकार्षीः कटम्? अकार्षं हि३। अकार्षं हि। पृष्टेति किम्? कटं करिष्यति हि। हे: किम्? कटं करोमि* ननु।

In vedic language when a reply to a query is signified, the the vowel of the particle हि receives the प्लुत accentuation optionally. Thus अकार्षं हि (of course I performed) because it is a reply to the query अकार्षीः किम् (did you perform); अकार्षं हि—optional case of प्लुत pitch. Why add पृष्ट to the term

[* 'हि' इत्यतो नावदन्तं न सार्वत्रिकः पाठः

* 'करोति' इति पाठान्तरम्।* तत्प्रमादिकम्। उत्तरस्य उत्तमपुरुषीयत्वात् प्रथमपुरुषीयविभक्तिप्रयोगासौचित्यादिति विभावनीयम्]

प्रतिवचने and do not say 'प्रतिवचने' only; witness कटं करिष्यति हि, where हि is not प्लुत for the sentence denotes futurity only and not a reply to a query. Well why add हि and do not enunciate as विभाषा पृष्टप्रतिवचने; witness कटं करोमि ननु—where ननु implies the sense expressable by हि and the sentence is evidently a reply to the query 'कटं करोषि किम्' understood—yet there is no application of the rule. For 'कटं करोमि ननु' does not contain हि.

मित—। विभाषेति। 'वाक्यस्य टेः प्लुतः—' (८।२।८२) इत्यतष्टेः प्लुत इत्यनुवर्तते। तेन शेषं पूरयन्नाह—प्लुत इति। पृष्ट इत्यस्य नपुंसके भावे क्तः। किच्चाद् 'ग्रहिज्या—' (२४१२) इति सम्प्रसारणम्। 'व्रश्च—' (२९४) इति षत्वम्। 'ष्टुना—' (११२) इति ष्टुत्वञ्च। पृष्टशब्दस्य च प्रश्ने शक्तिग्रहः। प्रतिवचनशब्दस्य तु उत्तरे शक्तिः। पृष्टस्यप्रतिवचनम् इति षष्ठीसमासः। प्रश्नोत्तरमिति च तदर्थः। तेनायं सूत्रार्थः—वाक्यस्य हेः (टेः) विभाषा प्लुतः स्यात् प्रश्नोत्तरञ्चेद् गम्यत इति। अकार्षीः कटमिति प्रश्नोऽयम्। त्वमकरोः किमिति तदर्थः। अकार्षमिति द्विविधमुत्तरम्। पूर्वत्र प्लुतश्रुत्या। उत्तरत्र तदभावेन। अहं कृतवानेव इति उभयत्रार्थः। ननु 'विभाषा प्रतिवचने हेः' इत्येव सूत्रमस्तु माऽस्तु पृष्टेति गौरवादिति चेन्नेति दर्शयति। कटं करिष्यतीति। एतद् भविष्यदर्थप्रकाशनमात्रपरम्। न तु 'पृष्टप्रतिवचनम्'। तेन सत्यपि हिशब्दे प्लुतश्रुतेः अभावः। नन्वेवमपि हि शब्दो व्यर्थ एवेत्यत आह—कटं करोमि नन्विति। अत्र सत्यपि पृष्टप्रतिवचनार्थे हिशब्दाभावात् प्लुतश्रुत्यभावः। ननुशब्दः हिशब्दसमानार्थः। 'हि हेतावधारणे' 'प्रश्नावधारणानुज्ञाऽनुनयामन्त्रणे ननु'। इत्युभयत्राप्यमरः। तेनार्थभेदमाश्रित्य सूत्राप्रवृत्तिर्नाशङ्कनीयमित्यलमतिविस्तरः।

३६१२। निगृह्यानुयोगे च ॥ ८।२।९४ ॥

दो—। अत्र यद्वाक्यं तस्य टेः प्लुतो वा। अद्यामावास्ये-

त्यात्थ३। अमावास्येत्यवंवादिनं युक्त्या स्वमतात् प्रच्याव्य एवमनुप्रयुज्यते।

The term निगृह्य in the rule means refutation or falsifying whereas अनुयोग denotes repetition (of the very word or sentence used by the other party). Thus the rule means—

The टि portion of the last word ( in a sentence of the other party or the opponent) is accentuated as one of प्लुत pitch in the optional way, provided a refutation of the view of the opponent is implied by pronouncing the very words or sentence used by the other party. Thus 'अद्या—' ( अद्य + अमावास्या + इति + आत्थ )—you say that today is the new Moon-day—Here the other party uttering the term 'अमावास्या' is being made to deviate, with logical argument from his (the opponent's) own view by replying thus in the very words used by him.

मित—। निगृह्येति। निपूर्वाद् ग्रहेः क्त्वो ल्यबादेशे 'ग्रहिज्या—' ( २४१२ ) इति सम्प्रसारणे रूपम्। स्वमतात् प्रच्यावनं च तदर्थः। अनुयोगः प्रश्नः। 'प्रश्नोऽनुयोगः पृच्छा च' इत्यमरः। इह तु प्रश्नपूर्वकं तदुच्चारितवाक्यानुप्रयोगपुरःसरमसूयाविष्करणे वृत्तिः। एतेन च तस्य वाक्यस्यानीयत्वं प्रतिपाद्यते इति विवक्षितार्थः। सूत्रार्थस्तु— स्वमतप्रच्यावनपूर्वकमनुयोगे सति अनुप्रयुज्यमानवाक्ये योऽन्त्यशब्दः तस्य टेः प्लुतो वा स्यादिति। 'विभाषा—' इति पूर्वसूत्राद्विभाषेति चानुवर्तत इति बोध्यम्। संक्षेपादाह— अत्र यथाक्रममिति। निगृह्यानुयोगविषये यद्वाक्यमिति तदर्थः। उदाहरति— अद्यामेति। अद्य + अमावास्या + इति + आत्थ इति पदानामवग्रहः। अत्र प्रतिपक्षेण 'अद्य अमावास्या' इति वाक्ये उच्चारिते 'अद्य तावदमावास्या' इति प्रतिपादितवानसि [illegible] पश्चादनुयोगेन [illegible] । आत्थ इत्यस्य

त्वमिति कर्तृपदमित्यध्याहारः। ननूदाहरणे कथं ज्ञात्वा नियतपूर्वकमनुयोगो भवतीत्याशङ्क्य विवृणोति—अभ्यासमाप्त्येवंवादिनमिति। युक्त्या इति। यस्तुद्दिश्य अद्य अभ्यासीरास्तां तेनानुयोगकारिणा युक्तिबलेन इत्यर्थः। स्वमतात्—स्वस्य प्रतिपक्षस्य आत्ममतात् तं प्रच्याव्य स्वमतपरित्यागे बाध्यं विधाय निग्रहोऽप्यथवा। एवमनुप्रयुज्यत इति। तस्य प्रतिपक्षस्य वाक्यमक्षरशः उपादीयत इत्यर्थः।

## ३६१४। आम्रेडितं भर्त्सने ॥ ८।२।९५ ॥

दी—। दस्यो३ दस्यो३ घातयिष्यामि त्वाम्। आम्रेडितग्रहणम् द्विरुक्तोपलक्षणम्। चौर३ चौर३ ।*

The final of each of the words reduplicated ( आम्रेडित ) receives the optional "pluta-accent" provided the sense of deprecation or reproach is implied thereby. Thus 'दस्यो दस्यो—'Thief! Thief! I will kill you (घातयिष्यामि—हन्+णिच्+लृट्, स्यामि)। Here the word दस्यो (vocative) has been reduplicated by the rule वाक्यादेरामन्त्रितस्यासूयासंमतिकोपकुत्सनभर्त्सनेषु (2143). Well by the rule 'तस्य परमाम्रेडितम्' (८३) the second only of the reduplicated words being designated as आम्रेडित and not both of them, how is it that the final of both the words ( दस्यो दस्यो ) has been stated pluta, when the last only is legible to have the operation? To reply to this rejoinder he says 'आम्रेडितग्रहणम्—etc'. That is the term 'आम्रेडित' here stands for द्विरुक्ति only and suggests pluta scansion of both the words and not of the last only.

मित—। आम्रेडितमिति। भर्त्सने गम्ये यदाम्रेडितं तस्य टेः प्लुतो वा स्यात्

[ * 'दस्योदस्यो' इति 'चौर चौर' इति च बालमनोरमाधृतपाठः ]।

इति सूत्रार्थः। 'आम्रेडितं द्विस्त्रिरुक्तम्' इत्यमरः। सूत्रमते तु 'तस्य परमाम्रेडितम्' (८।१।२) इति द्विरुक्तसमुदाये परभागस्यैव आम्रेडितसंज्ञा; दस्यो दस्यो इति। घातयिष्यामीति मारयिष्यामीत्यर्थः। अत्र वाक्यादेरामन्त्रितस्यासूयामन्त्रितस्य 'दस्यो' इत्यस्य द्वित्वम्। ननु सूत्रमते 'तस्य परम्—' इति द्विरुक्तसमुदाये परभागस्यैव प्लुतश्रुतिः प्रसज्यते न तूभयस्यापि इत्यत आह—आम्रेडितग्रहणं द्विरुक्तोपलक्षणमिति। तेन यः शब्दो द्विरुच्यते तस्य प्रत्येकं टेः प्लुतश्रुतिरिति भावः। एतेन 'दस्यो दस्यो' 'चौर इत्यत्र चौर' परभागस्यैव प्लुतश्रुतिरिति परास्तम्। 'सर्वः प्लुतो वैकल्पिकः' इति पक्षे तु 'दस्यो दस्यो, चौर चौर' इत्यादि प्लुतश्रुतिवर्जमपि पठितुं शक्यम्।

**३६१५। अङ्गयुक्तं तिङाकाङ्क्षम् ॥ ८।२।९६ ॥**

**टी—। अङ्गेत्यनेन युक्तं तिङन्तं प्लवते। अङ्ग कूज३ इदानीं ज्ञास्यसि * जाल्म। तिङ् किम्? अङ्ग देवदत्त मिथ्या वदसि। आकाङ्क्षं किम्? अङ्ग पच। नैतदपरमाकाङ्क्षति। भत्सने इत्येव—अङ्गाधीष्व भक्तं तव दास्यामि।**

When a तिङन्त verb is in syntactical connection with any other verb (तिङन्त) then it (the verb) is accented as प्लुत provided the said verb is joined with the term अङ्ग (expressing anger or reproach). Thus अङ्ग कूज—Well make sound in your own way (but) now, oh fool, you will have a (good) lesson—Here the verb कूज (कूज + लोट् हि) bears syntactical relation with the verb ज्ञास्यसि and is joined with the term अङ्ग which expresses anger, and thus the rule applies. अङ्ग देवदत्त—Well Devadatta you are telling a lie—Here अङ्ग implies anger but it is connected with the noun देवदत्त and not with a Verb.

[* अत्र 'ज्ञास्यसि' इति [illegible] ]

Hence the rule does not apply although देवदत्त is related with the verb वदसि। 'अङ्ग पच'—well you may cook! Here also 'अङ्ग' implies anger but yet the rule does not apply because the Verb (पच्) is not in relation with any other verb. 'अङ्गाधीष्व—'Why child, you may read and I shall take charge of your maintance (भक्त means 'rice' or अन्न). Here in अङ्ग the sense of anger not being present the rule does not hold good; for the sense of reproach (भर्त्सने) follows from the previous rule.

मित—। अङ्गयुक्तमिति। अङ्गयुक्तम्+तिङ्+आकाङ्क्षम् इत्यवग्रहः। तत्र अङ्गेति अव्ययम्। तस्य चामर्षे अनुनये च शक्तिग्रहः। तत्र यदास्य अमर्षे शक्तिग्रहस्तदैव सूत्रप्रवृत्तिर्नान्यथेति उदाहरणेषु स्फुटीभविष्यति। तेन अङ्गेन अङ्गशब्देन युक्तम् अङ्गयुक्तम् इति। न तु 'यस्मात् प्रत्यय विधिस्तदादिस्मिन् प्रत्ययेऽङ्गम्' इत्येवं संज्ञितस्याङ्गशब्दस्यात्र ग्रहणम्। तस्य लाक्षणिकत्वात् 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव' इत्यत्र तस्य ग्रहणायोगात्। अङ्गयुक्तमिति पदम् तिङ् इत्यस्य विशेषणम्। तिङ् इत्यनेन च 'येन विधिः—' इति न्यायात् तदन्तस्य ग्रहणम्। अतएवाह—अङ्गेत्यनेन युक्तं तिङन्तमिति। सूत्रे आकाङ्क्षमित्यपि तिङ् इत्यस्य विशेषणम्। आकाङ्क्षत इत्याकाङ्क्षम् (पचाद्यच्) इति व्युत्पत्तिः। तेनायं सूत्रार्थः—अङ्गशब्देन युक्तं साकाङ्क्षं च तिङन्तं प्लुतश्रुतिभाक् भवति भर्त्सनं चेद् (अङ्गशब्देन इति यावत्) गम्यते इति। अङ्ग कूजेति। कूजेति कूज अव्यक्ते शब्दे (भ्वादिः) इत्यस्य लोण्मध्यमैकवचनम्। जाल्मेति। जाल्मो मूर्खस्तत्सम्बुद्धिः। इदानीं ज्ञास्यसीति। कूजनफलमिति शेषः। अर्थात् 'यदि कूजनाद् न विरमसि तदा चपेटाघातादिना त्वां ततो विरमयिष्यामी'त्यर्थः। एवञ्चात्र भर्त्सनञ्च गम्यते इति कूजशब्दान्ते प्लुतश्रुतिः। तस्याङ्गेन युक्तत्वाद् ज्ञास्यसीत्यनेन साकाङ्क्षत्वाच्चेति बोध्यम्। तिङ् किमिति। तिङन्तग्रहणं कथमित्यर्थः। अङ्गदेवदत्तेति। अत्र देवदत्तपदस्य वदसीत्यनेन साकाङ्क्षता। परं तस्य (देवदत्तपदस्य) विशेष्यत्वेन तिङन्तत्वाभावादमर्षवाचिना

अङ्गशब्देन योगे सत्यपि न प्लुतश्रुतिः। एतेन 'अत्र अङ्गशब्दोऽनुनये' इति केषाञ्चिदुक्तिः परास्ता। तथाहि सति अत्र 'तिङ' किम्? इत्यनुक्त्वा 'भर्त्सने इति किम्?' इत्येव अवक्ष्यत्। तस्मान्मूलविरोधात्तदुपेक्ष्यमित्यलम्। अङ्ग पचेति। अत्राङ्ग न पचसि इत्यस्य योगः परमितरतिङन्तेन साकाङ्क्षतेति पचेति न भवति इत्याह—नैतदिति। अपरमिति—तिङन्तमिति यावत्। इदानीं पूर्वसूत्राद् 'भर्त्सने' इति अस्यानुवृत्तिं स्वीकुरुते—भर्त्सने इत्येवेति। अङ्गाधीष्वेति। अङ्ग अधीष्व इतिच्छेदः। वत्स अधीष्व त्वामन्नदानेन पालयिष्यामीत्यर्थः। अत्र अङ्गेति अनुनये। तेन भर्त्सनार्थाभावेन तिङन्तस्य (अधीष्वेत्यस्य) अङ्गयुक्तत्वसाकाङ्क्षत्वयोर्विद्यमानयोरपि न प्लवमानतेति विभावनीयम्।

३६१६। विचार्यमाणानाम्॥ ८।२।९७॥

टी—। वाक्यानां टेः प्लुतः। होतव्यं दीक्षितस्य गृहा३इ (गृहे इति—?)। न होतव्य३मिति। होतव्यं न होतव्यमिति विचार्यते। प्रमाणैर्वस्तुतत्त्वपरीक्षणं विचारः।

The term विचार्यमाण means 'a subject under consideration of judgment'. But by transference of epithet (लक्षणा) it refers to the sentences leading to such consideration of judgment. Hence it is that Dikshita says वाक्यानाम् etc—

The टि portion in vedic literature of the last word of sentences having reference to judgement (विचार) is accentuated as pluta. Thus the last terms गृहा and होतव्यम् are प्लुत of the sentences होतव्यं दीक्षितस्य etc. Whether or not any sacrificial performance may be arranged in the house of him who has been (recently) initiated (दीक्षितस्य). The meaning of the sentences he explains thus—होतव्यम् नहोतव्यम—etc. विचार

(or judgment) he adds is, however, scrutinising or examining by the help of evidences.

मित—। विचार्यमाणानामिति। विचारो नाम प्रमाणैः विषयविशेषस्य यथार्थनिर्धारणम्। यश्च विषयः तद्विचारविषयीभूतो भवति स विचार्यमाण इत्युच्यते। तदुक्तं भर्तृहरिणा—'कोटिद्वयस्पृग् विज्ञानं विचार इति कथ्यते। विचार्यमाणस्तज्ज्ञानविषयीभूत उच्यते'—इति। इह तु जहत्स्वार्थलक्षणया विचार्यमाणशब्दस्य विचारविषयीभूते वाक्ये तात्पर्यम्। न हि वाक्यानि विचार्यन्ते किन्तु वाक्यैः विषयविशेषः। यथोदाहरणे (इहस्थे) दीक्षितस्य (प्रासादोच्चस्य) गृहं (गृहे इति यावत्) होतव्यं स्वस्त्ययनाद्यनुष्ठानं कर्तव्यं नवेति विचार्यते। तदेतत् सकलं समालोच्य विवृणोति—वाक्यानामिति। विचार्यमाणानां वाक्यानामिति यावत्। टेः प्लुत इति। एतच्च 'वाक्यस्य टेः प्लुत—' (८।२।८२) इत्यतोऽनुवर्तत इति ज्ञेयम्। गृहा इति होतव्यमिति। उभयोरेव वाक्ययोर्विचारविषयपरामर्शित्वात् तद्गतस्य शब्दयोः टेः प्लुतिरिति विवेकः। गृहा इ इत्येव पाठः सुबोधिनीबालमनोरमाकारसम्मतयोः दृश्यते। तत्र इ शब्दस्य विशेषप्रतिपत्त्यर्थं 'एचोऽप्रगृह्यस्य—' (३६२६) इति सूत्रमेव द्रष्टव्यम्। तत्र आकारोऽपास्ति। विचारशब्दं स्वयं व्याचष्टे—प्रमाणैरिति स्पष्टम्।

३६१७। पूर्वं तु भाषायाम् ॥ ८।२।९८ ॥

टी—। विचार्यमाणानां पूर्वमेव प्लवते। अहिर्नु रज्जुर्नु। प्रयोगापेक्षं पूर्वत्वम्। भाषाग्रहणात् पूर्वप्रयोगश्छन्दसीति ज्ञायते।

In classical language, however, (as opposed to vedic) the टि portion of the last word of the first sentence only of the two or more sentences which have clear reference to judgment (विचार) deserves to have the प्लुत form of accentuation (and not the टि of the last word of last sentence also which form of

accentuation is restricted to vedic language only). Thus the rule is for restriction regarding vedic method and classical method of accentuation with reference to sentences in respect of विचार or judgment. Thus नु in the first sentence only receives pluta accentuation and not in the last also. भाषाग्रहणात्—That is, from the acceptance of the the term 'भाषायाम्' here it is understood that the injunction expressed in the previous rule ( पूर्वयोग: ) is restricted to vedic literature only.

सिद्ध—। पूर्वं त्विति। अत्र तु शब्दोऽवधारणार्थ: पक्षान्तरद्योतनार्थो वा। स भिन्नक्रमो द्रष्टव्य:। पूर्वं भाषायामेव इत्यन्वय:। कयो: केषां पूर्वम् इति आशङ्क्य आह—विचार्य्यमाणानां पूर्वमिति। पूर्वसूत्राद् विचार्य्यमाणानामित्यनुवर्तते। 'वाक्यस्य टे: प्लुत:—' ( ८।२।८२ ) इति च प्राग्वत्। तदाह—प्रवत इति। टेरिति शेष:। अहिर्नु इति। नुरिति वितर्कद्योतनार्थम्। अत्राग्निमनुशब्दस्य प्लुतत्रितिर्नाभ्यत इति द्रष्टव्यम्। अत्र पूर्वग्रहणम् न तावत् 'अस्मारादितरर्तेदिक् शब्द—' इति दिक् शब्दत्वद्योतनार्थं किन्तु अस्माकं ये पूर्वा: ( पूर्वपुरुषा: ) इतिवद् विशेषत्वेन प्रयोग:। 'ओमभ्यादाने' इत्यारभ्य एतदन्तं या: काश्चित् प्लुतयतयो विहितास्तत: सर्वापेक्षया किमत्र पूर्वग्रहणमुत 'विचार्यमाणानाम्' इत्येकमात्रापेक्षमित्याशङ्क्य समाधानमाह—भाषाग्रहणात् पूर्वप्रयोग: छन्दसि इति। पूर्वं योग: "विचार्य्यमाणानाम्" इति पूर्वसूत्रम्। तस्यैव छन्दोमात्रविषयत्वं सूत्रत इत्यर्थ:।

३६१८। प्रतिश्रवणे च। ८।२।९९॥

टी—। वाक्यस्य टे: प्लुतोऽभ्युपगमे प्रतिज्ञाने श्रवणाभिमुख्ये च। गां मे देहि भो३:। हन्त ते ददामि३। नित्य: शब्दो भवितुमर्हति३। दत्त किमात्थ३।

In any sentence, in the vedic literature, the टि portion of

the last word is accented as pluta—provided that the sense of consent, promise or listening to in expectation of an answer, is referred to thereby. Thus in the matter of consent i.e, 'अभ्युपगम—' = 'हन्त ते—'। In the matter of promise (प्रतिज्ञान)—'नित्यः शब्दः—'(A word deserves to be permanently present—This is a proposition accepted in a general way without giving proper reasons to establish the truth of the same). In the matter of listening to (श्रवणाभिमुख्यं) = 'दत्त—'well, Datta, what have you got to say here (i.e, let me demand your opinion about the matter).

मित—। प्रतिश्रवणे इति। प्रतिश्रूयते इति प्रतिश्रवणं प्रतिश्रवः। भावे ल्युट्। तस्य च अभ्युपगमः (स्वीकारः), प्रतिज्ञानम् (सप्रमाणमिदमहं करिष्यामीति प्रतिश्रुतिरित्यर्थः), श्रवणाभिमुख्य (श्रवणार्थमनुकूलतेति यावत्) इति त्रिविधोऽर्थः। ततो व्याचष्टे—वाक्यस्य टेरित्यादि। तत्र अभ्युपगमे प्रतिज्ञाने चार्थे। प्रतिज्ञानमित्यत्र गतिसमासः। श्रवणाभिमुख्यार्थे तु—'लक्षणेनाभिप्रती आभिमुख्ये' इति समासः (अव्ययीभावः)। क्रमेणोदाहरति—हन्त ते इति। अत्र अभ्युपगमः। नित्यः शब्द इति। एतत् प्रमाणार्थं प्रतिज्ञायते। दत्त किमिति। अत्र किन्ते मतमिति तन्मतश्रवणाभिमुख्यं सूच्यते।

३६१८। अनुदात्तं प्रश्नान्ताभिपूजितयोः ॥ ८।२।१०० ॥

टी—। अनुदात्तः प्लुतः स्यात्। दूराद्धूतादिषु सिद्धस्य प्लुतस्यानुदात्तत्वमात्रमनेन विधीयते। अग्निभूत३इ। पट३उ। 'अग्निभूते' 'पटो' एतयोः प्रश्नान्ते टेरनुदात्तः प्लुतः। शोभनः खल्वसि माणवक।

In vedic literature, a प्लुत vowel is to be regarded as अनुदात्त

(and not उदात्त as here previously done) in such cases as the final letter of a word in a query and as that of a word used in a sentence to bring forth the sense of admiration (or respect). This rule, though occurs in the midst of such rules as are enjoying the प्लुत system, does not here advise the injunction of प्लुत but it seeks to enjoin the state of being अनुदात्त (or low pitch) on the part of a प्लुत vowel which has elsewhere, i.e in the cases of calling form a distance etc, been instructed to have the उदात्त or highsounding pitch ( cp—'वाक्यस्य टेः प्लुत उदात्तः' 'दूराद्धूते' etc) अग्निभूतइ, पटउ—These illustrate अनुदात्तत्व here in the case of a final in a query ( प्रश्नान्ते ). The original words are अग्निभूते and पटो and the final letters of them are enjoined to be अनुदात्त by this rule (as also स्वरित pluta by—प्रश्नाख्यानयोः ). Now 'ए' and 'ओ' are final letters here which being dipthongs can be broken up as अ+इ and अ+उ. Hence it is that इ and उ are regarded as final letters and also treated as such. The instance of अभिपूजित or expression of admiration is 'शोभनः खल्वसि—' you are good indeed, oh boy. The present rule enjoins the अनुदात्तत्व of the प्लुत vowel (which is the अकार here of the final term माणवक ) and the plutas of the same has been enjoined by the rule 'दूराद्धूते च'.

टि०—। अनुदात्तमिति। नैतत्प्लुतविधानेनास्यैवं यथानेन सूत्रेण यथापूर्वं प्लुतस्वरो विधीयते। किन्तु पूर्वेण विहितस्य प्लुतस्य अनुदात्तस्वरविधिः। सा च ( अनुदात्तश्रुतिः ) 'दूराद्धूते च' इति '—प्रश्नाख्यानयोः' इति च विहिता। तेनात्र पुनः प्लुतविधिर्नयुज्यते। अतएवाह—अनुदात्तः प्लुतः स्यादिति। प्लुत इति न विधेयम्। किन्तु उद्देश्यतो कथं पदमेव। अनुदात्त इत्येव तु विधेयमिति विवेक्तव्यम्। अत

प्रश्नान्ताभिपूजितयोरिति वाक्यशेषः। अथ कः प्रश्नान्तशब्दार्थः, को वा अभिपूजितशब्दार्थ इति चेदुच्यते। प्रश्नवाक्ये यच्चरमं प्रयुज्यते स प्रश्नान्तः। तथा अभिपूज्यत इत्यभिपूजितम्। नपुंसके भावे क्तः। प्रशंसनमिति यावत्। ततः प्रश्नान्तश्च अभिपूजितञ्चेति द्वन्द्वः। सप्तमीद्विवचननिर्देशः। ततश्चायं समुदायतः सूत्रार्थः—प्रश्नान्ते विषये यः प्लुतस्वरो विहितः 'दूराद्धूते च' इति अभिपूजितविषये यश्च प्लुतस्वरो विहितः तस्य तस्य द्वयोरपीत 'अनुदात्तत्वं' विधीयते इति। अत एवेदानीं व्याचष्टे—दूराद्धूतादिषु सिद्धस्य प्लुतस्येति। अनुदात्तत्वमात्रम् इति। अनुदात्तत्वमेव अनुदात्तमात्रम् इति मयूरव्यंसकादित्वात् समासः। प्लुतस्य अनुदात्तत्वमेवात्र विधानविषयः। न तु प्लुतस्यापि विधिरिति भावः। तस्य अन्यतः सिद्धेरिति। अग्निभूता३इ इति। पटा३उ इति च। 'अगमः पूर्वान् ग्रामान्' इत्येतद्वाक्यम् 'अग्निभूते पटो' इत्यनन्तरेण सम्बद्धम्। तदेवम् अग्निभूते, पटो इत्यनयोः प्रश्नगतचरमावयवे सिद्धे तत्र च एकारस्य ओकारस्य च गुरुवर्णत्वाद् विश्लेषेण अ+इ, अ+उ इत्याकृतिसम्पादनसामर्थ्यात् 'प्रश्नाख्यानयोः' इत्यनेनास्य अ इत्यस्य प्लुतस्य अनुदात्तत्वश्रुतिः। एतदेव स्पष्टीकर्तुमाचष्टे—अग्निभूते पटो एतयोः प्रश्नान्तः इति। प्रश्नान्ते यः 'अग्निभूते' शब्दः यश्च 'पटो' शब्दस्तदुभयोरित्यभिप्रायः। अथ अभिपूजितविषये उदाहरति—शोभनः खल्वसि इति। प्रशंसनीयाकृतिचारित्रोऽसि बालक (माणवक) इति प्रशंसायां गम्यमानायां 'दूराद्धूते च' इति प्लुते च सिद्धे तस्य प्लुतस्यानेनानुदात्तत्वम्।

**३६२०। चिदिति चोपमार्थे प्रयुज्यमाने ॥ ८।२।१०१ ॥**

**दी—। वाक्यस्य टेरनुदात्तः प्लुतः। अग्निचिद्भायात्। अग्निरिव भायात्। उपमार्थे किम्? कथंचिदाहुः। प्रयुज्यमाने किम्? अग्निर्माणवको भायात्।**

In vedic language, the प्लुत vowel will be regarded as of अनुदात्त pitch provided it is the टि portion of a word in such a sentence as contains the particle चित् used in the sense of

उपमा or simile. Thus 'अग्निचित्—'(shines like fire ; भायात् = भा (दीप्तौ) + विधिलिङ् यात् ). Here the final आ of the term भायात् is प्लुत and at the same time अनुदात्त. Why add the term 'उपमार्थे' in the rule ? For in instances like कथञ्चिदाहुः (said somehow), here the final vowel of the last term is neither प्लुत nor अनुदात्त as चित् is here used in the sense of 'difficulty' and not similarity. Well, what is the force of the term 'प्रयुज्यमाने' in the rule ? Witness अग्निर्माणवकी भायात् ( he burns like fire ) where the sense of similarly is present but yet the absence of the use of 'चित्' in that sense bars the final vowel of भायात् to be प्लुत + अनुदात्त as well.

मित—। चिदिति। 'वाक्यस्य टेः प्लुत उदात्तः' (८।२।८२) इत्यत 'उदात्त'वर्जं सर्वमप्यनुवर्तत इति व्याचष्टे—वाक्यस्य टेरिति। 'चित्' अनिश्चयार्थद्योतकमव्ययम् यद्युपमार्थे प्रयुज्यत इति वाक्यशेषः। यद्यपि अन्येषामपि इवादीनामस्ति उपमानार्थे प्रयोगस्तथापि तेषामत्र न ग्रहणं किन्तु उपमानार्थे प्रयुज्यमानस्यैव चिदित्यस्य ग्रहणम् नत्वप्रयुज्यमानस्य अतएव प्रयुज्यमाने इत्युक्तम्। सूत्रे चशब्दश्चैवं प्लुतसमुच्चयार्थः। 'एतदेव ज्ञापयति पूर्वसूत्रे गुणभाव विधीयत इति बोध्यमित्याहुः'। इह तु सुप्यत इति तेषामाशयः। सूत्रे इतिशब्दस्यायमभिप्रायः। यद्यस्य ग्रहणमत्र न क्रियेत तदा उपमानार्थे कस्मिंश्चिच्छब्दे प्रयुज्यमाने चिच्छब्दः प्लुत इत्येवमर्थो विज्ञायेत। इति शब्दे तु सति, प्रयुज्यमाने इत्येतच्चिच्छब्दस्य विशेषणम्। प्लुतस्तु 'वाक्यस्य टेः—' इत्यधिकारात्तस्यैव भवति। तदेवं पर्य्यालोच्य उदाहरणापदेशेनाह—अग्निचिदिति। अत्र चिच्छब्दस्य न प्लुतः किन्तु भायादित्यस्यैव। अन्यथाभावे पुनरितिशब्दे चिच्छब्दस्यैव प्लुतः स्यादित्यभिप्रायः। चिच्छब्दस्य उपमानार्थत्वं दर्शयति—अग्निरिवेति। भायादिति—भाधातोः लिङि विधौ। दीप्यतेति इति तदर्थः। कथञ्चिदिति—अत्र तत्र चिच्छब्द इति नाय सूत्रप्रवृत्तिः। प्रयुज्यमाने किमिति। 'चिदिति चोपमार्थे' इत्येव सूत्रमस्तु। अप्रयुज्यमाने प्रयुज्यमान

इत्यनुयोगः। तत्राह—अग्निर्माणवक इति। माणवकः (बालकः) अग्निरिव दीप्यत इत्यर्थः। अत्र उपमानार्थोऽस्ति। तत्र चिच्छब्दस्यापि प्रतीतिरस्त्येव। तस्यापि उपमानार्थाभ्युपगमात्। किन्तु प्रतीतिमात्रं न सूत्रप्रवृत्तिगमकम्। किन्तु साक्षात्प्रयोग एव। अतः सत्यप्युपमानार्थे यदि चिच्छब्दस्य स्पष्टतः प्रयोगो नास्ति तदा सूत्रं न प्रवर्तिष्यते इत्येतद् ज्ञापयितुं 'प्रयुज्यमाने' इति गृहीतम्।

## ३६२१। उपरिस्विदासीदिति च ॥ ८।२।१०२ ॥

**टी—। टेः प्लुतोऽनुदात्तः स्यात्। उपरिस्विदासी३त्। अधःस्विदासी३दित्यत्र तु 'विचार्यमाणानाम्' (३६१६) इत्युदात्तः प्लुतः।**

In vedic language the प्लुत vowel, enjoined for the टि portion of the last word in the sentence 'उपरिस्वित् आसीत्' also, is to be regarded as अनुदात्त in pitch (and not उदात्त). Thus—'उपरि—' (It (the supreme soul) was above all). But from this clear mention of 'उपरि—' the final vowel in the case of the sentence 'अधःस्विदासीत्' (as scanned in the text) has to be regarded as 'उदात्त प्लुत' by the rule 'विचार्यमाणानाम्' (3616) and not 'अनुदात्त प्लुत'.

मित—। उपरिस्विदिति। स्विदिति निरर्थकमव्ययम्। एतेन 'उपरि' इत्यस्यैवाव्ययस्य अर्थो द्योत्यते। 'वाक्यस्य टेः प्लुतः—' (८।२।८२) इत्यनुवर्तते टेः प्लुत इति। 'उपरिस्विदासीद्' इति वाक्यस्य अन्तिमशब्दस्य टेः प्लुत अनुदात्त इत्यर्थः। 'अनुदात्तम्—' (३६१९), इत्यतोऽनुदात्त इति। उपरि इति—अत्र प्लुतस्यानुदात्तश्रुतिर्मूले एव स्पष्टा। ननु ब्रह्मविषये गम्भीरत्वद्योतनार्थम् 'उपरिस्विदासीत्' 'अधःस्विदासीद्' इति वाक्यद्वयं छन्दसि (ऋग्वेदे) दृश्यते। तत्र यदि पूर्वस्य प्लुतानुदात्तश्रुतिरनेन विधीयते तदा परस्यापि सा स्यादित्यत आह—अधःस्विदासीदित्यत्र त्विति इत्युदात्तः प्लुतः इति। विचार्यमाणानामित्यनेन प्लुतस्य अनुदात्तप्रतीतिं धाना-

भावाद्‌यथा पूर्वमुदात्तश्रुतिरेव पर्यवसीयते। ततश्चास्यापि वाक्यस्य (अधःस्विदित्यस्य) यथा पूर्वमुदात्तश्रुतिरेव पर्यवसीयते। ततश्चास्यापि वाक्यस्य (अधःस्विदित्यस्य) एतच्च हरदत्तमतमिति शब्देन्दुशेखरे स्पष्टम्। एकस्यैव ब्रह्मणः समकालमुभ्यावस्थान-मधोऽवस्थानञ्च सङ्गच्छत इति तस्यातिगम्भीरत्वावाङ्मनसगोचरत्वं च दर्शयितुमेव-मुक्तम् उपरिस्विदिति, अधःस्विदिति—चेति साम्प्रदायिकाः।

## २९२२। स्वरितमाम्रेडितेऽसूयासंमतिकोपकुत्सनेषु ॥ ८।२।१०३ ॥

टी—। स्वरितः प्लुतः स्यादाम्रेडिते परेऽसूयादौ गम्ये। असूयायाम्—अभिरूपक३ अभिरूपक रिक्तं ते आभिरूप्यम्। संमतौ—अभिरूपक३ अभिरूपक शोभनोऽसि। कोपे—अविनीतक३ अविनीतक इदानीं ज्ञास्यसि जाल्म। कुत्सने—शाक्तीक ३ शाक्तीक रिक्ता ते शक्तिः।

In vedic literature, the pluta vowel enjoined for टि portion of a word is to be regarded as also स्वरित in pitch (and not अनुदात्त or उदात्त) provided a term designated as आम्रेडित follows and also the sense of malice (असूया), appreciation (संमति), anger and censure are implied. Thus अभिरूपक etc—Hallow nice-looking fellow! Your nicety is of no avail. शोभनोऽसि—I appreciate or admire your beauty. अविनीतक = स्वार्थे or अनुकम्पायां कः। शाक्तीक—one holding शक्ति (a kind of weapon) शक्ति + ईकक् by "शक्तियष्ट्योरीकक्"। Similarly याष्टीक याष्टीक रिक्ते ते यष्टिः etc. Note that this injunction of प्लुत being optional we may also use as अभिरूपक अभिरूपक etc with duplication only enjoined by 'कुत्सायां समासेऽसूयासंमतिकोपकुत्सनभर्त्सनेषु'.

मित—। स्वरितमिति। 'वाक्यस्य टेः प्लुत—' इति वर्तते। तदाह—स्वरितः प्लुत इति। एतेनापि सूत्रेण असूयाद्यर्थे प्लुतस्य स्वरितत्वमेव विधीयते न तु टेः प्लुतत्वमिति पूर्ववद् बोध्यम्। किञ्च प्लुतस्य स्वरितत्वमात्रं विधीयते न त्वनुदात्तत्वं नवा उदात्तत्वमित्यपि विभाव्यम्। आम्रेडितशब्दार्थः पूर्वत्र 'आम्रेडितं भर्त्सने' (३६१४) इत्यत्र उक्तः। अभिरूपक अभिरूपक इति। असूयायामिदमुदाहरणमिति ज्ञापयितुम् 'असूयायाम्' इत्युक्तम्। एवं क्रमेणोदाहरणानि बोध्यानि। संमतिरभ्युपगमः। अभिरूपः सुन्दरः ततः स्वार्थे कप्रत्ययः। अत्र सर्वत्र 'वाक्यादेरामन्त्रितस्यासूयासंमति कोप-कुत्सनभर्त्सनेषु' (२१४६) इति द्वित्वम्। प्लुतश्रुतिस्तु वैकल्पिकी इति दीक्षितेन उक्तम्, तेन अभिरूपकइत्यपि प्रयोगः। एवमन्यत्रापि ज्ञेयम्।

**३६२३। क्षियाशीःप्रैषेषु तिङाकाङ्क्षम् ॥८।२।१०४॥**

**टी—। आकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यादाचारभेदादौ। आचारभेदे—स्वयं ह रथेन याति३ उपाध्यायं पदातिं गमयति। प्रार्थनायाम्—पुत्रांश्च लप्सीष्ट३ धनं च तात। व्यापारणे—कटं कुरु३ ग्रामं गच्छ। आकाङ्क्षं किम्? दीर्घायुरसि; अग्नीदग्नीन्विहर।**

If violation of custom ( क्षिया ), benediction or prayer ( आशीः ) and despatch ( प्रैष ) are implied, the टि portion is pluta and of स्वरित character of the तिङन्त verb which is in syntactical connection with any other तिङन्त verb in the sentence expressing the said sense (of violation of custom etc). Thus 'स्वयं ह रथेन याति—'Himself travels by a car whereas causes his preceptor to walk on foot, This is the instance of क्षिया or violation of manners. क्षिया—क्षि+अ भावे क्षियाम्। 'पुत्रांश्च etc—'May you child, have wealth and children'—This is the instance of आशीः

or benediction. Here प्रार्थनायाम् is in the sense of आशीः। The term तात is a term of endearment, cp—'पुत्रेऽपि तातशब्दः स्मृतो बुधैः' (यादवप्रकाशे)। व्यापारणे i. e. in the sense of प्रैष or despatching as a servent etc we have—'कटं कुरु—३'. Note that in the last two examples also the verbs लुनीहि and कुरु in the first sentences taking the puta pronunciation of स्वरित character (समाहारः स्वरितः) are in relation with the verbs लुनीहि (understood) and गच्छ respectively. Hence Bhattojidikshita asks 'अकाङ्क्षम् किम्' ? why say provided the verb is in syntactical relation with (any other) ? Witness 'दीर्घायुः—' you are possessedof longivity ; o the kindler of fire (अग्नीत्) serve all the (three) fires (दक्षिण, आहवनीय and गार्हपत्य). Here the verb असि in the first sentence is independent, for it has no connection with the verb विहर in the following sentence ; see also the rule 'अग्नीत्प्रेषणे—' (3611)

मित—। क्षियाशीरिति। क्षिधातुरत्र भौवादिकः। अन्तर्भावितण्यर्थोऽयम्। क्षयति क्षयं गमयति इति क्षिया। बाहुलकात् 'क्षः शर्चे'ति अप्रत्ययः। आचारोल्लङ्घनमिति तदर्थः इति साम्प्रदायिकाः। क्षय इत्यर्थ इति त्वाभिधानिकाः। तथाचामरः 'क्षये क्षिया' इति। तत्र क्षि (क्षये) अकर्मक इति विभावनीयम्। आशीर्मनसाशंसनम्। 'आशीः क्षेमपुच्छादौ' इत्यमरः। प्रैषेति इति प्रैषः प्रेरणम्। तिङ्+आकाङ्क्षम् इतिच्छेदः। अत्र आकाङ्क्षत इत्याकाङ्क्षम्। साकाङ्क्षमिति तदर्थः। तिङ् इति तदन्ते लाक्षणिकमिति तिङन्त इत्यर्थकम्। तदाह—आकाङ्क्षस्य तिङन्तस्य इत्यादि। इतो अत्र स्यादिति च वाक्यशेषः। 'वाक्यस्य टेः प्लुतः—' (८।२।८२) इत्यतो वाक्यस्य टेः प्लुत इत्यनुवर्तते। तेन लोकवेदे नाम्ये सूत्रार्थः—क्षिया आशीः प्रैषेषु गम्येषु वाक्यगतसाकाङ्क्षस्य तिङन्तस्य टेः स्वरितः प्लुतः स्यादिति। स्वरित इति पूर्वसूत्रात्। अथ क्षियायामुदाहरति—

आचारभेदे इति। आचारोल्लङ्घने इदमुदाहरणमिति भावः। स्वयं ह्रेति। ह इति मन्त्रस्य गद्यमयत्वे (यजुर्वेदीयत्वे) लिङ्गम्। एतच्च वाक्यालङ्कारमात्रार्थकं निरर्थकं वा। अत्रोदाहरणे यातीति साकाङ्क्षम्। तेन तस्यैव स्वरितः प्लुतः न तु गमयतीत्यस्य। एवमुत्तरत्रापि बोध्यम्। प्रार्थनायामिति—आशिषि उदाहरणद्योतनार्थमिदम्। पुत्रांश्च लप्सीष्ट—इति। अत्र चकारेण जिज्ञास्यदित्याकाङ्क्षायां धनंचेति। तत्र लप्सीष्ट इति क्रियापदमध्याहरणीयम्। तत्र पूर्वस्य साकाङ्क्षत्वात् स्वरितः प्लुतः। व्यापारणे इति। व्यापरणं प्रेरणम्। अतएव प्रैषे उदाहरणद्योतनार्थ-मिदम्। कटं कुरुवेति स्पष्टम्। दीर्घायुरसि इति। अत्र 'असि' इति निरा-काङ्क्षम्। तेनात्र स्वरितः प्लुतो न। 'अग्नीदग्नीन्—' इति अत्र 'अग्नीत्प्रेषणे—' (२६११) इति द्रष्टव्यम्। 'सर्वः प्लुतो वैकल्पिक' इत्युक्तं तत्रैव सूत्रे इत्यलम्।

## २६२४। अनन्त्यस्यापि प्रश्नाख्यानयोः ॥ ८।२।१०५ ॥

**टी—। अनन्त्यस्यान्त्यस्यापि पदस्य टेः स्वरितः प्लुत एतयोः। अगमः३ पूर्वा३न् ग्रामा३न्। सर्वपदानामयम्। आख्याने—अगम३म् पूर्वा३न् ग्रामा३न्।**

The pronunciation is a प्लुत vowel in the character of स्वरित pitch with reference to the टि portion of a word whether the same (word) is last or last but one (अनन्त) in a sentence expressed in the mode of a query or in that of a reply. Thus 'अगमः पूर्वान्—' Did you go to the villages (lying) in the eastern quarters? Here in this instance (of प्रश्न) the टि of all the words is 'स्वरितः प्लुतः—' pronounced as प्लुत in the स्वरित character—For the term अनन्त्य (here) includes all the words in the sentence excepting the last. And the टि of last shares the

injunction on the force of 'अपि' in the rule. The reply (to the query) is—'अगमम्—'I went there. Here also all are 'स्वरितः प्लुतः'।

मित—। अनन्त्यस्यापीति। तेन अन्त्यवर्जं सर्वस्यैव पदस्यान्तेन ग्रहणम् इत्युदाहरणयोर्विशदीभविष्यति। अपिशब्दबलेन अन्त्यमपि पदमाक्षिप्यते। प्रश्नाख्यानयोरिति। प्रश्ने आख्याने (गम्ये) इत्यर्थः। अत्र आख्यानमुत्तरम्। ततो व्याचष्टे—अनन्त्यस्य अन्त्यस्यापीति। एतयोरिति प्रश्नाख्यानयोर्गम्यमानयोरित्यभिप्रायः। तत्र प्रश्ने उदाहरति—'अगमः पूर्वान्—' इति। अगम इति—गमेर्लुङि सिपि रूपम्। अत्रोदाहरणे सर्वेषामपि पदानां टेः स्वरितः प्लुत इत्याह—सर्वपदानामयमिति। अयमिति स्वरित प्लुत इत्यस्य निर्देशः। एतच्च अनन्त्येति पदस्य व्याख्यानात् गम्यत इति। पूर्वान् पूर्वदिगवस्थितान् ग्रामान् अगमः त्वम् अगच्छः किमिति प्रश्नः। अत्रोत्तरमाह—अगमम्—इति। अत्रापि सर्वपदानां टेः स्वरितः प्लुतश्रुतिः।

प्रश्नान्ते अन्त्यस्य अनुदात्तोऽपि पक्षे भवति इति इत्तौ स्थितम्।

३६२५। प्लुतावैच इदुतौ ॥८।२।१०६॥

टी—। दूराद्धूतादिषु प्लुतो विहितः। तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते। ऐ३ तिकायन। औ३ पगव। चतुर्मात्रावत्र ऐचौ संपद्येते।

That the टि portion of a word in a sentence is प्लुत (as well as उदात्त) has been arranged when some one has to be addressed from a distance under rules 'दूराद्धूते च' (95); 'गुरोरनृतोऽनन्त्यस्यापि एकैकस्य—' (97) etc. In that very connection when there is question of प्लुत on the part of ऐच् (ऐ औ) letters, then इत् or इकार and उत् or उकार which form a part and parcel of ऐ and औ respectively receives the प्लुत injunction. Thus ऐतिकायन and

औपगव—' Here both ऐ and औ constitute four मात्राs each. For इ being declared प्लुत has got three मात्राs and अ has one. Thus ऐ has four मात्राs, similarly उकार being declared प्लुत has got there मात्राs and अ has got one. Conaequently औ gets four मात्राs.

मित—। ऐतावेच इति। प्लुतौ+ऐचः+इत्+उतौ इतिच्छेदः। ऐच् इति ऐकारस्य औकारस्य च ग्रहणम्। इदिति इकारमात्रस्य। उदिति उकारमात्रस्य। तस्य तस्य ऋस्वस्येत्यर्थः। दूराद्धूतादिष्विति—'दूराद्धूते च' (८५) 'गुरोरनृतो-ऽनन्त्यस्याप्येकैकस्य प्राचाम्' (८७) इत्यादौ इत्यभिप्रायः। तत्र हूतमिति सम्बोधने लाक्षणिकम्। दूरम् इति तत्स्थे लाक्षणिकम्। यावता प्रयत्नेन सम्बोधनं क्रियते ततोऽधिकप्रयत्नसाध्यं दूरस्थस्याह्वानम्। तत्र यद् वाक्यमुच्चार्यते तस्य टेः प्लुत उदात्त इति दूराद्धूतादिषु विहितः। तस्य किमित्यपेक्षायामाह—तत्रैव ऐचः। तत्रेति दूराद्धूतादौ। तत्र यदा ऐचः ऐकारस्य औकारस्य वा प्लुतः प्राप्नोति तदा तस्य ऐकारस्य औकारस्य च अवयवयोः इकारोकारयोरेव (उदात्तः) प्लुत विधीयते इति बोध्यमित्यर्थः। ऐति कायन इति। इतिकस्यापत्यं पुमान् ऐतिकायनः। फक्प्रत्ययः। एवमुपगोरपत्यं पुमान् औपगवः। अत्र अण्प्रत्ययः। चतुर्मात्रौ+अत्र ऐचौ इतिच्छेदः। चतस्रः मात्रा अनयोः इति चतुर्मात्रौ। अयं सारांशः—इदुतोः प्लुते कृते तयोस्तिस्रो मात्राः। अवर्णस्य च प्रतिस्थलम् (ऐकारस्थले च) एका मात्रा इति मिलित्वा चतुर्मात्रः ऐकारः औकारश्चेति।

३६२६। एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्धस्याऽऽदुत्तरस्ये-दुतौ॥ ८।२।१०७॥

दी—। अप्रगृह्यस्य एचोऽदूराद्धूते प्लुतविषये पूर्वस्यार्धस्याकारः प्लुतः स्यादुत्तरस्य त्विदुतौ स्तः॥ 'प्रश्नान्ताभिपूजितविचार्यमाणप्रत्यभिवादयाज्यान्तेष्वेव—(वार्तिक)। प्रश्नान्ते—अगम:३ पूर्वा३न् ग्रामा३न्। अग्निभूत ३इ।

अभिपूजिते—करोषि पटा३ उ। विचार्यमाणे—होतव्यं दीक्षितस्य गृहा३ इ। न होतव्य३मिति। प्रत्यभिवादे। आयुष्मानेधि अग्निभूता ३ इ। याज्यान्ते। स्तोमैर्विधेमाग्नया ३इ। परिगणनं किम्? विष्णुभूते घातयिष्यामि त्वाम्। अदूराद् ूत इति न वक्तव्यम्। पदान्तग्रहणं तु कर्तव्यम्। इह मा भूत्। भद्रं करोषि गौरिति। अप्रगृह्यस्य किम्? शोभने माले॥ 'आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः'। (वार्तिक)। अग्ना३इ पत्नीवः।

In the matter of प्लुत pronunciation with reference to an address from a neighbouring place—of an अप्रगृह्य एच् (ए, ओ) letter the आकार is pronunced as प्लुत in the first half and the इकार or the उकार is written separated in the last half. 'प्रश्नान्ताभिपूजितयोः—' (Varttika). It has to be remarked that this method of treatment (of प्लुत pronunciation) applies in the cases of प्रश्नान्त, अभिपूजित, विचार्यमाण, प्रत्यभिवाद (saluting in return) and याज्यान्त only (but nowhere else). Thus अगमः—etc in cases in order of प्रश्नान्त etc. For explanation of प्रश्नान्त and अभिपूजित see the rule 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' (3619). For the explanation of विचार्यमाण see 'विचार्यमाणानाम्' (Rule—3616), for the explanation of प्रत्यभिवाद see 'प्रत्यभिवादे शूद्रे' (94) where the टि portion is both प्लुत and उदात्त, and for याज्यान्त see the rule 'याज्यान्तः' (3609). 'आयुष्मानेधि—' It means: Be possessed of longevity, oh Agnibhuta; (अग्निभूते) is the vocative singular of word अग्निभूति where, ए being an एच् letter has been broken up into आ (आ ३) इ.

परिगणनं किम् etc—why a list is being made of प्रश्नान्त अभिपूजित etc with reference to the application or execution of the rule ?. Witness 'विष्णुभूते—' I shall get you killed Vishnubhuti. Here in the instance there has been made an address to विष्णुभूति from an adjoining spot as also there is one of the अपगृह्य एच् letters present. But because it does not fall under any of the cases प्रश्नान्त etc said in the Varttika therefore the एच् letter ( ए ) has not been broken up into अ and इ nor has अ ( or आ ) been pronounced as प्लुत in उदात्त अनुदात्त or स्वरित character. Here you may argue thus—' well 'विष्णुभूते' is not evidently an address from a distance. For in that case it would have pluta pronunciation of उदात्त character of the vocative only by the rule 'दूराद्धूते च' (95). Then it is doubtless an address from the vicinity. But in that case the rule 'एचोऽप्रगृह्यस्य—' (5626) must need apply as it contains the very words 'अदूराद्धूते' ( अदूरात्+हूते—addressing from the neighbourhood). Then how can you say that because it (the instance विष्णुभूते—) does not fall under any of the cases of प्रश्नान्त etc. of the Varttika so it will not be allowed the operation spoken of in this rule ?

To meet this rejoinder Bhattojidikshita says 'अदूराद्धूते इति न वक्तव्यम्'—or the phrase 'with reference to an address made from the close quarters, under प्रश्नान्त etc (these instances are intended by the सूत्रकार also) there is the sense of 'अदूराद्धूत' or, calling from near as there is a separate rule dealing particularly with 'दूराद्धूत' calling from afar. Thus the sense of 'अदूराद्धूत'

remains in the form of a suggestion or indication (ज्ञापक) in the cases of प्रशान्त etc. Moreover, the provision of 'अनुदात्त प्लुत' and 'स्वरित प्लुत' spoken of is opposed to 'उदात्त प्लुत' which has been provided in the case of 'दूराद्धूत'; and all kinds of प्लुत pronunciation whether it is उदात्त प्लुत, अनुदात्तप्लुत or स्वरित प्लुत is optional, comp the remark of Bhattoji 'इह प्राचाम् इति योगो विभज्यते । तेन सर्वः प्लुतो विकल्प्यते' under 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्' (Rule 97). It therefore goes without saying that a list only of those particular cases wherein the present rule ('एचोऽप्रगृह्यस्य—') has been intended to take effect will suffice and consequetly the intervention or rather interferance of the phrase 'अदूराद्धूते' is a clear redundance.

It is important to note in this connection, as Nagesha suggests, this view belongs to the authorship of Jayaditya (the author of काशिकावृत्ति).

And it is by no means less important to note here that Nagesha himself rejects this view (although he explains the same) and forms an explanation of अदूराद्धूत in a quite novel method (the sum and substance of his view may be found in sanskrit in the मितभाषिणी below).

But we may add with Bhattoji that परिगणन system should be adhered to and the exclusion of the phrase 'अदूराद्धूते' in the rule should not be followed as a rule, for भाष्य is silent on the point.

पदान्तग्रहणं तु etc—But instead of 'अदूराद्धूते' the term 'पदान्त' was proper to be inserted in the room of the term 'पूर्वस्य' in the

rule. For otherwise the scope of the rule is narrowed. Compare 'भद्रं करोषि—' Oh fool you are doing well—where the term गौः is vocative singular of गो and derived as गो + सु. Now 'गौ' contains एच् letter 'औ' but it (गौ) is not a पद when सु, which is a सर्वनामस्थान affix, follows; cp. the rule 'स्वादिष्वसर्वनामस्थाने' (230). And when it is not a पद the अकार lying at the end of it (for औ = अ + उ) cannot be regarded as existing in the पूर्वपद. Thus it does not become प्लुत whereas its pronunciation is प्लुत (N. B. the text does not read the प्लुत vowel whereas some commentary has read as 'भद्रं करोषि गौ३रिति').

[Nagesha, however holds that it is alright as पद is seen sometimes to be a synonym of वाक्य] ॥ शोभने माले—two nice garlands. There ए is प्रगृह्य hence no प्लुतविधि.

'आमन्त्रिते—' Varttika. The प्लुतविकार or the change of pluta pronunciation has to extend to the vocative singular here in the vedic language. अग्ने etc—It being an instance of address from a distance the rue would not apply here.

मित—। एचोऽप्रगृह्यस्येति। एचः + अप्रगृह्यस्य + अदूरात् + हूते इति, पूर्वस्य + अर्धस्य + आत् + उत्तरस्य + इत् + उतौ इति च्छेदः। अप्रगृह्यस्य इति एचो विशेषणम्। प्रगृह्यसंज्ञा तावत् 'ईदूदेद्द्विवचनं प्रगृह्यम्' (१०।१।११) इत्यारभ्य विहितः। अतथाभूतस्य एच इत्यभिप्रायः। अदूराद्धूत इति। समीपादाह्वाने सतीत्यर्थः। यद्वा अदूराद्धूत इति अनुवर्तमानस्य प्लुतस्य विशेषणम्। तथात्वे अदूराद्धूतो यः प्लुतविषयस्तस्मिन्नित्यर्थः। पूर्वस्येति। वाक्यान्तस्येत्यध्याहार्यम्। वाक्यान्तस्य पूर्वस्य पूर्वपदस्य अर्धस्य (टेरिति यावत्) अर्धभागस्य आत् आकारः

प्लुतः स्यात् ( अत्रसुदाहरणेषु अकारोऽपि क्वचित् दृश्यते )। उत्तरस्येति। उत्तरपदस्येत्यर्थः। अपदेशिवद्भावेन यदेव उत्तरपदम् तदेव उत्तरार्द्धम्। अचरमासामग्र्यवत्तान्तस्येति विभाव्यम्। 'प्रश्नान्ताभिपूजित—' इति वार्तिकमिदम्। अत्र सूत्रे यावन्तः प्लुता विधीयन्ते तेषां सर्वेषां परिगणनार्थमिदम् वार्तिकमारभ्यते। प्रश्नान्ते, अतिपूजिते, विचार्यमाणे, प्रत्यभिवादे, याज्यान्ते चैव सूत्रविहितः प्लुतः प्राप्नोति नान्यत्रेति वार्तिकार्थः। तत्र प्रश्नान्ते अनुदात्तः स्वरितो वा प्लुतः इति 'अनुदात्तं प्रश्नान्ताभिपूजितयोः' ( ३६१८ ) इत्यत्र 'अनन्त्यस्यापि प्रश्नाख्यानयो'रित्यत्र च स्पष्टम्। अभिपूजिते तु अनुदात्तः प्लुतः स च 'अनुदात्तम् प्रश्नान्ताभिपूजितयो—' रित्यत्रैव विहितः। विचार्यमाणे 'विचार्यमाणानाम्' इति उदात्तः प्लुतः। प्रत्यभिवादे चोदात्तः प्लुतः। स च 'प्रत्यभिवादेऽशूद्रे' ( ९७ ) इत्यत्र विहितः। याज्यान्ते चोदात्तः प्लुतः। स च 'याज्यान्तः' ( ३६१९ ) इत्यत्र विहितः इति तत्रैव द्रष्टव्यम्। अग्निभूत३इ। हे अग्निभूते इत्यग्निभूतिशब्दस्य सम्बोधनम्। अत्र एकारस्य द्विवचननिष्पन्नत्वाभावात् अप्रगृह्यत्वेन प्लुतः प्राप्नोति। स चाकारेकारसमाहारवर्ण इति। ( अकारस्य ) आकारस्य पूर्वखण्डे अनुदात्तः प्लुतः। उत्तरखण्डे त्विकारमात्रम्। करोषि पटा३ उ इति। हे पटो करोषि किमिति प्रश्नः। प्राग् वदत्यपि।

परिगणनं किमिति। प्रश्नान्ताभिपूजितादिष्वेव 'एचोऽप्रगृह्यस्य—' इति सूत्रेण प्लुतविधिर्नान्यत्रेति नियमः इति किमर्थमिति प्रश्नः। विष्णुभूते इति। अस्योदाहरणस्य वार्तिकोक्तप्रश्नान्तादिव्यतिरिक्तत्वेन विष्णुभूते इत्यत्र सत्यपि अप्रगृह्ये एचि, विद्यमाने चादूराद्धूतत्वे सूत्रोक्त—'पूर्वस्यार्धस्य आकारः प्लुतः स्यादुत्तरस्य इदुतौ स्तः' इति नियमव्यवस्था न प्रवर्तते इति सूत्राप्रवृत्तिरिति भावः।

न चात्र 'दूराद्धूते च' ( ९५—८।२।८४ ) इति उदात्तः प्लुतो भविष्यति इति वाच्यम्। तत्र अप्रगृह्यस्यैचो ग्रहणाभावात्। तस्य अदूराद्धूतमेवात्र गम्यते। किञ्च दूराद्धूतस्य 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्' ( ९७—८।२।८६ ) इत्यादावेव चतुष्कं न लभ्यते। तद् 'एचोऽप्रगृह्यस्य—' इत्यनेन अदूराद्धूतविषये उदात्तानुदात्तस्वरितभिन्नत्वमात्रेण प्लुतो विधीयते। तस्मादस्य ( अदूराद्धूतत्वस्य ) गमकत्वेन किं तेन स्वरकथनेन। किञ्च सर्वेषामस्य उक्तावपि प्रश्नान्तेऽत्र वा कृतास्य

३६२७। लयोर्यावचि संहितायाम् ॥ ८।२।१०८ ॥

टी—। इदुतोर्यकारवकारौ स्तोऽचि संहितायाम्। अग्नाइ याशा। पठा३वाशा। अग्ना३यिन्द्रम्। पठा३ वुदकम्। अचि किम्? अग्ना३इ वरुणं। संहितायां किम्? अग्ना३इ इन्द्र। 'संहितायाम्' इत्यध्यायसमाप्तेरधिकारः। इदुतोरसिद्धत्वादयमारम्भः सवर्णदीर्घत्वस्य शाकल्यस्य च निवृत्त्यर्थः। यवयोरसिद्धत्वात् 'उदात्तस्वरितयोर्यणःस्वरितोऽनुदात्तस्य' (३६५७ वा ८।२।४) इत्यस्य बाधनार्थो वा।

In the matter of संहिता or euphonic combination, यकार and वकार are respectively ordered in the rooms of इकार and उकार when an अच् or vowel follows. अग्नयाशा—अग्ने + आशा = अग्न आइ + आशा by 'एचोऽप्रगृह्यस्य—'the previous rule = अग्ना य + आशा = अग्ना याशा by the rule under discussion. पटावाशा—पटो + आशा = पट आउ आशा by the previous rule = पटव् + आशा = पट वाशा by the present rule etc. Why add the term अचि in the rule? Witness अग्नाइवरुणं (अग्ने + वरुणं—आकार here by the previous rule and this injunction of आकार being vedic irregularity or optional you do not find it in the first two cases). Here व (a consonant) following the rule does not apply. But why add 'संहितायाम्' (in the matter of euphonic combination). Witness अग्नाइ इन्द्र (अग्ने + इन्द्र) where the previous rule 'एचोऽप्रगृह्यस्य—' only takes effect and not the present rule as 'संहिता' is not intended here.

संहितायाम् इति etc—The term 'संहितायाम्' in the rule extends as far as the end of this (eighth) chapter. Hence in the

cases of अग्न + आशा and पटव + उदकम् etc (which result from अग्ने + आशा and पटी + उदकम् etc respectively), the rule 'इको यण्—' (47—6.1.77) which occurs in the first foot of the sixth chapter might direct यकार in place of इ and वकार in that of उ, for the injunction of यण् is present when the term 'संहितायाम्' follows being carried down from the pervading rule (अधिकारसूत्र) 'संहितायाम्' (6.1.72) occuring in the same chapter. But the इकार and the उकार (इदुतौ) spoken of herein viz by the rule 'एचोऽप्रगृह्यस्य—'(3626—8.2.107) which is the one-hundred seventh rule of the second foot of the eighth chapter are to be considered as invalid or असिद्ध with reference to the injunction of यण् provided for in the rule 'इको यणचि' on the force of the regulating rule (पारिभाषिकसूत्र) 'पूर्वत्रासिद्धम्' (8.2.1). It is therefore that the term 'य्वौ—' meaning यकार वकारौ has been inserted with this aphorism 'तयोः—'. Thus Bhattioji Dikshita Says इदुतोरसिद्धत्वात् अयमारम्भः—This rule (तयोः—) has been coined because the इकार and उकार (तयोः) spoken in the previous rule is invalid with ref. to यण् in इको यण्—।

Here there may be raised another rejoinder viz, this system of प्लुत pronunciation has been dealt with in the second foot (पाद) of the eighth chapter whereas the treatment of euphonic combination in respect of vowels (अच् सन्धि) has been spoken of in the first foot (पाद) of the sixth chapter i.e under the rules 'प्लुतप्रगृह्या अचि नित्यम्' (90—6.1.125) etc. this implies that the system of pluta pronunciation is to be understood as valid or सिद्ध with

respect to अच् सन्धि for otherwise the rules 'प्लुतप्रगृह्या:—', 'इकोऽसवर्णे' (6.1.127) etc are meaningless. Thus it is clear the system of प्लुत pronunciation, though dealt with under the chapter dealing with the invalid cases ( असिद्धकाण्ड ) i.e under 'पूर्वत्रासिद्धम्', is vaild in the cases of अच् सन्धि. Thus from this suggested sense or ज्ञापकन्याय we are safe to generalise the truth and extend the same ( ज्ञापकन्याय ) to the case in hand viz the case of इदुती ( spoken of ) and conclude that 'इदुती' also, though dealt with in the 'invalid chapter ( असिद्धकाण्ड ) under 'एचोऽप्रगृह्यस्य' (8.2.107), are valid ( सिद्ध ) with respect to यण् expressed in 'इकोयण्—' (6.1.77). This being the case the insertion of 'यूँ' and the rule 'तयो:—'(3627) becomes unnecessary.

Bhattoji agrees with the force of this rejoinder and thinking that even if इदुती are considered to be valid with respect to यण् then also the form standing अग्ना३ इन्द्रम् or पटा३ उउदकम् the said यणादेश will not operate for it will be superseded by सवर्णदीर्घ advised under the rule 'अक: सवर्णे दीर्घ:' (85—6.1.107) which is subsequent to the rule 'इको यण्—' (47—6.1.77); moreover the प्रकृतिभाव (or remaining as it is) will supervene which has been instructed under 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' (91—6.1.127). It is therefore that Bhottoji agains rematks in short 'सवर्णदीर्घस्य शाकल्यस्य च निवृत्त्यर्थं' i.e, the rule is for the cessation or prohibition of the operation of सवर्णदीर्घ and that of प्रकृतिभाव under 'इकोऽसवर्णे—' which he elliptically puts as 'शाकल्यस्य'। The previous यणादेश ( इको यण् ) having been thus

of no use here this rule ( 'तयोर्य्वावचि—' ) therefore carries its weight for it bars both 'सवर्णदीर्घ' and 'शाकल्यसर'। But again another statement in favour of the said यणादेश may be made in cases like भो विन्द्रम् ( भो इ इन्द्रम् )—यणादेश indeed takes effect superseding both 'सवर्णदीर्घ' and 'शाकल्यसर' although the vowel of भो has got a pluta pronunciation spoken of in vedic language (छान्दस) and the निपात (ई) follows upon the said pluta, so प्रकृतिभाव was due here. If there fore यणादेश comes in such cases then undoubtedly it will be so in these (present) cases also. If so then what is the good of the commencement of this (the present) rule. To reply to this argument he puts forward the last and conclusive reflection—.

यवयोरसिद्धत्वात् etc—or because यकार and वकार spoken of in 'तयो:—' are invalid, so the rule is necessary to bar the application of the ( स्वर or accent spoken of in the ) rule 'उदात्तस्वरितयोर्यण:'—(3657). The idea is that—on the score of the exposition 'विपादामपि पूर्वं प्रति परं शास्त्रम् असिद्धम्' under 'पूर्वत्रासिद्धम्' (8.2.1) this 'य्वौ'—( or य् and व् ) is invalid towards the arrangement of svarita pitch (स्वरितस्वरविधि) under the rule 'उदात्तस्वरितयो:—' for the present rule 'तयोर्य्वावचि' (8.2.108) follows upon or is subsequent to the rule 'उदात्तस्वरितयोर्यण:—'(8.2.4). If so the arrangement of स्वर i.e the injunction of स्वरित in place of अनुदात्त following a यण् letter will not hold good in the present case, although here also the said अनुदात्त pitch comes after यण् letter यकार or वकार. But on the other hand, had the said यणादेश been adhered to in such cases also then the स्वरित pitch re-

placing the यण् following अनुदात्त pitch could have hardly been barred or set aside. This, at last therefore i.e the carrying of the स्वरित pitch, taking effect in place of a यण् following अनुदात्त pitch, is the reason lying at the root of enunciating this rule 'तयोर्य्वावचि—'. And it is therefore that the rule is not unnecessary but necessary as otherwise the said स्वरितस्वर would, without doubt, take effect in these cases also.

Here ends the pluta-section dealt with from the rule 'ओमभ्यादाने' (3606—8.2.87). [These rules might have been considered under rules dealing with classical forms also as the said pluta system is optional and common, to both the procedures classical and vedic. But seeing that the various pluta pronunciations are not generally adhered to by classical writers and yet profusely met with in the vedic hymns, Bhattojidikshita has dealt with them almost entirely under the vedic section and not the classical one].

मित—। तयोर्य्वि ति। तयोः + य्वौ + अचि ( संहितायाम् ) इतिच्छेदः। अत्र तयोरित्यनेन 'एचोऽप्रगृह्यस्य—' (८।२।१०७) इति पूर्वसूत्रस्थितौ इदुतौ परामृश्येते। अत आह—इदुतोरिति। वचनपरिणामेनायमर्थलाभः। सूत्रे 'य्वौ' इत्यत्र य् च व् च य्वौ इतीतरेतरद्वन्द्वः। संहिता सन्धिः। स चात्र अजविषयएवेत्युदाहरणेषु स्पष्टम्। अग्नयाशा इति। अग्नि + आशा इति स्थिते 'अग्नि' इत्यत्र एचः अप्रगृह्यत्वात् 'एचोऽप्रगृह्यस्य—' (३६२८) इति नियमात् अग्नाइ आशा इति जाते अनेन सूत्रेण इकारस्य यकारादेशः। ततः अग्नाय् आशा = अग्नयाशा इति रूपम्। एवम् पटवाशा (पटौ + आशा) बोध्या। संहितायां किमिति। पदपाठविषये (सन्धिकार्यं भवति इति यावत्) सूत्रमिदं मा प्रवर्त्ततामिति मत्वा दर्शयति—अग्नाइ इन्द्र इति। अत्र इकारस्य पदपाठस्थत्वात् यकारादेशो न।

संहितायामिति। 'तयोर्य्वावचि—' (८।२।१०८) इति अष्टमाध्यायगतद्वितीयपादस्यान्तिमसूत्रम्। ततश्च 'संहितायाम्' इति तदध्यायस्य परवर्तिपादद्वये प्रतिसूत्रमनुवर्तत इत्यर्थः।

इदुतोरसिद्धत्वादिति। अत्रायमक्षरार्थः—यतः (पूर्वसूत्रविहितौ) इदुतौ असिद्धौ भवतस्ततः अयम् आरम्भः अस्य वर्तमानसूत्रस्य आरम्भः प्रक्रमः क्रियते इति शेषः इत्येकं वाक्यम्। किमर्थमयमारम्भस्तदाह—सवर्णदीर्घत्वस्येति। सवर्णदीर्घत्वस्य निरत्ययार्थः शाकल्यस्य च निरत्ययं इत्यन्वयः। तदेतदुभयविधविधानविरक्तये सूत्रमिदमुपस्थापितम् इति।

अत्र निर्गलितार्थस्त्वयम्—इदुतौ तावत् 'एचोऽप्रगृह्यस्य—' (८।२।१०७) इति सूत्रे विहितौ। तच्च सूत्रमष्टाध्याय्या अष्टमाध्यायस्य द्वितीयपादस्य प्रथमसूत्रात् 'पूर्वत्रासिद्धम्' (८।२।१) इत्येतस्मात् परवर्ति। ततश्च पूर्वत्रासिद्धमिति न्यायात् तत्र विहितं कार्यं सपादसप्ताध्यायीं प्रत्यसिद्धम्। तदेवम् यद्यपि 'संहितायाम्' (६।१।७२) इत्यधिकारसूत्रात् 'संहितायाम्' इत्यनुवर्त्य 'इको यणचि' (४७—६।१।७७) इति इकारोकारयोः स्थाने यणादेशेन यकारवकारयोर्विधानं सम्भवति तथापि तत्रत्ययणादेशं प्रति अत्रत्यौ इदुतौ असिद्धौ इति 'एचोऽप्रगृह्यस्य—' इति सूत्रानुसारेण अत्र अग्न इ इन्द्र, पट उ उदकम् इत्यादौ स्थिते 'इको यणचि' (४७) इति न प्रवर्तते। ततश्चात्र यणादेशं प्रति योगान्तरमारम्भनीयम् इति 'तयोर्य्वावचि—', इत्येतद् वर्तमान सूत्रारम्भबीजम्।

ननु यदुक्तं यणादेशं प्रति एचोऽप्रगृह्यस्येदुतावसिद्धाविति नैतद्रमणीयं वचः। कुतः। सिद्धावेताविदुतौ ? कथमिव। ज्ञापकबलात्। किमिव तज्ज्ञापकमिति चेदुच्यते—विधिसूत्रवदष्टमाध्यायस्य असिद्धकाण्डे विहितः। तथा चाधिकार सूत्रम्—'वाक्यस्य टेः प्लुत उदात्तः' (८।२।८२) इति। तच्च 'पूर्वत्रासिद्धम्' (८।२।१) इत्येतस्मात् परतो वर्तते। तथा सति तस्य सपादसप्ताध्यायीं प्रति असिद्धत्वमेव न्याय्यम्। किन्तु 'प्लुतप्रगृह्या अचि नित्यम्' (६।१।१२५) इति षष्ठाध्यायस्य प्रथमपादगतं सूत्रम्। तत्रैव तु अष्टमाध्यायस्थस्य प्लुतस्य प्रकृतिभावो विधीयते। ततश्चैव ज्ञायते—प्रकरणीयकार्यस्य (प्रकृतिभावस्य) स्वरसन्धिषु

सिद्धमिति। अर्थाद् आष्टमिकोऽणकार्य्यस्य षाष्ठिकविषयेऽपि प्रवर्तत इति। एवं सति ज्ञापकस्य सामान्यापेक्षत्वादिद्वतावपि यणादेशं प्रति सिद्धावेवेति प्राप्तम्। तथा सति 'इको यण—' इत्येव सिद्धे नार्थोऽनेन सूत्रेण विहितेन इति प्राप्तं यदेतदुक्तस्य याथार्थ्यं पर्यालोच्य 'तयोर्य्वावचि—' इति सूत्रारम्भे प्रयोजनान्तरं दर्शयितुमाह—

सवर्णदीर्घत्वस्य च निवृत्त्यर्थं इति। नन्वेवमस्तु यणि सिद्धौ इदुतौ। अत्र 'अकः सवर्णेदीर्घः' ( ८५—६।१।१०१ ) इति दीर्घः क्रियताम् 'इको यणचि' (४७—६।१।७७) इति यण् क्रियतां वा। किमत्र कार्य्यम्। 'विप्रतिषेधे परम—' इति परिभाषया 'अकः सवर्णे—' इति सवर्णदीर्घः प्राप्नोति। तस्य यणादेशशास्त्रापेक्षया परत्वात्। तथा सति नार्थो यणादेशाश्रयणेन। अस्मिंस्तु सूत्रे विहिते इदुतोरसिद्धत्वमाश्रित्य सवर्णदीर्घो निवर्तिष्यते। तस्मात् 'तयोर्य्वावचि—' इति योगः सवर्णदीर्घनिवृत्त्यर्थः। किञ्चायं शाकल्यस्य निवृत्त्यर्थश्च। 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' ( ९१—६।१।१२७ ) इत्यस्य संनिपात् 'शाकल्यस्ये'ति पदेनोपादानं क्रियते। तथाच अध्ययाश इत्यादौ 'इकोऽसवर्णे—' ( ६।१।१२७ ) इति परत्वात् प्रकृतिभावश्च प्राप्नोति। तस्मात् कृतेऽपि यणादेशे नार्थसिद्धिः। एतेन यणादेशस्य सिद्धत्वज्ञापकस्वीकारबलादेव प्राप्नोतीति 'ज्ञापकसिद्धं न सर्वत्र' इत्येव न्याय्यमित्यत्र दर्शितमिति वेदितव्यम्। तदेवं ज्ञापकप्राप्तं षाष्ठिकम् यणादेशम् बाधित्वा 'तयोर्य्वावचि—' इति सूत्रारम्भ एव विधेय इति स्थितम्।

ननु पुनरपास्तु यण् सिद्धः। कथमिति चेदुच्यते। औ इन्द्र इति स्थिते औशब्दस्य छान्दसे प्लुते विहिते औ३ इन्द्र इति स्थिते प्लुतौकाराद् अव्यवहितपरवर्तिन इकारस्य निपातत्वेन प्रकृतिभावः प्राप्नोति। एवं स्थितेऽत्र वार्त्तिकम् आह—'यणादेशार्थम् इकः प्लुतपूर्वस्य यणादेशो वक्तव्यः सवर्णदीर्घनिवृत्त्यर्थः शाकल्यनिवृत्त्यर्थश्चेति। तथाचैवं सवर्णदीर्घं शाकल्यनिवृत्त्या औयिन्द्रम् इति यणि कृते सिध्यति। न च तथापि यणादेशं बाधित्वा अनेन सूत्रेण ( तयोर्य्वावचि इत्यनेन ) कार्य्यमिति वाच्यम्। प्लुतविकारे सत्येव हि 'तयोर्य्वावचि—' इत्यस्य प्रवृत्तिः। न तु प्लुतपूर्वेऽपि। प्लुतविकारो नाम प्लुतस्य अवस्थान्तरप्राप्तिः। तथाच अग्ने इन्द्र इति स्थिते अग्ने इति यदि प्लुतोच्चारणम् इति विधीयते तदनन्तरं परवर्तिन इकारस्य प्लुतपूर्वत्वम् भवति। अथ

'अग्ने' इति प्लुतोच्चारणं विभज्य 'अग्नइ' 'इन्द्र' इति विधीयते तदात्र प्लुतविकारो भवति इति सिद्धान्तः। विभागेन प्लुतस्यावस्थान्तरसंपादनादित्येव प्लुतपूर्वप्लुतविकारयोर्विवेकः। तथाचैवं भो इन्द्र इत्यादि स्थले तयोर्य्वावचि—इति निष्फलमिति प्राप्ते सिद्धान्तान्तरमुपन्यस्यति—यवयोरसिद्धत्वादित्यादि बाधनार्थौ वेत्यन्तम्।

यवयोरसिद्धत्वादिति। तथाहि 'उदात्तस्वरितयोर्यणः—' (३६५७—८।२।४) इत्यत्र उदात्तस्य स्वरितस्य च स्थाने यो यण् ततः परस्य अनुदात्तस्य स्वरितो विहितः। स च 'तयोर्य्वावचि—' (८।२।१०८) इति सूत्रस्योदाहरणे अग्नायाशा इत्यादावपि। यकारवकारात्मकयणादेशस्य अत्रापि सत्त्वात्। परमत्र स्वरितः स्वरो नेष्यते। तदेवं तर्हि तत्स्वरप्रत्याख्याने प्रयत्नः कर्तव्यः। स च प्रयत्नो यकारवकारयोरसिद्धत्वाश्रयः। असिद्धौ च यकारवकारौ 'उदात्तस्वरितयोः—' इत्येतत्कार्य्यं प्रति। व्याख्यातं 'पूर्वत्रासिद्धम्' (८।२।१) इत्यत्र त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धमिति। एवं चानयोर्यकारवकारयोरसिद्धत्वादनुदात्तस्य यण् परकत्वाभावात् स्वरितस्वरो निवर्तिष्यते। तत्राह—इत्यस्य बाधनार्थौ वेति। इत्यस्येति—स्वरितस्वरस्य इति बोध्यम्। प्रागुक्तयणादेशाश्रयणे तु 'उदात्तस्वरितयोर्यणः—' इति स्वरितो दुर्वारः स्यादिति यणादेशबाधनार्थम् (स्वरितस्वरबाधनार्थञ्च) 'तयोर्य्वावचि—' इति सूत्रारम्भः।

**३६२८। मतुवसो रु संबुद्धौ छन्दसि ॥ ८।३।१ ॥**

**टी—। रु इत्यविभक्तिको निर्देशः। मत्वन्तस्य वस्वन्तस्य च रुः स्यात्। 'अलोऽन्त्यस्य' (४२) इति परिभाषया नकारस्य। इन्द्र मरुत्व इह पाहि सोमम्। हरिवो मेदिनं त्वा—'छन्दसीरः' (३६००) इति वत्वम्।**

The word 'रु' in the सूत्र is mentioned without any case ending and it stands for 'रुः'। The rule means—(In the matter of संहिता) in the vedic literature, रु is the final substitute in

vocative singular of a word ending in the affix मतु (मतुप्) and वस (वसु क्वसु). By the परिभाषा 'अलोऽन्त्यस्य' (it has to be understood that) रु is the substitute for न् only in both the cases. Thus 'इन्द्र मरुत्वः—' Thou, Oh Indra, who hast gods (मरुत्) as your own, dost drink the soma-juice here; पाहि = पा + लोट् हि by बहुलं छन्दसि' शप् is dropped and consequently no पिबादेश is effected by 'पाघ्रा—'2360. Here the term 'मरुत्वः' is the instance. It is derived as मरुत् + मतुप् = मरुत्वत्, म has been replaced by व by the rule 'झयः' (1878) त् however is not changed into द् as it is not पदान्तः Now मरुत्वत् in सम्बुद्धि or vocative singular is मरुत्वन्. The final नकार of this is replaced by रु whence we have मरुत्वस् and मरुत्वः + इन्द्र = मरुत्व इन्द्र। He puts forth another instance of 'मतुप्—', 'हरिवः—' To thee on Indra who have got मेदिनम्— (मेद + इनि मत्वर्थ) and हरि or horses for thy self—हरि मतुप् = हरिवत्—म of मतुप् changing into व by the rule 'छन्दसीरः (3600) Then as before. Now Bhattoji to illustrate रुत्व in the case of वस of क्वसु प्रत्यय beings down the next rule—

मित०—। मतुवसोरिति। मतुवसोः + रु इतिच्छेदः। मतुश्च वस् चेति इतरेतरद्वन्द्वात् षष्ठी द्विवचनम्। मतुरिति मतुपो ग्रहणम्। वस् इति अनुबन्धपरित्यागेन उकारान्तस्य क्वसोः। वस् इत्यस्य अर्च्याचतरत्वेऽपि परनिपातः सौत्रः। मतुवसोरिति। तदन्तत्वे लाक्षणिकम्। तदाह—मत्वन्तस्य रुः स्यादिति। छन्दसि विषये सम्बुद्धौ परतः संहितायामिति शेषः। संहितायामिति पूर्वसूत्रादनुवर्तते। सम्बुद्धाविति सम्बोधनैकवचने इति बोध्यम्। 'एकवचनं सम्बुद्धिः' इति निर्देशात्। ननु मत्वन्तस्य वस्वन्तस्य कस्य वर्णस्य स्थाने 'रु' इत्यादेश इत्यत आह—अलोऽन्त्ये ति। अन्यत् स्पष्टम्।

तत्र मत्वन्तमुदाहृत्य वस्वन्तमुदाहर्तुं षष्ठाध्यायगतं क्वसुप्रत्ययघटितं सूत्रमवतारयति—

३६३८। दाश्वान् साह्वान् मीढ्वांश्च ॥ ६।१।१२ ॥

टी—। एते क्वसन्ता निपात्यन्ते। मीढ्वस्तोकाय तनयाय ॥ 'वन उपसंख्यानम्' (वार्तिक)। क्वनिब्वनिपोः सामान्यग्रहणम्। अनुबन्धपरिभाषा तु नोपतिष्ठते। अनुबन्धस्येहानिर्देशात्। यस्त्वायन्तं वसुना प्रातरित्वः। इणः क्वनिप्।

(Both in the vedic literature and in the classical one), the words दाश्वान्, साह्वान् and मीढ्वान् are irregularly formed with the affix क्वसु added to them. The procedure in दाश्वान् is as follows दाश्ट—(दाने—भ्वादि)+क्वसु=दाश्+वसु the affix क्वसु being लिट् substitute by 'लिटः क्वसु', the root was expected to be duplicated as also the augment of इट् by 'आर्द्धधातुकस्येट्—' (2185). But both these operations do not take affect on the strength of निपातन here. The base (प्रातिपदिक) is दाश्वस् thence दाश्वान् when the nominative sing affix सु follows, Note that here उपधादीर्घ or lengthenation of the penultimate takes place before the operation of नुम् although the latter (नुम् by "उगिदचां—") is subsequent to the former (उपधादीर्घ) as also persisting (नित्य); for if नुम् on the ground of its being subsequent as well as persistent (पर and नित्य) takes place before उपधादीर्घ, then the base will cease to be असन्त or ending in अस् and consequently the injunction of उपधादीर्घ will fail. Thus the very appearance of the rule suggests that उपधादीर्घ will appear first; for the subsequence (परत्व) and precedence (पूर्वत्व) of the rules compare 'अत्वसन्तस्य—' (6.4.14)

and 'उगिद्चाम्—' (7.1.70). दाश्वान् one who has given or giver comp. "दाश्वान् सुप्रत्रविषम्"—Rag. XIV. 71.

साह्वान्—is derived as सह (षहमर्षणे भ्वादि) + क्वसु. Here क्वसु takes effect and not कानच् which is expected after आत्मनेपदी roots because by निपातन the root is here परस्मैपदी (cp—Shabdendu shekhra). Then we have सह + क्वसु = साह्वस् by force of निपातन the operations refered to above takes place here.

Now the instance of the rule 'मतुवसो:—'with reference to वस् is the term मीढ्वः of the sentence 'मीढ्वः—'Oh thou the giver of plenty to your children and grand children (तोक). मीढ्वन् is Voc. singular (सम्बुद्धि).

'वन् उपसंख्यानम्—' a Varttika meaning 'It has to be mentioned in the rule 'मतुवसो:—'(3628) the final of the terms ending in वन् i.e the affixes क्वनिप् and वनिप् is also replaced by रु, in the vedic literature when सम्बुद्धि follows. वन् includes क्वनिप् and वनिप्। अनुबन्धपरिभाषा तु etc—The drift is this—It cannot be argued here that the term 'वन्' in the Varttika refers to the affix वनिप् only and not to क्वनिप् as there runs the regulation (परिभाषा) 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' as much as वन् represents वनिप् in form; the परिभाषा means that when something is enjoined in connection with an affix having particular indicatory to it, then (such) injunction or enjoining is valid with ref. to that very particular affix only and not that (affix) also which has got any other indicatory affected to it (notwithstanding the substanttial part of both the affixes being alike). This being the case Bhattoji says

that there being no mention of अनुबन्ध in the Varttika this परिभाषा will not hold good here, consequently वन् is a common term for वनिप् and क्वनिप् ( as also of ङ्वनिप् see the rule 'वनोरच' 456). 'यज्वायन्तम—' ( Oh thou who art a habitual comer in the early morning—प्रातरित्व: ) ; त्वायन्तम् wishing you युष्मद + क्यच्—दीर्घ by 'अकृत् सार्वधातुकयोः' (2898) and युष्म being replaced by त्व ). प्रातरित्व:—प्रातर + इ (6090) + क्वनिप् ( वन् ) by 'अन्येभ्योऽपि दृश्यते'.

मित—। दाश्वानिति। निपात्यन्त इति। एषु प्रत्येकं निपातनं भाष्ये दर्शितम् यथा—"दाश्वानिति किं निपात्यते। 'दाशेः क्वसौ द्विलेट् प्रतिषेधौ' ( वार्त्तिक )। दाशेः क्वसौ द्विलेट् प्रतिषेधौ निपात्येते"। दाश् दाने ( भ्वादि ) + क्वसु इति स्थिते 'लिटः क्वसु'रिति क्वसोर्लिडादेशत्वेन द्वित्वे प्राप्ते प्रत्ययस्य वलादित्वेनेटि च प्राप्ते निपातनार्थमयमारम्भः। तदेवं दाश्वस् इति प्रातिपदिकम्। तस्य अस्मन्तत्वेन 'अत्वसन्तस्य चाधातोः' ( ४२५ ) इति उपधादीर्घः। ततः 'उगिदचाम्—' ( २६१ ) इति नुम्। सूत्रे दाश्वानित्येकवचनमतन्त्रम्। दाश्वांसो दाशुषः सुतम् इति भाष्योदाहरणदर्शनात्।

साह्वानिति। षह मर्षणे इति धातुः ( भौवादिकः )। तस्य अनुदात्तेत्त्वनिबन्धनमात्मनेपदित्वनियमादेव परस्मैपदमिति निपात्यते। द्विलेट् प्रतिषेधनिपातनं प्राग्वत्।

मीढ्वानिति। मिह सेचने भ्वादिः। अत्र प्रत्ययस्य झलादित्वाभावेन 'हो ढः' ( ३२४ ) इत्यस्याप्राप्तेरपि हस्य ढत्वविधानम् निपातनात्। उपधादीर्घ द्विलेट्प्रतिषेधा यथापूर्वमत्रापि निपात्यन्ते।

दाश्वान् प्रदाता। मीढ्वान् प्रदाता सेचको वा। यद्यपि दाश्वान् इति सूत्रं लोकसाधारणं तथापि लोके तत्प्रयोगप्राचुर्याभावादत्रोपन्यासः। 'मीढुस्तोकाय—' इति। अत्र मीढुस् इति वसन्तस्य सम्बुद्धौ रूपं उदाहरणम्।

वन उपसंख्यानमिति। वार्तिकमिदम्। 'मतुवसोः—' इत्यत्र वनोऽपि परिगणनं कर्त्तव्यमिति शेषः। वन् इत्यनेन तदन्तत्वं लक्ष्यते। तेन वन्नन्तस्य सम्बुद्धौ रुत्वविधिरिति द्रष्टव्यम्। ननु वार्तिके वन् इति किं वनिप्मात्रं गृह्णाति उत अधिकमपि

किञ्चित्। तदाह—क्वनिब्वनिपोरिति। क्वनिपमप्ययं गृह्णाति। नन्वेतदयुक्तम्। वन् इत्यत्र (वार्तिके) एकतरानुबन्धकस्य ग्रहणादन्यतरानुबन्धकग्रहणायोगात् 'तदनुबन्धकग्रहणे नातदनुबन्धकस्य' इति परिभाषया वनिप एव ग्रहणं न तु क्वनिप इति प्राप्ते परिहरति—अनुबन्धपरिभाषा तु नोपतिष्ठत इति। न तु 'निरनुबन्धक ग्रहणे—' इत्यपि। तस्मात् नियमेनाप्रवृत्तेः ततश्च तेन क्वनिब्वनिपोर्द्वयोरेव ग्रहणम्। एतच्च 'वनोर च' (४५६) इत्यत्र विशदतरीकृतम्। लक्ष्यानुरोधाद् क्वनिपोऽत्रायहणम्। यज्वायन्त्व' वसुनेति।

३६३०। उभयथर्क्षु ॥ ८।३।८ ॥

टी—अम्परे छवि नकारस्य रुर्वा। पशूंस्तांश्चक्रे।

In the matter of riks (ऋक्षु) and the vedic literature, the नकार is optionally replaced by रु when छव् (छ, ठ, थ, च, ट, त) letter is followed by अम् (अ, इ, उ, ऋ, लृ, ए, ऐ, ओ, औ, ह, य, व, र, ल, ञ, म, ङ, ण, न) letters. Thus 'पशून्—' (पशून्+तान्+चक्रे—he made them as beasts)—In the case of पशून+तान्, the first नकार i.e नकार of the term पशून् is not, due to option, declared with रु. Hence पशून्+तान्=पशून्तान्. Then in the case of पशून्तान्+चक्रे here we have रु in place नकार (of तान्) whence we get पशून्तार्+चक्रे. Now by the rule 'अत्रानुनासिक: पूर्वस्य तु वा' (136—8.3.2) which directs optional अनुनासिकत्व of the letter preceding रु we have (पशून्तांर्+चक्रे as well as) पशून्तार्+चक्रे. In the case of the second form acts the rule 'अनुनासिकात् परोऽनुस्वारः' (137—8.3.4) directing the augments अनुस्वार before the substitute रु or र्. Thus we get in the latter case the form पशून्तां र्+चक्रे. Actually, therefore we now get the forms पशून्तांर्+चक्रे and पशून्तां र्+चक्रे. Now upon

पशून्तां र् + चक्रे act the rules 'खरवसानयोर्विसर्जनीयः' (76) replacing र by a विसर्ग and 'विसर्जनीयस्य सः' (138) changing विसर्ग into सकार. The resultant form is thus पशून्तांश्चक्रे in connection with the (final) operation of स् changed into श् due to the existence of च by the rule 'स्तोः श्चुना श्चुः' (111).

मित—। उभयथेति। उभयथा + ऋक्षु इतिच्छेदः। अत्र उभयथेति विकल्पार्थकः। ऋक्षु इति ऋचां विषये इत्यर्थः। 'पुमः खय्यम् परे' (८।३।६) इत्यतोऽम् परे इत्यनुवर्तते। 'नश्छव्यप्रशान्' (८।३।७) इत्यतो 'नः' इति 'छवि' इति चानुवर्तते। ततो व्याचष्टे—अम्परे छवीत्यादि। रुरिति 'मतुवसोः—' (८।३।१) इत्यतोऽनुवर्तते। पशून्तांश्चक्रे इति। इयं काचिदृक्। अत्र कृतविकल्पात् पशून्तान् इत्यत्र पूर्वभागे पशून इत्यस्य नकारस्य रुरित्यादेशो न। यद्वा नात्र संहिता कार्य्या। किन्तु नकारतकारयोर्यु क्तवर्णतयैव स्थितिरिति बोध्यम्। उत्तरभागे त्वेवं पशून्तान् चक्रे इति स्थिते अनेन नकारस्य (अन्तिमस्य) रुत्वे पशून्तार् चक्रे इति जाते 'अत्रानुनासिकः पूर्वस्य तु वा' (१२६—८।३।२) इति रोः पूर्वस्य आकारस्य अनुनासिकविकल्पात् पशून्तांर् चक्रे—पशून्तार् चक्र इति लब्धे 'अनुनासिकात् परोऽनुस्वारः' (१२७—८।३।४) इति द्वितीयपक्षे रोः पूर्वस्यानुस्वारे प्राप्ते पशून्तार् चक्रे—पशून्तां र् चक्रे इति लभ्यते। तस्य रकारस्य (रोः) 'खरवसानयोर्विसर्जनीयः' (७६) इति विसर्जनीयः (विसर्गः)। तस्य 'विसर्जनीयस्य सः' (१३८) इति सकारः। ततः इति सकारस्य श्चुत्वेन शः। एवं पशून्तांश्चक्रे इति सिध्यति। [ "पशू्ंस्तांश्चक्रे इत्यपि पाठो दृश्यते ]।

## ३६३१। दीर्घादटि समानपादे॥ ८।३।९॥

**दी—। दीर्घान्नकारस्य रुर्वा स्यादटि तौ चेन्नाटौ एकपादस्थौ स्याताम्। देवाँ अच्छा सुमती। महाँ इन्द्रो य ओजसा। उभयथेत्यनुवृत्तेर्नेह। आदित्यान्याचिषामहे।**

When any of the अट् letter (अ इ, इ, उ, ऋ, लृ, ए, ओ, ऐ, औ,

ह, य, व, र्) follows then र is the substitute for नकार coming after a long vowel provided such नकार and अट letter exist in the self-same foot only. Thus देवां अच्छा etc—Here देवान्+अच्छा=देवार् अच्छा (as also देवार अच्छा remaning without change)=देवांर अच्छा by 'आतोऽटिनित्यम्' (3632). Now in this case, apply the rules 'भोभगोअघोअपूर्वस्ययोऽशि' (167) which changes र or रेफ to यकार giving देवाय अच्छ, and 'लोपः शाकल्यस्य' (67) drops the यकार optionally. Thus we have forms here देवा अच्छ—देवायच्छ of these the first case is generally seen in the vedic literature. The final (अकार) of अच्छ has been lengthened by the rule 'निपातस्य च' (3538). The term 'उभयथा' occuring in the previous rule follows to this rule also. And it means 'optionally', so नकार in other cases may not be replaced by र. As for example 'आदित्यान्याचिषामहे' we begged or shall beg of the Adityas आदित्यान्+याचिषामहे—याच्+लुङ् महि—सिच् and इट्। The augment अट् being absent due to 'बहुलंछन्दस्यमाङ्योगेऽपि'.

मित०—। दीर्घादटीति। 'मतुवसो रुः—' (८।३।१) इत्यतोऽस्तोऽन्यप- विभाषया नकारस्येति रु इति चेहानुवर्तते। 'अत्रानुनासिकः—' (८।३।२) इत्यतो वा इति च। ततो व्याचष्टे—दीर्घान्नकारस्य रुर्वेति। अत्र सूत्रे 'समानपादे' इत्यत्र समानशब्दस्य एकशब्दार्थे वृत्तिः। तत्र च 'यस्य च भावेन—' इति भाव- लक्षणासप्तमी। तत्त्वायं नियमार्थः। तदाह—तौ चेन्नाटौ एकपादस्थौ स्यातास् इति। मान्यथेत्यभिप्रायः। नाटाविति। नकारश्च अट् चेत्यर्थः। 'देवां अच्छा—' इति। सुमती—सुमत्या शोभनमनयुक्तयामत्या इति शेषः। सुमतीत्यत्र 'सुपां सुलुक—' (३५६१—७।१।३८) पूर्वसवर्णदीर्घः। देवान् अच्छ अभिलक्ष्य गाव इति शेषः। तान् प्रीणयेति शेषः। कवि[illegible]

अच्छेत्यव्ययमाभिमुख्ये वर्तते। तस्य 'निपातस्य च' (३५१८—६।३।१३६) इति संहितायां चरमस्वरदीर्घः। अत्र देवान् अच्छ इति स्थिते नकारस्य रुत्वविकल्पः। तत्र रुत्वपक्षे इदम्। तथाहि एवं रुत्वे कृते 'आतोऽटि नित्यम्' (३६३२) इति रोः पूर्वस्य आकारस्य नित्यमनुनासिकः। तदेवं देवाँर अच्छ इति रूपे जाते 'भोभगो अघो अपूर्वस्य योऽशि' (१६७) इति रोर्यकारः। ततो देवाँय् अच्छ इति। पश्चात् 'लोपः शाकल्यस्य' (६७) इति यलोपविकल्पाल्लोपपक्षे इदम्। लोपाभावे तु देवाँयच्छ इति बोध्यम्। अवं च रुत्वविकल्पात्पक्षे रूपद्वयम्। अभावपक्षे तु देवानच्छेत्येकमेव रूपम्। एवं 'महाँ इन्द्रः—' इत्यत्र प्रक्रिया बोध्या। यः इन्द्रःतेजसा कायबलेन महान् इति मन्त्रार्थः। समानपादे इति नियमार्थमित्युक्तम्। तेन समानपादत्वाभावे नास्य सूत्रस्य प्रवृत्तिरित्याकलनीयम्। नन्वेवमस्तु एतन्नियमार्थम्। तदेतत् सूत्रम् तु सुत्यजम्। तथाहि यदि उभयथेत्यनुवर्तते तदा 'उभयथर्क्षु' (८।३।८) इत्येवास्तु लाघवात्। न च तत्र समानासमानोभयपादविषयम् इदन्तु समनपादविषयमेवेति नियमादस्ति प्रयोजनमिति वाच्यम्। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति पारिभाषिकशास्त्रबलेन तत्रापि संहिताकार्यस्योपस्थानात्। किञ्च बहृचाः समानपादेऽपि रुत्वाभावं स्वीकृत्य पठन्ति—'महान् हि सः' इति। ततोऽपि ज्ञायते 'दीर्घादटि—' इति सूत्रारम्भेऽपि न क्षतिरिति शब्देन्दुशेखरे विस्तरः। दीक्षितोऽप्याह—उभयथा इत्यनुवृत्तेरिति। आदित्यानिति। आदित्यान् याचिषामहे इतिच्छेदः। अत्र नकारस्य समानपादेऽपि रुत्वाभावः। रुत्वे तु आदित्याँ याचिषामहे इति स्यात्। याचिषामहे इत्यत्र याचतेर्लुङि महिङ् प्रत्यये सिचि तस्य इटि रूपम्। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यस्यापि नास्ति अडभावः। एवञ्च उभयथेत्यनेनैव सिद्धे दीर्घादटीति न कर्तव्यमिति तदाशयः।

३६३२। आतोऽटि नित्यम् ॥ ८।३।३ ॥

दी—। अटि परतो रोः पूर्वस्यातः स्थाने नित्यमनुनासिकः। महाँ इन्द्रः। तैत्तिरीयास्तु अनुस्वारमधीयते। तत्र छान्दसो व्यत्ययो इति प्राञ्चः। एवं च सूत्रस्य फलं चिन्त्यम्।

In vedic language the substitute अनुनासिक i.e a nasal आकार

in place आकार preceding र is persisting when any अट् letters follow. Thus महाँ इन्द्रः inplace of महान् इन्द्रः। There the Taittriya school, however, reads अनुस्वार thus महां इन्द्र (and not the usual reading महाँइन्द्रः). The old commentators (the authors of Kashika etc ?) Account to the change on the score of (the pervading character of) the rule 'व्यत्ययो बहुलम्' (3433—3.1.85) spoken of in vedic literature (छान्दस). If so, then the result i.e importance of the rule is obscure. The idea—If the rule 'व्यत्ययो बहुलम्' has to do with these cases also viz the variance of अनुस्वार and अनुनासिक sound then it is to all intents and purposes somewhat uncalled for, then rather have recourse to 'व्यत्ययो—'(3431). In other words the rule 'व्यत्ययोबहुलम्' has to do with many such cases whereas 'आतोऽटि—'is seviceable in some particular cases which again have to be explained by the help of the former as the latter is of little help and therefore deserves to be left out altogether. Note that 'आतोऽटि—'is of no use in view of the परिभाषा 'सर्वविधयश्छन्दसि विकल्प्यन्ते' also.

मित—। आतोऽटि इति। 'मतुवसो रुः—' (८।३।१) इत्यतो 'रु' इत्येवानुवर्तते। न तु नकारस्य इत्यपि। असम्भवात्। 'अत्रानुनासिकः पूर्वस्य तु वा' (८।३।२) इत्यतोऽनुनासिक इति पूर्वस्य इति च। तदाह—अटि परतो रोरित्यादि। तैत्तिरीयास्तु इति। तैत्तिरीयो यजुर्वेदीयशाखाभेदः। अनुस्वारमधीयत इति। महां इन्द्र इत्यधीयत इत्यर्थः। न तु महाँ इन्द्र इति। ननु तर्हि सूत्रं व्यर्थम् अथवा तैत्तिरीयाणामेवार्थे प्रमादस्तत्राह—तत्र छान्दसो व्यत्यय इति। प्राञ्च इति काशिकादादयोपि। 'व्यत्ययो बहुलम्' (३४३३—३।१।८५) इति हेतुमादित्य अत्रापि अनुनासिकस्थाने व्यत्ययेन अनुस्वार इति तेषां मतमिति भावः।

एवं चेति। अयमभिप्रायः। यदि तावद् 'व्यत्ययो बहुलम्' इति आश्रित्य एवम्विध ( स्वरविधि ) स्थलेऽपि विरोधपरिहारः क्रियते तदा विरोधसूलमेव लभ्यताम्। किमत्र विरोधपरिहारप्रक्रमेण। तथाहि यदि 'आतोऽटि—' इति सूत्रं नारभ्यते तदा 'महां इन्द्र' इत्यनुस्वारपाठे 'महाँ इन्द्र' इत्यनुनासिकपाठे वा मा काचिदनुपपत्तिः। सति तु सूत्रेऽनुपपत्तिर्विरोधश्च। एवं तर्हि लाघवात् 'आतोऽटि—' इति सूत्रमेव मास्तु। तथा सति 'व्यत्ययोबहुलम्' इत्यनुसारात् 'सर्वे विधयश्छन्दसि विकल्पन्ते' इति न्यायाद् वा सर्वं सुसम्पादं च भवेदिति विरोधपरिहारक्लेशो न कर्तव्य इति।

३६३३। स्वतवान् पायौ॥ ८।३।११॥

टी—। रुर्वा। भुवस्तस्य स्वतवाँः पायुरग्ने।

The substitute रु optionally replaces the नकार of the term स्वतवान् when the term पायु follows. Thus 'स्वतवाँः पायुः' in the instance 'भुवस्तस्य—'. The original form स्वतवाः पायुः = स्वतवान् पायुः where the procedure is as in देवा अच्छा etc with the only exception that the rules 'भोभगो—'(167) and 'लोपः शाकल्यस्य' (67) do not apply as the पकार of पायु is not an अश् letter. Consequently the rules 'खरवसानयोर्विसर्जनीयः' (76) applies effecting विसर्ग in place of र्।

मित—। स्वतवानिति। 'मतुवसोः—' ( ८।३।१ ) इत्यतो 'रु' इति। 'अत्रानुनासिकः पूर्वस्य तु वा' ( ८।३।२ ) इत्यतो वेति चानुवर्तते। तेन शेषं पूरयन् व्याचष्टे—रुर्वेति। अयमर्थः—स्वतवान् इति शब्दस्य नकारस्य स्थाने 'रु' इत्यादेशो वा स्यात् पायुशब्दे परतः। भुवस्तस्येति। अत्र स्वतवाँः पायुरित्युदाहरणम्।

३६३४। छन्दसि वाऽप्राम्रेडितयोः॥ ८।३।४९॥

टी—। विसर्गस्य सो वा स्यात् कुप्वोः प्रशब्दमाम्रेडितं च वर्जयित्वा। अग्ने त्रातऋतस्कविः। गिरिर्न विश्वतस्पृथुः। नेह।

वसुन: पूर्व्यःपतिः। अप्रेत्यादि किम् ? अग्निः प्रविद्वान्।
परुषः परुषः।

In vedic literature, the letter स् is an optional substitute for the विसर्ग followed by कु and पु i.e any letter of कवर्ग and of पवर्ग; This arrangement, however, will cease to take effect when the word 'प्र' or an 'आम्रेडित' follows (despite the said 'आम्रेडित' contains any of the letters of कवर्ग and पवर्ग at the outset). अग्ने—etc. त्रातः + ऋतः + कविः (Oh fire the saviour the true poet—(ऋतः कविः)। This is the instance in the case of 'कु' following. The alt. is ऋतः कविः without स्. Why add 'अप्राम्रेडितयोः' into the rule; compare अग्निः प्र etc where the rule not applying you cannot expect to have स् in place of the विसर्ग in such cases. In परुषः पुरुषः the subsequent term is आम्रेडित by the rule 'तस्य परमाम्रेडितम्' (83).

मित—। छन्दसि वेति सुगमा। अप्रेत्यादि किमिति। समाधत्ते—अग्निः प्र इति। परुषः इति। अत्र पूर्वत्र प्रशब्दस्य विद्यमानत्वेन विसर्गस्य सत्वाभावः। उत्तरत्र 'तस्य परमाम्रेडितम्' इति वीप्सायां द्विरुक्तस्य पुरुष शब्दस्य परभागस्य आम्रेडितत्वाद् तस्मिन् परतो विसर्गस्य सकाराभाव इति विभावनीयम्।

३७३५। कः-करत्-करति-कृधि-कृतेष्वनदितेः॥ ८।३।५०॥

दी—। विसर्गस्य सः स्यात्। प्रदिवो अपस्कः। यथा नो वस्यसस्करत्। सुपेशस्करति। उरुणस्कृधि। सोमं न चारुं मघवत्सु नस्कृतम्। अनदितेरिति किम्? यथा नो अदितिः करत्।

In the vedic literature a विसर्ग is replaced by a सकार when

it ( विसर्ग ) is followed by any of the terms कः, करत्, करति, कृधि and कृत ; but the विसर्ग of the term अदिति is not replaced by स in any case. The term कः is to be derived as कृ + लुङ् तिप् where the affix च्लि which has to replace लुङ् by 'च्लि लुङि' ceases to operate here by the rule 'मन्त्रे घसह्वरणशवृदहाद्वृच्कृगमिजनिभ्यो लेः' (3402—2.4.80). Then we have कृ + तिप् which gives कर् तिप् by गुण in connection with तिप् by 'सार्वधातुकार्ध—'(2168), र् having come in by 'उरण्' (20). Then इकार of तिप् eliding by 'इतश्च—' and तकार disappears by 'हल्ङ्याब्भ्यो दीर्घात् सुतिस्यपृक्तं हल्' (252). Whence we now have कर् = कः by 'खरवसानयोः—'(78). Note that the augment अट् has not been added before the root here ( due by 'लुङ्लङ्—' ) as there is the prohibiting rule 'बहुलं छन्दस्यमाङ्योगेऽपि' (ante). The combination here being अपः + कः ; the term अपः is the accusative plural of the base अप् (water).

It is important to note here that notwithstanding the 'विभाषा' expressed in the previous rule here is no arrangement of option although the beginning letter of every word following a विसर्ग is of कु or कवर्ग i.e ककार.

वस्यसः + करत्, here करत् also has to be derived as कृ + लुङ् तिप् but in a defferent way, for here the rule 'मन्त्रे घसह्वर' (3902) does not apply on the other hand here applies the rule 'कृमृदृरुहिभ्यश्छन्दसि' (3406—301.59) which enjoin अङ् in place of च्लि.

सुपेशस्करति—सुपेशः + करति ( कृ + लट् तिप् where by 'बहुलं छन्दसि'

the rule 'तनादिकृञ्भ्यउः' does not apply but 'कर्तरि शप्' applies appointing शप् after the root ).

उरुणस्कृधि—उरु + नः + कृधि. Here the term कृधि has been formed as कृ + लोट् हि। Then हि is replaced by धि by the 'श्रुशृणुपृकृवृभ्यश्छन्दसि' and we have कृधि. In the matter of the combination of उरु + नः apply the rule 'नश्च धातुस्थोरुषुभ्यः' (3649) which makes the नकार cerebral ( ण ) here.

Why say अनदितेः ( न + अदितेः ), but not on account of the following of the term अदिति ? ; witness अदितिः करत् ( but not अदितिस्करत् ) as the rule here does not apply.

वित—। कःकरदिति। 'विसर्जनीयस्य सः' ( ८।३।३४ ) इत्येतत् सर्वमप्यनुवर्तते इत्येतत् ज्ञापयन्नाह—विसर्गस्य स इति। छन्दसि इति शेषः। 'छन्दसि वा—' ( ३६३४ ) इति पूर्वसूत्राच्छन्दसि इत्येवानुवर्तते नान्यदिति बोध्यम्। तेनात्रसत्व-विकल्पो न। किन्तु नित्यमेव सः। तेनोदाहरति प्रदिवश्चस्करिति। अपः + कः इति स्थिते विसर्गस्य सकारः। सूत्रे कः, करत्, करति, कृधि, कृत एषाम् इतरेतरद्वन्द्वं विधाय सप्तमी बहुवचनम्। एषु परतो विद्यमानेषु इति च तदर्थः। अनदितेरित्यस्य अदितिशब्दस्यपर्युदासः। तेन अदितिशब्दस्यस्य विसर्गस्य कः करदित्यादिषु परतो न सकारः। 'कः करत्—' इत्यादिषु प्रत्येकं क्रमेणोदाहरणम्। तच्च मूले स्पष्टम्।

३६३६। पञ्चम्याः परावध्यर्थे ॥ ८।३।५१ ॥

दी—। पञ्चमीविसर्गस्य सः स्यादुपरिभावार्थे परिशब्दे परतः। दिवस्परि प्रथमं जज्ञे। अध्यर्थं किम् ? दिवस्पृथिव्याः पर्योजः।

In vedic literature a विसर्ग, growing at (the end of) the पञ्चमीविभक्ति is replaced by सकार provided the word परि follows

in the sense of 'generating from'. Thus 'दिवस्परि—' was first of all born from heaven. Herethe original form is दिव: परि where विसर्ग has been replaced by स because परि implies sense of अधार्थ = उपरिभवार्थ (being born from). Why add अध्यर्थे in in the rule ? For if परि is not used in this sense then विसर्ग will not be replaced by सकार. Cp.—'दिवस्पृथिव्या:—'(His) prowess or majesty extends or pervades over all the heaven and the earth ; (Break as परि + ओज:—पर्योज: where ओजम् means strength). Here the विसर्ग of the term पृथिव्या: which is in the fifth case-ending is not turned into सकार because the indeclinable परि here does not denote the sense of अधि or 'growing from' but it denotes extending all over or pervading through. The term 'दिवस्पृथिव्या' is not the effect of द्वन्द्व compound by 'दिवसश्च पृथिव्याम्' (92) for in that case we should have here दिवस्पृथिवीभ्याम् (ablative dual) and not दिवस्पृथिव्या: (ablative singular). It is therefore a combination of the words दिव: पृथिव्या: both ending in the ablative singular. सत्व inplace of the विसर्ग of दिव: being provided by 'विसर्जनीयस्य स:' (138).

मित—। पञ्चम्या इति। 'छन्दसि—' (८।३।४९) इत्यतश्छन्दसि इत्यनुवर्तते। 'विसर्जनीयस्य स:' (८।३।३४) इत्यतस्ति सर्वम्। सूत्रे पञ्चम्या इति सम्बन्धसामान्य विवक्षया षष्ठी। सम्बन्धश्चानुवर्तिष्यमानेन 'विसर्ग' इति पदेन। तदाह—पञ्चमी-विसर्गस्य स: स्यादिति। सूत्रे परावध्यर्थे इत्यत्र परौ अध्यर्थे इत्यवग्रह:। तत्र अध्यर्थे इति उपरिभवार्थे वर्तते। तच्च सूत्रगतस्य पराविल्यस्य विशेषणम्। ततो व्याचष्टे—उपरिभवार्थे परिशब्दे परत इति। दिवस्परि इति। अत्र दिव: इति पञ्चम्यन्तम्। तेनास्य विसर्गस्य सकार:। अधार्थे किमिति। अधार्थाभावे सत्यपि परिशब्दे परत: पञ्चमीविसर्गस्य सकारो माभूदित्येवमर्थमत्र

अध्यर्थे इत्यस्य समावेश इत्येतदुदाहृत्य दर्शयति—दिवस्पृथिव्याः इति। परिशब्दः सर्वतोभावार्थे वर्तते। तथाच दिवः पृथिव्याश्च सर्वतः ओजः शक्तिरस्य विद्यत इति। अत्रापि उभयत्रापि व्यत्ययेन षष्ठीस्थाने पञ्चमी। तथाचैवम् पृथिव्याः परि इति स्थिते परिशब्दस्य अध्यार्थकत्वाभावादुक्तसूत्रेणात्र 'पृथिव्याः' इत्यस्य पञ्चमीविसर्गस्य सकारो न। दिवस्पृथिव्या इत्यत्र 'दिवसश्च पृथिव्याम्' (९२७) इति द्वन्द्व इति न भ्रमितव्यम्। तथा सति दिवस्पृथिवीभ्यामित्येवावक्ष्यत्। तेन दिवः इति पृथिव्याः इति च पृथक् पञ्चम्यन्तम्। 'विसर्जनीयस्य—' इति सः।

३६३७। * पातौ च बहुलम् ॥ ८।३।५२ ॥

दो—। पञ्चम्या इत्येव। सूर्यो नो दिवस्पातु।

In vedic literature the विसर्ग at the end of a word ending in the fifth case-ending is irregularly replaced by स when the word पातु (or पति—if 'पतौ', ? as some say is the reading) follows. Thus 'सूर्यो नः—'Let the sun from heaven pretect us.

मित—। पातौ चेति। पूर्वसूत्रात् पञ्चम्या इत्यनुवर्तते इत्येतत् ख्यापयन्नाह—पञ्चम्या इत्येवेति। 'विसर्जनीयस्य सः' (८।३।३४) 'छन्दसि वा—' (८।३।४९) इत्येतदुभयतो विसर्जनीयस्य सः इति छन्दसि इति चानुवर्तते। तेनायमर्थः—पञ्चम्याः स्थाने जायमानस्य विसर्गस्य बहुलं सः स्यात् पालनार्थकस्य पातेर्लोट्प्रथमैकवचने पातुशब्दे परत इति। [ पतावित्यत्र पाठ इत्येके तथा सति पतिशब्दे परत इति व्याख्येयम् ]। सूर्यो न इति। दिवस्पातु इत्युदाहरणम्। पातु इत्यस्य पालयत्वित्यर्थः।

३६३८। षष्ठ्याः पतिपुत्रपृष्ठपारपदपयस्पोषेषु ॥ ८।३।५३ ॥

दो—। वाचस्पतिं विश्वकर्माणम्। दिवस्पुत्राय सूर्याय।

---

[ * अत्र 'पतौ' ? इति पाठान्तरमित्येके। ]

**दिवस्पृष्ठं भन्दमानः। तमसस्पारमस्य। * परिवीत इळस्पदे। दिवस्पयो दिधिषाणाः। रायस्पोषं यजमानेषु।**

In vedic literature the विसर्ग standing at the end of a word ending in the sixth case-ending is replaced by स provided the terms पति, पुत्र, पृष्ठ, पार, पयस् and पोष follow in the rear. Thus 'वाचस्पतिम्—' वाचः + पतिम्, the sixth case-ending is retained by the rule 'तत्पुरुषे कृति बाहुलम्' or it is retained by this very rule perhaps in छन्दस्। Similarly दिवस्पृष्ठाय, इळस्पदे। इडःपदम्—इडस्पदम् = इडस्पदे—डकार in प्रातिशाख्य has been advised to be replaced by ळ। दिवस्पय: etc—दिवः + पयस् + दिधषाणाः holding the water of heaven. Derive दिधिषाणाः as धृ + यङ्लुक् + कानच् irregularly. रायस्पोषम्—रायः is the sixth case-ending of the base रै meaning wealth.

N. B.—The rule does not seem necessarily to refer to compounds only, for vritti says "षष्ठ्याः किम्? मनुःपुत्रेभ्यो दायं व्यभजत्"।

मित—। षष्ठ्याः पतिपुत्रेति। पति, पुत्र, पृष्ठ, पार, पद, पयस्, पोष एतेषाम् इतरेतरद्वन्द्वं कृत्वा सप्तमीबहुवचनम्। 'विसर्जनीयस्य सः' (८।३।३४) इत्येतत् सर्वमप्यनुवर्तते। 'छन्दसि वा—' (८।३।४९) इत्यतश्छन्दसि इति च। तेनायमर्थः—छन्दसि षष्ठ्याः (विभक्तेः) स्थाने जायमानस्य विसर्जनीयस्य सादेशः स्यात् पतिपुत्रादिषु परत इति। वाचस्पतिम् इति। वाचः पतिर्वाचस्पतिस्तम्। 'तत्पुरुषे कृति बहुलम्' इति षष्ठ्या अलुक्। एवं दिवस्पृष्ठाय इत्यादिषु बोद्धव्यम्। दिधिषाणा इति—धारयन्त इत्यर्थः। दधाते धारयतेर्वा यङ्लुगन्ताद् व्यत्ययेन कानच्प्रत्ययः। यद्वा दिधीर्षव इत्यर्थः। तथा सति ध्रियतेः सन्। सन्नन्ताच्च तस्माद् व्यत्ययेन कानच्। षकारस्य इकारादेशश्च निपातनात्। रायस्पोषम्—इति। रै इति प्रातिपदिकम्। धनशब्दापरपर्यायस्य तस्य षष्ठ्यां रायः इति। अचि परत आयादेशः। ततः तत्पूर्वात् पुष्णातेः घञ्।

२६२८ । इडाया वा ॥ ८।३।५४ ॥

दी—। पतिपुत्रादिषु परेषु । इडायास्पुत्रः—इडायाः पुत्रः । इडायास्पदे—इडायाः पदे । 'निसस्तपतावनासेवने' (२४०३) । निसः सकारस्य मूर्धन्यः स्यात् । निष्टप्तं रक्षो निष्टप्ता अरातयः । 'अनासेवने' किम् ? निस्तपति । पुनः पुनस्तपतीत्यर्थः ।

In vedic literature the विसर्ग occuring at the end of the term 'इडायाः' which is in the sixth case-ending is optionally replaced by स when पत, पुत्र etc (enumerated in the previous rule) follow. Thus इडायास्पुत्रः etc. Note that here the term इडा refers to the daughter of मनु (the imaginary offspring of Brahman). Compare 'इडा मानवी—'etc under the commentary of Sayana explaining the rik 'आविष्यदिडीविश्वस—'etc in Astaka 1st. 'निसस्तपतावनसेवने—' (2403) This rule, is explained before under भ्वादि section, has been laid down here again as it is common to both the classical and the vedic portion of the grammar. The meaning is this—If आसेवन or frequency is not implied by the root, the सकार of the उपसर्ग निस् becomes cerebral (ष) when the root तप् follows. Thus 'निष्टप्तम्—' The demon has been troubled once only (and not repeatedly) सकार has been changed into टकार by 'ष्टुनाष्टुः' (113). Similarly निष्टप्ताः—Foes has have been troubled once. Why say अनासेवने ? For if frequency is implied षत्व of स will not follow e.g. निस्तपति—shining frequently.

मित—। इडाया वेति । छन्दसि विषये षष्ठ्यन्तायाः इडायाः स्थाने जायमानस्य विसर्गस्य सकारो वा स्यात् पतिपुत्रादिषु परत इति । अत्र इडाशब्दः स्त्रीलिङ्गः ।

नेन मनोरथस्य क्षिप्रः लक्षितत्वात्, एतच्च 'इडानाम मानवो—' इति 'न्यायिष्यदिलोविग्रहा—' इति मन्त्रव्याख्याने माधवीयवेदभाष्यम्, अत एवात्र इडाया इतुरामिः। पूर्वत्र तु पुंलिङ्गान्तस्य उदाहृतम्।

निसस्तपताविति। लोकेवेदसाधारणमिदं सूत्रम्। तेन पूर्वत्र व्याख्यातमपि पुनरप्युपन्यस्तम्। तदेतद् व्याचष्टे—निसः सकारस्येति। अनासेवनं पौनः पुन्यम् तत्र तु नेत्यभिप्राय इति बोध्यम्। निष्टप्तमिति। निस्तपताति। अत्र तपतेराबेवनार्थत्वात् निसः सकारस्य षत्वं न।

३६४०। युष्मत्तत्ततक्षुष्वन्तःपादम्॥ ८।३।१०३॥

टी—। पादमध्यस्थस्य सस्य मूर्धन्यः स्यात्तकारादिष्वेषु परेषु। युष्मदादेशाः त्वंत्वातित्तवाः। त्रिभिष्ट्वं देव सवितः। तेभिष्ट्वा। अभिष्टे। अप्स्वग्ने सधिष्टव। अग्निष्टद्विश्वम्। द्यावापृथिवी निष्टतक्षुः। 'अन्तः पाद' किम्? तदग्निस्तदर्यमा। यन्म आत्मनो मिन्दाभूदग्निस्तत् पुनराहाजातवेदा विचर्षणिः। अत्राग्निरिति पूर्वपादस्यान्तो न तु मध्यः।

N. B.—Break up the rule as युष्मत्+तत्+ततक्षु+अन्तःपादम्. Of these the term 'अन्तः पादम्' means the middle port in of a foot. Thence by transference of epithet ( लक्षणा ) it refers to the word or letter standing in this part. By the term 'युष्मत्' in the rule is understood the substitutes of युष्मत् and not the self same word. The substitutes of युष्मत् again are restrictive and not comprenensive i.e a few only out of a good many. Thus by the substitutes of युष्मत् we mean त्वम्, त्वा, ते and तव only (and not त्वया, त्वयि etc) all of which have तकार at the very outset. Thus the rule means—

A सकार standing at the end of a word which constitutes

the middle part of the foot of a rik (in vedic literature) is replaced by a षकार (cerebral) provided (some) limited substitutes of युष्मत् which have a तकार at the beginning, and the terms तत्, and ततक्षु follow. Thus 'त्रिभिष्ट्वम्—'( oh god Savita (sun) thou art moving in three ways ). Break up त्रिभिष्ट्वम् as त्रिभि: + त्वम् = त्रिभिस् त्वम् = त्रिभिष्ट्वम्—तकार is replaced by टकार by 'ष्टुनाष्टु:' (112). Note that although the term त्रिभि: forms the beginning part of the rik yet the सकार at the end of it falls neither at the beginning nor at the end of the foot but at the middle of the same. Hence the rule applies. Similarly तैभिष्ट्वा—तैभि: + त्वा ( तैभि: stands for and brings out the sense of तै: as the substitute ऐस् optionally or irregularly replaces भिस्. भाभिष्टे—भाभि: + ते । सखिष्टव—सखि: + तव = Your companion). 'अग्निष्टद्—' (Fire forms or stands for the same universe). अग्नि: + तत् । द्यावापृथिवी—'( contrived the heaven and the earth in full)—निस् + ततक्षु: ( तक्ष + लिट् उस् ) ।

'अन्त:पादम्—'Why add the term अन्त:पादम् into the rule ? for if this term (meaning in the middle part of a foot) is not added then सकार coming in other parts of the foot would have been turned into cerebral when followed by तत् etc. Thus in the above example—the सकार of the term 'अग्नि:' is not turned into षकार although the तकारादि term 'तत्' follows invariably upon it ; for, अग्नि here is not in the middle of the foot but at the end of it. Therefore the rule does not hold good here etc.

सिद्ध—। युष्मत्पदिति । युष्मत् + तत् + ततक्षु + अन्त:पादम् इति सूत्रगत—

पदानामवयवो बोध्यः। युष्मत् तत् ततक्षुस् इत्येषाम् इतरेतरद्वन्द्वः। अर्थस्त्वेवं युष्मच्छब्दे, तच्छब्दे, ततक्षुःशब्दे च परत इति लभ्यते। तत्र युष्मच्छब्दस्य नात्र स्वरूपेणोऽनुकरणं क्रियते। अनौचित्यात्। तथाहि 'ह्रस्वात्तादौ तद्धिते' (८।३।१०१) इत्यतः 'तादौ' इति पदमनुवर्तते। तच्च युष्मच्छब्दस्यैव विशेषणं नेतरयोः। तादाविति विशेषणसम्बन्धात् युष्मदादेशा आक्षिप्यन्ते। ततश्च युष्मच्छब्दस्य आदेशभूताः ये तकारादयः शब्दाः तेषु परतः (तच्छब्दे ततक्षुस्शब्दे च परतः) इति चार्थो भवति। युष्मदादेशाश्चात्र चत्वार एव गृह्यन्ते—त्वं, त्वा, ते, तव इति। नाधिकं व्याख्यानात्। अतएव त्वया, त्वयि इत्येषामत्र न ग्रहणम्। तस्मात् त्वं, त्वा, ते, तवेति चत्वार एवात्र युष्मदादेशा विवक्षिता इति सुष्ठु उक्तम्—युष्मदादेशाः त्वं त्वा ते तव इति। त्वं च त्वा च ते च तव च इति इतरेतरद्वन्द्वं कृत्वा प्रथमाबहुवचनमुपात्तम्। सूत्रे अन्तःपादम् इत्यत्र छन्दःपादः गृह्यते। न तु लौकिकश्लोकपादः। 'छन्दसि वा—' (८।३।४९) इत्यतश्छन्दसि इत्यनुवृत्तेस्तत्रान्यथासम्भवात्। किञ्चात्र अन्तःशब्दो न चरमवाची। किन्तु मध्यार्थवाची एव। एवञ्च मध्यपादमित्यर्थो भवति। ततो 'मध्याः श्रोभन्ति' इति वदत्र निरूढलक्षणया अन्तःपादस्थः (मध्यपादस्थः) चेदित्यर्थः सम्पद्यते। ततश्च 'विसर्जनीयस्य सः' (८।३।३४) इत्यतोऽनुवर्तमानः 'सः' इति तस्य 'अपदान्तस्य मूर्धन्यः' (८।३।५५) इत्यनुसारात् यस्य मूर्धन्यादेशोऽत्र विधीयते ततो मध्यपादस्थ इति वचनविपरिणामेन—मध्यपादस्थस्य इत्यर्थे पर्यवस्यति। अनुवर्तमानसकारं प्रति तस्य विशेषणत्वादित्येवम् सकलं सुविभाज्य व्याचष्टे—पादमध्यस्थस्य सस्य मूर्धन्यः स्यादित्यादि। अत्र इदमवधेयम्—सूत्रे ततक्षुस् सु इति स्थिते सकारान्तानुकरणात् ततक्षुस् शब्दात् परस्य सुपविभक्तिगतस्य सकारस्य 'नुम्विसर्जनीयशर्व्यवायेऽपि' इति शर्व्यवायेऽपि षत्वम्। अथेदानीं प्रतिसूत्रं षत्वं दर्शयिष्यन्नुदाहरति—त्रिभिष्ट्वमित्यादि। अत्र त्वं, त्वा, ते, तव, तत्, ततक्षुः इति क्रमेण उदाहरणमिति द्रष्टव्यम्।

अन्तःपादे किमिति। अन्तःपादत्वाभावे तकारादिष्वेषु परतोऽपि पूर्वस्य सकारस्य षत्वं यथा न स्यादित्येवमर्थं तदिति मत्वा उदाहृत्य दर्शयति—यदग्निरिति। अत्र 'यदग्निः' इत्येकस्य ऋक् पादस्य अन्त्यावयवमात्रं न तु तदभिन्नावयव इति बोध्यम्।

तथा 'तदर्थ्यंमा' इति तत्रैव ऋचि द्वितीयपादस्य आद्यावयवभावम्। तदेवमत्र अग्नि-रित्यस्य पादान्तत्वेन तदन्तस्थस्य सकारस्य पादमध्यस्थत्वाभावात् षत्वं न विधीयते। तथा 'यन्म आत्मनः—' इत्यत्रापि अग्निशब्दस्य पूर्वपादस्य 'यन्मे आत्मनः मिन्दा-भूदग्निः' इत्यस्य चरमावयवत्वेन तत्रस्थस्य सकारस्यापि षत्वं प्रतिषिध्यते। तस्यापि पादमध्यस्थत्वाभावादिति विभाव्यम्।

३६४१। यजुष्येकेषाम् ॥ ८।३।१०४ ॥

**टी—। युष्मत्तत्ततक्षुषु परतः सस्य मूर्धन्यो वा। अर्चि-भिष्ट्वम्। अग्निष्टे अग्रम्। अर्चिभिष्टतक्षुः। पक्षे अर्चिभिस्त्व-मित्यादि।**

Here in the rule the term 'एकेषाम्' (according to some) implies optional character of the injunction. Thus the rule means—

In the matter of यजुस् however, in the vedas (any) सकार (whether standing at the beginning, middle or end of a sentence) is optionally changed into cerebral ( ष ) provided that the said words viz the substitutes of युष्मत्, the word तत् as also ततक्षु follow upon it. Thus अर्चिभिष्ट्वम् etc.

मित—। यजुषीति। अत्र यजुषि+एकेषाम् इतिच्छेदः। तत्र एकेषां ग्रहणं विकल्पार्थम्। प्रागवत् 'विसर्जनीयस्य सः' (८।३।३४) इत्यतोऽनुवर्तमानस्य सस्य 'अपदान्तस्य मूर्धन्यः' (८।३।५५) इत्यधिकारसूत्रस्थमूर्धन्यापेक्षया षष्ठ्या विपरिणामात् सस्य मूर्धन्य इत्यर्थो लभ्यते।

३६४२। स्तुतस्तोमयोश्छन्दसि ॥ ८।३।१०५ ॥

**टी—। नृभिष्टुतस्य *। नृभिः स्तुतस्य। गोष्टोमम्। गोस्तोमम्। 'पूर्वपदात्' (३६४३) इत्येव सिद्धे प्रपञ्चार्थमिदम्।**

* नृभिष्टुतस्य इति पाठान्तरमपि दृश्यते।

In vedic literature a सकार is optionally cerebral ( ष ) when

followed by the terms सुत and सोम । Thus नृभिष्टुतस्य (prayed by men like sarificers) : नृभिः + सुतस्य—Here first सकार i.e the सकार at the end of the term नृभिस् is turned into ष and the सकार at the outset of the term स्तुतस्य is dropped. Then त is replaced by ट by 'ष्टुना—'(113). Hence the reading 'नृभिष्ष्टुतस्य' is evidently erroneous ; Similarly गोष्टोमम् गोस्तोमम् (a prayer meant for cows).

पूर्वपदात् etc :—The next rule 'पूर्वपदात्' (2643) could have answered the requiremants here and yet the enunciating of the present rule ( स्तुत— ) is only for illustration. For the compound term 'पूर्वपदात्' generally means viz—पूर्वं पदम् इति पूर्वपदम् ( कर्मधा ) तस्मात् । Then by transferance of epi-thet ( लक्षणा ) it means 'पूर्वपदस्थात्' ( standing in the previous foot). If so then the rule is redundant this could have been got by the following rule 'पूर्वपदात्' (3643) making it 'पूर्वपदाच्छन्दसि'.

स्तुत—। स्तुतस्तोमयोरिति । अत्र 'छन्दसि' ग्रहणात् 'यजुषि—' ( ८।३।१०४ ) इति सूत्राद् 'यजुषि' इति नानुवर्त्तते । एकेषाम् इति तु अनुवर्तत एव । विसर्जनीयस्य सः' ( ८।३।३४ ) 'अपदान्तस्य मूर्धन्यः ( ८।३।५५ ) इत्येतयोर्द्वयोः सः मूर्धन्य इति च प्राप्यत् । तेनायं सूत्रार्थः—छन्दसि विषये स्तुतशब्दे स्तोमशब्दे च परतः सस्य मूर्धन्यादेशो वा स्यादिति—नृभिष्टुतस्येति । नृभिः स्तुतस्य इति स्थिते मूर्धन्यपक्षे इदम् । अत्र नृभिःपदस्थस्य सस्य षत्वे कृते स्तुतशब्दस्यादेः सकारस्य लोपः । तेन मन्ये नृभिष्ष्टुतम् इत्यपपाठः । ष्टुनाष्टुरिति ष्टुत्वम् ।

पूर्वपदादित्येव सिद्धे इति । तत्र हि पूर्वपदम् इति सामान्यं आश्रीयते । न तु समासावयव एवेतिवाक्येऽपि तेनैव षत्वस्य सिद्धेः । तथाच पूर्वं पदम् इति समास-विषये लक्षणा आश्रीयते इत्यपि । ततश्च पूर्वपदस्थादित्यर्थो भवति । व्याख्यानं हि 'पूर्वपदात्' (३६४३) इत्यत्र' पूर्वपदस्थान्निमित्तात् परस्य सस्य षो वेति । ततश्च पूर्वं पदम् पूर्वपदम् तस्मात् इत्यर्थोभवतीति । अत सूत्रे स्तुतस्तोमशब्दयोर्ग्रहणं प्रपञ्चार्थम छन्दसि इति

तु प्रयोजनमेव। तत्र 'यजुषि' इत्यस्य निवृत्त्यर्थम् आवश्यकत्वात्। ततश्च 'छन्दसि' इति 'पूर्वपदात्' इत्यत्रासज्य पूर्वसूत्रं सुपरित्यजमित्याशयः।

३६४२। पूर्वपदात् ॥ ८।३।१०६ ॥

दी—। पूर्वपदस्थान्निमित्तात् परस्य सस्य षो वा। यदिन्द्राग्नी दिविष्ठः। (पूर्वपादात् किम्?) युवं हि स्थः स्वर्पती।

From the rule 'यजुष्येकेषाम्' (8.3.104) the term 'एकेषाम्' which refers to option and nothing else follows here and from the rule 'स्तुत—'(8.3.103) the term 'छन्दसि' also follows. Thus the rule means—

In the vedic literature, a सकार standing after a निमित्त a cause (षत्व) lying in the preceding member (of a compound word) is replaced optionally by a cerebral ष। Thus 'यदिन्द्राग्नी—'etc. Here the illustration दिविष्ट is an instance of अलुक् समास —दिवितिष्ठतीति दिविस्थः=दिविष्टः by षत्व and ष्टुत्व. The term 'निमित्त' in the explanation is got from the इकार as it (इकार) falls under the rule 'इणकोः' (212). Here 'दिविष्ठौ' was expected with reference to इन्द्राग्नी (dual) but it is alright by the dictum 'सर्वेविधयः—' or 'व्यत्ययो बहुलम्'। 'युवं हि स्थः—'You two are the Lords of heaven—Here स् of स्थ is not turned into ष as the निमित्त standing in 'हि' is not a preceding member of a compound.

मित—। पूर्वपदादिति। षत्व लक्षणया पूर्वपदस्थादित्यर्थ इति पूर्वोक्तम्। तत्र षत्वविधानसामर्थ्यात् षत्वनिमित्तमेवेति गम्यते। तदाह—पूर्वपदस्थान्निमित्तादिति। सस्य षो वेति। सस्य ष इति विकल्पार्थेषु 'यजुष्येकेषाम्' (८।३।१०४) इत्यतो विकल्पार्थस्य एकेषाम् इत्यस्यानुवृत्त्या विकल्पम् किञ्च पूर्वसूत्रात् 'स्तुतस्तोमयो—

( ८।३।१०५ ) इत्यतश्छन्दसीति चानुवर्तते इति मन्तव्यम् । अत्र प्रत्युदाहरणमाह—सुवं हि स्थ:—इति । हि इत्यस्य सत्यपि निमित्ते तस्य पूर्वपदत्वाभावात् षत्वाभाव: ।

२६४४ । सुञ: ॥ ८।३।१०७ ॥

दी—। पूर्वपदस्थान्निमित्तात् परस्य सुञो निपातस्य सस्य ष: । ऊर्ध्व ऊ षु ण: । अभी षु ण: ।

In vedic literature, the सकार of the निपात (indeclinable) सुञ् ( सु ) coming after a निमित्त lying in the preceding member (of a compound word) is persistingly—(नित्य) turned into ष। (Here the term 'एकेषाम्' from 'यजुषि—'(8.3.104) does not follow). Here ऊषुण: is the illustration intended. Originally this was उसुन:. The particle 'उ' has been lengthened by the rule 'इक: सुञि' (3536). Thus we now have ऊसुन: then by षत्व (as ऊ embodies the निमित्त ) we have ऊषु. Finally न of न: becomes ण in the संहितापाठ ( or सन्निपाठ' ) by the rule 'नश्च धातुस्थोरुषुभ्य:' (3649) as it follows upon षु. Similarly अभीषुण: ( अभिसुन: where अभि and सु are the two members of the सुप्सुपा compound ).

नित—। सुञ इति । 'विसर्जनीयस्य स:' ( ८।३।३४ ) 'अपदान्तस्य मूर्धन्य:' ( ८।३।५५ ) इत्युभयत: प्रागवचनविपरिणामेन सस्य ( मूर्धन्यो वा ) इत्यनुवर्तते । 'यजुष्येकेषाम्' ( ८।३।१०४ ) इत्यत्र एकेषाम् इति तु नानुवर्तते । तेनात्र षत्वं नित्यं विधीयते इति बोध्यम् । तथा 'सुतस्तोमयो:—' ( ८।३।१०५ ) इत्यतश्छन्दसि इत्यनुवर्तते 'पूर्वपदात्' (८।३।१०६) इति तु सर्वमेव । ततो व्याचष्टे—पूर्वपदस्थान्निमित्तादित्यादि । सूत्रे 'सुञ' इति निपातग्रहणम् । तदाह—सुञो निपातस्य इति । अत्र ञकारानुबन्धकरणम् स्वरार्थम् । 'ञ्नित्यादिर्नित्यम्' ( ३६८६ ) इति वक्ष्यमाणसूत्रेणात्र 'सु' इत्यस्य नित्यमेव आद्युदात्तत्वं यथा स्यात् । अन्यथा 'सु' इत्युपसर्गत्वादव्ययपूर्वपदप्रकृतिस्वरत्वस्य दुर्वारत्वादिति विभाव्यम् ।

३६४५। सनोतेरनः ॥ ८।३।१०८ ॥

दौ—। गोषा इन्द्रो नृषा असि। 'अनः' किम् ? गोसनिः।

In vedic leturature the सकार of the root सन (तनादि) coming after a cause or निमित्त standing in accordance with the rule 'इण्कोः' (212) in the preceding member (of a compound word) is transformed into cerebral ष provided the root (सन्) does not end in नकार। Thus गोषा and नृषा। Break up as गाः सनोति ददाति इति गो+सन्+विट—Here विट takes place by the rule 'जनसनखनक्रमगमो विट' (3413—3.2. 67) and "विड्वनोरनुनासिकस्यात्"; why 'अनः' i.e, why do you qualify the term 'सनोतेः' with 'अनः' (which stands for अनान्तात्)? The reply here is that if सन् does end in न् the said षत्व of its स cannot be effected. Thus गोसनिः (a gift of cows) without षत्व. Because the term (गोसनि) here is derived as गो+सन्+इन् where the affix इन् comes after the root सन् by the rule 'छन्दसि वनसनरक्षिमथाम्' at (3408—3.2.27). The rule thus ending in न् the provision of षत्व does not hold good here.

मित—। सनोतेः। अन इतिच्छेदः। उभयमपि षष्ठ्येकवचनान्तम्। तत्र अन इति सनोतेरित्यस्य विशेषणम्। तेन 'विशेषणं तदन्तस्य संज्ञा स्यात्' इति वचनादेव तदन्तविधिराश्रीयते। ततश्च अनान्तस्य सनोतेरित्यर्थः सम्पद्यते। सन् इति षणु दाने इति दानार्थकस्य तानादिकस्यैव ग्रहणम्। न तु 'वन संभक्तौ सन च'ेति संभक्तार्थकस्य भौवादिकस्य। सूत्रे सनोतेरिति निर्देशात्। ततश्च पूर्वं पूर्वोक्तामनुवृत्तिमवलम्ब्य—पूर्वपदस्थान्निमित्तात् परस्य अनान्तस्य सनोतेः सस्य षत्वं स्याच्छन्दसि विषये इति सूत्रार्थः। 'गोषा इन्द्रो—' इति। अत्र गोषा नृषा इत्युदाहरणद्वयम्। तत्र गोषा इत्यत्र गा सनोति (ददाति) इति विग्रहे 'जनसनखनक्रमगमो विट' (३४१३—३।२।६७) इति विट प्रत्यये विहिते गो सन् विट इति स्थिते

प्रत्ययस्य सर्वलोपित्वात् गो सन् इति स्थितेऽत्र 'विड्वनोरनुनासिकस्यात्' (२९८२—६।४।४०) इत्यनुनासिकस्य (नकारस्य) आत्वे कृते गोषा इति। पश्चात् गोषा+सु इति स्थिते 'हल्ङ्याब्भ्यो दीर्घात्—' (२५२) इति सुलोपः। एवं नृषा (नृ+सन्+इट्) इत्यत्रापि प्रक्रिया बोध्या। अनः किमिति। अनकारान्तादेव सनोतेः षत्वम् इति नियमः कथमिति प्रश्नः। तत्र अनान्तत्वाभावे षत्वाभाव इति समाधानं मत्वा उदाहरति—गोसनिरिति। गवां दानमिति तदर्थः।

३६४६। सहेः पृतनर्ताभ्यां च ॥ ८।३।१०९ ॥

दी—। पृतनाषाहम्। ऋताषाहम्। चात्—ऋतीषाहम्।

In vedic literature the सकार of the root सह (षहमर्षणे) becomes cerebral (ष) provided the root comes after the terms पृतना (or पृतन) and ऋत, as also the term ऋति—the inclusion of which is accounted for from the fact of taking the चकार in the rule. Thus पृतनाषाहम् (accusative singular of the base पृतनाषाट्) पृतना+सह+ण्वि by 'छन्दसि सहः' (3409—3.2.63) पृतनासाह् with the lengthnation of the penulimate of the root by 'अत उपधायाः' (2282) due to णित्त्व of the affix. Then पृतनाषाह्+अम्=पृतनाषाहम् with षत्व. Note that पृतनाषाट् is not an illustration of this rule for that is accounted by the rule 'सहेःसाडः सः' (335—8.3.56). Hence it is that Bhattoji takes up those cases which cannot be provided for by 'सहेःसाडः—'. From the acceptance of the of the term पृतन (अकारान्त meaning the same as पृतना does viz an army') in the rule 'कव्यध्वरपृतनस्य—' (3592—7.4.39) we may also derive as पृतन+सह्+ण्विin which case the final (अकार) of the term (पृतन) will be lengthened by the rule 'अन्येषामपि दृश्यते' (3339). Similarly is the procedure in the case of the term ऋताषाहम् (ऋत (truth)+सह+ण्वि) and ऋतीषाहम् (ऋति+

सह+णि ) This is the view of the author (Bhattoji) in his Praudhamanorama.

मित—। सहेरिति। पृतना ( पृतन इति वा )+ऋताभ्यामिति द्वन्द्वः पृतना च ( पृतनश्च इति वा ) ऋतश्चेति द्वन्द्वः। पञ्चमीद्विवचनम्। प्रागवदनुवृत्त्या सस्य इति लभ्यते। 'सुतसोमयोः—' ( ८।३।१०२ ) इत्यतश्छन्दसि इत्यनुवर्तते। पूर्वपदादिति नानुवर्तते। तथा सति तेनैव सिद्धे किमेतेनेति बोद्धव्यम्। तत्रायमर्थः—पृतना ( पृतन ) शब्दादृतशब्दाच्च परतः सह्धातोः सस्य षत्वं स्याच्छन्दसि विषये इति। पृतनाषाहमिति। पृतनाषाट् इति तु नोदाहर्त्तव्यम्। तस्य साढ् रुपत्वेन सहन्त्याप-गमादप्रवृत्तेः।

## २६४७। निव्यभिभ्योऽड्व्यवाये वा छन्दसि ॥ ८।३।११९ ॥

**दी—। सस्य मूर्धन्यः ( ? वा )। न्यषीदत्—न्यसीदत्। व्यषीदत्—व्यसीदत्। अभ्यष्टौत्—अभ्यस्तौत्।**

In vedic liturature, the सकार of a root (as सद सु etc) is optionally transformed into ष despite the intervention of the अट provided the root comes (direct) after the उपसर्गs नि वि and अभि. Thus न्यषीदत्—न्यसीदत् etc.

मित—। निव्यभिभ्य इति। निश्च विश्च अभिश्च इति द्वन्द्वः। ततः पञ्चमी बहुवचनम्। अडित्यागमः। लुङ् लङ् लिङ्क्ष्वडुदात्तः इति। व्यवायो व्यवधानम्। अनुवृत्तिः प्रागवत्। तदाह—सस्य मूर्धन्य ( वा ) इति। अयं पूर्वार्थः—छन्दसि विषये नि, वि, अभि इत्येभ्य उपसर्गेभ्यः परतो वर्तमानस्य सदादिधातोः सस्य मूर्धन्यो वा स्याद सत्यपि अटि व्यवधाने इति। वा प्रकरणे प्राप्तस्य पत्वमात्रस्य विकल्पः। अथ विकल्पने प्रत्युपसर्गसुदाहरणदर्शयति—न्यषीदत् न्यसीदादित्यादिना।

## २६४८। छन्दस्यृदवग्रहात् ॥ ८।४।२६ ॥

**दी—। ऋकारान्तादवग्रहात् परस्य नस्य णः। नृमणाः। पितृयाणम्।**

Break up the rule as छन्दसि + ऋदवग्रहात्. The term ऋदवग्रह means such an अवग्रह as ends in a short ऋकार (ऋत् and not दीर्घ ॠ); here अवग्रह means पदपाठ or the art of distinct reading in the original from of each and every word that has been used in each of the four feet of the rik in the संहितापाठ; the rule, therefore means—

In vedic literature a नकार coming after an अवग्रह ending in ऋत् or ऋकार is changed to णकार in संहितापाठ। Nagesha however explains the rule as 'अवग्रहविषये' in the matter of अवग्रह or पदपाठ etc. That is a clearer method no doubt but is not in full keeping with the formation of the rule. नृमणा:—पितृयाणम्— Both these terms are illustrations of णत्व as they are taken in the संहितापाठ. In the matter of पादपाठ, however, their appearance will be as नृमना: ( नरि मनो यस्य स:—बहुव्रीहि. ) and पितृयानम् (the conveyance of i.e intended for manes—) without णत्व in each case.

मित—। छन्दसि इति। छन्दसि + ऋदवग्रहात् इतिच्छेद:। तत्र ऋच्चासौ अवग्रहश्चेति विग्रहे ऋदवग्रह इति भवति। अत्र ऋच्छब्देन ऋदन्त च। तस्य ऋदित्यस्य विशेषणत्वेन तदन्तविधेरौचित्यात्। ऋदिति तपरनिर्देशमहिम्ना ह्रस्वऋकारस्यैव ग्राहकम्। न तु दीर्घस्यापि। तदेवमाह—ऋकारान्तादव-ग्रहादिति। अवग्रह इति पदपाठ:। अवगृह्यते विश्लिष्य पठ्यतेऽनेति अधिकरणे अप्, यद्वा अवगृह्यत इत्यवग्रह:। 'ग्रहवृदृनिश्चिगमश्च' इति भावेऽप्प्रत्यय:। छन्दसि तावत् प्रधानतो द्वौ पाठौ। संहितापाठ इत्येक:। अवग्रहपाठ इति द्वितीय:। तत्र संहितापाठ इति संहिताश्रय: सन्धिघटितो वा पाठ:। तत्रत्यानां शब्दानां प्रत्येकं विश्लिष्य पाठस्तु अवग्रहपाठ:। तथाहि—

ओं अग्निमीलि पुरोहितं यज्ञस्य देवमृत्विजं। होतारं रत्नधातमम्॥ १॥

इति संहितापाठः। सर्वत्रास्य कृतसन्धिकार्यत्वात्। तस्य—अग्निम्। ईळे। पुरःऽहितम्। यज्ञस्य। देवं। ऋत्विजम्—इत्येवं पाठस्तु अवग्रह पाठः। तत्र पदपाठकाले ऋकारान्तात् पूर्वपदात् परतो वर्तमानस्य शब्दस्याद्यो नकारस्तस्य संहितापाठकाले णत्वमिति निर्गलितार्थः। अतएव नागेशोऽप्याह—पूर्वपदादिति वर्तते। अवग्रह—विषये ऋकारान्तपूर्वपदादुत्तरस्य नस्य न इति शब्देन्दुशेखरो द्रष्टव्यः। अत्र णत्वमिति 'रषाभ्यां नोणः समानपदे' (८।४।१) इत्यतोऽनुवर्तते इति ध्येयम्। नृमणा इति संहितापाठोऽयम्। एवं पितृयाणम् इति। पदपाठ नृमनाः, पितृयानम् इति णत्वविरहित एव पाठः।

३६४८। नश्च धातुस्थोरुषुभ्यः ॥ ८।४।२७॥

दो—। धातुस्थात्। अग्नेरक्षाणः। शिक्षा णो अस्मिन्। उरुणस्कृधि। अभीषु णः। मोषुणः॥ इत्यष्टमोऽध्यायः। इति वैदिकप्रकरणम्।

In vedic literature, the letter न of नः is changed into cerebral ण provided the said dental न stands after a root which has got any cause or निमि (viz ऋ, र् or ष) within, or after the term उरु, or after the particle षु which is nothing but the cerebral form of the indeclinable (निपात) सुञ् spoken of in the rule 'सुञः (3644) but not necessarily the cerebral from of the उपसर्ग सु or the imitation of 'षु' the cerbral form of सुप् (the locative plural affix) as in 'इन्द्रोषत्तो म्रक्षेषु नः' where it is easy to see that नकार coming after षु (षु) is not changed into cerebral. The term नः (or नस्) however is a common one. That is it is either the substitute (नस्) of अस्मद् (as in plural number of the accusative, dative and the genitive) or it may be that of the नासिका which also has got this in accusative plural, intrumental

sing etc. Here of course in the intances in the text नस् is the substitute of अस्मत् only. Thus अग्ने रक्षाणः—save us oh fire ; णत्व due to the existance of र in the root रक्ष। रक्षा is accountable by the rule 'द्व्यचोऽतस्तिङः' (3537) etc. उरु णस्कृधि—make us great or prosperous ; णत्व due to the नकार following from the उरु (meaning great) which forms a पूर्वपद here, as the condition of पूर्वपदत्व has been in the case of other sentences also (cp—पूर्वं पदं पूर्वपदमिति सामान्यत आश्रीयते etc under the rule 'सुतसोमयोः—' 3642). Then णः+कृधि begets णस्कृधि in connection with the सत्व for its विसर्ग by 'कः करत—' (3635) अभीषुणः—णत्व due to the नकारs following after the particle षु in अभीषु for the formation of which consult the rule 'सुञः' (3644). मोषुणः—णत्व as before. Break it up as मा+उ+षु+णः—

मित—। नदेति। नस्+च इतिच्छेदः। धातुस्थ उरुषुभ्य इति द्वन्द्वं कृत्वा पञ्चमीबहुवचनम्। नस् इति अस्मदादेशस्य नासिकादेशस्य चोभयोरपि सामान्येन ग्रहणम्। धातौ तिष्ठतीति धातुस्थः। विशेषणमिदम्। तेन 'रषाभ्याम्—' (८।४।१) इत्यधिकारसूत्रबलात् धातुस्थं यद् (णत्व)निमित्तम् इति विशेष्यं निमित्तमित्याक्षेपः। उरु इत्यधिकार्थवाची शब्दः। षु इति कृतषत्वस्य 'सुञः' (३६४४) इति सूत्रोपात्तस्य निपातस्यैव ग्राहकम्। न तु कृतषत्वस्य 'सु' इति उपसर्गस्य न वा कृतषत्वस्य सप्तमीबहुवचनस्य सुपः। तथा सति 'इन्द्रो धर्ता गृहेषु नः' इत्यादावपि णत्वं स्यादिति। सुञ एवात्र ग्रहणमिति निष्कर्षः। अयमत्र सूत्रार्थः—धातुस्थान्निमित्तात् परस्य उरुशब्दात् परस्य षुशब्दाच्च परस्य नसो (नः शब्दस्य) नकारस्य णत्वं स्याच्छन्दसि विषये संहितायामिति। क्रमेणोदाहरति—अग्ने रक्षाण रक्षेति धातुस्थं षकारं णत्वनिमित्तमाश्रित्य परिवर्तिनो नसो नस्य णत्वम्। एवं शिक्षाण इत्यत्र। उभयत्रापि 'द्व्यचोऽतस्तिङः' (३५३७) इति लोट्मध्यमपुरुषैकवचनस्य रक्ष इत्यस्य शिक्ष इत्यस्य च दीर्घः। इति धातुस्थे निमित्ते उदाहृतः। उरुशब्द

निमित्तं कृत्वाह—उरुणस्कृधि इति। अस्मे कृधि इत्यत्र 'कः करत् करति कृधि कृतेष्वनदितेः' (३६३५) इति विसर्गस्य सकारः। सुशब्दं निमित्तं कृत्वाह—अभीषुण इति। अभीषु इत्यत्र अभि सु इति स्थिते 'सुञः' (३६४४) इति षत्वम्। इकः सुञि इति दीर्घः। एवं मोषुणः इति। प्रकृतसूत्रेऽस्मदादेश एव (नः) कार्य्यो। तस्यैव धातुस्थात् परत्वसम्भवात्। उपसर्गादनोत्परः इत्युत्तरसूत्रे तूभयोः कार्य्यित्वमिति हरदत्त इति शब्देन्दुशेखरे स्पष्टम्।

इत्यविरलविद्याविस्तरपारिणस्य नानाशास्त्रनदीष्णस्य महायावाक्तव्यस्य कायस्थस्य सुगृहीतनाम्नः श्रीसारदारञ्जनस्य सूनुना श्रीकुमुदरञ्जनभिषगाचार्य्येण कृतायां सिद्धान्तकौमुदीव्याख्यायां मितभाषिणीसमाख्यायां वैदिकप्रक्रिया समाप्ता समाप्तश्चायं ग्रन्थः।

यत्नात्सुभगभाषायां दीक्षितस्यानुगामिनीम्।
बालानामवबोधाय व्यधात् कुमुदरञ्जनः॥
यदनुक्तं दुरुक्तं वा मतिमोहसमुद्भवम्।
सन्तः सन्ततकारुण्यात्तत्सर्वं मर्षयन्तु मे॥

---

# Errata on Siddhanta Kaumudi

## Vol III. Part II.

P. 155 line 9 and 12 "सामुद्रिक:" read "सामुद्रक:" ।

P. 397 line 6, omit "नस्तद्धिते (६।४।१४४) इति टिलोप:" (for it has no application here at all).

P. 465 line 15 for "नस्तद्धिते इति नलोप: । "यसेरिति च" इति अकार लोप:—तेन कर्मठः इति" read.—"नस्तद्धितेइति अन्लोप: तेन कर्मठ इति"

[ N.B.—"यसेरिति च" has no application here ].

P. 648 line 6-8, omit "नस्तद्धिते इति" and "यसेरिति च इति अकारलोप:" ।

P. 455 line 16, "खञ् is attached to the words शाला and कूप and the words शालीन and कौपीन are irregularly formed" read "खञ् is attached to the words शाला and कूप the substitutes in places of शालाप्रवशन and कूपावतार ; and the words शालीन and कौपीन are irregularly formed".

[ N.B.—Compare "शालाप्रवेशनम र्हति कूपावतारम्र्हति इति खञ प्रत्यय: उत्तरपदलोपश्च निपात्यते"—Kasika ].

Vol IV ( भ्वादि ) P. 368, line 18 for "स च फण गतौ" read "स च कस गतौ" ॥

**Vol V**—P. 538, line 16, for "ङीप and न by पत्युनो—" read "ङीप् and न as in पत्युर्नो—" ।

P. 168, line 24, for "But in भ्वादि" read "But in तुदादि—" । (for सृज is तुदादि परस्मैपदी) ।

P. 189, line 17, for "···षत्वे रूपम् । षान्तस्य किम् ? प्रणश्यति—अत्र षकारान्तत्वात् णत्वं न" read "षत्वे रूपम्—अत्र षकारान्तत्वात णत्वं न । षान्तस्य किम् ? प्रणश्यति" ।

**Vol VI** (**here**)—P. 560, line, 2, for—"षत्व however is accounted for by "इणः ष"—read "षत्व however is to be accounted for by "इदुदुपधस्य—" । P. 561, line 2, for "षत्वम्" read "णत्वम्" ।

# I. A. SANSKRIT

SELECTIONS OF

# DASAKUMAR

## 1937 etc.

**...onyms, Translations, Test questions, Tika, Notes Etc. of**


...JARANJAN RAY, VIDYAVINODE, M. A.

*Late Principal, Vidyasagar College,*

AND

...MUDRANJAN RAY, M. A.

*...r of Meghaduta, Kirata, Manu etc.*



Edited and Published by—

...UMUDRANJAN RAY, M. A.


Re. 1.

